वॅ. १.१.४८ अंशान्तरेण भूम्यां त्वं तत्र तिष्ठ सुनिर्वृतः ।
वैवस्वतेऽन्तरेऽतीते कार्यार्थं मां प्रवेक्ष्यसि ॥४७
मां प्रणम्य पुरीं गत्वा पालयामास मेदिनीम् ।
कालधर्मं गतः कालाच्छ्वेतद्वीपे मया सह ॥४८
भुक्त्वा तान् वैष्णवान् भोगान् योगिनामप्यगोचरान् ।
मदाज्ञया मुनिश्रेष्ठा जज्ञे विप्रकुले पुनः ॥४९
ज्ञात्वा मां वासुदेवाख्यं यत्र द्वे निहितेऽक्षरे ।
विद्याविद्ये गूढरूपे यत्तद् ब्रह्म परं विदुः ॥५०
सोऽर्चयामास भूतानामाश्रयं परमेश्वरम् ।
व्रतोपवासनियमैर्होमैर्ब्राह्मणतर्पणैः ॥५१
तदाशीस्तन्नमस्कारस्तन्निष्ठस्तत्परायणः ।
आराधयन् महादेवं योगिनां हृदि संस्थितम् ॥५२
तस्यैवं वर्तमानस्य कदाचित् परमा कला ।
स्वरूपं दर्शयामास दिव्यं विष्णुसमुद्भवम् ॥५३
दृष्ट्वा प्रणम्य शिरसा विष्णोर्भगवतः प्रियाम् ।
संस्तूय विविधैः स्तोत्रैः कृताञ्जलिरभाषत ॥५४

इन्द्रद्युम्न उवाच ।❀

का त्वं देवि विशालाक्षि विष्णुचिह्नाङ्किते शुभे ।
याथातथ्येन वै भावं तवेदानीं ब्रवीहि मे ॥५५

---

४७. न1. ⊙. –a) दे7 अथान्तरेण, दे8-10 अंशाव (दे10 च) तारे, द1 म1 आशान्तरेण (→अंशान्तरेण); ब2 भूत्वानं, दे6 भूम्यां तं, द1 ग्र2 भूम्यां च, म1 भ्रमणं (→भूम्यां त्वं). –b) ग्र1 अत्र (→तत्र); दे1.2.5.6 ते1 तिष्ठस्व, दे4 तिष्ठ च, द1 तिष्ठेत्सु-, ग्र1 तिष्ठेस्सु-, (→तिष्ठ सु-); ग्र2 तत्र तत्र सुनिर्वृतः. –ab) ब1 अंशान्तरेण भूम्यान्त्वत्र तिष्ठ नु न निर्वृतः. –c) ब2.3 दे2-6 प्राप्ते (→[अ] तीते); ग्र2 वैवस्वते मानवान्ते. –d) द1 प्रवेक्षसि (→प्रवेक्ष्यसि).

४७ श्लोकात्परं दे8-10 अधिकं—विष्णुरुवाच.

४८. न1. ⊙. –a) का1 प्रवेक्ष्यन् , ब1 दे2 प्रवेक्ष्य, ब3 प्रविश्य, दे3 प्रवेक्ष्य तू, दे6 मुब. प्रवेक्ष्यान् (→प्रणम्य); दे7 पुनर् (→पुरीं); दे4 दत्त्वा (→गत्वा); ते1 मा मां पृच्छन् पुरीं गत्वा. –b) का1 दे1.2.4.5 पालयित्वा च, दे7 त्वं पालयसि, ग्र1.2 पालयिष्यसि (→पालयामास). –c) दे3 °धर्मज्ञतः, दे4 °धर्म (सो)वतः (→°धर्मं गतः); दे1 कालवर्मं सावगतः. –d) दे8-10 द्वीपे श्वेते (→श्वेतद्वीपे); दे4 सप्तद्वीपानुपान्वहा.

४९. न1. ⊙; म1. ab ⊙. –a) दे1.3 ग्र2 भुक्ता तां (ग्र2 °तान्), दे6 स तत्र (→भुक्त्वा तान्); दे8-10 विपुलान् (→वैष्णवान्); दे1.4 लोकान् (→भोगान्). –b) दे3 °प्यतोवरान्, ग्र2 °प्योगरान् (?) (→°प्यगोचरान्). –c) ब3 दे3 ममाज्ञया, दे1 मन्दाज्ञया, दे6 ममातया (→मदाज्ञया); दे8.9 द्विज° (→मुनि°); दे10 श्रेष्ठ, द1 ग्र1.2 °श्रेष्ठात् (→°श्रेष्ठा). –d) दे6 यज्ञे, द1 ग्र1.2 म1 जातो (→जज्ञे).

५०. न1. ⊙. –b) दे6 येत्र (→यत्र); का1 दे2 निहितेक्षरैः, ब1.3 ते1 निहि (ब1 °ह)तेक्षरम्, दे6 निहतेक्षरे (→निहितेऽक्षरे). –c) ग्र2 परे (→गूढ-); का1 ब1-3 दे2.3.5-10 ते1 द1 वें. मुए. मुब. गूढरूपं (→गूढरूपे). –d) का1 दे3.5.6 यत्तद् रूपं (दे3 °पे) परं, ब2 दे7-10 द1 ग्र1.2 मुवें. मुए. मुब. यद् ब्रह्म (ग्र2 °ह्मा) परमं, दे2 यत्तद् भूतं परं, दे4 यत्तद् ब्रह्म परे, म1 तयोर्यत् परमं (→यत्तद् ब्रह्म परं); द1 वरः (→विदुः).

५१. न1. ⊙; म1. ab ⊙. –a) दे4 सोर्चयत्सर्व-भूतानाम्. –b) ब1 आश्रमं (→आश्रयं). –c) द1 व्रतोपवासि° (→व्रतोपवास°).

५२. न1. ⊙. –a) दे4 स आसी(?), दे6 ते1 तदासीत्, दे7 तयोभिस्, मुब. तज्जायस् (→तदाशीस्); दे1.4 °स्कारैः (→°स्कारस्); दे3 तदा शीघ्रनमस्कारस्. –b) दे1 त्वन्निष्ठस्, दे3 तन्विष्णुः, दे6 तद्विष्णुः (→तन्निष्ठस्); दे7 तत्परायणैः दे8 तत्परायणाः (→तत्परायणः). –c) दे7 ग्र1.2 म1 महायोगं (ग्र2 °गः) (→महादेवं). –d) दे7 योगीनां (→योगिनां).

५३. न1. ⊙. –a) द1 ग्र1.2 म1 चिन्त्य° (→वर्त°); ब3 दे6 °माणस्य (→°मानस्य); दे1.4 तस्मै विप्राय विप्रेन्द्राः. –b) ब3 परमाङ्गना, दे2.6.10 परमाकुला, ते1 परमां कलां, म1 चरमा कला (→परमा कला). –d) ब1-3 दे3 ते1 नित्यं (→दिव्यं); दे4 विष्णु (→विष्णु-).

५४. न1. ⊙ –a) ब3 त्यक्त्वा, दे7 प्रेक्ष्य (→दृष्ट्वा). –b) का1 प्रियं, + प्रभां, दे7 कलां, दे8-10 प्रभां, द1 ग्र1.2 म1 प्रभोः (→प्रियाम्). –c) द1 ग्र1.2 संस्तुत्य (→संस्तूय).

❀ न1. ⊙; दे8-10 इन्द्रद्युम्न उ.; ते1 द1 ग्र1.2 म1 इन्द्रद्युम्नः.

५५. न1. ⊙. –a) दे10 का त्वं देवी विशालाक्षी. –b) ब1. निज° (→विष्णु°); का1 दे2-5 ते1 चिह्नाङ्किता (→चिह्नाङ्किते). –c) का1 ब3 दे10 ग्र2 यथा° (→याथा°). –d) ब1 दे1 म1 तथेदानी°, दे3.6 भवेदानीं, दे4 स चेदानीं, दे8-10 त्व चेदानीं, द1 तदेदानीं, ग्र2 तथैनानीं (?) (→तवेदानीं); दे1 ते (→मे).

तस्य तद् वाक्यमाकर्ण्य सुप्रसन्ना सुमङ्गला ।
हसन्ती संस्मरन् विष्णुं प्रियंब्राह्मणमब्रवीत् ।।५६
न मां पश्यन्ति मुनयो देवाः शक्रपुरोगमाः ।
नारायणात्मिका चैका मायाऽहं तन्मया परा ।।५७
न मे नारायणाद् भेदो विद्यते हि विचारतः ।
तन्मयाऽहं परं ब्रह्म स विष्णुः परमेश्वरः ।।५८
येऽर्चयन्तीह भूतानामाश्रयं परमेश्वरम् ।
ज्ञानेन कर्मयोगेन न तेषां प्रभवाम्यहम् ।।५९
तस्मादनादिनिधनं कर्मयोगपरायणः ।
ज्ञानेनाराधयानन्तं ततो मोक्षमवाप्स्यसि ।।६०
इत्युक्तः स मुनिश्रेष्ठ इन्द्रद्युम्नो महामतिः ।
प्रणम्य शिरसा देवीं प्राञ्जलिः पुनरब्रवीत् ।।६१
कथं स भगवानीशः शाश्वतो निष्कलोऽच्युतः ।
ज्ञातुं हि शक्यते देवि ब्रूहि मे परमेश्वरि ।।६२
एवमुक्ताऽथ विप्रेण देवी कमलवासिनी ।
साक्षान्नारायणो ज्ञानं दास्यतीत्याह तं मुनिम् ।।६३
उभाभ्यामथ हस्ताभ्यां संस्पृश्य प्रणतं मुनिम् ।
स्मृत्वा परात्परं विष्णुं तत्रैवान्तरधीयत ।।६४
सोऽपि नारायणं द्रष्टुं परमेण समाधिना ।
आराधयद्धृषीकेशं प्रणतार्तिप्रभञ्जनम् ।।६५
ततो बहुतिथे काले गते नारायणः स्वयम् ।
प्रादुरासीन्महायोगी पीतवासा जगन्मयः ।।६६ वें. १.१.६७

५६. न1. ⊙. –a) ग्र2 आकर्ण्या (→आकर्ण्य). –b) दे7 सुनिर्मला (→सुमङ्गला). –c) दे10 असन्ती (→हसन्ती); का1 वा, ब1-3 दे1-5 ते1 सा (→सं-); का1 ब1-3 दे3-6 ते1 ग्र2 [अ]स्मरद्, दे10 समनं (?) (→स्मरन्).

५६ श्लोकात्परं दे7 वें. मुए. मुब. अधिकम्—श्रीरुवाच.

५७. न1. ⊙. –a) दे1 मे (→मां). –c) ब1-3 दे4.6-10 ते1 द1 म1 मुवें. मुए. मुब. नारायणात्मिकाम्, दे3 नारायणार्थिकां, ते1 नारायणान्तिकां (→नारायणात्मिका); ब1-3 दे3.4.6-10 ते1 द1 मुवें. मुए. मुब. एकां, दे2 चैषा, ग्र1 ह्येकां, म1 एतां (→एका). –d) दे5.7-10 ते1 द1 ग्र1 म1 मुवें. मुए. मुब. तन्मयी, दे1 मा च या, दे3 तन्मयां, दे6 जन्मयी(?) (→तन्मया); द1 ग्र1.2 म1 पुरा (→परा); ग्र2 माया मान्तन्मया पुरा.

५८. –a) दे5 न1 ग्र2 नमो (→न मे); दे5 नारायणी, दे10 नारायणोद् (→नारायणाद्); दे5 देवी (→भेदो). –b)दे1 विद्येते (→विद्यते). –c) न1 तन्मयाद्यः, द1 ग्र1 तन्मायाहं, मुवें. मुए. मुब. तन्मय्यहं (→तन्मयाहं).

५९. –a) ते1 अर्चयन्तीह (→येऽर्चयन्तीह) –b) ब1 आश्रमं, दे4.10 आलयं (→आश्रयं); मुवें. मुए. मुब. पुरुषोत्तमम् (→परमेश्वरम्). –c) दे7 कर्मणा चैव (→कर्मयोगेन). –d) दे1 तेषां वै (→न तेषां) दे10 न तेषां प्रभवाप्यहम्. ग्र2 तेषामग्रे भवाम्यहं.

६०. म1. cd ⊙. –a) म1 °निधनः (→°निधनं). –b) ग्र2 धर्म° (→कर्म°) दे3.6.8-10 म1 °परायणं (→°परायणः). –c) दे3.6 °वाधयानन्तं, (दे6 °स्तं), दे8-10 °राधयेशानं, ते1 °राधयानं तु, द1 ग्र1.2 °राधयाजस्रं (→°राधयानन्तं). –d) का1 दे2.5 लोक° (→मोक्ष°).

अस्य श्लोकस्य ab अनन्तरं म1 अधिकम्– सूतः.

६१. –a) दे5 इत्युक्त्वा स, म1 महात्मानं (→इत्युक्तः स); ग्र1 मुनिश्रेष्ठा [:] (→मुनिश्रेष्ठ[:]). –b) ब2 महायशाः, द1 ग्र1.2 महामुनिः (→महामतिः).

ब1. ६१ श्लोकस्य c,d चरणयोर्मध्ये अधिकं—कृताञ्जलिरभाषत.

६२. –c) दे10 देवीं (→देवि). –d) ब1-3दे2.4.6.8-10 परमेश्वरः, न1 पद्मसंभवे, ग्र1 परमेश्वरी (→परमेश्वरि).

६३. –a) का1 एवमुक्त्वा, दे10 एवमुक्तो, ग्र2 इत्युक्त्वा सा (→एवमुक्ता), दे2.7 म1 तु, दे4.5 च (→[अ]थ). –c) दे4. ग्र2 नारायणे, दे7 नारायणा (→नारायणो). –d) दे3 वक्ष्यती°, दे6 वक्षती° (→दास्यती°).

६४. ब1द1. ab⊙ (द्र. सं.). –a) दे4 एव (→अथ). –b) न1 मुनिः (→मुनिम्); ते1 सा स्पृष्ट्वा प्रवणं मुनिम्. –c) न1 वरं (→परं). –d) न1 °लीयत, ग्र2 °धीम(?)त (→°धीयत).

६५. –c) दे1 आद्यं परं हृ°, दे2.4.10 न1 म1 आराधयन् हृ° (→आराधयद्धृ°). –d) ब2 °प्रणाशनम्, म1 °विनाशनम् (→°प्रभञ्जनम्).

६६. –b) दे7 नारायणं (→नारायणः). –c) दे8-10 ग्र1.2म1 आविरा° (→प्रादुरा°). –d) ग्र2 पीतवासो (→पीतवासा[:]).

बें. १.१.६८ दृष्ट्वा देवं समायान्तं विष्णुमात्मानमव्ययम् ।
जानुभ्यामवनिं गत्वा तुष्टाव गरुडध्वजम् ॥६७

इन्द्रद्युम्न उवाच ।※

यज्ञेशाच्युत गोविन्द माधवानन्त केशव ।
कृष्ण विष्णो हृषीकेश तुभ्यं विश्वात्मने नमः ॥६८
नमोऽस्तु ते पुराणाय हरये विश्वमूर्तये ।
सर्गस्थितिविनाशानां हेतवेऽनन्तशक्तये ॥६९
निर्गुणाय नमस्तुभ्यं निष्कलायामलात्मने ।
पुरुषाय नमस्तुभ्यं विश्वरूपाय ते नमः ॥७०
नमस्ते वासुदेवाय विष्णवे विश्वयोनये ।
आदिमध्यान्तहीनाय ज्ञानगम्याय ते नमः ॥७१
नमस्ते निर्विकाराय निष्प्रपञ्चाय ते नमः ।
भेदाभेदविहीनाय नमोऽस्त्वानन्दरूपिणे ॥७२
नमस्ताराय शान्ताय नमोऽप्रतिहतात्मने ।
अनन्तमूर्तये तुभ्यममूर्ताय नमो नमः ॥७३
नमस्ते परमार्थाय मायातीताय ते नमः ।
नमस्ते परमेशाय ब्रह्मणे परमात्मने ॥७४
नमोऽस्तु ते सुसूक्ष्माय महादेवाय ते नमः ।
नमः शिवाय शुद्धाय नमस्ते परमेष्ठिने ॥७५
त्वयैव सृष्टमखिलं त्वमेव परमा गतिः ।
त्वं पिता सर्वभूतानां त्वं माता पुरुषोत्तम ॥७६
त्वमक्षरं परं धाम चिन्मात्रं व्योम निष्कलम् ।
सर्वस्याधारमव्यक्तमनन्तं तमसः परम् ॥७७

---

६७. –a) दे10 दिवं (→देवं); ग्र2 दृष्ट्वा ※※※※यान्तं. –b) दे4 °मानहम°, दे10 °रात्मं नम° (?) (→°मात्मानम°). –c) दे6 जातुं सम° (→जानुभ्याम°); का1 दे2.5.6 न1 ग्र1 अवनीं (→अवनिं).

※ दे3 इन्द्रद्युम्न उ; न1 ते1 द1 ग्र1.2 म1 इन्द्रद्युम्नः.

६८. ग्र2. ⊙. –a) न1 गोनि(?)न्द (→गोविन्द). –b) दे1 केशवः (→केशव). –c) का1 व2 दे6 जिष्णो, दे5 कृष्ण (→विष्णो). –d) न1 वासुदेव नमोस्तु ते.

६९. ग्र2. ⊙. –a) म1 नमोस्तु देवदेवाय. –b) ते1 हरमे(ये?) (→हरये); ब2 विष्णु° (→विश्व°). –c) ग्र1 सृष्टि°, मुब. स्वर्ग° (→सर्ग°).

७०. –b) दे7 नमस्ते निष्कलात्मने, दे8.9 निष्कलाशात्मने नमः, दे10 द1 ग्र1.2 म1 निष्कलायात्मने नमः, ते1 निष्कलाय महात्मने, मुबें. मुए. मुब. निष्कलाय नमो नमः. –c) दे7-10 द1 ग्र1.2 म1 पुराणाय, मुबें. मुए. मुब. नमस्तेऽस्तु (→नमस्तुभ्यं). –d) ब1.3 ते1 चित्स (ते1 स्व)रूपाय (→विश्वरूपाय). ab, cd मध्ये ग्र2 अधिकम्—

※ नमस्तेऽस्तु पुराणाय हरये विश्वमूर्तये ।
सर्गस्थितिविनाशानां हेतवेऽनन्तशक्तये । (=६९)

७१. दे5.७१a-७२ b ⊙ (द्र. सं.). –a) ते1 नमोस्तु (→नमस्ते); ग्र2 वासुदेवाय देवाय. –b) ग्र2 °मूर्तये (→°योनये) ab, cd मध्ये द1 अधिकम्—

※ निर्गुणाय नमस्तुभ्यं निष्कलायात्मने नमः (= ७०ab)

७२. दे8-10 द1 ग्र1.2 म1.७२a-७४b ⊙ (द्र०सं०); दे5. न1. ab⊙. –d) दे1 °मूर्तये (→°रूपिणे).

७२ श्लोकानन्तरं ब1 अधिकम्—

※ नमस्ताराय शान्ताय निष्प्रपञ्चाय ते नमः ।
भेदाभेदविहीनाय नमस्त्वानन्दरूपिणे । ( = ७३a, ७२ bcd)

७३. दे8-10 द1 ग्र1.2 म1. ⊙ (द्र. ७२पा० वि०); दे4. ७३b–७४c ⊙ (द्र. सं.). –a) ते1 शिवाय (→ताराय). –c) न1 आनन्द° (→अनन्त°).

७४. दे8-10 द1 ग्र1.2 म1. ab ⊙ (द्र. ७२ पा. वि.); दे4. abc ⊙ (द्र. ७३ पा. वि. ). –b) दे7. समाती° (→मायाती°).

७५. –a) द1 ग्र1.2 म1 नमस्तुभ्यं (→नमोऽस्तु ते). –b) दे7-10 द1 ग्र1.2 म1 मायातीताय (→महादेवाय). –c) ते1 शर्वाय (→शिवाय); दे7 नमस्ते शिवरूपाय.

७६. –a) दे1.5. द1 मुबें. मुए. मुब. त्वयैतत्, ग्र1 तयैव (→त्वयैव). –b) ते1 द1 तमेव (→त्वमेव); ब1 परमां (→परमा). –d) ब3 दे2 ते1 पुरुषोत्तमः, द1 ग्र1.2 म1 परमेश्वर (ग्र2 °रः) (→पुरुषोत्तम).

७७. –a) ते1 परं ब्रह्म, ग्र1 परमन्तत्त्वं (→परं धाम). –b) दे7 चिन्मयं (→चिन्मात्रं); ते1 त्वम- (?) (→व्योम); दे1 °संस्थितं, द1 ग्र1.2 म1 °निर्मलं (→निष्कलम्). –d) का1 न1 मनसः (→तमसः); ग्र2 तमामन्तकः ※परम्.

प्रपश्यन्ति परात्मानं ज्ञानदीपेन केवलम् ।
प्रपद्ये भवतो रूपं तद्विष्णोः परमं पदम् ।।७८

एवं स्तुवन्तं भगवान् भूतात्मा भूतभावनः ।
उभाभ्यामथ हस्ताभ्यां पस्पर्श प्रहसन्निव ।।७९

स्पृष्टमात्रो भगवता विष्णुना मुनिपुंगवः ।
यथावत् परमं तत्त्वं ज्ञातवांस्तत्प्रसादतः ।।८०

ततः प्रहृष्टमनसा प्रणिपत्य जनार्दनम् ।
प्रोवाचोन्निद्रपद्माक्षं पीतवाससमच्युतम् ।।८१

त्वत्प्रसादादसंदिग्धमुत्पन्नं पुरुषोत्तम ।
ज्ञानं ब्रह्मैकविषयं परमानन्दसिद्धिदम् ।।८२

नमो भगवते तुभ्यं वासुदेवाय वेधसे ।
किं करिष्यामि योगेश तन्मे वद जगन्मय ।।८३

श्रुत्वा नारायणो वाक्यमिन्द्रद्युम्नस्य माधवः ।
उवाच सस्मितं वाक्यमशेषजगतो हितम् ।।८४

श्रीभगवानुवाच ।*

वर्णाश्रमाचारवतां पुंसां देवो महेश्वरः ।
ज्ञानेन भक्तियोगेन पूजनीयो न चान्यथा ।।८५

विज्ञाय तत्परं तत्त्वं विभूतिं कार्यकारणम् ।
प्रवृत्तिं चापि मे ज्ञात्वा मोक्षार्थीश्वरमर्चयेत् ।।८६

सर्वसङ्गान् परित्यज्य ज्ञात्वा मायामयं जगत् ।
अद्वैतं भावयात्मानं द्रक्ष्यसे परमेश्वरम् ।।८७

त्रिविधा भावना ब्रह्मन् प्रोच्यमाना निबोध मे ।
एका मद्विषया तत्र द्वितीया व्यक्तसंश्रया ।
अन्या च भावना ब्राह्मी विज्ञेया सा गुणातिगा।।८८ वें. १.१.६०

---

७८. –a) ब$_{1.3}$ दे$_4$ ग्र$_{1.2}$ यदात्मानं, दे$_{8-10}$ ते$_1$ महात्मानो, न$_1$ सदात्मानं (→परात्मानं); का$_1$ दे$_{1.2}$ पश्यन्ति परमात्मानं, ब$_2$ प्रशान्तं परमात्मानं, दे$_5$ प्रपश्यन्ति परमात्मानं. –c) का$_1$ ब$_{1-3}$ दे$_{2-5}$ न$_1$ ते$_1$ नमस्ये (दे$_4$ °स्यं, दे$_5$ °स्ते) (→प्रपद्ये); दे$_1$ प्रपद्यन्ते ततो रूपं.

७९. –a) दे$_7$ स्तुतश्च, न$_1$ ते$_1$ स्तुवन्तो (→स्तुवन्तं). –b) म$_1$ भूतानां (→भूतात्मा). –c) दे$_{4.7}$ एव (→अथ).–d) दे$_7$ संस्पृशन् प्रहसन्निव.

८०. –a) दे$_4$ स्पृष्टमात्राद्, ते$_1$ म$_1$ स्पृष्टमात्रे (→स्पृष्टमात्रो). –b) ब$_2$ द्विज° (→मुनि°); दे$_7$ °पुङ्गवाः (→पुंगवः). –d) न$_1$ तं, मुए. त्वत् (→तत्).

८१. –a) दे$_7$ तथा (→ततः); न$_1$ प्र**ष्ट-, ते$_1$ प्रहृष्टो (→प्रहृष्ट-). –c) दे$_{1.2}$ प्रोवाचेति स, दे$_7$ प्रोवाच तं स (→प्रोवाचोन्निद्र-); दे$_3$ °पत्राक्षं, दे$_6$ °पत्राक्षो (→°पद्माक्षं). –d) म$_1$ प्रीतमानसमच्युतं, + प्रीतया सह (?) मच्युतं.

८२. –b) दे$_{3.5}$ म$_1$ पुरुषोत्तमः (दे$_3$°मं) (→पुरुषोत्तम). –c) दे$_1$ ज्ञान-, दे$_6$ ज्ञातं, ते$_1$ नूनं (→ज्ञानं); का$_1$ °विषये (→°विषयं).

८३. ग्र$_2$. ८३c–८५b ⊙.–a) दे$_{8-10}$ म$_1$ नित्यं (→तुभ्यं). –b) दे$_{8-10}$ द$_1$ ग्र$_{1.2}$ म$_1$ हेतवे (→वेधसे). –c) म$_1$ किं करिष्यसि (→किं करिष्यामि); दे$_1$ देवेश, दे$_{8-10}$ केशव (→योगेश). –d) ग्र$_1$ वासुदेव (→तन्मे वद).

८४. ग्र$_2$. ⊙. –b) दे$_{8-10}$ धीमतः; न$_1$ मेधसः (→माधवः). –c) दे$_3$ साम्प्रतं, दे$_{7.10}$ संमितं (दे$_7$°तो) (→सस्मितं). –d) मुवें. मुए. मुब. अशेषं (→अशेष–); दे$_4$ °जगतां (→°जगतो); ब$_2$ अशेषेण हि ते परः, न$_1$ शङ्खचक्रगदाधरः. –cd) ग्र$_1$ प्रोवाच परमप्रीतः सर्वतत्त्वार्थसंग्रहम्.

*ग्र$_{1.2}$. ⊙; ब$_{1.2}$ भगवानुवाच; न$_1$ भगवान्; ते$_1$ म$_1$ श्रीभगवान्.

८५. ग्र$_{1.2}$. ab ⊙. –a) का$_1$ ब$_{1-3}$ दे$_{5.6}$ न$_1$ °श्रमाचारवता (→°श्रमाचारवतां). –b) का$_1$ ब$_{1-3}$ दे$_{1.5.6}$ न$_1$ पुंसा(?) (→पुंसां). –c) ग्र$_{1.2}$ अनेन (→ज्ञानेन); ब$_2$ ज्ञानेन भक्ति ** न.

८५ श्लोकात्परं ग्र$_2$ पुस्तके अधिकम्– विष्णुः.

८६. –a) ब$_1$ विज्ञायन् (→विज्ञाय); ब$_3$ तं (→तत्). –c) न$_1$ मां (→मे). –d) ग्र$_2$ अक्षयेत्, म$_1$ अर्चय (→अर्चयेत्); दे$_4$ मोक्षार्थी यस्तमर्चयेत्.

८७. –a) दे$_3$ °सङ्गम्प(ता)रि° (→°सङ्गान्परि°). –c) ग्र$_2$ भावमात्मानं (→°भावयात्मानं). –d) दे$_{10}$ दृक्ष्यसे, द$_1$ ग्र$_1$ इत्यन्ते, ग्र$_2$ अर्धं ते (→द्रक्ष्यसे).

८८. –a) दे$_7$ विविधां, दे$_{8-10}$ ते$_1$ द$_1$ ग्र$_{1.2}$ मुवें. मुए. मुब. त्रिविधां (→त्रिविधा); दे$_{7-10}$ ते$_1$ ग्र$_1$ मुवें. मुए. मुब. भावनां, द$_1$ भावयेद्, ग्र$_2$ तावरं(?) (→भावना).–b) दे$_{7.8.10}$ न$_1$ ते$_1$ द$_1$ ग्र$_{1.2}$ म$_1$ मुवें. मुए. मुब. प्रोच्यमानां (ग्र$_1$ °नं) (→प्रोच्यमाना); का$_1$ दे$_{1.4.5}$ न$_1$ मुवें. मुए. मुब. विबोध मे, दे$_7$ मया शृणु, दे$_{8-10}$ निशामय (→निबोध मे). –c) दे$_5$ व्यक्ता (→एका); दे$_4$ मस्वषया (?) (→मद्विषया). –d) म$_1$ द्वितया (→द्वितीया); का$_1$ व्यक्ति°, दे$_{8-10}$ व्यक्ष°, ग्र$_2$ [अ]प्यति° (→व्यक्त°);

वें. १.१.६० आसामन्यतमां चाथ भावनां भावयेद् बुधः ।
अशक्तः संश्रयेदाद्यामित्येषा वैदिकी श्रुतिः ।।८९
तस्मात् सर्वप्रयत्नेन तन्निष्ठस्तत्परायणः ।
समाराधय विश्वेशं ततो मोक्षमवाप्स्यसि ।।९०

इन्द्रद्युम्न उवाच ।❀

किं तत् परतरं तत्त्वं का विभूतिर्जनार्दन ।
किं कार्यं कारणं कस्त्वं प्रवृत्तिश्चापि का तव ।।९१

श्रीभगवानुवाच ।❀

परात्परतरं तत्त्वं परं ब्रह्मैकमव्ययम् ।
नित्यानन्दं स्वयंज्योतिरक्षरं तमसः परम् ।।९२
ऐश्वर्यं तस्य यन्नित्यं विभूतिरिति गीयते ।
कार्यं जगदथाव्यक्तं कारणं शुद्धमक्षरम् ।।९३
अहं हि सर्वभूतानामन्तर्यामीश्वरः परः ।
सर्गस्थित्यन्तकर्तृत्वं प्रवृत्तिर्मम गीयते ।।९४
एतद् विज्ञाय भावेन यथावदखिलं द्विज ।
ततस्त्वं कर्मयोगेन शाश्वतं सम्यगर्चय ।।९५

इन्द्रद्युम्न उवाच ।❀

के ते वर्णाश्रमाचारा यैः समाराध्यते परः ।
ज्ञानं च कीदृशं दिव्यं भावनात्रयसंस्थितम् ।।९६
कथं सृष्टमिदं पूर्वं कथं संह्रियते पुनः ।
कियत्यः सृष्टयो लोके वंशा मन्वन्तराणि च ।
कानि तेषां प्रमाणानि पावनानि व्रतानि च ।।९७

---

ते1 °संज्ञिता (→°संश्रया). –e) दे7 द1 ग्र1.2 म1 तु (→च); ते1 ब्रह्मन् (→ब्राह्मी). –f) ब2 च, ते1 ग्र2 स (→सा); दे7 गुणान्विता, ग्र2 गुणागमा (→गुणातिगा).

८९. –a) दे10 आसामान्यं, ते1 तासामन्य –(→आसामन्य–); ब3 चापि, दे7 वाथ, ते1 नाथ (→चाथ); ब1 आसामान्यथ मान्चाथ. –c) दे3.6 अशक्तौ, दे7 आशक्तः, दे9 असक्तः (→अशक्तः); दे7 संश्रयेदीशम्, दे10 ग्र2 संश्रयोदाद्याम् (?) (→संश्रयेदाद्याम्).

९०. –b) द1 तं निष्ठस् (→तन्निष्ठस्). –c) का1 समाधारय, न1 द1 ग्र1.2 म1 तमाराधय (→समाराधय).

❀ न1 ते1 द1 ग्र1.2 म1 इन्द्रद्युम्नः

९१. –a) दे7 ब्रह्म (→तत्त्वं). –b) ग्र1 किं (→का); ब1 जनार्दनः, दे3 जनार्दना (?) (→जनार्दन). –c) दे3 द1 कार्य- (→कार्यं); दे1 करणं (→कारणं); न1 तत्त्वं (→कस्त्वं); दे10 किं कार्यकारणकस्त्वं. –d) का1 प्रसूतिश् (→प्रवृत्तिश्); द1 ग्र1.2 म1 वद (→तव); न1 परं ब्रह्मैकमव्ययम् (= ९२b).

❀ का1 ब1.2 दे3.5 भगवानुवाच; न1 भगवान्; ते1 म1 श्रीभगवान्.

९२. न1. ab ⊙. –b) ग्र2 म1 पर- (→परं). –c) का1 ब1 मुवें. मुए. मुब. नित्यानन्द- (→नित्यानन्दं); का1 स्वयं,+परं, ब1 मुवें. मुए. मुब.-मयं, दे7-10 ग्र1 परं (→स्वयं–); दे10 ग्र2 ज्योति (→ज्योतिर्). –d) का1 ब2.3 दे2.3.6 अद्वयं, न1 अद्वन्द्वं (→अक्षरं); ते1 अद्वरं (?) परमं पदम्.

९३. –a) ते1 स्वरूपं (→ऐश्वर्यं); ग्र2 तव (→तस्य); ते1 विश्वं (→नित्यं). –c) ब1 तथाव्यक्तं, दे4 अनाद्यन्तं (→अथाव्यक्तं); दे3 कार्यश्च जगदव्यक्तं, दे6 कार्यं च जगदाव्यक्तं.

९४. द1. ९४c–९५d ⊙. -a) ब3 दे3.6 अहिंसा (→अहं हि); का1 सर्वस्य भावानां, ब1.2 दे2.3.6.7 सर्वभावानां (→सर्वभूतानां). –b) दे10 अन्तर्योगी° (→अन्तर्यामी°); ब1 पदं, ग्र2 प्रभुः, मुवें. पुरः (→परः); दे7 ईश्वरः प्रभुरव्ययः; –c) दे3 सर्गः, दे4 सर्व– (→सर्ग–); ब2.3-करणं, दे4 –कर्तव्यं (→-कर्तृत्वं). –d) का1 प्रसूतिर्, ग्र2 प्रवृत्तं (→प्रवृत्तिर्); न1 तस्य (→मम).

९५. द1. ⊙. –b) ब1.3 दे3.6 जगत्, दे5 द्विजाः (→द्विज). –c) का1 ब2 दे1.2.6 7 तं (→त्वं). –d) न1 शंकरं, ते1 मां परं (→शाश्वतं); ब1 अर्चयन्, दे6.9 अर्चयः, दे8 अर्चयेः, दे10 अर्चयत् (→अर्चय); दे5 शाश्वतं सम्यग (?) त्वया.

❀ द 1. ⊙; न1 ते1 ग्र1 2 म1 इन्द्रद्युम्नः.

९६. द1. ab ⊙. –a) ते1 कति (→के ते). –b) दे4 तमा°, ते1 सदा° (→समा°). –c) दे1.7 पुण्यं, दे10 द्रव्यं (→दिव्यं); द1 ज्ञानं च कीदृशी शक्तिर्. –d) का1 ब... दे2.3.6 न1 °श्रयसंश्रितं, ब1 °श्रयसंयुतं, ब3 °श्रयसम्मतं, दे... ग्र2 °त्रयसंश्रितम् , ग्र1 °त्रयसंज्ञितं, म1 °त्रयसंश्रयं (→°त्रयसंस्थितम्); द1 भावनत्रयसंश्रितः.

९७. दे4. ef ⊙. (द्र. सं.); ग्र2. ९७c–९८f ⊙. –a) ब3 ग्र2 सर्वं (→पूर्वं). -b) का1 संक्रियते, द1 संवीयते, ग्र... सन्धीयते, ग्र2 संक्षीयते (→संह्रियते); दे1 जगत् (→पुनः); –c) का1 दे1.3.4-7 ते1 कियन्त्यः (→कियत्यः); दे7 को व... (→लोके). –d) दे1.3.6,7.10 ते1 वंशो, द1 ग्र1 म1 वंश... (→वंशाः). –e) ब1-3 दे6.10 न1 प्रमाणं च (दे10 °णश्च...

तीर्थान्यर्कादिसंस्थानं पृथिव्यायामविस्तरे ।
कति द्वीपाः समुद्राश्च पर्वताश्च नदीनदाः ।
ब्रूहि मे पुण्डरीकाक्ष यथावदधुनाऽखिलम् ।।९८

श्रीकूर्म उवाच ।❀

एवमुक्तोऽथ तेनाहं भक्तानुग्रहकाम्यया ।
यथावदखिलं सर्वमवोचं मुनिपुंगवाः ।।९९
व्याख्यायाशेषमेवेदं यत्पृष्टोऽहं द्विजेन तु ।
अनुगृह्य च तं विप्रं तत्रैवान्तर्हितोऽभवम् ।।१००
सोऽपि तेन विधानेन मदुक्तेन द्विजोत्तमः ।
आराधयामास परं भावपूतः समाहितः ।।१०१
त्यक्त्वा पुत्रादिषु स्नेहं निर्द्वन्द्वो निष्परिग्रहः ।
संन्यस्य सर्वकर्माणि परं वैराग्यमाश्रितः ।।१०२
आत्मन्यात्मानमन्वीक्ष्य स्वात्मन्येवाखिलं जगत् ।
संप्राप्य भावनामन्त्यां ब्राह्मीमक्षरपूर्विकाम् ।।१०३
अवाप परमं योगं येनैकं परिपश्यति ।
यं विनिद्रा जितश्वासाः काङ्क्षन्ते मोक्षकाङ्क्षिणः ।।१०४
ततः कदाचिद् योगीन्द्रो ब्रह्माणं द्रष्टुमव्ययम् ।
जगामादित्यनिर्देशान्मानसोत्तरपर्वतम् ।
आकाशेनैव विप्रेन्द्रो योगैश्वर्यप्रभावतः ।।१०५
विमानं सूर्यसंकाशं प्रादुर्भूतमनुत्तमम् ।
अन्वगच्छन् देवगणा गन्धर्वाप्सरसां गणाः ।
दृष्ट्वाऽन्ये पथि योगीन्द्रं सिद्धा ब्रह्मर्षयो ययुः ।।१०६ वें.१.१.११०

(→प्रमाणानि). –f) दे8 पावनाति– (→पावनानि); ब3 भूतानि, दे3.6 भृतानि (→व्रतानि).

९८. ग्र2. ⊙; दे9. cd 'कति...पर्वता' खण्डितम्. –b) दे1.7 °पृथिव्यायास° (→°पृथिव्यायाम°); का1 ब1-3 दे1-7 न1 ते1 द1 ग्र1 म1 मुवें. मुए. मुब. °विस्तरं (→°विस्तरे). –d) दे7 °नदः (→°नदाः). –f) दे1.7-10 द1 ग्र1 म1 मुवें. मुए. मुब. पुनः (→[अ]खिलं).

❀. दे8-10 ते1 द1 ग्र1.2 म1. ⊙; का1 ब1-3 दे2.3.5.6 कूर्म उवाच; न1 कूर्मः.

९९. –a) द1 तेनाह (→तेनाहं). –c) मुवें. मुए. मुब. सम्यग् (→सर्वं); द1 ग्र1.2 म1 यथावत्सर्वमखिलम्. –d) का1 दे1-3.6 अवोचन्, ब3 अखिलं (→अवोचं), दे1 °पुङ्गव (→°पुंगवाः).

१००. ग्र2. b ⊙. –a) का1 व्याख्याय शेष°, ब3 व्याख्यायाः शेष°, दे3.6 व्याख्याद्याशेष°, दे7 म1 आख्यायाशेष°, दे1 व्याख्याम शेष° (→व्याख्यायाशेष°); ग्र2 एवैतं (→एवेदं). –b) ब3 दे3.6 द्विजोत्तम (→द्विजेन तु). –c) दे4 °गृह्य तां, दे10 °गृह्यर्चनं (→°गृह्य च तं). –d) ब1 °हितो भव, + °र्धीयत, दे1 द1 ग्र2 °हितोभवत्, दे5 °हितो भवाः (→°हितोऽभवम्).

१०१. –a) दे6 यदुक्तेन, ग्र1.2 यथोक्तेन (→मदुक्तेन). –b) दे6 द्विजोत्तम, दे8-10 ते1 द1 ग्र1 म1 मुवें. मुए. मुब. द्विजोत्तमाः (→द्विजोत्तमः). –c). न1 हरं, ग्र2 हरिं (→परं). –d) दे3.6 भारभूतः, दे7 ते1 भावयुक्तः, दे8.9 भवपूतः(?), न1 भावभूतः (→भावपूतः).

१०२. –a) का1 ब1-3 दे2 स्नेहान् (→स्नेहं). –c) ग्र2 संत्यज्य (→संन्यस्य); दे1.7 ते1 °कार्याणि, दे10 °कर्माणि, + °कार्याणि (→°कर्माणि). –d) का1 ब1-3 दे2-4 ते1 °मास्थितः, दे10 °मानुषः (?) (→°माश्रितः).

१०३. –a) दे10 ग्र1 आत्मना° (→आत्मन्या°); दे4 अद्वेष्यं, दे10 अन्वेक्ष (→अन्वीक्ष्य). –b) दे3 आत्मन्ये°, दे10 स्वात्मन्ने° (→स्वात्मन्ये°). –c) का1 ब1.3 ग्र2 अन्यां, दे10 अत्यां, न1 एकां (→अन्त्यां); दे7 संप्राप्य भावना मह्याम्. –d) दे1.7.10 °पूर्वकं, न1 °संज्ञिकां (→°पूर्विकाम्).

१०४. –a) का1 अन्वाप, दे7 ते1 आस्थाय (→अवाप); ग्र2 अवाप्य च परं योगं. –b) ब2 येनैवं, दे1 योऽनेकं, दे8.9 येनैव, न1 येनेदं (→येनैकं); ब3 °पृच्छति (→°पश्यति). –c) दे5 योगनिद्रा (→ यं विनिद्रा[:]). –d) ब3 कांक्षन्ति (→काङ्क्षन्ते); दे6 °कांक्षिभिः (→°काङ्क्षिणः).

१०५. –a) दे10 यतः, न1 ततं (→ततः); द1 म1 योगीन्द्रं (→योगीन्द्रो). –b) ग्र1 ब्राह्मणं (→ब्रह्माणं); दे10 तुष्टुं (?) (→द्रष्टुं); दे7 उद्यतः (→अव्ययं). –c) न1 °मार्गेण (→°निर्देशान्). –d) ब2 मानसोत्तरपूर्वतः, दे5.10 मा (दे10 म)नसोत्तमपर्वतं (दे5 °तः). –e) द1 ग्र1.2 म1 आकाशे चैव (→आकाशेनैव); ब1 न1 द1 विप्रेन्द्रा, दे1 राजेन्द्र, दे6 विप्रेन्द्र (→विप्रेन्द्रो). –f) दे3 योगैश्वर्यस्य भावतः.

१०६. –c) का1 ब3 दे2.3.6 अनुगच्छन् (दे3 °च्छं), दे1 अन्वगच्छं, दे4 अन्वागच्छन्, दे7 अथागच्छन्, दे10 अन्यगच्छन्, ग्र1.2 म1 तमन्वगच्छन् (→अन्वगच्छन्); द1 अन्वगच्छद्देवानां. –d) न1 गन्धर्वाप्सरसस्तथा. –e) दे8-10 दृष्टो यैः (दृष्ट्वाऽन्ये); दे8.10 योगीन्द्रः (→योगीन्द्रं); ग्र2 दृष्ट्वा चान्येऽथ योगीन्द्रं. –f) न1 दृष्ट्वा (→सिद्धाः); दे8-10 परमर्षयो (→ब्रह्मर्षयो).

वें.१.१.११० ततः स गत्वा तु गिरिं विवेश सुरवन्दितम् ।
स्थानं तद् योगिभिर्जुष्टं यत्रास्ते परमः पुमान् ।।१०७

संप्राप्य परमं स्थानं सूर्यायुतसमप्रभम् ।
विवेश चान्तर्भवनं देवानां च दुरासदम् ।।१०८

विचिन्तयामास परं शरण्यं सर्वदेहिनाम् ।
अनादिनिधनं देवं देवदेवं पितामहम् ।।१०९

ततः प्रादुरभूत् तस्मिन् प्रकाशः परमात्मनः ।
तन्मध्ये पुरुषं पूर्वमपश्यत् परमं पदम् ।।११०

महान्तं तेजसो राशिमगम्यं ब्रह्मविद्विषाम् ।
चतुर्मुखमुदाराङ्गमर्चिभिरुपशोभितम् ।।१११

सोऽपि योगिनमन्वीक्ष्य प्रणमन्तमुपस्थितम् ।
प्रत्युद्गम्य स्वयं देवो विश्वात्मा परिषस्वजे ।।११२

परिष्वक्तस्य देवेन द्विजेन्द्रस्याथ देहतः ।
निर्गत्य महती ज्योत्स्ना विवेशादित्यमण्डलम् ।
ऋग्यजुःसामसंज्ञं तत् पवित्रममलं पदम् ।।११३

हिरण्यगर्भो भगवान् यत्रास्ते हव्यकव्यभुक् ।
द्वारं तद् योगिनामाद्यं वेदान्तेषु प्रतिष्ठितम् ।
ब्रह्मतेजोमयं श्रीमन्निष्ठा चैव मनीषिणाम् ।।११४

दृष्टमात्रो भगवता ब्रह्मणाऽर्चिर्मयो मुनिः ।
अपश्यदैश्वरं तेजः शान्तं सर्वत्रगं शिवम् ।।११५

स्वात्मानमक्षरं व्योम तद् विष्णोः परमं पदम् ।
आनन्दमचलं ब्रह्म स्थानं तत्पारमेश्वरम् ।।११६

---

न$_1$. १०६ श्लोकस्य b, c चरणयोर्मध्येऽधिकम्.

* तदा तं शान्तिमानसं कामगं स जगाम ह ।

१०७. –a) दे$_{3.5}$. मुवें. मुए. मुब. गत्वानु- (→गत्वा तु); ते$_1$ ततस्स गत्वा तु गिरिम्. –b) ते$_1$ अशेष– (→विवेश); ब$_1$ °वन्दितः (→°वन्दितं). –c) ब$_3$ स्थानान्, दे$_{8-10}$ धाम, द$_1$ ध्यानं (→स्थानं); ब$_1$ यद्, दे$_7$ तु (→तद्); ब$_1$ दृष्टं, दे$_6$ दुष्टं (→जुष्टं). –d) दे$_7$ स परः, द$_1$ परमं (→परमः); ब$_3$ यत्रास्ते परमेश्वरः.

१०८. –c) दे$_{10}$ विशेष (?), न$_1$ विश्वेशा (?) (→विवेश); दे$_7$ भर्तुर्, द$_1$ यान्तर् (→चान्तर्); दे$_4$ विवेशाद्यन्तभवनं.

१०९. –a) द$_1$ ग्र$_{1.2}$ पदं (→परं); ब$_3$ न$_1$ चिन्तयामास परमं, दे$_7$ चिन्तयामास स परं, म$_1$ पदं विचिन्तयामास. –b) दे$_2$ शरणं (→शरण्यं). –c) मुवें. मुए. मुब. चैव (→देवं). –d) न$_1$ चतुर्मुखं (→पितामहं).

११०. –a) का$_1$ ब$_{1-3}$ दे$_{2-4.6}$ ते$_1$ तदा (→ततः). –b) द$_1$ प्रायशः (→प्रकाशः); दे$_{7-10}$ द$_1$ ग्र$_{1.2}$ म$_1$ मुवें. मुए. मुब. परमाद्भुतः, न$_1$ परमात्मने (→परमात्मनः). –c) दे$_7$ तत्रस्थं (→तन्मध्ये); दे$_{10}$ पुरुषः, ग्र$_1$ पूरुषं (→पुरुषं). –d) दे$_{8-10}$ सर्वम् (→पूर्वम्).

१११. –a) न$_1$ महतस् (→महान्तं); द$_1$ ग्र$_{1.2}$ म$_1$ महान्तं तु जगत्सारं. –b) दे$_{8.9}$ सर्व° (→ब्रह्म°); ब$_2$ अनन्यं ब्रह्मवर्चसां, दे$_4$ अगम्यं विदुषामपि. –c) दे$_7$ ग्र$_{1.2}$ म$_1$ चतुर्भुजम् (→चतुर्मुखम्). –d) दे$_3$ आर्चिभिर्, ग्र$_2$ अर्चितिर् (→अर्चिभिर्); द$_1$ गरुडोपरि संस्थितम्.

११२. –a) दे$_4$ अन्विष्य (→अन्वीक्ष्य). –b) दे$_3$ प्रशमन्तं, न$_1$ द$_1$ प्रणवन्तं (→प्रणमन्तं); का$_1$ ब$_{1-3}$ दे$_{2.3.5.6}$ न$_1$ अवस्थितम् (दे$_5$ °तः) (→उपस्थितम्). –c) ते$_1$ प्रत्युत्थाय (?), द$_1$ म$_1$ प्रत्युद्ययौ, ग्र$_2$ **** (→प्रत्युद्गम्य); ग्र$_2$ देवोपि (→देवो). –d) ब$_3$ परिसस्वजे, दे$_{8.9}$ परिषज्वजे (→परिषस्वजे).

११३. –b) दे$_4$ द्विजेन्द्रस्याद्य, ग्र$_2$ द्विजेन्द्रस्याधि–, दे$_{10}$ द्विजेन्द्रस्याप्य– (→द्विजेन्द्रस्याथ). –d) दे$_{10}$ विशेषा° (→विवेशा°); दे$_{4.5}$ °मण्डले (→°मण्डलं). –e) दे$_{8-10}$ द$_1$ ग्र$_{1.2}$ म$_1$ तं (→तत्). –f) ब$_{2.3}$ द$_1$ ग्र$_1$ म$_1$ परं (→पदं); ग्र$_2$ पवित्रम्मंगलं परं.

११४. –b) ग्र$_2$ कस्य (→हव्य-). –d) का$_1$ प्रतिस्थितम्, दे$_7$ प्रकीर्तितम (→प्रतिष्ठितम्). –e) दे$_{1.4.5.10}$ न$_1$ द$_1$ ग्र$_1$ श्रीमान्, दे$_{8.9}$ मुवें. मुए. श्रीमत् (→श्रीमन्). –f) दे$_4$ न$_1$ निष्ठां, दे$_{8.9}$ मुवें. मुए. द्रष्टा (→निष्ठा); दे$_3$ °श्यता (?) देव मनीषिणाम्, दे$_{10}$ द्रष्टा चैव नमीषिणम् (?).

११५. –a) द$_1$ ग्र$_{1.2}$ म$_1$ °मात्रे (→°मात्रो); द$_1$ ग्र$_1$ म$_1$ भगवति (→भगवता); दे$_4$ दृष्ट्वा मात्रे भगवता. –b) दे$_2$ ब्राह्म° (→ब्रह्म°); ब$_3$ दे$_1$ ब्रह्मणार्चिम°, ते$_1$ ब्रह्मणोर्चिर्म°, म$_1$ ब्रह्मण्यर्चिर्म° (→ब्रह्मणाऽर्चिर्म°); का$_1$ ब्राह्मणाभिमनो मुनिः, दे$_4$ ब्राह्मणाभिमतो मुनिः, दे$_5$ ब्राह्मणाभिमुखो मुनिः. –d) का$_1$ ब$_{2.3}$ दे$_{2.3.5.6}$ सर्वगतं (→सर्वत्रगं), द$_1$ ग्र$_{1.2}$ म$_1$ शाश्वतं सर्वगं शिवम्.

११६. –a) ब$_{2.3}$ दे$_{4.7}$ ते$_1$ द$_1$ ग्र$_{1.2}$ म$_1$ आत्मानं (→स्वात्मानं); द$_1$ ग्र$_{1.2}$ म$_1$ ब्रह्म (→व्योम). –b) ब$_{2.3}$ दे$_{2.4.6}$ यत्तद्विष्णोः परं (ब$_3$ °रनं) पदम्; दे$_{3.5.8-10}$ मुवें. मुए. मुब. यत्र विष्णोः परं पदम्, न$_1$ यत्तद्धि परमं पदम्, ते$_1$ यद्विष्णोः

सर्वभूतात्मभूतः स परमैश्वर्यमास्थितः ।
प्राप्तवानात्मनो धाम यत्तन्मोक्षाख्यमव्ययम् ।।११७
तस्मात् सर्वप्रयत्नेन वर्णाश्रमविधौ स्थितः ।
समाश्रित्यान्तिमं भावं मायां लक्ष्मीं तरेद् बुधः।।११८

सूत उवाच ।❀

व्याहृता हरिणा त्वेवं नारदाद्या महर्षयः ।
शक्रेण सहिताः सर्वे पप्रच्छुर्गरुडध्वजम् ।।११९

ऋषय ऊचुः ।❀

देवदेव हृषीकेश नाथ नारायणामल ।
तद् वदाशेषमस्माकं यदुक्तं भवता पुरा ।।१२०
इन्द्रद्युम्नाय विप्राय ज्ञानं धर्मादिगोचरम् ।
शुश्रूषुश्चाप्ययं शक्रः सखा तव जगन्मय ।।१२१
ततः स भगवान् विष्णुः कूर्मरूपी जनार्दनः ।
रसातलगतो देवो नारदाद्यैर्महर्षिभिः ।।१२२
पृष्टः प्रोवाच सकलं पुराणं कौर्ममुत्तमम् ।
सन्निधौ देवराजस्य तद् वक्ष्ये भवतामहम् ।।१२३
धन्यं यशस्यमायुष्यं पुण्यं मोक्षप्रदं नृणाम् ।
पुराणश्रवणं विप्राः कथनं च विशेषतः ।।१२४
श्रुत्वा चाध्यायमेवैकं सर्वपापैः प्रमुच्यते ।
उपाख्यानमथैकं वा ब्रह्मलोके महीयते ।।१२५
इदं पुराणं परमं कौर्मं कूर्मस्वरूपिणा ।
उक्तं देवाधिदेवेन श्रद्धातव्यं द्विजातिभिः ।।१२६ वें.१.१.१३१

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायां पूर्वविभागे प्रथमोऽध्यायः ।।१।।

---

परमं पदम्. –c) ग्र$_{1}$ अनन्तं (→आनन्दं); दे$_{1}$ अपरं, न$_{1}$ म$_{1}$ अमलं (→अचलं). –d) का$_{1}$ ब$_{1-3}$ दे$_{1-7}$ न$_{1}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ मुवें. परमेश्वरम्, ग्र$_{1}$ पारमैश्वरम् (→पारमेश्वरम्).

११७. दे$_{10}$. ११७c–११८ b ⊙ (इ. सं.).–a) का$_{1}$ °भूतः सन्, दे$_{1.5\cdot7-10}$ न$_{1}$ द$_{1}$ ग्र$_{1}$ म$_{1}$ मुवें. मुए. मुब. °भूतस्थः, ..ग्र$_{2}$ °भूतस्थं (→°भूतः स). –b) न$_{1}$ अद्भुतं, ग्र$_{2}$ ..स्थितं (→प्रास्थितः). –c) दे$_{4}$ आत्मना (→आत्मनो); ..प्राप्तवानागममयं. –d) का$_{1}$ ब$_{2}$ दे$_{2.5.6}$ यत्तु मोक्षाख्य°, दे$_{3}$ ..मोक्षाख्य° (→यत्तन्मोक्षाख्य°); दे$_{1}$ यत्तन्मोक्षमव्ययम् .

११८. दे$_{10}$. ab ⊙. –b) दे$_{1}$ स्थिताः (→स्थितः). –c) दे$_{6}$ समाश्रित्याति मां भावं, न$_{1}$ समाश्रितश्च मद्भावं. –d) ..$_{1.2}$ दे$_{4.10}$ ते$_{1}$ ग्र$_{1}$ माया- (→मायां); न$_{1}$ एतां (→लक्ष्मीं); ..ग्र$_{1}$ म$_{1}$ ध्रुवं (→बुधः); ग्र$_{2}$ * यां लक्ष्मी तनु ध्रुवं.

❀ न$_{1}$ ते$_{1}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ सूतः .

११९. –a) ते$_{1}$ व्याख्यातो, द$_{1}$ ग्र$_{1.2}$ म$_{1}$ व्याहृतं (→व्याहृता[:]); का$_{1}$ हरिणात्येवं, द$_{1}$ ग्र$_{2}$ हरिणा चैव, ग्र$_{1}$ म$_{1}$ हरिणा चैवं (→हरिणा त्वेवं). –c) न$_{1}$ हर्षेण (→शक्रेण); ग्र$_{2}$ ..हितास् (→सहिताः). –d) दे$_{4}$ गुरुसंनिभं (→गरुडध्वजम्).

❀ ग्र$_{2}$. ⊙; दे$_{1}$ श्रीऋषय ऊचुः; दे$_{8.9}$ ऋषय ऊ.; न$_{1}$ ते$_{1}$ ..ग्र$_{1}$ म$_{1}$ ऋषयः .

१२०. ग्र$_{2}$. १२०–१२२ ab ⊙. –a) द$_{1}$ देवदेवं (→देवदेव); दे$_{3.6}$ हृषीकेशं (→हृषीकेश). –b) ब$_{1}$ नारायणोऽमल, दे$_{7}$ नारायणामर; दे$_{8-10}$ मुवें. मुए. मुब. नारायणा.. (→नारायणामल).

१२१. ग्र$_{2}$. ⊙. –b) ब$_{1.3}$ दे$_{2.6}$ कर्मादि°, दे$_{1}$ ..र्मार्थ° (→धर्मादि°). –c) ते$_{1}$ चाययश् (?), म$_{1}$ चाप्यहं (→चाप्ययं); दे$_{9}$ शक्तः (→शक्रः). –d) दे$_{7}$ शाश्वतस्त्वं (→सखा तव); दे$_{5.10}$ जगन्मयः (→जगन्मय).

१२२. ग्र$_{2}$. ab ⊙. –c) ते$_{1}$ देवा (→देवो).

१२३. –a) दे$_{1}$ तुष्टः (→पृष्टः); दे$_{8-10}$ भगवान्, म$_{1}$ अखिलं (→सकलं). –c) ब$_{2}$ संविधौ, ग्र$_{2}$ *** (→सन्निधौ). –d) दे$_{10}$ वक्षे, द$_{1}$ ग्र$_{1.2}$ म$_{1}$ वन्द्यो (→वक्ष्ये); द$_{1}$ ग्र$_{1}$ म$_{1}$ भवतापहा (→भवतामहं). –cd) ग्र$_{2}$ देवराजस्य तद्वन्द्यो भवतापहमव्ययम्.

१२४. –b) दे$_{4}$ °पदं (→°प्रदं). –c) ग्र$_{2}$ विप्रः (→विप्राः). –d) दे$_{3}$ कथनश्च, न$_{1}$ कथत्वं च, द$_{1}$ ग्र$_{1}$ कथञ्चन (→कथनं च).

१२५. –a) दे$_{4}$ वाध्याय° (→चाध्याय°); ब$_{1}$ एकं वै, ते$_{1}$ एकैकं (→एवैकं); दे$_{3}$ श्रुत्वाध्यायस्तु मेवैकं(?), द$_{1}$ ग्र$_{1.2}$ म$_{1}$ श्रुत्वा च पा (ग्र$_{2}$ प) दमेवैकं. –b) दे$_{1}$ °पापौघ° (→°पापैः प्र°); दे$_{10}$ प्रमुच्यसे (→प्रमुच्यते). –c) दे$_{4}$ उपाध्यानं, न$_{1}$ उपाख्यातम् (→उपाख्यानं); दे$_{8-10}$ अथांशं वा (→अथैकं वा); दे$_{7}$ च (→वा).

१२६. –a) द$_{1}$ ग्र$_{1.2}$ म$_{1}$ प्रथमं (→परमं). –b) ते$_{1}$ श्रीकूर्म°, ग्र$_{2}$ तु कूर्म° (→कूर्मस्व°); दे$_{1}$ °रूपिणं, न$_{1}$ °रूपिणां (→°रूपिणा). –c) दे$_{5}$ एक, ते$_{1}$ उक्तो (→उक्तं); का$_{1}$ च वासुदेवेन, ब$_{1}$ दे$_{2-6}$ देवादि (दे$_{2.5}$ °ति) देवेन, दे$_{1.7-10}$ मुवें. मुए. वै देवदेवेन, द$_{1}$ ग्र$_{1}$ म$_{1}$ च देवदेवेन (→देवाधिदेवेन); ग्र$_{2}$ उक्तं च देवदेवस्य. –d) दे$_{7}$ श्रोवितव्यं, दे$_{1.3}$ श्रुत्वातव्यं (?), दे$_{6}$ श्रुत्वा भव्यं, ते$_{1}$ ह्यध्येतव्यं (→श्रद्धातव्यं); द$_{1}$ ग्र$_{1.2}$ म$_{1}$ प्रदातव्यं द्विजातये.

पुष्पिका—

# २

श्रीकूर्म उवाच ।❀

वें.१.२.१ *शृणुध्वमृषयः सर्वे यत्पृष्टोऽहं जगद्धितम् ।
वक्ष्यमाणं मया सर्वमिन्द्रद्युम्नाय भाषितम् ॥१
भूतैर्भव्यैर्भविष्यद्भिश्चरितैरुपबृंहितम् ।
पुराणं पुण्यदं नृणां मोक्षधर्मानुकीर्तनम् ॥२
अहं नारायणो देवः पूर्वमासं न मे परम् ।
उपास्य विपुलां निद्रां भोगिशय्यां समाश्रितः ॥३
चिन्तयामि पुनः सृष्टिं निशान्ते प्रतिबुध्य तु ।
ततो मे सहसोत्पन्नः प्रसादो मुनिपुंगवाः ॥४
चतुर्मुखस्ततो जातो ब्रह्मा लोकपितामहः ।
तदन्तरेऽभवत् क्रोधः कस्माच्चित् कारणात् तदा ॥५
आत्मनो मुनिशार्दूलास्तत्र देवो महेश्वरः ।
रुद्रः क्रोधात्मजो जज्ञे शूलपाणिस्त्रिलोचनः ।
तेजसा सूर्यसंकाशस्त्रैलोक्यं संहरन्निव ॥६

---

**पुराणनाम**—का1 इति श्रीमहापुराणे कौर्मे षट्साहस्रिकायां, ब1 इति श्रीकौर्मे, ब2 इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायां, ब3 इत्यादिमहापुराणे कौर्मषट्साहस्रचं (?) संहितायां, दे1.7-10 मुवें. मुए. इति श्रीकूर्मपुराणे, दे2.3.5 ग्र2 इत्यादिमहापुराणे कौर्मे षट्साहस्रिकायां संहितायां, दे4 इत्यादिमहापुराणे श्रीकूर्मषट्साहस्रिकायां संहितायां, दे6 इत्यादिमहापुराणे कौर्मे, न1 इत्यादि महापुराणे षट्साहस्रिके श्रीकौर्मे, ते1 इत्यादि महापुराणे कूर्मपुराणे षट्साहस्रिकायां, द1 इति श्रीकौर्मे महापुराणे षट्साहस्रिकायां संहितायां, ग्र1 इत्यादिमहापुराणे श्रीकौर्मे षट्साहस्रिकायां संहितायां पूर्वभागे, म1 इत्यादिमहापुराणे श्रीकौर्मे षट्साहस्रिकायां ब्राह्मयां संहितायां, मुब. इति श्रीकौर्मे महापुराणे पूर्वभागे. **अध्यायनाम**—का1 ब1-3 दे2-6 न1 ते1 द1 ग्र1.2 म1. ⊙; दे1.7-9 मुब. इन्द्रद्युम्नमोक्षे, दे10 इन्द्रद्युम्नमोक्षो नाम, मुवें. मुए. इन्द्रद्युम्नमोक्षवर्णनं नाम. **अध्यायसंख्या**—का1 ब1-3 दे1-10 न1 ते1 द1 ग्र1. 2म1 मुवें. मुए. मुब. प्रथमोऽध्यायः.

## २

❀. का1 ब1-3 दे3.5.6.8-10 मुवें. मुए. मुब. कूर्म उवाच; न1 कूर्मः; ते1 ग्र1.2 म1 श्रीकूर्मः.

१. –a) ब2 दे2-6 द1 ग्र2 म1 मुनयः (→ऋषयः). –b) न1 जगधि (?) तं (→जगद्धितम्). –c) दे3 न1 वक्ष्यमानं (?) (→वक्ष्यमाणं).

२. दे5. ab ⊙. –a) ग्र2 व्रतैः (→भूतैः); का1 ब1-3 दे1-3.6 ते1 द1 ग्र1 मुवें. मुए. मुब. भवद्भिश्च, न1 भविष्यैश्च (→भविष्यद्भिः). –b) दे1 द1 ग्र1.2 म1 °शोभितम् (→°बृंहितम्). –c) द1 ग्र1.2 म1 पञ्चदशमं (→पुण्यदं नृणां). –d) ब1 धर्मार्थे° (→धर्मानु°); द1 °कीर्तितं (→°कीर्त्तनम्).

३. –b) द1 ग्र2 म1 मुवें. पूर्वमासीन्न (→पूर्वमासं न); ग्र2 नरः (→न मे); ब3 द1 ग्र1.2 म1 परः, दे5 पूरः, न1 पुरा (→परम्); ते1 पूर्वमासं रमेश्वरः. –c) का1 उपाश्य (?) (→उपास्य). –d) ब1 न1 द1 ग्र1.2 म1 भोगि (न1 °ग) शय्या– (→भोगिशय्यां); द1 ग्र.1.2 म1 °वृतः (ग्र2 °तां) (→°श्रितः).

४. –b) ग्र2 नाशान्ते (→निशान्ते); दे4 प्रतिबुध्यतः, न1 ग्र2 प्रति (ग्र2 °त्य) बुध्यत (→प्रतिबुध्य तु). –c) दे4 न1 °सोत्पन्नं (→°सोत्पन्नः). –d) का1 ब1-3 दे1.2.4-6 ते1 प्रसादान्मु°, ग्र2 प्रासाद्यो मु° (→प्रसादो मु°); दे2 ग्र2 °पुंगवः (→°पुंगवाः); न1 प्रसादाच्छंकरस्य तु.

५. ब1 दे4 न1 ते1.५ c–६f ⊙ (द्र. सं.). –a) ब3 चतुर्मुखं (→चतुर्मुखः); ब2 दे2.3.5.6 तदा, दे10 तथो, न1 सुतो (→ततो). –b) दे6 ग्र2 ब्रह्म (?) (→ब्रह्मा). –c) दे5 मदन्तरे (→तदन्तरे); ब3 क्रोधं (→क्रोधः). –d) का1 कस्मैचित्, ग2 अकस्मात् (→कस्माच्चित्); दे6 कारणं, दे10 कारणाः (→कारणात्).

६. ब1 दे4 न1 ते1. ⊙ (द्र. ५ पा. वि. ). –a) ब2.3 दे1-3.5.6 आत्मना (→आत्मनो). –c) का1 रुद्रं (→रुद्रः); का1 दे8.10 द1 ग्र1.2 म1 मुवें. मुए. मुब. क्रोधात्मको (ग्र2 °के), ब2 कोपात्मको (→क्रोधात्मजो); का1 ब3 दे6 यज्ञे (→जज्ञे); दे3 रु*** त्मजो जज्ञे. –e) का1 दे1.5 संकाशं (→संकाशस्). –f) ब2.3 दे6 निर्दहन्, दे1 दे8-10 द1 मुवें. मुए. मुब. संदहन् (→संहरन्).

तदा श्रीरभवद् देवी कमलायतलोचना ।
सुरूपा सौम्यवदना मोहिनी सर्वदेहिनाम् ।।७
शुचिस्मिता सुप्रसन्ना मङ्गला महिमास्पदा ।
दिव्यकान्तिसमायुक्ता दिव्यमाल्योपशोभिता ।।८
नारायणी महामाया मूलप्रकृतिरव्यया ।
स्वधाम्ना पूरयन्तीदं मत्पार्श्वं समुपाविशत् ।।९
तां दृष्ट्वा भगवान् ब्रह्मा मामुवाच जगत्पतिः ।
मोहायाशेषभूतानां नियोजय सुरूपिणीम् ।
येनेयं विपुला सृष्टिर्वर्द्धते मम माधव ।।१०
तथोक्तोऽहं श्रियं देवीमब्रुवं प्रहसन्निव ।
देवीदमखिलं विश्वं सदेवासुरमानुषम् ।।
मोहयित्वा ममादेशात् संसारे विनिपातय ।।११
ज्ञानयोगरतान् दान्तान् ब्रह्मिष्ठान् ब्रह्मवादिनः ।
अक्रोधनान् सत्यपरान् दूरतः परिवर्जय ।।१२
ध्यायिनो निर्ममान् शान्तान् धार्मिकान् वेदपारगान् ।
जापिनस्तापसान् विप्रान् दूरतः परिवर्जय ।।१३
वेदवेदान्तविज्ञानसंछिन्नाशेषसंशयान् ।
महायज्ञपरान् विप्रान् दूरतः परिवर्जय ।।१४
ये यजन्ति जपैर्होमैर्देवदेवं महेश्वरम् ।
स्वाध्यायेनेज्यया दूरात् तान् प्रयत्नेन वर्जय ।।१५ वें.१.२.१७

७. –a) दे1.8-10 मुवें. मुए. मुब. तदा, ग्र2 म1 तत्र (→तदा); ब2 श्रीभगवद्देवी, दे5 श्रीरभवद्दिव्या, ग्र2 श्रीरभवद्देवी (→श्रीरभवद्देवी). –b) दे3 कमलायन°(?) (→कमलायत°); ब3 °लोचनी, दे5 °लोचन (→°लोचना). –c) ब3 दे3.6 न1 ग्र2 म1 स्वरूपा (म1 °प) (→सुरूपा). –d) दे2.5 मोहनी, दे3 मोहिली (→मोहिनी).

८. –a) दे4 सविस्मिता (→शुचिस्मिता); दे8-10 [...]ना (→सुप्रसन्ना). –b) दे1.3 महिमास्पदं (दे3 °दं), ब1 म1 महिमा स्वधा, ग्र2 च हिमास्वधा (→महिमास्पदा). –c) दे1 दिव्या कान्ति°, ग्र2 दिव्यकाय° (→दिव्यकान्ति°); दे5 °समायुक्तां, ते1 °समायुक्ता, +°समुत्पन्ना, द1 °समाव्यक्ता, ग्र1 °समा** (→°समायुक्ता). –d) न1 पार्वत्यांशेन शोभना.

९. –a) द1 ग्र1.2 नारायण- (→नारायणी). –b) ब2 **तिरव्यया. –c) दे4 पूरयन्तीह (→पूरयन्तीदं). –d) [...] म1 म (म1 य) त्पार्श्वे (→मत्पार्श्वं); ब1 °मुपादिशत् (→°मुपाविशत्); दे4 मम पार्श्वं समाविशत्.

१०. –a) दे1 तां दृष्ट (?), ग्र1 तामष्ट्रा (?) (→तां दृष्ट्वा); दे10 ब्रह्म (→ब्रह्मा); द1 तां दृष्ट्वाथ गतान् ब्रह्मा. –b) [...] दे1.5.8-10 मुवें. मुए. मुब. °पति (→°पतिः). –c) ब1 दे1 [...] मोहया° (→मोहाया°). –d) दे4 वियोजय (→नियोजय); [...] दे2.3.6 स्वरूपिणीं (का1 °णीं) (→सुरूपिणीम्); दे8-10 [...]योगान्नियोजय, द1 म1 अभियोगस्वरूपिणीं, ग्र1 असियोग-[...]पिणी, ग्र आसीद्योगस्वरूपिणी. –e) दे4 जयेयं, ते1 ययेदं [...] 1.2 म1 ययं (ग्र2 थे) यं (→येनेयं); दे4 विपुलां सृष्टि (→विपुला सृष्टिः). –f) दे8.9 वर्त्तते (→वर्द्धते); दे5 म* (→मम); ब1.3 मानद, दे1 माधवः (→माधव).

११. –a) ब1 ततोक्तोऽहं, दे8-10 तथो (दे10 °तो) क्तः स (दे8 सं–), न1 यथोक्तोऽहं, +तथोक्तोहं; द1 ग्र1.2 म1 तथोक्तस्तां (→तथोक्तोऽहं); दे4 श्रियो (→श्रियं). –b) दे5 मुवें. मुए. मुब. अब्रुवं, दे6 मद्रूपं दे8-10 द1 ग्र2 म1 अब्रवीत् (→अब्रुवं). –c) ब1 सदेवम° (→देवीदम°); ब2 लोकं, दे2 विश्वं,+सर्वं (→विश्वं). –d) न1 सदेवोसुर° (→सदेवासुर°). –e) दे3 °देशान् (→°देशात्). –f) दे9–पि निपातय, म1 मम पातय (→विनिपातय).

१२. दे8-10.१२ b–१३a ⊙ (द. सं). –a) ते1 °परान् दान्तान्, द1 ग्र1.2 म2 °परांस्तांस्तान् (म1 °स्तां) (→°रतान् दान्तान्). –b) द1 ग्र.1.2 म1 धर्मिष्ठान् (→ब्रह्मिष्ठान्). –c) दे2-4.6 अक्रोधनात् (→अक्रोधनान्). –d) दे1 न1 °वर्जयेत्, ग्र1 °वर्जये (→°वर्जय).

१३. दे8-10. a ⊙ (द्र.१२ पा. वि.); दे8.9. cd ⊙. –a) द1 ग्र1 योगिनो (→ध्यायिनो).; का1 ब2.3 दे4.6 निर्मलान् (→निर्ममान्); ग्र2 योगिनो मम कारान्तात् (?). –c) का1 मुवें. मुए. मुब. याजिनः, दे1.4 जा (दे 4 ज) यिनः, दे5 द1 म1 ज–पिनः (→जापिनः); ग्र2 वृद्धान् (→विप्रान्). –d) दे1.2.6.10 न1 °वर्जयेत्, ग्र1 °वर्जये (→°वर्जय).

१४. –a) ब2 वेदा° (→वेद°); द1 ग्र1.2 म1 वेदवेदाङ्ग (द1 ग्र1 °न्त) विज्ञानान् (द1 त्). –b) ग्र2 विछिन्ना° (→-संछिन्ना°); दे3 °वल्कलान् (→°संशयान्). –c) ब1-3 दे2-4.6 न1 ते1 °रतान् (→°परान्). –d) दे1.10 न1 °वर्जयेत् (→°वर्जय.)

१५. –a) दे10 यवैर्, द1 ग्र1 म1 मखैर् ग्र2 महा–(→जपैर्). –b) दे10 ग्र2 देवदेव–(→देवदेवं).

वें. १.२.१७ भक्तियोगसमायुक्तानीश्वरार्पितमानसान् ।
प्राणायामादिषु रतान् दूरात् परिहरामलान् ॥१६
प्रणवासक्तमनसो रुद्रजप्यपरायणान् ।
अथर्वशिरसोऽध्येतॄन् धर्मज्ञान् परिवर्ज्जय ॥१७
बहुनाऽत्र किमुक्तेन स्वधर्मपरिपालकान् ।
ईश्वराराधनरतान् मन्नियोगान्न मोहय ॥१८
एवं मया महामाया प्रेरिता हरिवल्लभा ।
यथादेशं चकारासौ तस्माल्लक्ष्मीं समर्चयेत् ॥१९
श्रियं ददाति विपुलां पुष्टिं मेधां यशो बलम् ।
अर्चिता भगवत्पत्नी तस्माल्लक्ष्मीं समर्चयेत् ॥
ततोऽसृजत् स भगवान् ब्रह्मा लोकपितामहः ।
चराचराणि भूतानि यथापूर्वं ममाज्ञया ॥
मरीचिभृग्वङ्गिरसः पुलस्त्यं पुलहं क्रतुम् ।
दक्षमत्रिं वसिष्ठं च सोऽसृजद् योगविद्यया ॥
नवैते ब्रह्मणः पुत्रा ब्रह्माणो ब्राह्मणोत्तमाः ।
ब्रह्मवादिन एवैते मरीच्याद्यास्तु साधकाः ॥
ससर्ज ब्राह्मणान् वक्त्रात् क्षत्रियांश्च भुजाद् वि
वैश्यानूरुद्वयाद् देवः पादाच्छूद्रान् पितामहः ॥

---

–c) दे$_1$ स्वाध्यायं (→स्वाध्याये); ब$_2$ °नेष्टया, दे$_3$ °नेष्वया (→°नेज्यया). –d) न$_1$ वर्जयेत्, ग्र$_2$ च वर्जय(→वर्जय); दे$_1$ प्रयत्नेन विवर्जयेत्

१५ श्लोकात्परं न$_1$ पुस्तके अधिकम्—

1. *नमस्कारादिसंयुक्तं शिव इत्यक्षरद्वयम् ।
जिह्वाग्रे वर्तते येषां तान् प्रयत्नेन वर्जयेत् ॥

१६. –c) ब$_3$ प्रणायामादिषु, ते$_1$ पूर्णयामादिषु (→प्राणायामादिषु). –d) द$_1$ °रात्मवान् (→°रामलान्); न$_1$ तान् प्रयत्नेन वर्जयेत्.

१७. –a) का$_1$ ब$_{1.3}$ दे$_{10}$ °वाशक्त° (→°वासक्त°). –b) का$_1$ दे$_{6.10}$ न$_1$ द$_1$ ग्र$_2$ °जाप्य° (→°जप्य°); दे$_1$ °परायणाः (→°परायणान्). –c) का$_1$ °शोऽध्येतॄन्, ब$_1$ दे$_{8.9}$ मुवें. मुए. मुब. °सोवेतॄन्, दे$_{10}$ °सो वेदन् (→°सोऽध्येतॄन्); दे$_1$ शास्त्रेष्वभिरतान् धीरान्, द$_1$ अधर्मवेदाध्येतृंश्च, ग्र$_{1.2}$ म$_1$ अथर्ववेदाध्ये (ग्र$_2$ °ध्यै) तृंश्च. –d) दे$_{10}$ °वर्जयेत् (°→वर्जय); न$_1$ तान् प्रयत्नेन वर्जयेत्.

१८. –c) न$_1$ ते$_1$ म$_1$ °परान् (→°रतान्). –d) न$_1$ °नियोगो (→°नियोगान्); दे$_4$ विवर्जय (→न मोहय); दे$_6$ मन्नियोगानुमोहय, ते$_1$ मन्निग्नाद्विसर्जय, +मन्निग्नांश्च सर्जय.

१९. –a) दे$_{1.4}$ माया (→मया); दे$_{3.6}$ महाभागा, द$_1$ महा*या (→महामाया). –b) द$_1$ °वल्लभ (→°वल्लभा); दे$_4$ प्रेरितादखिलाञ्जनान्. –c) द$_1$ ग्र$_{1.2}$ म$_1$ चकारादौ (→चकारासौ).

२०. ब$_1$ दे$_{4.5}$ ते$_1$ द$_1$. ⊙ (इ. सं.). –a) ग्र$_2$ ददाभि (?) (→ददाति); ब$_2$ परमां (→विपुलां). –b) ब$_3$ तुष्टिं (→पुष्टिं); दे$_3$ मेकं, न$_1$ मेधा (→मेधां). –c) दे$_3$ अर्चिता,(?) दे$_{10}$ अर्चितो (→अर्चिता); दे$_{10}$ भगवान्पत्नी, न$_1$ भगवन् पत्नी, ग्र$_2$ भगवत्पत्नीं (→भगवत्पत्नी). –d) दे$_1$ °ल्ल (→°ल्लक्ष्मीं); का$_1$ दे$_2$ समाश्रयेत् (→समर्चयेत्).

२१. –a) दे$_{10}$ सु-, द$_1$ ग्र$_{1.2}$ न$_1$ च (→स). दे$_{10}$ ब्रह्म (→ब्रह्मा); दे$_{5.6}$ पितामहं (दे$_6$ °ह) (→पिताम –c) दे$_1$ चराचराणां, न$_1$ परावराणि (→चराचराणि). दे$_3$ मयाज्ञया, न$_1$ स्वयं प्रभुः (→ममाज्ञया).

२२. –a) का$_1$ ब$_1$ दे$_{1.3-6.8-10}$ द$_1$ ग्र$_2$ मुवें. °भृग्व रसं (→°भृग्वङ्गिरसः); ब$_{2.3}$ दे$_2$ मरीचिं (ब$_3$ °चीं) भृग्व रसं. –b) न$_1$ पुलस्त्यः (→पुलस्त्यं); दे$_6$ न$_1$ पुलह- (?) पुलयां(?) (→पुलहं). –c) ब$_3$ वशिष्ठं (→वसिष्ठं) का$_1$ स सृजद् (→सोऽसृजद्); द$_1$ वैग°(?) (→योग°) °मायया (→°विद्यया); ग्र$_2$ सोसृजत् विद्ययानया.

२३. –a) द$_1$ ग्र$_1$ नव ते (→नवैते).–b) ब$_{1.3}$ ब्रह्म ब$_2$ दे$_{8-10}$ ब्रह्मणा, दे$_1$ ब्रह्मज्ञा, दे$_{2.3}$ ब्रह्मणो, दे$_{4.6}$ मुवें. मुए. मुब. ब्राह्मणा (दे$_6$ °णो), द$_1$ ब्रह्मणे, म$_1$ ब्रह (→ब्रह्माणो); का$_1$ ब्राह्मणोत्तमः, दे$_{1.9.10}$ ब्रह्मणोत् दे$_6$ ब्रह्मणोत्तमः (→ब्राह्मणोत्तमाः). –d) दे$_{1.10}$ मरी (→मरीच्याद्यास्); दे$_2$ साधवः, दे$_{3.6}$ सारकाः (→साध ते$_1$ मरिचाद्या स्वसाधकाः.

२४. –a) दे$_{10}$ ससर्जुः, ग्र$_2$ ससर्ज्यं (→ससर्जं) ब्रह्मणो (→ब्राह्मणान्); द$_1$ ग्र$_{1.2}$ म$_1$ °णानास्यात् (→ वक्त्रात्). –b) ते$_1$ तु (→च); ते$_1$ द$_1$ ग्र$_{1.2}$ म$_1$ भुजा °जात्) द्विजाः (→भुजाद्विभुः). –c) दे$_1$ वैशा°(?) (→वैश दे$_{10}$ °द्द्याद्(?) (→°द्वयाद्); ब$_{2-3}$ दे$_{6.10}$ ते$_1$ °देव (→° –d) दे$_{1.5.8-10}$ मुवें मुए. मुब. पद्भ्यां शूद्रान्, दे$_3$ पादा ग्र$_2$ पदात् छूद्रान् (→पादाच्छूद्रान्); दे$_5$ पितामहाः, न$_1$ महान् (→पितामहः).

२४. श्लोकात्परं ब$_1$ पुस्तके अधिकम्—

* चराचराणि भूतानि यथापूर्वंममाज्ञया । ( = २

यज्ञनिष्पत्तये ब्रह्मा शूद्रवर्जं ससर्ज ह ।
गुप्तये सर्ववेदानां तेभ्यो यज्ञो हि निर्बभौ ।।२५
ऋचो यजूंषि सामानि तथैवाथर्वणानि च ।
ब्रह्मणः सहजं रूपं नित्यैषा शक्तिरव्यया ।।२६
अनादिनिधना दिव्या वागुत्सृष्टा स्वयंभुवा ।
आदौ वेदमयी भूता यतः सर्वाः प्रवृत्तयः ।।२७
अतोऽन्यानि तु शास्त्राणि पृथिव्यां यानि कानिचित् ।
न तेषु रमते धीरः पाषण्डी तेन जायते ।।२८
वेदार्थवित्तमैः कार्यं यत्स्मृतं मुनिभिः पुरा ।
स ज्ञेयः परमो धर्मो नान्यशास्त्रेषु संस्थितः ।।२९
या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः ।
सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताःस्मृताः ।।३०
पूर्वकल्पे प्रजा जाताः सर्वबाधाविवर्जिताः ।
शुद्धान्तःकरणाः सर्वाः स्वधर्मनिरताः सदा ।।३१
ततः कालवशात् तासां रागद्वेषादिकोऽभवत् ।
अधर्मो मुनिशार्दूलाः स्वधर्मप्रतिबन्धकः ।।३२
ततः सा सहजा सिद्धिस्तासां नातीव जायते ।
रजोमात्रात्मिकास्तासां सिद्धयोऽन्यास्तदाभवन् ।।३३ वें.१.२.३५

---

२५. –b) दे3 शूद्रवज्त्रं, दे10 शूर्यवर्जं (?), ग्र2 शूद्रवस्तं (?) (→शूद्रवर्जं); दे5 हा (→ह). –c) दे10 गुप्ता ये (→गुप्तये); [illegible] दे2.4.8-10 ते1 द1 ग्र1.2 मुवें. मुए. मुब. °देवानां, म1 °[illegible]नां (→°वेदानां). –d) दे10 यज्ञा (→यज्ञो).

२६. –a) ग्र2 *चो (→ऋचो); दे1 यजुंषि, दे10 यजुष– (→यजूंषि). –b) दे4 °थर्वनानि (→°थर्वणानि). –c) ब3 [illegible], दे1 द1 ब्राह्मणः (→ब्रह्मणः); दे1 सहज– (→सहजं). –d) दे1 नित्येशा, दे10 निश्चैषा, द1 ग्र1.2 इत्ये (द1 °त्यै) [illegible] म1 अन्येषां (→नित्यैषा).

२७. –b) न1 वाग् विसृष्टा, ते1 वागुत्पन्ना (→वागुत्सृष्टा). –c) ग्र1.2 म1 आद्या (→आदौ); दे4 °मया (→°मयी); ते1 माता (→भूता). –d) द1 ग्र1.2 म1 भूतपूर्वाः (→यतः सर्वाः); ब2 सर्व– (→सर्वाः); दे1 प्र* त्तयः, (→प्रवृत्तयः).

२८. –a) का1 दे2.3.5.6 ततोन्यानि, दे4 अ * न्यानि, [illegible]10 अन्यान्यनि (→अतोन्यानि); ब3 दे6 *, दे5.8.9 द1 मुवें. [illegible] मुब. हि (→तु). –b) दे6 जानि–(→यानि); ब3 [illegible]8-10 कानि च (→कानिचित्). –c) ब3 न तेषां, दे3 न [illegible], दे6 न तेस्व–(→न तेषु); का1 दे5 वसते (→रमते); [illegible] म1 वीरः (→धीरः). –d) दे4.8-10 का1 येन जायते, दे8.9 [illegible] पुनः, दे10 द1 ग्र1.2 म1 जायते पुनः (→तेन जायते).

२९. –a) ब1 वेदानुवित्तये (→वेदार्थवित्तमैः). –b) [illegible] म1 स्मृतं यत् (→यत् स्मृतं); न1 यत्स्मृतं सर्ववैदिकं. [illegible] दे3.6 यज्ञे यः, दे4 यज्ञेशः (→स ज्ञेयः). –d) म1 नान्या° (→नान्य°); म1 संस्थितिः (→संस्थितः).

३०. –a) दे10 यो, ते1 ये (→या); का1 दे9.10 ते1 °वाह्या (?) (→°बाह्याः). –b) ब1 या च (→याश्च); ग्र2 कुदुष्टयः (→कुदृष्टयः). –c) ब2 ताः सर्वा, दे3 सर्वास्ता (→सर्वास्ता); का1 निःफलाः, ब2.3 दे4 द1 निष्फला (ब2 °लां) (→निष्फलाः); न1 प्रोक्ताः, ग्र2 प्रेत्यं (→प्रेत्य). –d) ब3 तां (→ताः); ब1.3 दे6 श्रुताः, दे3 श्रुताः, + श्रुतां, म1 परे (→स्मृताः).

३१. –a) ब3 °कल्पः; म1 °काले (→°कल्पे); ब1 -आसन्, ब3 सर्व-, दे1.3.6.10 ते1 जाता (→जाताः). –b) ब1.3 हेतुवाद°, ब2 दे3 ते1 सर्वाबाधा°, दे5 सर्वदोष°, द1 ग्र2 म1 सर्वबोधैर्°, ग्र1 सर्वे बोधैर्° (→सर्वबाधा°); ब1 दे10 °विवर्जितः, दे1 °विवर्जिता (→विवर्जिताः). –c) ग्र1 °करणास् (?) (→°करणास्); द1 ग्र1.2 म1 सर्वे (→सर्वाः). –d) दे5 धर्मे (→धर्म-); ब3 °निरतास्तथा, दे1.8-10 द1 ग्र1.2 म1 मुवें. मुए. मुब. °परिपालकाः (→°निरताः सदा).

३२. न1. ३२a–३४d ⊙ (द. स.); द1.३२c–३३d. ⊙ (द. सं.). –a) दे5 **(→ततः); का1 °वसात् (→°वशात्). –b) दे1 म1 भवेत् (→[अ]भवत्). –c) ते1 ग्र1.2 म1 अधर्माः (ते1 °मान्) (→अधर्मो). –d) दे4 ग्र1.2 म1 °प्रतिबन्धकाः (→°प्रतिबन्धकः).

३३. न1. द1. ⊙ (द्र. ३२ पा. वि. ). –a) दे4 ततश्च, दे10 ततस्ता (?) (→ततः सा); ब2 दे4 ग्र1.2 म1 सहसा, दे1 स*जा (→सहजा); ग्र2 सिद्धः (→सिद्धिः). –b) ब3 नाभीरु, म1 नारीव (→नातीव). –c) ग्र1.2 तमो-, म1 ततो (→रजो-); ग्र1.2 मात्रादि (ग्र1 °ति) कास् (→मात्रात्मिकास्); ब2 रजो मात्रात्मि***, ते1 रज्जुमात्राधिकास्तासां. –d) दे2.3.9 तदाभवत्, दे10 तदाभवं, ते1 तथाऽभवन्, ग्र1.2 म1 ततो भवेत् (ग्र1 °भवन्) (→तदाभवन्).

ब. १.२.३५ तासु क्षीणास्वशेषासु कालयोगेन ताः पुनः ।
वार्त्तोपायं पुनश्चक्रुर्हस्तसिद्धिं च कर्मजाम् ।
ततस्तासां विभुर्ब्रह्मा कर्माजीवमकल्पयत् ॥३४
स्वायंभुवो मनुः पूर्वं धर्मान् प्रोवाच धर्मदृक् ।
साक्षात् प्रजापतेर्मूर्तिर्निसृष्टा ब्रह्मणा द्विजाः ।
भृग्वादयस्तद्वदनाच्छ्रुत्वा धर्मानथोचिरे ॥३५
यजनं याजनं दानं ब्राह्मणस्य प्रतिग्रहम् ।
अध्यापनं चाध्ययनं षट् कर्माणि द्विजोत्तमाः ॥३६
दानमध्ययनं यज्ञो धर्मः क्षत्रियवैश्ययोः ।
दण्डो युद्धं क्षत्रियस्य कृषिर्वैश्यस्य शस्यते ॥३७
शुश्रूषैव द्विजातीनां शूद्राणां धर्मसाधनम् ।
कारुकर्म तथाजीवः पाकयज्ञोऽपि धर्मतः ॥३८
ततः स्थितेषु वर्णेषु स्थापयामास चाश्रमान् ।
गृहस्थं च वनस्थं च भिक्षुकं ब्रह्मचारिणम् ॥३९
अग्नयोऽतिथिशुश्रूषा यज्ञो दानं सुरार्चनम् ।
गृहस्थस्य समासेन धर्मोऽयं मुनिपुंगवाः ॥४०
होमो मूलफलाशित्वं स्वाध्यायस्तप एव च ।
संविभागो यथान्यायं धर्मोऽयं वनवासिनाम् ॥४१
भैक्षाशनं च मौनित्वं तपो ध्यानं विशेषतः ।
सम्यग्ज्ञानं च वैराग्यं धर्मोऽयं भिक्षुके मतः ॥४२

---

३४. न$_1$. a–d ⊙ (द्र. ३२ पा. वि.); दे$_9$. ३४ d 'स्तसि° –४२d धर्मो' ⊙. –a) ब$_3$ दे$_{3.6}$ क्षीणासु, दे$_4$ क्षीणाश्च (→क्षीणास्व–); द$_1$ ग्र$_{1.2}$. म$_1$ जीर्णास्व° (ग्र$_2$ °ष्व°) (→क्षीणास्व°); ब$_3$ दे$_{3.4.6}$ शेषासु (→[अ] शेषासु); दे$_1$ [अ]-शेषास्तु (→[अ]शेषासु). –b) का$_1$ दे$_{1.2}$ वा (→ताः). –c) ब$_1$ वर्णोपायं, दे$_{1.6}$ वार्त्तापायं, दे$_4$ जाताः पायं, ते$_1$ वार्तोपायां (→वार्त्तोपायं); ब$_2$ दे$_{3.6}$ ग्र$_{1.2}$ ततश्चक्रुः, दे$_4$ *तश्चक्रुः, द$_1$ नतश्चक्रुः, म$_1$ विधिश्चक्रुः (→पुनश्चक्रुः). –d) ब$_{1.2}$ दे$_{3.4-6}$ ते$_1$ अर्थसिद्धि (दे$_3$ °द्धिश्), ग्र$_2$ हितबुद्धि, मुब. हस्तसिद्धिश्, (→हस्तसिद्धि); ग्र$_2$ शर्मदाम् (→ कर्मजाम्). –e) ब$_2$**ब्रह्मा (→विभुर्ब्रह्मा). –f) का$_1$ दे$_2$ कर्माजीव्य°, दे$_{1.3.6}$ कर्मजीव°, ते$_1$ कर्मजीवि°; ग्र$_{1.2}$ म$_1$ कर्मादिक° (→कर्माजीव°).

३५. दे$_9$. ⊙ (द्र. ३४ पा. वि. ). –a) ते$_1$ स्वयं° (→स्वायं°); दे$_4$ पूर्वे (→पूर्वं). –b) दे$_1$ धर्मं (→धर्मान्); ब$_1$ दे$_{1.4.8.10}$ न$_1$ मुवें. मुए. मुब. सर्वदृक् (ब्र$_1$ °धृक् ), दे$_6$ धर्मधृक् , ते$_1$ द$_1$ ग्र$_{1.2}$ म$_1$ धर्मवित् (→धर्मदृक् ). –c) का$_1$ प्रजायते (→प्रजापतेः); द$_1$ मूर्ध्नि, ग्र$_2$ पूर्वं (→मूर्त्तिः). –d) दे$_2$ निसृष्टाः, दे$_4$ निसृष्टो, ते$_1$ निर्दिष्टो (→निसृष्टा); दे$_1$ ब्रह्मणः, दे$_5$ न$_1$ ते$_1$ मुवें. मुए. मुब. ब्रह्मणो, द$_1$ ब्राह्मणा (→ब्रह्मणा); दे$_{1.4}$ द$_1$ ग्र$_{1.2}$ म$_1$ पुरा, दे$_{10}$ द्विजः (→द्विजाः). –e) ब$_1$ दे$_4$ वचनात्, द$_1$ वदता, दे$_1$ ग्र$_{1.2}$ म$_1$ वचनं (→वदनात्). –f) दे$_4$ कृत्वा (→श्रुत्वा); ग्र$_2$ अनुक्रमात् (→अथोचिरे).

३६. दे$_9$. ⊙ (द्र. ३४ पा. वि.). –b) ब$_3$ दे$_{8.10}$ म$_1$ मुवें. मुए. मुब. प्रतिग्रहः, दे$_6$ पतिग्रहं, न$_1$ परिग्रहं (→प्रतिग्रहं). –d) का$_1$ धर्माश्च, ब$_2$ धर्माणि (→कर्माणि).

३७. दे$_9$. ⊙ (द्र. ३४ पा. वि.); दे$_4$. cd ⊙. –a) दे$_5$ ग्र$_1$ म$_1$ यज्ञा (ग्र$_1$ °ज्ञाः), ग्र$_2$ यज्ञं (→यज्ञो). –b) ग्र$_2$ धर्मं (→धर्मः); दे$_3$ क्षत्रि च (→क्षत्रिय-). –c) द$_1$ ग्र$_{1.2}$ म$_1$ द्वन्द्व- (→दण्डो). –d) का$_1$ कृषो (→कृषिर्); दे$_{10}$ सस्यते (→शस्यते).

३८. दे$_9$. ⊙ (द्र. ३४ पा. वि. ). –a) दे$_1$ शुश्रूयैव, दे$_8$ शुश्रूषा वै, दे$_{10}$ शुश्रूषां वै (→शुश्रूषैव); दे$_1$ द्विजातानां (→द्विजातीनां). –b) दे$_4$ °साधनः (→°साधनं). –c) दे$_4$ चातुर्कर्म, दे$_5$ कालकर्म, द$_1$ म$_1$ पाककर्म, ग्र$_{1.2}$ पापकर्म (→कारुकर्म); दे$_{8.10}$ वणिज्यादि- (दे$_{10}$ °पि) (→तथा जीवः). –d) का$_1$ दे$_2$ °यज्ञेऽपि, मुवें. मुए. मुब. °यज्ञादि (→°यज्ञोपि); ग्र$_{1.2}$ म$_1$ कर्मतः (→धर्मतः); दे$_6$ पाकजज्ञो विधेर्मतः, दे$_{8-10}$ क्रय-विक्रयणं तथा, न$_1$ प्रातयज्ञोपि धर्मतः, द$_1$ पाकयज्ञोधिकर्मतः.

३९. दे$_9$. ⊙ (द्र. ३४ पा. वि. ). –a) दे$_3$ ततः स्थितेसु, दे$_4$ ततस्ते तेषु, ते$_1$ ततस्तु त्रिषु, ग्र$_2$ तत्र स्थितेषु, मुवें. मुए. तथा स्थितेषु (→ततः स्थितेषु); ब$_{2.3}$ दे$_2$ ग्र$_{1.2}$ धर्मेषु, दे$_{10}$ वर्तेषु, म$_1$ कर्मेषु (→वर्णेषु). –b) दे$_4$ °मासु (→°मास). –c) दे$_3$ गृहस्थश्च, म$_1$ ग्रहस्थश्च (→गृहस्थं च); दे$_3$ वनस्थश्च (→वनस्थं च). –d) दे$_1$ ब्रह्मचारिणे (→ब्रह्मचारिणम्).

४०. दे$_9$. ⊙ (द्र. ३४ पा. वि.). –a) दे$_{10}$ अनया, न$_1$ आग्नेयो (→अग्नयो); का$_1$ ते$_1$ °शूश्रुषां, दे$_1$ °शुश्रुषा, न$_1$ °शुश्रूषाः (→°शुश्रूषा). –b) का$_1$ यज्ञा, ते$_1$ यज्ञं (→यज्ञो); ग्र$_1$ *नं (→दानं). –c) दे$_1$ गृहस्थ* (→गृहस्थस्य).

४१. दे$_9$. ⊙ (द्र. ३४ पा. वि.). –a) दे$_6$ होम (→होमो); दे$_1$ °फलाम्निलं, दे$_{1.2}$ °फलासित्वं, ग्र$_2$ °फलाशि* (→°फलाशित्वं). –b) म$_1$ स्वाध्यायं (→स्वाध्यायः). –c) का$_1$ संविभागे (→संविभागो); ब$_1$ ज्ञानं,+न्यायं, ग्र$_1$ ** (→न्यायं); न$_1$ तथा ध्यानम् (→यथान्यायम्).

४२. दे$_9$. abc. ⊙ (द्र. ३४ पा. वि.). –a) का$_1$ दे$_{1.2.6}$ द$_1$ ग्र$_2$ म$_1$ भिक्षाश(का$_1$ दे$_2$ °स)नं, दे$_3$ भैक्ष्याशानम्, न$_1$ भैक्ष्याशनं

ब. १.२.३५ तासु क्षीणास्वशेषासु कालयोगेन ताः पुनः ।
वार्त्तोपायं पुनश्चक्रुर्हस्तसिद्धिं च कर्मजाम् ।
ततस्तासां विभुर्ब्रह्मा कर्माजीवमकल्पयत् ।।३४
स्वायंभुवो मनुः पूर्वं धर्मान् प्रोवाच धर्मदृक् ।
साक्षात् प्रजापतेर्मूर्तिर्निसृष्टा ब्रह्मणा द्विजाः ।
भृग्वादयस्तद्वदनाच्छ्रुत्वा धर्मानथोचिरे ।।३५
यजनं याजनं दानं ब्राह्मणस्य प्रतिग्रहम् ।
अध्यापनं चाध्ययनं षट् कर्माणि द्विजोत्तमाः ।।३६
दानमध्ययनं यज्ञो धर्मः क्षत्रियवैश्ययोः ।
दण्डो युद्धं क्षत्रियस्य कृषिर्वैश्यस्य शस्यते ।।३७
शुश्रूषैव द्विजातीनां शूद्राणां धर्मसाधनम् ।
कारुकर्म तथाजीवः पाकयज्ञोऽपि धर्मतः ।।३८
ततः स्थितेषु वर्णेषु स्थापयामास चाश्रमान् ।
गृहस्थं च वनस्थं च भिक्षुकं ब्रह्मचारिणम् ।।३९
अग्नयोऽतिथिशुश्रूषा यज्ञो दानं सुरार्चनम् ।
गृहस्थस्य समासेन धर्मोऽयं मुनिपुंगवाः ।।४०
होमो मूलफलाशित्वं स्वाध्यायस्तप एव च ।
संविभागो यथान्यायं धर्मोऽयं वनवासिनाम् ।।४१
भैक्षाशनं च मौनित्वं तपो ध्यानं विशेषतः ।
सम्यग्ज्ञानं च वैराग्यं धर्मोऽयं भिक्षुके मतः ।।४२

---

**३४.** न1. a–d ⊙ (द्र. ३२ पा. वि.); दे9. ३४ d 'स्तसि° –४२d धर्मो' ⊙. –a) ब3 दे3.6 क्षीणासु, दे4 क्षीणाश्च (→क्षीणास्व–); द1 ग्र1.2. म1 जीर्णास्व° (ग्र2 °ष्व°) (→क्षीणास्व°); ब3 दे3.4.6 शेषासु (→[अ] शेषासु); दे1 [अ]-शेषास्तु (→[अ]शेषासु). –b) का1 दे1.2 वा (→ताः). –c) ब1 वर्णोपायं, दे1.6 वार्त्तापायं, दे4 जाताः पायं, ते1 वार्तोपायां (→वार्त्तोपायं); ब2 दे3.6 ग्र1.2 ततश्चक्रुः, दे4 *तश्चक्रुः, द1 नतश्चक्रुः, म1 विधिश्चक्रुः (→पुनश्चक्रुः). –d) ब1.2 दे3.4-6 ते1 अर्थसिद्धि (दे3 °द्धिश्), ग्र2 हितबुद्धि, मुब. हस्तसिद्धिश्, (→हस्तसिद्धि); ग्र2 शर्मदाम् (→ कर्मजाम्). –e) ब2**ब्रह्मा (→विभुर्ब्रह्मा). –f) का1 दे2 कर्माजीव्य°, दे1.3.6 कर्मजीव°, ते1 कर्मजीवि°; ग्र1.2 म1 कर्मादिक° (→कर्माजीव°).

**३५.** दे9. ⊙ (द्र. ३४ पा. वि. ). –a) ते1 स्वयं° (→स्वायं°); दे4 पूर्वे (→पूर्वं). –b) दे1 धर्म (→धर्मान्); ब1 दे1.4.8.10 न1 मुवें. मुए. मुब. सर्वदृक् (ब1 °धृक्), दे6 धर्मधृक्, ते1 द1 ग्र1.2 म1 धर्मवित् (→धर्मदृक्). –c) का1 प्रजायते (→प्रजापतेः); द1 मूर्ध्नि, ग्र2 पूर्वं (→मूर्त्तिः). –d) दे2 निसृष्टाः, दे4 निसृष्टो, ते1 निर्दिष्टो (→निसृष्टा); दे1 ब्रह्मणः, दे5 न1 ते1 मुवें. मुए. मुब. ब्रह्मणो, द1 ब्राह्मणा (→ब्रह्मणा); दे1.4 द1 ग्र1.2 म1 पुरा, दे10 द्विजः (→द्विजाः). –e) ब1 दे4 वचनात्, द1 वदता, दे1 ग्र1.2 म1 वचनं (→वदनात्). –f) दे4 कृत्वा (→श्रुत्वा); ग्र2 अनुक्रमात् (→अथोचिरे).

**३६.** दे9. ⊙ (द्र. ३४ पा. वि.). –b) ब3 दे8.10 म1 मुवें. मुए. मुब. प्रतिग्रहः, दे6 पतिग्रहं, न1 परिग्रहं (→प्रतिग्रहं). –d) का1 धर्मांश्च, ब2 धर्माणि (→कर्माणि).

**३७.** दे9. ⊙ (द्र. ३४ पा. वि.); दे4. cd ⊙. –a) दे5 ग्र1 म1 यज्ञा (ग्र1 °ज्ञाः), ग्र2 यज्ञं (→यज्ञो). –b) ग्र2 धर्म (→धर्मः); दे3 क्षत्रि च (→क्षत्रिय-). –c) द1 ग्र1.2 म1 द्वन्द्व- (→दण्डो). –d) का1 क्रयो (→कृषिर्); दे10 सस्यते (→शस्यते).

**३८.** दे9. ⊙ (द्र. ३४ पा. वि. ). –a) दे1 शुश्रूयैव, दे8 शुश्रूषा वै, दे10 शुश्रूषां वै (→शुश्रूषैव); दे1 द्विजातानां (→ द्विजातीनां). –b) दे4 °साधनः (→°साधनं). –c) दे4 चातुर्कर्म, दे5 कालकर्म, द1 म1 पाककर्म, ग्र1.2 पापकर्म (→कारुकर्म); दे8.10 वणिज्यादि- (दे10 °पि) (→तथा जीवः). –d) का1 दे2 °यज्ञेऽपि, मुवें. मुए. मुब. °यज्ञादि (→°यज्ञोपि); ग्र1.2 म1 कर्मतः (→धर्मतः); दे6 पाकजज्ञो विधेर्मतः, दे8-10 क्रय-विक्रयणं तथा, न1 प्रातयज्ञोपि धर्मतः, द1 पाकयज्ञोधिकर्मतः.

**३९.** दे9. ⊙ (द्र. ३४ पा. वि. ). –a) दे3 ततः स्थितेसु, दे4 ततस्ते तेषु, ते1 ततस्तु त्रिषु, ग्र2 तत्र स्थितेषु, मुवें. मुए. तथा स्थितेषु (→ततः स्थितेषु); ब2.3 दे2 ग्र1.2 धर्मेषु, दे10 वर्तेषु, म1 कर्मेषु (→वर्णेषु). –b) दे4 °मासु (→°मास). –c) दे3 गृहस्थश्च, म1 ग्रहस्थश्च (→गृहस्थं च); दे3 वनस्थश्च (→वनस्थं च). –d) दे1 ब्रह्मचारिणे (→ब्रह्मचारिणम्).

**४०.** दे9. ⊙ (द्र. ३४ पा. वि.). –a) दे10 अनया, न1 आग्नेयो (→अग्नयो); का1 ते1 °शुश्रुषां, दे1 °शुश्रुषा, न1 °शुश्रूषाः (→°शुश्रूषा). –b) का1 यज्ञा, ते1 यज्ञं (→यज्ञो); ग्र1 *नं (→दानं). –c) दे1 गृहस्थ* (→गृहस्थस्य).

**४१.** दे9. ⊙ (द्र. ३४ पा. वि.). –a) दे6 होम (→होमो); दे1 °फलाग्निलं, दे1.2 °फलासित्वं, ग्र2 °फलाशि* (→°फलाशित्वं). –b) म1 स्वाध्यायं (→स्वाध्यायः). –c) का1 संविभागे (→संविभागो); ब1 ज्ञानं,+न्यायं, ग्र1 ** (→न्यायं); न1 तथा ध्यानम् (→यथान्यायम्).

**४२.** दे9. abc. ⊙ (द्र. ३४ पा. वि.). –a) का1 दे1.2.6 द1 ग्र2 म1 भिक्षाश(का1 दे2 °स)नं, दे3 भैक्ष्याशनम्, न1 भैक्ष्याशनं

भिक्षाचर्या च शुश्रूषा गुरोः स्वाध्याय एव च ।
सन्ध्याकर्माग्निकार्यं च धर्मोऽयं ब्रह्मचारिणाम् ॥४३
ब्रह्मचारिवनस्थानां भिक्षुकाणां द्विजोत्तमाः ।
साधारणं ब्रह्मचर्यं प्रोवाच कमलोद्भवः ॥४४
ऋतुकालाभिगामित्वं स्वदारेषु न चान्यतः ।
पर्ववर्जं गृहस्थस्य ब्रह्मचर्यमुदाहृतम् ॥४५
आगर्भसंभवादाद्यात् कार्यं तेनाप्रमादतः ।
अकुर्वाणस्तु विप्रेन्द्रा भ्रूणहा तु प्रजायते ॥४६
वेदाभ्यासोऽन्वहं शक्त्या श्राद्धं चातिथिपूजनम् ।
गृहस्थस्य परो धर्मो देवताभ्यर्चनं तथा ॥४७
वैवाह्यमग्निमिन्धीत सायं प्रातर्यथाविधि ।
देशान्तरगतो वाऽथ मृतपत्नीक एव वा ॥४८
त्रयाणामाश्रमाणां तु गृहस्थो योनिरुच्यते ।
अन्ये तमुपजीवन्ति तस्माच्छ्रेयान् गृहाश्रमी ॥४९
ऐकाश्रम्यं गृहस्थस्य त्रयाणां श्रुतिदर्शनात् ।
तस्माद् गार्हस्थ्यमेवैकं विज्ञेयं धर्मसाधनम् ॥५०   वें. १.२.५३

---

(→भैक्षाशनं); दे$_{10}$ मौनत्वं, ग्र$_{2}$ मौनञ्च (→मौनित्वं). –b) का$_{1}$ सम्यग्या (ज्ञा) नं, दे$_{4}$ समज्ञानं, न$_{1}$ सम्यग्ध्यानं, म$_{1}$ सम्यज्ञानं (→सम्यग्ज्ञानं). –d) का$_{1}$ दे$_{3.6}$ भिक्षुको, ग्र$_{1.2}$ म$_{1}$ भिक्षु (म$_{1}$ °क्ष) को (→भिक्षुके); न$_{1}$ मतं (→मतः).

४३. –a) ब$_{1}$ भिक्षा च थ च (?), ब$_{3}$ भिक्षाचार्य्यर्थि-, दे$_{1.2}$, ते$_{1}$ भिक्षाचर्यथि, दे$_{4}$ भिक्षाचर्याश्च, न$_{1}$ भिक्षाचार्य्यं, ग्र$_{2}$ भिक्ष्वाचाय्यथि (→भिक्षाचर्या च); ग्र$_{1}$ ** षा (→शुश्रूषा). –b) दे$_{1}$ ते$_{1}$ ग्र$_{1}$ गुरो, दे$_{8.9}$ गुणाः (→गुरोः). –c) का$_{1}$ दे$_{1}$ °कर्माग्नि कार्ये च, ब$_{1}$ °कर्माग्निहोत्रञ्च, + °कर्माग्नि-कार्यश्च, न$_{1}$ °धर्मोग्निकार्यं च, ग्र$_{2}$ °कर्माणि कार्यञ्च (→°कर्माग्निकार्यञ्च). –d) का$_{1}$ ब$_{2}$ दे$_{2.3.5.10}$ ब्रह्मचारिणः (→ब्रह्मचारिणाम्).

४४. –a) दे$_{10}$ न$_{1}$ ते$_{1}$ म$_{1}$ ब्रह्मचारी° (→ब्रह्मचारि°). –b) ब$_{1.3}$ दे$_{2.10}$ भिक्षुकानां, दे$_{3}$ भिक्षुणां च (→भिक्षुकाणां); म$_{1}$ द्विजोत्तमाः, + द्विजोत्तमः (→द्विजोत्तमाः). –c) ग्र$_{2}$ साधारणः (→साधारणं).

४५. –a) ब$_{2}$ [अ]भिगमनं, म$_{1}$ [अ] भिगा (का) मित्वं (→[अ]भिगामित्वं). –b) का$_{1}$ ब$_{1.3}$ दे$_{2.6}$ स्वदारे च (→स्वदारेषु); ब$_{2}$ न चान्यथा, दे$_{4}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ च नान्यतः, न$_{1}$ न चा ** (→न चान्यतः). –c) का$_{1}$ °वर्जं (?), दे$_{1}$ न$_{1}$ म$_{1}$ °वर्ज्यं, दे$_{10}$ °वर्जुं (→°वर्ज्जं).

४६. –a) दे$_{10}$ अगर्भ° (→आगर्भ°); दे$_{1.8-10}$ ते$_{1}$ ग्र$_{1.2}$ म$_{1}$ मुवें. मुए. मुब. °धारणाद्, ते$_{1}$ ** वाद् (→°संभवाद्); का$_{1}$ ब$_{2.3}$ न$_{1}$ यावत्, दे$_{1}$ अद्यात्, दे$_{4}$ यत्नात्, दे$_{8-10}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ मुवें. मुए. मुब. आज्ञा (दे$_{10}$ °ज्ञो) (→आद्यात्). –b) ब$_{3}$ काय्यन्तिन, दे$_{1}$ कार्येन तेन, दे$_{8.9}$ ते$_{1}$ ग्र$_{1.2}$ म$_{1}$ मुवें. मुए. मुब. कार्या तेन, ते$_{1}$ कार्यं चैव (→कार्यं तेन); दे$_{2}$ प्रसादतः (→[अ] प्रमादतः); दे$_{10}$ यतित्वमप्रमादतः (?). –c) दे$_{4}$ अकुर्वाणस्कं (→अकुर्वाणस्तु); दे$_{1}$ विप्रेन्द्र, दे$_{3.6}$ ते$_{1}$ विप्रेन्द्रो (→विप्रेन्द्रा). –d) का$_{1}$ दे$_{1.2.5}$ भ्रूणहत्या प्रजायते, दे$_{4}$ भ्रूणहा सोपि जायते, दे$_{8-10}$ ते$_{1}$ मुवें. मुए. मुब. भ्रूणहा तू(दे$_{10}$ °रू)प जायते, द$_{1}$ ग्र$_{1.2}$ म$_{1}$ भ्रूणहा चोपजायते.

४७. दे$_{1}$. ४७ b '°चातिथि-' ४८ b 'विधि' यावत् खण्डितम्. –a) ब$_{1.3}$ भक्त्या, द$_{1}$ ग्र$_{1}$ चार्या, ग्र$_{2}$ म$_{1}$ कार्यं (→शक्त्या). –b) ब$_{2}$ म$_{1}$ °भोजनम्, न$_{1}$ °पूजनात् (→पूजनम्).

४८. दे$_{1}$. ab ⊙ (द्र. ४७ पा. वि.). –a) दे$_{4}$ विवाह्यम् (→वैवाह्यम्); का$_{1}$ अग्नि, + अग्ने, ते$_{1}$ अग्नौ (→अग्निम्); का$_{1}$ अन्वीयात्, + संधीत, दे$_{2.6}$ अन्वीत, ते$_{1}$ चिन्वीत (→इन्धीत); दे$_{3}$ अग्निमन्दीत, दे$_{4}$ अग्निमिघात (?), न$_{1}$ अग्निमंथित्वं, द$_{1}$ अग्निमन्थीत (→अग्निमिन्धीत). –b) दे$_{10}$ °विधिः (→°विधि). –c) दे$_{1}$ चाशान्तर° (→देशान्तर°); मुब. °गते (→°गतो). –d) का$_{1}$ °पत्नीकं (→°पत्नीकः); दे$_{1.6.8-10}$ न$_{1}$ ते$_{1}$ ग्र$_{2}$ म$_{1}$ मुवें. मुए च (→वा); दे$_{5}$ मृतपत्नीकरेव वा, मुब. सूतः पत्नीत्विगेव वा.

४९. –a) ब$_{1.3}$ ग्र$_{2}$ म$_{1}$ च(→तु). –b) दे$_{4}$ गृहस्थे (→गृहस्थो); ब$_{2}$ मुनिरुच्यते, दे$_{5}$ योनिमुच्यते, न$_{1}$ यो निरुप्यते (→योनिरुच्यते); ग्र$_{2}$ स गृहस्थो निरुच्यते. –c) द$_{1}$ तमुनि°, ग्र$_{1.2}$ म$_{1}$ तमनु° (→तमुप°). –d) ग्र$_{2}$ °छ्रेयो (→°छ्रेयान्); दे$_{1}$ गृहीप्रमी (→गृहाश्रमी).

५०. दे$_{3}$. ५० d धर्म- ५२ a ह्यर्थो. ⊙ (द्र. सं.). –a) का$_{1}$ दे$_{1.2}$ एकाश्रम्यं, दे$_{5}$ ते$_{1}$ ग्र$_{2}$ एकाश्रमं, न$_{1}$ आश्रयेन्य (→ऐकाश्रम्यं); ग्र$_{2}$ गृहस्तस्य (→गृहस्थस्य). –b) दे$_{1}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ वर्णानां, दे$_{6.8-10}$ मुवें. मुए. मुब. चतुर्णां (→त्रयाणां); न$_{1}$ °चोदनात् (→°दर्शनात्). –c) दे$_{10}$ गृहस्थ्यम्, न$_{1}$ गार्हस्थम् (→गार्हस्थ्यम्); ग्र$_{1.2}$ म$_{1}$ एवेदं (→एवैकं). –d) ब$_{1}$ कर्म्म° (→धर्म°); ग्र$_{2}$ ज्ञेयधर्मसनातनः.

बं. १.२.५३ परित्यजेदर्थकामौ यौ स्यातां धर्मवर्जितौ ।
सर्वलोकविरुद्धं च धर्ममप्याचरेन्न तु ॥५१
धर्मात् संजायते ह्यर्थो धर्मात् कामोऽभिजायते ।
धर्म एवापवर्गाय तस्माद् धर्मं समाश्रयेत् ॥५२
धर्मश्चार्थश्च कामश्च त्रिवर्गस्त्रिगुणो मतः ।
सत्त्वं रजस्तमश्चेति तस्माद्धर्मं समाश्रयेत् ॥५३
ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः ।
जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः ॥५४
यस्मिन् धर्मसमायुक्तावर्थकामौ व्यवस्थितौ ।
इह लोके सुखी भूत्वा प्रेत्यानन्त्याय कल्पते ॥५५

धर्मात् संजायते मोक्षो ह्यर्थात् कामोऽभिजायते ।
एवं साधनसाध्यत्वं चातुर्विध्ये प्रदर्शितम् ॥५६
य एवं वेद धर्मार्थकाममोक्षस्य मानवः ।
माहात्म्यं चानुतिष्ठेत स चानन्त्याय कल्पते ॥५७
तस्मादर्थं च कामं च त्यक्त्वा धर्मं समाश्रयेत् ।
धर्मात् संजायते सर्वमित्याहुर्ब्रह्मवादिनः ॥५८
धर्मेण धार्यते सर्वं जगत् स्थावरजङ्गमम् ।
अनादिनिधना शक्तिः सैषा ब्राह्मी द्विजोत्तमाः ॥५९
कर्मणा प्राप्यते धर्मो ज्ञानेन च न संशयः ।
तस्माज्ज्ञानेन सहितं कर्मयोगं समाचरेत् ॥६०

---

**५१.** दे$_{3}$. ⊙ (द्र. ५० पा. वि.); दे$_{10}$. ५१b–५२a. ⊙ (ह. सं.). –a) ग्र$_{1}$ °कामी (→°कामौ). –c) का$_{1}$ °लोका° (→°लोक°); ग्र$_{2}$ °विरुद्धस्य (→°विरुद्धञ्च). –d) का$_{1}$ [आ]चरेन्ननु, ब$_{1}$. ग्र$_{2}$ [आ]चरेण तु (→[आ]चरेन्न तु).

**५२.** दे$_{8}$. abd खण्डितम्; दे$_{3.10}$. a ⊙. –a) दे$_{1}$ तस्मात् (→धर्मात्); ग्र$_{2}$ [अ]प्यर्थः (→ह्यर्थो). –b) दे$_{2}$ धर्मान्, न$_{1}$ धर्म-, ग्र$_{2}$ अर्थात् (→धर्मात्); दे$_{3}$ धर्माकामाभिजायते, दे$_{10}$ धर्मे चैवाभिजायते. –c) का$_{1}$ धर्मं (→धर्मः); द$_{1}$ ग्र$_{1.2}$ म$_{1}$ धर्मादेवापवर्गीयं. –d) दे$_{10}$ ब्रह्मं (→धर्मं); ब$_{2}$ दे$_{3.6}$ ग्र$_{1.2}$ म$_{1}$ °चरेत् (→°श्रयेत्).

**५३.** दे$_{10}$.५३–५४ ⊙; का$_{1}$. ⊙; दे$_{8}$. ५३a, cd–५५a खण्डितम्. –a) दे$_{1.9}$ ग्र$_{2}$ धर्मं, दे$_{2}$ धर्माद्, दे$_{6}$ धन्यं (→धर्मः); दे$_{1.9}$ चार्थं च, दे$_{2}$ अर्थश्च, दे$_{6}$ यशश्च, न$_{1}$ ह्यार्थश्च, +चार्थश्च, ग्र$_{2}$ अर्थं च (→चार्थश्च); दे$_{1.9}$ कामंच (→कामश्च). –b) ब$_{2}$ त्रिगुणा**, दे$_{4}$ त्रिगुणोत्तमः, न$_{1}$ त्रिगुणात्मतः (→त्रिगुणो मतः). –c) दे$_{1}$ सत्व- (→सत्त्वं); द$_{1}$ ग्र$_{1.2}$ म$_{1}$ चैव (→चेति). –d) दे$_{3.4.6}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ °चरेत् (→°श्रयेत्).

**५४.** दे$_{8}$. खण्डितम्; दे$_{9.10}$. ⊙. –a) दे$_{6}$ गच्छति (→गच्छन्ति). –b) दे$_{6}$ तिष्ठति (→तिष्ठन्ति); दे$_{6}$ राजसा (→राजसाः). –c) द$_{1}$ °वृत्तिस्थाम् (→°वृत्तिस्था). –d) दे$_{3}$ तामसः (→तामसाः).

**५५.** दे$_{8}$. 'वस्थि·······त्यान' bd. खण्डितम्. –ab) दे$_{1.8-10}$ °युक्तौ अर्थं°, मुवें. मुए. मुब.° युक्तौ ह्यर्थं° (→°युक्तावर्थं°). –d) दे$_{1.8}$ कल्प्यते (→कल्पते); ग्र$_{2}$ प्रेत्यान्त्याय न कल्पते.

न$_{1}$ पुस्तके ab, cd मध्येऽधिकम्—

* तौ यत्ने चापि संत्यज्य धर्ममेव समाश्रितः .

**५६.** दे$_{10}$. ५६a–५८b ⊙; दे$_{3}$ न$_{1}$. ५६a–५७d ⊙ (ह. सं.); दे$_{8}$. a–c '°क्षो·········°धन' खण्डितम्. –a) ब$_{2}$ तस्मात् (→धर्मात्). –d) ब$_{1.2}$ दे$_{8.9}$ चातुर्विद्ये, ब$_{3}$ दे$_{4-6}$ चातुर्विध्यं, द$_{1}$ चतुर्विध्ये, ग्र$_{2}$ चातुर्वर्ण्ये (→चातुर्विध्ये); व$_{2}$ प्रतिष्ठितं (→प्रदर्शितम्).

५६ श्लोकात्परं दे$_{1}$ पुस्तके ५२c–५५b यावत् पाठः द्विरावृत्तः .

**५७.** दे$_{3.10}$ न$_{1}$. ⊙ (द्र. ५६ पा. वि. ); दे$_{8}$. ab 'वेद··········°वः' खण्डितम्. –a) दे$_{4}$ एवं यो (→य एवं); ग्र$_{1.2}$ धर्मांश्च (→धर्मार्थ-). –b) का$_{1}$ कामो (→काम-); द$_{1}$ –मोक्षाश्च, ग्र$_{1.2}$ म$_{1}$ -मोक्षांश्च (→-मोक्षस्य). –c) मुब. माहात्म्यश् (→माहात्म्यं); ब$_{1}$ चानुतिष्ठेच्च, ब$_{3}$ च प्रतिष्ठेत, दे$_{1}$ या तु तिष्ठेत, ग्र$_{2}$ चानुतिष्ठन्तः (→चानुतिष्ठेत). –d) ब$_{1}$ चानन्ताय, ग्र$_{2}$ चनान्त्याय (→चानन्त्याय).

**५८.** दे$_{10}$. ab ⊙; दे$_{8}$. खण्डितम्. –a) दे$_{3.6}$ मुब. अर्थश्च, न$_{1}$ अर्थांश्च (→अर्थं च); दे$_{3.6}$ कामश्च, न$_{1}$ कामांश्च (→कामं च). –b) दे$_{3}$ त्यक्ता (→त्यक्त्वा); ब$_{1.2}$ °चरेत् (→°श्रयेत्). –c) दे$_{4}$ यस्मात् (→धर्मात्); दे$_{3}$ सर्वाम् (→सर्वम्). –d) ब$_{3}$ इत्याह (?) (→इत्याहुः).

**५९.** –a) दे$_{3}$*** (→धर्मेण); दे$_{1}$ वर्धते, ग्र$_{1}$ धा(सा)यंते (→धार्यंते). –c) दे$_{8}$** (→शक्तिः). –d) दे$_{1}$ द्विजोत्तम (→द्विजोत्तमाः); दे$_{8}$*****जोत्तमाः .

**६०.** –b) दे$_{3.6}$ विशेषतः (→न संशयः). –c) दे$_{8}$ तस्मा***** तं. –d) दे$_{1.2.8.9}$ मुवें. मुए. मुब. °श्रयेत्, ते$_{1}$ °रभेत् (→°चरेत्).

प्रवृत्तं च निवृत्तं च द्विविधं कर्म वैदिकम् ।
ज्ञानपूर्वं निवृत्तं स्यात् प्रवृत्तं यदतोऽन्यथा ।।६१
निवृत्तं सेवमानस्तु याति तत् परमं पदम् ।
तस्मान्निवृत्तं संसेव्यमन्यथा संसरेत् पुनः ।।६२
क्षमा दमो दया दानमलोभस्त्याग एव च ।
आर्जवं चानसूया च तीर्थानुसरणं तथा ।।६३
सत्यं सन्तोष आस्तिक्यं श्रद्धा चेन्द्रियनिग्रहः ।
देवताभ्यर्चनं पूजा ब्राह्मणानां विशेषतः ।।६४
अहिंसा प्रियवादित्वमपैशुन्यमकल्कता ।
सामासिकमिमं धर्मं चातुर्वर्ण्येऽब्रवीन्मनुः ।।६५
प्राजापत्यं ब्राह्मणानां स्मृतं स्थानं क्रियावताम् ।
स्थानमैन्द्रं क्षत्रियाणां संग्रामेष्वपलायिनाम् ।।६६
वैश्यानां मारुतं स्थानं स्वधर्ममनुवर्ततताम् ।
गान्धर्वं शूद्रजातीनां परिचारेण वर्तताम् ।।६७
अष्टाशीतिसहस्राणामृषीणामूर्ध्वरेतसाम् ।
स्मृतं तेषां तु यत्स्थानं तदेव गुरुवासिनाम् ।।६८
सप्तर्षीणां तु यत्स्थानं स्मृतं तद् वै वनौकसाम् ।
प्राजापत्यं गृहस्थानां स्थानमुक्तं स्वयंभुवा ।।६९ वें १.२.७२

६१. –a) दे1 ते1 द1 ग्र1.2 प्रवृत्ति, दे5 प्रवृत्तां (→प्रवृत्तं); दे1 ते1 द1 ग्र1.2 निवृत्ति (→निवृत्तं). –b) का1 धर्म (?), दे10 कर्म (→कर्म); दे4 दैविकं, दे10 एव च (→वैदिकम्). –c) दे8 ** पूर्वं, न1 ज्ञानं पूर्व-, ग्र2 ज्ञानपूर्णं, (→ज्ञानपूर्वं); का1 ब2 दे1-3.5.6 ग्र2 निवृत्तिः (दे6 ग्र2 °त्ति) (→निवृत्तं); दे4 यत् (→स्यात्). –d) का1 ब2 दे1-3.6 ते1 ग्र2 प्रवृत्तिः (दे3.6 ग्र2 °त्ति), ग्र2 यन्ततो (→यदतो); दे4 ज्ञानवर्जमतोन्यथा.

६२. –a) का1 ब2 दे1-3.5.6 ग्र2 निवृत्ति (ब2 दे6 °त्ति) (→निवृत्तं); ब3 दे10 ते1 सेव्यमा° (→सेवमा°). –c) का1 ब2 दे2.3.5.6 ते1 निवृत्तिः (दे6 °त्ति), दे1 प्रवृविभिः, म1 निमित्तं (→निवृत्तं); का1 ब2 दे1-3.5.6 ते1 संसेव्या (→संसेव्यम्). –d) ते1 ह्यन्यथा (→अन्यथा); का1 दे5 द1 संस्मरेत्, दे10 संचरेत्, ग्र2 [अ]नुसरेत् (→संसरेत्); न1 नरः (→पुनः).

६३. दे8. d खण्डितम्. –a) ग्र1 रक्षा, ते1 शमी (→क्षमा); दे4.5 दया (→दमो); दे4.5 दमो (→दया); ग्र2 दान- (→दानं); दे3 न लोभः, ग्र2 अलोभ्यः (→अलोभः). –c) दे3 मुब. आर्जवः (→आर्जवं); का1 ब2 दे1.2.10 ग्र1.2 मुवं. मुए. चानुसूया (→चानसूया). –d) ब1 दे10 °शरणं, ब3 °शरणः (→°सरणं); ब2 तपः, दे1.9.10 दया (→तथा).

६४. दे8. cd 'ताभ्य······विशे.' खण्डितम्. –a) दे8 **, दे10 सत्य-(→सत्यं); ब1 सन्तोस, दे1.2.9.10 मुवं. मुए. मुब. सन्तोषं, दे8 * तोषं (→सन्तोषः).

६५. दे8. bc '°मक······°धर्मं' खण्डितम्. –a) ग्र2 °वादनं (→°वादित्वं). –b) का1 ग्र2 अकल्कना, ब2 दे5 अक * ता, ब3 न1 दे10 द1 ग्र1 म1 अकल्पना (ब3 दे10 द1 °ता), दे1 अकल्पता, दे4 अकष्टता (→अकल्कता). –c) ब2 सामादिक-मथर्वश्च, ब3 सामासिक्यमगर्वश्च, दे3 सामासिक्षिमथर्वश्च, दे6 सामाक्षिकामं * धर्मं, ते1 सामशिक्षामार्दवं च, ग्र2 सामासत इदन्धर्म्मं, म1 सामान्य (धि) कमिमं धर्मं. –d) का1 दे2 ग्र1 चातुर्वर्ण (का1 °र्ण्यं), ब1 म1 चातुर्वर्णे (→चातुर्वर्ण्ये); दे3 पुनः, द1 ग्र2 मुनिः (→मनुः).

अतः परं दे10 पुस्तके अधिकम् –

*अर्चि..। भगवान् पत्नी तस्माल्लक्ष्मीं समर्चय.

६६. दे8. abc 'ब्राह्म······स्था' खण्डितम्. –b) का1 ब1.3 दे2.3 श्रुतं, ब2 शुभं, ते1 कृत (?) (→स्मृतं); का1 दे10 क्रियावती, ब1 क्रियावतात् (→क्रियावताम्). –c) द1 ग्र1.2 म1 संग्रामेपि (→संग्रामेषु); का1 [अ]पलायिनी (→[अ]पलायिनाम्); दे10 संग्रामे च पलायनम्.

६७. द1 ग्र1.2 म1. ६७b–६८a ⊙ (द्र. सं.); दे8. ab. 'वैश्याना·········मनु' खण्डितम्; ग्र1. b ⊙. –b) का1 अनुवर्त्तत, ब1 अनुवर्तात्, दे1 परिवर्त्तिनां, दे4 ते1 अनुवर्त्तिनां (→अनुवर्त्तताम्). –c) दे10 गन्धर्व- (→गान्धर्वं); दे10 शुद्ध° (→शूद्र°). –d) दे4 परिचर्यानुवर्त्तिनां, दे8 परिच*****.

६८. द1 ग्र1.2 म1. ⊙ (द्र. ६७ पा. वि.); न1. ६८d–७१ a ⊙ (द्र. सं.); दे8. ६८d–६९c. यत्स्थानं········ प्राजापत्यं' खण्डितम्; दे4.9.10. ६८d–६९ a ⊙ (द्र. सं.); दे8. a खण्डितम्. –a) ते1 सहस्राणि (→सहस्राणां). –b) दे1 मुनीनां, दे4 यतीनां (→ऋषीणाम्). –c) दे3 स्मृति (→स्मृतं); ते1 च (→तु); ब2 दिवि यत्परमं स्थानं. –d) दे5 गुह्य° (→गुरु°).

६९. न1. ⊙ (द्र. ६८ पा. वि.); दे8. ab ⊙; दे4.9. 10 द1 ग्र1.2 म1. a ⊙ (द्र. ६८ पा. वि.). –a) ब3 च (→तु). –b) ब1.3 श्रुतं (→स्मृतं).

६९b अनन्तरं ग्र1 अधिकम्–

* शूद्रा गान्धर्वमाप्नोति जीवानामभयप्रदः ।

वें. १.२.७२ यतीनां यतचित्तानां न्यासिनामूर्ध्वरेतसाम् ।
हैरण्यगर्भं तत् स्थानं यस्मान्नावर्त्तते पुनः ॥७०
योगिनाममृतं स्थानं व्योमाख्यं परमाक्षरम् ।
आनन्दमैश्वरं धाम सा काष्ठा सा परागतिः ॥७१

ऋषय ऊचुः ।❀

भगवन् देवतारिघ्न हिरण्याक्षनिषूदन ।
चत्वारो ह्याश्रमाः प्रोक्ता योगिनामेक उच्यते ॥७२

श्रीकूर्म उवाच ।❀

सर्वकर्माणि संन्यस्य समाधिमचलं श्रितः ।
य आस्ते निश्चलो योगी स संन्यासी न पञ्चमः ॥७३
सर्वेषामाश्रमाणां तु द्वैविध्यं श्रुतिदर्शितम् ।
ब्रह्मचार्युपकुर्वाणो नैष्ठिको ब्रह्मतत्परः ॥७४
योऽधीत्य विधिवद्वेदान् गृहस्थाश्रममाव्रजेत् ।
उपकुर्वाणको ज्ञेयो नैष्ठिको मरणान्तिकः ॥७५
उदासीनः साधकश्च गृहस्थो द्विविधो भवेत् ।
कुटुम्बभरणे यत्तः साधकोऽसौ गृही भवेत् ॥७६
ऋणानि त्रीण्यपाकृत्य त्यक्त्वा भार्याधनादिकम् ।
एकाकी यस्तु विचरेदुदासीनः स मौक्षिकः ॥७७
तपस्तप्यति योऽरण्ये यजेद् देवान् जुहोति च ।
स्वाध्याये चैव निरतो वनस्थस्तापसो मतः ॥७८

---

७०. न1. ⊙ (द्र. ६८ पा. वि.); दे8. ab खण्डितम्. –a) का1 दे5.9.10 मुवें. मुए. मुब. जित° (→यत°). –c) दे1 हिरण्य° (→हैरण्य°); का1 ब2.3 दे2.3.5.6 यत् (→तत्). –d) दे1.4 यतिः (→पुनः); दे8 यस्मान्नाव****.

७१. न1. a. (द्र. ६८ पा. वि. ); दे8. खण्डितम्.–a) द1 ग्र2 चमृतं, ग्र1 म1 त्वमृतं (→ग्रमृतं). –b) का1 ब3 दे4.6 व्योमाक्षं (का1 °क्ष), दे1 यत्स्थानं, दे3 व्योमार्क्ष (→व्योमाख्यं); ब1 दे1.4-6 मुवें. मुए. मुब. परमक्षरम्, द1 ग्र1.2 म1 परमं स्मृतम् (→परमाक्षरम्). –c) दे1 ग्रा*दम् (→ग्रानन्दम्); दे3.6 नाम, दे5 व्योम (→धाम). –d) दे8.10 या (→सा); ब2 परमा गतिः, दे1 सा परां गतिः (→सा परा गतिः).

❀ न1 ते1 द1 ग्र1.2 म1 ऋषयः.

७२. –a) दे3.8 देवताविघ्न, न1 देवताविघ्नन्, द1 ग्र2 म1 देवता राति(ग्र2 °तिः), ग्र1 देवतारराते (→देवतारिघ्न). –b) ब3 हिरण्याख्य° (→हिण्याक्ष°); दे1.4 °निसूदन (→°निषूदन). –c) दे1 ह्याश्रमो, द1 ग्र1.2 म1 [ग्र]प्याश्रमाः (→ह्याश्रमाः); दे1 ग्र1 प्रोक्तो (→प्रोक्ताः). –d) दे1 एकं, दे4 कर्ग (→एक); न1 योगीनां कः क उच्यते, द1 ग्र1 योगीनाम (द10 मे) क उच्यते, ग्र2 योगिनामं क उच्यते, म1 योगिनामत उच्यते.

❀ का1 ब1-3 दे1-2.5.6.8-10 ग्र2 मुवें. मुए. मुब. कूर्म उवाच; दे3 कूर्म उ०; न1 ते1 कूर्मः; ग्र1 म1 श्रीकूर्म्मः.

७३. –a) दे9 द1 ग्र2 सन्यस्य (→संन्यस्य). –b) ब2 ग्रथ संश्रितः, ब3 ग्रत संश्रितः, दे1 ग्रचं* श्रितः, दे4 ग्रचलं स्वतः, दे10 ग्रचलं श्रि (स्मृ)तः, ते1 ग्रतलमाश्रितः, ग्र2 ग्रचलं श्रुतः (→ग्रचलं श्रितः). –c) ब1 दे8-10 यत्रास्ते, ब3 यथास्ते, ग्र1.2 म1 यश्चास्ते (→य ग्रास्ते). –d) दे3.6.10 सन्यासी (→संन्यासी); का1 तु, दे1.4.5.8.9 मुवें. मुए. मुब च (→न); ब1.3 संन्यासी न तु पञ्चमः.

७४. –a) दे10 ग्राश्रमाणानां (→ग्राश्रमाणान्तु); ब1.2 दे1 च (→तु); –b) का1 ब2 दे2.4.5.8.9 म1 श्रुतिदर्श (दे5° शि) नं (म1 °नः). ग्र2 श्रुतदर्शितं (→श्रुतिदर्शितम्). –c) ब2 ते1 ब्रह्मच(ब2 चा)र्यं प्रकुर्वाणो, दे4 ब्रह्मवायुवकर्वाणो(?). –d) दे4 °तत्वतः (→°तत्परः).

७५. –a) दे1 विविधान् (→विधिवद्); ब1 वेदा, ब3 देवान् (→वेदान्). –b) दे6 ग्राव्रजन्, ग्र1 ग्राभजेत् (→ग्राव्रजेत्). –c) ग्र1 ** कुर्वाणको (→उपकुर्वाणको). –d) ब1 नैष्ठिके, (→नैष्ठिको); ब2 मरणान्तिकं, ब3 मरणान्तकः, न1 मरणान्ततः (→मरणान्तिकः).

७६. –b) द1 ग्र1.2 म1 द्विगुणो (→द्विविधो). –c) का1 दे4.7.9 न1 मुवें. मुए. मुब. °भरणायत्तः (का1 दे4 °त्नः), ब1-3 दे1-3 द1 °भरणे यत्नः, दे10 °भरणासक्तः, ते1 °भरणे यस्तु, ग्र1 °भरणे युक्तः (→°भरणे यत्तः). –d) ग्र2 स (→[ग्र]सौ).

७७. –a) का1 ब2 °हृत्य (→°कृत्य). –b) दे3 त्यक्ता (→त्यक्त्वा); दे2.3.5 भार्य्या (→भार्या-); दे4 °धनादिकां (→°धनादिकम्). –c) द1 ग्र1.2 म1 विचरेद्यस्तु (→यस्तु विचरेद्). –d) ब3 ते1 म1 मोक्षि (ते1 °क्ष) कः, दे1.3 मैं (दे3 मे) क्षितः, न1 वै मतः, द1 माक्षिकः (→मौक्षिकः).

७८. –a) दे9 तपति (→तप्यति). –b) का1 ब1 दे1 य (ब1 ज) जे देवान्, दे6 जपेदेवा, न1 द1 जपेद्देवां (→यजेद् देवान्); दे1 *, दे4 वा (→च). –c) द1 स्वाध्यायो नैव, ग्र2 म1 स्वाध्यायेनैव (→स्वाध्याये चैव). –d) दे3 वनस्थाः (→वनस्थः); दे3 तापसो मनः, द1 ग्र1 म1 ताप (द1 °म) सः स्मृतः, ग्र2 तापस** (→तापसो मतः).

तपसा कर्षितोऽत्यर्थं यस्तु ध्यानपरो भवेत् ।
सांन्यासिकः स विज्ञेयो वानप्रस्थाश्रमे स्थितः ।।७९
योगाभ्यासरतो नित्यमारुरुक्षुर्जितेन्द्रियः ।
ज्ञानाय वर्तते भिक्षुः प्रोच्यते पारमेष्ठिकः ।।८०
यस्त्वात्मरतिरेवस्यान्नित्यतृप्तो महामुनिः ।
सम्यग् दर्शनसंपन्नः स योगी भिक्षुरुच्यते ।।८१
ज्ञानसंन्यासिनः केचिद् वेदसंन्यासिनोऽपरे ।
कर्मसन्यासिनः केचित् त्रिविधाः पारमेष्ठिकाः।।८२
योगी च त्रिविधो ज्ञेयो भौतिकः सांख्य एव च ।
तृतीयोत्याश्रमी प्रोक्तो योगमुत्तममास्थितः ।।८३

प्रथमा भावना पूर्वे सांख्ये त्वक्षरभावना ।
तृतीये चान्तिमा प्रोक्ता भावना पारमेश्वरी ।।८४
तस्मादेतद् विजानीध्वमाश्रमाणां चतुष्टयम् ।
सर्वेषु वेदशास्त्रेषु पञ्चमो नोपपद्यते ।।८५
एवं वर्णाश्रमान् सृष्ट्वा देवदेवो निरञ्जनः ।
दक्षादीन् प्राह विश्वात्मा सृजध्वं विविधाः प्रजाः।।८६
ब्रह्मणो वचनात् पुत्रा दक्षाद्या मुनिसत्तमाः ।
असृजन्त प्रजाः सर्वा देवमानुषपूर्विकाः ।।८७
इत्येष भगवान् ब्रह्मा स्रष्टृत्वे स व्यवस्थितः ।
अहं वै पालयामीदं संहरिष्यति शूलभृत् ।।८८ वें. १.२.९१

७९. –a) दे8-10 कर्षतेत्यर्थं, न1 ग्र1 म1 कर्शितोत्यर्थं, द1 कशितोप्यर्थः (→कर्षितोऽत्यर्थं). –b) का1 न्यास° (→ध्यान°); ब1 मतः, + भवेत् (→भवेत्). –c) का1 ब2 दे1-6 सन्यासिकः (दे6 °नः), ब1.3 न1 सान्यासिकः, दे10 संन्यासिकः, द1 ग्र1 म1 सन्यसेद्यः, ग्र2 संत्यस्सद्यो (→सांन्यासिकः). –d) दे3 वानप्रस्थो (→वानप्रस्था-).

८०. –c) ग्र2 बर्द्धते (→वर्त्तते). –d) दे3 प्रोच्य तं (→प्रोच्यते); का1 ब1-3 दे1.10 द1 म1 परमेष्ठिकः (→पारमेष्ठिकः).

८१. –a) का1 ब2 य आत्म°, ब3 यश्चात्म°, दे3.5 यात्म°, ग्र2 यःस्वात्मा° (→यस्त्वात्म°); न1 °मति° (→°रति°); दे10 यस्त्वात्मनिरतो नित्यं. –b) दे4.6 महामतिः (→महामुनिः); दे10 गुप्तो तिष्ठेत्महामुनिः .

८२. दे6 न1 . b c ⊙ (द्र. सं.). –a) ब1.2 ज्ञानस (?) न्यासिनः, ब3 आत्मसंन्यासिनः, द1 ज्ञानं संन्यासिनः (→ज्ञानसंन्यासिनः). –b) का1 केचित्, ते1 कर्म– (→वेद–); ब1.2 म1 परे (→[अ] परे). –c) ते1 वेद° (→कर्म°); ब1.3 दे2.3 °स (?) न्यासिनः (→°संन्यासिनः). –d) ब1 त्रिविधा (→त्रिविधाः); दे10 त्रिविधा परमेष्ठिकः.

८३. –a) ग्र2 त्रिविधा (→त्रिविधो). –b) दे1 सं (?) ख्य (→सांख्य). –c) ब1.2 दे1.3 मुब. [अ]न्त्या (दे1 °न्ता ?) श्रमी, ब3 चाश्रमः, दे4 चांतिमा, दे10 चाश्रमी, न1 ग्र1 म1 मुवें. मुए. ह्याश्रमी, ते1 [अ] न्याश्रमी, म1 [अ] न्याश्रमः (→[अ] त्याश्रमी); ग्र2 प्रोक्तः (→प्रोक्ता). –d) दे1.4.8-10 ते1 द1 ग्र1 म1 मुवें. आश्रितः (दे4 °ताः) ग्र2 आश्र (?) ताः (→आस्थितः).

८४. –a) ब1 प्रथमो (→प्रथमा); ग्र2 भवानात् (→भावना); दे4.6 पूर्वं, ते1 पूर्वा (→पूर्वे). –b) दे4 सांक्षे (?), ते1 सांख्या (→सांख्ये); दे10 चाक्षर° (→त्वक्षर°); दे4 °भावनात् (→°भावना). –c) ब1 दे4.5 तृतीया (→तृतीये); दे5 ग्र2 चान्तिका (ग्र2 °कौ), म1 चान्त्यमा (→चान्तिमा); ब1.3 [इ] त्युक्त्वा, ग्र2 प्रोक्तः (→प्रोक्ता). –d) का1 दे10 द1 ग्र2 परमेश्वरी (→पारमेश्वरी).

८४ श्लोकात्परं दे3 पुस्तके अधिकम्—
योगमुत्तममास्थितः । प्रथमा भावना पूर्व सांख्यतत्त्व•••
(= ८३d–८४b)

८५. –a) द1 ग्र1.2 म1 तस्मादेवं (→तस्मादेतत्); का1 ब2 दे1.2.4 विजानीयाद्, न1 विजानी(न्द्र)ध्वम (→विजानीध्वम्). –b) ब3 चतुष्टकं (→चतुष्टयम्). –d) दे4 धवनो (→पञ्चमो).

८६. म1. ८६–९५b ⊙. –a) दे6 वर्णाश्रमा, न1 ग्र1 वर्णाश्रमं (न1 °मां) (→वर्णाश्रमान्); का1 न1 दृष्ट्वा (→सृष्ट्वा). –b) न1 °देवं (→°देवो); न1 चतुर्मुखः (→निरञ्जनः). –c) दे6 दक्षादी (?), ग्र2 दी (?) क्षादीन् (→दक्षादीन्); –d) ब1 विविधा (?) (→विविधाः).

८७. म1. ⊙ (द्र. ८६ पा. वि.). –a) ग्र2 पुत्रान् (→पुत्रा[:]). –b) ब2 °पुङ्गवाः, दे1 °सत्तमः (→°सत्तमाः). –c) ब3 दे4 न1 असृजन्तः (दे4 °तो ?), द1 ग्र1.2 असृज° (ग्र2 °जन्) स्ते (ग्र2 °ते) (→असृजन्त); दे8-10 ग्र2 मुवें. सर्वे (→सर्वाः). –d) दे1.3.4 मुवें. °पूर्वकाः, न1 °रूपिका (→°पूर्विकाः).

८८. म1. ⊙ (द्र. ८६ पा. वि.). –a) का1 इत्येषा, दे8-10 द1 मुवें. इत्येवं (दे10 °व) (→इत्येष); दे5 भग*

वें.१.२.६१ तिस्रस्तु मूर्त्तयः प्रोक्ता ब्रह्मविष्णुमहेश्वराः ।
रजःसत्त्वतमोयोगात् परस्य परमात्मनः ॥८९
अन्योन्यमनुरक्तास्ते ह्यन्योन्यमुपजीविनः ।
अन्योन्यं प्रणताश्चैव लीलया परमेश्वराः ॥९०
ब्राह्मी माहेश्वरी चैव तथैवाक्षरभावना ।
तिस्रस्तु भावना रुद्रे वर्तन्ते सततं द्विजाः ॥९१
प्रवर्तते मय्यजस्रमाद्या चाक्षरभावना ।
द्वितीया ब्रह्मणः प्रोक्ता देवस्याक्षरभावना ॥९२
अहं चैव महादेवो न भिन्नौ परमार्थतः ।
विभज्य स्वेच्छयात्मानं सोऽन्तर्यामीश्वरः स्थितः॥९३
त्रैलोक्यमखिलं स्रष्टुं स देवासुरमानुषम् ।
पुरुषः परतोऽव्यक्ताद् ब्रह्मत्वं समुपागमत् ॥९४
तस्माद् ब्रह्मा महादेवो विष्णुर्विश्वेश्वरः परः ।
एकस्यैव स्मृतास्तिस्रस्तनूः कार्यवशात् प्रभोः ॥९५
तस्मात् सर्वप्रयत्नेन वन्द्याः पूज्याः प्रयत्नतः ।
यदीच्छेदचिरात् स्थानं यत्तन्मोक्षाख्यमव्ययम् ॥९६

---

(→भगवान्); द1 ब्रह्मन् (→ब्रह्मा). –b) का1 दे6 सृष्टत्वे, ब2 सृष्ट्यर्थं, दे1 सृष्ट्वे*, दे2 सृष्ट्वेदं, दे3.9.10 सृष्टृत्वे (→स्रष्टृत्वे) दे10 न1 द1 ग्र2 स (ग्र2 सा) व्यवस्थितः (ग्र2 °ताः) (→संव्यवस्थितः); ग्र1 स्रष्टा सत्वे व्यवस्थितः. –c) दे4 [इ]ति (→[इ]दं). –d) दे2 शूलधृक्, न1 शूलभुक् (→शूलभृत्).

८९. म1. ⊙ (द्र. ८६ पा. वि.). –a) दे10 तिसृस्तु (→तिस्रस्तु); ब1 मूर्त्तय[:], दे10 मूक्तयः (→मूर्त्तयः). –b) दे1 ब्रह्माविष्णुः (→ब्रह्मविष्णु-), ब2 °शिवात्मिकाः, दे6.9 °महेश्वरः (→महेश्वराः). –c) ब1 सत्त्वं (→सत्त्व-). –d) दे1 परमहात्मनः (→परमात्मनः); दे5 परम्परमहात्मनः.

८९ श्लोकस्य ab, cd मध्ये न1 अधिकम्.

* एकस्यैव महेशस्य देवदेवस्य शूलिनः ।

९०. म1. ⊙ (द्र. ८६ पा. वि.). –b) दे1 ग्र2 वन्यो, द1 ग्र1 अन्यो (→ह्यन्यो). –c) ब1 दे4.8-10 न1 ते1 मुवें. अन्योन्य- (→अन्योन्यं); दे5 प्रागता, दे6 प्रणतां (→प्रणताश्). –d) दे4.10 न1 परमेश्वरः (→परमेश्वराः).

९१. म1. ⊙ (द्र. ८६ पा. वि.). –b) दे4 [ए]वेश्वर° न1 त्वक्षर°, ग्र1 चाक्षर° (→[ए]वाक्षर°). –c) दे4 रुद्रं (→रुद्रे). –d) का1 दे3 ग्र1 वर्तते, ग्र2 वर्तन्ति (→वर्तन्ते).

९२. म1. ⊙ (द्र. ८६ पा. वि.); द1 ग्र1.2. cd ⊙; ब3 'मध्य……क्षर' इति अस्पष्टम्. –a) ब2.3 दे2-4.6 ते1 प्रवर्तन्ते, ग्र2 प्रवत्तते (→प्रवर्तते); का1 मध्यमं तु, दे1 ते1 मयाजस्रं, दे3 मर्य(?)जस्रं, दे6 यदाजस्रं, ग्र2 मय्यजस्य (→मय्यजस्रम्). –b) का1 आद्याचा (चा)क्षर°, ब1.2 दे6 ते1 अन्याश्चाक्षर°, दे3 आन्याश्वाक्षर°, न1 अन्यात्वक्षर°, मुए. मुवें. आद्यात्वक्षर° (→आद्या चाक्षर°); ब1.2 दे3.6 ते1 °भावनाः (→°भावना). –c) न1 द्वितीयां (→द्वितीया). –d) ते1 देवस्साक्षर° (→देवस्याक्षर°).

९२ श्लोकात्परं दे9 पुस्तके अधिकम्—

* ……… तथैवाक्षर भावना ।
तिस्रस्तु भावना *द्रे वर्तन्ति सततं द्विजाः ।
प्रवर्तते मय्यजस्रं आद्याचाक्षरभावना ।
द्वितीया ब्रह्मणः प्रोक्ता देवस्याक्षरभावना ।
(=६१d–६२).

९३. म1. ⊙ (द्र. ८६ पा. वि.). –a) न1 °देवां (→°देवो). –b) ब1 दे5.6 ते1 मुवें. मुए. भिन्नो (दे5 मुवें. मुए. °न्नः), ग्र2 भिन्ना (→भिन्नौ); ब2 परमात्मनः (→परमार्थतः). –c) दे10 विभाज्य (?) (→विभज्य); दे3 स्वछया (?) (→स्वेच्छया). –d) ग्र1.2 अन्तर्यामी (→सोऽन्तर्यामी); का1 [ई]श्वरः स्थिरः, ग्र2 ईश्वराथितः (→[ई]श्वरः स्थितः).

९४. म1. ⊙ (द्र. ८६ पा. वि.). –a) दे3 आविलं (→अखिलं); ब3 श्रेष्ठं, दे1 स्रष्टो, दे10 ते1 सृष्टुं, न1 द्रष्टुं (→स्रष्टुं). –c) दे6.10 परमो (→परतो); का1 ब2.3.6 न1 [अ]व्यक्ता, दे1.4 [अ]व्यक्तान्, दे8.9 मुवें. मुए. [अ]व्यक्तो, दे10 यस्तु (→[अ]व्यक्ताद्). –d) ते1 स्रष्टृत्वं (→ब्रह्मत्वं); ब1.3 दे4 समुपागतः (→समुपागमत्).

९५. म1. ab ⊙; न1. ९५c–९७ ⊙. –b) ब1.3 प्रभुः (→परः). –c) का1 दे5.6 ग्र1 स्मृता तिस्रः (का1 °सस्), दे10 स्मृतिस्तत्र, ग्र2 मृतातिस्रः (→स्मृतास्तिस्रस्). –d) का1 दे5 तनुः, ब1 दे8-10 मुवें. मुए. तद्वत्, ब2 सूनुः, ब3 दे4 द1 ग्र1.2 तत्तत्, दे1 तत्व, दे3 शुद्धिः, ते1 ताहि, म1 तस्मात्, मुब. मूर्तीः (→तनूः); का1 ब3 दे9.10 द1 प्रभो, ते1 स्मृताः, ग्र2 प्रभुः (→प्रभोः).

९६. न1. ⊙. –a) दे2 °प्रकारेण (→°प्रयत्नेन). –b) ग्र2 चिन्त्या, (→वन्द्याः); ब2 दे1.5.8-10 द1 ग्र1.2 म1 मुवें. मुए. विशेषतः (→प्रयत्नतः). –c) का1 यदीक्षेद्, ते1 यदि चेद्, (→यदीच्छेद्); दे3 अचिरान्, द1 तु विराट् (→अचिरात्); दे10 मानं, ते1 ज्ञानं (→स्थानं). –d) दे10 यत्तान्, ग्र2 यत्तं (→यत्तन्); दे9 मोक्षाक्षं (→मोक्षाख्यं).

**वर्णाश्रमप्रयुक्तेन धर्मेण प्रीतिसंयुतः ।**
**पूजयेद् भावयुक्तेन यावज्जीवं प्रतिज्ञया ॥९७**
**चतुर्णामाश्रमाणां तु प्रोक्तोऽयं विधिवद्द्विजाः ।**
**आश्रमो वैष्णवो ब्राह्मो हराश्रम इति त्रयः ॥९८**
**तल्लिङ्गधारी सततं तद्भक्तजनवत्सलः ।**
**ध्यायेदथार्चयेदेता ब्रह्मविद्यापरायणः ॥९९**
**सर्वेषामेव भक्तानां शंभोर्लिङ्गमनुत्तमम् ।**
**सितेन भस्मना कार्यं ललाटे तु त्रिपुण्ड्रकम् ॥१००**
**यस्तु नारायणं देवं प्रपन्नः परमं पदम् ।**
**धारयेत् सर्वदा शूलं ललाटे गन्धवारिभिः ॥१०१**

**प्रपन्ना ये जगद्बीजं ब्रह्माणं परमेष्ठिनम् ।**
**तेषां ललाटे तिलकं धारणीयं तु सर्वदा ॥१०२**
**योऽसावनादिर्भूतादिः कालात्माऽसौ धृतो भवेत् ।**
**उपर्यधो भावयोगात् त्रिपुण्ड्रस्य तु धारणात् ॥१०३**
**यत्तत् प्रधानं त्रिगुणं ब्रह्मविष्णुशिवात्मकम् ।**
**धृतं त्रिशूलधरणाद् भवत्येव न संशयः ॥१०४**
**ब्रह्मतेजोमयं शुक्लं यदेतन् मण्डलं रवेः ।**
**भवत्येव धृतं स्थानमैश्वरं तिलके कृते ॥१०५**
**तस्मात् कार्यं त्रिशूलाङ्कं तथा च तिलकं शुभम् ।**
**त्रियायुषं च भक्तानां त्रयाणां विधिपूर्वकम् ॥१०६** वें.१.२.१०६

९७. न1. ⊙; दे4.10. bc ⊙. –a) ग्र2 सर्वा° (→वर्णा°); ब2.3 दे3.6 वर्णाश्रम (ब2.3 °मं) प्रयत्नेन. –b) द1 ग्र1.2 म1 प्रतिसंवृ (ग्र2 °हृ) तः (→प्रीतिसंयुतः). –c) दे3 पूजयद् (→पूजयेद्); ते1 °यज्ञेन (→°युक्तेन). –d) ब1 दे8-10 ग्र1.2 यावज्जीव- (→यावज्जीवं); ग्र1 -प्रतिक्रिया (→प्रतिज्ञया).

९८. –a) ग्र2 चातुर्वर्णाश्रमाणन्तु. –b) दे4 त्रिविधो, दे10 च विधिः, म1 विविधं (→विधिवद्). –c) दे6.10 ग्र2 ब्रह्मो (→ब्राह्मो). –d) दे3 दूराश्रम, दे6 शिराश्रम, ते1 ग्र1 हृ(ते1 प) राश्रय (→हराश्रम); दे4 स्मृतः, + त्रयः (→त्रयः).

९९. –a) दे1.8-10 द1 ग्र1.2 म1 मुवें. मुए. नियतं (ग्र1 °तस्), दे5 सत* (→सततं).–b) न1 भक्तं (→भक्त-).–c) ब1 अर्थाच्चर्चयेद्, ब3 अ*च्चर्चयेद्, दे4 अथार्चयेद्, द1 तथार्चयेद्, ग्र2 तानर्चयेद्, म1 तदार्चयेद् (→अथार्चयेद्); दे5 ग्र2 एवान्, दे6.10 एता (→एतान्).

१००. –a) ब3 देवानां (→भक्तानां). –b) ग्र1 शान्तो लिङ्गम्, ग्र2 ** लिंगम, म1 श्रौतलिंगम् (→शम्भोर्लिङ्गम्).–c) दे3 संतेन, न1 त्रि (सि) तेन, ग्र2 स तेन (→सितेन); दे1 कार्या (→कार्यं). –d) ब2 ते1 च (→तु).

१०१. –a) दे1 येस्तु (→यस्तु). –b) दे3 प्रसन्नः, दे4 प्रपन्नं (→प्रपन्नः); ते1 परम् (→पदम्). –c) न1 स सदा (→सर्वदा); दे10 ऊर्ध्वं (→शूलं). –d) न1 वारिणा, ते1 धारिभिः (→वारिभिः).

१०२. –a) दे4 प्रपन्नाय, ग्र2 प्रपन्नयेत् (→प्रपन्ना ये); दे3 बीज (?), ते1 विभुं (→बीजं). –c) न1 ललाट– (→ललाटे); ते1 तिलको (→तिलकं). –d) ते1 धारणे यस्तु सर्वदा, ग्र2 धारिणी * न्तु सर्वदा.

१०३. –a) दे10 ये° (→यो°); दे8.9 न1 द1 म1 अनादि- (?) (→अनादिर्); दे10 भूतानि, न1-भूतादि (→भूतादिः). –b) न1 कालात्मा स, ग्र2 कालात्मानो (→कालात्माऽसौ); ब1.3 वृतो, ग्र2 [अ]ग्रतो (→धृतो); दे3.6 [अ]भवत् (→भवेत्); ते1 कालात्मा साध्यतो भवेत्. –c) दे4 द1 उपर्यथो, दे6 उपार्यधो (→उपर्यधो); ब3 दे3.6 ग्र1 म1 भाग° (→भाव°); दे3 -योगास्, न1 -योगी (→-योगात्); ग्र2 उपा ******ग्र. –d) ब1 त्रिपुण्डस्य तु, ब3 त्रिपुण्ड्रकस्य, दे4 ते1 त्रिपुण्ड्रस्य च, (→त्रिपुण्ड्रस्य तु); का1 धारणा, दे2 धारिणा (→धारणात्).

१०४. –a) दे1 यतः प्रधान–, ते1 यस्तत्प्रधानं, द1 ग्र1.2 म1 यत् प्रसादन्तु (→यत्तत्प्रधानं). –c) ब1.3 दे4.6 ते1 त्रिशूल भ (दे4 °म) रणात्, दे1 त्रिशूल* रणात्, दे2.3.5.8-10 मुवें. मुए. तु शूलधरणाद्, न1 त्रिशूलधरणं (→त्रिशूलधरणात्); ग्र2 धृतिन्तु शूलन्धरणात्. –d) दे1 भव(त)त्येव, दे3 भवत्येवं (→भवत्येव).

१०५. –a) ब2.3 शुद्धं, दे5 शुल्कं (?), दे10 शूलं, द1 ग्र1.2 म1 युक्तं (→शुक्लं). –b) ग्र1 यदेवम्, ग्र2 य एवम्, म1 यन्देवं (→यदेतन्); द1 ग्र1.2 म1 धरेत् (→रवेः). –c) दे8 भवह्येव, दे10 अ(?)वत्येव (→भवत्येव); दे3 न1 धृवं, द1 घृतं (→धृतं); दे10 स्थाने, ते1 तावत् (→स्थानम्). –d) ब3 ऐश्वर्य्यं, ग्र2 ईश्वरे (→ऐश्वरं); दे5 [अ]क्षतेः (?), न1 तु वै, द1 ग्र1.2 म1 धृते (→कृते).

१०६. –a) दे3 कार्य (?), दे10 कार्ये, ग्र2 कालं (→कार्यं); दे3.6 म1 त्रिशूलाङ्गं (→त्रिशूलांकं). –b) न1 तथैव (→तथा च). –c) का1 ब1-3 दे2.5.6 मुवें. मुए. मुब. आयुष्य-ञ्चापि, दे1 आयुधां चापि, दे3 आयुषश्चापि, दे8-10 न1 आयुषं चा

बं.१.२.१०९ यजेत जुहुयादग्नौ जपेद् दद्याज्जितेन्द्रियः ।
शान्तो दान्तो जितक्रोधो वर्णाश्रमविधानवित्।।१०७

एवं परिचरेद् देवान् यावज्जीवं समाहितः ।
तेषां संस्थानमचलं सोऽचिरादधिगच्छति ।।१०८

इति श्रीकूर्मपुराणे षट्साहस्त्र्यां संहितायां पूर्वविभागे द्वितीयोऽध्यायः ।।२।।

# ३

ऋषय ऊचुः ।❀

वर्णा भगवतोद्दिष्टाश्चत्वारोऽप्याश्रमास्तथा ।
इदानीं क्रममस्माकमाश्रमाणां वद प्रभो ।।१

श्रीकूर्म उवाच ।❀

ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा ।
क्रमेणैवाश्रमाः प्रोक्ताः कारणादन्यथा भवेत् ।।२

उत्पन्नज्ञानविज्ञानो वैराग्यं परमं गतः ।
प्रव्रजेद् ब्रह्मचर्या तु यदीच्छेत् परमां गतिम् ।।३

---

(दे10 वा)पि, ते1 त्रयायुषेण, द1 श्रयायुषं च, ग्र2 त्र्यायुषञ्च (→त्रियायुषं च); दे1 भूतानां (→भक्तानां).

१०७. –a) का1 यजेत्, दे10 जयेत, ते1 जपेच्च (→यजेत). –b) दे4 देवान् (→दद्याज्); ब3 जपं कुर्याज्जि-तेन्द्रियः. –d) ते1 विभाग° (→विधान°).

१०८. –a) दे3 एव (?) (→एवं); ते1 पंचचरेद् (→परिचरेद्); दे2 देवं, ते1 देहान् (→देवान्). –b) दे10 यावज्जीव–(→यावज्जीवं); दे10 समाहिताः (→समाहितः). –c) ब1.3 दे1.4.5.8-10 न1 द1 ग्र1.2 मुबं. स्वस्थानं, म1 तु स्थानं (→संस्थानम्); दे10 द1 अतुलं (→अचलं). –d) ब2 न चिराद्, ते1 अचिराद् (→सोऽचिराद्); का1 अविगच्छति, दे4 एव गच्छति (→अधिगच्छति).

**पुष्पिका**—

**पुराणनाम**—का1 दे3 इत्यादि महापुराणे, ब1 इति कौर्मे, ब2 ग्र2 इति कूर्मपुराणे, ब3 इति कौर्मे षट्साहस्त्र्यं संहितायां, दे1.8-10 द1 ग्र1 मुबं मुए इति श्रीकूर्मपुराणे, दे2 इत्यादि महापुराणे कौर्मे, दे4.5 इत्यादि महापुराणे कौर्मे, दे6 इत्यादिमहापुराणे कूर्मे, न1 इति श्रीकूर्मे, ते1 इत्यादि महा-पुराणे कूर्मपुराणे, म1 श्रीकूर्मपुराणे, मुब. इति श्रीकूर्मे महापुराणे पूर्वभागे. **अध्यायनाम**—द1 ग्र1 म1 ⊙; का1 ब3 दे2.3 श्रीकल्पवृत्तान्ते (ब3°न्त) वर्णाश्रमोपवर्णने, ब1.2 दे2.4 न1 दे6 श्रीकृष्णवृत्तान्ते, दे8.9 वर्णाश्रमवर्णनं, दे1.2.8-10 मुबं. मुए. मुब. वर्णाश्रमवर्णनं नाम, दे5 वर्णाश्रमोपवर्णनं, ते1 श्रीकल्पे वर्णाश्रमोपवर्णने. **अध्यायसंख्या**—का1 ब1.3 दे1-5.8.9 न1 ते1 द1 ग्र1.2 म1 द्वितीयोऽध्यायः, ब2 दे6 ।।२।।, दे10 मुबं. मुए. मुब. द्वितीयोध्यायः ।।२।।

**३**

❀ ग्र1. ⊙; दे1 ऋष***; दे10 ऋषय उवाच; न1 ते1 द1 ग्र2 म1 ऋषयः .

१. –a) दे1 भगवतोद्दिष्टां, दे6.10 भगवतोदिष्टाश् , ते1 द1 ग्र1.2 म1 भगवतादिष्टाश् (→भगवतोद्दिष्टाश् ). –b) दे1 [अ]प्याश्रमः, दे4 ते1 ह्याश्रमाः (→[अ]प्याश्रमाः). –c) दे1 क्रममस्मा*, न1 कर्मवास्माकं (→क्रममस्माकं). –d) दे1 *श्रमाणां (→आश्रमाणां).

❀ का1 ब1-3 दे2.3.5.6.8-10 मुबं. मुए. कूर्म उवाच; दे4 श्रीभगवानुवाच; न1 ग्र2 कूर्मः; ते1 ग्र1 म1 श्री कूर्मः.

२. –a) दे10 गृहस्थस्य, द1 ग्र1.2 म1 गृहस्थोथ, ग्र2 गृहस्थो वा (→गृहस्थश्च). –b) का1 वाणप्रस्थो (→वान-प्रस्थो). –d) का1 करणाद्, ब2 तारुण्याद् (→कारणाद्); दे4 अन्यथो (→अन्यथा); ब1.3 ते1 भवन्, ब2 मुब. नहि, दे6.8-10 न1 भवत् (→भवेत्).

३. –a) ब1 ग्र2 विज्ञान, दे5 मुबं. विज्ञानी, द1 विज्ञाना (→विज्ञानो); न1 उत्पन्नज्ञान(विज्ञान)विज्ञानो.–b) न1 वैराग्य-(→वैराग्यं); दे6 गताः (→गतः). –c) दे1 प्रव्रजे(?), द1 प्रवृजेत् (→प्रव्रजेत्); ब2 दे3.6 ब्रह्मचर्य्यन्तु, ब3 ब्रह्मचर्यार्थं, दे1 ब्रह्मचर्या तु, दे4 न1 ब्रह्मचर्यां तु, ते1 ब्रह्मचर्यान्ते, द1 व्रतचर्यां तु, ग्र1.2 म1 व्रतचर्यान्तु (→ब्रह्मचर्या तु). –d) ग्र2 यदि गच्छेत् परां गतिं.

दारानाहृत्य विधिवदन्यथा विविधैर्मखैः ।
यजेदुत्पादयेत् पुत्रान् विरक्तो यदि संन्यसेत् ॥४
अनिष्ट्वा विधिवद् यज्ञैरनुत्पाद्य तथात्मजम् ।
न गार्हस्थ्यं गृही त्यक्त्वा संन्यसेद् बुद्धिमान् द्विजः ॥५
अथ वैराग्यवेगेन स्थातुं नोत्सहते गृहे ।
तत्रैव संन्यसेद् विद्वाननिष्ट्वाऽपि द्विजोत्तमः ॥६
अन्यथा विविधैर्यज्ञैरिष्ट्वा वनमथाश्रयेत् ।
तपस्तप्त्वा तपोयोगाद् विरक्तः संन्यसेद् यदि ॥७
वानप्रस्थाश्रमं गत्वा न गृहं प्रविशेत् पुनः ।
न संन्यासी वनं चाथ ब्रह्मचर्यं न साधकः ॥८
प्राजापत्यां निरूप्येष्टिमाग्नेयीमथवा द्विजः ।
प्रव्रजेत गृही विद्वान् वनाद् वा श्रुतिचोदनात् ॥९
प्रकर्त्तुमसमर्थोऽपि जुहोति यजति क्रियाः ।
अन्धः पङ्गुर्दरिद्रो वा विरक्तः संन्यसेद् द्विजः ॥१०
सर्वेषामेव वैराग्यं संन्यासाय विधीयते ।
पतत्येवाविरक्तो यः संन्यासं कर्तुमिच्छति ॥११ वें. १.३.११

४. –a) दे$_5$ दारानाहूय, ग्र$_2$ दारानाश्रित्य (→दारानाहृत्य). –b) ब$_{2.3}$ पुत्रार्थी, दे$_6$ अथवा (→अन्यथा). –c) दे$_4$ यजेतोत्पादयेत् (→यजेदुत्पादयेत्); दे$_6$ पुत्राद् (→पुत्रान्). –d) ब$_{2.3}$ दे$_5$ ग्र$_{1.2}$ म$_1$ सन्यसेत्, (→संन्यसेत्).

५. –a) ब$_1$ दे$_{1.10}$ अनिष्ठा (?), ग्र$_2$ अनिष्टथ्या (→अनिष्ट्वा); ब$_3$ न$_1$ विविधैः (→विधिवद्). –b) ब$_3$ ग्र$_2$ अनुपाद्य (→अनुत्पाद्य); दे$_1$ [अ]थवा (→तथा); दे$_{1.3.8-10}$ ते$_1$ द$_1$ ग्र$_{1.2}$ म$_1$ मुवें. मुए. मुब. [आ]त्मजान् (दे$_3$ °जां), दे$_5$ [आ]त्मजः, न$_1$ [आ]त्मकं (जं) (→[आ]त्मजं). –c) का$_1$ ब$_{1.3}$ दे$_{3.5.6}$ न$_1$ ते$_1$ द$_1$ म$_1$ मुवें. मुए. गार्हस्थ, दे$_{1.10}$ गार्हस्थां, ग्र$_2$ गार्हस्त्यं (→गार्हस्थ्यं); का$_1$ गृहीकृत्वा, ब$_{1.3}$ दे$_6$ ते$_1$ गृहीगत्वा, ब$_2$ गृही*त्वा, दे$_{8.9}$ गृहीत्वैव, दे$_{10}$ गृहीत्वेन, न$_1$ गृहीस्थि (?)(त्य)क्त्वा, द$_1$ ग्र$_{1.2}$ म$_1$ गृहीत्वा तु (→गृही त्यक्त्वा). –d) ब$_{1.3}$ दे$_{4-6}$ द$_1$ म$_1$ सन्यसेत् (→संन्यसेत्); दे$_4$ बुद्धिसात्मयः, ग्र$_2$ बुद्धिमान् द्विजाः (→बुद्धिमान् द्विजः).

६. –a) ब$_3$ ग्र$_2$ °योगेन (→°वेगेन). –b) का$_1$ नोत्सहे* (→नोत्सहते); का$_1$ दे$_{2.3.5}$ गृहान्, दे$_6$ गृहात् (→गृहे). –c) दे$_6$ तवैव, ग्र$_2$ तत्र वो (→तत्रैव); ब$_{1-3}$ दे$_{5.6}$ द$_1$ सन्यसेत् (→संन्यसेत्). –d). न$_1$ अनिष्ट्वाश्च, ग्र$_2$ अशिष्वैव, द$_1$ ग्र$_1$ म$_1$ अनिष्ट्वैव, ते$_1$ ब्रह्मनिष्ठो (→अनिष्ट्वापि); ब$_{2.3}$ दे$_{4.10}$ ग्र$_2$ द्विजोत्तमाः (→द्विजोत्तमः).

७. –a) दे$_1$ मुवें. मुए. मुब. तथापि, दे$_{8.9}$ द$_1$ ग्र$_1$ अथापि, दे$_{10}$ अद्यापि, ग्र$_2$ तथा च, म$_1$ अथवा (→अन्यथा). –b) का$_1$ [अ]थाश्रमेत्, दे$_{8-10}$ [अ]नाश्रयेत्, (दे$_8$ °यन्, दे$_9$ °यत्), न$_1$ [अ]थाव्रजेत्, ग्र$_2$ म$_1$ मुवें. मुए. मुब. [अ] थाश्रयन् (ग्र$_2$ °यत्) (→[अ]थाश्रयेत्). –c). ते$_1$ अशक्तस्तु (→तपस्तप्त्वा); का$_1$ ब$_{1-3}$ दे$_2$ ते$_1$ ततो, दे$_4$ यथो, द$_1$ ग्र$_{1.2}$ म$_1$ [अ]पि वा (→तपो–); द$_1$ ग्र$_{1.2}$ म$_1$-वेगात् (→-योगात्). –d) दे$_6$ विरक्ताः (→विरक्तः); ब$_{2.3}$ दे$_2$ द$_1$ ग्र$_1$ म$_1$ सन्यसेद् (→संन्यसेद्); द$_2$ मुवें. मुए. मुब. बहिः, दे$_{4.5}$ यतिः, ते$_1$ **, ग्र$_2$ इति (→यदि)

८. –b) दे$_4$ प्रतिविशेत् (→प्रविशेत्). –c) ब$_1$ सन्यासी च, ब$_3$ स सन्यासी, (→न संन्यासी); दे$_3$ वनश्चाथ, ते$_1$ वनं गच्छेत्, द$_1$ ग्र$_{1.2}$ म$_1$ वनावा (ग्र$_2$ °द्वा) सं (→वनं चाथ). –d) का$_1$ दे$_{3.6}$ ब्रह्मचर्या (दे$_3$ °र्यं) र्थ-, ब$_1$ ब्रह्मचर्यस्व–, ब$_3$ ब्रह्मचर्येण, दे$_1$ ब्रह्मचर्यत्र (?), दे$_5$ मुवें. मुए. मुब. ब्रह्मचर्यञ्च (→ब्रह्मचर्यं न); दे$_{4.8-10}$ ते$_1$ साधकं, न$_1$ वा गृही (→साधकः).

९. –a) ब$_2$ दे$_{1.4}$ प्राजापत्या (ब$_2$ °त्यं) (→प्राजापत्यां); का$_1$ निरूपेष्टिम्, दे$_6$ न$_1$ निरूप्येष्टिन् (न$_1$ °ष्टीम्) (→निरूप्येष्टिम्). –b) ब$_2$ पुनः, ब$_3$ द$_1$ म$_1$ द्विजाः (→द्विजः). –c) ब$_{1-3}$ दे$_{1-6}$ न$_1$ मुवें. मुए. मुब. प्रव्रजेत्तु (ब$_3$ °त्स्व, दे$_1$ °द्वा), ग्र$_2$ प्रव्रजीत (→प्रव्रजेत); ब$_{1.3}$ दे$_{1.2}$ गृहाद् (→गृही); का$_1$ पृष्टने तु गृहाद्विद्वान्. –d) दे$_4$ बलाद्वा, ते$_1$ वनं वा, ग्र$_1$ म$_1$ व्र(म$_1$ वृ)ताद्वा (→वनाद्वा); दे$_{8.9}$ श्रुतिनोदनात्, द$_1$ ग्र$_{1.2}$ म$_1$ इति चोदना (ग्र$_2$ °नात्) (→श्रुतिचोदनात्).

१०. –a) ब$_{1.3}$ यः (→प्र-); दे$_1$ न प्रवर्त्तुं समर्थापि. –b) ते$_1$ जुह्व* (→जुहोति); ब$_{1.2}$ व्रजति, दे$_{6-10}$ जपति, ते$_1$*** (→यजति); ब$_1$ दे$_6$ न$_1$ क्रियां (→क्रियाः). –c) ग्र$_2$ म$_1$ पंकुर्दरिद्रो (→पङ्गुर्दरिद्रो). –d) ब$_{1.2}$ द$_1$ म$_1$ सन्यसेत् (→संन्यसेत्); ब$_1$ द्विज (→द्विजः).

१० श्लोकात्परं दे$_5$ पुस्तके ६c–१०d आवृत्तम्.

११. –a) दे$_3$ वैराग्य (?) (→वैराग्यं). –b) ब$_{1-3}$ दे$_6$ सन्यासाय, दे$_{1.8-10}$ ग्र$_1$ मुवें. मुए. मुब. संन्यासे तु, द$_1$ सन्यासे तु, ग्र$_2$ संन्यासेति, म$_1$ संन्यासेषु (→संन्यासाय). –c) दे$_4$ पतत्येषो, दे$_{8-10}$ एतत्सेवी (दे$_{10}$ °वा), द$_1$ म$_1$ पतत्यथा– (→पतत्येवा-); का$_1$ दे$_{2.3.6.8-10}$ वा (→यः). –d) ब$_{1-3}$ दे$_{1.4}$ द$_1$ सन्यासं (→संन्यासं); दे$_4$ अर्हसि (→इच्छति).

वें. १.३.१२ एकस्मिन्नथवा सम्यग् वर्तेतामरणं द्विजः ।
श्रद्धावानाश्रमे युक्तः सोऽमृतत्वाय कल्पते ॥१२
न्यायागतधनः शान्तो ब्रह्मविद्यापरायणः ।
स्वधर्मपालको नित्यं सोऽमृतत्वाय कल्पते ॥१३
ब्रह्मण्याधाय कर्माणि निःसङ्गः कामवर्जितः ।
प्रसन्नेनैव मनसा कुर्वाणो याति तत्पदम् ॥१४
ब्रह्मणा दीयते देयं ब्रह्मणे संप्रदीयते ।
ब्रह्मैव दीयते चेति ब्रह्मार्पणमिदं परम् ॥१५
नाहं कर्ता सर्वमेतद् ब्रह्मैव कुरुते तथा ।
एतद् ब्रह्मार्पणं प्रोक्तमृषिभिः तत्त्वदर्शिभिः ॥१६
प्रीणातु भगवानीशः कर्मणाऽनेन शाश्वतः ।
करोति सततं बुद्धया ब्रह्मार्पणमिदं परम् ॥१७
यद्वा फलानां संन्यासं प्रकुर्यात् परमेश्वरे ।
कर्मणामेतदप्याहुः ब्रह्मार्पणमनुत्तमम् ॥१८
कार्यमित्येव यत्कर्म नियतं सङ्गवर्जितम् ।
क्रियते विदुषा कर्म तद्भवेदपि मोक्षदम् ॥१९
अन्यथा यदि कर्माणि कुर्यान्नित्यमपि द्विजः ।
अकृत्वा फलसंन्यासं बध्यते तत्फलेन तु ॥२०
तस्मात् सर्वप्रयत्नेन त्यक्त्वा कर्माश्रितं फलम् ।
अविद्वानपि कुर्वीत कर्माप्नोत्यचिरात् पदम् ॥२१
कर्मणा क्षीयते पापमैहिकं पौर्विकं तथा ।
मनः प्रसादमन्वेति ब्रह्म विज्ञायते ततः ॥२२

१२. –a) दे3.6 ते1 एतस्मिन्नथवा, दे10 एकस्मिते*व (→एकस्मिन्नथवा). –b) दे3 वर्त्तत (→वर्तेत); का1 दे2 [आ]मरणा (दे2 °णात्) द्विजः, ब1-3 दे3-6 [आ]मरणा (दे4 °ण) द्विजाः, दे1.8-10 द1 ग्र1.2 म1 मुवें. मुए. मुब. [आ] मरणान्ति (ग्र2 °न्त्य) कम् (→[आ]मरणं द्विजः). –c) ब1 श्रद्धावनाश्रमे, दे3.6 श्रुत्वा वा (दे6 °चा) नाश्रमे (→श्रद्धावाना-श्रमे); का1 युक्ते, दे4 युतः, दे10 युक्ता, द1 म1 रक्तः (→युक्तः). –d) ग्र2 [अ]नृतत्वाय (→[अ]मृतत्वाय).

१३. दे5. ⊙ (द्र. सं.). –a) दे8 द1 न्यायाधनगतः (→न्यायागतधनः); ते1 न्याय**धनश्शान्तो. –b) द1 ग्र1.2 म1 °विशारदः (→°परायणः). –c) ब3 स्वकर्म° (→स्वधर्म°). –d) दे1.8-10 द1 ग्र1.2 म1 मुवें. मुए. मुब. ब्रह्मभूयाय (→सोऽमृतत्वाय).

१४. –a) दे1 ब्रह्मणाधाय (→ब्रह्मण्याधाय); द1 ग्र1.2 म1 बुद्धि वै (→कर्माणि). –b) दे1.3 निःसंगो (दे3 °ङ्गा) (→निःसङ्गः). –c) दे4 प्रशन्नो नैव (→प्रसन्नेनैव).

१५. –a) दे10 ब्रह्माणं, न1 ते1 ब्रह्मणे (→ब्रह्मणा); ते1 **ते (→दीयते); दे6 म1 देवं (→देयं). –b) न1 ते1 द1 ग्र1.2 ब्रह्मणा, ते1 ब्रह्मण (→ब्रह्मणे); ते2 *** यते (→संप्रदी-यते). –c) ते1 बीयते (→दीयते). –d) ते1 ब्रह्मवर्णम् (→ब्रह्मार्पणम्); दे1 इमम् (→इदम्); ते1 पदम् (→परम्).

१६. –a) न1 अहम् (→नाहम्). –b) द1 यथा (→तथा). –c) दे5 प्रोक्ताः (→प्रोक्तं). –d) का1 तत° (→तत्त्व°); दे8.9 °दर्शिने, द1 °वादिभिः (→°दर्शिभिः).

१७. –a) ब1 प्रीणाति, न1 प्रीणान्तु (?) (→प्रीणातु). –b) का1 दे3.4.6.8 9 तेन (→[अ]नेन). –c) द1 बुद्ध्वा (→बुद्धया).

१८. –a) ब1.3 दे5.6 द1 ग्र1 म1 सन्यासं (→संन्यासं). –b) दे1.5.10 परमेश्वरं (दे5 °रः, दे10 °र) (→परमेश्वरे). –c) दे1 न1 [आ]ह, द1 ग्र1.2 म1 [उ]क्तं (→[आ]हुः). –d) दे4 ब्राह्मणार्पणमुत्तमम्.

१९. –a) ब3 दे8.9 तत्, ग्र2 यः (→यत्). –b द1 ग्र2 म1 °वर्जितः (→°वर्जितम्). –c) दे1.3.6.8.9 न1 विदुषां (→विदुषा); द1 ग्र1.2 म1 कार्यं (→कर्म). –d) ते1 अति (→अपि).

२०. –a) दे5.8.9 द1 ग्र1.2 म1 मुवें. मुए. अथवा, (→अन्यथा). –b) ब2 दे3 नित्यन्यपि (?), दे1.2.8-10 मुवें. मुए. मुब. नित्यान्यपि, द1 नित्यं यति, ग्र1 म1 नित्यं यदि, ग्र2 नित्यहितो (→नित्यमपि); दे4 द1 ग्र1.2 म1 द्विजाः (→द्विजः). –c) ब2 मयि (→फल-); ब1-3 दे2.5 ग्र1 °सन्यासं (→°संन्यासं); दे4 अफलं तस्य संन्यासं, ग्र2 अकृत्वापि फलत्यासी, म1 अकृत्वा तु फलन्यासं. –d) ग्र2 बुध्यते (→बध्यते); दे4.5 यत्- (→तत्-); दे4.5 तत् (→तु).

२१. –b) का1 दे2.3.6 ग्र1.2 म1 कर्माणि तत्, दे5 द1 कर्माश्रि तत् (→कर्माश्रितं). –c) का1 कुर्वाणः (→कुर्वीत). –d) ब1.3 दे1.4.5.8-10 न1 मुवें. मुए. मुब. चिरात्, दे3 [अ]चिरान्, द1 ग्र1 म1 च तत्-, ग्र2 *तत् (→[अ]चिरात्); दे1 ते1 परम्, ग्र2 फलं (→पदम्).

२२. –a) दे4 जायते (→क्षीयते). –b) म1 विहितं (→ऐहिकं); दे1 पूर्वकं, ते1 पार्विकं, द1 ग्र1.2 पूर्विकं, (→पौर्विकं). –c) दे1.3 प्रासादम् (→प्रसादम्); का1 दे2.4.5 [अ]भ्येति, ते1 [अ]न्येति (→[अ]न्वेति). –d) दे6.10 न1 द1 ग्र1 म1 मुवें. मुए. मुब. °विज्जायते (→विज्ञायते); दे8-10 मुवें. मुए. मुब. नरः (→ततः).

कर्मणा सहिताज्ज्ञानात् सम्यग् योगोऽभिजायते ।
ज्ञानं च कर्मसहितं जायते दोषवर्जितम् ॥२३
तस्मात् सर्वप्रयत्नेन तत्र तत्राश्रमे रतः ।
कर्माणीश्वरतुष्ट्यर्थं कुर्यान्नैष्कर्म्यमाप्नुयात् ॥२४
संप्राप्य परमं ज्ञानं नैष्कर्म्यं तत्प्रसादतः ।
एकाकी निर्ममः शान्तो जीवन्नेव विमुच्यते ॥२५
वीक्षते परमात्मानं परं ब्रह्म महेश्वरम् ।
नित्यानन्दं निराभासं तस्मिन्नेव लयं व्रजेत् ॥२६
तस्मात् सेवेत सततं कर्मयोगं प्रसन्नधीः ।
तृप्तये परमेशस्य तत् पदं याति शाश्वतम् ॥२७
एतद् वः कथितं सर्वं चातुराश्रम्यमुत्तमम् ।
न ह्येतत् समतिक्रम्य सिद्धिं विन्दति मानवः ॥२८ वें. १.३.२८

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायां पूर्वविभागे तृतीयोऽध्यायः ॥३॥

---

२३. –a) दे4 सहितान् (?) (→सहिताज्); न1 ज्ञानाम् (→ज्ञानात्). –b) दे4 [अ]साम्यग् (?) (→सम्यग्); ते1 सम्यगेवाभिजायते, द1 ग्र1.2 म1 सम्यक् ज्ञानं विधीयते. –c) ग्र2 दोषरहितं (→कर्मसहितं). –d) दे5 °वर्जितः (→°वर्जितम्).

२४. –b) दे1.3.5.6.8-10 मुवें. मुए. मुब. यत्र (→तत्र); ग्र2 तत्तदाश्रमे (→तत्र तत्राश्रमे); का1 ततः, दे4 तरः (?) (→रतः). –c) दे4.10 °तुष्य (दे10 °ष्या)र्थं (→°तुष्ट्यर्थं). –d) दे4 ते1 कुर्वन् (→कुर्यान्); दे3.4.8 न1 नैष्कर्मम् (→नैष्कर्म्यम्); ग्र1 कुर्यान्निष्कर्म्यताप्नुयात्.

२५. –a) दे1 चरनं(?) (→परमं). –b) ब3 नैष्कम्यम् (→नैष्कर्म्यम्); दे3 त्वत् (→तत्). –c) ब2 म1 निर्मलः (→निर्ममः); दे1 शोतो(?) (→शान्तो). –d) दे1 जीवनेव(?) (→जीवन्नेव).

२६. –a) का1 ब1.3 दे1-3.5.6.10 वीक्ष्यते, द1 वीक्ष्येत, ग्र1 म1 वीक्षेत, ग्र2 वीक्षे तत् (→वीक्षते); दे4 परमा* नं, ग्र2 परमज्ञानं (→परमात्मानं). –b) ग्र2 पर–(→परं); दे5 न1 महेश्वरः (→महेश्वरम्). –c) का1 ब1-3 दे2.3.5.6.8-10 मुवें. मुए. मुब. नित्यानन्दी, दे4 नित्यानन्द–(→नित्यानन्दं); का1 ब1.2 दे2.3.5.6.8-10 मुवें. मुए. मुब. निराभासः (ब2 °षः), (→निराभासं). –d) दे1.6 तस्मिनेव (दे6 °न्नैव), द1 ग्र1 म1 स्वयमेव (→तस्मिन्नेव).

२७. –a) दे1 सेवत, ग्र2 सर्वेण (→सेवेत). –b) दे1 प्रशस्तधीः (→प्रसन्नधीः). –c) दे10 नृत्यये (→तृप्तये); ग्र1 च परेशस्य (→परमेशस्य). –d) दे5 शा*तम् (→शाश्वतम्).

२८. –a) का1 ब1.2 दे2-4.6 ते1 सम्यक् (→सर्वं). –b) दे1.10 ग्र2 च (दे10 चा) तुराश्रमं (→चातुराश्रम्यम्); दे9 °नुत्तमम् (?) (→°मुत्तमम्); दे4 उत्तमं ब्रह्मतः परम्.–c) दे1 न ह्यतत्, दे4 सर्वं तत्, ग्र2 न ह्येति (→न ह्येतत्). –d दे1.10 ग्र1 विन्दन्ति, ते1 गच्छति (→विन्दति); दे1 ग्र1 मानवाः (→मानवः).

न1 पुस्तके २८ श्लोकस्य ab, cd चरणयोर्मध्ये अधिकम् :—

*इदानीं श्रोतुमिच्छामि यथा संभवते जगत् ( = १.४.२cd)

**पुष्पिका—**

**पुराणनाम**—का1 इति श्री कौर्मपुराणे, ब1 दे2.3 इति कौर्मे, ब2 दे1 इति कूर्मपुराणे, ब3 इति महापुराणे कौर्म्मे, दे4 न1 इत्यादिमहापुराणे श्रीकू(न1 कौ)र्मे, दे5 इति कौर्मपुराणे, दे6 इत्यादि महापुराणे कौर्मे, दे8-10 द1 ग्र1.2 म1 मुवें. मुए. इति श्रीकूर्मपुराणे, ते1 इत्यादि महापुराणे श्रीकूर्म पुराणे,मुब. इति श्रीकौर्मे महापुराणे पूर्वभागे. **अध्यायनाम**—ब1.2 दे4 न1 द1 ग्र1.2 म1. ⊙; दे1.8.9 चा(दे1 च) तुराश्रम्य (दे1 °म) कथनं, दे10 मुवें. मुए. मुब. चातुराश्रम्य (दे10 °मं) कथनं नाम, ते1 चातुराश्रम्यं नाम. **अध्यायसंख्या**—दे6. ⊙. का1 ब1.3 दे1-5.9 न1 ते1 द1 ग्र1.2 म1 तृतीयोऽध्यायः, दे8.10 मुवें. मुए. मुब. तृतीयोऽध्यायः ॥३॥, ब2 ॥३॥.

# ४

सूत उवाच ।❀

वें. १.४.१ श्रुत्वाऽऽश्रमविधिं कृत्स्नमृषयो हृष्टमानसाः ।
नमस्कृत्य हृषीकेशं पुनर्वचनमब्रुवन् ।।१

मुनय ऊचुः ।❀

भाषितं भवता सर्वं चातुराश्रम्यमुत्तमम् ।
इदानीं श्रोतुमिच्छामो यथा संभवते जगत् ।।२
कुतः सर्वमिदं जातं कस्मिंश्च लयमेष्यति ।
नियन्ता कश्च सर्वेषां वदस्व पुरुषोत्तम ।।३
श्रुत्वा नारायणो वाक्यमृषीणां कूर्मरूपधृक् ।
प्राह गम्भीरया वाचा भूतानां प्रभवाप्ययौ ।।४

श्रीकूर्म उवाच ।❀

महेश्वरः परोऽव्यक्तश्चतुर्व्यूहः सनातनः ।
अनन्तश्चाप्रमेयश्च नियन्ता विश्वतोमुखः ।।५
अव्यक्तं कारणं यत्तन्नित्यं सदसदात्मकम् ।
प्रधानं प्रकृतिश्चेति यदाहुस्तत्त्वचिन्तकाः ।।६
गन्धवर्णरसैर्हीनं शब्दस्पर्शविवर्जितम् ।
अजरं ध्रुवमक्षय्यं नित्यं स्वात्मन्यवस्थितम् ।।७
जगद्योनिर्महाभूतं परं ब्रह्म सनातनम् ।
विग्रहः सर्वभूतानामात्मनाऽधिष्ठितं महत् ।।८

---

४

❀ ग्र1. ⊙; न1 ते1 द1 सूतः; ग्र2 म1 श्रीसूतः .

१. –a) दे4 कृत्स्नां, दे5 प्रश्नं (→कृत्स्नं). –b) ग्र1 मुनयो (→ऋषयो); दे6 ब्रह्मवादिनः, दे8.9 मुवें. मुए. मुब. हृष्टचेतसः, दे10 हृष्टचेतसः (→हृष्टमानसाः). –c) ब3 दे9 नमस्कृत्वा (→नमस्कृत्य). –d) दे5.6 द1 ग्र2 अब्रवीत् (→अब्रुवन्).

❀ न1 ग्र2. ⊙; का1 ब1-3 दे3-6 ऋषय ऊचुः; दे1 मुन* ऊचुः; ते1 ऋषयः; द1 ग्र1 म1 मुनयः .

२. –a) दे1 भावित (?) (→भाषितं); दे10 भावना, ग्र2 वचनात् (→भवता); का1 दे2.5 पूर्वं (→सर्वं). –b) दे1 चतुराश्रम्य°, दे10 ग्र2 चतुराश्रम° (→चातुराश्रम्य°). –c) ब2.3 दे1.10 न1 द1 इच्छामि (→इच्छामो). –d) का1 ब1.2 दे2.5.6 ते1 मुब. संजायते, ब3 संज्ञायते, दे1 सम्भवतो, दे3 सज्जायते, दे4 संमभवज्, द1 संगीयते, ग्र1.2 म1 संह्रियते (→संभवते).

३. –b) ब3 इष्यति, दे10 एष्यसि (→एष्यति). –d) ग्र1 °षोत्तमः (→°षोत्तम).

३ श्लोकात्परं ग्र1 पुस्तके अधिकम्—सूतः .

४. –b) ते1 °रूपधृत् (→°रूपधृक्). –d) का1 प्रभावाव्ययौ, ब1 प्रभवोप्यसौ, ब2 दे6 प्रभवाव्ययौ, दे1.8-10 मुवें. मुए. प्रभवोऽव्ययः, दे5 प्रभवाव्ययः, न1 प्रभवाव्य(प्य)यं, ग्र1 प्रभवोऽप्ययौ, ग्र2 प्रभुरव्ययौ (→प्रभवाप्ययौ).

❀ का1 ब1-3 दे2.3.5.6.8-10 मुवें. मुए. मुब. कूर्म उवाच; न1 कूर्मः; ते1 द1 ग्र1.2 म1 श्रीकूर्मः .

५. –a) का1 माहेश्वरः, ब3 महेश्वर-, दे2 महेश्वरो, दे4 महेश्वरात्, ग्र2 परमेश्वर- (→महेश्वरः); दे1 परो(व्यरो) व्यक्तः, दे5 परोव्यक्ता, दे8.9 परोऽव्यक्तात्, म1 पुराव्यक्तः (→परोऽव्यक्तः). –b) का1 ब1.3 चतुर्बाहुः (→चतुर्व्यूहः). –c) ग्र2 म1 अनादिश् (→अनन्तश्). –d) का1 द1 ग्र1.2 म1 नियतो, दे5 नियंत-, दे10 नियंतो (→नियन्ता); ब1 दे8.9 मुवें. मुए. मुब. सर्वतो° (→विश्वतो°).

६. –a) ब1 द1 अव्यक्त-, दे4 अव्ययः (→अव्यक्तं); न1 यतं, ते1 यत्तु (→यत्तत्). –b) दे5 °सदात्मके, ग्र2 °सदात्मिकं (→°सदात्मकम्). –c) दे1 प्रधान-, दे5 प्रधाने (→प्रधानं); का1 दे2.5 पुरुषश्चेति (→प्रकृतिश्चेति). –d) दे8.9 मुवें. मुए. मुब. यमाहुस्, न1 यामाहुस् (→यदाहुस्); दे3 °चित्रकाः (→°चिन्तकाः).

७. –a) का1 °वर्ण°, + °रूप° (→°वर्ण°). –c) दे6 अक्षरं, म1 अरजं (→अजरं); दे4 अक्षोयं, ग्र2 अव्यक्तं (→अक्षय्यं). –d) ब1 स्वात्मव्यवस्थितं, दे10 स्वात्ममवस्थितं (→स्वात्मन्यवस्थितम्).

८. ब1.3 दे4 न1 ते1. ⊙. –a) का1 ब2 दे2.5.6 म1 °द्योनिं, दे8-10 °द्योनि (?) (→°द्योनिर्); द1 महद् (→महा–). –b) ब2 म1 मुवें. मुए. मुब. पर–(→परं). –c) ब2 दे6.10 विग्रहं (→विग्रहः). –d) दे3 [अ]धिस्थितं, म1 [आ]विष्ठि (→[अ]धिष्ठितं); दे6 आत्मावधिष्ठितं जगत्.

वें. १.८.२९　इत्येष तामसः सर्गो जज्ञे धर्मनियामकः । संक्षेपेण मया प्रोक्ता विसृष्टिर्मुनिपुंगवाः ।।२९

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायां पूर्वविभागेऽष्टमोऽध्यायः।।८।।

# ९

सूत उवाच ।❀

एतच्छ्रुत्वा तु वचनं नारदाद्या महर्षयः ।
प्रणम्य वरदं विष्णुं पप्रच्छुः संशयान्विताः ।।१

ऋषय ऊचुः ।❀

कथितो भवता सर्गो मुख्यादीनां जनार्दन ।
इदानीं संशयं चेममस्माकं छेत्तुमर्हसि ।।२
कथं स भगवानीशः पूर्वजोऽपि पिनाकधृक् ।
पुत्रत्वमगमच्छंभुर्ब्रह्मणोऽव्यक्तजन्मनः ।।३
कथं च भगवाञ्जज्ञे ब्रह्मा लोकपितामहः ।
अण्डजो जगतामीशस्तन्नो वक्तुमिहार्हसि ।।४

श्रीकूर्म उवाच ।❀

शृणुध्वमृषयः सर्वे शंकरस्यामितौजसः ।
पुत्रत्वं ब्रह्मणस्तस्य पद्मयोनित्वमेव च ।।५
अतीतकल्पावसाने तमोभूतं जगत् त्रयम् ।
आसीदेकार्णवं सर्वं न देवाद्या न चर्षयः ।।६

---

**२९.** –a) दे$_{10}$ इत्येषा (?)(→इत्येष); दे$_{4}$ मानसा(?), ते$_{1}$ मानवः (→तामसः). –b) का$_{1}$ दे$_{8}$ यज्ञे (→जज्ञे); दे$_{10}$ °नियात्मकः (→°नियामकः). –c) का$_{1}$ दे$_{2}$ प्रोक्तो (→प्रोक्ता); दे$_{10}$ मयो चोक्ता (→मया प्रोक्ता). –d) ग्र$_{1}$ विसृष्टिम् (→विसृष्टिर् ).

**पुष्पिका**—

**पुराणनाम**—का$_{1}$ दे$_{1.4.8.10}$ द$_{1}$ ग्र$_{1}$ म$_{1}$ मुवें. मुए. इति श्रीकूर्मपुराणे, ब$_{1}$ इति कौर्मे, ब$_{2.3}$ दे$_{2.3.5.6}$ इति कूर्मपुराणे, दे$_{10}$ इति श्रीकूर्मे, न$_{1}$ इत्यादिमहापुराणे श्रीकौर्मे, ते$_{1}$ इत्यादिमहापुराणे श्रीकूर्मपुराणे, ग्र$_{2}$ इतिश्री*र्म्मं, मुब. इतिश्रीकौर्मे महापुराणे पूर्वभागे. **अध्यायनाम**—दे$_{1.4.8-10}$ न$_{1}$ ते$_{1}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$. ⊙; का$_{1}$ मुख्यादिसर्गकथने नाम, ब$_{2}$ दे$_{2.3.5.6}$ मुवें. मुए. मुब. मुख्यादिसर्गकथने, ब$_{1}$ आदि सर्गकथने, ब$_{3}$ मुख्यादिसर्गः . **अध्यायसंख्या**—दे$_{6}$. ⊙; का$_{1}$ ब$_{1.2}$ दे$_{1-3.5.8.9}$ न$_{1}$ ते$_{1}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ अष्टमोध्यायः; ब$_{3}$ ।।८।।, दे$_{4.10}$ मुवें. मुए. मुब. अष्टमोऽध्यायः ।।८।।

**९**

❀ दे$_{1}$ श्रीसुतउवाच; दे$_{9}$ सूत उ.; न$_{1}$ ग्र$_{1.2}$ म$_{1}$ सूतः; ते$_{1}$ श्रीशिवः (श्रीकूर्म):.

**१.** –d) ब$_{1.3}$ दे$_{1}$ श्रद्धयान्विताः, दे$_{4.6.10}$ श्रद्धयान्वितः, द$_{1}$ ग्र$_{1.2}$ म$_{1}$ संयता द्विजाः (→संशयान्विताः).

❀ न$_{1}$. ⊙; दे$_{1.8.10}$ मुवें. मुए. मुब. मुनय ऊचुः; दे$_{9}$ मुन * ऊ.; ते$_{1}$ ऋषयः; द$_{1}$ ग्र$_{1.2}$ म$_{1}$ मुनयः.

**२.** –c) दे$_{1}$ चेदं, न$_{1}$ चेमं, +छेत्तुं (→चेमं). –d) ब$_{1}$ वक्तुं, न$_{1}$ चेमं (→छेत्तुं); दे$_{1}$ छेत्तुमस्माकमर्हसि.

**३.** ग्र$_{2}$. ३-४ ⊙ (द्र. सं.). –b) दे$_{6}$ पूर्वतः (→पूर्वजः). –c) दे$_{4}$ कूर्म (→शम्भुर्). –d) दे$_{10}$ ब्राह्मणो (→ब्रह्मणो).

**४.** ग्र$_{2}$. ⊙ (द्र.४ पा. वि.). –a) ते$_{1}$ द$_{1}$ ग्र$_{1}$ म$_{1}$ स (→च); का$_{1}$ दे$_{2.4.6}$ यज्ञे (→जज्ञे). –b) का$_{1}$ ब$_{1-3}$ दे$_{2-6}$ न$_{1}$ ते$_{1}$ ब्रह्मा कमलसंभवः. –c) दे$_{1}$ मुवें. मुए. मुब. अण्डतो, द$_{1}$ सष्वजे (→अण्डजो); ग्र$_{1}$ सस्वजो भगवानीशस्, म$_{1}$ स्वनाभिकमलाद्विष्णोस्. –d) दे$_{1}$ तत्त्वं, न$_{1}$ तं वो (→तन्नो); ब$_{2}$ त्वहार्हसि, ग्र$_{1}$ त्वमर्हसि (→इहार्हसि).

❀ का$_{1}$ ब$_{1-3}$ दे$_{1.2.5.6.10}$ मुवें. मुए. मुब. कूर्म उवाच; दे$_{3.8.9}$ कूर्म उ.; दे$_{4}$ श्रीभगवानुवाच; न$_{1}$ कूर्मः; ते$_{1}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ श्रीकूर्मः.

**५.** –c) दे$_{1}$ ब्रह्मणा (→ब्रह्मणस्).

**६.** –a) ब$_{3}$ °वशाने, दे$_{3}$ °वसनि, दे$_{10}$ °वसनै (→°वसाने). –b) दे$_{3.6}$ तु मोहभूतं (→तमोभूतं). ब$_{1}$ दे$_{9.10}$ जगत्रयं, ग्र$_{2}$ जग **, म$_{1}$ जगन्मयं (→जगत्त्रयं). –c) ब$_{3}$ दे$_{4}$ एकार्णवे (→एकार्णवं). ब$_{1}$ दे$_{8.10}$ मुवें. मुए. मुब. घोरं, दे$_{4}$ सर्वे, दे$_{5}$ धर्मं (→सर्वं). –d) द$_{1}$ ग्र$_{1}$ म$_{1}$ देवाथ(→देवाद्या); दे$_{10}$ ते$_{1}$ महर्षयः (→न चर्षयः); दे$_{1}$ न देवा न महर्षयः.

तत्र नारायणो देवो निर्जने निरुपप्लवे ।
आश्रित्य शेषशयनं सुष्वाप पुरुषोत्तमः ॥७
सहस्रशीर्षा भूत्वा स सहस्राक्षः सहस्रपात् ।
सहस्रबाहुः सर्वज्ञश्चिन्त्यमानो मनीषिभिः ॥८
पीतवासा विशालाक्षो नीलजीमूतसन्निभः ।
महाविभूतिर्योगात्मा योगिनां हृदयालयः ॥९
कदाचित् तस्य सुप्तस्य लीलार्थं दिव्यमद्भुतम् ।
त्रैलोक्यसारं विमलं नाभ्यां पङ्कजमुद्बभौ ॥१०
शतयोजनविस्तीर्णं तरुणादित्यसन्निभम् ।
दिव्यगन्धमयं पुण्यं कर्णिकाकेसरान्वितम् ॥११
तस्यैवं सुचिरं कालं वर्तमानस्य शार्ङ्गिणः ।
हिरण्यगर्भो भगवांस्तं देशमुपचक्रमे ॥१२
स तं करेण विश्वात्मा समुत्थाप्य सनातनम् ।
प्रोवाच मधुरं वाक्यं मायया तस्य मोहितः ॥१३
अस्मिन्नेकार्णवे घोरे निर्जने तमसावृते ।
एकाकी को भवाञ्छेते ब्रूहि मे पुरुषर्षभ ॥१४
तस्य तद् वचनं श्रुत्वा विहस्य गरुडध्वजः ।
उवाच देवं ब्रह्माणं मेघगम्भीरनिःस्वनः ॥१५
भो भो नारायणं देवं लोकानां प्रभवाप्ययम् ।
महायोगेश्वरं मां त्वं जानीहि पुरुषोत्तमम् ॥१६
मयि पश्य जगत् कृत्स्नं त्वां च लोकपितामहम् ।
सपर्वतमहाद्वीपं समुद्रैः सप्तभिर्वृतम् ॥१७

वें. १.९.१७

---

७. –b) का$_1$ न$_1$ निर्मलो, ब$_{1-3}$ दे$_{3.4.6}$ निर्जनो, दे$_2$ निर्जलो, दे$_5$ निर्जरो (→निर्जने); का$_1$ दे$_{2.4}$ निरुपद्रवः, ब$_{2.3}$ दे$_{3.5.6}$ न$_1$ ते$_1$ निरुपप्लवः (→निरुपप्लवे). –c) ब$_{1.3}$ ते$_1$ आस्तीर्य, न$_1$ आस्तृत्य (→आश्रित्य); ग्र$_2$ °शयने (→°शयनं); ग्र$_1$ आश्रित्य *****. –d) ब$_3$ सुष्वाप परमेश्वरः.

८. –a) दे$_{1.4}$ म$_1$ °शीर्षो (→°शीर्षा); ब$_2$ ग्र$_1$ भूत्वा तु, दे$_{3.6}$ भूत्वा वै, दे$_5$ भूत्वा*, ते$_1$ भूतात्मा (→भूत्वा स); न$_1$ सहस्रशीर्षः पुरुषः. –d) ब$_{1.3}$ महामतिः, दे$_{1.6}$ न$_1$ ग्र$_2$ महर्षिभिः, दे$_4$ मनीषिणः (→मनीषिभिः).

९. –a) ग्र$_2$ °वासो (→°वासा). –c) ब$_1$ दे$_{1.4.6}$ द$_1$ ग्र$_1$ म$_1$ महाविभूति-, दे$_{8-10}$ मुवें. मुए. ततो विभूति- (→महाविभूतिर्). –d) दे$_{8-10}$ मुवें. मुए. मुब. तु दयापरः, ग्र$_2$ हृदयाशयः (→हृदयालयः).

१०. –a) ब$_1$ तस्य देवस्य, + तस्य सुप्तस्य, न$_1$ संप्रसुप्तस्य, ते$_1$ तस्य लीलार्थं (→तस्य सुप्तस्य). –b) दे$_{10}$ उद्गतं (→अद्भुतं); ते$_1$ दिव्यमद्भुतदर्शनम्. –c) का$_1$ ब$_{1.3}$ दे$_{2.3.5.6}$ ते$_1$ अखिलं, न$_1$ विपुलं (→विमलं). –d) का$_1$ दे$_{2.5}$ नाभौ, दे$_6$ ताभ्यां (→नाभ्यां); का$_1$ उद्भवम्, ते$_1$ उद्गतम् (→उद्बभौ).

११. दे$_1$ cd ⊙. –c) ग्र$_1$ दिव्य *** यन्दिव्यं. –d) ब$_{1-3}$ दे$_{2.6}$ °केशरान्वितम्, दे$_3$ °देशरान्वितं (?), दे$_4$ °केसरावृतं (→°केसरान्वितम्).

१२. –a) ते$_1$ द$_1$ तस्यैव (→तस्यैवं). –b) दे$_3$ शार्ङ्गिणा (→शार्ङ्गिणः). –d) दे$_{10}$ तं देवं, ग्र$_2$ तद्देशाम् (?) (→तं देशं).

१३. –b) ब$_1$ तमुत्थाप्य, दे$_1$ समुत्थाय, दे$_4$ समुद्धाथ (→समुत्थाप्य); का$_1$ ब$_{1-3}$ दे$_{1-3.5.6}$ ते$_1$ सनातनः (→सनातनं).

१३. श्लोकात्परं का$_1$ दे$_4$ अधिकम्– ब्रह्मोवाच.

१४. –a) का$_1$ दे$_{3.6}$ तस्मिन् (→अस्मिन्). –b) ग्र$_2$ विजने (→निर्जने); दे$_9$ °वृतेः (→°वृते). –c) का$_1$ भो (→को). –d) ब$_3$ तद्ब्रूहि (→ब्रूहि मे); ब$_1$ परमेश्वरः, ब$_2$ पुरुषोत्तम, दे$_1$ पुरुषर्षभः (→पुरुषर्षभ).

१५. दे$_6$. ab ⊙. –b) न$_1$ प्रहस्य, म$_1$ प्रबुध्य (→विहस्य). –c) का$_1$ दे$_{2.4.5}$ चेदं, दे$_{3.6}$ वेदं (→देवं); ब$_1$ उवाचेदं * ब्रह्माणं. –d) का$_1$ ब$_{1-3}$ दे$_{1.3.4.6}$ न$_1$ ते$_1$ ग्र$_{1.2}$ म$_1$ °निस्वनः (न$_1$ °नं) (→°निःस्वनः); दे$_2$ मेघगंभीरया गिरा.

१५. श्लोकात्परं का$_1$ अधिकम्—नारायण उवाच.

१६. –a) दे$_{3.4}$ नारायणे (→नारायणं); दे$_1$ (व) दैवं, दे$_{5.9}$ मुवें. मुए. देव (→देवं). –b) ग्र$_1$ भोगानां (→लोकानां); का$_1$ ब$_{1-3}$ दे$_{1-6.9.10}$ न$_1$ मुवें. मुए. मुब. प्रभवाव्ययम्, ग्र$_2$ प्रभुरव्ययं (→प्रभवाप्ययं). –c) ब$_3$ माया° (→महा°); दे$_{4.8-10}$ द$_1$ ग्र$_1$ मुवें. मुए. मुब. °योगीश्वरं, दे$_6$ °योगीश्वरो (→°योगेश्वरं); ब$_{1.3}$ मान्यं, दे$_{3.6}$ मा त्वं, दे$_{8-10}$ मुवें. मुए. मुब. मां वै, द$_1$ ग्र$_1$ म$_1$ मां हि (→मां त्वं); ग्र$_2$ महायोगीश्वराभावे. –d) म$_1$ पुरुषोत्तम (→पुरुषोत्तमं).

१७. दे$_3$. १७-१९ ⊙; दे$_6$. १७-१८ ab ⊙. –a) दे$_1$ सृष्टं, ग्र$_2$ सर्वं (→कृत्स्नं). –b) का$_1$ ब$_3$ दे$_{1.8-10}$ द$_1$ मुवें. मुए. त्वं (→त्वां). –b) का$_1$ दे$_{1.8-10}$ ते$_1$ पितामह, ब$_{1.3}$ मुवें. मुए. पितामहः (→पितामहम्). –c). दे$_{1.4}$ °मही°, न$_1$ °वन° (→°महा°); का$_1$ सपर्वतं सह द्वीपं.

वें. १.९.१८ एवमाभाष्य विश्वात्मा प्रोवाच पुरुषं हरिः ।
जानन्नपि महायोगी को भवानिति वेधसम् ॥१८

ततः प्रहस्य भगवान् ब्रह्मा वेदनिधिः प्रभुः ।
प्रत्युवाचाम्बुजाभाक्षं सस्मितं श्लक्ष्णया गिरा ॥१९

अहं धाता विधाता च स्वयंभूः प्रपितामहः ।
मय्येव संस्थितं विश्वं ब्रह्माऽहं विश्वतोमुखः ॥२०

श्रुत्वा वाचं स भगवान् विष्णुः सत्यपराक्रमः ।
अनुज्ञाप्याथ योगेन प्रविष्टो ब्रह्मणस्तनुम् ॥२१

त्रैलोक्यमेतत् सकलं सदेवासुरमानुषम् ।
उदरे तस्य देवस्य दृष्ट्वा विस्मयमागतः ॥२२

तदास्य वक्त्रान्निष्क्रम्य पन्नगेन्द्रनिकेतनः ।
अजातशत्रुर्भगवान् पितामहमथाब्रवीत् ॥२३

भवानप्येवमेवाद्य शाश्वतं हि ममोदरम् ।
प्रविश्य लोकान् पश्यैतान् विचित्रान् पुरुषर्षभ ॥२४

ततः प्रह्लादनीं वाणीं श्रुत्वा तस्याभिनन्द्य च ।
श्रीपतेरुदरं भूयः प्रविवेश कुशध्वजः ॥२५

तानेव लोकान् गर्भस्थानपश्यत् सत्यविक्रमः ।
पर्यटित्वा तु देवस्य ददृशेऽन्तं न वै हरेः ॥२६

ततो द्वाराणि सर्वाणि पिहितानि महात्मना ।
जनार्दनेन ब्रह्माऽसौ नाभ्यां द्वारमविन्दत ॥२७

---

१८. दे$_{3.6}$. ⊙; दे$_{1}$. १८c–१९d ⊙. –a) दे$_{1}$ ए(क)वम् (→एवं); दे$_{10}$ विद्यात्मा (→विश्वात्मा). –b) का$_{1}$ पुरुषो (→पुरुषं); दे$_{1}$ प्रति, दे$_{4}$ द$_{1}$ हरिं (→हरिः). –c) दे$_{4}$ यानन्नपि (→जानन्नपि); ग्र$_{2}$ °देवी (→°योगी). –d) दे$_{4}$ वेधसे, दे$_{5}$ वेधसां, द$_{1}$ ग्र$_{1}$ म$_{1}$ बोधयन्, ग्र$_{2}$ वेदसम् (→वेधसम्).

१९. दे$_{1.3}$. ⊙; दे$_{6}$. ab ⊙. –b) दे$_{10}$ देव° (→वेद°); दे$_{5}$ °निधि (→°निधिः); ते$_{1}$ ब्रह्मा वेधा ** प्रभुः. –c) दे$_{5}$ °नाभं, न$_{1}$ °भाक्षः (→°भाक्षं); ते$_{1}$ पुत्रं वाचाम्बुजाक्षं तं.

२०. –b) ब$_{1}$ स्वयम्भुः प्र-, दे$_{1}$ स्वयंभूश्च, द$_{1}$ स्वयंभूतः (→स्वयम्भूः प्र-). –c) दे$_{5}$ मय्येवं (→मय्येव); दे$_{4}$ सा स्थितं, ग्र$_{2}$ सुस्थितं (→संस्थितं); दे$_{10}$ ब्रह्मा (→विश्वं). –d) दे$_{5}$ ब्रह्माण्डं (→ब्रह्माऽहं); दे$_{8}$ विश्रतो° (→विश्वतो°); दे$_{1}$ °मुगं (→°मुखः).

२१. –a) ब$_{2}$ वाक्यं (→वाचं). –b) द$_{1}$ ग्र$_{1}$ म$_{1}$ शीघ्र°, ग्र$_{2}$ शत्त्व° (→सत्य°). –ab) न$_{1}$ उवाच भगवान् विष्णुः सत्यधर्मपराक्रमः. –c) दे$_{3}$ अनुज्ञोप्यथ, दे$_{8-10}$ अनुज्ञयाथ, ते$_{1}$ अनुज्ञाप्यात्म-(→अनुज्ञाप्याथ). –d) न$_{1}$ तनुः (→तनुं).

दे$_{1}$, २१ श्लोकस्य ab, cd मध्ये १८cd–१९ श्लोकौ अधिकरूपेण आवृत्तौ ।

२२. द$_{1}$ ग्र$_{1.2}$ म$_{1}$. २२a-२३b ⊙. –d) का$_{1}$ ब$_{2.3}$ दे$_{2.5}$ न$_{1}$ ते$_{1}$ आगमत्, दे$_{3.4.6}$ आगतं (→आगतः); ब$_{1}$ दृष्ट्वा विश्वं यमागमत् (?), दे$_{1}$ दृष्ट्वा विस्मितमानसः.

२३. द$_{1}$ ग्र$_{1.2}$ म$_{1}$. ab ⊙. –a) दे$_{4}$ तथास्य (→तदास्य). –b) ब$_{2.3}$ पन्नगेन्द्रारिकेतनः, दे$_{2.4}$ पतगेन्द्रनिकेतनः. –c) दे$_{8-10}$ मुवें. मुए. मुब. अथापि भगवान् विष्णुः, ग्र$_{2}$ अथागतस्तु भगवान्. –d) म$_{1}$ [अ]ब्रूवत् (→[अ]ब्रवीत्).

२४. –a) दे$_{1}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ भगवन्नेवं (→भवानप्येवं); ते$_{1}$ एवाथ, ग्र$_{1}$ म$_{1}$ एषोद्य (→एवाद्य). –b) न$_{1}$ शाश्वतो (→शाश्वतं). –c) ग्र$_{1}$ प्रविश्यान् (→प्रविश्य); ग्र$_{2}$ प्रविश्य लोकात् पश्यन्तो (?). –d) दे$_{4}$ अगच्छत् (→विचित्रान्); का$_{1}$ दे$_{6.10}$ पुरुषर्षभान्, ब$_{3}$ दे$_{9}$ पुरुषर्षभः (→पुरुषर्षभ).

२५. –a) दे$_{1.2.5.8-10}$ न$_{1}$ मुवें. मुए. मुब. प्रह्लादिनीं, ते$_{1}$ प्रज्ञाव्तीं, द$_{1}$ ग्र$_{1}$ प्रचोदनां, ग्र$_{2}$ प्रवचनीं, म$_{1}$ प्राक्ज्योतिषां (→प्रह्लादनीं); दे$_{1}$ श्रुत्वा (→वाणीं). –b) दे$_{1}$ तस्य वाचा°, ग्र$_{1}$ श्रुत्वा नद्या° (?) (→श्रुत्वा तस्या°); का$_{1}$ दे$_{2.3.5.6}$ °मन्त्र्य च (→°नन्द्य च). –c) दे$_{3}$ उदयं, दे$_{4}$ उदिरं (?) (→उदरं); दे$_{2.4}$ चायं (→भूयः). –d) द$_{1}$ ग्र$_{1}$ म$_{1}$ प्रविश्य च (→प्रविवेश).

२६. दे$_{3.6}$. २६-२८ ab ⊙ (द्र. सं.). –a) दे$_{4.10}$ तामेव (?); म$_{1}$ नानेव (→तानेव); ब$_{3}$ दर्भस्थान् (→गर्भस्थान्). –b) का$_{1}$ ब$_{1-3}$ दे$_{2.5}$ ते$_{1}$ पश्यन् सत्यपराक्रमः, दे$_{10}$ पश्यत् सत्यमविक्रमः, ग्र$_{2}$ अपि चात्रान् पश्य विक्रमः. –c) दे$_{8-10}$ मुवें. मुए. मुब. [अ]थ (→तु); दे$_{10}$ वेदस्य, ग्र$_{2}$ देहस्य (→देवस्य). –d) का$_{1}$ ब$_{2}$ दे$_{2.5}$ ते$_{1}$ ददृशे तत्र वै हरेः, ब$_{1}$ ददृशे तं न वै हरे, ददृशे वै तनुं हरेः, दे$_{1}$ दशे तत्र वं तत्रै हरेः (?), दे$_{4}$ ददर्श तं न वै हरेः, द$_{1}$ ग्र$_{2}$ ददृशे (ग्र$_{2}$ ददर्श) विततं हरेः, ग्र$_{1}$ ददर्शात्मितनुं हरेः, म$_{1}$ ददर्श भुवनान्यथ.

२७. दे$_{3.6}$. ⊙. –b) दे$_{10}$ न$_{1}$ ग्र$_{2}$ विहितानि (→पिहितानि); दे$_{4}$ ग्र$_{2}$ महात्मनः (→महात्मना). –c) दे$_{4}$ च ब्रह्मा (→ब्रह्माऽसौ). –d) दे$_{4}$ ताभ्यां (?) (→नाभ्यां) ते$_{1}$ अचिन्वत (→अविन्दत); ग्र$_{2}$ नाप्यद्वाराण्यजानत.

तत्र योगबलेनासौ प्रविश्य कनकाण्डजः ।
उज्जहारात्मनो रूपं पुष्कराच्चतुराननः ॥२८
विरराजारविन्दस्थः पद्मगर्भसमद्युतिः ।
ब्रह्मा स्वयंभूर्भगवान् जगद्योनिः पितामहः ॥२९
समन्यमानो विश्वेशमात्मानं परमं पदम् ।
प्रोवाच पुरुषं विष्णुं मेघगम्भीरया गिरा ॥३०
किं कृतं भवतेदानीमात्मनो जयकाङ्क्षया ।
एकोऽहं प्रबलो नान्यो मां वै कोऽभिभविष्यति ॥३१
श्रुत्वा नारायणो वाक्यं ब्रह्मणो लोकतन्त्रिणः ।
सान्त्वपूर्वमिदं वाक्यं बभाषे मधुरं हरिः ॥३२
भवान् धाता विधाता च स्वयंभूः प्रपितामहः ।
न मात्सर्याभियोगेन द्वाराणि पिहितानि मे ॥३३
किन्तु लीलार्थमेवैतन्न त्वां बाधितुमिच्छया ।
को हि बाधितुमन्विच्छेद् देवदेवं पितामहम् ॥३४
न तेऽन्यथाऽवगन्तव्यं मान्यो मे सर्वथा भवान् ।
सर्वमन्वय कल्याणं यन्मयाऽपहृतं तव ॥३५
अस्माच्च कारणाद् ब्रह्मन् पुत्रो भवतु मे भवान् ।
पद्मयोनिरिति ख्यातो मत्प्रियार्थं जगन्मय ॥३६
ततः स भगवान् देवो वरं दत्त्वा किरीटिने ।
प्रहर्षमतुलं गत्वा पुनर्विष्णुमभाषत ॥३७　　वें.१.९.३७

---

२८. दे$_{3.6}$. ab ⊙. –a) ब$_3$ योगी (→योग–). –c) दे$_3$ तज्जवरा°, दे$_{10}$ ऊर्जहारा°, दे$_6$ तद्वच्चरा° (→उज्जहारा°). –d) द$_1$ ग्र$_{1.2}$ म$_1$ पुष्कराच्च पुरातनः (ग्र$_2$ °नं).

२९. द$_1$. २९d–३०c ⊙ (द्द. सं.). –a) दे$_6$ द$_1$ ग्र$_1$ म$_1$ °विन्दाक्षः (→°विन्दस्थः). –c) ब$_3$ ते$_1$ द$_1$ स्वयंभुर् (→स्वयंभूर्). –d) दे$_1$ पितामहाः (→पितामहः).

३०. म$_1$. ३०-३१ ab ⊙; द$_1$. abc ⊙. –b) दे$_4$. परं (?) (→परमं). –c) दे$_4$ न$_1$ परमं, ग्र$_2$ भगवान् (→पुरुषं); न$_1$ ग्र$_2$ विष्णुः (→विष्णुं); दे$_{1.8-10}$ मुवें. मुए. मुब. प्रोवाच विष्णुं पुरुषं, ग्र$_1$ प्रोवाच विष्णुं भगवान्.

३१. म$_1$. ab ⊙. –a) मुवें. मुए. मुब. कृतं किं (→किं कृतं); ते$_1$ किं कृते तव चेदानीं. –b) दे$_1$ आत्मनौ, दे$_6$ ग्र$_2$ आत्मानो (→आत्मनो); ब$_{1.3}$ °वाञ्छया, ब$_2$ °काङ्क्षिणा (→°काङ्क्षया). –c) का$_1$ दे$_{2.4.5}$ प्रवरो, द$_1$ ग्र$_1$ म$_1$ प्रभवो, ग्र$_2$ स भवे (?) (→प्रबलो); दे$_4$ नाम, दे$_{10}$ [अ]न्यो, ते$_1$ नाभ्या, द$_1$ नन्यत्, म$_1$ [अ]नन्यस् (→नान्यो). –d) का$_1$ मामेकोयं भविष्यति, ब$_{1.3}$ मां हि कोभिभविष्यति, ब$_2$ मत्समः को भविष्यति, दे$_1$ मम कोपि च विद्यते, दे$_2$ ममेको हि भविष्यति, दे$_{3.6}$ ते$_1$ ना (ते$_1$ मा)मको हि भविष्यति, दे$_4$ मे कोङ्गमभविष्यति (?), दे$_5$ मम कोयं भविष्यति, न$_1$ मत्तः कोपि भविष्यति, द$_1$ ग्र$_1$ म$_1$ समेकोपि भविष्यति, ग्र$_2$ समहान्तो भविष्यति, मुवें. मुए. मुब. मा वै कोभिभविष्यति.

३२. –a) ग्र$_1$ म$_1$ वाचं (→वाक्यं). –b) दे$_{8-10}$ मन्त्रिणः, ग्र$_2$ ब्रह्मण्यो (→ब्रह्मणो); दे$_{8-10}$ परमेष्ठिनः, ते$_1$ लोककर्तृणः, द$_1$ ग्र$_{1.2}$ म$_1$ ह्येकतन्त्रिणः (ग्र$_2$°णा) (→लोकतन्त्रिणः); मुवें. मुए. मुब. ब्रह्मणोक्तमतन्द्रितः. –c) दे$_1$ सान्त्वं (→सान्त्व-); दे$_4$ सान्त्वं पूर्वमिदं वाक्यं. –d) दे$_{10}$ बभाष (→बभाषे).

३३. –a) दे$_{10}$ भगवान्धा (?) (→भवान्धाता). –c) दे$_{2.3.6}$ ग्र$_1$ म$_1$ मात्सर्याति° (दे$_2$. ग्र$_1$°दि) (→मात्सर्याभि°). –d) न$_1$ विहितानि (→पिहितानि); दे$_{10}$ च, न$_1$ वै, म$_1$ नः (→मे).

३४. –a) दे$_3$ नीलात्मम्, दे$_4$ शीलार्थम्, दे$_6$ लीलात्मम् (→लीलार्थम्); ग्र$_2$ एवेन्द्रम् (→एवैतन्). –b) दे$_6$ न त्वं, न$_1$द$_1$म$_1$ न त्वा, ग्र$_1$ तत्वा (→न त्वां); ग्र$_2$ प्रथितुम् (→बाधितुम्); ब$_1$ ग्र$_2$ इच्छता (→इच्छया). –c) ते$_1$ को वि- (→को हि); ग्र$_2$ भातितुम् (→बाधितुम्); दे$_{10}$ इच्छत्वेतद् (?) (→अन्विच्छेद्). –d) ग्र$_2$ देवी (→देव-).

३५. –a) दे$_6$ तेनेन्यथा (→न तेन्यथा); का$_1$ वा गन्त° (→[अ]वगन्त°); दे$_{8-10}$ मुवें. न हि त्वं बाध्यसे ब्रह्मन्, द$_1$ ग्र$_1$ म$_1$ तत्तथा ते(म$_1$ दे)वगन्तव्यम् (द$_1$ व्या); ग्र$_2$ न तथा देव्यगन्तव्या (?). –b) ब$_3$ दे$_{10}$ मान्योसि, दे$_{8.9}$ मुवें. मुए. मान्यो हि (→मान्यो मे); ब$_3$ सर्वतो, दे$_4$ ते$_1$ सर्वदा, दे$_{10}$ हि वृथा (→सर्वथा); द$_1$ ग्र$_{1.2}$ म$_1$ मान्यो मे हि सदा भवान्. –c) ब$_3$ दे$_{4.5}$ न$_1$ सर्व(दे$_{4.5}$ °र्वं)मर्षय, दे$_{8-10}$ मम मर्षय, द$_1$ ग्र$_{1.2}$ म$_1$ सर्वं विहाय (→सर्वमन्वय); ब$_2$ दे$_{4.8-10}$ न$_1$ द$_1$ ग्र$_1$ म$_1$ कल्याण, ग्र$_2$ कल्याणात् (→कल्याणं); मुवें. मुए. मुब. मम (मुब. सर्वं) क्षमस्व कल्याणं. –d) का$_1$ यन्मग्रो, दे$_6$ जन्मया, ग्र$_2$ यन्मायां (→यन्मया); ब$_{1-3}$ दे$_{1.4.8-10}$ न$_1$ ते$_1$ द$_1$ ग्रं$_{1.2}$ म$_1$ मुवें. मुए. मुब. [अ]पकृतं, दे$_3$ [अ]पहतं (→[अ]पहृतं).

३६. –c) दे$_4$ पदाशिनि° (→पद्मयोनि°). –d) दे$_1$ मत्प्रीत्यर्थम् (→मत्प्रियार्थं); ब$_{1.3}$ दे$_{1.2.5.10}$ जगन्मयः (ब$_1$ °यं, दे$_1$ °या), म$_1$ जगन्मय, + जगत्सृज (→जगन्मय).

३७. –a) ग्र$_2$ ** (→देवो). –c) दे$_4$ लेभे, दे$_{10}$ मत्वा (→गत्वा). –d) दे$_{10}$ पुन्नर्विष्णुरभाषत.

वें..१.९.३८

भवान् सर्वात्मकोऽनन्तः सर्वेषां परमेश्वरः ।
सर्वभूतान्तरात्मा वै परं ब्रह्म सनातनम् ॥३८
अहं वै सर्वलोकानामात्मा लोकमहेश्वरः ।
मन्मयं सर्वमेवेदं ब्रह्माऽहं पुरुषः परः ॥३९
नावाभ्यां विद्यते ह्यन्यो लोकानां परमेश्वरः ।
एका मूर्तिर्द्विधा भिन्ना नारायणपितामहौ ॥४०
तेनैवमुक्तो ब्रह्माणं वासुदेवोऽब्रवीदिदम् ।
इयं प्रतिज्ञा भवतो विनाशाय भविष्यति ॥४१
किं न पश्यसि योगेशं ब्रह्माधिपतिमव्ययम् ।
प्रधानपुरुषेशानं वेदाहं परमेश्वरम् ॥४२
यं न पश्यन्ति योगीन्द्राः सांख्या अपि महेश्वरम् ।
अनादिनिधनं ब्रह्म तमेव शरणं व्रज ॥४३
ततः क्रुद्धोऽम्बुजाभाक्षं ब्रह्मा प्रोवाच केशवम् ।
भवान् न नूनमात्मानं वेत्ति तत् परमक्षरम् ॥४४
ब्रह्माणं जगतामेकमात्मानं परमं पदम् ।
नावाभ्यां विद्यते ह्यन्यो लोकानां परमेश्वरः ॥४५
संत्यज्य निद्रां विपुलां स्वमात्मानं विलोकय ।
तस्य तत् क्रोधजं वाक्यं श्रुत्वा विष्णुरभाषत ॥४६
मा मैवं वद कल्याण परिवादं महात्मनः ।
न मेऽस्त्यविदितं ब्रह्मन् नान्यथाऽहं वदामि ते ॥४७
किन्तु मोहयति ब्रह्मन् भवन्तं पारमेश्वरी ।
मायाऽशेषविशेषाणां हेतुरात्मसमुद्भवा ॥४८

---

३८. दे$_{4.6}$ द$_1$. ३८ cd–४० ab. ⊙ (द्द. सं.). –a) का$_1$ ब$_2$ दे$_{2.3.5.6}$ देवः (→[अ]नन्तः). –c) का$_1$ ब$_{1.2}$ दे$_{2.3.5}$ न$_1$ ते$_1$ त्वं, ब$_3$ च (→वै).

३९. दे$_{4.6}$ द$_1$. ⊙ (द्र. ३८ पा. वि.). –a) ते$_1$ त्वमेव (→अहं वै); का$_1$ ब$_{1-3}$ दे$_{2.3.5}$ न$_1$ ते$_1$ म$_1$ °भूतानां (→°लोकानां). –b) ब$_{1.2}$ दे$_3$ आत्म-(→आत्मा); ब$_{2.3}$ मुब. देवो, ग्र$_2$ लोकान्, मुवें. मुए. लोको (→लोक-). –c) ते$_1$ त्वन्मयं (→मन्मयं); ब$_3$ वेदेदं (→एवेदं). –d) का$_1$ ब्रह्मा त्वं, दे$_{8-10}$ मुवें. मुए. ब्रह्मणः (→ब्रह्माऽहं); दे$_1$ ब्रह्मणं पुरुषर्षभ.

४०. दे$_{4.6}$द$_1$.ab ⊙. –a) दे$_{10}$ नवाद्यां (→नावाभ्यां); का$_1$ विदधे (→विद्यते). –c) ब$_2$ दे$_{1.4}$ ग्र$_{1.2}$ एकमूर्तिर्, दे$_{8-10}$ एकोस्तीति (→एका मूर्तिर्); दे$_{8-10}$ न$_1$ भिन्नौ (→भिन्ना).

४१ –a) का$_1$ उक्तं (→उक्तो).

४२. –a) का$_1$ द$_1$ ग्र$_{1.2}$ म$_1$ योगीशं, दे$_{1.8-10}$ मुवें. मुए. मुब. योगेन(→योगेशं). –b) दे$_4$ अव्यं *(→अव्ययम्). –c)ब$_{1.3}$ प्रधानं (→प्रधान-). –d) दे$_{10}$ वेदोहं, ग्र$_2$ देवाहं (→वेदाहं) ब$_{1.3}$ पुरुषेश्वरम् , दे$_1$ पुरुषोत्तमं, दे$_6$ परमेश्वर (→परमेश्वरं).

४३. ब$_1$. ab ⊙ (द्द. सं.). –a) ब$_1$ दे$_{1.5.6.10}$ द$_1$ ग्र$_1$ म$_1$ यन्न, दे$_2$ यत्तत् (→यं न); दे$_5$ योगीशाः, + योगीन्द्राः, दे$_6$ योगेन्द्राः (→योगीन्द्राः). –b) दे$_{3.6}$ संख्यातापि, दे$_{10}$ संख्या अपि, ग्र$_2$ सांख्यामपि (→सांख्या अपि). –c) का$_1$ ते$_1$ ब्रह्मन्, दे$_{10}$ ग्र$_2$ ब्रह्मा (→ब्रह्म). –d) ब$_1$ तदेव, ब$_2$ ते$_1$ द$_1$ त्वमेव (→तमेव).

४४. –a) दे$_4$ क्रुद्धे, दे$_5$ क्रुध: (?) (→क्रुद्धो); का$_1$ [अ]म्बुजाख्यस्तु, दे$_1$ [अ]म्बुजाभाक्ष, दे$_2$ [अ]म्बुजाख्यं स, दे$_{4.5}$ प्रजाध्यक्षं, दे$_{10}$ [अ]म्बुजाभाक्षो (→[अ]म्बुजाभाक्षं). –c) ब$_1$ दे$_{8-10}$ मुवें. मुए. मुब. भगव(ब$_1$ दे$_{10}$ °वा)न्न नूनमात्मानं, ते$_1$ भवानकृतमात्मानं. –d) दे$_{8.9}$ मुवें. मुए. मुब. वेद्मि, दे$_{10}$ विद्मि(?), म$_1$ वेत्सि (→वेत्ति); का$_1$ पदमक्षयं, ब$_{1.3}$ दे$_{8-10}$ न$_1$ ते$_1$ द$_1$ ग्र$_2$ मुवें. मुए. मुब. परमाक्षरम्, (→परमक्षरम्).

४५. –a) ब$_1$ एवम् (→एकम्). –b) न$_1$ मां चैव (→आत्मानं); दे$_6$ परमापदं (→परमं पदं); द$_1$ ग्र$_{1.2}$ म$_1$ अनाद्यन्तं परं पदम्. –c) का$_1$ विदधे (→विद्यते); ब$_1$ दे$_{8.9}$ मुवें. मुए. मुब. त्वन्यो, दे$_{3.9}$ कृत्यो, दे$_{10}$ त्वन्नो (→ह्यन्यो). –d) दे$_4$ ग्र$_2$ परमेश्वरं (→परमेश्वरः).

४६. –a) न$_1$ द$_1$ ग्र$_{1.2}$ म$_1$ विपुलांनिद्रां (→निद्रां विपुलां). –b) ग्र$_2$ स्वयामानं (→स्वमात्मानं). – d) दे$_{8-10}$ मुवें. मुए. मुब. श्रुत्वापि स तदा प्रभुः, ते$_1$ श्रुत्वा विष्णुरुवाच ह.

४७. –a) ब$_{1.3}$ दे$_{10}$ ग्र$_2$ मामेवं(→मा मैवं); ब$_1$ देव, ब$_3$ वेदं (→वद); दे$_{2.10}$ कल्याणं (→कल्याण). –b) दे$_5$ परिवादसि(?) (→परिवादं म-); दे$_1$ महात्मना, न$_1$ महात्मनां (→महात्मनः). –c) का$_1$ नमोस्त्वविं°, +नमेस्त्वविं°, दे$_6$ नमस्त्यविं°, द$_1$ तन्मेस्ति वि°, ग्र$_2$ न मेस्य प्रवि°, मुवें. मुए. मुब. न मे ह्यवि° (→न मेस्त्यवि°); दे$_4$ [अ]विधिते (→[अ]विदितं). –d) का$_1$ नान्यथा त्वं, न$_1$ नान्यथाकं(?) (→नान्यथाऽहं); ते$_1$ ब्रवीमि (→वदामि).

४८. –a) दे$_1$ म$_1$ किन्नु (→किंतु); ब$_{1-3}$ दे$_{2-4}$ मोहयते (→मोहयति). –b) दे$_4$ ब्रुवन्तं, दे$_{8-10}$ मुवें. मुए. मुब. अनन्ता (→भवन्तं); ब$_1$ दे$_{3.8.9}$ न$_1$ द$_1$ ग्र$_{1.2}$ मुवें. मुए. मुब पारमेश्वरी (ब$_1$ रीम्) (→परमेश्वरी). –c) ग्र$_2$ माया ह्येषा° (→मायाऽशेष°); दे$_1$° विशेषेण (→°विशेषाणाम्). –d) दे$_5$ ते$_1$ ग्र$_2$ °समुद्भव (→°समुद्भवा).

एतावदुक्त्वा भगवान् विष्णुस्तूष्णीं बभूव ह ।
ज्ञात्वा तत् परमं तत्त्वं स्वमात्मानं महेश्वरम् ॥४९
कुतोऽप्यपरिमेयात्मा भूतानां परमेश्वरः ।
प्रसादं ब्रह्मणे कर्तुं प्रादुरासीत् ततो हरः ॥५०
ललाटनयनोऽनन्तो जटामण्डलमण्डितः ।
त्रिशूलपाणिर्भगवांस्तेजसां परमो निधिः ॥५१
दिव्यां विशालां ग्रथितां ग्रहैः सार्केन्दुतारकैः ।
मालामत्यद्भुताकारां धारयन् पादलम्बिनीम् ॥५२
तं दृष्ट्वा देवमीशानं ब्रह्मा लोकपितामहः ।
मोहितो माययाऽत्यर्थं पीतवाससमब्रवीत् ॥५३
क एष पुरुषोऽनन्तः शूलपाणिस्त्रिलोचनः ।
तेजोराशिरमेयात्मा समायाति जनार्दन ॥५४
तस्य तद् वचनं श्रुत्वा विष्णुर्दानवमर्दनः ।
अपश्यदीश्वरं देवं ज्वलन्तं विमलेऽम्भसि ॥५५
ज्ञात्वा तत्परमं भावमैश्वरं ब्रह्मभावनम् ।
प्रोवाचोत्थाय भगवान् देवदेवं पितामहम् ॥५६
अयं देवो महादेवः स्वयंज्योतिः सनातनः ।
अनादिनिधनोऽचिन्त्यो लोकानामीश्वरो महान् ॥५७
शंकरः शंभुरीशानः सर्वात्मा परमेश्वरः ।
भूतानामधिपो योगी महेशो विमलः शिवः ॥५८
एष धाता विधाता च प्रधानपुरुषेश्वरः ।
यं प्रपश्यन्ति यतयो ब्रह्मभावेन भाविताः ॥५९　　वें १.६.५६

---

४९. –a) दे$_{3.4}$ उक्ता (→उक्त्वा); द$_{1}$ ग्र$_{1.2}$ म$_{1}$ ब्रह्माणं (→भगवान्). –c) ते$_{1}$ परमीतत्त्वं, + परमीशत्वं (→परमं तत्त्वं). –d) दे$_{8-10}$ मुवें. मुए. मुब. सुरेश्वरः, ग्र$_{2}$ महेश्वरः (→महेश्वरम्); ब$_{1.3}$ आत्मानं परमेश्वरम्, न$_{1}$ परमात्मानमीश्वरम्.

५०. –a) का$_{1}$ग्र$_{2}$ कुतोप्यपर°, ब$_{1}$ दे$_{8-10}$ मुवें.मुए.मुब. कुतो ह्यपरि°, ब$_{2.3}$ न$_{1}$ ग्र$_{1}$ म$_{1}$ ततोप्यपरि° (→कुतोऽप्यपरि°). –b) दे$_{4}$ लोकानां (→भूतानां); दे$_{4}$ परमेश्वर (→परमेश्वरः). –c) का$_{1}$ ब$_{2.3}$ दे$_{2.3.5.6}$ ब्रह्मणः (→ब्रह्मणे). –d) दे$_{5}$ प्रादुरासां(?) (→प्रादुरासीत्).

५१. –a) ग्र$_{2}$ °नयने (→°नयनो); दे$_{8}$ देवौ, दे$_{9.10}$ मुवें. मुए. मुब. देवो, ते$_{1}$ दान्तो, ग्र$_{2}$ नान्ते (→[अ]नन्तो). –b) दे$_{4}$ जला°(→जटा°); ग्र$_{2}$ °मण्डितं (→°मण्डितः). –c) न$_{1}$ त्रिशूली भगवां देवस्. –d) दे$_{1.10}$ तेजसा (→तेजसां); का$_{1}$ परमं (→परमो); ब$_{1}$ मुनिः (→निधिः).

५२. –a) ब$_{3}$ ग्रसितां, दे$_{4}$ ग्रन्थितां, दे$_{5}$ ग्रथिनी, दे$_{6}$ प्रथितां, ग्र$_{2}$ वृहतीं (→ग्रथितां); दे$_{1}$ दिव्यां विशालीं ग्रथितां, दे$_{8-10}$ मुवें. मुए. मुब. विद्याविलासग्रथिता. –c) दे$_{4.10}$ अत्युद्भुता° (→अत्यद्भुता°); दे$_{6}$ मालामत्यन्तताकारां, ग्र$_{2}$ मलान्तत्यद्भुताकारां (?). –d) दे$_{5}$ धरायां, दे$_{10}$ धरायं (→धारयन्); दे$_{5}$ वात° (→पाद°).

५३. म$_{1}$. ५३cd–६४ab ⊙ (द्र. सं.). –a) द$_{1}$ ईशानां (→ईशानं). –c) ब$_{1}$ मोहिता (→मोहितो); ब$_{1}$ ह्यन्नं, दे$_{5.6}$ ह्यर्थं (→[अ]त्यर्थं). –a) दे$_{1}$ °वासमथा° (→°वाससम°).°

५४. म$_{1}$. ⊙. –a) दे$_{1.5}$ एवं (→एष); दे$_{8-10}$ मुवें. मुए. मुब. नीलः (→[अ]नन्तः). –c) दे$_{1}$ रजो° (→तेजो°); ग्र$_{1}$ °राशिः प्रमे° (→°राशिरमे°). –d) दे$_{10}$ समेयाति(?) (→समायाति); दे$_{1}$ जनार्दन°, दे$_{4.5}$ जनार्दनः (→जनार्दन).

५५. म$_{1}$. ⊙; दे$_{5}$. ab ⊙ (द्र. सं.). –a) ते$_{1}$ तस्यै-तद् (→तस्य तद्). –b) द$_{1}$ ग्र$_{1}$ देवो विष्णुर्जनार्दनः, ग्र$_{2}$ विष्णुर्देहे जनार्दनः. –c) दे$_{3}$ अपश्यम् (→अपश्यद्); ब$_{3}$ दिव्यं (→देवं).

५६. म$_{1}$. ⊙. –a) दे$_{1.8-10}$ द$_{1}$ मुवें. मुए. मुब. तं (→तत्); ते$_{1}$ भूतं (→भावं). –b) का$_{1}$ ब$_{3}$ ऐश्वर्यं, ग्र$_{2}$ ईश्वरं (→ऐश्वरं); का$_{1}$ ब$_{2}$ दे$_{1-3.6}$ ते$_{1}$ °भावतः (दे$_{6}$ °ता); दे$_{4.5.8-10}$ न$_{1}$ द$_{1}$ ग्र$_{1}$ मुवें. मुए. मुब. °भावनः (→°भावनं). –c) दे$_{6}$ भगवन् (→भगवान्).

५७. म$_{1}$. ⊙; दे$_{4}$. cd ⊙. –a) ब$_{1}$ अहं, ते$_{1}$ आयुर्, ग्र$_{2}$ स्वयं (→अयं); द$_{1}$ ग्र$_{1}$ शर्वो, ग्र$_{2}$ शिवो (→देवो); ग्र$_{1.2}$ महादेव (ग्र$_{2}$ °वं) (→महादेवः). –b) का$_{1}$ ब$_{2}$ दे$_{2.3.5.6}$ प्रजापतिः (→सनातनः). –c) दे$_{8-10}$ °नश्चिन्त्यो (→°नोऽ-चिन्त्यो). –d) ते$_{1}$ शाश्वतो (→ईश्वरो); ब$_{2}$ -व्ययम् (→महान्).

५८. दे$_{3.6}$ म$_{1}$. ⊙.

५९. दे$_{3.6}$ म$_{1}$. ⊙. –b) दे$_{8.10}$ मुवें. मुए.मुब. प्रधानः (दे$_{10}$ °न) प्रभुरव्ययः. –c) दे$_{1}$ प्रपश्यति (?), दे$_{4}$ प्रविश्यन्ति (→प्रपश्यन्ति). –d) दे$_{8-10}$ ब्रह्मणानेन, ते$_{1}$ द$_{1}$ ग्र$_{1}$ ब्रह्मभावन– (→ब्रह्मभावेन); दे$_{1}$ भावितु (→भाविताः).

१.९.६० सृजत्येष जगत् कृत्स्नं पाति संहरते तथा ।
कालो भूत्वा महादेवः केवलो निष्कलः शिवः ॥६०
ब्रह्माणं विदधे पूर्वं भवन्तं यः सनातनः ।
वेदांश्च प्रददौ तुभ्यं सोऽयमायाति शंकरः ॥६१
अस्यैव चापरां मूर्तिं विश्वयोनिं सनातनीम् ।
वासुदेवाभिधानां मामवेहि प्रपितामह ॥६२
किं न पश्यसि योगेशं ब्रह्माधिपतिमव्ययम् ।
दिव्यं भवतु ते चक्षुर्येन द्रक्ष्यसि तत्परम् ॥६३
लब्ध्वा शैवं तदा चक्षुर्विष्णोर्लोकपितामहः ।
बुबुधे परमेशानं पुरतः समवस्थितम् ॥६४
स लब्ध्वा परमं ज्ञानमैश्वरं प्रपितामहः ।
प्रपेदे शरणं देवं तमेव पितरं शिवम् ॥६५
ओंकारं समनुस्मृत्य संस्तभ्यात्मानमात्मना ।
अथर्वशिरसा देवं तुष्टाव च कृताञ्जलिः ॥६६
संस्तुतस्तेन भगवान् ब्रह्मणा परमेश्वरः ।
अवाप परमां प्रीतिं व्याजहार स्मयन्निव ॥६७
मत्समस्त्वं न संदेहो मद्भक्तश्च यतो भवान् ।
मयैवोत्पादितः पूर्वं लोकसृष्ट्यर्थमव्ययम् ॥६८
त्वमात्मा ह्यादिपुरुषो मम देहसमुद्भवः ।
वरं वरय विश्वात्मन् वरदोऽहं तवानघ ॥६९
स देवदेववचनं निशम्य कमलोद्भवः ।
निरीक्ष्य विष्णुं पुरुषं प्रणम्याह वृषध्वजम् ॥७०

६०. म1. ⊙. -a) द1 ग्र1 सृजते हि (→सृजत्येष). -d) का1 ब2.3 दे1-3.6.9 कैवल्ये (दे1.3.6 °ल्ये, दे9 °लो) (→केवलो); द1 ग्र1 म1 निर्मलः (→निष्कलः).

६१. म1. ⊙; ब3. cd ⊙ -b) ब1 न1 सनातनं (→सनातनः). -c) दे1.3 वेदाश्च, ते1 वेदास्तु (→वेदांश्च); दे6 वेद (दा?) नाध्यापद् ब्रह्मन्.

६२. ब1 म1. ⊙. -a) का1 ब2.3 दे1-6 ते1 ग्र1 च परां (दे4ते1 °रा) मूर्ति (दे4 ते1 °त्तिर्), न1 परमामूर्ति (→चापरां मूर्तिं). -b) दे1 ग्र2 सनातनी, दे5 न1 द1 ग्र1 सनातनं (→सनातनीं); ते1 विश्वयोनिस्सनातनी. -c) का1 ब2 दे1.4.6 ते1 द1 मुवे. मुए. मुब. भिधानं (→°भिधानां); द1 मे (→मां). -d) दे1.2.4.8-10 न1 ग्र1.2 अवैहि, द1 न वै हि (→अवेहि); दे4 प्रपितामहः, द1 प्रपितामहं (→प्रपितामह).

६३. म1. ⊙; ब1. ab ⊙. -a) ब2 योगेश, द1 ग्र1 योगीशं (→योगेशं). -b) ब2 ब्रह्मादि° (→ब्रह्माधि°). -c) दे4 भवन्तु, द1 ग्र2 भवतिं (→भवतु); दे5 वक्तुर् (→चक्षुर्). -d) का1 द्रक्षसि, न1 द1 पश्यसि, ग्र1 बुध्यसि (→द्रक्ष्यसि); का1 दे1-4 तत्पदम्, दे5 तत्पदा, दे6 मानद (→तत् परम्).

६४. म1. ab ⊙; दे10. ६४cd–६५ab ⊙ (ह.सं.). -a) ब1 लब्धा स वै, ब2 लब्ध्वा चैव, ब3 लब्ध्वा तदा, दे4 लब्ध्वा शेषं, दे5 लब्धशेषं, दे6 भगवत्ते, दे8-10 न1 द1.2 ग्र1. मुवें मुए.मुब. लब्ध्वा चैव (दे10ग्र2 °व), ते1 लब्ध्वा नैवं (→लब्ध्वा-शैवं);का1 द1 ग्र1.2 तथा, ब3 स वै (→तदा). -b)दे1.4 विष्णुर् (→विष्णोर्); दे1 पितामहं (→पितामहः). -b) दे1 ग्र1.2 म1 परमीशानं, दे8.9.मुवें. मुए. मुब. परनं ज्ञानं (→परमेशानं). -d) दे1 पुरुतः (→पुरतः); ते1 समवस्थितं, +समुपस्थितं (→समवस्थितं).

६५. दे10. ab ⊙. -a) दे3.5 स लब्धा, दे4 सत्संघा (→स लब्ध्वा). -b) ब2.3 ऐश्वर्यं (→ऐश्वरं); दे6 प्रपिता-मह (→प्रपितामहः). -c) दे4 प्रपदे (→प्रपेदे). -d) द1 म1 तमेनं, ग्र1 स्वमेव (→तमेव).

६६. -a) दे3.6 ओंकार-, (→ओङ्कारं); दे3 समनु-द्भृत्य (→समनुस्मृत्य). -b) दे3 संस्तुत्या°, दे4 संस्तुभ्या°, दे6 संस्तुता° (→संस्तभ्या°). -d) दे2 स (→च). -cd) म1. अथ प्रणम्य शिरसा देवं तुष्टाव च कृताञ्जलिः.

६७. -a) का1 ब2.3 दे2.3.5.6 ते1 देवेन (→भगवान्). -b) दे5 परमेश्वरं (→परमेश्वरः). -c) ब1 परमं, ग्र2 च परां (→परमां); दे4 प्रीतिः (→प्रीतिं). -d) दे6 आजहार (→व्याजहार); ब1 दे10 स्वयन्निब, द1 ग्र1 स्मरन्निव (→स्मयन्निव).

६८. -a) ब3 मत्समस्तं, दे1 मत्समत्वं, दे5 मत्समार्स (→मत्समस्त्वं); दे4 संदेहे (→संदेहो). -b) दे3 °भुक्तः (?) (→°भक्तः); ब1 च सुतो, न1 च सदा, ते1 स सुतो (→च यतो); दे4 मम भक्तसमो भवान्, दे8-10 द1 ग्र1.2 म1 मुवें. मुए मुब. वत्स (दे1 °त्सं) भक्तश्च मे भवान्. -c) का1 दे1-3.6 °त्पादितं (→°त्पादितः). -d) दे5 अन्ययः (?), न1 अन्वयं, ते1 द1 ग्र1 म1 मुवें. मुए. मुब. अव्ययः (→अव्ययम्).

६९. -a) न1 त्वमेव, ते1 त्वमीशो (→त्वमात्मा). -b) दे1 °द्भव (→°द्भवः).

७०. -c) दे2 ते1 पुरुषं विष्णुं, न1 विष्णुपुरुषं, द1 विष्णुः पुरुषं (→विष्णुं पुरुषं). -d) दे8-10 मुवें. मुए. मुब. प्रणम्योवाच शंकरम्.

भगवन् भूतभव्येश महादेवाम्बिकापते ।
त्वामेव पुत्रमिच्छामि त्वया वा सदृशं सुतम् ॥७१
मोहितोऽस्मि महादेव मायया सूक्ष्मया त्वया ।
न जाने परमं भावं याथातथ्येन ते शिव ॥७२
त्वमेव देव भक्तानां भ्राता माता पिता सुहृत् ।
प्रसीद तव पादाब्जं नमामि शरणं गतः ॥७३
स तस्य वचनं श्रुत्वा जगन्नाथो वृषध्वजः ।
व्याजहार तदा पुत्रं समालोक्य जनार्दनम् ॥७४
यदर्थितं भगवता तत् करिष्यामि पुत्रक ।
विज्ञानमैश्वरं दिव्यमुत्पत्स्यति तवानघ ॥७५

त्वमेव सर्वभूतानामादिकर्ता नियोजितः ।
तथा कुरुष्व देवेश मया लोकपितामह ॥७६
एष नारायणोऽनन्तो ममैव परमा तनुः ।
भविष्यति तवेशानो योगक्षेमवहो हरिः ॥७७
एवं व्याहृत्य हस्ताभ्यां प्रीतात्मा परमेश्वरः ।
संस्पृश्य देवं ब्रह्माणं हरिं वचनमब्रवीत् ॥७८
तुष्टोऽस्मि सर्वथाऽहं ते भक्त्या तव जगन्मय ।
वरं वृणीष्व नह्यावां विभिन्नौ परमार्थतः ॥७९
श्रुत्वाऽथ देववचनं विष्णुर्विश्वजगन्मयः ।
प्राह प्रसन्नया वाचा समालोक्य चतुर्मुखम् ॥८०   वें. १.९.८०

---

७१. –b) दे$_1$ °वोम्बिका° (→°वाम्बिका°); ब$_3$ दे$_4$ °पतेः (→°पते). –c) दे$_{10}$ त्वमेव, दे$_9$ त्वामे च (?) (→त्वामेव). –d) का$_1$ याचे त्वां (→त्वया वा); दे$_{8-10}$ शुभं, ग्र$_2$ स्मृतं (→सुतम्).

७२. –b) ते$_1$ सूष्क्ष्मा (→सूक्ष्मया); ब$_2$ दे$_4$ न$_1$ द$_1$ ग्र$_1$ म$_1$ तव, ग्र$_2$ गिरा (→त्वया). –d) ब$_{2.3}$ दे$_{4.5.10}$ ते$_1$ द$_1$ ग्र$_2$ यथा° (→याथा°); दे$_{1.5}$ ते शिवः, दे$_{10}$ केशव, ग्र$_2$ ते शिवे (→ते शिव).

७३. –a) न$_1$ वेद (→देव). –b) दे$_1$ धाता माता, दे$_{8.9}$ मुवें. मुए. मुब. माता भ्राता, न$_1$ ते$_1$ द$_1$ ग्र$_{1.2}$ म$_1$ त्राता माता(→भ्राता माता); दे$_4$ सुहृत्पिता (→पिता सुहृत्). –c) ग्र$_2$ प्रसीदन् (→प्रसीद); का$_1$ पादाब्ज्यं, दे$_6$ पादाङ्गं (→पादाब्जं). –d) दे$_5$ ननामि (→नमामि); दे$_{3.6.8-10}$ न$_1$ ते$_1$ मुवें. मुए. मुब. शरणागतः (→शरणं गतः).

७४. –a) दे$_{10}$ ग्र$_2$ तस्य तद्वचनं श्रुत्वा. –c) दे$_3$ तद्य (?), दे$_4$ तथा (→तदा).

७४ श्लोकात् परं ग्र$_2$ अधिकम्—ईश्वरः.

७५. –a) ब$_3$ यत्कथितं, दे$_3$ यदर्न्वितम्, दे$_6$ यदर्चितं, ग्र$_2$ यदिप्सितं (→यदर्थितं); ते$_1$ म$_1$ तु भवता, ग्र$_2$ भगवतस् (→भगवता). –b) ब$_3$ दे$_{3.6}$ पुत्रकं (→पुत्रक). –d) मुवें. मुब. तवानघं (→तवानघ).

७६. –c) दे$_{8-10}$ मुवें. मुए. मुब. कुरुष्व तेषु (→तथा कुरुष्व); म$_1$ देवेशं (→देवेश). –d) दे$_{8.9}$ मुवें. मुए. मुब. मायां, ग्र$_2$ त्वयि (→मया); ब$_{1.3}$ °पितामहः, दे$_{3.6}$ °पितामहाः (→°पितामह).

७७. –a) दे$_{8-10}$ मुवें. मुए. मुब. मत्तो, न$_1$ देवो (→[अ]नन्तो). –c) दे$_{8-10}$ न$_1$ मुवें. मुए. मुब. तवेशान, दे$_5$ तवेशीनो (?), ग्र$_2$ न वेशानो(→तवेशानो). –d) द$_1$ ग्र$_{1.2}$ म$_1$ °करो (→°वहो).

७८. –a) दे$_3$ व्याहृत्य (→व्याहृत्य). –b) का$_1$ प्रीत्यर्थं, दे$_1$ द$_1$ ग्र$_1$ म$_1$ प्रीतोस्मि, दे$_{8-10}$ मुत्रें. मुए. मुब. प्रीतः स, दे$_5$ प्रीता वा, ग्र$_2$ प्रीतोसौ (→प्रीतात्मा); ब$_{1.3}$ स महेश्वरः (→परमेश्वरः). –c) दे$_4$ संस्थाप्य, दे$_{5.10}$ ग्र$_2$ संस्मृत्य, ते$_1$ संस्पर्शं (→संस्पृश्य); का$_1$ ग्र$_2$ देवो, दे$_5$ देव-(→देवं).

७८ श्लोकात्परं ग्र$_2$ अधिकम्–ईश्वरः.

७९. दे$_{10}$. cd ⊙. –a) ब$_{1.3}$ दे$_{3.6}$ हृष्टोस्मि, न$_1$ इष्टोस्मि, ग्र$_2$ तुष्टोस्ति (→तुष्टोस्मि); का$_1$ ब$_2$ दे$_{2-6}$ ते$_1$ सर्वदा, ब$_3$ न$_1$ सर्वतो (→सर्वथा); द$_1$ सर्वदा हेतो, ग्र$_1$ सर्वभावेन, म$_1$ तव लोकेश (→सर्वथाहं ते). –b) ब$_1$ भक्ता तव, दे$_{8-10}$ मुवें. मुए. मुब. भक्तस्त्वं, न$_1$ भव्या तव, ग्र$_2$ भव भक्त्या (→भक्त्या तव); ब$_1$ दे$_{8.9}$ जगन्मयः, दे$_{10}$ जगत्पते (→जगन्मय). –c) ब$_1$ न ज्ञायां, दे$_{1.8.9}$ मुवें. मुए. मुब. नावाभ्यां, द$_1$ ग्र$_{1.2}$ म$_1$ नावां वै (→नह्यावां). –d) ब$_{1-3}$ दे$_{3.6}$ विभिन्नो, दे$_1$ विपिन्नौ (?), दे$_{8.9}$ मुवें. मुए. मुब. अन्योस्ति, ग्र$_2$ भिन्नोपि (→विभिन्नौ); ब$_1$ दे$_3$ परमात्मतः, दे$_6$ परमात्मनः (→परमार्थतः).

८०. दे$_{10}$. ab ⊙. –a) दे$_1$ द$_1$ ग्र$_1$ श्रुत्वा च, ग्र$_2$ श्रुत्वापि, म$_1$ तच्छ्रुत्वा (→श्रुत्वाऽथ); ब$_3$ श्रुत्वा देवस्य वचनं, न$_1$ श्रुत्वा तदेव वचनं. –b) ब$_3$ विश्वं, ग्र$_2$ विश्वे (→विश्व-); दे$_{8.9}$ मुवें. मुए. विष्णुर्विश्वमयं जगत्. –c) द$_1$ ग्र$_{1.2}$ म$_1$ गम्भीरया (→प्रसन्नया). –d) दे$_{8-10}$ मुवें. मुए. मुब. च तन्मुखम्, द$_1$ ग्र$_1$ म$_1$ पितामहं. ग्र$_2$ चतुर्मुखः (→चतुर्मुखम्).

८०. श्लोकात्परं ग्र$_2$ अधिकम्–विष्णुः.

वें. १.६.८१ एष एव वरः श्लाघ्यो यदहं परमेश्वरम् ।
पश्यामि परमात्मानं भक्तिर्भवतु मे त्वयि ॥८१
तथेत्युक्त्वा महादेवः पुनर्विष्णुमभाषत ।
भवान् सर्वस्य कार्यस्य कर्ताहऽमधिदैवतम् ॥८२
मन्मयं त्वन्मयं चैव सर्वमेतन्न संशयः ।
भवान् सोमस्त्वहं सूर्यो भवान् रात्रिरहं दिनम् ॥८३
भवान् प्रकृतिरव्यक्तमहं पुरुष एव च ।
भवान् ज्ञानमहं ज्ञाता भवान् मायाऽहमीश्वरः ॥८४
भवान् विद्यात्मिका शक्तिः शक्तिमानहमीश्वरः ।
योऽहं सुनिष्कलो देवः सोऽपि नारायणः परः ॥८५
एकीभावेन पश्यन्ति योगिनो ब्रह्मवादिनः ।
त्वामनाश्रित्य विश्वात्मन् न योगी मामुपैष्यति ।
पालयैतज्जगत्कृत्स्नं सदेवासुरमानुषम् ॥८६

इतीदमुक्त्वा भगवाननादिः,
स्वमायया मोहितभूतभेदः ।
जगाम जन्मर्द्धिविनाशहीनं,
धामैकमव्यक्तमनन्तशक्तिः ॥८७

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायां पूर्वविभागे नवमोऽध्यायः ॥९॥

---

८१. –a) द$_{1}$ पर-, ग्र$_{2}$ महा–(→वरः); ते$_{1}$ सद्यो (→श्लाघ्यो). –b) दे$_{10}$ यदाह (→यदहं).

८१. श्लोकात्परं ग्र$_{2}$ अधिकम्–ईश्वरः.

८२. –a) दे$_{3.6}$ तथेत्युक्तो (→तथेत्युक्त्वा); का$_{1}$ महादेवं (→महादेवः). –b) का$_{1}$ विष्णुर्, ब$_{1}$ देवं (→विष्णु); दे$_{10}$ पुनर्विष्णुप्रभाषित (?). –c) न$_{1}$ कालस्य (→कार्यस्य); ते$_{1}$ भगवन् सर्वकार्यस्य. –d) का$_{1}$ °देवतः, ब$_{2}$ °दैवतत्, ब$_{3}$ दे$_{8}$ मुवें. °देवतम्, दे$_{5}$ °दैवतः (→°दैवतम्).

८३. –a) दे$_{4}$ तन्मयं त्वन्मयं, दे$_{8.9}$ ते$_{1}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ मुवें. मुए. मुब. त्वन्मयं मन्मयं, दे$_{10}$ त्वन्मयं तन्मयं (→मन्मयं त्वन्मयं). –b) दे$_{10}$ सत्यं (→सर्वं). –c) दे$_{3}$ भवान्माासस्-, दे$_{6}$ भावन्मामस्, ग्र$_{2}$ भवान् चन्द्रर् (→भवान्सोमः); म$_{1}$ वीर्यो(→सूर्यो). –d) दे$_{3}$ भवान् याम°, दे$_{6}$ भवान् साम° (→भवान् रात्रि°).

८४. –a) दे$_{8-10}$ अव्यक्तस् (→अव्यक्तं). –b) दे$_{8-10}$ त्वहं (→अहं); दे$_{5}$ वा (→च). –c) न$_{1}$ भगवान् (→भवान्); ग्र$_{2}$ मानं (→ज्ञानं); दे$_{10}$ दाता (→ज्ञाता). –d) ग्र$_{2}$ भाता- (→माया); ब$_{2}$ -मयीश्वरः, दे$_{3}$ त्वमीश्वरः, दे$_{4}$ महेश्वरः, दे$_{8}$ -महीश्वरः (→[अ]हमीश्वरः).

८५. द$_{1}$ ग्र$_{1.2}$ म$_{1}$. ab ⊙; ब$_{1}$. cd ⊙. –a) दे$_{4}$ निद्रा° (→विद्या°). –c) न$_{1}$ याहं (→योऽहं); ब$_{2.3}$ दे$_{1.2.8-10}$ न$_{1}$ ग्र$_{1.2}$ म$_{1}$ मुवें. मुए. मुब स निष्कलो, दे$_{3}$ ह्यनिष्कलो, दे$_{6}$ संनिष्कलो (→सुनिष्कलो). –d) दे$_{1.8-10}$ मुवें. मुए. मुब. सोसि (→सोऽपि); दे$_{1.8-10}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ मुवें. मुए. मुब. प्रभुः (→परः); दे$_{6}$ परमात्मा परात्परः.

८६. –a) दे$_{1}$ एको भा°, ग्र$_{2}$ एकीभ° (→एकीभा°). –b) न$_{1}$ योगिन्या(?), ग्र$_{2}$ मुनयो (→योगिनो). –c) दे$_{10}$ ते$_{1}$ त्वमना° (→त्वामना°); दे$_{6.10}$ विश्वात्मा, ते$_{1}$ योगात्मन् (→विश्वात्मन्). –d) ब$_{3}$ योगीत्वमु°, ग्र$_{1}$ यगे(?) मामु° (→योगी मामु°); का$_{1}$ दे$_{4-6}$ न$_{1}$ ग्र$_{2}$ म$_{1}$ उपेष्यति (दे$_{6}$ग्र$_{2}$ °सि) (→उपैष्यति). –e) ब$_{1}$ पालयेव, ब$_{3}$ दे$_{3}$ पालयेतन् (→पालयैतत्); ग्र$_{2}$ सर्वं (→कृत्स्नं).

८७. –a) ब$_{1}$ इतीवम्, ब$_{3}$ न$_{1}$ ग्र$_{2}$ ते$_{1}$ इत्येवम् (→इतीदम्); दे$_{6}$ महेशः (→अनादिः). –b) दे$_{6}$ तनमायया (?), द$_{1}$ ग्र$_{1}$ स मायया (ग्र$_{1}$ °था) (→स्वमायया); दे$_{1}$ °देहः, द$_{1}$ ग्र$_{1.2}$ म$_{1}$ °देवः (→°भेदः). –c) दे$_{1}$ जन्मस्थितिनाश-, दे$_{8}$ जन्मादिविनाश-, दे$_{9.10}$ जन्मदिविनाश-, ते$_{1}$ जन्म****, ग्र$_{2}$ जन्मार्थिविनाश°- (→जन्मर्द्धिविनाश-); द$_{1}$ ग्र$_{1.2}$ म$_{1}$ –हेतुर् (ग्र$_{2}$ °म्) (→-हीनम्). –d) का$_{1}$ ब$_{1-3}$ दे$_{3.5.6}$ ते$_{1}$ अनेकमव्यक्तमनन्तशक्तिः, म$_{1}$ धामैकमव्यग्रमनन्तशक्तिः.

**पुष्पिका**—

**पुराणनाम**—का$_{1}$ दे$_{1.4.8-10}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ मुवें. मुए. इति श्रीकूर्मपुराणे, ब$_{1}$ इति कौर्मे, ब$_{2.3}$ दे$_{2.3.5.6}$ इति कूर्मपुराणे, न$_{1}$ इत्यादि महापुराणे श्रीकौर्मे, ते$_{1}$ इत्यादि महापुराणे श्रीकूर्मपुराणे, मुब. इति श्रीकौर्मे महापुराणे पूर्वभागे. **अध्यायनाम**—ब$_{1}$ दे$_{4}$ न$_{1}$ ते$_{1}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$. ⊙; का$_{1}$ ब$_{2.3}$ दे$_{1-3.5.6.8-10}$ मुए. मुब. पद्मोद्भवप्रादुर्भावे (ब$_{3}$ °वो), मुवें. पद्मोद्भवप्रादुर्भाववर्णनं नाम. **अध्यायसंख्या**—दे$_{6}$. ⊙; का$_{1}$ ब$_{1-3}$ दे$_{1-3.5.8.9}$ न$_{1}$ ते$_{1}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ नवमोऽध्यायः, दे$_{4.10}$ मुवें. मुए. मुब. नवमोऽध्यायः ॥९॥

# १०

श्रीकूर्म उवाच ।❀

गते महेश्वरे देवे स्वाधिवासं पितामहः ।
तदेव सुमहत् पद्मं भेजे नाभिसमुत्थितम् ॥१
अथ दीर्घेण कालेन तत्राप्रतिमपौरुषौ ।
महासुरौ समायातौ भ्रातरौ मधुकैटभौ ॥२
क्रोधेन महताविष्टौ महापर्वतविग्रहौ ।
कर्णान्तरसमुद्भूतौ देवदेवस्य शार्ङ्गिणः ॥३
तावागतौ समीक्ष्याह नारायणमजो विभुः ।
त्रैलोक्यकण्टकावेतावसुरौ हन्तुमर्हसि ॥४
तस्य तद् वचनं श्रुत्वा हरिर्नारायणः प्रभुः ।
आज्ञापयामास तयोर्वधार्थं पुरुषावुभौ ॥५
तदाज्ञया महद्युद्धं तयोस्ताभ्यामभूद् द्विजाः ।
व्यनयत् कैटभं विष्णुर्जिष्णुश्च व्यनयन्मधुम् ॥६
ततः पद्मासनासीनं जगन्नाथं पितामहम् ।
बभाषे मधुरं वाक्यं स्नेहाविष्टमना हरिः ॥७
अस्मान्मयोच्यमानस्त्वं पद्मादवतर प्रभो ।
नाहं भवन्तं शक्नोमि वोढुं तेजोमयं गुरुम् ॥८ वें. १.१०.८

---

१०

❀ का$_1$ ब$_{1-3}$ दे$_{2.3.5.6.8-10}$ द$_1$ ग्र$_2$ मुवें. मुए. मुब कूर्म उवाच; न$_1$ कूर्मः; ते$_1$ श्रीशिवः श्रीकूर्मः; ग्र$_1$ म$_1$ श्रीकूर्मः.

१. –a) ग्र$_2$ महेश्वरो (→महेश्वरे); ग्र$_2$ देवः (→देवे). –b) का$_1$ ब$_{1-3}$ दे$_{1.2}$ सोधि(ब$_1$ °दि)वासं, दे$_3$ सोपिवासं, दे$_6$ सोपि ब्रह्मा, दे$_{8-10}$ मुवें. मुए. मुब. भूय एव, न$_1$ साधिवासं, द$_1$ ग्र$_{1.2}$ म$_1$ स्वन्निवासं (→स्वाधिवासं); दे$_6$ पितामहा (→पितामहः). –c) दे$_4$ तदैव, दे$_{10}$ तमेहस् (→तदेव); का$_1$ स्वमहत्, ब$_2$ त्वगमत्, दे$_4$ समहत् , दे$_{10}$ तु महत् (→सुमहत्). –d) ब$_2$ विष्णुनाभि°, ब$_3$ तेजे(?)नाति°, दे$_3$ भोजनाभि° (→भेजे नाभि°); ब$_1$ द$_1$ ग्र$_{1.2}$ म$_1$ समुद्भवं, दे$_1$ समुच्छ्रितम् (→समुत्थितम्).

२. –a) दे$_{1-4}$ दीर्घेन (→दीर्घेण). –b) दे$_1$ °पुरुषौ, दे$_4$ ग्र$_1$ °पौरुषं (→पौरुषौ); ग्र$_2$ तत्र परम पुरुषौ. –c) दे$_6$ समायान्ते, दे$_{10}$ द$_1$ महायातौ (द$_1$ °यौ) (→समायातौ).

३. –b) दे$_5$ °विग्रहैः (→विग्रहौ). –c) का$_1$ कर्णान्तिक-, दे$_3$ वर्णान्तर-, दे$_4$ करणं ततः, द$_1$ ग्र$_1$ म$_1$ कर्णान्तरे (→कर्णान्तर-). –d) ब$_1$ चक्रिणः, + शार्ङ्गिणः, दे$_4$ साक्षिणः, दे$_6$ शार्ङ्गिनौ, दे$_{10}$ शार्ङ्गिणे, ग्र$_1$ म$_1$ चक्रिणः (→शार्ङ्गिणः).

४. दे$_{10}$.४b–५b ⊙ (द्र. सं.). –a) दे$_1$ तावानीतौ, ते$_1$ तत्रागतौ (→तावागतौ); न$_1$ समीक्ष्याथ, ग्र$_2$ समीक्ष्याग्रे (→समीक्ष्याह). –b) दे$_1$ अत्नो(?)विभु, दे$_{8-10}$ ते$_1$ अथो विभुः, द$_1$ ग्र$_{1.2}$ म$_1$ अजं (म$_1$ °जो) विभुं (→अजो विभुः); दे$_6$ नारायणमयो विभुः. –c) ब$_2$ °नाशका°, दे$_3$ °कणका° (→°कण्टका°). –d) ग्र$_2$ असुरं (→असुरौ).

५. दे$_{10}$. ab ⊙. –a) का$_1$ दे$_{1.6.8.9}$ न$_1$ द$_1$ ग्र$_2$ मुवें. मुए. मुब. तदस्य वचनं (→तस्य तद्वचनं). –b) दे$_8$ द$_1$ नारायणं (→नारायणः). –c) दे$_4$ ततो (→तयोर्). –d) ब$_2$ पुरुषौ परौ, ग्र$_2$ पुरुषर्षभौ (→पुरुषावुभौ).

६. –a) ग्र$_2$ तदाजाः (→तदाज्ञया). –b) दे$_6$ द्विजा[ः], दे$_{10}$ द्विजः (→द्विजाः). –c) का$_1$ दे$_{2.4.5}$ ते$_1$ व्य(ते$_1$ अ)हनत्, दे$_3$ व्यनयन्, दे$_{8-10}$ मुवें. मुए. मुब. व्यजयत्, द$_1$ ग्र$_{1.2}$ म$_1$ बभञ्ज (→व्यनयत्); दे$_{3.6}$ कंटभो (→कैटभं); दे$_{3.6}$ विष्णुं, दे$_{8-10}$ न$_1$ द$_1$ ग्र$_1$ म$_1$ मुवें. मुए. मुब. जिष्णुर् (→विष्णुर्). –d) दे$_{3.6.8-10}$ न$_1$ द$_1$ ग्र$_1$ म$_1$ मुवें. मुए. मुब. विष्णुश्च (→जिष्णुश्च); का$_1$ व्यहनन्, दे$_{8-10}$ मुवें. मुए. मुब. व्यजयन्, द$_1$ ग्र$_1$ म$_1$ व्यभजन् (→व्यनयन्); दे$_4$ विष्णुर्व्यहनयन् मधुं, दे$_5$ जिष्णुश्च हनयन्मधुं, ते$_1$ जिष्णुश्चाप्यनयन्मधुं, ग्र$_2$ जिष्णुश्चैवाजयन्मधुं.

७. न$_1$. ab खण्डितम्. –a) दे$_5$ °सीना (→°सीनं). –b) दे$_{8-10}$ मुवें. मुए. मुब. जगन्नाथः (→जगन्नाथं). –c) ब$_1$ दे$_3$ बभासे (?) (→बभाषे). –d) दे$_5$ स्नेहो, द$_1$ ग्र$_1$ म$_1$ प्रेमा° (→स्नेहा°); न$_1$ हरिं (→हरिः).

७ श्लोकात्परं ग्र$_2$ पुस्तके अधिकम् –विष्णुः.

८. –a) ब$_{1.3}$ दे$_{1-6}$ ते$_1$ द$_1$ ग्र$_1$ तस्मात्, न$_1$ वस्मात् (→अस्मात्); ब$_{1.3}$ दे$_{2.3}$ मयोव्य(?)मानस्, ब$_2$ मयोह्यमानास्, दे$_{8-10}$ न$_1$ म$_1$ मुवें. मुए. मुब. मयो (दे$_{10}$ °जो)ह्यमानस् (→मयोच्यमानस्). –b) ब$_2$ (त्वं) पद्माद् (→पद्माद्); न$_1$ °तरः, द$_1$ °तत (?) (→°तर); दे$_{3.6.10}$ पद्म– (दे$_{10}$°द्मा) देवतर (दे$_6$°रः) प्रभोः. –c) दे$_5$ शक्तोसि

वें. १.१०.६ ततोऽवतीर्य विश्वात्मा देहमाविश्य चक्रिणः ।
अवाप वैष्णवीं निद्रामेकीभूयाथ विष्णुना ॥९
सहस्रशीर्षनयनः शङ्खचक्रगदाधरः ।
ब्रह्मा नारायणाख्योऽसौ सुष्वाप सलिले तदा ॥१०
सोऽनुभूय चिरं कालमानन्दं परमात्मनः ।
अनाद्यनन्तमद्वैतं स्वात्मानं ब्रह्मसंज्ञितम् ॥११
ततः प्रभाते योगात्मा भूत्वा देवश्चतुर्मुखः ।
ससर्ज सृष्टिं तद्रूपां वैष्णवं भावमाश्रितः ॥१२
पुरस्तादसृजद् देवः सनन्दं सनकं तथा ।
ऋभुं सनत्कुमारं च पूर्वजं तं सनातनम् ॥१३
ते द्वन्द्वमोहनिर्मुक्ताः परं वैराग्यमास्थिताः ।
विदित्वा परमं भावं न सृष्टौ दधिरे मतिम् ॥१४
तेष्वेवं निरपेक्षेषु लोकसृष्टौ पितामहः ।
बभूव नष्टचेता वै मायया परमेष्ठिनः ॥१५
ततः पुराणपुरुषो जगन्मूर्तिर्जनार्दनः ।
व्याजहारात्मनः पुत्रं मोहनाशाय पद्मजम् ॥१६

विष्णुरुवाच ।❀

कच्चिन्न विस्मृतो देवः शूलपाणिः सनातनः ।
यदुक्तवानात्मनोऽसौ पुत्रत्वे तव शंकरः ॥१७
अवाप्य संज्ञां गोविन्दात् पद्मयोनिः पितामहः ।

---

(→शक्नोमि). –d) दे3 वोढं(?), दे5 वोहुं (?), ते1 धर्तुं (→वोढुं); का1 दे2.5 जगद्गुरुम् (→°मयं गुरुम्).

९. –a) द1 ग्र1 अतोवतीर्य, ग्र2 अतीवदर्य (→ततोऽवतीर्य). –b) ब1 चक्रिरे (→चक्रिणः). –c) दे2.8.10 अवाप्य, दे3 अधा (?)प (→अवाप); ब1 दे10 द1 वैष्णवी– (→वैष्णवीं). –d) ग्र2 एका° (→एकी°); दे4 °भूयाद्य, दे8-10 मुवें. मुए. मुब. °भूतोऽथ, द1 °भूत्वाथ (→°भूयाथ).

१०. –a) दे6 द1 सहस्रशीर्षा° (→सहस्रशीर्ष°); दे8.9 मुवें. मुए. मुब. सह तेन तया (मुवें. °था)विश्य, दे10 सह ते तनया विश्व, ग्र2 सहस्रनयनं देवं. –b) ग्र2 °गदाधरं (→°गदाधरः). –c) ब1.2 दे10 नारायणाख्यासौ (→नारायणाख्योऽसौ). –d) ब1.3 सुस्वाप, दे3 सुत्वा(?)प, (→सुष्वाप); द1 तथा, म1 तया (→तदा).

११. –b) दे1 परमानन्दमात्मनः, दे4 आनन्दं परममात्मनः. –c) दे4.5 अनाद्यं तं तमद्वैतं, ग्र1 अनाद्यनन्दमद्वैतं. –d) दे1 आत्मानं, दे3 स्वात्मनं (→स्वात्मानं); ब1 °संहितं, ते1 °संस्थितं (→°संज्ञितम्).

१२. –a) दे1 प्रभा(भा)ते (→प्रभाते); ग्र2 प्रभाते योगयुक्तात्मा. –b) ग्र2 भूता (→भूत्वा); दे3 ग्र2 देव- (→देवश्). –c) दे10 दृष्टिं, (→सृष्टिं); दे4 च तदा, दे10 तद्रूपं (→तद्रूपां). –d) दे1 पदम् (→भावम्); ब1 ग्र2 आस्थितः (→आश्रितः).

१३. ग्र2. १३a 'देवः' इत्यारभ्य १४c 'भावं न' यावत् खण्डितम्. –b) दे10 सनकं, ग्र1 सनन्तं (→सनन्दं); दे3 सनकस् (→सनकं); ते1 तदा (→तथा). –c) का1 ब1-3 दे1.2.5.6 ते1 मुब. भृगुं, दे10 ऋणं, द1 म1 रुद्रं (→ऋभुं). –d) दे1 पूर्वजे तं, ते1 पूर्वं जंतु, द1 ग्र1 म1 पूर्वजन्म (ग्र1 °न्मा) (→पूर्वजं तं).

१४. ग्र2. abc ⊙.—a) ब2 ते मायामोह°, दे4 द्वन्द्व देह°, द1 ग्र1 म1 द्वेषमोह° (→द्वन्द्वमोह°); –b) दे1.2 आश्रिताः, दे6 आस्थितः, न1 आश्रितान् (→आस्थिताः). –c) दे9 द1 ग्र1 म1 परमात्मानं (→परमं भावं). –d) दे8-10 द1 मुवें. मुए. मुब. ज्ञाने विदधिरे मतिम्.

१५. –a) का1 दे1 ब3 तेष्वेव (→तेष्वेवं); ब1 निरपक्षेषु, दे3 निरपेक्षेस्तु (→निरपेक्षेषु). –c) दे4.6 नष्टचेतो (→नष्टचेता). –d) द1 ग्र1 म1 परमात्मनः (→परमेष्ठिनः).

१६. –b) द1 ग्र1 म1 जगद्भूतिस् (→जगन्मूर्त्तिर्); दे1.8-10 द1 ग्र1.2 म1 मुवें मुए. मुब. सनातनः, दे4 जगन्मयः (→जनार्द्दनः). –c) दे 3.5 °हारात्मना, दे10 °हारात्मजं (→°हारात्मनः); ब2.3 दे3.6 पूर्वं (→पुत्रं). –d) ब2 पङ्कजं (→पद्मजम्); ग्र2 महेशाय च पद्मजम्.

❀ दे8-10 द1 ग्र1.2 म1 ⊙; दे4 श्रीभगवानुवाच; दे6 श्रीविष्णुरुवाच; न1 विष्णुः; ते1 श्रीभगवान्.

१७. –a) का1 ब1.3 दे1.2 न1 कश्चिन्न (ब1 °न्नु), दे6.8-10 मुवें. मुए. मुब. कच्चिन्नु (→कच्चिन्न); द1 विस्मितो (→विस्मृतो); दे1 ते वा (→देवः). –b) ब1 शूलहस्तः, ग्र2 शृणु वाणी (→शूलपाणि). –c) का1 ब2 दे1.2.5 आत्मनासौ, (→आत्मनोऽसौ); दे8-10 मुवें. मुए. मुब. यदुक्तो वै पुरा शम्भुः. –d) दे10 प्रवत्ये (?) (→पुत्रत्वे); का1 ब1 दे2.5.8-10 न1 मुवें. मुए. मुब. भव, दे1 न तु, ग्र2-नेव (→तव); का1 दे6.8-10 न1 मुवें. मुए. मुब. शङ्कर (→शङ्करः).

१७ श्लोकात्परं मुवें. मुए. मुब. पुस्तकयोरधिकम्.

* प्रयुक्तवान् मनो योऽसौ पुत्रत्वेन तु शंकरः (= १७cd)

१८. –a) दे.8.9 न1 द1 मुवें. मुए. अवाप (→अवाप्य); दे3 गोविन्दात्, दे6 गोविन्दः (→गोविन्दात्). –b) ब1 पद्मयोनि-, दे4 पद्मयोनिं (→पद्मयोनिः). –c) ब1 दे1 प्रजा

प्रजाः स्रष्टुमनास्तेपे तपः परमदुश्चरम् ॥१८
तस्यैवं तप्यमानस्य न किञ्चित् समवर्तत ।
ततो दीर्घेण कालेन दुःखात् क्रोधोऽभ्यजायत ॥१९
क्रोधाविष्टस्य नेत्राभ्यां प्रापतन्नश्रुबिन्दवः ।
ततस्तेभ्योऽश्रुबिन्दुभ्यो भूताः प्रेतास्तथाभवन् ॥२०
सर्वांस्तानश्रुजान् दृष्ट्वा ब्रह्मात्मानमनिन्दत ।
जहौ प्राणांश्च भगवान् क्रोधाविष्टः प्रजापतिः ॥२१
तदा प्राणमयो रुद्रः प्रादुरासीत् प्रभोर्मुखात् ।
सहस्रादित्यसंकाशो युगान्तदहनोपमः ॥२२
रुरोद सुस्वरं घोरं देवदेवः स्वयं शिवः ।
रोदमानं ततो ब्रह्मा मा रोदीरित्यभाषत ।
रोदनाद् रुद्र इत्येवं लोके ख्यातिं गमिष्यसि ॥२३
अन्यानि सप्त नामानि पत्नीः पुत्रांश्च शाश्वतान् ।
स्थानानि चैषामष्टानां ददौ लोकपितामहः ॥२४
भवः शर्वस्तथेशानः पशूनां पतिरेव च ।
भीमश्चोग्रो महादेवस्तानि नामानि सप्त वै ॥२५
सूर्यो जलं मही वह्निर्वायुराकाशमेव च ।
दीक्षितो ब्राह्मणश्चन्द्र इत्येता अष्टमूर्त्तयः ॥ २६
स्थानेष्वेतेषु ये रुद्रं ध्यायन्ति प्रणमन्ति च ।
तेषामष्टतनुर्देवो ददाति परमं पदम् ॥२७
सुवर्चला तथैवोमा विकेशी च तथा शिवा ।
स्वाहा दिशश्च दीक्षा च रोहिणी चेति पत्नयः ॥२८　वें. १.१०.२६

(→प्रजाः); ब$_{1.3}$ दे$_{10}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ सृष्टुमनास्, दे$_{8.9}$ मुवें. मुए. स्रष्टुं मनश् (→स्रष्टुमनाम्); ब$_{3}$ तेपि, दे$_{8-10}$ मुवें. मुए. चक्रे (→तेपे). –d) दे$_{1}$ परपं (→परम-); दे$_{1}$ अद्भुतम्, दे$_{3}$ दुश्वरं, दे$_{5.8-10}$ ग्र$_{2}$ मुवें. मुए. मुब. दुस्तरं (→दुश्चरं).

१९. –a) ते$_{1}$ तस्यैव (→तस्यैवं). –b) दे$_{5}$ समवर्तता (?) (→समवर्तत). –d) का$_{1}$ ब$_{1.3}$ दे$_{2.3.5.6.10}$ न$_{1}$ ते$_{1}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ क्रोधो (न$_{1}$ °र्धं) व्यजायत, दे$_{4}$ क्रोधोऽभिजायत, ग्र$_{1}$ क्रोघोऽप्यजायत (→क्रोधोऽभ्यजायत).

२०. –b) दे$_{1}$ प्रपतन् (→प्रापतन्); ग्र$_{1}$ म$_{1}$ °न्नास्रबिन्दवः (→°न्नश्रुबिन्दवः). –c) दे$_{8-10}$ मुवें. मुए. ततस्तेभ्यः समुद्भूताः. –d) दे$_{2.4.6}$ भूत- (→भूताः); ब$_{1}$ दे$_{8-10}$ न$_{1}$ द$_{1}$ मुवें. मुए. मुब. तदा (→तथा); दे$_{5.6.10}$ [अ]भवत् (→[अ]भवन्).

२१. –a) ब$_{1.2}$ न$_{1}$ ते$_{1}$ ग्र$_{2}$ अग्रजान् (ब$_{1}$ °जा), दे$_{1}$ मुवें. मुए. मुब. अग्रतो, दे$_{4}$ अयजान्, दे$_{8.9}$ अग्रजां, दे$_{10}$ अग्रहान् (→अश्रुजान्). –b) का$_{1}$ ब$_{1-3}$ दे$_{1-6.8.9}$ ते$_{1}$ ग्र$_{2}$ मुवें. मुब. अविन्दत (दे$_{4.5}$ °तः, दे$_{8}$ °वः) (→अनिन्दत); दे$_{10}$ ब्रह्मा मानन्दविन्दत. –c) दे$_{3.4}$ प्राणा(दे$_{3}$ °णा)श्च, द$_{1}$ म$_{1}$ पुत्रांश्च (→प्राणांश्च); ग्र$_{2}$ त(?)जहौ प्राणान् भगवान्.

२२. –a) ब$_{3}$ प्राणसमो, दे$_{5}$ **मयो (→प्राणमयो). –b) दे$_{1}$ मन्नो (?)र्मुखात्, ते$_{1}$ प्रभुर्मुखात् (→प्रभोर्मुखात्); दे$_{6}$ प्रादुराशीन्महेश्वरः.

२३. –a) ब$_{1}$ रुरुदुः (→रुरोद); द$_{1}$ ग्र$_{1.2}$ सस्व (ग्र$_{2}$ °त्वं)रं (→सुस्वरं); दे$_{1}$ देवो (→घोरं). –b) दे$_{4}$ °देवं (→°देवः); का$_{1}$ ब$_{3}$ दे$_{?.3.5.6}$ प्रभुः (→शिवः); दे$_{1}$ देवं स्वायंभुवं शिवः. –e) दे$_{10}$ रोदनो (→रोदनात्); दे$_{4}$ -रित्येव (→इत्येवं). –f) दे$_{4}$ ख्यातिः (→ख्यातिं); दे$_{1.4}$ गमिष्यति (→गमिष्यसि).

२४. –a) न$_{1}$ अन्यानि****नि, ग्र$_{1}$ अन्यानि सप्त***. –b) ब$_{1.2}$ दे$_{1.4.5.6}$ पत्नी-, ग्र$_{2}$ पत्नीन् (→पत्नीः); दे$_{6}$ –पुत्राश्च (→पुत्रांश्च); दे$_{6}$ शाश्वताः (→शाश्वतान्). –c) दे$_{4}$ मुवें. मुए. मुब. तषाम्, दे$_{3.9}$ यै(दे$_{3}$ वै)षाम् (→चैषाम्); ग्र$_{2}$ स्थानानि चैष नामानि.

२५. –a) का$_{1}$ मुब. सर्वस् (→शर्वस्); दे$_{5}$ सुखेशानः (→तथेशानः). –d) दे$_{4}$ स्वानि (→तानि); दे$_{8-10}$ ते (→वै).

२६. –a) ग्र$_{2}$ मरुत् (→मही); दे$_{10}$ वह्नी, न$_{1}$ द$_{1}$ ग्र$_{1}$ म$_{1}$ वायुर्, ग्र$_{2}$ भूमिः (→वह्निर्). –b) दे$_{1.4}$ ते$_{1}$ आकाश : (→आकाशं). –c) दे$_{5}$ दक्षिणो (→दीक्षितो); का$_{1}$ ब्राह्मणाश्चन्द्रः, दे$_{1}$ ब्रह्मणश्चैन्द्रः, ते$_{1}$ ब्राह्मणस्सोमः (→ब्राह्मणश्चन्द्रः); न$_{1}$ दीक्षितोर्कस्तथाचन्द्रः. –d) का$_{1}$ ब$_{2.3}$ दे$_{1-3.5.6}$ ग्र$_{2}$ ह्यष्ट° (→अष्ट°).

२७. –a) का$_{1}$ दे$_{2.10}$ स्थानेषु तेषु, दे$_{3}$ स्थाने स्वैतेषु, द$_{1}$ स्थानाद्वातेषु (→स्थानेष्वेतेषु); दे$_{8-10}$ मुवें. मुए. मुब. ये रुद्रान्, ग्र$_{2}$ योगीन्द्र (→ये रुद्रं). –b) दे$_{5}$ वा (→च). –c) ब$_{1}$ अष्टमनुर्, दे$_{4}$ अमृततुर् (?), दे$_{6}$ अष्टतनेर्(?), दे$_{8.9}$ अन्यतनुर्, दे$_{10}$ आद्यतनुर् (→अष्टतनुर्).

२८. –a) दे$_{4.8-10}$ तथैवोषा, दे$_{5}$ तथै (?) व्योमा, न$_{1}$***षा, द$_{1}$ ग्र$_{1.2}$ म$_{1}$ तथा भास्वा (→तथैवोमा). –b) ग्र$_{2}$ सुकेशी (→विकेशी); दे$_{1.3.8-10}$ मुवें. मुए. मुब. शिवा तथा (→तथा शिवा); न$_{1}$**शी ब्राह्मणं तथा शिवा. –c) ते$_{1}$ स्वाहा रिशश्व (?), ग्र$_{1}$ स्वाहा दितिश्च, ग्र$_{2}$ स्वाहा दीक्षा च (→स्वाहा दिशश्च); द$_{1}$ दा(?)क्षा च, ग्र$_{2}$ दिशश्च (→दीक्षा च).

बें.१.१०.३० शनैश्चरस्तथा शुक्रो लोहिताङ्गो मनोजवः ।
स्कन्दः सर्गोऽथ सन्तानो बुधश्चैषां सुताः स्मृताः ।।२९
एवंप्रकारो भगवान् देवदेवो महेश्वरः ।
प्रजाधर्मं च कामं च त्यक्त्वा वैराग्यमाश्रितः ।।३०
आत्मन्याधाय चात्मानमैश्वरं भावमास्थितः ।
पीत्वा तदक्षरं ब्रह्म शाश्वतं परमामृतम् ।।३१
प्रजाः सृजेति चादिष्टो ब्रह्मणा नीललोहितः ।
स्वात्मना सदृशान् रुद्रान् ससर्ज मनसा शिवः ।।३२
कपर्दिनो निरातङ्कान् नीलकण्ठान् पिनाकिनः ।
त्रिशूलहस्तानृष्टिघ्नान् महानन्दांस्त्रिलोचनान् ।।३३
जरामरणनिर्मुक्तान् महावृषभवाहनान् ।
वीतरागांश्च सर्वज्ञान् कोटिकोटिशतान् प्रभुः ।।३४
तान् दृष्ट्वा विविधान् रुद्रान् निर्मलान् नीललोहितान्।
जरामरणनिर्मुक्तान् व्याजहार हरं गुरुः ।।३५
मा स्राक्षीरीदृशीर्देव प्रजा मृत्युविवर्जिताः ।
अन्याः सृजस्व भूतेश जन्ममृत्युसमन्विताः ।।३६
ततस्तमाह भगवान् कपर्दी कामशासनः ।
नास्ति मे तादृशः सर्गः सृज त्वमशुभाः प्रजाः ।।३७

२९. –a) दे5 म1 शनैश्चरं, दे10 शनैश्चरो (→शनैश्चरस्). –b) न1 मनोजवं (→मनोजवः). –c) ब1 दे8-10 ग्र1 स्वर्गोऽथ, ब2 सर्पोथ, दे6 सर्गाप्य-, द1 सर्वार्थे-, ग्र2 सर्गोसि (→सर्गोऽथ); ब2.3 संस्थानो (→सन्तानो). –d) ते1 चासां (→चैषां); द1 म1 ध्रुवं (म1 °वश्) चैषाञ्च सूनवः, ग्र1 बुधश्चैषाञ्चसूनवः, ग्र2 बृवञ्चैषां सुता स्मृताः.

३०. –a) ब1 एवं प्रभावो (→एवं प्रकारो); दे6 भगवन् (→भगवान्). –b) दे1 महादेवो (→देवदेवो). –c) का1 ब1.3 दे2.3.5.6ते1 प्रजां (→प्रजा-); दे10 कालञ्च (→कामं च). –d) का1 त्यक्ता, द1 व्यक्ता (→त्यक्त्वा); का1 ब1.3 दे2 ते1 म1 आस्थितः (→आश्रितः).

३१. –a) ब2 आत्मना ध्यायतात्मानम्, दे10 अत्मन्याध्याय चात्मानम्, न1 आत्मनाधाय चात्मानम्, ते1 आत्मन्येव परात्मानम्, ग्र2 आत्मन्याथा च यात्मानं (?). –b) का1 ब2 दे1.2.5 द1 ग्र1 आश्रितः (दे2 °ताः); दे6 आस्थिताः (→आस्थितः). –c) दे4 मत्वा, न1 ध्यात्वा, ग्र2 ज्ञात्वा, (→पीत्वा); दे4 तदन्तरं (→तदक्षरं); दे10 ग्र1.2 ब्रह्मा (→ब्रह्म). –d) दे3 शाश्व(त)तं (→शाश्वतं); का1 दे3 ते1 ग्र2 परमावृतं, दे5 परमासृतं (→परमामृतम).

३२. ग्र2. ३२d –३५a ⊙ (द्र. सं.). –a) ब1 दे4.9 न1 प्रजा (?) (→प्रजाः); का1 ब2.3 दे2.3.5 व्यादिष्टो, दे1 ग्र1 म1 चोद्दिष्टो, मुब. आदिष्टो (→चादिष्टो). –c) ब1-3 ते1 आत्मना, दे3 स्वात्मनः, दे6 स्वात्मान (→स्वात्मना); का1 ब3 दे2.3.5.6 पुत्रान् (→रुद्रान्); दे10 स्वात्मना स य ईशानः(?). –d) न1 असृजन् (→ससर्ज).

३३. ग्र2. ⊙ (द्र. ३२ पा. वि.). –a) दे1 कपर्दि*****. –b) दे3.6 नीलकण्ठो (→नीलकण्ठान्). –c) ब1.2 दे4.5 न1 द1 ग्र1 म1 दृष्टिघ्नान्, दे3 ऋष्टि प्रान्, दे6 ते1 वृष्टिघ्नान्, दे8-10 मुबें. मुए. मुब. उद्रिक्तान् (→ऋष्टिघ्नान्). –d) दे8-10 द1 ग्र1 म1 मुबें. मुए. मुब. सदानन्दान् (→महानन्दान्); ब3 च त्रिलोचनान्, दे6 त्रिलोचनः (→त्रिलोचनान्).

३४. ग्र2. ⊙. (द्र. ३२ पा. वि.). –c) दे1 वा(?)तरागांश्च, दे3 वीतरागश्च, न1 पीतवर्णान् स, द1 ग्र1 म1 वीतरागान् स (→वीतरागांश्च); दे8 सर्वज्ञाः, द1 ग्र1 म1 धर्मज्ञान्, (→सर्वज्ञान्). –d) दे3.6 °शतप्रभुः (→°शतान् प्रभुः).

३५. ग्र2. a ⊙ (द्र. ३२ पा. वि.). –a) दे8 तान् सृष्ट्वा, द1 ग्र1 म1 स दृष्ट्वा (→तान् दृष्ट्वा); द1 ग्र1 म1 भगवान् (→विविधान्). –b) ब1 °लोहितः, दे6 °लोहिता (→°लोहितान्); दे1 नीलनिर्मललोहितान्. –d) दे1 हरे गुरुः, दे10 हरं गुरुं, ते1 हरं पुनः, + हरं गुरुः, द1 ग्र1.2 स्वयं प्रभुः, म1 स्वयं प्रभुः, + स्वयं गुरुः (→हरं गुरुः).

३५ श्लोकात्परं ग्र2 पुस्तके अधिकम्—ब्रह्मा.

३६. –a) दे1.2.5 न1 स्राक्षी [:], दे4 मास्ताक्षी [:], दे6 मायाक्षी [:], द1 मासृ(?)क्षी [:] (→मा स्राक्षी [:]); ते1 ईदृशं, द1 ग्र1 म1 ईदृशान् (→ईदृशीर्). –b) दे3.5 मृत्युर् (→मृत्यु-); का1 ब1 दे3 विवर्जिता (दे3 °तां), दे6 विवर्जितः, दे10 विवर्जितं (→विवर्जिताः). –c) ब1 दे1.4.5 ग्र1 अन्या(?) (→अन्याः); दे3.6 सृजतु (→सृजस्व); ते1 भूतेषु (→भूतेश). –d) का1 जरामृत्यु°, ब3 जगन्मृत्यु° (→जन्ममृत्यु°); दे6 °समृद्धिमान्, दे10 द1 °समन्वितः (→°समन्विताः).

३७. –b) ब2 सोमभूषणः, दे3.6 न1 कामनाशनः, दे4 पाकशासनः (→कामशासनः). –d) दे3.6 म1 सृजध्वं, दे10 सृजन्तं (→सृज त्वम्); दे4 अनुजाः, दे8-10 द1 ग्र1 म1 मुबें. मुए. मुब. विविधाः (→अशुभाः).

ततः प्रभृति देवोऽसौ न प्रसूतेऽशुभाः प्रजाः ।
स्वात्मजैरेव तै रुद्रैर्निवृत्तात्मा ह्यतिष्ठत ।
स्थाणुत्वं तेन तस्यासीद् देवदेवस्य शूलिनः ॥३८
ज्ञानं वैराग्यमैश्वर्यं तपः सत्यं क्षमा धृतिः ।
स्रष्टृत्वमात्मसंबोधो ह्यधिष्ठातृत्वमेव च ॥३९
अव्ययानि दशैतानि नित्यं तिष्ठन्ति शंकरे ।
स एव शंकरः साक्षात् पिनाकी परमेश्वरः ॥४०
ततः स भगवान् ब्रह्मा वीक्ष्य देवं त्रिलोचनम् ।
सहैव मानसैः पुत्रैः प्रीतिविस्फारिलोचनः ॥४१
ज्ञात्वा परतरं भावमैश्वरं ज्ञानचक्षुषा ।
तुष्टाव जगतामेकं कृत्वा शिरसि चाञ्जलिम् ॥४२

ब्रह्मोवाच ।❀
नमस्तेऽस्तु महादेव नमस्ते परमेश्वर ।
नमः शिवाय देवाय नमस्ते ब्रह्मरूपिणे ॥४३
नमोऽस्तु ते महेशाय नमः शान्ताय हेतवे ।
प्रधानपुरुषेशाय योगाधिपतये नमः ॥४४
नमः कालाय रुद्राय महाग्रासाय शूलिने ।
नमः पिनाकहस्ताय त्रिनेत्राय नमो नमः ॥४५
नमस्त्रिमूर्त्तये तुभ्यं ब्रह्मणो जनकाय ते ।
ब्रह्मविद्याधिपतये ब्रह्मविद्याप्रदायिने ॥४६
नमो वेदरहस्याय कालकालाय ते नमः ।
वेदान्तसारसाराय नमो वेदात्ममूर्त्तये ॥४७
नमो बुद्धाय शुद्धाय योगिनां गुरवे नमः । वें. १.१०.४९

---

३८. ग्र1 म1. ab ⊙ (द्र. सं.) –a) ब1 दे1.6 द1 देवेशो (→देवोऽसौ). –b) दे8-10 प्रजा (दे10 °जाः) शुभाः (→[अ]शुभाः प्रजाः). –c) ब2 दे3.6 आत्मजै[ः], दे4 सात्मजै[ः] (→स्वात्मजै[ः]); ते1 अपि तै[ः], ग्र2 एव ते (→एव तै[ः]). –d) ब2 दे4.5 निर्वृतात्मा, दे2 निष्ठितात्मा, ग्र1 निवृत्यात्मा (→निवृत्तात्मा); का1 अतिष्ठत, ब1 दे1.2 4-6 ते1 [अ] व तिष्ठत (ब1 दे6 °ते, दे4 °ति), ब2 ग्र1.2 म1 व्यतिष्ठ (ग्र1 °ष्ठि) त, दे10 ह्यतिष्ट यः (?) (→ह्यतिष्ठत); न1 निर्वेदत्वात्मावतिष्ठत. –e) दे10 स्थाणु चे (?) तेन, म1 स्थाणुन्तेन च (→स्थाणुत्वं तेन).

३९. –a) दे5 जानन् (→ज्ञानं); दे1 ज्ञानविज्ञानमैश्वर्यं. –c) का1 ब3 ग्र1 सृष्टत्वं, ब2 दे3.5.6 स्रष्टत्वम् (दे3 °त्वां), दे1 द1 स्र (द1 सु) ष्टुत्वम्, दे4 श्रृणु त्वम्, दे8.9 न1 ते1 मुवें. मुए. मुब. द्रष्टृ (दे9 °ष्टु) त्वम्, दे10 दृष्टत्वं, ग्र2 सृजत्वम्, म1 सुषुत्वम् (→स्रष्टृत्वम्); दे3.6 आत्मसंरोधो, दे4 आत्मा संवादो, म1 आत्मसंयोग-(→आत्मसंबोधो); ब1 स्रष्टत्वमात्र-संबोधो. –d) दे5 ह्यधियातृत्वमेव च, दे10 प्रह्यधिष्ठात्रमेव च.

४०. –b) द1 सत्यं (→नित्यं); दे5 तिष्ठति (→तिष्ठन्ति). –c) ब1 स एष, दे8-10 मुवें. मुए. मुब. एवं स (→स एव).

४१. –a) द1 स्थितः (→ततः). –b दे4) देवी (→वीक्ष्य). –c) ग्र2 विहैव (?) (→सहैव); मुब. मानसः (→मानसैः); दे1.8-10 द1 ग्र1.2 म1 मुवें. मुए. मुब. रुद्रैः (→पुत्रैः); न1 सहैव रुद्रैस्तैरेवं. –d) द1 प्रति° (→प्रीति°); ब1 °विक्षारिलोचनः, दे4 ते1 द1 ग्र1 म1 °विस्फारि (म1 °र) लोचनैः, न1 °विस्फारितेक्षणः, ग्र2 °विस्फारिलोचनं (→°विस्फारिलोचनः).

४२. –a) ग्र2 ब्रह्मा (→भावम्). –b) ब3 ऐश्वर्यं (→ऐश्वरं). –c) दे4.8-10 ते1 मुवें. मुए. मुब. ईशं (→°एकं). –d) दे5 वाञ्जलिं (→चाञ्जलिम्).

❀ दे10 ते1. ⊙; दे1 ब्र* वा*; द1 ग्र1 म1 ब्रह्मा.

४३. ग्र2. ४३b–४४a ⊙ (द्र. सं.) –b) ब1 दे4 परमेश्वरः (→ परमेश्वर); द1 ग्र1 म1 नमस्तेऽस्तु सुरेश्वर.

४४. ग्र2. a ⊙.–a) द1 ग्र1 म1 महादेव (→महेशाय). –b) ग्र2 शंभवे (→हेतवे). –d) ब3 यागा° (→योगा°).

४५. –b) दे8 महाग्राधा(?)य, ते1 महोग्रासाय (→ महाग्रासाय). –d) ते1 ग्र1 म1 त्रिणे° (→त्रिने°).

४६. –b) का1 ब1 दे1.4.8-10 न1 द1 ग्र2 म1 मुवें. मुए. मुब. ब्रह्मणे (→ब्रह्मणो). –d) ग्र1 ब्रह्मा° (→ब्रह्म°); दे6 °प्रदायिणे (→प्रदायिने).

४६ श्लोकस्य ab, cd मध्ये द1 ग्र1 म1. अधिकम्.
* नमो ब्रह्मण्यरूपाय ब्रह्माधिपतये नमः । ( = ४६ab)
[म1 °देवाय (→°रूपाय). ]

४७. ग्र2. ४७c–५०d ⊙ (द्र. सं.); दे4. ४७. c–४८b ⊙ (द्र. सं.). –a) दे10 देव° (→वेद°); का1 °हरस्याय (→°रहस्याय). –c) ते1 वेदान्तसाराय नमो. –d) का1 दे1 2.5. न1 म1 वेदान्त° (→वेदात्म°).

४८. ग्र2. ⊙; दे4. ab ⊙ (द्र. ४७ पा. वि.). –a) दे10 बुधात्म-, न1 बुधाय (→बुद्धाय); दे8.9 मुवें. मुए. रुद्राय

वें. १.१०.५०

प्रहीणशोकैर्विविधैर्भूतैः परिवृताय ते ॥४८

नमो ब्रह्मण्यदेवाय ब्रह्माधिपतये नमः ।
त्रियम्बकाय देवाय नमस्ते परमेष्ठिने ॥४९

नमो दिग्वाससे तुभ्यं नमो मुण्डाय दण्डिने ।
अनादिमलहीनाय ज्ञानगम्याय ते नमः ॥५०

नमस्ताराय तीर्थाय नमो योगर्द्धिहेतवे ।
नमो धर्माधिगम्याय योगगम्याय ते नमः ॥५१

नमस्ते निष्प्रपञ्चाय निराभासाय ते नमः ।
ब्रह्मणे विश्वरूपाय नमस्ते परमात्मने ॥५२

त्वयैव सृष्टमखिलं त्वय्येव सकलं स्थितम् ।
त्वया संह्रियते विश्वं प्रधानाद्यं जगन्मय ॥५३

त्वमीश्वरो महादेवः परं ब्रह्म महेश्वरः ।
परमेष्ठी शिवः शान्तः पुरुषो निष्कलो हरः ॥५४

त्वमक्षरं परं ज्योतिस्त्वं कालः परमेश्वरः ।
त्वमेव पुरुषोऽनन्तः प्रधानं प्रकृतिस्तथा ॥५५

भूमिरापोऽनलो वायुर्व्योमाहङ्कार एव च ।
यस्य रूपं नमस्यामि भवन्तं ब्रह्म संज्ञितम् ॥५६

यस्य द्यौरभवन्मूर्द्धा पादौ पृथ्वी दिशो भुजाः ।
आकाशमुदरं तस्मै विराजे प्रणमाम्यहम् ॥५७

---

(→शुद्धाय). –b) दे$_{5}$ योगाणां (→योगिनां); द$_{1}$ ग्र$_{1}$ म$_{1}$ पतये (→गुरवे). –c) का$_{1}$ ब$_{1.2}$ दे$_{1.2.6}$ प्रहीन°, दे$_{3}$ प्रहीणा°, दे$_{5}$ ते$_{1}$ प्रवीण° (→प्रहीण°); मुब. °शोक– (→°शोकैर्). –d) दे$_{3}$ मुब. भूतः, दे$_{10}$ मूर्तैः (→भूतैः); का$_{1}$ परिव्रताय, ते$_{1}$ च प्रवृताय (→परिवृताय).

४९. ग्र$_{2}$. ⊙ (द्र. ४७ पा. वि.); द$_{1}$ ग्र$_{1}$ म$_{1}$. ab ⊙ (४६b अनन्तरं वर्तते). –b) ब$_{1}$ योगाधिपतये (→ब्रह्माधिपतये). –c) का$_{1}$ ब$_{1-3}$ दे$_{2.3.6}$ मुवें. मुए. मुब. त्र्यम्बकायादि–, दे$_{4.8-10}$ त्र्यंबकाय च, दे$_{5}$ अंबकायादि–, ते$_{1}$ अव्यक्तायादि–, म$_{1}$ त्र्यंबकाय* (→त्रियम्बकाय) –d) दे$_{3.6}$ ब्रह्माधि– (→नमस्ते).

५०. ग्र$_{2}$. ⊙ (द्र. ४७ पा. वि.). –a) म$_{1}$ नित्यं (→तुभ्यं). –b) द$_{1}$ नित्यं (→नमो); का$_{1}$ दे$_{2.5}$ मु (दे$_{5}$ म) ण्डाय मुण्डिने (→मुण्डाय दण्डिने). –c) दे$_{10}$ अनादिगम्ययोगाय, न$_{1}$ आदिमध्यान्तहीनाय. –d) दे$_{10}$ योग° (→ज्ञान°).

५१. दे$_{8-10}$. ⊙. –a) द$_{1}$ नमस्काराय (→नमस्ताराय); ब$_{2.3}$ तीव्राय, ते$_{1}$ तीराय (→तीर्थाय). –b) ग्र$_{2}$ योगादि° (→योगर्द्धि°); दे$_{5}$ मनसो योगहेतवे. –c) दे$_{1.4}$ ग्र$_{2}$ मुवें. मुए. मुब. नमो धर्मादिगम्याय, ग्र$_{1}$ नमो धर्माय गम्याय. –d) ब$_{3}$ दे$_{2-6}$ न$_{1}$ वै (→ते).

५१ श्लोकात्परं ग्र$_{2}$ पुस्तके अधिकम्—

* प्रवीणनाधसं शोकैः भूतैः परिवृतायते ।
नमो ब्रह्मण्यदेवाय ब्रह्माधिपतये नमः ।
त्र्यंबकाय देयाय नमस्ते परमेष्ठिने ।
नमो दिग्वाससे तुभ्यं नमो मुण्डाय दण्डिने ।
अनादिमलहीनाय ज्ञानगम्याय ते नमः ।
(=४८c–५०)

५२. म$_{1}$. ab ⊙; दे$_{3.6}$ bc ⊙ (द. सं.) –b) ब$_{1-3}$ निरारम्भाय, दे$_{4}$ निराभ्यासाय, द$_{1}$ निराहासाय (→निराभासाय); का$_{1}$ दे$_{2}$ वै (→ते).

५३. –b) दे$_{4}$ न$_{1}$ त्वयैव (→त्वय्येव). –c) दे$_{6.10}$ संहृ (दे$_{10}$ °ह्री) यते, ते$_{1}$ संप्रीयते (→संह्रियते); ते$_{1}$ विश्व– (→विश्वं); –d) ते$_{1}$ प्रधानं त्वं (→प्रधानाद्यं); का$_{1}$ दे$_{5}$ जगन्मयं, ब$_{1}$ दे$_{3.6}$ जगन्मयः (→जगन्मय).

५४. दे$_{5}$. ५४c–५५b ⊙. –a) दे$_{1}$ त्वमीशानो, दे$_{3}$ त्वमीश्वरे (→त्वमीश्वरो); न$_{1}$ महादेव (→महादेवः). –b) दे$_{1}$ द$_{1}$ परब्रह्म, ग्र$_{1}$ परं ब्रह्मा (→परं ब्रह्म); दे$_{1}$ महेश्वर (→महेश्वरः). –d) द$_{1}$ ग्र$_{1.2}$ म$_{1}$ हरिः (→हरः).

५५. दे$_{5}$. ab ⊙; दे$_{1}$.५५d–५६a ⊙ –a) द$_{1}$ ग्र$_{1}$ म$_{1}$ अजरस्त्वं (→त्वमक्षरं). –b) दे$_{10}$ कालं (→कालः). –c) का$_{1}$ द$_{1}$ [अ]नन्त (→[अ]नन्तः). –d) ब$_{1}$ त्वमेव, दे$_{3}$ ते$_{1}$ प्रधान-(→प्रधानं); का$_{1}$ दे$_{2.3.6}$ ते$_{1}$ प्रकृति (दे$_{2}$ °तिः) स्थितः (दे$_{3}$ °तं), ब$_{1}$ प्रकृतिस्थिते, ब$_{2}$ प्रकृतिश्चया, ब$_{3}$ प्रकृतिस्थिता, दे$_{5}$ प्रकृते स्थितः (→प्रकृतिस्तथा).

५६. दे$_{1}$.a ⊙ –a) दे$_{3.6}$ मनो (→[अ]नलो). –b) दे$_{4.5}$ [अ]हंकारम् (→[अ]हंकार[ः]); दे$_{3}$ एक च (→एव च); ब$_{1}$ व्योमाहंकारायमेव च, दे$_{1}$ त्वमहंकार एव च. –c) दे$_{4}$ यद्रूपं तन् (→यस्य रूपं); ब$_{1}$ दे$_{1.3.4.6}$ न पश्यामि, ते$_{1}$ न पश्यन्ति (→नमस्यामि). –d) ब$_{1}$ अभंस्तद्, न$_{1}$ तमं तं, ते$_{1}$ भवन्तो, ग्र$_{2}$ पश्यामि (→भवन्तं); ब$_{1}$ °संहितं, ब$_{3}$ °संस्थितां (→°संज्ञितम्).

५७ –a) ब$_{3}$ यस्या, दे$_{10}$ तस्य (→यस्य); दे$_{3.6}$ द्वारभवन्, द्यो रभवन् (?) (→द्यौरभवन्); का$_{1}$ दे$_{2.4}$ न$_{1}$ मूर्ध्ना (→मूर्द्धा). –b) ब$_{1}$ न$_{1}$ भुजं, ते$_{1}$ मुखाः (→भुजाः).

संतापयति यो विश्वं स्वभाभिर्भासयन् दिशः ।
ब्रह्मतेजोमयं नित्यं तस्मै सूर्यात्मने नमः ॥५८
हव्यं वहति यो नित्यं रौद्री तेजोमयी तनुः ।
कव्यं पितृगणानां च तस्मै वह्न्यात्मने नमः ॥५९
आप्याययति यो नित्यं स्वधाम्ना सकलं जगत् ।
पीयते देवता सङ्घैस्तस्मै सोमात्मने नमः ॥६०
विभर्त्यशेषभूतानि योऽन्तश्चरति सर्वदा ।
शक्तिर्माहेश्वरी तुभ्यं तस्मै वाय्वात्मने नमः ॥६१
सृजत्यशेषमेवेदं यः स्वकर्मानुरूपतः ।
स्वात्मन्यवस्थितस्तस्मै चतुर्वक्त्रात्मने नमः ॥६२
यः शेषशयने शेते विश्वमावृत्य मायया ।
स्वात्मानुभूतियोगेन तस्मै विश्वात्मने नमः ॥६३
बिभर्त्ति शिरसा नित्यं द्विसप्तभुवनात्मकम् ।
ब्रह्माण्डं योऽखिलाधारस्तस्मै शेषात्मने नमः ॥६४
यः परान्ते परानन्दं पीत्वा दिव्यैकसाक्षिकम् ।
नृत्यत्यनन्तमहिमा तस्मै रुद्रात्मने नमः ॥६५
योऽन्तरा सर्वभूतानां नियन्ता तिष्ठतीश्वरः ।
तं सर्वसाक्षिणं देवं नमस्ये भवतस्तनुम् ॥६६ श्वे. १.१०.६६

–c) दे10 उदरे (→उदरं); ब2 तं वै (→तस्मै). –d) ब2.3 न1 विराजं, दे10 राज्ञेव, ते1 विरजे (→विराजे); न1 प्रणवाम्यहं (→प्रणमाम्यहं).

**५८.** –a) दे2 संतोषयति (→सन्तापयति); ब3 दे8-10 द1 ग्र1.2 म1 मुवें. मुए. मुब. नित्यं (म1 °त्या) (→विश्वं). –b) म1 भावयन् (→भासयन्); न1 दिशं (→दिशः). –c) ब1 ब्रह्म, + दिव्यं, ब2 दिव्यं, दे1.8-10 द1 ग्र1.2 म1 मुवें. मुए. मुब. विश्वं (→नित्यं); ते1 ब्रह्मतेजोमयी निह्वं (?).

५८ श्लोकस्य तृतीय चरणानन्तरं ब1.3 ग्रन्थयोरधिकम्-
* स्वधाम्ना सकलं जगत् यस्मात् प्रकाशते विश्वं ।।
( = ६० b ).

**५९.** –a) द1 या (→यो). –b) ते1 ग्र1 रौद्रि (→रौद्री). दे1.2.4 तेजोमयं, दे10 म1 तेजोमया (→तेजोमयी); दे1 जगत्, दे2 विभु (→तनुः). –d) का1 दे10 ब्रह्मात्मने, दे8 वृद्धयात्मने, ग्र2 हन्यात्मने (→वह्न्यात्मने).

**६०.** दे6. ६०-६१ ⊙ (द्र. सं.); दे4. ⊙ (द्र. सं.). –b) दे8.9 स्वधात्मा, दे10 त्वद्धाम्ना (→स्वधाम्ना). –c) दे10 प्रीतये, ग्र2 पीतये (→पीयते); ग्र2 वसतां संघैस् (→देवता संघैस्). –d) दे1.8-10 ग्र1.2 म1 मुवें. मुए. मुब. चन्द्रात्मने (→सोमात्मने).

**६१.** दे6 ⊙ (द्र. ६० पा. वि.); ग्र2. ⊙ (द्र. सं.). –a) ग्र1 विभर्ति, म1 विभज्य (→विभर्त्य-). –b) ब1 दे10 मुवें. मुए. मुब. यान्तश्, दे1 योऽयं, दे5 योन्तं (→योऽन्तश्). –c) दे4 द1 महेश्वरी (→माहेश्वरी). –d) ब2 बाह्यात्मने, दे3 वाद्यात्मने, दे10 वा स्यात्मने, द1 विद्यात्मने (→वाय्वात्मने).

**६२.** म1. ६२–६७ ⊙ (द्र. सं.). –a) दे4 सृजस्य°, ग्र2 व्रजत्य° (→सृजत्य°); न1 सृजत्यशेषभूतानि. –b) ग्र1 यश्च, ग्र2 यत्तु (→यः स्व-); ते1 °रूपानु° (→°कर्मानु°). –c) ब3 आत्मन्यादौ स्थितस्, दे1 न1 स्वात्मन्यवस्थितं, दे8-10 मुवें. मुए. मुब. आत्मन्यवस्थितस्, ते1 आत्मन्येवस्थितस्, द1 ग्र1 स्वात्मनावस्थितं, ग्र2 स्वात्मनैव स्थितं (→स्वात्मन्यवस्थितस्). –d) दे1.4 ते1 ग्र1 °वक्त्राय ते (→°वक्त्रात्मने).

**६३.** म1. ⊙ (द्र. ६२ पा. वि.). –a) दे1 यः शेषशयनं शेते, दे8-10 द1 ग्र1.2 मुवें. मुए. मुब. यः शेते शेषशयने. –b) दे4 विश्वमाहात्म्य–, न1 विश्वमाहृत्य (→विश्वमावृत्य); ग्र2 मायतः (→मायया). –c) ब1 दे3.6 स्वात्मात्मभूति°, ब2 आत्मात्मभूति°, दे4 स्वात्मनो भूति°, ग्र1 स्वस्वानुभूति° (→स्वात्मानुभूति°). –d) दे1-3.5 मुवें. मुए. मुब. विष्णवात्मने, द1 ग्र1 योगात्मने (→विश्वात्मने).

**६४.** म1. ⊙ (द्र. ६२ पा. वि.). –b) का1 ब3 दे2.3.8-10 द्विः सप्त°, दे5 यः सप्त° (→द्विसप्त°); दे4 °भवना° (→°भुवना°). –c) दे4 °धारा, न1 °धारं (→°धारस्).

**६५.** म1. ⊙ (द्र. ६२ पा. वि.); दे4. ⊙ (द्र. सं.). –a) न1 परस्तात् (→परान्ते); दे1 परानन्दी, दे5 परानन्दे, द1 परानन्तः (→परानन्दं). –b) ब1 दे5 न1 ग्र1 मुवें. मुए. मुब. देव्यैकसाक्षिकं (ग्र1 °णं), ब2 दे1 द1 दिव्यं (द1 °व्ये) कसाक्षिणं, दे8.9 देह्नैकसासाक्षिणः, दे10 देहिकसाक्षिकः (?), ते1 दिव्यौजसारिकम्, ग्र2 देवैकसाक्षिकः (→दिव्यैकसाक्षिकम्). –c) दे 1 देवमनन्तमहिमा. –d) न1 ते1 रुद्राय ते (→रुद्रात्मने).

**६६.** म1. ⊙ (द्र. ६२ पा. वि.). –a) ग्र2 योन्तरास् (→योन्तरा); दे10 योन्तरात्माश्रुतानां. –b) दे4 नियन्ता विष्णुरीश्वरः. –c) ग्र2 तत् (→तं). –d) ब1 दे5.8.9 नमस्ते (→नमस्ये); दे4 भवते, दे9 भवद्यस् (?), ग्र1 मुवें. मुए. मुब. विश्वतस्, ग्र2 * * नस् (→भवतस्).

६६ श्लोकानन्तरं का1 ब2 दे2.5 द1 ग्र1.2 मुवें. अधिकम्–
४. *यस्य केशेषु जीमूता नद्यः सर्वाङ्गसन्धिषु ।
कुक्षौ समुद्राश्चत्वारस्तस्मै तोयात्मने नमः ॥

वें १.१०.६६ यं विनिद्रा जितश्वासाः संतुष्टाः समदर्शिनः ।
ज्योतिः पश्यन्ति युञ्जानास्तस्मै योगात्मने नमः ॥६७
यया संतरते मायां योगी संक्षीणकल्मषः ।
अपारतरपर्यन्तां तस्मै विद्यात्मने नमः ॥६८
यस्य भासा विभातीदमद्वयं तमसः परम् ।
प्रपद्ये तत् परं तत्त्वं तद्रूपं परमेश्वरम् ॥६९
नित्यानन्दं निराधारं निष्कलं परमं शिवम् ।
प्रपद्ये परमात्मानं भवन्तं परमेश्वरम् ॥७०
एवं स्तुत्वा महादेवं ब्रह्मा तद्भावभावितः ।
प्राञ्जलिः प्रणतस्तस्थौ गृणन् ब्रह्म सनातनम् ॥७१

ततस्तस्मै महादेवो दिव्यं योगमनुत्तमम् ।
ऐश्वर्यं ब्रह्मसद्भावं वैराग्यं च ददौ हरः ॥७२
कराभ्यां सुशुभाभ्यां च संस्पृश्य प्रणतार्तिहा ।
व्याजहार स्वयं देवः सोऽनुगृह्य पितामहम् ॥७३
यत्त्वयाऽभ्यर्थितं ब्रह्मन् पुत्रत्वे भवतो मम ।
कृतं मया तत् सकलं सृजस्व विविधं जगत् ॥७४
त्रिधा भिन्नोऽस्म्यहं ब्रह्मन् ब्रह्मविष्णुहराख्यया ।
सर्गरक्षालयगुणैर्निष्कलः परमेश्वरः ॥७५
स त्वं ममाग्रजः पुत्रः सृष्टिहेतोर्विनिर्मितः ।
ममैव दक्षिणादङ्गाद् वामाङ्गात् पुरुषोत्तमः ॥७६

---

[ब$_2$ मुवें. पुस्तकयोः अयं श्लोकः ६६ श्लोकस्य ab, cd मध्ये आगतः. –1) दे$_2$ °सिन्धुषु (→°सन्धिसु).]

**६७.** म$_1$. ⊙ (द्र. ६२ पा. वि.). –a) दे$_4$ यो, दे$_8$ ये, (→यं); ब$_1$ दे$_4$ जितः स्वास(ब$_1$ °साः), दे$_3$ जितस्वासाः, ग्र$_2$ विनिश्वास (→जितश्वासाः). –b) दे$_4$ संतुष्टा सं* दर्शिनः.

**६८.** –a) दे$_6$ यया संभरते, ग्र$_2$ यथा संहरते (→यया संतरते); द$_1$ माया (→मायां). –b) ब$_1$ योगीश (→योगी सं-); दे$_4$ संक्षीय° (→संक्षीण°); ग्र$_2$ °कल्मषाः (→°कल्मषः). –c) दे$_{3.6}$ अपारतवपर्यन्तान् (दे$_6$° तां), दे$_4$ अपारतीत (?) पर्यन्तां, दे$_8$ अपरेतरपर्यन्तां, न$_1$ अपारपारपर्यन्तां, द$_1$ ग्र$_{1.2}$ अपारपा(ग्र$_2$ °ती)रपर्यन्तस्, म$_1$ अपारतीरकान्तस्मै. –d) म$_1$ नमो (→तस्मै); ग्र$_2$ विश्वात्मने (→विद्यात्मने).

**६९.** –a) दे$_{10}$ भासो (→भासा); दे$_4$ विभातीहम्, दे$_{8-10}$ मुवें. मुए. मुब. विभात्यर्को (→विभातीदम्). –b) दे$_{8-10}$ मुवें. मुए. मुब. महो यत्, द$_1$ ग्र$_{1.2}$ उद्वयं, म$_1$ उदयन् (→अद्वयं); ब$_1$ तपसः (→तमसः). –c) ब$_3$ प्रपद्यते, दे$_{10}$ प्रपद्यैतन् (→प्रपद्ये तत्); ते$_1$ रूपं (→तत्त्वं). –d) ब$_3$ दे$_5$ त्वद्रूपं, न$_1$ तद्रुद्रं, ते$_1$ पृथिव्यां (→तद्रूपं); दे$_{3.4.8.9}$ मुवें. मुए. मुब. पारमेश्वरं, द$_1$ ग्र$_1$ म$_1$ परमेष्ठिनः, ग्र$_2$ परमेश्वरः (→परमेश्वरं).

**७१.** –b) न$_1$ °भावितं, ग्र$_2$ °भावतः (→°भावितः). –c) ब$_1$ प्रणतं, दे$_{10}$ प्राणतस् (→प्रणतस्); ते$_1$ ग्र$_2$ तस्मै (→तस्थौ). –d) दे$_4$ गृणद्, दे$_5$ पठन्, न$_1$ [अ]गृह्लाद्, ग्र$_1$ गृह्लन् (→गृणन्); दे$_3$ ब्रह्मा (→ब्रह्म); ग्र$_2$ सनातनः (→सनातनं).

**७२.** –a) का$_1$ नमस्तस्मै, दे$_{8-10}$ द$_1$ ग्र$_{1.2}$ म$_1$ मुवें. मुए. ततस्तस्य (→ततस्तस्मै); ते$_1$ महायोगी (→महादेवो). –b) ते$_1$ द$_1$ ग्र$_1$ दिव्य- (→दिव्यं). –c) दे$_{4.8-10}$ द$_1$ ग्र$_{1.2}$ म$_1$ मुवें. मुए. मुब. ऐश्वरं (→ऐश्वर्यं); ब$_3$ सम्भावं, दे$_6$ सद्भाव- (→सद्भावं). –d) द$_1$ ग्र$_1$ म$_1$ प्रददौ (→च ददौ).

**७३.** –a) का$_1$ ब$_3$ स्वशुभाभ्यां, दे$_1$ संपुटाभ्यां, दे$_2$ स्वप्रभाभ्यां, ते$_1$ स शुभाभ्यां, ग्र$_2$ तु शुभाभ्यां, मुवें. कोमलाभ्यां (→सुशुभाभ्यां); म$_1$ उभाभ्यामथ बाहुभ्यां. –b) ग्र$_1$ प्रस्पृश्य, ग्र$_2$ पस्पर्शत्, म$_1$ पस्पर्श (→संस्पृश्य); दे$_6$ ग्र$_2$ प्रणतार्तिह (?) (→प्रणतार्तिहा). –c) दे$_{8-10}$ मुवें. मुए. मुब. स्मयन्ने- (दे$_{10}$ °न्नै) व, न$_1$ स्मयं देवः, ते$_1$ स्वयं वेदाश्, म$_1$ स्वयं देवं (→स्वयं देवः); दे$_4$ स्वयं देवः सोनुगृह्य. –d) दे$_4$ व्याजहार, दे$_{10}$ सोनुगृह्यं, ते$_1$ चानुगृह्य (→सोऽनुगृह्य).

**७४.** दे$_{4.10}$. ७४ b–७५a ⊙ (द्र. सं.). –a) ब$_1$ दे$_3$ [अ]भ्यन्दितं, दे$_5$ [अ]भ्याथ तद्, दे$_6$ [अ]भ्यर्चितं, म$_1$ [अ]भ्युत्थितं (→[अ]भ्यर्थितं). –b) ब$_1$ दे$_{1.8.9}$ न$_1$ म$_1$ मुवें. मुए. मुब. भवता (→भवतो); ग्र$_2$ [अ]नघ (→मम). –c) ब$_3$ यया, दे$_{3.6}$ त्वया (→मया); का$_1$ कृतं तत् सकलं ब्रह्मन्. –d) द$_1$ ग्र$_{1.2}$ म$_1$ सृ (ग्र$_2$ ब्र) ज त्वं (→सृजस्व).

**७५.** दे$_{4.10}$. a ⊙ (द्र. ७४ पा. वि.). –a) दे$_{1.3}$ ब्रह्म (→ब्रह्मन्). –b) का$_1$ ब$_{2.3}$ दे$_{2.5}$ न$_1$ °शिवाख्यया (→°हराख्यया). –c) दे$_{10}$ °रक्षात्मय°, ग्र$_2$ °लक्षालय° (→°रक्षालय°); दे$_4$ °गुणं, ते$_1$ गुणो, म$_1$ गुणान् (→गुणैः). –d) दे$_{10}$ निष्फलः (→निष्कलः).

**७६.** –a) दे$_4$ सत्यं (→स त्वं); का$_1$ ब$_2$ दे$_{10}$ ममाग्रतः, दे$_4$ मयाग्रजः, दे$_5$ ममाग्रजा (→ममाग्रजः). –b) ते$_1$ °हेतुर (→°हेतोर्); दे$_1$ विनिर्मितं (→विनिर्मितः). –c) ते$_1$ मयैव (→ममैव); दे$_{8.9}$ दक्षणाद् (→दक्षिणाद्); दे$_4$ दक्षिणाङ्गत्वा (?), न$_1$ ग्र$_2$ दक्षिणादंशात्, म$_1$ दक्षिणाङ्गाद्वा (→दक्षिणा-

तस्य देवादिदेवस्य शंभोर्हृदयदेशतः ।
संबभूवाथ रुद्रोऽसावहं तस्यापरा तनुः ॥७७
ब्रह्मविष्णुशिवा ब्रह्मन् सर्गस्थित्यन्तहेतवः ।
विभज्यात्मानमेकोऽपि स्वेच्छया शंकरः स्थितः ॥७८
तथान्यानि च रूपाणि मम मायाकृतानि तु ।
निरूपः केवलः स्वच्छो महादेवः स्वभावतः ॥७९
एभ्यः परतरो देवस्त्रिमूर्तिः परमा तनुः ।
माहेश्वरी त्रिनयना योगिनां शान्तिदा सदा ॥८०
तस्या एव परां मूर्ति मामवेहि पितामह ।
शाश्वतैश्वर्यविज्ञानतेजोयोगसमन्विताम् ॥८१
सोऽहं ग्रसामि सकलमधिष्ठाय तमोगुणम् ।
कालो भूत्वा न तमसा मामन्योऽभिभविष्यति ॥८२
यदा यदा हि मां नित्यं विचिन्तयसि पद्मज ।
तदा तदा मे सान्निध्यं भविष्यति तवानघ ॥८३
एतावदुक्त्वा ब्रह्माणं सोऽभिवन्द्य गुरुं हरः ।
सहैव मानसैः पुत्रैः क्षणादन्तरधीयत ॥८४
सोऽपि योगं समास्थाय ससर्ज विविधं जगत् ।
नारायणाख्यो भगवान् यथापूर्वं प्रजापतिः ॥८५
मरीचिभृग्वङ्गिरसं पुलस्त्यं पुलहं क्रतुम् ।
दक्षमत्रिं वसिष्ठं च सोऽसृजद् योगविद्यया ॥८६　वें.१.१०.८६

दङ्गाद्). –d) दे4 वामांगं, न1 ग्र2 वामांशात् (→वामांगात्); न1 पुरुषोत्तम (→पुरुषोत्तमः).

७७. म1. ७७c–७९d ⊙ (द्र. सं.). –a) का1 ब1.2 देवाति°. दे1.2.5.6.8-10 मुवें. मुए. मुब. देवाधि° (→देवादि°). –b) ब1 °नन्दनः, + °देशतः (→°देशतः). –c) दे4 द1 ग्र1.2 संबभूवादि– (→संबभूवाथ). –d) ब2.3 दे6.8-10 द1 ग्र2 मुवें. मुए. मुब. तस्य (द1 ग्र2 °स्याः) (→तस्या-); दे8-10 मुवें. मुए. मुब. सोहं, द1 ग्र1 म1 परं (→अहं). –cd) दे3, रुद्रोसावहितस्या°, दे6 रुद्रोमावहीतस्या° (→रुद्रोसावहं तस्या°).

७८. म1. ⊙ (द्र. ७७ पा. वि.); द1 ग्र1.2. cd ⊙. –a) दे8-10 तस्मिन् (→ब्रह्मन्). –c) दे6 विभजात्मानम्, दे10 विभाज्यात्मानम् (→विभज्यात्मानम्). –d) दे1 स्वेच्छाया, दे4 स्वक्षया (→स्वेच्छया); दे4 स्थितं (→स्थितः).

७९. म1. ⊙ (द. ७७ पा. वि.). –a) दे1 विरूपाणि (→च रूपाणि). –b) ब3 दे1 °युतानि, दे5 °हृतानि (→°कृतानि); दे1 वै, दे8-10 मुवें. मुए. मुब. च (→तु). –c) ब2.3 नीरूपः, दे8-10 मुवें. मुए. मुब. अरूपः, दे3 नीरूपा, ते1 विकल्पः (→निरूपः); दे1 केलयः (→केवलः); दे5.6.8-10 मुवें. मुए. मुब. स्वस्थो (→स्वच्छो).

८०. –a) ब1 आद्यः (→एभ्यः); दे8-10 मुवें. मुए. मुब. य एभ्यः परतो देवः. –b) ब3 (स)त्रिमूर्तिः (→त्रिमूर्तिः). –c) दे1 माहैश्वरी, दे4 माहीश्वरी, द1 ग्र1 म1 महेश्वरी (द1 °रि, म1 °र) (→माहेश्वरी); द1 ग्र2 म1 त्रिण (द1 °न) यनो (ग्र2 °ना) (→त्रिनयना). –d) दे3 योगिना, दे4 योगिनी (→योगिनां); दे5 तदा (→सदा).

८१. –a) का1 ग्र1.2 म1 तस्य (→तस्या[:]); ब2 दे3.6 एवं, ते1 एवा– (→एव); ब1 दे1.4 न1 परामूर्तिर्, ग्र2 परामूर्त्तिम् (→परां मूर्तिम्); –b) दे1 ममैव हि, दे2.10 न1 ग्र1 म1 मामवैहि, दे4 मामेवैं हि(?), दे6 मामेव हि (→मामवेहि); दे1.10 पितामहः, ते1 पितामहम् (→पितामह). –c) दे8.9 ते1 मुवें. मुए. मुब. °विज्ञानं (→°विज्ञान-); दे1 शाश्वतैश्वर्या विज्ञानस्, ग्र2 शाश्वदैश्वर्यविज्ञानं. –d) ब1.2 दे1.3.6.8-10 ते1 मुवें. मुए. मुब. -समन्वितम्, दे2 द1 ग्र1 म1 -समन्विता, न1 -समन्वितः (→-समन्विताम्); ग्र2 मया योग बलेन वा.

८२. ब2. cd⊙. –b) म1 तनोर्गुणं (→तमोगुणम्). –c) दे4 द1 तु तमसा, न1 समस्तं नो, ग्र1 न तपसा, ग्र2 न तमसो, मुवें. मुए. मुब. न मनसा (→न तमसा). –d) दे1.2 सामान्यो हि (दे2 °भि-), दे6 मामन्योनि (?), द1 ग्र1 म1 ममान्यो हि (द1 °भि-), ग्र2 मान्योऽपि न (→मामन्योऽभि-); द1 ग्र1 °तपिष्यति (→°भविष्यति); दे5 मामन्योमित (?) विष्यसि.

८३. –a) ग्र2 यथा (→यदा). –c) ग्र2 तथा तथा (→तदा तदा); दे1 स (→मे); का1 ब3 दे2.3.5.6 तदा तदात्म (का1 °त्मा) सन्निध्यम्. –d) न1 तदानघ (→तवानघ).

८४. –a) दे3 उक्ता (→उक्त्वा). –b) दे5 सोभिवन्द्ये, न1 सोनुज्ञाप्य (→सोभिवन्द्य); दे5 गुहं (→गुरुं); न1 हरं, द1 हरिः (→हरः). –c) ब1 रत्नैः, दे3.4.6 न1 ते1 रुद्रैः (→पुत्रैः).

८५. –a) दे10 समासाय (?) (→समास्थाय). –c) द1 ग्र1 म1 नारायणश्च (→नारायणाख्यो).

८६. –a) का1 मरीची°(?) (→मरीचि°); दे8.10 ते1 द1 ग्र1.2 म1 मुवें. मुए. मुब. °भृग्वंगिरसः (→°भृग्वङ्गिरसं). –b) दे5 पुलस्त्ये (→पुलस्त्यं). –c) दे3 दक्षमत्रि–, दे4 दक्षिमत्रि–, ग्र1 दक्षमित्रं (→दक्षमत्रिं); दे1.2 वशिष्ठं (→वसिष्ठं). –d) ब2 °मायया (→°विद्यया); दे5 सजद्योगां च वेद्यया (?).

वें.१.१०.८९ नव ब्रह्माण इत्येते पुराणे निश्चयं गताः ।
सर्वे ते ब्रह्मणा तुल्याः साधका ब्रह्मवादिनः ॥८७
संकल्पं चैव धर्मं च युगधर्मांश्च शाश्वतान् ।
स्थानाभिमानिनः सर्वान् यथा ते कथितं पुरा ॥८८

इति श्रीकूर्मपुराणे षट्साहस्त्र्यां संहितायां पूर्वविभागे दशमोऽध्यायः ॥१०॥

# ११

श्रीकूर्म उवाच ।❀

एवं सृष्ट्वा मरीच्यादीन् देवदेवः पितामहः ।
सहैव मानसैः पुत्रैस्तताप परमं तपः ॥१
तस्यैवं तपतो वक्त्राद् रुद्रः कालाग्निसन्निभः ।
त्रिशूलपाणिरीशानः प्रादुरासीत् त्रिलोचनः ॥२
अर्द्धनारीनरवपुः दुष्प्रेक्ष्योऽतिभयंकरः ।
विभजात्मानमित्युक्त्वा ब्रह्मा चान्तर्दधे भयात् ॥ ३
तथोक्तोऽसौ द्विधा स्त्रीत्वं पुरुषत्वमथाकरोत् ।
बिभेद पुरुषत्वं च दशधा चैकधा पुनः ॥४
एकादशैते कथिता रुद्रास्त्रिभुवनेश्वराः ।
कपालीशादयो विप्रा देवकार्ये नियोजिताः ॥५

---

८७. –a) दे$_{10}$ न च (→नव); का$_{1}$ ब्राह्मण दे$_{6}$ ब्रह्मा न (?), म$_{1}$ ब्रह्माणि (→ब्रह्माण); ब$_{1}$ इत्येष, ग्र$_{1}$ इत्येव, ग्र$_{2}$ इत्येवं (→इत्येते). –b) ब$_{1}$ दे$_{6.8-10}$ ते$_{1}$ मुवें. मुए. मुब. निश्चयो (→निश्चयं); ब$_{1.2}$ दे$_{4}$ ते$_{1}$ गतः, दे$_{6.8-10}$ मुवें. मुए. मुब. मतः, न$_{1}$ गतं (→गताः). –c) दे$_{3}$ ब्रह्मणः (→ब्रह्मणा); दे$_{6}$ तुष्टि (→तुल्याः); द$_{1}$ ग्र$_{1}$ म$_{1}$ सर्व एते ब्रह्मबुध्या.

८८. –a) दे$_{3}$ सकल्पं (→संकल्पं); दे$_{3}$ चैक (→चैव); दे$_{6}$ धर्मे च, न$_{1}$ धर्मांश्च, द$_{1}$ ग्र$_{1.2}$ म$_{1}$ कल्पं च (→धर्मं च). –b) दे$_{1.10}$ °धर्मं च, दे$_{4}$° धर्माश्च (→°धर्मांश्च); दे$_{1}$ शाश्वतं (→शाश्वतान्); द$_{1}$ ग्र$_{1.2}$ म$_{1}$ धर्मं च युगशाश्वतं. –c) म$_{1}$ ख्यातं हि (→स्थानाभि–); द$_{1}$ ग्र$_{1.2}$ म$_{1}$ सर्वे (→सर्वान्). –d) ब$_{2}$ ग्र$_{1}$ म$_{1}$ कथिताः (ब$_{2}$° ता) (→कथितं); न$_{1}$ यथावदसृज (?) प्रभुः.

पुष्पिका—

**पुराणनाम**—का$_{1}$ दे$_{1.4.5.8-10}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ मुवें. मुए. इति श्रीकूर्मपुराणे, ब$_{1}$ इति कौर्मे, ब$_{2.3}$ दे$_{2.3.6}$ इति कूर्मपुराणे, न$_{1}$ इति श्रीकौर्मे, ते$_{1}$ इत्यादिमहापुराणे कौर्मे, मुब. इति श्रीकौर्मे महापुराणे पूर्वभागे. **अध्यायनाम**—दे$_{4}$ न$_{1}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$.⊙; का$_{1}$ ब$_{1.3}$ दे$_{2.3.5}$ ते$_{1}$ मुवें. मुए. मुब. रुद्रसृष्टिर्नाम, ब$_{2}$ पुत्रसृष्टिर्नाम, दे$_{1}$ रुद्रस्तुतिः, दे$_{6}$ रुद्रसृष्टि, दे$_{8.9}$ रुद्रसृष्टिर्, दे$_{10}$ रुद्रसृष्टिवर्णनोनाम. **अध्यायसंख्या**—दे$_{6}$.⊙; का$_{1}$ ब$_{1.2}$ दे$_{1-3.5.8.9}$ न$_{1}$ ते$_{1}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ दशमोऽध्यायः, ब$_{3}$ दे$_{4.10}$ मुवें. मुए. मुब. दशमोऽध्यायः ॥१०॥

**११**

❀ का$_{1}$ ब$_{1-3}$ दे$_{2.3.5.6.8.10}$ मुवें. मुए. मुब. कूर्म उवाच; दे$_{1}$ कूर्म उवा.; दे$_{9}$ कूर्म उ$_{1}$; न$_{1}$ ग्र$_{1}$ कूर्मः; ते$_{1}$ ॐ श्रीशिवः श्रीकूर्मः; द$_{1}$ सूतः; ग्र$_{2}$ म$_{1}$ श्रीकूर्मः.

१. –a) ब$_{1}$ दृष्ट्वा, ब$_{3}$ स्पृष्ट्वा (→सृष्ट्वा); ग्र$_{2}$ एवं मरीच्यादि ऋषि. –d) ब$_{2}$ त**, दे$_{10}$ सुताप, ते$_{1}$ स तेपे (→तताप).

२. –a) ब$_{1}$ दे$_{5}$ द$_{1}$ ग्र$_{2}$म$_{1}$ मुवें. मुए. तस्यैव (→तस्यैवं); ब$_{1}$ दे$_{5}$ तपते, ब$_{2}$ तप्यतो (→तपतो). –b) ब$_{3}$ उग्रः, दे$_{5}$ भद्रः (→रुद्रः); दे$_{8-10}$ मुवें. मुए. मुब. °सम्भवः (→°सन्निभः). –c) द$_{1}$ ईशानं (→ईशानः).

३. –a) ब$_{2}$ मुब. °नारीश्वर°, दे$_{1}$ °नारीधर° (→°नारीनर°). –b) ब$_{2}$ दे$_{8.9}$ दुःप्रेक्षोति°, दे$_{1}$ दुःप्रेक्ष्योभि°, दे$_{5}$ (यै)दुःप्रेक्ष्योति° (→दुष्प्रेक्ष्योऽति°). –c) दे$_{4.5}$ विभज्यात्मानं (→विभजात्मानं); दे$_{1.3}$ इत्युक्ता (→इत्युक्त्वा). –d) द$_{1}$ ब्रह्म (→ब्रह्मा); का$_{1}$ वांतरदधे, दे$_{3}$ वासुर्दधे (→चान्तर्दधे); दे$_{4}$ भवं, द$_{1}$ ग्र$_{1.2}$ म$_{1}$ तदा (→भयात्).

४. –a) ब$_{3}$ ततोक्तोऽसौ, दे$_{10}$ तथोक्त्वासौ (→तथोक्तोऽसौ); म$_{1}$ तूष्णीं (→स्त्रीत्वं). –b) दे$_{4}$ द्विधा°, दे$_{8-10}$ न$_{1}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ मुवें. मुए. मुब. तथा° (→अथा°). –c) ब$_{2}$ °षञ्चैव, द$_{1}$ ग्र$_{1.2}$ म$_{1}$ °षात् स्वं च (→°षत्वंच). –d) ब$_{1}$ ते$_{1}$ चैकधा च सः, द$_{1}$ ग्र$_{2}$ म$_{1}$ चैकधाकरोत् (→चैकधा पुनः).

५. म$_{1}$. ५d–७a ⊙ (द्र. सं.). –a) दे$_{3.6}$ °दशैव

सौम्यासौम्यैस्तथा शान्ताशान्तैः स्त्रीत्वं च स प्रभुः ।
बिभेद बहुधा देवः स्वरूपैरसितैः सितैः ॥६
ता वै विभूतयो विप्रा विश्रुताः शक्तयो भुवि ।
लक्ष्म्यादयो याभिरीशा विश्वं व्याप्नोति शांकरी ॥७
विभज्य पुनरीशानी स्वात्मानं शंकराद् विभोः ।
महादेवनियोगेन पितामहमुपस्थिता ॥८
तामाह भगवान् ब्रह्मा दक्षस्य दुहिता भव ।
साऽपि तस्य नियोगेन प्रादुरासीत् प्रजापतेः ॥९
नियोगाद् ब्रह्मणो देवीं ददौ रुद्राय तां सतीम् ।
दक्षाद् रुद्रोऽपि जग्राह स्वकीयामेव शूलभृत् ॥१०
प्रजापतिं विनिन्द्यैषा कालेन परमेश्वरी ।
मेनायामभवत् पुत्री तदा हिमवतः सती ॥११
स चापि पर्वतवरो ददौ रुद्राय पार्वतीम् ।
हिताय सर्वदेवानां त्रिलोकस्यात्मनोऽपि च ॥१२
सैषा माहेश्वरी देवी शंकरार्द्धशरीरिणी ।
शिवा सती हैमवती सुरासुरनमस्कृता ॥१३
तस्याः प्रभावमतुलं सर्वे देवाः सवासवाः ।
विन्दन्ति मुनयो वेत्ति शंकरो वा स्वयं हरिः ॥१४    वें.१.११.१५

(→°दर्शते). –b) दे$_{1.9.10}$ °नेश्वरः(→°नेश्वराः). –d) दे$_{10}$ नियोजिता (→नियोजिताः).

६. म$_{1}$. ⊙ (द्र. ५पा. वि.). –a) दे$_{3}$ द$_{1}$ सौम्या सौम्ये, दे$_{4}$ सौम्यासौम्यं, दे$_{10}$ सोप्यासौम्ये, ते$_{1}$ *म्यासोमैः, ग्र$_{2}$ सौम्यस्सौम्यैः (→सौम्यासौम्यैस्); दे$_{1}$ द$_{1}$ ग्र$_{2}$ शान्तैः, दे$_{5}$ शीताः (→शान्ता). –b) दे$_{4}$ शांतं, दे$_{5}$ शीतैः, द$_{1}$ ग्र$_{2}$ दान्तैः (→शान्तैः); दे$_{1}$ सा प्रभुः, दे$_{5}$ स प्रभुं (→स प्रभुः). –c) का$_{1}$ विवेध (→बिभेद); दे$_{10}$ द$_{1}$ ग्र$_{1}$ देव (→देवः). –d) दे$_{4}$ प्रभूतैर् (→स्वरूपैर्); दे$_{5}$ असितेः, ते$_{1}$ अपि तैः (→असितैः).

७. म$_{1}$. a ⊙ (द्र. ५पा. वि.). –a) ग्र$_{1}$ नानाविधा (→विभूतयो). –b) दे$_{3}$ विद्युताः, दे$_{4}$ विस्तृता, दे$_{10}$ विश्रुतो (→विश्रुताः). –c) का$_{1}$ ते$_{1}$ लक्ष्यादयो, ग्र$_{2}$ लज्जादयो (→लक्ष्म्यादयो); दे$_{1}$ [अ]थ बहुशो, दे$_{4}$ हि ईशान्या, दे$_{8-10}$ या (दे$_{10}$ वा) हविषा, द$_{1}$ ग्र$_{2}$ बहुविधा, ग्र$_{2}$ -श्च बहुधा, म$_{1}$ [अ]पि बहुधा, मुवें. मुए. यद्वपुषा (→याभिरीशा). –d) दे$_{10}$ चाप्नोति (→व्याप्नोति); ब$_{3}$ दे$_{3}$ शंकरी (→शांकरी).

८. –a) दे$_{4.10}$ ग्र$_{1}$ °रीशानि (दे$_{4}$ °नं), ग्र$_{2}$ °रेशानी (→°रीशानी). –b) का$_{1}$ ब$_{1-3}$ दे$_{1-3.5.6}$ ते$_{1}$ शंकरं (→शंकरात्); ते$_{1}$ द्विजाः (→विभोः); दे$_{8-10}$ मुवें. मुए. मुब. स्वत्मांशमकरोद् द्विजाः (दे$_{8.9}$ °द्विभोः). –c) दे$_{4}$ °योग° (→°देव°); दे$_{2}$ °योगेपि (→°योगेन); ते$_{1}$ महोदेवोऽथ योगेन. –d) दे$_{6}$ उपस्थितः, ग्र$_{2}$ उपश्रिता (→उपस्थिता).

९. –c) दे$_{10}$ तस्या (→तस्य). –d) ब$_{1}$ जगत् पतेः, ग्र$_{2}$ प्रजापतिः (→प्रजापतेः).

१०. –a) ग्र$_{2}$ **गात् (→नियोगाद्); दे$_{5.8-10}$ देवि (→देवीं). –b) दे$_{5}$ सतीः (→सतीम्). –c) दे$_{4.6}$ दक्षो (दे$_{6}$ °क्ष) रुद्रोपि, दे$_{8-10}$ ते$_{1}$ मुवें. मुए. मुब. दाक्षीं रुद्रोऽपि, ग्र$_{2}$ दक्षाद्रुद्रोवि- (→ दक्षाद्रुद्रोऽपि). –d) का$_{1}$ ब$_{2.3}$ दे$_{2.3.5.6}$ शूलधृक् (→शूलभृत्).

११. –a) का$_{1}$ विचिन्त्यैसा (→विनिन्द्यैषा); दे$_{1.8-10}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ मुवें. मुए. मुब. प्रजापतिविनिर्देशात्. –b) का$_{1}$ दे$_{5}$ काले सा, दे$_{2}$ काले स (→कालेन); म$_{1}$ °मेश्वरः (→°मेश्वरी). –d) ते$_{1}$ तथा (→तदा); ते$_{1}$ शुभा (→सती).

मुवें. पुस्तके ११ श्लोकस्य ab, cd मध्ये अधिकम्–
*विभज्य पुनरीशानी आत्मानं शंकराद्विभोः ( = ८ab)

१२. –a) ब$_{1}$ सा (→स). –c) दे$_{2.4}$ °लोकानां (→°देवानां). –d) का$_{1}$ दे$_{1}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ मुवें. मुए. मुब. त्रैलोक्यस्य, ब$_{2}$ त्रिकालस्य, ब$_{3}$ त्रिलोक्या, ते$_{1}$ त्रिलोक्यस्य (→त्रिलोकस्य); दे$_{1}$ [आ]त्मनोपि वा, दे$_{5}$ [आ]त्मनेपि च, दे$_{8-10}$ मुवें. मुए. [आ]त्मनो द्विजाः (→[आ]त्मनोपि च).

१३. दे$_{6}$. १३c –१७ ab ⊙. –a) दे$_{1.5}$ देवीं, म$_{1}$ चैव (→देवी). –c) दे$_{10}$ हिमवती (→हैमवती). –d) दे$_{5}$ °नमस्कृतः, दे$_{10}$ म$_{1}$ °नमस्तुता (→°नमस्कृता).

१४. दे$_{6}$. ⊙ (द्र.१३ पा. वि.). –a) दे$_{4}$ ग्र$_{1}$ नास्याः, द$_{1}$ ग्र$_{2}$ म$_{1}$ अस्याः (→तस्याः); दे$_{4.5}$ अखिलं (→अतुलं). –b) ब$_{3}$ दे$_{3.8-10}$ द$_{1}$ सर्व-(→सर्वे). –c) का$_{1}$ ब$_{3}$ दे$_{3}$ न$_{1}$ मुवें. मुए. मुब. वदन्ति, ब$_{2}$ ते$_{1}$ द$_{1}$ ग्र$_{1}$ विदन्ति, दे$_{1}$ विभर्त्ती (→विन्दन्ति); दे$_{8.9}$ वेति, न$_{1}$ वापि (→वेत्ति); ग्र$_{2}$ विन्दन्न-[विन्द]मुनयो वेत्ति. –d) न$_{1}$ ब्रह्मा वा शंकरो हरिः.

१४ श्लोकात्परं ग्र$_{2}$ पुस्तके अधिकम्–
5. * शमा यालस्कलं वन्दे स्तमेसो भास्करोदयः ।
शान्तकल्पस्त्वघौघस्य देविनामानुकीर्तनं ॥
तस्मादहर्निशं देवीं सासनेत् पुरुषो यदि ।
न याति नरकं शुद्धस्साक्षिणं शेषपातकः ॥

वें.१.११.१५ एतद् वः कथितं विप्राः पुत्रत्वं परमेष्ठिनः ।
ब्रह्मणः पद्मयोनित्वं शंकरस्यामितौजसः ।।१५

सूत उवाच ।❀

इत्याकर्ण्याथ मुनयः कूर्मरूपेण भाषितम् ।
विष्णुना पुनरेवैनं पप्रच्छुः प्रणता हरिम् ।।१६

ऋषय ऊचुः ।❀

कैषा भगवती देवी शंकरार्द्धशरीरिणी ।
शिवा सती हैमवती यथावद् ब्रूहि पृच्छताम् ।।१७
तेषां तद् वचनं श्रुत्वा मुनीनां पुरुषोत्तमः ।
प्रत्युवाच महायोगी ध्यात्वा स्वं परमं पदम् ।।१८

श्रीकूर्म उवाच ।❀

पुरा पितामहेनोक्तं मेरुपृष्ठे सुशोभनम् ।
रहस्यमेतद् विज्ञानं गोपनीयं विशेषतः ।।१९
सांख्यानां परमं सांख्यं ब्रह्मविज्ञानमुत्तमम् ।
संसारार्णवमग्नानां जन्तूनामेकमोचनम् ।।२०
या सा माहेश्वरी शक्तिर्ज्ञानरूपाऽतिलालसा ।
व्योमसंज्ञा परा काष्ठा सेयं हैमवती मता ।।२१
शिवा सर्वगताऽनन्ता गुणातीता सुनिष्कला ।
एकानेकविभागस्था ज्ञानरूपाऽतिलालसा ।।२२
अनन्या निष्कले तत्त्वे संस्थिता तस्य तेजसा ।
स्वाभाविकी च तन्मूला प्रभा भानोरिवामला ।।२३
एका माहेश्वरी शक्तिरनेकोपाधियोगतः ।
परावरेण रूपेण क्रीडते तस्य सन्निधौ ।।२४

---

१५. दे6. ⊙ (द्र. १३पा. वि.). –a) का1 दे1 विप्रा (→विप्राः). –b) ते1 प्रभुत्वं (→पुत्रत्वं). –c) ब2 पद्मयोनेस्तु, म1 परयोनित्वं (→पद्मयोनित्वं).

अतः परं दे1.8-10 द1 ग्र1.2 म1 मुवें. मुए. मुब. पुस्तकेषु अध्याय समाप्तिर्वर्तते– दे1 इति कूर्मपुराणे देव्यावतारे एकादशोऽध्यायः, दे8-10 मुवें. मुए. इति श्रीकूर्मपुराणे देव्या (मुवें. मुए. °व्य)वतारे एकादशोध्यायः, द1 ग्र1.2 म1 इति कू(म1 श्रीकू)र्मपुराणे एकादशोऽध्यायः, मुब. इति श्रीकौर्मे महापुराणे पूर्वभागे देव्यवतारे एकादशोऽध्यायः ।।११।।

❀ दे6. ⊙; दे1 न1 ते1 ग्र1.2 सूतः; म1 श्रीसूतः.

१६. दे6. ⊙ (द्र. १३ पा. वि.).–c) का1 दे4.5 °रेवेमां, ब1-2 दे1.10 °रेवेनं (?), दे2 °रेवैमां, न1 °रेवेदं, द1 ग्र1.2 म1 °रेवेशं (→°रेवैनं). –d) ब2 दे10 प्रणेतो (दे10 °तां) हरिं, द1 ग्र1.2 म1 प्रणतार्तिहं (→प्रणता हरिम्).

❀ दे6. ⊙; न1 ते1 द1 ग्र1.2 म1 ऋषयः.

१७. दे6. ab ⊙ (द्र. १३ पा. वि.). –a) द1 एका (→कैषा); ब1 कैषा देवी भगवती. –c) दे10 हेमवती (→हैमवती). –d) ब3 यथा तद्, दे5 यथा च (→यथावद्).

१८. –a) ग्र2 तु (→ तद्). –b) दे6 पुरुषोत्तम (→पुरुषोत्तमः). –d) न1 °ता स्वं, द1 ग्र2 म1 °त्वाथ, ग्र1 °त्वा च (→°त्वा स्वं).

❀ का1 ब1-3 दे1.2.4-6.10 मुवें. मुए. मुब. कूर्म उवाच; दे3.8.9 कूर्म्म उ.; न1 कूर्मः; ते1 ग्र1.2 म1 श्रीकूर्मः.

१९. –b) दे3.8-10 ते1 मुवें. मुए. मुब. सुशोभने, न1 सुशोभने, + तु शोभने (→सुशोभनम्). –c) का1 विज्ञाय (→विज्ञानं); ग्र2 र * स्यमेदन्तु विज्ञानं (?). –d) का1 प्रयत्नतः (→विशेषतः).

२०. दे5. २०c–२१d ⊙. –a) ब1 संख्यानं, ग्र2 सांख्यानं, (→सांख्यानां). –b) दे4.10 °ज्ञानमनुत्तमं, ते1 चिद्ज्ञानमुत्तमं, दे3.6 °विज्ञानमुद्भवं (→°विज्ञानमुत्तमम्). –d) ब2 °मोक्षदं, द1 ग्र2 म1 °मोचकं (→°मोचनम्).

२१. ब1 दे6. २१c–२२d ⊙(द्र. सं.); दे5. ⊙. –a) ग्र2 मनभवा (→माहेश्वरी). –b) दे1 ज्ञानारूपेण (?) (→ज्ञानरूपा-); दे3.6 °भिलाल । (→ °तिलालसा). –d) दे1 सैवं (→सेयं); दे1 °सुता, + वता, द1 म1 तथा, ग्र1 शुभा, ग्र2 तथा (→मता).

२२. ब1 दे6. ⊙. (द्र. २१ पा. वि.). –a) ग्र2 शिवस्थानगतानां तु. –b) का1 सुनिश्चला, दे2 स्वनिष्कला, दे3. ग्र.2 मुवें. मुए. मुब. [अ]ति निष्कला (→सुनिष्कला). –c) दे4 °विधावस्था, ग्र2 °विभागा च (→ °विभागस्था). –d) दे3 °भिलालसा, द1 ग्र1.2 म1 °तिनिर्मला (→°तिलालसा).

२३. दे6. bcd ⊙. –a) का1 अनन्य , दे2 अनन्ये, दे5 अनन्यं, दे10 अनग्रा (→अनन्या); का1 निश्चले (→निष्कले); दे1 तत्त्वं (→तत्त्वे). –b) दे1 द1 म1 संस्थितां, दे8 संस्तुता, न1 सा स्थिता (→संस्थिता); दे1 निस्व- (?), ग्र1 सास्व,- ग्र2 तत्व-, म1 तस्व- (→तस्य); दे1 °तेजसां (→ °तेजसा). –c) ते1 विन्दुमाला, ग्र2 नवमूला (→तन्मूला). –d) ग्र1 °रिवामता (→°रिवामला); ग्र2 गुणातीता सुनिर्मला.

२४. –a) दे4 का सा, दे5 एकः (?) (→एका); म1 महेश्वरी (→माहेश्वरी). –b) म1 °पासि° (?) (→°पाधि°);

सेयं करोति सकलं तस्याः कार्यमिदं जगत् ।
न कार्यं नापि करणमीश्वरस्येति सूरयः ॥२५
चतस्रः शक्तयो देव्याः स्वरूपत्वेन संस्थिताः ।
अधिष्ठानवशात् तस्याः शृणुध्वं मुनिपुंगवाः ॥२६
शान्तिर्विद्या प्रतिष्ठा च निवृत्तिश्चेति ताः स्मृताः ।
चतुर्व्यूहस्ततो देवः प्रोच्यते परमेश्वरः ॥२७
अनया परया देवः स्वात्मानन्दं समश्नुते ।
चतुर्ष्वपि च वेदेषु चतुर्मूर्तिर्महेश्वरः ॥२८
अस्यास्त्वनादिसंसिद्धमैश्वर्यमतुलं महत् ।
तत्सम्बन्धादनन्ताया रुद्रेण परमात्मना ॥२९
सैषा सर्वेश्वरी देवी सर्वभूतप्रवर्तिका ।
प्रोच्यते भगवान् कालो हरिः प्राणो महेश्वरः ॥३०
तत्र सर्वमिदं प्रोतमोतं चैवाखिलं जगत् ।
स कालोऽग्निर्हरो रुद्रो गीयते वेदवादिभिः ॥३१
कालः सृजति भूतानि कालः संहरते प्रजाः ।
सर्वे कालस्य वशगा न कालः कस्यचिद् वशे ॥३२
प्रधानं पुरुषस्तत्त्वं महानात्मा त्वहंकृतिः ।
कालेनान्यानि तत्त्वानि समाविष्टानि योगिना ॥३३ कू.१.१२.१८

ते$_1$ अनेका वा वियोगतः. –c) का$_1$ ब$_{1-3}$ दे$_{1.3-5}$ ते$_1$ परापरेण, दे$_6$ परापरेश- (→परावरेण); ग्र$_2$ योगेन (→रूपेण). –d) दे$_3$ क्रीडतीं, ग्र$_2$ त्रिलते (?) (→क्रीडते).

२५. –a) ब$_1$ येयं, द$_1$ सायं (→सेयं). –c) ग्र$_1$ नाकार्यं (→न कार्यं); दे$_4$ मापि (?), द$_1$ नोपि (?), ग्र$_1$ नाति- (→नापि). –d) दे$_{10}$ ईश्वरः सेति सूरयः, न$_1$ ग्र$_2$ ईश्वरस्याति सू (ग्र$_2$ शू) रयः, ते$_1$ ईश्वरस्येति शब्दयते.

२६. –a) ग्र$_2$ शतशः (→चतस्रः); ब$_1$ दे$_1$ देवाः, दे$_{8.9}$ दिव्याः (→देव्याः). –b) ब$_2$ स्वरूपन्तेषु, दे$_{10}$ स्वरूपे*न (→स्वरूपत्वेन); ब$_2$ संस्थितं, ग्र$_1$ सम्मताः (→संस्थिताः). –c) दे$_3$ अधिष्ठाय, दे$_4$ अधिष्ठा*(→अधिष्ठान°); दे$_3$ °वदा (?), दे$_6$ °जवं (→°वशात्); ग्र$_2$ तस्य (→तस्याः).

२७. –a) ग्र$_2$ शान्तिमाद्या (→शान्तिर्विद्या); का$_1$ दे$_{10}$ प्रविष्टा (→प्रतिष्ठा). –b) ग्र$_2$ निवृत्ता (→निवृत्तिश्); का$_1$ ब$_{1-3}$ दे$_{2.3.5.6}$ ते$_1$ °रिति (→°श्चेति). –c) दे$_{10}$ चतुर्वेदस् (→चतुर्व्यूहस्); दे$_1$ स्वतो, दे$_4$ तथा, दे$_5$ तना (?) (→ततो); का$_1$ देवाः, दे$_1$ देहः, दे$_{10}$ देव (?) (→देवः). –d) ग्र$_2$ परमेश्वराः (→परमेश्वरः).

२८. –a) दे$_{10}$ अन्यया (→अनया); दे$_4$ यनयी (?), द$_1$ ग्र$_{1.2}$ म$_1$ परमो (→परया); ब$_2$ देवम्, दे$_{10}$ देयः, ग्र$_2$ देव्यः (→देवः). –b) ब$_{1.2}$ आत्मान°, दे$_1$ चात्मान° (→स्वात्मान°); दे$_1$ शमश्नुते, दे$_4$ समश्नुते (→समश्नुते). –c) का$_1$ दे$_{1.3}$ देवेषु, दे$_{4.5.8-10}$ न$_1$ भेदेषु, द$_1$ ग्र$_1$ म$_1$ देहेषु (→वेदेषु); ते$_1$ चतुर्धापि भवेदेषु; ग्र$_2$ चतुष्वतव (?) देहेषु. –d) ब$_{2.3}$ वृत्तिर् (→मूर्तिर्).

२९. –a) दे$_1$ °स्तणादि° (→°स्त्वनादि°); दे$_{10}$ °संसिध्यम्, द$_1$ °संसिद्धिम् (→°संसिद्धम्). –b) म$_1$ अखिलं (→अतुलं); ग्र$_1$ भवेत्, म$_1$ जगत् (→महत्). –c) द$_1$ ग्र$_1$ मुवें. मुए. मुब. अनन्तैषा, ग्र$_2$ अनन्तेषा (→अनन्ताया[ः]). दे$_{10}$ तत्संबंधायादनंता. –d) दे$_6$ परमात्मनः (→परमात्मना).

३०. द$_1$. ab ⊙. –b) दे$_1$ °प्रवर्तिनी, दे$_6$ °प्रवर्तिताः, ते$_1$ °प्रकीर्तिता (→°प्रवर्तिका). –d) ब$_1$ हरिप्राण-, ब$_{2.3}$ हरिप्राणो, दे$_1$ न$_1$ ग्र$_2$ हरः प्राणो (→हरिः प्राणो).

ग्र$_2$ पुस्तके १५ ab, cd मध्ये अधिकम्

6. * ये मनागपि शर्वाणीं स्मरन्ति शरणार्थिनः ।
दुस्तरापारसंसारसागरे न पतन्ति ते ।
यश्शिवं सस्थितं**या गौरी सा महेश्वरी ।
इति मत्वा द्विजश्रेष्ठ शरणं गच्छ पार्वतीं ॥

३१. –a) दे$_{1-3.6}$ ते$_1$ द$_1$ ग्र$_2$ म$_1$ तस्य, ग्र$_1$ तस्मिन् (→तत्र); दे$_{10}$ ग्र$_1$ प्रोक्तं (→प्रोतं). –b) दे$_4$ मौनं, दे$_{10}$ प्रोतं, ग्र$_1$ एतं (→ओतं). –c) दे$_{4.8-10}$ मुवें. मुए. मुब. कालाग्निर् (→कालोग्निर्); ग्र$_1$ हरौ, ग्र$_2$ हरे (→हरो). दे$_{8-10}$ मुवें. मुए. मुब. देवो (→रुद्रो). –d) दे$_2$ ब्रह्मत्रा° (→वेदवा°).

३२. –b) ब$_1$ दे$_{4.8-9}$ न$_1$ ग्र$_2$ मुवें. मुए. मुब. संहरति (→संहरते). –d) ब$_3$ दे$_{8.9}$ मुवें. वशः (→वशे).

३३. –a) ब$_1$ दे$_4$ ते$_1$ प्रधानपु° (→प्रधानं पु°); दे$_4$ त्वं च (→तत्त्वं). –b) का$_1$ महात्मा त्वम°, ग्र$_2$ महत्तत्वम° (→महानात्मा त्व°); ते$_1$ [आ]त्माहं प्रकृतिस्त्वहम्. –c) का$_1$ कालौदस्यानि, ब$_1$ दे$_{2.3.6}$ कालोदास्यानि, ब$_2$ कालो***, ब$_3$ कालादन्यानि, दे$_5$ कालानन्यानि, ते$_1$ कालोदास्यति (→कालेनान्यानि). –d) का$_1$ दे$_2$ समाधिस्तानि, ब$_3$ दे$_5$ समाधिस्थानि, दे$_{3.6}$ समाधिस्थस्य, ग्र$_{1.2}$ म$_1$ समादिष्टानि (→समाविष्टानि); ब$_{1-3}$ दे$_{1.2.4-6}$ योगिनां (→योगिना).

वें.१.१२.१९ तस्य सर्वजगत्सूतिः शक्तिर्मायेति विश्रुता ।
तयेदं भ्रामयेदीशो मायावी पुरुषोत्तमः ॥३४
सैषा मायात्मिका शक्तिः सर्वाकारा सनातनी ।
वैश्वरूप्यं महेशस्य सर्वदा संप्रकाशयेत् ॥३५
अन्याश्च शक्तयो मुख्यास्तस्य देवस्य निर्मिताः ।
ज्ञानशक्तिः क्रियाशक्तिः प्राणशक्तिरिति त्रयम् ॥३६
सर्वासामेव शक्तीनां शक्तिमन्तो विनिर्मिताः ।
माययैवाथ विप्रेन्द्राः सा चानादिरनन्तया ॥३७
सर्वशक्त्यात्मिका माया दुर्निवारा दुरत्यया ।
मायावी सर्वशक्तीशः कालः कालकरः प्रभुः ॥३८
करोति कालः सकलं संहरेत् काल एव हि ।
कालः स्थापयते विश्वं कालाधीनमिदं जगत् ॥३९
लब्ध्वा देवाधिदेवस्य सन्निधिं परमेष्ठिनः ।
अनन्तस्याखिलेशस्य शंभोः कालात्मनः प्रभोः ॥४०
प्रधानं पुरुषो माया माया चैवं प्रपद्यते ।
एका सर्वगताऽनन्ता केवला निष्कला शिवा ॥४१

३४. –a) दे1 सर्वा, न1 सर्वं (→सर्व-); मुवें. मुए. मुब. °मूर्तिः (→°सूतिः); ग्र1 ****जगत्सूतिः. –b) दे1 शक्तिमा-, दे4 शोंतिमा-, ते1 शक्तिमान्, ग्र2 शक्नुर्मा- (→शक्तिर्मा-). –c) दे8.9 द1 ग्र1 मुवें. मुए. मुब. तदेयं (→तयेदं); ब1 ईशं (→ईशो). –d) दे1 पुरमेश्वरः, दे9 पुरुषोत्तम (→पुरुषोत्तमः).

३५. ग्र2. ३५b इत्यारभ्य ३८c 'शक्तिः' यावत् ⊙ (द्र. सं.). –a) दे3 °यान्विका (?)(→°यात्मिका). –b) दे3 सर्वकारा (→सर्वाकारा); द1 ग्र1 म1 सनातना (→सनातनी). –c) का1 ब2 दे1.4.6.8-10 मुवें. मुए. मुब. विश्वरूपं, ब1 दे5 वैश्वरूपी (दे5 °पां), दे2.3 वैश्वरूपं, द1 ग्र1 म1 सैवरूपं (द1 °पी), (→वैश्वरूप्यं). –d) का1 स्वंप्रकाशयेत्, ते1 संप्रकाशयत् (→संप्रकाशयेत्).

३६. का1 द1 ३६d–३७b ⊙ (द्र. सं.); दे3.6 ३६c–३८c ⊙ (द्र. सं.); ग्र2 ३६c 'शक्तिः' यावत् ⊙ (द्र. ३५पा. वि.). –a) दे3 अन्याश्व (?), ते1 अन्यास्तु (→अन्याश्च). –b) दे10 सूस्य (?), ते1 तस्या (→तस्य); दे4 °स्य संस्थिताः, म1 °विनिर्मिताः (→-°स्य निर्मिताः); दे1 ता देवेन विनिर्मिताः. –c) दे1 ज्ञानशः * क्रि°, दे3 ज्ञानशक्ति क्रि° (→ज्ञानशक्तिः क्रि°); ग्र2 °शक्ति- (→°शक्तिः). –d) म1 त्रिधा (→त्रयम्).

३७. का1 द1. ab ⊙; दे3.6. ⊙ (द्र ३६ पा. वि.). –a) ब1 °मेवमेव (?) (→°मेव). –b) ग्र1.2 म1 °मन्तोथ (→°मन्तो वि-); न अतश्चरति निर्मिता, दे4 शक्तिर्मनीश्वरोमता, न1 शक्ति मत्वं विनिर्मितः. –c) ब3 द1 ग्र1.2 मायया, म1 मायाया (→माययै-); दे10 द1 ग्र1.2 म1 चाथ (→-वाथ). –d) का1 सैवा°, दे5 सचा° (?), द1 संचा (?) (→सा चा°); ब1 °रितिव्यया, ब2 दे5 °रनन्यजा, ब3 °रनन्त्यया, दे4 °रणाव्यया, दे8-10 मुवें. मुए. °रनश्वरा (मुवें. मुए. °राः), न1 °रनव्यया, ते10 रनन्यराः (?), द1 ग्र1 म1 °रनन्यया, ग्र2 °रनन्यथा (→°रनन्तया).

३८. दे3.6. abc ⊙ (द्र. ३६पा. वि.). –a) दे1 °शक्त्यात्मया, ते10 शक्त्यधिका (→°शक्त्यात्मिका); का1 दुर्गा (→माया). –b) का1 ब2.3 दे2.5 दुर्निवार्या, न1 दुर्निरूपा (→दुर्निवारा); दे5 दुरामया (?), ते1 हरस्वसा (→दुरत्यया). –c) ब2 शक्तिमान् शर्वः, ब3 सर्वशक्तिः स [:] (→सर्वशक्तीशः); ग्र2 सा मायावीसर्वशक्तिः. –d) न1 कालहरः, द1 ग्र1 म1 सर्वकरः, ग्र2 सर्वाकरः (→कालकरः); दे1 परः (→प्रभुः); ब2 स कालनकरः प्रभुः.

३९. –a) ग्र2 संकल्पं, न1 सकलः (→सकलं). –b) ब2 संहारं, दे1 -महरेत् (?), दे4 हरते (→संहरेत्); दे1 च (→हि). –c) ग्र2 काले (→कालः); का1 दे2.5 तापयते, ग्र1 त्वाप्यायते (→स्थापयते). –d) ब3 कालाध*नम्, दे1 कालाधीनम्, दे3.6 कालाधारम्, दे4 कालादीनाम् (→कालाधीनम्).

४०. –a) दे3 लस्क (?), का1 लब्धा (→लब्ध्वा); का1 ब2 दे5 ते1 द1 ग्र2 देवादि°, ब1 दे2 देवाति°, दे4 देशादि° (?) (→देवाधि°). –b) दे1 सन्निधो (?), द1 ग्र1.2 म1 सन्निध्य, मुवें. सन्निधं (→सन्निधिं). –c) दे1 अपिले*शं (→अखिलेशस्य). –d) दे6 कालात्मने (→ कालात्मनः); दे1.6.10 प्रभो (→प्रभोः).

ब1 पुस्तके ४०. श्लोकस्य पूर्वार्धात्परं अधिकम्—
अनन्तस्याप्रमेयस्य.

४१. –a) दे2 ग्र2 प्रधानः, दे6 प्रधान- (→प्रधानं); दे5 पुरुषे, ते1 पुरुषं (→पुरुषो); ते1 चैव (→माया). –b) ब1 यया, ब3 दे2.3 न1 मायी, द1 मया (→माया); ब2 यैव, दे4 चैव, मुवें. मुए. मुब. सैव (→चैवं); का1 ब1.2 दे1.3.4.6 द1 ग्र1.2 म1 प्रभिद्यते, ब3 प्रतिष्ठिता, दे5 अभिद्यते, न1 प्रसिद्ध्यते (→प्रपद्यते). –c) का1 दे2 एषा, दे5 एष (→एका); दे1

एका शक्तिः शिवैकोऽपि शक्तिमानुच्यते शिवः ।
शक्तयः शक्तिमन्तोऽन्ये सर्वशक्तिसमुद्भवाः ॥४२
शक्तिशक्तिमतोर्भेदं वदन्ति परमार्थतः ।
अभेदं चानुपश्यन्ति योगिनस्तत्त्वचिन्तकाः ॥४३
शक्तयो गिरिजा देवी शक्तिमन्तोऽथ शंकरः ।
विशेषः कथ्यते चायं पुराणे ब्रह्मवादिभिः ॥४४
भोग्या विश्वेश्वरी देवी महेश्वरपतिव्रता ।
प्रोच्यते भगवान् भोक्ता कपर्दी नीललोहितः ॥४५
मन्ता विश्वेश्वरो देवः शंकरो मन्मथान्तकः ।
प्रोच्यते मतिरीशानी मन्तव्या च विचारतः ॥४६
इत्येतदखिलं विप्राः शक्तिशक्तिमदुद्भवम् ।
प्रोच्यते सर्ववेदेषु मुनिभिस्तत्त्वदर्शिभिः ॥४७
एतत् प्रदर्शितं दिव्यं देव्या माहात्म्यमुत्तमम् ।
सर्ववेदान्तवेदेषु निश्चितं ब्रह्मवादिभिः ॥४८
एकं सर्वगतं सूक्ष्मं कूटस्थमचलं ध्रुवम् ।
योगिनस्तत् प्रपश्यन्ति महादेव्याः परं पदम् ॥४९
आनन्दमक्षरं ब्रह्म केवलं निष्कलं परम् ।
योगिनस्तत् प्रपश्यन्ति महादेव्याः परं पदम् ॥५०
परात्परतरं तत्त्वं शाश्वतं शिवमच्युतम् ।
अनन्तप्रकृतौ लीनं देव्यास्तत् परमं पदम् ॥५१
शुभं निरञ्जनं शुद्धं निर्गुणं द्वैतवर्जितम् ।
आत्मोपलब्धिविषयं देव्यास्तत् परमं पदम् ॥५२
सैषा धात्री विधात्री च परमानन्दमिच्छताम् ।
संसारतापानखिलान् निहन्तीश्वरसंश्रया ॥५३ वे.१.१२.३८

---

सर्वमया (→सर्वगता). –d) का1 दे1 निःकला (निष्कला); दे1 शिव (→शिवा).

४२. –a) का1 दे10 ग्र1 शिवै (दे10 वे)कापि, दे1 ग्र2 शिवो कोपि (?), दे4 तथैकोपि, दे8 शिवेकोपि, म1 स चैकोपि (→शिवैकोपि). –b) दे1 –मुच्यते, (?) दे3 उच्यते (?), न1 न्युच्यते (?) द1 ग्र1.2 म1 प्रोच्यते (→उच्यते); दे1 शिवं (→शिवः). –c) दे4 शक्तितः (→शक्तयः); दे1 अन्य-, द1 ग्र 1.2 म1 वै (→[अ]न्ये). –d) ब2.3 दे3-6 ते1 ग्र2 म1 सर्वे (→सर्व-).

४३. –a) दे1.3 शक्तिः, न1 ग्र2 शक्तेः (→शक्ति-); दे6 °मतोभेदं (→ °मतोर्भेदं). –b) दे3 पश्यन्ति (→वदन्ति); दे4 परमर्षयः (→परमार्थतः). –c) द1 ग्र1 म1 अभेदश्चापि (→अभेदश्चानु°). –d) न1 तद्विचिन्तकाः (→तत्त्वचिन्तकाः).

४४. –b) दे1 मुवें. मुए. मुब. शक्तिमानथ (→शक्तिमन्तोऽथ). –c) दे1 वाथ (→चायं). –d) ग्र2 कथ्यते (→पुराणे).

४५. –a) का1 भोग्य-, दे5.6 योग्या (→भोग्या). –b) का1 दे1 ग्र1 माहेश्वर°, ग्र2 पतेश्वर° (→महेश्वर°); द1 °परिव्रता (?)(→°पतिव्रता). –c) ग्र2 म1 भोज्यते (→प्रोच्यते); न1 प्रोक्ता, म1 भर्ता (→भोक्ता).

४६. –a) दे10 मता, ग्र2 महा (?), म1 माता (→मन्ता). –c) ब2 मतिरीशाना, ब3 सद्भिरीशानी, ते1 सा गिरीशाना, ग्र2 परमेशानी (→मतिरीशानी).

४७. –a) दे3.4 °दाखिलं (→°दखिलं); ग्र2 देवी (→विप्राः). –b) ब2.3 दे1.8-10 शक्तिः द1 ग्र1 म1 सर्वे (→शक्ति-); का1 ब3 दे1.3.6.8.10 ते1 द1 ग्र1 समुद्भवं (द1 ग्र1 °वाः), न1 अनुद्भवम् (→°मदुद्भवम्). –c) का1 प्रोच्यन्ते (→प्रोच्यते); ब1 दे1.10 न1 ग्र1 देवेषु, म1 देवेषु, + वेदेषु (→वेदेषु).

४८. –a) दे4 प्रकाशितं (→प्रदर्शितं); द1 ग्र1.2 म1 एतच्च दर्शितन्दिव्यम्. –b) ब1 °म्यनुत्तमं(?) (→°म्यमुत्तमम्). –c) ग्र1.2 म1 सर्वैर् (→सर्व-); ब1 दे2.8.9 द1 म1 मुवें. मुए. मुब. °वादेषु (→°वेदेषु). –d) ग्र1.2 म1 निखिलं (→निश्चितं).

४९. ब1. cd ⊙. –a) दे1 एतं, दे4 एतत्, द1 ग्र1.2 म1 एव (→एकं); दे1 सर्वमतं (→सर्वगतं). –c) ब2 तं प्रप°, ते1 तु प्रप°, न1 द1 ग्र1 म1 तत्र प°, ग्र2 तत्तु प° (→तत्प्रप°). –d) दे4.6 महादेव्या, ग्र1 महादेव्यः (→महादेव्याः); दे3 पदे, दे5 पदां (→पदम्).

५०. दे1 ब2 द1 ग्र1 म1. cd ⊙; दे4.10 न1 ग्र2. ⊙. –a) का1 ब1-3 दे1.2.3.5.6 अनन्त° (→आनन्द°); द1 ग्र1 अजरं, म1-जननं (→अक्षरं); ग्र1 ब्रह्मा (→ब्रह्म). –b) दे5 निष्कले (→निष्कलं).

५१. ग्र2. ⊙. –b) ब1 दे1 ते1 अव्ययम् (→अच्युतम्). –c) ब2.3 दे4.6.10 न1 ते1 द1 अनन्तं (→अनन्त°); दे1 °प्रकृतो, ग्र1 °प्रकृतेर् (→°प्रकृतौ); दे1 नीरं, दे8.9 लीने, दे10 लीलं, न1 लीन- (→लीनं).

५२. ग्र2. ⊙. –a) का1 ब1-3 दे1-4.8-10 ते1 शुभ्रं, दे5 श्वभ्रं (→शुभं); दे4 शुभ्रं (→शुद्धं). –b) द1 ग्र1 म1 दैन्य° (→द्वैत°). –c) म1 °पलब्धविषयं (→°पलब्धिविषयं).

५३. –a) दे5 सैव (→सैषा). –c) का1 °तापनिखिलान्, दे1 °तापलिखिता (?), द1 म1 °तापान् सकलान्.

वें. १.१२.३६ तस्माद् विमुक्तिमन्विच्छन् पार्वतीं परमेश्वरीम् ।
आश्रयेत् सर्वभावानामात्मभूतां शिवात्मिकाम् ॥५४
लब्ध्वा च पुत्रीं शर्वाणीं तपस्तप्त्वा सुदुश्चरम् ।
सभार्यः शरणं यातः पार्वतीं परमेश्वरीम् ॥५५
तां दृष्ट्वा जायमानां च स्वेच्छयैव वराननाम् ।
मेना हिमवतः पत्नी प्राहेदं पर्वतेश्वरम् ॥५६

मेनोवाच ।※

पश्य बालामिमां राजन् राजीवसदृशाननाम् ।
हिताय सर्वभूतानां जाता च तपसावयोः ॥५७
सोऽपि दृष्ट्वा ततः पुत्रीं तरुणादित्यसन्निभाम् ।
कपर्दिनीं चतुर्वक्त्रां त्रिनेत्रामतिलालसाम् ॥५८
अष्टहस्तां विशालाक्षीं चन्द्रावयवभूषणाम् ।
निर्गुणां सगुणां साक्षात् सदसद्व्यक्तिवर्जिताम् ॥५९
प्रणम्य शिरसा भूमौ तेजसा चातिविह्वलः ।
भीतः कृताञ्जलिस्तस्याः प्रोवाच परमेश्वरीम् ॥६०

हिमवानुवाच ।※

का त्वं देवि विशालाक्षि शशाङ्कावयवाङ्किते ।
न जाने त्वामहं वत्से यथावद् ब्रूहि पृच्छते ॥६१
गिरीन्द्रवचनं श्रुत्वा ततः सा परमेश्वरी ।
व्याजहार महाशैलं योगिनामभयप्रदा ॥६२

---

ग्र2 °तापानिखिलान् (→°तापानखिलान्). –d) दे1.9 °श्वरं (→°श्वर-); द1 ग्र1.2 म1 °संज्ञया, मुवें. मुए. मुब. °संश्रयात् (→°संश्रया); ब2 निहन्तन्तीश्वराश्रया(?).

५४. दे3. cd ⊙. –a) द1 अन्विच्छेत्, ग्र2 इच्छन् सन् (→अन्विच्छन्). –b) दे3.4.6 पार्वती-, दे5 पार्वनीं (→पार्वतीं). –c) दे5 मा (?) श्रयेत्, ग्र2 ब्रह्मये (→आश्रयेत्); का1सर्वभावनाम्, ब2 सर्वभोगानाम्, मुवें. मुए. मुब. सर्वभूतानाम् (→सर्वभावानाम्). –d) दे5.6 शिवात्मकां (दे6 °कं) (→शिवात्मिकाम्).

५५. दे3. ⊙. –a) का1 दे1 पुत्री (→पुत्रीं); का1 सर्वाणां, ब1 दे1 सर्वाणी, म1 कल्याणीं (→शर्वाणीं). –b) दे5 तस्या (→तप्त्वा); ब3 दे6 सुदुस्तरं, दे1 सुदुष्करां (?), दे5 सुदुष्करं, न1 सुरेश्वरीं, ग्र2 सुदुश्चिरं, मुवें. मुए. मुब. सुदुश्चरन् (→सुदुश्चरम्). –d) दे1 ग्र2 पार्वती- (→पार्वतीं); ब1 दे1.5 न1 ते1 द1 ग्र1.2 म1 परमेश्वरः, पर्वतेश्वरः (→परमेश्वरीम्).

५६. –a) न1 जातमात्राञ्च, + जायमानां च, ग्र2 जायमानाञ्च, + वाञ्च मानञ्च वै (?) (→जायमानाञ्च). –b) दे4 स्वेच्छया च (→स्वेच्छयैव); दे5.6 वरानना, न1 पुरातनां, ते1 वरांगनां (→वराननाम्). –c) दे10 °तः पुत्री, द1 °तत्पत्नी (→°तः पत्नी). –d) का1 प्रहेयं, म1 प्रालेयं, + प्राहेयं (→प्राहेदं); दे1.8-10 परमेश्वरं (दे10-री) (→पर्वतेश्वरम्).

※दे3 मैनोवाच; दे4.8-10 मेना उवाच; ते1 मेना**च; द1 ग्र1.2 म1 मेना.

५७. का1 ब्राह्मीम् (→बालाम्). –b) का1 °सदृशाननीं, ग्र1 °सदृशाननात् (?) (→°सदृशाननाम्). –c) न1 °लोकानां (→°भूतानां). –d) ब1-3 दे2-6.8-10 न1 ते1 द1 ग्र1.2 म1 जाताश्च (ग्र2°तश्च) (→जाता च); ब2 तपसां च यैः, ब3 तपसा च मे, दे5 तपसा तयोः, दे6 तपसानयोः (→तपसावयोः).

५८. –a) दे 3 दृष्ट (?) (→दृष्ट्वा); दे1 द1 ग्र1.2 म1 महादेवीं, मुवें.मुए.मुब. ततो देवीं (→ततः पुत्रीं). –c) दे1.4.6 कपर्द्दिनी (→कपर्दिनीं); का1 चतुर्वक्त्रीं (→चतुर्वक्त्रां). –d) ब2 अभिलाषदां, दे5 अतिलालसीं, द1 ग्र1.2 अथ लालसां (ग्र1 °सीं), म1 च त्रिशूलिकां (→अतिलालसाम्).

५९. द1 ग्र1 म1. cd ⊙. दे4 चन्द्रा च पंचभूषणां, द1 ग्र1 म1 शशांकावयवां शुभां, ग्र2 शशांकावयशोभितां. –c) दे1 निर्गुणं (→निर्गुणां); दे5 सगुणान् (→सगुणां); न1 साक्षां (→साक्षात्). –d) दे4 °सन्निभां, दे6.10 °वर्जितं, ग्र2 °रूपिणीं (→°वर्जिताम्).

६०. द1 ग्र1 म1. ⊙. –b) ग्र2 तेन ते (→तेजसा); दे1.6.2 न1 चापि, ग्र2 [अ]मित- (→चाति-); दे1 °विह्वलाः (→°विह्वलः). –c) का1 भीमः, ग्र2 शिवः (→भीतः).

※ द1 ग्र1.2 म1.⊙; ते1 म1 हिमवान्.

६१. द1 ग्र1 म1. ⊙. –a) ग्र2 कामं (→का त्वं); दे10 देवी (→देवि); दे10 ते1 विशालाक्षी (→विशालाक्षि). –b) दे10 कुशांक (?) (→शशाङ्का-); ब1 °ङ्कितां, ब2.3 दे2.4.6 ते1 °ङ्किता (→°ङ्किते). –c) ब1 ग्र2 वत्स (→वत्से); दे1 न ना ने का महादेवि(?).

६२. –b) दे3 ततस्त्वं (→ततः सा). –c) दे2 (हि)व्याजहार, दे6 आजहार (→व्याजहार). –d) दे6 अभयप्रद (→अभयप्रदा).

देव्युवाच ।❀

मां विद्धि परमां शक्तिं परमेश्वरसमाश्रयाम् ।
अनन्यामव्ययामेकां यां पश्यन्ति मुमुक्षवः ॥६३
अहं वै सर्वभावानामात्मा सर्वान्तरा शिवा ।
शाश्वतैश्वर्यविज्ञानमूर्तिः सर्वप्रवर्तिका ॥६४
अनन्ताऽनन्तमहिमा संसारार्णवतारिणी ।
दिव्यं ददामि ते चक्षुः पश्य मे रूपमैश्वरम् ॥६५
एतावदुक्त्वा विज्ञानं दत्त्वा हिमवते स्वयम् ।
स्वं रूपं दर्शयामास दिव्यं तत् पारमेश्वरम् ॥६६
कोटिसूर्यप्रतीकाशं तेजोबिम्बं निराकुलम् ।
ज्वालामालासहस्राढ्यं कालानलशतोपमम् ॥६७
दंष्ट्राकरालं दुर्द्धर्षं जटामण्डलमण्डितम् ।
त्रिशूलवरहस्तं च घोररूपं भयानकम् ॥६८
प्रशान्तं सौम्यवदनमनन्ताश्चर्यसंयुतम् ।
चन्द्रावयवलक्ष्माणं चन्द्रकोटिसमप्रभम् ॥६९
किरीटिनं गदाहस्तं नूपुरैरुपशोभितम् ।
दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनम् ॥७०
शङ्खचक्रधरं काम्यं त्रिनेत्रं कृत्तिवाससम् ।
अण्डस्थं चाण्डबाह्यस्थं बाह्यमाभ्यन्तरं परम् ॥७१
सर्वशक्तिमयं शुभ्रं सर्वाकारं सनातनम् ।
ब्रह्मेन्द्रोपेन्द्रयोगीन्द्रैर्वन्द्यमानपदाम्बुजम् ॥७२
सर्वतः पाणिपादान्तं सर्वतोऽक्षिशिरोमुखम् ।
सर्वमावृत्य तिष्ठन्तं ददर्श परमेश्वरम् ॥७३ वें.१.१२.५६

❀ दे$_{1.8-10}$ मुवें. मुए. श्रीदेव्युवाच; दे$_{4}$ देव्य उवाच; ते$_{1}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ देवी.

६३. –a) दे$_{1}$ परमा, परमं (→परमां). –b) व$_{2}$ न$_{1}$ °समाश्रयात्, दे$_{3}$ °समाश्रयीं (?), दे$_{4.6.10}$ °समाश्रयं, द$_{1}$ ग्र$_{1.2}$ °समाश्रिताम्, म$_{1}$ °परिग्रहा (→°समाश्रयाम्). –d) ब$_{1}$ एकी यां, दे$_{3}$ एकां या (→एकां यां).

६४. –a) दे$_{8.9}$ मुवें.मुए.मुब.हि (→वै); ब$_{1}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ °भूतानां (→°भावानां). –b) दे$_{8-10}$ मात्रा (→आत्मा); दे$_{1}$ सर्वान्तराणि(?) वा, दे$_{4}$ सर्वान्तराश्रया, दे$_{5}$ सर्वाभरा शिवा, मुवें. मुए. सर्वात्मना शिवा (→सर्वान्तरा शिवा). –c) ब$_{3}$ दे$_{6}$ °विज्ञाना (→°विज्ञान-); दे$_{1}$ शाश्वती सर्वविज्ञाना, द$_{1}$ ग्र$_{1.2}$ म$_{1}$ शाश्वता सर्वविज्ञेया (ग्र$_{1}$ म$_{1}$ °य). –d) दे$_{1}$ -सर्वमूर्ति° (→-मूर्तिः सर्व°); न$_{1}$ ते$_{1}$ °प्रवृत्तिगा (ते$_{1}$ °का), ग्र$_{1.2}$ °प्रवर्त्तका (→°प्रवर्तिका).

६५. –a) का$_{1}$ °महिता (?) (→°महिमा). –b) का$_{1}$ °तारिणीं, न$_{1}$ °तारणा (→°तारिणी); ते$_{1}$ संसारान्तर-चारिणी. –c) दे$_{10}$ दधामि (→ददामि). –d) दे$_{1}$ परमेश्वरं, ग्र$_{1.2}$ म$_{1}$ योगमैश्वरं (→रूपमैश्वरम्).

६६. दे$_{1}$. cd ⊙. –a) दे$_{3}$ उक्ता (→उक्त्वा). –b) दे$_{10}$ दत्त्वा हिमवतेश्वरं, द$_{1}$ ग्र$_{1.2}$ म$_{1}$ दत्त्वा हिमवतस्स्वयम्. –c) का$_{1}$ ब$_{1.3}$ दे$_{3.4}$ ते$_{1}$ द$_{1}$ स्वरूपं (→स्वं रूपं). –d) का$_{1}$ ब$_{1}$ दे$_{1.3.6}$ न$_{1}$ ते$_{1}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ मुवें. मुए. परमेश्वरम् (→पारमेश्वरम्).

६७. –b) ब$_{3}$ तेजोराशि-, दे$_{3}$ ततो बिम्बं, न$_{1}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ तेजो विश्वं (→तेजोबिम्बं). –c) ग्र$_{2}$ °सहस्राभं (→सहस्राढ्यं); म$_{1}$ ज्वालाभ्याश्च सहस्राभ्याम्. –d) द$_{1}$ ग्र$_{1.2}$ म$_{1}$ दा (ग्र$_{2}$ द) वानल° (→कालानल°).

६८. –a) दे$_{1}$ दंष्ट्वा (?) (→दंष्ट्रा-); दे$_{2.6}$ ग्र$_{2}$ °करालदुर्द्धर्षं (→°करालं दुर्द्धर्षं); ते$_{1}$ दुर्दर्शं (→दुर्द्धर्षं). –c) द$_{1}$ त्रिशूलधर° (→त्रिशूलवर°). –d) दे$_{1}$ ग्र$_{2}$ म$_{1}$ भयावहम् (→भयानकम्); ब$_{1}$ घोररूपभयङ्करम्.

६९. –a) ब$_{3}$ दे$_{1.4.8-10}$ प्रशान्त- (→प्रशान्तं); दे$_{1}$ सौम्यनयनं (→सौम्यवदनम्). –b) का$_{1}$ दे$_{1.10}$ न$_{1}$ अनन्तै-श्वर्य°, द$_{1}$ ग्र$_{1.2}$ म$_{1}$ अनेकाकल्प° (→अनन्ताश्चर्य°). –d) ग्र$_{2}$ °समाप्रभम् (?) (→°समप्रभम्).

७०. –a) दे$_{1}$ किरीटिनीं (→किरीटिनं); दे$_{6}$ किरीटिन-महाहस्तं, न$_{1}$ वरदाभयहस्तं च. –c) दे$_{5}$ दिव्या(?)(→दिव्य-); ब$_{2.3}$ दे$_{5}$ °मालाम्बर° (→°माल्यांबर°).

७१. –a) का$_{1}$ चक्रांकितं, ब$_{3}$ दे$_{1.3-6}$ न$_{1}$ °चक्रकरं (→°चक्रधरं); दे$_{3}$ वाक्यं, दे$_{4}$ सौम्यं, द$_{1}$ ग्र$_{1.2}$ रस्यं, म$_{1}$ देवं (→काम्यं). –b) ब$_{3}$ कीर्तिवाससम् (→कृत्तिवाससम्). –c) दे$_{3.6}$ मुण्डस्त्वं, ते$_{1}$ अन्तस्थं(→अण्डस्थं); दे$_{3.6}$ °बाह्यस्त्वं (→°बाह्यस्थं). –d) ब$_{2}$ दे$_{3.6.10}$ न$_{1}$ ते$_{1}$ द$_{1}$ अभ्यन्तरं (→आभ्यन्तरं); ग्र$_{2}$ शुभम् (→परम्).

७२. दे$_{4}$. cd ⊙. –a) दे$_{1}$ शर्वशक्ति°, न$_{1}$ सर्वं सर्व°, ग्र$_{2}$ स वै शक्ति° (→सर्वशक्ति°); दे$_{1}$ शक्तं, द$_{1}$ ग्र$_{1}$ म$_{1}$ शंभुं, ग्र$_{2}$ सर्वं (→शुभ्रं). –b) न$_{1}$ सर्वाधारं (→सर्वाकारं). –c) का$_{1}$ ब्रह्मेन्द्रोपीन्द्र° (→ब्रह्मेन्द्रोपेन्द्र°). –d) दे$_{6}$ °पदाम्बुजैः (→°पदाम्बुजम्).

७३. –a) ब$_{1-3}$ दे$_{5}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ °पादन्तत्, दे$_{10}$ °पादन्तौ (→°पादान्तं). –b) ते$_{1}$ सर्वत्राक्षिशिरोमुखम्. –c)

वें१.१२.६० दृष्ट्वा तदीदृशं रूपं देव्या माहेश्वरं परम् ।
भयेन च समाविष्टः स राजा हृष्टमानसः ॥७४
आत्मन्याधाय चात्मानमोङ्कारं समनुस्मरन् ।
नाम्नामष्टसहस्रेण तुष्टाव परमेश्वरीम् ॥७५

हिमवानुवाच ।❀

शिवोमा परमा शक्तिरनन्ता निष्कलाऽमला ।
शान्ता माहेश्वरी नित्या शाश्वती परमाक्षरा ॥७६
अचिन्त्या केवलाऽनन्त्या शिवात्मा परमात्मिका ।
अनादिरव्यया शुद्धा देवात्मा सर्वगाऽचला ॥७७
एकानेकविभागस्था मायातीता सुनिर्मला ।
महामाहेश्वरी सत्या महादेवी निरञ्जना ॥७८
काष्ठा सर्वान्तरस्था च चिच्छक्तिरतिलालसा ।
नन्दा सर्वात्मिका विद्या ज्योतीरूपाऽमृताक्षरा ॥७९
शान्तिः प्रतिष्ठा सर्वेषां निवृत्तिरमृतप्रदा ।
व्योममूर्त्तिर्व्योमलया व्योमाधाराऽच्युताऽमरा ॥८०
अनादिनिधनाऽमोघा कारणात्मा कलाऽकला ।
क्रतुः प्रथमजा नाभिरमृतस्यात्मसंश्रया ॥८१
प्राणेश्वरप्रिया माता महामहिषघातिनी ।
प्राणेश्वरी प्राणरूपा प्रधानपुरुषेश्वरी ॥८२

---

दे$_{6.8-10}$ मुवें. मुए. मुब. तिष्ठन्तीं (→तिष्ठन्तं). –d) दे$_{4.8-10}$ मुवें. मुए. मुब. परमेश्वरीम् (→परमेश्वरम्).

७४. –a) का$_{1}$ दे$_{2.5}$ न$_{1}$ ग्र$_{2}$ तदीश्वरं (→तदीदृशं). –b) का$_{1}$ ब$_{2.3}$ दे$_{2.3}$ दिव्यं, ग्र$_{2}$ सर्वे (→देव्या); म$_{1}$ शिवं (→परम्). –d) का$_{1}$ [आ]कृष्टमानसः (→हृष्टमानसः).

७५. –a) दे$_{3.10}$ °न्याचापचा- (?), ग्र$_{2}$ °न्यात्मान च (?) (→°न्याधाय चा-). –c) दे$_{10}$ मम (→अष्ट-).

७५. b परं दे$_{5}$ पुस्तके अधिकम्—

* दृष्ट्वा तदीश्वरं रूपं देव्या माहेश्वरं परम् । ( = ७४ab).

❀ न$_{1}$ ते$_{1}$ ग्र$_{2}$ हिमवान्.

७६. –a) ब$_{1-3}$ दे$_{1-6}$ ॐ शिवो° (→शिवो°); ब$_{1}$ मे (→-मा); दे$_{10}$ शिवोपमा परा, द$_{1}$ ग्र$_{1.2}$ म$_{1}$ शिवा माया परा (→शिवोमा परमा). –b) का$_{1}$ मता, ब$_{2}$ शिवा, ग्र$_{2}$ परा (→[अ]मला). –c) ब$_{1}$ ग्र$_{2}$ म$_{1}$ महेश्वरी (→माहेश्वरी). –d) दे$_{1.8-10}$ न$_{1}$ शाश्वता (→शाश्वती); दे$_{8.9}$ परमाक्षरं (→परमाक्षरा).

७७. –a) का$_{2}$ ब$_{1.2}$ दे$_{3.5.6.10}$ न$_{1}$ ते$_{1}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ °लाऽनन्ता (→°लाऽनन्त्या); दे$_{1}$ अचिन्त्या परमा शक्तिः. –b) दे$_{2}$ शिवार्था, + शिवात्मा (→शिवात्मा). –d) का$_{1}$ दे$_{2}$ देवार्था, द$_{1}$ ग्र$_{1.2}$ सर्वार्था (→देवात्मा); ते$_{1}$ निर्गुणा (→सर्वगा); ग्र$_{2}$ परा (→[अ]चला).

७८. म$_{1}$. ab ⊙. –a) दे$_{6}$ °विभागश्च (→°विभागस्था). –b) ग्र$_{2}$****सुनिर्मला. –c) ब$_{1}$ म$_{1}$ महामहेश्वरी (→महामाहेश्वरी); ब$_{3}$ दे$_{3-5}$ नित्या (→सत्या). –d) दे$_{1}$ मदादेवो, ग्र$_{2}$ मायातीता, + महादेवी (→महादेवी); ग्र$_{2}$ सुनिर्मला, + निरञ्जना (→निरञ्जना).

७९. –a) ग्र$_{1.2}$ म$_{1}$ कामा (→काष्ठा); ग्र$_{2}$ कामा विकामा भू स्वाहा. –b) दे$_{3}$ अभिलालसा, (→अतिलालसा); का$_{1}$ चिच्छक्तिरतिरालसा. –c) का$_{1}$ ब$_{1-3}$ दे$_{1-3.5.6}$ न$_{1}$ ते$_{1}$ तारा, दे$_{4}$ भवा, दे$_{8-10}$ तदा, द$_{1}$ ग्र$_{1.2}$ म$_{1}$ नारी (→नन्दा); द$_{1}$ ग्र$_{1.2}$ म$_{1}$ विप्रा [:] (→विद्या). –d) का$_{1}$ दे$_{1.6.10}$ न$_{1}$ ग्र$_{1}$ ज्योतिरूपा, दे$_{5}$ ज्योतित्रपा (?) (→ज्योतीरूपा); का$_{1}$ दे$_{2.3.6}$ [अ]सिताक्षरा, (?) ब$_{1}$ [अ]क्षरामृता, दे$_{10}$ [अ]मिताक्षरा (→[अ]मृताक्षरा).

८०. –a) ग्र$_{2}$ सर्वेस्या (?) (→सर्वेषां). –b) ग्र$_{1}$ म$_{1}$ अमृता प्रभा, दे$_{6}$ अमृत द, ग्र$_{2}$ अमृतप्रभा (→अमृतप्रदा). –c) दे$_{1}$ व्योममयी, ग्र$_{2}$ व्योममाला (→व्योमलया). –d) का$_{1}$ दे$_{2}$ व्योमाचारा, ते$_{1}$ व्योमाकारा (→व्योमाधारा); ब$_{1}$ द$_{1}$ ग्र$_{1}$ म$_{1}$ [अ]च्युतालया, ग्र$_{2}$ [अ]च्युतानलं (→[अ]च्युताऽमरा); दे$_{1}$ व्योमाधारव्रताऽमला.

८१. –a) द$_{1}$ °निधनो (→°निधना); का$_{1}$ योधा, दे$_{1}$ घोरा (→[अ]मोघा). –b) ब$_{2}$ न$_{1}$ द$_{1}$ ग्र$_{1}$ म$_{1}$ कलाकुला, ब$_{3}$ कणाकुला, दे$_{3.6}$ करालिका, दे$_{10}$ कुलाकृधा (?), ग्र$_{2}$ निराकुला, मुवें. मुए. कुलाकुला (→कलाऽकला). –c) का$_{1}$ दे$_{2-4.9}$ ते$_{1}$ द$_{1}$ ऋतुः (द$_{1}$ °त), ब$_{2.3}$ दे$_{1}$ मन्त्र-, दे$_{5}$ तनु, दे$_{6}$ मन्त्रः, मुवें. मुए. मुब. स्वतः (→क्रतुः); ते$_{1}$ नीति- (→नाभिर्); ग्र$_{1}$ म$_{1}$ शतप्रमथजा सा(ग्र$_{1}$ °ता)हि, ग्र$_{2}$ शतप्रतिमजा साह. –d) ब$_{1}$ अमृतस्याभि°, दे$_{1}$ अमृतस्यांत°, दे$_{3}$ अमृतस्यार्थ°, दे$_{6}$ अमृतापार्थ°, न$_{1}$ अमृताख्यात्म°, ते$_{1}$ अमृतात्मात्म° (→अमृतस्यात्म°); ग्र$_{2}$ अग्रपा प्रवरोश्वरी.

८२. ग्र$_{2}$. cd ⊙. –a) ब$_{1-3}$ दे$_{3.6}$ प्राणेश्वरी (→प्राणेश्वर-); दे$_{4}$ °प्रियतमा (→°प्रिया माता); ग्र$_{2}$ प्रिया माता महामन्दा. –b) ब$_{2}$ दे$_{1}$ ग्र$_{1.2}$ म$_{1}$ °षवाहिनी, न$_{1}$

सर्वशक्तिकलाकारा ज्योत्स्ना द्यौर्महिमास्पदा ।
सर्वकार्यनियन्त्री च सर्वभूतेश्वरेश्वरी ॥८३
अनादिरव्यक्तगुहा महानन्दा सनातनी ।
आकाशयोनिर्योगस्था महायोगेश्वरेश्वरी ॥८४
महामाया सुदुष्पूरा मूलप्रकृतिरीश्वरी ।
संसारयोनिः सकला सर्वशक्तिसमुद्भवा ॥८५
संसारपारा दुर्वारा दुर्निरीक्ष्या दुरासदा ।
प्राणशक्तिः प्राणविद्या योगिनी परमा कला ॥८६
महाविभूतिर्दुर्द्धर्षा मूलप्रकृतिसंभवा ।
अनाद्यनन्तविभवा परार्था पुरुषारणिः ॥८७
सर्गस्थित्यन्तकरणी सुदुर्वाच्या दुरत्यया ।
शब्दयोनिः शब्दमयी नादाख्या नादविग्रहा ॥८८
प्रधानपुरुषातीता प्रधानपुरुषात्मिका ।
पुराणी चिन्मयी पुंसामादिः पुरुषरूपिणी ॥८९
भूतान्तरात्मा कूटस्था महापुरुषसंज्ञिता ।
जन्ममृत्युजरातीता सर्वशक्तिसमन्विता ॥९०
व्यापिनी चानवच्छिन्ना प्रधानानुप्रवेशिनी ।
क्षेत्रज्ञशक्तिरव्यक्तलक्षणा मलवर्जिता ॥९१　वें.१.१२.७८

---

°मशालिना, मुवें. मुए. मुब. °षवासिनी (→°षघातिनी.) –c) मुवें. मुए. मुब. प्राणी° (→प्राणे°). –d) ब$_{1.2}$ °परमेश्वरी (→°पुरुषेश्वरी)

दे$_{10}$ पुस्तके ८२ श्लोकात्परं ८४ संख्याकश्लोक आगतः ग्र$_{2}$ पुस्तके तस्य cd पादावागतौ तत्रैव ।

**८३.** दे$_{10}$ ग्र$_{2}$. ⊙; दे$_{5}$. cd ⊙. –a) ब$_{2.3}$ दे$_{1.4}$ न$_{1}$ ते$_{1}$ सर्वशक्तिः (सर्वशक्ति–); ब$_{1}$ -कलाधारा, दे$_{2}$ -शलाकारा (?), दे$_{5}$ -शताधारा, ते$_{1}$ -कराकारा (?), द$_{1}$ ग्र$_{1}$ म$_{1}$ -कलाकाली (→-कलाकारा). –b) का$_{1}$ ब$_{3}$ ज्योत्स्नाद्यैर्, ब$_{2}$ ज्योत्स्नान्दोर्, दे$_{1}$ ज्योत्स्नेंदो, दे$_{2}$ ज्योत्स्नौ यैर्, द$_{5}$ ज्योत्स्नीयैर्, दे$_{6}$ ज्योत्स्नावा, द$_{1}$ ज्योत्स्नादौ, (→ज्योत्स्ना द्यौर्); का$_{1}$ दे$_{2-4.6}$ ते$_{1}$ महिमा सदा, ब$_{1}$ महिमा° गदा (?), दे$_{1}$ द$_{1}$ ग्र$_{1}$ महिषास्पदा, म$_{1}$ माहिषाश्चिता (→महिमास्पदा). –c) ब$_{2}$ दे$_{1.4}$ सर्वकायव्रती चैव, द$_{1}$ ग्र$_{1}$ म$_{1}$ सर्वकार्यविधात्री च.

८३. b परं का$_{1}$ दे$_{2}$ अधिकम्–
प्राणशक्तिः प्राणविद्या योगिनी परमा कला । (= ८६ cd).

**८४.** दे$_{4}$ ग्र$_{2}$. ab ⊙. –a) का$_{1}$ ब$_{1-3}$ दे$_{2.3.5.6}$ ते$_{1}$ म$_{1}$ मुवें. मुए. मुब. °गुणा, दे$_{1}$ °गूहा, द$_{1}$ °भवा (→°गुहा). –b) ब$_{3}$ दे$_{1.8-10}$ महानंता, द$_{1}$ गुहानंता (→महानन्दा); न$_{1}$ सनातना, द$_{1}$ सरस्वती (→सनातनी). –d) द$_{1}$ ग्र$_{1.2}$ म$_{1}$ माया (→महा–).

**८५.** दे$_{4.10}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$. ab ⊙. –a) ब$_{1-3}$ दे$_{1.8.9}$ मुवें. मुए. मुब. सुदुष्पारा (→सुदुष्पूरा). –b) दे$_{3}$ °सम्भवा (→°रीश्वरी). –c) दे$_{4}$ द$_{1}$ °योनिसकला (→°योनिःसकला).

**८६.** दे$_{3.5}$. ab ⊙; ग्र$_{1}$ पुस्तके८६-८८ श्लोकाः ९० श्लोकानन्तरमागताः. –a) दे$_{8-10}$ मुवें. मुए. मुब. संसारपोता दुर्वारा, ग्र$_{2}$ संसारपारदुर्वारा. –b) का$_{1}$ ब$_{1-3}$ दे$_{2.4.8-10}$ ते$_{1}$ दुर्निरीक्षा (→दुर्निरीक्ष्या). –d) ब$_{1}$ दे$_{1.4.6}$ न$_{1}$ म$_{1}$ योगिनां (→योगिनी); दे$_{1}$ परमां (?) कला, दे$_{8-10}$ परमाकुला, ते$_{1}$ परमात्मिका, ग्र$_{1}$ परमामला, ग्र$_{2}$ परमालया, म$_{1}$ परमा गतिः (→परमा कला).

**८७.** दे$_{3.5}$. ⊙; द$_{1}$. d ⊙; ग्र$_{1}$ पुस्तके अयं श्लोकः ९० श्लोकानन्तरमागतः. –a) द$_{1}$ ग्र$_{1}$ सभा° (→महा°). –c) दे$_{4}$ अनवानंतविभवा (?), दे$_{10}$ अघनंदैवल विभ (?). –d) का$_{1}$ परमार्थप्रकर्षनी, ब$_{1}$ परमात्मसुरूपिणी, ब$_{2.3}$ परात्मा-पुरुषारणी (ब$_{3}$ °ली), दे$_{6}$ परात्मा परुषारणी, दे$_{8-10}$ परमाद्य (दे$_{10}$ °र्था) पकर्षणी, ग्र$_{2}$ परार्थपुरुषाणि च, न$_{1}$ ते$_{1}$ ग्र$_{1}$ म$_{1}$ परार्था (म$_{1}$ °र्थ) पुरुषारणी (ग्र$_{1}$°णीः), मुवें. मुए. मुब. परमाद्यापकर्षिणी.

**८८.** दे$_{3.5}$ द$_{1}$. ⊙. –a) म$_{1}$ सर्व° (→सर्ग°). –b) ब$_{2}$ सुदुर्भाव्या, दे$_{1}$ सुदुर्व्याप्या, दे$_{4}$ सुदुर्बोधा, दे$_{8.9}$ सुदुर्वच्या, दे$_{10}$ सु*र्वात्या, ग्र$_{1}$ म$_{1}$ सुदुर्वृत्ता, ग्र$_{2}$ सुदुर्वाक्या (→सुदुर्वाच्या). –d) ब$_{1}$ नाना°, दे$_{9}$ नाद्या°(→नादा°); का$_{1}$ दे$_{2}$ °दविश्रुता, (→°दविग्रहा); दे$_{1}$ निदानादविदग्रहा.

**८९.** द$_{1}$. a ⊙. –b) द$_{1}$ °रणी (→°त्मिका). –c) ब$_{1}$ ते$_{1}$ मुवें. मुए. मुब. पुराणा (→पुराणी); दे$_{1.4}$ माता, ते$_{1}$ सूक्ष्मा, द$_{1}$ ग्र$_{1}$ म$_{1}$ पुंसो, ग्र$_{2}$ हंसो (→पुंसाम्). –d) दे$_{1.4}$ पुंसामादिस्व°, द$_{1}$ ग्र$_{1.2}$ (अ)नादिः पुरुष°, म$_{1}$ [अ] नाभिः पुरुष°, मुवें. मुए. मुब. आदिपूरुष° (→आदिः पुरुष°).

**९०.** –a) दे$_{1.4.6.8-10}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ मुवें. मुए. मुब. भूतान्तरस्था (→भूतान्तरात्मा). –d) दे$_{8-10}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ °समुद्भवा (→°समन्विता).

**९१.** –a) म$_{1}$ °विच्छिन्ना (→°वच्छिन्ना). –b) ब$_{1-3}$ प्रधानात्म(ब$_{3}$ °त्मा)प्रवे(ब$_{2}$ °का)शिनी, दे$_{5.6}$ प्रधाना तु प्रवेशिनी. –c) का$_{1}$ ब$_{2.3}$ दे$_{3.5.6}$ न$_{1}$ क्षेत्रज्ञा

वे.१.१२.७८ अनादिमायासंभिन्ना त्रितत्त्वा प्रकृतिर्गुहा ।
महामायासमुत्पन्ना तामसी पौरुषी ध्रुवा ॥९२
व्यक्ताव्यक्तात्मिका कृष्णा रक्ता शुक्ला प्रसूतिका ।
अकार्या कार्यजननी नित्यं प्रसवधर्मिणी ॥९३
सर्गप्रलयनिर्मुक्ता सृष्टिस्थित्यन्तधर्मिणी ।
ब्रह्मगर्भा चतुर्विशा पद्मनाभाऽच्युतात्मिका ॥९४
वैद्युती शाश्वती योनिर्जगन्मातेश्वरप्रिया ।
सर्वाधारा महारूपा सर्वैश्वर्यसमन्विता ॥९५
विश्वरूपा महागर्भा विश्वेशेच्छानुवर्तिनी ।
महीयसी ब्रह्मयोनिर्महालक्ष्मीसमुद्भवा ॥९६
महाविमानमध्यस्था महानिद्रात्महेतुका ।
सर्वसाधारणी सूक्ष्मा ह्यविद्या पारमार्थिका ॥९७
अनन्तरूपाऽनन्तस्था देवी पुरुषमोहिनी ।
अनेकाकारसंस्थाना कालत्रयविवर्जिता ॥९८
ब्रह्मजन्मा हरेर्मूर्तिर्ब्रह्मविष्णुशिवात्मिका ।
ब्रह्मेशविष्णुजननी ब्रह्माख्या ब्रह्मसंश्रया ॥९९
व्यक्ता प्रथमजा ब्राह्मी महती ज्ञानरूपिणी ।
वैराग्यैश्वर्यधर्मात्मा ब्रह्ममूर्तिर्हृदिस्थिता ।
अपांयोनिः स्वयंभूतिर्मानसी तत्त्वसंभवा ॥१००

(दे3.6 °जा), ग्र2 म1 क्षेत्रज्ञश् (→क्षेत्रज्ञ-); का1 ब2 न1 द1 ग्र1.2 म1 अव्यक्ता (→अव्यक्त-). –d) दे8-10 सत्त्व° (→मल°).

**९२.** –a) दे8 °संभिन्न-, ते1 °संच्छन्न- (→°सम्भिन्ना). –b) का1 दे2.5 चित्तत्वा, द1 त्रितत्त्वात् (→त्रितत्त्वा); का1 °तिर्महा, ब1.3 दे8-10 मुवें. मुए. मुब. °तिग्रहा, दे3 °ति (वि) ग्रहा, ग्र2 °तिर्गुणा (→°तिर्गुहा). –c) द1 ग्र1.2 म1 °समुद्भूता (→°समुत्पन्ना).

ग्र2 पुस्तके b चरणानन्तरमधिकम्—

क्षेत्रज्ञशक्तिरव्यक्ता ( = ७६c).

**९३.** ब1 दे3.4.6 ते1. ९३ d 'नित्यं' इत्यतः प्रारभ्य ९९c 'जननी' इति यावत् ⊙ (द्र. सं.). –a) दे1 व्यक्ताव्यक्ता कृष्णरक्ता, ग्र2 व्यक्ताव्यक्तादका कृष्णा. –b) दे1 शुक्ला शुक्लाथ-सूतिका. –c) ब1.3 दे3.6 ते1 ग्र2 म1 अकार्य-, दे1 अकार्यो (→अकार्या); दे5 °जनना (→°जननी). –d) द1 ग्र1 म1 नित्या, ग्र2 नत्याय (→नित्यं).

**९४.** ब1 दे3.4.6 ते1. ⊙ (द्र. ९३ पा. वि. ); द1 ग्र1.2 म1. ab ⊙. –a) दे5 °प्रलाप° (→°प्रलय°). –b) का1 दे1.2 °कारिणी (→°धर्मिणी). –c) ब2.3 दे1 चतुर्वेदा (→चतुर्विशा). –d) दे1 पद्मनाभाश्च्युतात्मका, ग्र2 पद्मना-गार्चितात्मिका.

**९५.** ब1 दे3.4.6 ते1. ⊙ (द्र. ९३ पा. वि.). –a) ब2.3 न1 वैद्युता (→वैद्युती); का1 ब2.3 दे1.2.5 द1 ग्र1.2 म1 भास्वती (→शाश्वती); द1 ग्र1 म1 ज्योतिर् (→योनिर्). –b) का1 °श्वरी (→°श्वर-). –c) ग्र1 सर्व° (→सर्वा°); दे5 महीरूपा (→महारूपा).

**९६.** ब1 दे3.4.6 ते1. ⊙ (द्र. ७८ पा. वि.). –a) ब2 दे1 10 न1 महद्गर्भा, द1 महादर्भा (?), म1 महादर्पा (→महागर्भा). –c) ब3 दे1.5 महायसी (?) (→महीयसी); ब2.3 दे1 महायोनिः (→ब्रह्मयोनिर्).

**९७.** ब1 दे3.4.6 ते1. ⊙ (द्र. ९३ पा. वि.). –a) म1 °माना (→°मान-). –b) दे10 महारुद्रा° (→महानिद्रा°); का1 दे5 सहेतुका (→-त्महेतुका). –d) ब2.3 सुविद्या, दे1 द्यु (?) विद्या, न1 [अ]प्यविद्या- (→ह्यविद्या); दे1.8-10 न1 मुव्र. पा (दे1.8 प-)रमार्थिकी, दे5 परमार्थिका, द1 ग्र1 म1 परमार्थिनी, ग्र1 परमात्मनी (→पारमार्थिका).

**९८.** ब1 दे3.4.6 ते1. ⊙ (द्र. ९३ पा. वि.); ब2.3. दे1 ⊙ (द्र. सं.). –a) का1 दे2.5 अनन्तरूपा (का1 °प)मध्यस्था. –b) दे8.9 °मोहनी (→°मोहिनी). –c) का1 दे2.5 °संस्था च, दे10 °संस्थानं (→°संस्थाना); ग्र1 अनेककालसंस्थाना. –d) ग्र1.2 म1 कालक्रम° (→कालत्रय°); दे10 °वर्जिते (→°वर्जिता).

**९९.** ब1 दे3.4.6 ते1. abc ⊙ (द्र.९३ पा. वि.). –a) द1 ब्रह्मविष्णु– (→ब्रह्मजन्मा); दे2.5 मूलं, न1 मूर्त्ता (?) (→मूर्तिर्). –b) दे1 °त्मका (→°त्मिका). –d) ग्र1 ब्रह्माणी (→ब्रह्माख्या).

**१००.** –a) द1 ग्र1 म1 व्यक्त- (→व्यक्ता); ते1 प्रथ मजा (→प्रथमजा); ग्र2 अव्यक्तमहिमा ब्राह्मी-. –b) दे8-10 ग्र1 मुवें. मुए. मुब. ब्रह्मरूपिणी (→ज्ञानरूपिणी). –c) ते1 वैराग्ये**धूर्तात्मा. –d) का1 ब्रह्ममूर्ती, ब3 दे3 ब्रह्म-मूर्ति–, दे1ब्रह्ममूर्तिर्, + ब्रह्मर्हति (?), दे2.5 ब्रह्ममूर्ते (→ब्रह्म-मूर्तिर्). –c) दे1 स्वयं योनिर्, ते1 स्वयंज्योतिर् (→स्वयंभूतिर्). –f) द1 ग्र1.2 म1 भव° (→तत्त्व°); ब2 मानवीतनुसंभवा

ईश्वराणी च शर्वाणी शंकरार्द्धशरीरिणी ।
भवानी चैव रुद्राणी महालक्ष्मीरथाम्बिका ॥१०१
महेश्वरसमुत्पन्ना भुक्तिमुक्तिफलप्रदा ।
सर्वेश्वरी सर्ववन्द्या नित्यं मुदितमानसा ॥१०२
ब्रह्मेन्द्रोपेन्द्रनमिता शंकरेच्छानुवर्तिनी ।
ईश्वरार्द्धासनगता महेश्वरपतिव्रता ॥१०३
सकृद्विभाविता सर्वा समुद्रपरिशोषिणी ।
पार्वती हिमवत्पुत्री परमानन्ददायिनी ॥१०४
गुणाढ्या योगजा योग्या ज्ञानमूर्तिर्विकासिनी ।
सावित्री कमला लक्ष्मीः श्रीरनन्तोरसि स्थिता ॥१०५
सरोजनिलया मुद्रा योगनिद्रा सुरार्दिनी ।
सरस्वती सर्वविद्या जगज्ज्येष्ठा सुमङ्गला ॥१०६
वाग्देवी वरदा वाच्या कीर्तिः सर्वार्थसाधिका ।
योगीश्वरी ब्रह्मविद्या महाविद्या सुशोभना ॥१०७
गुह्यविद्यात्मविद्या च धर्मविद्यात्मभाविता ।
स्वाहा विश्वंभरा सिद्धिः स्वधा मेधा धृतिःश्रुतिः ॥१०८
नीतिः सुनीतिः सुकृतिर्माधवी नरवाहिनी ।
अजा विभावरी सौम्या भोगिनी भोगदायिनी ॥१०९ बे.१.१२.६६

---

ब$_1$ पुस्तके b चरणान्तरमधिकम्–
भवानी चैव रुद्राणी ( = १०१c).

**१०१.** –c) ते$_1$ शर्वाणी (→भवानी). –d) ब$_1$ दे$_{10}$ न$_1$ -तथांबिका, ते$_1$ -रुषांबिका, द$_1$ म$_1$ -धराम्बिका (→-रथाम्बिका).

**१०२.** –a) का$_1$ ब$_1$ दे$_{2.3.5.6.10}$ ते$_1$ माहेश्वरी (दे$_{10}$ °र) (→महेश्वर-). –b) ब$_1$ भुक्तिमुक्ति (प्रदयि) फलप्रदा. –c) ग्र$_{1.2}$ म$_1$ महेश्वरी (→सर्वेश्वरी).; का$_1$ दे$_{2.5}$ सर्ववर्णा, दे$_{1.6}$ सर्वविद्या (→सर्ववन्द्या). –d) ग्र$_2$ नित्या (→नित्यं).

**१०३.** –a) दे$_4$ °नामिता (→°नमिता). –b) द$_1$ ग्र$_{1.2}$ म$_1$ शंकरार्धशरीरिणी. –c) द$_1$ ईश्वराद्यासनगता, म$_1$ ईश्वराभ्यायनगता. –d) दे$_{6.10}$ ते$_1$ माहेश्वरपतिव्रता.

**१०४.** –a) ब$_1$ दे$_{5.8\text{-}10}$ न$_1$ ते$_1$ मुवें. मुए. मुब. सकृद्विभाता सर्वार्ति- (ब$_1$-°र्तिः, दे$_{10}$-°शीर्, ते$_1$-°र्णी), दे$_1$ सकृद्वाह्यंधसंसारे, दे$_4$ संविद्विहितसर्वार्तिः, द$_1$ सकृद्वापारसंसार–, ग्र$_1$ सावित्रीहृतसर्वार्ति–, ग्र$_2$ स तद्वत् भावसंसार–, म$_1$ सकृद्वाहा सुसंसारा. –b) का$_1$ °शोषरी (?), ब$_1$ °शोधनी, ब$_2$ °शोभिनी, दे$_{2.6}$ °शोषणी (→°शोषिणी).

**१०५.** –a) का$_1$ दे$_5$ गुणाद्या, ब$_3$ गुणात्मा (→गुणाढ्या); ब$_{1\text{-}3}$ दे$_{1.3.6}$ न$_1$ ते$_1$ योगदा, दे$_4$ योगधा (→योगजा); न$_1$ योगा (→योग्या). –b) का$_1$ दे$_{3.4.8\text{-}10}$ ते$_1$ ज्ञानमूर्ति–, द$_1$ ग्र$_1$ म$_1$ ज्ञानमुक्ति– (→ज्ञानमूर्तिर्); का$_1$ ब$_{1.2}$ दे$_{2.3.5.9}$ विकाशिनी, दे$_{1.6}$ विरागिनी, दे$_{10}$ विनाशिनी (→विकासिनी). –c) का$_1$ ब$_{1\text{-}3}$ दे$_{2.3.5.9.10}$ ग्र$_1$ लक्ष्मी (→लक्ष्मीः); म$_1$ सवितृस्सकला लक्ष्मीः.

**१०६.** दे$_3$ पुस्तके १०६ a 'मुद्रा' इत्यारभ्य १०७d 'महाविद्या' इति यावत् खण्डितम्; दे$_6$. १०६d–१०८a ⊙ (द्र. सं.). –a) दे$_{1.6.8\text{-}10}$ द$_1$ ग्र$_{1.2}$ मुवें. मुए. मुब. गंगा, म$_1$ गर्भा (→मुद्रा). –b) दे$_4$ योगमुद्रा, दे$_6$ योगलिष्ठा (→योगनिद्रा); दे$_{1.6}$ सुगन्धिनी (→सुरार्दिनी). –c) दे$_1$ जगज्येष्ठा, दे$_4$ सर्वविद्या (→सर्वविद्या). –d) दे$_1$ सर्वविद्या, ते$_1$ जगज्ज्योत्स्ना, द$_1$ ग्र$_1$ म$_1$ जनज्येष्ठा (→जगज्ज्येष्ठा); ब$_3$ स्वमङ्गला (→सुमङ्गला).

**१०७.** दे$_3$ पुस्तके १०७d 'महाविद्या' इति यावत् खण्डितम्; दे$_6$. ⊙ (द्र. १०६ पा. वि.). –a) का$_1$ ब$_{2.3}$ दे$_5$ ते$_1$ वासवी, दे$_8$ वासवा (→वाग्देवी); दे$_1$ द$_1$ ग्र$_{1.2}$ वाक्या, दे$_9$ वास्था (?) (→वाच्या); ब$_1$ वासवा वरजोदाश. –b) दे$_{10}$ °साधका, ग्र$_2$ °दायिनी (→°साधिका). –c) का$_1$ ब$_{2.3}$ दे$_{1.2.4.5.10}$ न$_1$ ते$_1$ ग्र$_{1.2}$ म$_1$ वागीश्वरी (→योगीश्वरी); का$_1$ ब$_2$ दे$_{2.5}$ सर्वविद्या, ब$_3$ विश्वविद्या (→ब्रह्मविद्या). –d) दे$_{10}$ य शोभना (?) द$_1$ ग्र$_1$ म$_1$ [अ]तिशोभना, ग्र$_2$ तु शोभना (→सुशोभना).

**१०८.** दे$_6$. a ⊙ (द्र. १०६ पा. वि.). –a) दे$_3$ [अ]र्थविद्या च, दे$_{10}$ [आ]त्म (ग) विद्या च, म$_1$ महाविद्या (→[आ]त्मविद्या च). –b) का$_1$ ब$_{2.3}$ दे $_{2.5}$ सर्वविद्यात्म-, दे$_{1.6}$ ब्रह्मविद्यात्म(दे$_6$ °र्थं.), दे$_3$ धर्म्मविद्यार्थ- (→धर्मविद्यात्म-). –c) दे$_{10}$ शक्तिः, ग्र$_3$ शुद्धिः (→सिद्धिः). –d) द$_1$ ग्र$_1$ म$_1$ श्रुतिः (→धृतिः); ब$_1$ दे$_4$ ते$_1$ द$_1$ ग्र$_1$ म$_1$ स्मृतिः (→श्रुतिः).

**१०९.** –a) दे$_{10}$ द$_1$ ग्र$_1$ सुकृती (→सुकृतिर्); दे$_4$ नातिनीतिः मुनिकृतिः. –b) न$_1$ नवबाहिनी, दे$_1$ ग्र$_1$ म$_1$ वरवाहिनी (→नरवाहिनी). –c) का$_1$ ब$_1$ दे$_{5.8.9}$ न$_1$ द$_1$ ग्र$_2$ मुवें.मुए.मुब. पूज्या, ते$_1$ पूजा,(→अजा); दे$_1$ ग्र$_2$ विभाविनी, दे$_6$ विभावनी, दे$_{8\text{-}10}$ न$_1$ मुवें. मुए. विभावती (→विभावरी); म$_1$ अजावती सौम्यविद्या. –d) दे$_1$ ते$_1$ भगिनी (→भोगिनी); दे$_{8\text{-}10}$ मुवें. मुए. मुबे. भोगशायिनी (→भोगदायिनी).

वें १.१२.६७ शोभा वंशकरी लोला मालिनी परमेष्ठिनी ।
त्रैलोक्यसुन्दरी रम्या सुन्दरी कामचारिणी ।।११०
महानुभावा सत्त्वस्था महामहिषमर्दनी ।
पद्ममाला पापहरा विचित्रा मुकुटानना ।।१११
कान्ता चित्राम्बरधरा दिव्याभरणभूषिता ।
हंसाख्या व्योमनिलया जगत्सृष्टिविवर्द्धिनी ।।११२
निर्यन्त्रा यन्त्रवाहस्था नन्दिनी भद्रकालिका ।
आदित्यवर्णा कौमारी मयूरवरवाहिनी ।।११३
वृषासनगता गौरी महाकाली सुरार्चिता ।
अदितिर्नियता रौद्री पद्मगर्भा विवाहना ।।११४
विरूपाक्षी लेलिहाना महापुरनिवासिनी ।
महाफलाऽनवद्याङ्गी कामपूरा विभावरी ।।११५
विचित्ररत्नमुकुटा प्रणतार्तिप्रभञ्जनी ।
कौशिकी कर्षणी रात्रिस्त्रिदशार्त्तिविनाशिनी ।।११६
बहुरूपा सुरूपा च विरूपा रूपवर्जिता ।
भक्तार्तिशमनी भव्या भवभावविनाशिनी ।।११७

११०. -a) ब3 शौभा, दे4 शिवा, ग्र2 शोभ (?), म1 वशा (→शोभा); ब1 दे6.8.9 ग्र1 मुवें. च शंकरी, दे4 वशांकरी, दे10 म1 वशंकरी, न1 वंशंकरी, द1 वै शंकरी, ग्र2 वा शंकरी (→वंशकरी); दे4 लोका, द1 ग्र1.2 म1 लोभा (→लोला). -b) का1 मलिना, द1 ग्र1.2 म1 मानिनी, (→मालिनी). -c) दे8.9 मुवें. मुए. नम्या (→रम्या). -d) ग्र2 चर्मकारिणी (→कामचारिणी).

१११. दे10. १११c–११२d ⊙ (द्र. सं.). -a) का1 ब1-3 दे2-4.5 न1 ते1 महानुभाव (का1 ब2 दे4.5 ते1 °वा) मध्यस्था, दे1.6 म1 महानुभावसत्त्वस्था, दे9 महानुभावसत्यस्था, ग्र2 महानुभावा संकस्था. -b) का1 ब1-3 दे1.2.5.6.10 न1 ते1 द1 ग्र1.2 म1 मुवें. मुए. मुब. °महिनी (→°मर्दनी). -c) दे8.9 द1 ग्र2 मुवें.मुए. पद्मनाभा, ग्र1 म1 पद्मनाला (?) (→पद्ममाला). -d) का1 ब1-3 दे1.2.4.5.8.9 न1 ते1 द1 ग्र1 म1 मुवें. विचित्र-(दे1°त्रं) (→विचित्रा); दे5 मुकुटासना, दे8.9 मुवें. मुए. मुब. मुकुटांगदा, न1 ते1 म (ते1 मु)कुटारमा, द1 ग्र2 म1 कुमुदारसा, ग्र1 मुकुटोज्वला (→मुकुटानना).

११२. दे10. ⊙ (द्र. १११ पा. वि.). -a) दे1 कांत–, दे3.6 शांता (→कान्ता); ब1 (वि)चित्रा° (→चित्रा°). -b) ब2 °भूषणा, दे3 भूषितां (?) (→°भूषिता). -c) द1 म1 कंसाख्या (→हंसाख्या); न1 सोम° (→व्योम°). -d) दे1 जगद्वष्टिः (?), द1 जगद्वृष्टि- (→जगत्सृष्टि-), दे1 द1 ग्र1.2 म1 °विसर्जिज(ग्र1°सर्ज)वी, दे3.8-9 °विवर्द्धनी (→°विवर्द्धिनी); ब2 जगत्सृष्टिविधायिनी.

११३. -a) का1 दे1.2.4.6.10 द1 ग्र1.2 म1 मुवें. मुए. मुब. नियन्त्री, दे3 नियन्त्रा, दे5 न1 निर्यन्त्री, दे8.9 त्रियन्त्रा, ग्र2 यन्त्री च (→निर्यन्त्रा); दे8-10 ग्र2 मुवें. यन्त्रमध्यस्था, ते1 यन्त्रबाह्यस्था (→यन्त्रवाहस्था). -b) का1 नन्दनी (→नन्दिनी); दे1 रुद्रकालिका (→भद्रकालिका). -c) दे8-10 मुवें. मुए. कौवेरी, द1 ग्र2 कामेशी, म1 कामाशी (→कौमारी). -d) ब1 दे1.4.8-10 न1 ते1 द1 ग्र1 म1 मुवें. मुए. मुब. °रवाहना (→°वाहिनी).

११४. -a) ब3 वृषसेनमहा, दे3.6 वृषसेनगता, द1 ग्र1.2 म1 वृषाभगवती (→वृषासनगता). -b) दे1 महाकीली (?), दे10 महीः कालिस् (→महाकाली); दे8.9 सुर्गविता, दे10 तु गर्विता (→सुरार्चिता). -c) दे1 आदिनिर्णयता रौद्री, द1 ग्र2 म1 आदिति निशिता रौद्री, मुवें. मुए. अदितिनियता रौद्रा. -d) दे1 विभाविनी, दे3.6 [अ]रिवाहना, दे4 विवाहिनी (→विवाहना).

११५. -a) ब1 ते1 दे10 विरूपाख्या, ब2.5 दे5.8.9 द1 ग्र1 म1 विरूपाक्षा (→विरूपाक्षी); का1 लोलहारा, दे3 निलेहाना(?), दे4 लेलिहासा, दे5 लेलिहाला, ग्र2 लेलिहास- (→लेलिहाना). -b) दे1 द1 ग्र1.2 म1 गुहा° (→महा°); दे4 °पुरनिवासिनी, दे8-10 द1 ग्र1 म1 मुवें. °सुरविनासिनी, न1 °पुरुषवासिनी, ग्र2 °सुरसंहारिणी (→°पुरनिवासिनी). -c) दे8 महाकाला, द1 ग्र1.2 म1 महाबला (→महाफला). -d) ब2 दे1.8-10 द1 ग्र1 म1 मुवें. मुए. मुब. कामरूपा, ब3 दे2 कामा-(?)पुरा, दे4 कमलाभा (→कामपूरा); ग्र2 कामरूपविभावरी.

११६. -a) म1 विचित्रा (→विचित्र-); दे3 °मुकुटी, द1 °मनुजा, ग्र1.2 म1 °मकुटा (→°मुकुटा). -b) का1 ब3 दे2 °प्रभञ्जिनी (→°प्रभञ्जनी). -c) ग्र2 कौमार- (→कौशिकी); दे1 कर्षिणी, दे3.6 कर्षणा, द1 ग्र2 करणी (→कर्षणी); का1 दे10 रात्री, द1 मंत्री (→रात्रिस्); म1 कौन्तिकरणी गात्री*. -d) ब1 °विनाशनी, दे1 द1 ग्र1.2 म1 °प्रभञ्जनी (→°विनाशिनी).

११७. -a) का1 ब1-3 दे2-6 ते1 ब्रह्मरूपा (का1 °प), दे1 वेदरूपा (→बहुरूपा); का1 ब2.3. दे2.3.5.6 न1 ग्र2 म1 मुवें. मुए. मुब. स्वरूपा (→सुरूपा); दे10 सु-(→च). -b) दे1 सुरूपा (→विरूपा); ब2 दे3 रूपवर्णिता (→रूपवर्जिता); द1 ग्र1.2 म1 विश्वरूपा विवर्जिता. -c) दे4 भक्त्यार्तिसामनी, न1 भर्ता-

निर्गुणा नित्यविभवा निःसारा निरपत्रपा ।
यशस्विनी सामगीतिर्भवाङ्गनिलयालया ॥११८
दीक्षा विद्याधरी दीप्ता महेन्द्रविनिपातिनी ।
सर्वातिशायिनी विद्या सर्वसिद्धिप्रदायिनी ॥११९
सर्वेश्वरप्रिया तार्क्ष्या समुद्रान्तरवासिनी ।
अकलङ्का निराधारा नित्यसिद्धा निरामया ॥१२०
कामधेनुर्बृहद्गर्भा धीमती मोहनाशिनी ।
निःसङ्कल्पा निरातङ्का विनया विनयप्रदा ॥१२१
ज्वालामाला सहस्राढ्या देवदेवी मनोन्मनी ।
महाभगवती दुर्गा वासुदेवसमुद्भवा ॥१२२
महेन्द्रोपेन्द्रभगिनी भक्तिगम्या परावरा ।
ज्ञानज्ञेया जरातीता वेदान्तविषया गतिः ॥१२३
दक्षिणा दहना दाह्या सर्वभूतनमस्कृता ।
योगमाया विभावज्ञा महामाया महीयसी ॥१२४ वें१.१२.१११

तिनाशिनी, ग्र1 भक्तार्तिनाशिनी, म1 भक्तार्तिदमनी (→भक्तार्तिशमनी); दे8.9 न1 भाव्या, द1 म1 दिव्या (→भव्या). –d) का1 ब3 दे2.5 भवभार°, दे4 भवाभव°, न1 भवाभाव°, मुवें. मुए. मुब. भवताप° (→भवभाव°); ब1 दे3 °विनाशनी (→°विनाशिनी).

११८. म1. ११८- ११९ ⊙. –a) दे1 निर्गुणादित्यविभवा, ग्र2 ***नित्यविभवा. –b) का1 नीतिः सारा निपत्रपा, न1 निःसारा निरुपद्रवा, ग्र1 निस्साराम्निरपत्रपा, ग्र2 निस्वरा निरुपत्रपा. –c) दे1.8-10 द1 मुवें. मुए. मुब. तपस्विनी, ग्र1.2 तमस्विनी (→यशस्विनी); दे1 वशा सर्गा, दे4 सोमशिरा, दे10 सोमगीती, ग्र2 भगवती (→सामगीतिर्). –d) ब3 दे8.9 न1 द1 ग्र1 मुवें. मुए. मुब. भवाङ्क°, दे1 भुवोगं° (?), दे10 भवांत° (→भवाङ्ग°); दे4 °निलयानिला (→निलयालया).

११८. श्लोकस्य b,c मध्ये दे3 पुस्तके अधिकम्-
*. ** की कर्षणा रात्रिस्त्रिदशार्त्तिविनाशिनी ।
(= ११९cd)

११९. म1. ⊙. –a) ब3 विद्याधरी दीव्या, दे3 विद्याचरी दीप्ता, दे8.9 विद्याधरी दीक्षा, दे10 **धरी दीक्षा, न1 विद्याधरा दीप्ता, ग्र2 विद्याधरी रूपा (→विद्याधरी दीप्ता). –b) ब1 महेन्द्राहिविनाशिनी. –c) का1 सर्वातिनयनी, दे1 सर्वार्त्तिशमनी, दे5 सर्वाभिशयिनी, ग्र1 सत्गतिर्य्यायिनी(?), ग्र2 सर्वत्रया*नी (→सर्वातिशायिनी); ब1 विश्व-, दे1.4.8-10 ते1 मुवें. मुए. मुब. विश्वा (→विद्या). –d) दे3 °प्रपायिनी (→°प्रदायिनी).

१२०. मुए. ab⊙.–a) का1 सर्वेश्वरा (→सर्वेश्वर-); का1 दे5.6 तार्क्षा (दे5 °क्षा, दे6 °क्ष), ब2.3 दे3 मुब. तार्क्षी, दे1.8.9 मुवें. भार्या, द1 ग्र1 म1 तर्का, ग्र2 काम्या (→तार्क्ष्या). –c) दे2 निष्कलंका (→अकलङ्का); दे4 निराचारा (→निराधारा). –d) दे5 नित्यं (→नित्य-); दे4 °सिद्धि (→°सिद्धा).

१२१. दे4. १२१ b 'धीमती' इत्यारभ्य १२२ c 'भर्गा' इति यावत् ⊙ (द्र. सं.). –a) दे1 बृ*द्र्धा(?)र्या, दे4 बृहद्धानुर् (→बृहद्गर्भा). –b) दे4 ग्र2 धीमति (ग्र2 °ती) मोह°, म1 संसारग्राह° (→धीमती मोह°); ब1 दे6 ते1 °नाशनी (→°नाशिनी). –c) का1 निराकल्पा, ब1 दे1.3.6 निःशंका च, म1 श्रीसुकल्पा (→निःसंकल्पा); ते1 निरानन्दा (→निरातङ्का). –d) दे1 विलया, म1 विनता (→विनया); दे1 विनतप्रिया, द1 ग्र1 म1 [अ]वनतप्रिया, दे8-10 न1 ग्र2 मुवें. मुए. मुब. विनयप्रिया (→विनयप्रदा).

ग्र2 पुस्तके १२१ b चरणानन्तरमधिकम्—
निर्गुणा नित्यविभवा मायीति मोहनाशिनी ।

१२२. दे4. abc ⊙ (द्र. १२१ पा. वि.). –a) का1 ज्वालामाल्य (→ज्वालामाला); दे1.3.5 सहस्राद्या (→सहस्राढ्या). –b) दे10 देवदेवा, ग्र2 देवे देव-(→देवदेवी); ब1 मनोन्मयी, दे1 मनोमयी (→मनोन्मनी). –c) का1 दे2.3 न1 द1 ग्र1 महाभागवती, ब1 महाभोगवती (→महाभगवती); का1 दे2 भर्म्या, ब1 बन्द्या, दे3 भक्त्या, ब2 दे5.8-10 मुवें. मुए. मुब. भर्गा, न1 गर्भा, (→दुर्गा); ब3 महामोहा च भवती. –d) का1 ग्र1 वसुदेवसमुद्भवा.

१२३. –a) द1 ग्र1.2 म1 महेन्द्रोपेन्द्रजननी. –b) म1 भक्तियुक्ता (→भक्तिगम्या); का1 ब2.3 दे2.3.5.6 परायणा, ब1 दे4 ते1 परापरा (→परावरा). –c) ब3 परातीता, दे3 जराभीता, दे10 जनातीता, ते1 जगद्गीता, द1 ग्र1 म1 करातीता (→जरातीता); ग्र2 ज्ञानज्ञेयकरानीता. –d) द1 ग्र1.2 म1 मतिः (→गतिः).

१२४. ग्र2. b ⊙. –a) ब2.3 दहना दान्ता, दे1.4.6 दहना माया, दे8.9 दहना दार्व्या, दे10 दहना गुह्या, ते1 दहना दीक्षा, द1 ग्र2 म1 दाननिरता, ग्र1 दानचरिता, मुवें. मुए. मुब. दहती दीर्वा (→दहना दाह्या). –b) का1 °मयस्कृता, म1 °नमस्तुता (→°नमस्कृता). –c) ब1.3 दे4.8-10 न1 ते1 द1 मुवें. मुए. मुब. विभागज्ञा, ग्र2***ज्ञा (→विभावज्ञा). –d) दे2.5.8-10 न1 ते1 ग्र2 मुवें. मुए. मुब. महामोहा (ते1 ग्र2 °ह)-, दे4 योगमाया, द1 म1 महामोहा, ग्र1 मुह्यामोहा (→महामाया).

वें१.१२.११२ संध्या सर्वसमुद्भूतिर्ब्रह्मवृक्षाश्रयानतिः ।
बीजाङ्कुरसमुद्भूतिर्महाशक्तिर्महामतिः ॥१२५
ख्यातिः प्रज्ञा चितिः संवित् महाभोगीन्द्रशायिनी ।
विकृतिः शांकरी शास्त्री गणगन्धर्वसेविता ॥१२६
वैश्वानरी महाशाला देवसेना गुहप्रिया ।
महारात्रिः शिवानन्दा शची दुःस्वप्ननाशिनी ॥१२७
इज्या पूज्या जगद्धात्री दुर्विज्ञेया सुरूपिणी ।
गुहाम्बिका गुणोत्पत्तिर्महापीठा मरुत्सुता ॥१२८
हव्यवाहान्तरागादिः हव्यवाहसमुद्भवा ।
जगद्योनिर्जगन्माता जन्ममृत्युजरातिगा ॥१२९
बुद्धिमाता बुद्धिमती पुरुषान्तरवासिनी ।
तरस्विनी समाधिस्था त्रिनेत्रा दिवि संस्थिता ॥१३०
सर्वेन्द्रियमनोमाता सर्वभूतहृदि स्थिता ।
संसारतारिणी विद्या ब्रह्मवादिमनोलया ॥१३१

---

–d) ब1 यतीयसी, दे1.8-10 द1 ग्र1.2 म1 मुवें मुए. मुब. गरीयसी, दे4 गनायसी (?), न1 महीयसा, ते1 महींमया (→महीयसी).

१२५. दे1. bc ⊙ (द्र. सं.); म1. cd ⊙. –a) ते1 ग्र2 सत्या (→सन्ध्या); दे4 °समुद्भूत- (→°समुद्भूतिर्). –b) ब3 °ब्रह्मा, + °वृक्षा, मुवें. मुए. °विद्या (→°वृक्षा); दे8-10 न1 ग्र1 °दितिः, द1 म1 मुवें. मुए. मुब. °दिभिः (→°नतिः); का1 महाशक्तिर्महागतिः, ब1 ब्रह्मा वृक्षश्रमा मतिः. –c) न1 °समुत्पत्तिर्, दे5 °ससंभूतिर् (→°समुद्भूतिर्). –d) बीजमूर्तिर् (→महाशक्तिर्); दे1 महागतिः (→महामतिः).

१२६. ग्र2 'प्रज्ञा' इत्यारभ्य 'महाभो' इति यावत् ⊙. –a) ते1 ज्ञातिः, मुवें.मुए. मुब. क्षान्तिः (→ख्यातिः); ग्र1 म1 ब्रह्मा (→प्रज्ञा); दे1 चिति, न1 विभा (→चितिः); दे2 न1 संचिन, मुवें. मुए. मुब. सच्चिन्° (→संवित्); द1 ख्याति ब्रह्माचित्संवित्. –b) दे4 ते1 द1 °योगीन्द्र° (→°भोगिन्द्र°); न1 °दायिनी, ते1 °साधनी (→°शायिनी). –c) का1 दे2.5 शस्त्री, दे8-10 मुवें. मुए. मुब. शास्तिर्, द1 ग्र1.2 शान्तिः, (→शास्त्री); दे1 त्र(प्र?)कृतिर्विकृतिः शान्तिः. –d) दे1 गुणा गन्धर्वसेविता, दे4 द1 ग्र1 म1 गन्धर्वगणसेविता, ग्र2 गन्धर्वोरगसेविता.

१२७. –a) दे6 विश्वानरी (→वैश्वानरी); दे1 महाशाली, दे5 महाशीला (→महाशाला). –b) दे1 दैवसेना, दे2 देहसेना, दे8-10 मुवें. मुए. मुब. महासेना (दे8 °न, दे10 °य), द1 ग्र1.2 म1 देवसेनी (ग्र2°न) (→देवसेना); का1 दे5 गुरुप्रिया, द1 गुहाप्रिया, (?), म1 गृहप्रिया (→गुहप्रिया). –c) म1 गुहारात्रिश् (→महारात्रिः). –d) ते1 सर्व- (→शची); ब1 दे8.9 दुःस्वप्ननाशनी, ब3 दे4 दुःखप्रणाशिनी (→दुःस्वप्ननाशिनी).

१२८. –a) ब3 दे10 ईज्या, दे1 उह्या, दे3 इष्ट्वा, दे5 रज्या, दे6 इत्या, न1 वन्द्या, द1 ग्र1.2 म1 ईड्या (→इज्या); द1 ग्र1 म1 पूज्या (ग्र1°जा) गणाधात्री (→पूज्याजगद्धात्री). –b) का1 ब2.3 दे5 ते1 ग्र2 दुर्विज्ञेयस्व°, दे1 दुविनेया सु°, दे2 दुर्विलेयस्व°, दे3 दुर्व्विभयस्व°, दे6 दुर्विनेया स्व°, न1 दुर्विनेयसु°, मुवें. मुए. मुब. दुर्विनेया सु° (→दुर्विज्ञेया सु°). –c) ब1 गुणात्मिका, ब3 गुहात्मिका, म1 शुभांबिका (→गुहाम्बिका); का1 दे4 गुहोत्पत्तिर्, ब1 गणोत्पत्तिर्, द1 गुणोत्पत्ति (?), ग्र2 गुणो भक्तिः (→गुणोत्पत्तिर्). –d) ब1 महाद्रे हि(?), दे1 महायाता, दे4 महाशीता, द1 ग्र1 म1 महापीडा (→महापीठा); ब2 निरुत्सुता, ब3 निरुत्सुका, + मरुत्सुता, दे1 ग्र2 निरुत्सुका, दे2.4 मरुल्लता, म1 महत्सुता (→मरुत्सुता).

१२९. –a) का1 दे6 °रागादी, ब1 दे1 °रागान्दी, ब2.3 °रागार्गी, दे2 °रागागी, दे3 °रागाज्जी, दे4 °रगता, दे5 °राहार्दा, दे10 °रागादी, न1 °रागादि–, ते1 °राशान्ता, ग्र1 °राहार्द्दी, ग्र2 राहार्दा, म1 °राहादि- (→°रागादिः). –c) दे1.10 जगज्ज्योतिर्, ब1 जगन्मात्रा (→जगद्योनिर्); दे1 °जगन्माया, न1 जगधात्री (→जगन्माता). –d) का1 ब1.2 दे3.6 जगन्मृत्युर् (→जन्ममृत्युर्); ग्र2 °जरादिका (→°जरातिगा).

१३०. –a) का1 ब2.3 दे2-4.6 न1 द1 बुद्धिर्माता, मुवें. मुए.मुब.बुद्धिर्महा-(→बुद्धिमाता); का1 बुद्धिमति (?), न1 बुधिमाता (?) (→बुद्धिमती). –b) का1 पुरुषोत्तम°, ब1 पुरुषानन्त° (→पुरुषान्तर°). –c) ब1 तपस्विनी, द1 ग्र1 म1 मनस्विनी (→तरस्विनी); ग्र2 मनस्विनी****. –d) दे1 त्र्यधिसंस्थिता, दे4 देविसंस्थिता, द1 ग्र1 म1 दीपसंस्थिता (→दिवि संस्थिता).

१३१. द1 ग्र1.2 म1. cd ⊙. –a) दे4 सर्वेन्द्रिया मनोर्माता. –b) ते1 सर्वभूतादिसंस्थिता. –c) दे8.9 न1 ग्र1.2 म1 °तारणी (→°तारिणी); ब1 दे8.10 न1 वेद्या, दे9 वेगा, ते1 दिव्या (→विद्या). –d) ब3 ब्रह्मवासि°, न1 ते1 ग्र1 ब्रह्मवादी° (→ब्रह्मवादि°); ब1 दे6 °मनोमया (→°मनोलया).

ब्रह्माणी बृहती ब्राह्मी ब्रह्मभूता भवारणिः ।
हिरण्मयी महारात्रिः संसारपरिवर्त्तिका ॥१३२
सुमालिनी सुरूपा च भाविनी तारिणी प्रभा ।
उन्मीलनी सर्वसहा सर्वप्रत्ययसाक्षिणी ॥१३३
सुसौम्या चन्द्रवदना ताण्डवासक्तमानसा ।
सत्त्वशुद्धिकरी शुद्धिर्मलत्रयविनाशिनी ॥१३४
जगत्प्रिया जगन्मूर्तिस्त्रिमूर्तिरमृताश्रया ।
निराश्रया निराहारा निरङ्कुरवनोद्भवा ॥१३५
चन्द्रहस्ता विचित्राङ्गी स्रग्विणी पद्मधारिणी ।
परावरविधानज्ञा महापुरुषपूर्वजा ॥१३६
विद्येश्वरप्रिया विद्या विद्युज्जिह्वा जितश्रमा ।
विद्यामयी सहस्राक्षी सहस्रवदनात्मजा ॥१३७
सहस्ररश्मिः सत्त्वस्था महेश्वरपदाश्रया ।
क्षालिनी सन्मयी व्याप्ता तैजसी पद्मबोधिका ॥१३८
महामायाश्रया मान्या महादेवमनोरमा ।
व्योमलक्ष्मीः सिंहरथा चेकितानाऽमितप्रभा ॥१३९
वीरेश्वरी विमानस्था विशोका शोकनाशिनी ।
अनाहता कुण्डलिनी नलिनी पद्मवासिनी ॥१४० वें१.१२.१२८

१३२. –a) ब1 ते1 ब्रह्मणी, द1 ब्राह्मणी, ग्र1 प्राणिनी, ग्र2 ब्राह्मी तु (→ब्रह्माणी), का1 ब्र (?) हती (→बृहती). –b) का1 ब1-3 दे1-3.6.8-10 द1 मुवें. मुए. मुब. भवारणी न1 भवारिणी, दे5 -भ(?)चारिणी, ते1 [अ]न्तरारणी, ग्र1 [अ]पवारणी, ग्र2 [अ]पहारिणी, म1 [अ]पवारिणी (→भवारणिः). –c) ब3 दे1.5 महा (दे5 °हो) रात्रि-, न1 महामूर्तिः, ग्र1 महारात्रीस् (→महारात्रिः).

१३३. –a) का1 ब3 दे2.5.6 स्वमालिनी स्वरूपा च, ग्र1 सुमलातिसुरापा च, ग्र2 सुमलातिस्वरूपा च, म1 सुमालिनी स्वरूपा च. –b) म1 भवानी (→भाविनी); दे1 ग्र2 ह(?)रिणी, दे2.4.8-10 न1 द1 ग्र1 म1 मुवें. मुए. मुब. हारिणी (→तारिणी); द1 ग्र1.2 म1 प्रिया (→प्रभा). –c) ब2 दे1.10 उन्मीलिनी, दे4 न1 उन्मालिनी, द1 ग्र1.2 म1 उज्जीव (द1 °वि)नी, ग्र2 उज्जीवन्ति (→उन्मीलनी); दे1 सहस्राक्षा, दे4 सहस्राक्ष-, द1 सर्वभया (→सर्वसहा). –d) दे1 सर्वप्रत्ययमोक्षिणी, द1 ग्र1 म1 सर्वप्रत्यक्षसाक्षिणी.

१३४. –b) °मनसा (→°मानसा). –c) का1 सर्वशुद्धि°, दे1 सत्वाशुद्धि°, दे5 सत्वं श्रद्धि°(?), ते1 सत्वसिद्धि° द1 ग्र1.2 म1 सर्वसिद्धि° (→सत्त्वशुद्धि°); ते1 द1 ग्र1 म1 सिद्धिर् (→शुद्धिर्). –d) दे4 महालय°, न1 मूलत्रय°, (→मलत्रय°); ब1 दे5 °विनाशनी, ग्र2 °विलापिनी (→°विनाशिनी).

१३५. –a) द1 ग्र1.2 म1 जगत्प्रीतिर् (→जगत्प्रिया). –b) दे10 [आ]शया, द1 ग्र1 म1 कृता(?), ग्र2 [आ]श्रिता, (→[आ]श्रया); ते1 [अ]मृता विश्वसंश्रया. –c) का1 निरासया, ग्र2 निराश्रमा (→निराश्रया); दे1 निराहारा, दे3.6 निराकारा, दे4 निराधारा (→निराहारा). –d) ब1 ते1 निरङ्कुशम(ते1 °व) नोद्भवा, दे4 निरङ्कुशवदो(?)द्भवा, दे1.8-10 न1 द1 ग्र1.2 म1 मुवें. मुए. मुब. निरङ्कुशपदोद्भवा.

१३६. –a) का1 ब2.3 दे1-6 न1 ग्र1.2 म1 चक्रहस्ता, न1 चित्र हस्ता, ते1 रज्जुहस्ता (→चन्द्रहस्ता); दे5 विचित्राणी, दे10 विशुद्धांगी, + विचित्रांगी, म1 विशुद्धांगी (→विचित्राङ्गी). –b) दे10 सृग्विणी (?) (→स्रग्विणी); ब3 पद्ममालिनी, दे2 पद्मचारिणी, द1 ग्र1.2 म1 पद्महारि(म1 °र)णी(→पद्मधारिणी). –c) ब2.3 दे2 ते1 पारपर° (→परावर°); दे3.6 विभावज्ञा, दे4 निदानज्ञा, न1 विभागज्ञा (→विधानज्ञा).

१३७. –a) दे1.4-6.8-10 न1 ते1 ग्र2 मुवें. मुए. मुब. विश्वेश्वर° (→विद्येश्वर°); ब1 दे1.3.4.8-10 न1 मुवें. मुए. मुब. विद्युत् (→विद्या). –b) ब1 °तश्रमः, दे5 °तप्रभा, दे10 °नश्रया, द1 ग्र1.2 °तश्रया, म1 °तश्रिया (→°तश्रमा). –c) दे8-10 न1 ग्र2 विद्यामायी (→विद्यामयी). –d) ब3 °वदनानुजा, दे5 °वदनारुजा (→°वदनात्मजा).

१३८. –a) ब3 दे1.6.8.10 सहस्ररश्मि-(दे10 °श्मी) (→सहस्ररश्मिः); द1 सत्यस्था, ग्र2 पद्मस्था (→सत्त्वस्था). –c) का1 ब1-3 दे2.4-6 न1 ते1 ज्वा (न1 ज्व-)लिनी (→क्षालिनी); का1 ब1-3 दे2.3.5.6 ते1 सन्माना (ब2.3 °नो), दे1 म1 मन्मयी, न1 समयी (?), द1 मुवें. मुए. मुब. मृण्मयी, ग्र2 मन्मया (→सन्मयी). –d) का1 ब1.2 दे2 न1 ग्र1.2 तेजसी (→तैजसी); दे1 पद्मरोधिका (→पद्मबोधिका).

१३९. –a) द1 ग्र1.2 म1 हिमालया° (→महामाया°); ब2 महामात्रो, ब3 ग्र2 महमान्या, दे1 विश्वमान्या (→-श्रया मान्या). –d). दे1 चेकितानामृतप्रदा, दे2.5 चेकितान्यमितप्रभा, दे6 चेकितामामितप्रभा, द1 ग्र1.2 म1 चेकितानीसितप्रभा.

१४०. –a) का1 ब1-3 दे1-6 द1 ग्र1.2 म1 वि (ब3 द1 ग्र1 वी)श्वेश्वरी (→वीरेश्वरी). –d) दे8.9 ग्र2 मुवें. मुए. मुब. पद्मभासिनी, ते1 पद्ममालिनी, द1 म1 पदवासिनी (→पद्मवासिनी); दे1***पद्मवासिनी.

वें१.१२.१२८ सदानन्दा सदाकीर्तिः सर्वभूताश्रयस्थिता ।
वाग्देवता ब्रह्मकला कलातीता कलारणिः ।।१४१
ब्रह्मश्रीर्ब्रह्महृदया ब्रह्मविष्णुशिवप्रिया ।
व्योमशक्तिः क्रियाशक्तिर्ज्ञानशक्तिः परागतिः ।।१४२
क्षोभिका बन्धिका भेद्या भेदाभेदविवर्जिता ।
अभिन्नाभिन्नसंस्थाना वंशिनी वंशहारिणी ।।१४३
गुह्यशक्तिर्गुणातीता सर्वदा सर्वतोमुखी ।
भगिनी भगवत्पत्नी सकला कालकारिणी ।।१४४
सर्ववित् सर्वतोभद्रा गुह्यातीता गुहारणिः ।
प्रक्रिया योगमाता च गङ्गा विश्वेश्वरेश्वरी ।।१४५
कपिला कापिला कान्ता कनकाभा कलान्तरा ।
पुण्या पुष्करिणी भोक्त्री पुरंदरपुरस्सरा ।।१४६
पोषणी परमैश्वर्यभूतिदा भूतिभूषणा ।
पञ्चब्रह्मसमुत्पत्तिः परमार्थार्थविग्रहा ।।१४७
धर्मोदया भानुमती योगिज्ञेया मनोजवा ।
मनोहरा मनोरक्षा तापसी वेदरूपिणी ।।१४८

---

१४१. –a) का1 ब1-3 दे2.3.5.6 म (दे2.5 श) तानन्दा, ते1 शतानन्ता (→सदानन्दा); का1 ब1.3 दे2.3.5.6 सता (ब3 °ता)कीर्तिः (→सदाकीर्तिः). –b) दे10 सर्गभूता° (→सर्वभूता°); का1 ब2.3 दे2-5 द1 ग्र1 [श्रा]शयस्थिता, दे1.10 ग्र2 [श्रा]श्रयास्थिता (→[श्रा]श्रयस्थिता). –d) दे10 कलानीता, द1 ग्र1.2 म1 कल्पातीता (→कलातीता); का1 न1 कलारिणी, ब3 कलात्मना, दे3 कलावलिः, दे8-10 ग्र1 म1 मुवें. मु . मुब. कलारणी, ग्र2 कलारिणिः (→कलारणिः .

१४२. दे8-10 द1 ग्र1.2 म1. ab ⊙. –a) का1 दे2.5 ब्रह्माणी, दे1 ब्रह्मयी (?) (→ब्रह्मश्रीर्); का1 दे2 श्रीब्रह्महृदया (→ब्रह्महृदया). –b) का1 ब1.2 दे2.4.5 न1 ते1 °प्रजा, दे1 °प्रभा, दे3.6 °प्रदा (→°प्रिया). –c) ब1 ध्यानशक्तिः, दे1.6.10 ग्र1 व्योमशक्ति-, दे2 व्यक्तशक्तिः, दे5 सोमशक्तिः, ब1 ब्रह्मशक्तिः (→व्योमशक्तिः).–d) दे1 क्रियाशक्तिः, ग्र1 ध्यानशक्तिः (→ज्ञान शक्तिः); दे1 परांगतिः, दे4 प्रियागतिः, दे5 पराणतिः (→परा गतिः).

१४३. –a) ब3 दे3.6 म1 क्षोभिता, दे2 क्षोभिणी, + क्षोभिका, दे5 क्षोभिना (?) (→क्षोभिका). –b)ब1 वन्दिका, ब2.3 दे1 द1 ग्र1.2 वञ्चि(द1 °ञ्च)का, न1 बुधिका (?), म1 पञ्चिका (→बन्धिका); का1 मोघा, दे1 विद्या, दे5 म1 भेत्ता (→भेद्या); दे4 कर्माभिधायका भेद्या. –d) दे8-10 मुवें. मुए. मुब. वशिनी, ग्र2 शशिनी (→वंशिनी).

१४४. दे5. ⊙ (द.सं.). –a) ब2 ब्रह्मशक्तिर्, द1 ग्र1.2 गुहाशक्तिर्, म1 शुभाशक्तिर् (→गुह्यशक्तिर्); न1 गुणातीत–, द1 ग्र1 गुहातीता, म1 गुह्यातीता, + गुणातीता (→गुणातीता). –c) दे4 भवानी (→भगिनी). –d) दे4 सत्कला (→सकला); दे1.3.8-10 मुवें. मुए. मुब. कालहारिणी, द1 ग्र1.2 म1 काल-रूपिणी (→कालकारिणी).

१४५. मुए. ab ⊙. –a) का1 सर्वतः, ग्र1 म1 सर्वजित्, ग्र2 सर्वदिक् (→सर्ववित्); दे5 सर्ववित् सर्वसौभद्रा. –b) दे1 गुह्यरूप-, दे8-10 न1 द1 ग्र1.2 म1 गुह्या (ग्र2 °ह्य-) गूढा (दे10 द1 म1 °ढ). (→गुह्यातीता); का1 दे2.5.6.8-10 ते1 मुब. गुहारणी, दे3 न1 द1 ग्र1.2 गुहारिणी, म1 विभाविनी, मुवें. मुए. गुहावलिः (→गुहा-रणिः). –c) द1 ग्र1.2 आश्रया (→प्रक्रिया); दे5 °माभाव (→°माता च); दे2 प्रक्रिया योगिनी माता, म1 सर्वाश्रिया योगमाता. –d) का1 दे2 गङ्गा विश्वेश्वरीति च, ग्र2*सा विश्वे**श्वरी.

१४६. ग्र2. ab ⊙. –a) दे1.8-10 मुवें. मुए. कलिला (→कपिला); दे1.4.8-10 ते1 द1 ग्र1 मुवें. मुए. कपिला (दे2 °का) (→कापिला). –b) दे5.6 कनकाया (दे5 °मा) दे8-10 मुवें. मुए. मुब. कमलाभा, द1 ग्र1 कनकाला, म1 जनकाला (→कनकाभा); दे10 कलानरा, + कलानना (→कलान्तरा). –c) ग्र2 कन्या (→पुण्या); न1 ग्र1.2 पुष्करणी (→पुष्करिणी). –d) दे4 °पुरःसदी (→°पुरस्सरा).

१४७. –a) ब3 दे5.10 न1 ते1 ग्र2 मुवें. मुए. पोषिणी, ग्र1 पौषणी (?) (→पोषणी); दे4 द1 ग्र1.2 म1 परमैश्वर्या (→परमैश्वर्य-). –b) द1 ग्र2 म1 °भूतिका (→°भूतिदा); दे4 ते1 भूतिभूषणी, म1 भूतिभाषणा (→भूति-भूषणा). –c) द1 ग्र1.2 म1 परं (→पञ्च-). –d) का1 ब1-3 दे2-6 ते1 परमात्मा (का1 दे2 °र्था, दे5 °या) तम (ब1 दे6 °र्थ) विग्रहाः (दे2 °हः).

१४८. –a) दे3 भावप्रती, दे6 भावमती (→भानुमती). –b) ग्र2 योगिध्येया (→योगिज्ञेया); ब1 मनोजवाः, ग्र2 मनोरमा (→मनोजवा). –c) का1 ब1-3 दे1.2 न1 ते1 मनोहरी (दे1 °रिर्), दे4 महोदरा, ग्र2 महोजसा, म1 महोजवा, दे8.9 मुवें. मुए. मुब. मनोरमा (→मनोहरा); का1 मनोबस्की, दे2.4.8.9 न1 द1 ग्र2 म1 मुवें. मुए. मुब. मनोरस्का, दे5 मनोरक्षी, दे10 मनोरक्ता, ग्र1 महोरस्का (→मनोरक्षा). –d)

वेदशक्तिर्वेदमाता वेदविद्याप्रकाशिनी ।
योगेश्वरेश्वरी माता महाशक्तिर्मनोमयी ॥१४९
विश्वावस्था वियन्मूर्त्तिर्विद्युन्माला विहायसी ।
किंनरी सुरभी वन्द्या नन्दिनी नन्दिवल्लभा ॥१५०
भारती परमानन्दा परापरविभेदिका ।
सर्वप्रहरणोपेता काम्या कामेश्वरेश्वरी ॥१५१
अचिन्त्याऽचिन्त्यविभवा हृल्लेखा कनकप्रभा ।
कूष्माण्डी धनरत्नाढ्या सुगन्धा गन्धदायिनी ॥१५२
त्रिविक्रमपदोद्भूता धनुष्पाणिः शिवोदया ।
सुदुर्लभा धनाध्यक्षा धन्या पिङ्गललोचना ॥१५३
शान्तिः प्रभावती दीप्तिः पङ्कजायतलोचना ।
आद्या हृत्कमलोद्भूता गवां माता रणप्रिया ॥१५४
सत्क्रिया गिरिजा शुद्धा नित्यपुष्टा निरन्तरा ।
दुर्गा कात्यायनी चण्डी चर्चिका शान्तविग्रहा ॥१५५
हिरण्यवर्णा रजनी जगद्यन्त्रप्रवर्तिका ।
मन्दराद्रिनिवासा च शारदा स्वर्णमालिनी ॥१५६ वें१.१२.१४४

द1 ग्र1 म1 हायनी, ग्र2 तपसी (→तापसी); द1 ग्र2 म1 देवरूपिणी (→वेदरूपिणी).

**१४९.** ग्र2. cd ⊙. –a) दे10 वेदमना (→वेदमाता). –b) दे3.5 °विकाशिनी, द1 ग्र1.2 म1 °प्रदायिनी (→°प्रकाशिनी). –c) दे8.9 वागेश्वरेश्वरी, ग्र1 देवशक्तिर्देव- (→योगेश्वरेश्वरी); का1 ब1-3 दे1-6.8-10 न1 ते1 माला (दे5°ना) (→माता). –d) ब2 मनोहरा, ब3 मनोन्मयी, दे5 मनोमया न1 महामयी (→मनोमयी).

**१५०.** ग्र2. ⊙. –a) का1 विश्वावस्था चि*न्मूर्तिर्, ते1 विश्वावस्था जगन्मूर्तिर्, ग्र1 विश्वा च सा वीर्य्यमूर्तिर्. –b) ते1 विद्युस्ताला, द1 ग्र1 विद्युन्माया (→विद्युन्माला). –c) ब1.2 दे2.4 सुरभीर् (?), दे1 न1 ते1 सुरभिर्, दे5 सुरभेर्, म1 सुरती (?) (→सुरभी); का1 चण्ड-, ब2 दे1.6. 8-10 ग्र1 मुवें. मुए. मुब. विद्या (→वन्द्या). –d) ब2 नरवल्लभा, ते1 नं****(→नन्दिवल्लभा).

**१५१.** ग्र2. ab ⊙. –b) ब1 दे1.8-10 म1 परावर° (→परापर°); द1 °विभेदकी, ग्र1 °विवेदनी, म1 °विवेदकी (→°विभेदिका). –c) न1 ग्र1.2 म1 सर्वप्रक(ग्र1°का.)रणोपेता. –d) दे8-10 कामा (दे10 °म), न1 ग्र1 काम्य-, ग्र2 काव्या (→काम्या); ब2.3 दे5 म1 काम्येश्वरेश्वरी (→कामेश्वरेश्वरी).

**१५२.** –a) का1 ब1 दे1.2.4.5 ते1 मुवें. मुए. अचिन्त्यानन्त°, दे8-10 द1 ग्र1.2 म1 मुब. अचिन्त्यानन्द° (→अचिन्त्याचिन्त्य°); दे4 °प्रभवा (→°विभवा). –b) ब1-3 दे3 भूर्लेखा, दे1 हृल्लोषा (?), दे5 दोलास्था, दे10 हृशेखा (?), ते1 सुमुखी, द1 मुवें. मुए. मुब. भूलेखा, ग्र1 भूरूवा, म1 भूरवा (→हृल्लेखा); दे10 कमलप्रभा (→कनकप्रभा). –c) द1. ग्र1.2 म1 कूष्माण्डा (ग्र2 °ण्ड) (→कूष्माण्डी); दे3.5.10 धनरत्नाद्या, दे4 नवरत्नाढ्या, ग्र1 धनुरत्नाढ्या, म1 [अ]थ सुरत्नाढ्या (→धनरत्नाढ्या). –d) ब3 स्वगन्धा (→सुगन्धा).

**१५३.** द1. ⊙. –a) ग्र1 योगिक्रम° (→त्रिविक्रम°); दे3 °पदोद्भूता (→°पदोद्भूता). –b) दे10 धनुष्पाणी (?) (→धनुष्पाणिः); दे3 शिरोदया (?), दे6 शिरोदया, ग्र2 शिवायदा, म1 रवोदया (→शिवोदया). –c) ब2 सुदुर्मगा, ब3 स्वदुर्लभा, ग्र2 सदुर्लभा (→सुदुर्लभा); दे4 धराधारा, दे5 धनाधारा, ग्र1 म1 धनाढ्याज्ञा (→धनाध्यक्षा). –d) का1 धान्या, दे4 धन्यो (→धन्या).

**१५४.** द1. ab ⊙. –a) का1 ब3 दे2-5 न1 ते1** (→शान्तिः); दे3 दीप्ति-, दे4 दृष्टिः (→दीप्तिः). –c) ब1 दे10 अद्या, ग्र1 म1 आढ्या, ग्र2 आप्या (→आद्या); ब1.3 दे3.6 हृत्, दे4.8-10 द1 म1 मुवें. मुए. भूः, ग्र1 भू, ग्र2 [आ]ली (?) (→हृत्°); दे1 द1 ग्र1.2 म1 °कमलोद्बोधा (→°कमलोद्भूता). –d) ग्र2 भवन् (→गवां); दे1.10 मात (?), न1 मां ता- (→माता).

**१५५.** –a) दे8.9 संक्रिया, ते1 शक्तिजा (→सत्क्रिया); का1 ब1 दे1.8-10 मुवें. मुए. मुब. गिरिशा (→गिरिजा); मुवें. मुए. मुब. शुद्धिर् (→शुद्धा). –b) दे6 निरन्तरः (→निरन्तरा). –c) दे2 कात्यायिनी (→कात्यायनी); दे3 वर्णी (?), दे1 द1 ग्र1.2 म1 चण्डा (→चण्डी). –d) दे8-10 मुवें. मुए. मुब. चर्चिताङ्गा सुविग्रहा.

**१५६.** –a) दे3 हिरण्ड(?)वर्णा, दे4 हिरण्यवर्ण-, ते1 हिरण्यवर्णी (→हिरण्यवर्णा); दे1 ति(?)रजा, दे8-10 द1 ग्र1 म1 मुवें. मुए. मुब. जगती, ग्र2 हरिणी (→रजनी). –b) ब1 दे6.10 जगद्यन्त°, ब2.3 जगत्रय°, ते1 जगद्यात्रा°, द1 जगद्यत्र°, ग्र1 जगतन्त्र°, ग्र2 जगदन्त° (→जगद्यन्त्र°); दे1 °र्वतिका, दे10 °प्रकीर्तिता (→°प्रवर्तिका); दे1 जगद्यन्तरवर्तिका. –c) का1 दे2 मन्दरात्रि-, ब3 मन्दराद्रिर्, ग्र1 मन्दरश्री- (→मन्दराद्रि-); का1 दे2 -निरासा च, ग्र2 -निवासस्था (→-निवासा च). –d) दे8-10 गरदा, द1 ग्र1.2

१.१४४ रत्नमाला रत्नगर्भा पृथ्वी विश्वप्रमाथिनी ।
पद्मानना पद्मनिभा नित्यतुष्टाऽमृतोद्भवा ॥१५७
धुन्वती दुःप्रकम्प्या च सूर्यमाता दृषद्वती ।
महेन्द्रभगिनी मान्या वरेण्या वरदर्पिता ॥१५८
कल्याणी कमला रामा पञ्चभूता वरप्रदा ।
वाच्या वरेश्वरी वन्द्या दुर्जया दुरतिक्रमा ॥१५९
कालरात्रिर्महावेगा वीरभद्रप्रिया हिता ।
भद्रकाली जगन्माता भक्तानां भद्रदायिनी ॥१६०
कराला पिङ्गलाकारा नामभेदाऽमहामदा ।
यशस्विनी यशोदा च षडध्वपरिवर्त्तिका ॥१६१
शङ्खिनी पद्मिनी सांख्या सांख्ययोगप्रवर्तिका ।
चैत्रा संवत्सरारूढा जगत्संपूरणीन्द्रजा ॥१६२
शुम्भारिः खेचरी स्वस्था कम्बुग्रीवा कलिप्रिया ।
खगध्वजा खगारूढा पराध्यर्या परमालिनी ॥१६३

---

म$_1$ स्वर्णदा, मुवें. मुए. गरहा (→शारदा); ग्र$_1$ स्वर्णशायिनी, ग्र$_2$ स्वर्णशालिनी, म$_1$ स्वर्णदायिनी (→स्वर्णमालिनी).

१५७. –a). ब$_1$ बहुमाला, म$_1$ रक्तमाला (→रत्नमाला). –b) दे$_{1.8-10}$ ग्र$_2$ म$_1$ पुष्टिर्, न$_1$ वृष्टिर्, द$_1$ मुष्टिर्, मुवें. मुए. मुब. पुष्टिर् (→पृथ्वी); का$_1$ विश्वप्रमार्थिनी, दे$_1$ म$_1$ विश्वप्रसाधिनी, द$_1$ ग्र$_1$ विश्वप्रसादिनी (ग्र$_1$ °दनी), ते$_1$ विश्वप्रमोदिनी (→विश्वप्रमाथिनी). –c) का$_1$ दे$_{2.5}$ द$_1$ पद्मासना, दे$_{8-10}$ मुवें. मुए. पद्मनाभा (→पद्मानना). –d) दे$_1$ द$_1$ ग्र$_{1.2}$ म$_1$ नित्यपुष्टा, मुवें, मुए. नित्यरुष्टा (→नित्यतुष्टा).

१५८. –a) क.$_1$ धुन्नता, न$_1$ धुन्वंती, ते$_1$ धून्वती, द$_1$ म$_1$ धन्वकी (?) ग्र$_1$ सन्यकी (?), ग्र$_2$ धन्वनी (→धुन्वती); का$_1$ दुःप्रकन्या च (?), ब$_2$ निष्प्रकम्पा च, दे$_{1-3.8.10}$ मुवें. मुए. मुब. दुष्प्रकम्पा च, दे$_5$ दुष्प्रकम्यां च, द$_1$ पुष्पकं यात्रा, ग्र$_1$ पुष्पकी यात्रा, ग्र$_2$ पुष्पचक्रा सा, म$_1$ पुष्पकन्धात्री (→दुःप्रकम्प्या च); ब$_3$ धन्वन्तरी दुष्प्रकम्पा, दे$_4$ मात्तवंती दुःप्रकंथा. –b) दे$_2$ वृहद्वती, द$_1$ ग्र$_{1.2}$ म$_1$ वृषद्व(द$_1$ °ण्व)ती (ग्र$_2$ म$_1$- °यी) (→दृषद्वती). –c) दे$_1$ द$_1$ ग्र$_{1.2}$ म$_1$ सैन्या, दे$_{8-10}$ मुवें. मुए. मुब. सौम्या (→मान्या). –d). दे$_1$ वरेण्य-, ग्र$_2$ वरेण्यो (→वरेण्या); ब$_1$ वरदायका, ब$_2$ दे$_4$ द$_1$ ग्र$_{1.2}$ म$_1$ वरदायिनी, ब$_3$ दे$_{3.6}$ वरदायता, दे$_1$ वरदा मता, दे$_{8-10}$ मुवें. मुए. मुब. वरदायिका, ते$_1$ वरदापरा (→वरदर्पिता).

१५९. –a) ब$_{1.3}$ दे$_{3.8-10}$ ते$_1$ मुवें. मुए. मुब. वासा, ब$_2$ दे$_{1.2.4.6}$ न$_1$ वामा, द$_1$ ग्र$_{1.2}$ म$_1$ कामा (→रामा). –b) ब$_{1-3}$ दे$_{8-10}$ न$_1$ ते$_1$ मुवें. मुए. मुब. पञ्चचूडा (→पञ्चभूता); न$_1$ ग्र$_1$ वरप्रभा (→वरप्रदा). –c) दे$_4$ वाच्य-, दे$_5$ वाध्या, दे$_{10}$ वाचा, ते$_1$ वार्या, ग्र$_2$ विद्या (→वाच्या); दे$_{1.4}$ द$_1$ ग्र$_{1.2}$ म$_1$ विश्वेश्वरी, दे$_{8.9}$ चरेश्वरी, ते$_1$ ***री (→[अ]मरेश्वरी); दे$_{8-10}$ मुवें. मुए. विद्या (→वन्द्या). –d) दे$_3$ त्वरतिक्रमा (→दुरतिक्रमा).

१६०. ग्र$_2$. ⊙. –a) दे$_1$ महादेशा, दे$_{10}$ महावेदा (→महावेगा). –b) दे$_{10}$ वीरभद्रा (→वीरभद्र-); दे$_5$ प्रियाहिती (?), न$_1$ °प्रियारमा, द$_1$ °प्रिया हता, म$_1$ °प्रियावहा (→°प्रिया हिता). –c). ब$_1$ दे$_{1.4.8-10}$ न$_1$ ते$_1$ जगन्माया, ग्र$_1$***ता (→जगन्माता). –d) ग्र$_1$ भक्तिदायिनी (→भद्रदायिनी).

१६१. ग्र$_2$. ⊙; द$_1$ ग्र$_1$ म$_1$. cd ⊙. –a) दे$_4$ कराल- (→कराला); ब$_1$ द$_1$ ग्र$_1$ म$_1$ पिङ्गलाकाला, दे$_6$ पित्तलाकारा (→पिङ्गलाकारा). –b) ब$_1$ रोमभेदा, दे$_{1.8-10}$ ग्र$_2$ मुवें. मुए. मुब. कामभेदा, न$_1$ महाभेदा, द$_1$ ग्र$_1$ म$_1$ कामदेहा (द$_1$ -देहान्) (→नामभेदा); दे$_1$ महामता, दे$_2$ महामला, दे$_4$ न$_1$ महामना, दे$_{8-10}$ मुवें. मुए. मुब. महास्वना, द$_1$ म$_1$ महात्मिका, ग्र$_1$ गुहात्मिका (→महामदा). –c) का$_1$ ब$_{1-3}$ दे$_{2-6}$ न$_1$ ते$_1$ तपस्विनी (→यशस्विनी). –d) का$_1$ ब$_{1.2}$ दे$_{2.4}$ न$_1$ षडर्घ-, दे$_1$ षडद्व- (?), दे$_{3.6}$ षड्गर्भ-, दे$_5$ षड्वर्ग-, दे$_{10}$ षडधू-, ते$_1$ गन्धर्व- (→षडध्व-); का$_1$ ब$_{1\ 3}$ दे$_{2-6}$ °परिवर्तिनी, दे$_{10}$ -पविवर्जिता, न$_1$-परिवर्धिनी, ते$_1$-परिवादिनी (→-परिवर्त्तिका).

१६२. –a) का$_1$ ब$_{1-3}$ दे$_{2.4-6.8-10}$ न$_1$ ते$_1$ द$_1$ ग्र$_2$ म$_1$ संख्या (→सांख्या). –b) ब$_2$ दे$_{2.3.6}$ सांख्ययोगप्रवर्तिता, ते$_1$ सांख्यमार्गप्रवर्तिका. –c) ब$_{2.3}$ दे$_{2.3.6}$ चैत्री, दे$_1$ त्रेता, दे$_5$ चित्री (→चैत्रा); का$_1$ दे$_{2.5}$ रुद्रा, ब$_{1.3}$ दे$_3$ ते$_1$ रुद्धा (→-रूढा). –d). दे$_1$ संरूपिणी° (→संपूरणी°); का$_1$ दे$_5$ ह्यजा, दे$_1$-रजा, दे$_{2.8-10}$ मुवें.मुए.मुब. ध्वजा (→[इ]न्द्रजा).

१६३. –a) का$_1$ दे$_{10}$ शुभांगी, दे$_1$ शुंभारि-, दे$_3$ स्वस्थाति-, दे$_4$ पंचाली, दे$_{8.9}$ न$_1$ द$_1$ शुंभारौ° (→शुम्भारिः); द$_1$ केचरी (→खेचरी); का$_1$ दे$_{8.9}$ न$_1$ म$_1$ खस्था, दे$_1$ सुस्था (→स्वस्था). –b) म$_1$ नीलग्रीवा (→कम्बुग्रीवा); न$_1$ खलप्रिया, ते$_1$ कविप्रिया, द$_1$ म$_1$ कलाप्रिया, ग्र$_1$ कालान्तका, ग्र$_2$ कलाश्रया (→कलिप्रिया). –c) दे$_1$ खगध्वना, ग्र$_2$ खड्गध्वजा (→खगध्वजा); ब$_3$ गजारूढा, ग्र$_1$ खगारू* (→खगारूढा). –d) ब$_{1.3}$ दे$_{3.6}$ पराध्यंपर°, ब$_2$ दे$_{1.2}$ परार्धा (दे$_2$°र्च्चा) पर° (दे$_1$ °मर°), दे$_8$ वराहमिग(?), दे$_9$ वराहांभग°, दे$_{10}$ वराहांवर°, न$_1$ परार्धावर°, द$_1$ म$_1$ परासु (द$_1$°सा)

वें१.१२.२६० न च वेदाद् ऋते किञ्चिच्छास्त्रधर्माभिधायकम् ।
योऽन्यत्र रमते सोऽसौ न संभाष्यो द्विजातिभिः ।।२७१
यानि शास्त्राणि दृश्यन्ते लोकेऽस्मिन् विविधानि तु ।
श्रुतिस्मृतिविरुद्धानि निष्ठा तेषां हि तामसी ।।२७२
कापालं पञ्चरात्रं च यामलं वाममार्हतम् ।
एवंविधानि चान्यानि मोहनार्थानि तानि तु ।।२७३
ये कुशास्त्राभियोगेन मोहयन्तीह मानवान् ।
मया सृष्टानि शास्त्राणि मोहायैषां भवान्तरे ।।२७४
वेदार्थवित्तमैः कार्यं यत् स्मृतं कर्म वैदिकम् ।
तत् प्रयत्नेन कुर्वन्ति मत्प्रियास्ते हि ये नराः ।।२७५
वर्णानामनुकम्पार्थं मन्नियोगाद् विराट् स्वयम् ।
स्वायंभुवो मनुर्धर्मान् मुनीनां पूर्वमुक्तवान् ।।२७६
श्रुत्वा चान्येऽपि मुनयस्तन्मुखाद् धर्ममुत्तमम् ।
चक्रुर्धर्मप्रतिष्ठार्थं धर्मशास्त्राणि चैव हि ।।२७७
तेषु चान्तर्हितेष्वेवं युगान्तेषु महर्षयः ।
ब्रह्मणो वचनात् तानि करिष्यन्ति युगे युगे ।।२७८
अष्टादश पुराणानि व्यासेन कथितानि तु ।
नियोगाद् ब्रह्मणो राजंस्तेषु धर्मः प्रतिष्ठितः ।।२७९
अन्यान्युपपुराणानि तच्छिष्यैः कथितानि तु ।
युगे युगेऽत्र सर्वेषां कर्ता वै धर्मशास्त्रवित् ।।२८०

---

द$_1$ नरकास्, म$_1$ नरकां (?) (→नरकांस्). –d) का$_1$ द$_1$ °कल्पयेत् (→°कल्पयत्).

२७१. –a) का$_1$ वेदोदिते, न$_1$ वेदा नृते (→वेदादृते); –b) का$_1$ द$_1$ ग्र$_{1.2}$ म$_1$ अनादृत्य तु यः कश्चित्. –b) का$_1$ धर्मो°, दे$_3$ ब्रह्मा° (→धर्मा°); दे$_1$ °विधायकम्, न$_1$ °भिधायकः (→°भिधायकम्). –c) दे$_1$ न$_1$ योऽसौ, ते$_1$ तेहि, + सो हि, द$_1$ ग्र$_1$ म$_1$ °सौ वै (→सोऽसौ); ग्र$_2$ अन्यत्र समवेते वै.

२७२. –a) का$_1$ चास्त्राणि (→शास्त्राणि); द$_1$ ग्र$_2$ म$_1$ गृह्यन्ते (→दृश्यन्ते). –b) का$_1$ दे$_5$ योगेऽस्मिन् (→लोकेऽस्मिन्); दे$_{8.9}$ द्विविधानि (→विविधानि); ब$_2$ दे$_{2.3.6}$ ते$_1$ च (→तु). –d) द$_1$ ग्र$_{1.2}$ म$_1$ तेषान्निष्ठा, दे$_5$ निष्ठामेषां(?) (→निष्ठा तेषां); दे$_1$ द$_1$ ग्र$_{1.2}$ म$_1$ तु (→हि); का$_1$ तामसि, + तामसी, दे$_{10}$ तामसि (→तामसी).

२७३. –a) का$_1$ दे$_4$ कपालं, दे$_{10}$ कपोलं (→कापालं); ब$_2$ दे$_{1.4.8-10}$ द$_1$ ग्र$_{1.2}$ म$_1$ मुवें. मुए. मुब. भैरव (ग्र$_1$ °वी) ञ्चैव (→पञ्चरात्रञ्च). –b) ब$_2$ दे$_1$ जा(दे$_1$ या)मलं वामन (दे$_1$ °म)व्रतम्, ब$_3$ डामरं मोहनात्मकम्, दे$_2$ यामलं च ममार्हतम्, दे$_3$ यामलं वामनार्हतम्, दे$_4$ यामलं वाममाहितम्, द$_1$ ग्र$_1$ म$_1$ यामलं गमनाहृतम्, ग्र$_2$ यामलं वामनं हृतम्. –d) ब$_1$ मोहनात्मानि दे$_6$ मोहानर्थानि, दे$_{8-10}$ मोहनार्थाय, ग्र$_2$ मोहनानि च (→मोहनार्थानि); दे$_1$ यानि तु, दे$_3$ यानिसु (→तानि तु).

२७४. –a) दे$_1$ कुशास्त्राणि, ते$_1$ कुशास्त्राति- (→कुशास्त्राभि-). –b) दे$_2$ मोहयन्तीव, ग्र$_2$ मोहयन्तीक- (→मोहयन्तीह). –c) दे$_4$ न$_1$ मायासृष्टानि, ग्र$_1$ म$_1$ मया सृष्टैव (→मया सृष्टानि). –d) दे$_1$ ग्र$_2$ मोहायेषां, दे$_{4.9}$ मोहयैषां, दे$_6$ न$_1$ मोहायैषा, द$_1$ मोहयैषा (→मोहायैषां); ब$_2$ दे$_{3.6}$ भवार्णवे, न$_1$ ते$_1$ भवंति वै (→भवान्तरे).

२७५. –a) दे$_1$ °चिन्तनैः (→°वित्तमैः). –b) न$_1$ यत्सृष्टं (→यत्स्मृतं); दे$_1$ विन्दतः (→वैदिकम्). –c) का$_1$ दे$_2$ ततो, दे$_3$ यत् प्र-, दे$_5$ तते (→तत् प्र-). –d) दे$_{3.6}$ नाप्रियास् ते, दे$_{10}$ तत्प्रियास्ते, द$_1$ ग्र$_{1.2}$ म$_1$ मत्प्रियार्थं (→मत्प्रियास्ते); ब$_2$ मानवा, दे $_{3.6}$ मे नराः, दे$_4$ ये वराः, दे$_5$ द$_1$ ग्र$_{1.2}$ म$_1$ ते नराः (→ये नराः).

२७६. –a) दे$_1$ °कामार्थं, दे$_6$ °कामर्थं (→°कम्पार्थं); ब$_1$ वर्णानामर्थकम्पानां, ग्र$_2$ वर्णानामर्थयोगार्थं. –b) दे$_6$ यन्नियोगाद्, ग्र$_2$ मणियोगाद् (→मन्नियोगाद्); ग्र$_1$ चिरात् स्वयम्, ग्र$_2$ चिरं स्वयम् (→विराट् स्वयम्). –c) ग्र$_1$ स्वयंभुवो, ग्र$_2$ स्वायंभुवे (→स्वायम्भुवो); दे$_4$ मुनिर् (→मनुर्); का$_1$ ब$_{1-3}$ दे$_{2.3.5.6}$ ते$_1$ ब्रह्मा (दे$_{3.6}$ °ह्म), दे$_1$ धीमान्, (→धर्मान्). –d) मुनिना, ग्र$_2$ मुन्युक्तां (→मुनीनां).

२७७. –a) दे$_1$ चान्येव, द$_1$ ग्र$_1$ म$_1$ चान्ये तु, ग्र$_2$ तान्ये तु (→चान्येऽपि). –b) दे$_{10}$ धर्मरूपमम् (→धर्ममुत्तमम्). –c) दे$_{3.6}$ °प्रतिष्ठानं (→°प्रतिष्ठार्थं). –d) दे$_4$ चैव ह (→चैव हि).

२७८. –b) दे$_2$ च महर्षयः, दे$_6$ सुमहर्षयः (→-षु महर्षयः) –c) दे$_{3.10}$ न$_1$ वचनांतानि, दे$_6$ वचनं नानि, म$_1$ वचनोक्ता (→वचनात्तानि). –d) द$_1$ निकर्षंति (→करिष्यन्ति); ग्र$_2$ **युगे (→युगे युगे).

२७९. दे$_{1.8.9}$. २७९c–२८०b ⊙ (द्र. सं.). –b) दे$_{1.8-10}$ मुवें.मुए. व्यासाद्यैः (→व्यासेन); ब$_3$ च (→तु). –d) न$_1$ म$_1$ धर्मप्रतिष्ठितः, ग्र$_2$ धर्मः निष्ठ** (→धर्मः प्रतिष्ठितः).

२८०. दे$_{1.8.9}$. ab ⊙ (द्र. सं). –b) ब$_1$ कथितेन तु, दे$_{10}$ विकृतानि च, द$_1$ ग्र$_{1.2}$ म$_1$ व्याकृतानि तु (→कथितानि तु). –c) का$_1$ ब$_{1.2}$ दे$_{1-4.6}$ न$_1$ द$_1$ ग्र$_{1.2}$ म$_1$ युगे तु, दे$_5$

शिक्षा कल्पो व्याकरणं निरुक्तं छन्द एव च ।
ज्योतिःशास्त्रं न्यायविद्या मीमांसा चोपबृंहणम् ॥२८१
एवं चतुर्दशैतानि विद्यास्थानानि सत्तम ।
चतुर्वेदैः सहोक्तानि धर्मो नान्यत्र विद्यते ॥२८२
एवं पैतामहं धर्मं मनुव्यासादयः परम् ।
स्थापयन्ति ममादेशाद् यावदाभूतसंप्लवम् ॥२८३
ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे ।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥२८४
तस्मात् सर्वप्रयत्नेन धर्मार्थं वेदमाश्रयेत् ।
धर्मेण सहितं ज्ञानं परं ब्रह्म प्रकाशयेत् ॥२८५

ये तु सङ्गान् परित्यज्य मामेव शरणं गताः ।
उपासते सदा भक्त्या योगमैश्वरमास्थिताः ॥२८६
सर्वभूतदयावन्तः शान्ता दान्ता विमत्सराः ।
अमानिनो बुद्धिमन्तस्तापसाः शंसितव्रताः ॥२८७
मच्चित्ता मद्गतप्राणा मज्ज्ञानकथने रताः ।
संन्यासिनो गृहस्थाश्च वनस्था ब्रह्मचारिणः ॥२८८
तेषां नित्याभियुक्तानां मायातत्त्वसमुत्थितम् ।
नाशयामि तमः कृत्स्नं ज्ञानदीपेन मा चिरात् ॥२८९
ते सुनिर्धूततमसो ज्ञानेनैकेन मन्मयाः ।
सदानन्दास्तु संसारे न जायन्ते पुनः पुनः ॥२९० वें१.१२.२७६

युगे च, ते$_{1}$ युगेषु (→युगेऽत्र). –d) ब$_{1}$ दे$_{1}$ न$_{1}$ वार्ता, ते$_{1}$ धर्मा[:] (→कर्ता); दे$_{1}$ यै (→वै); दे$_{1}$ सर्वशास्त्रवित्, ब$_{1}$ दे$_{4}$ धर्मशास्त्रवत् , ते$_{1}$ धर्मशास्त्रतः (→धर्मशास्त्रवित्).

२८१. –b) दे$_{1}$ छन्दमेव, दे$_{4}$ छंदस्तु(?)एव, (→छन्द एव). –c) दे$_{8-10}$ °शास्त्राध्यात्म- (दे$_{10}$ °ध्याम), न$_{1}$ °शास्त्रेतरा, ग्र$_{1}$ °शास्त्रान्यया-, म$_{1}$ °शास्त्रन्याय-(→°शास्त्रं न्याय-). –d) दे$_{1.8-10}$ न$_{1}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ मुवें. मुए. मुब. सर्वेषामुपबृंहणम् , ते$_{1}$ मीमांसाबोधब्रह्माणि.

२८२. –a) ब$_{2}$ युगे तानि (→दशैतानि). –b) दे$_{4}$ विद्यास्था**, (→विद्यास्थानानि); दे$_{2}$ सत्तमाः (→सत्तम); दे$_{8-10}$ मुवें. मुए. मुब. तथा हि द्विजसत्तमाः, ते$_{1}$ विद्यास्थानानि***. –c) दे$_{8-10}$ चतुर्वेदे, द$_{1}$ ग्र$_{2}$ म$_{1}$ चतुर्वेद- (→चतुर्वेदैः); दे$_{8-10}$ मयोक्तानि, ग्र$_{2}$ सहोर्थानि, म$_{1}$ समोर्थानि (→सहोक्तानि).

२८३. –b) का$_{1}$ ब$_{3}$ दे$_{3-6}$ द$_{1}$ मनुव्यासादयः (दे$_{3}$ °या) (→मनुव्यासादयः). –c) द$_{1}$ ग्र$_{1}$ म$_{1}$ पठन्ति नूनमादेशात् , न$_{1}$ स्थापयन्ति महादेवात् , दे$_{5}$ ग्र$_{2}$ स्थापयन्ति समादेशात्. –d) का$_{1}$ ब$_{1.2}$ दे$_{2-5.8.9}$ ग्र$_{1}$ यावदाहूत( ग्र$_{1}$ ति°)संप्लवम् ; दे$_{10}$ याहूलषाहूतसंछ्वम्(?).

२८४. –a) दे$_{8-10}$ ब्राह्मणैः (→ब्रह्मणा); दे$_{10}$ सहिताः (→सह ते). –b) ब$_{2}$ प्राप्ते तु, ग्र$_{2}$ संप्रति (→सम्प्राप्ते); दे$_{1}$ मतिसञ्चरे, दे$_{6}$ प्रतिमत्परे (→प्रतिसञ्चरे). –c) दे$_{8-10}$ परस्यान्तः (→परस्यान्ते); दे$_{5}$ ग्र$_{2}$ कृतात्मानं, ते$_{1}$ धृतात्मानं (→कृतात्मानः); का$_{1}$ परस्यान्ते कृतास्मान.

२८५. दे$_{1.3}$ न$_{1}$. ⊙. –b) द$_{1}$ ग्र$_{1}$ म$_{1}$ परमाश्रयेत् (→वेदमाश्रयेत्).

२८६. दे$_{1.3}$ न$_{1}$. ⊙. –a) का$_{1}$ यत्तु संगात्, ब$_{2.3}$ ये तु सङ्गं, दे$_{4}$ येऽसत्संगान् म$_{1}$ ये तु संगात्(→ये तु सङ्गान्).–b) दे$_{6}$ मामेष [:] (→मामेव). –c) ग्र$_{1}$ उपासन्ते (→उपासते); का$_{1}$ ब$_{1}$ तदा (→सदा); का$_{1}$ दे$_{6.8-10}$ ग्र$_{1.2}$ म$_{1}$ भक्ता (→भक्त्या). –d) द$_{1}$ ग्र$_{1.2}$ म$_{1}$ °श्वर(म$_{1}$ °र्यं)माश्रिता (→°श्वरमास्थिताः).

२८७. –a) ग्र$_{1}$ सर्वभूता° (?) (→सर्वभूत°). –c) दे$_{10}$ अमानीतो (→अमानिनो); दे$_{6}$ बुद्धिमन्द-, द$_{1}$ विद्धिमन्तस्, ग्र$_{2}$-रधीमन्तः (→बुद्धिमन्तस्). –d) दे$_{4}$ तपसा (→तापसाः); ग्र$_{2}$ तापसं शान्तमाश्रिताः.

२८८. –a) ब$_{1}$ मद्गतः, न$_{1}$ मद्गता (→मद्गत-). –b) दे$_{1}$ मह्ला न कथनेरिताः (?), दे$_{2}$ मदाज्ञां कथने रताः, दे$_{3}$-मनुज्ञाकथने रताः, न$_{1}$ मज्ज्ञान कथनेतराः. –c) दे$_{3}$ सन्ध्या° (→संन्या°).

२८९. दे$_{1}$. ⊙. –a) का$_{1}$ °मुक्तानां (→°युक्तानां). –b) ब$_{2}$ दे$_{10}$ मुवें. मुए. मुब. माया तत्त्वं, दे$_{4}$ मायानित्य-, दे$_{5}$ माद्यातृत्व-, ते$_{1}$ मायां तत्तुं, + मायां तर्यंत, म$_{1}$ मायया च (→मायातत्त्व-); दे$_{5}$ ते$_{1}$ -समुत्थिताम्(ते$_{1}$ °ता)(→-समुत्थितम्). –c) दे$_{5}$ मतः, द$_{1}$ ततः (→तमः). –d) ब$_{1}$ ते$_{1}$ चाचिरात्, दे$_{2}$ नाचिरात्, दे$_{3.6}$ साचिरात्, दे$_{4}$ चक्षुषा, दे$_{8.9}$ न$_{1}$ मुवें. मुए. मुब. नोचिरात्, दे$_{10}$ गोचरात् , म$_{1}$ मा चिरम् (→मा चिरात्); दे$_{5}$ ज्ञानदीपानि मा चिरात्, ग्र$_{2}$ ज्ञात्वा नन्दीपमाचिरात्.

२९०. –a) का$_{1}$ ये (→ते); का$_{1}$ ब$_{1-3}$ दे$_{2-5.8-10}$ न$_{1}$ ते$_{1}$ द$_{1}$ ग्र$_{1}$ म$_{1}$ तु निर्धूत°, दे$_{1}$ तन्निर्धूत°, ते$_{1}$ तु निर्भिन्न° (→सुनिर्धूत°); दे$_{8-10}$ मनसो, न$_{1}$ तमसो,+मनसो (→तमसो). –b) म$_{1}$ ज्ञानवेगेन (→ज्ञानेनैकेन); दे$_{1}$ मन्मनाः, दे$_{3.6}$ मन्मया, दे$_{4}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ मद्गताः, दे$_{10}$ मन्यया (?) (→मन्मया);

वें१.१२.२८० तस्मात् सर्वप्रकारेण मद्भक्तो मत्परायणः ।
मामेवार्चय सर्वत्र मेनया सह संगतः ।।२९१

अशक्तो यदि मे ध्यातुमैश्वरं रूपमव्ययम् ।
ततो मे सकलं रूपं कालाद्यं शरणं व्रज ।।२९२

यद् यत् स्वरूपं मे तात मनसो गोचरं भवेत् ।
तन्निष्ठस्तत्परो भूत्वा तदर्चनपरो भव ।।२९३

यत्तु मे निष्कलं रूपं चिन्मात्रं केवलं शिवम् ।
सर्वोपाधिविनिर्मुक्तमनन्तममृतं परम् ।।२९४

ज्ञानेनैकेन तल्लभ्यं क्लेशेन परमं पदम् ।
ज्ञानमेव प्रपश्यन्तो मामेव प्रविशन्ति ते ।।२९५

तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ।
गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ।।२९६

मामनाश्रित्य परमं निर्वाणममलं पदम् ।
प्राप्यते न हि राजेन्द्र ततो मां शरणं व्रज ।।२९७

एकत्वेन पृथक्त्वेन तथा चोभयतोऽपि वा ।
मामुपास्य महाराज ततो यास्यसि तत्पदम् ।।२९८

मामनाश्रित्य तत् तत्त्वं स्वभावविमलं शिवम् ।
ज्ञायते न हि राजेन्द्र ततो मां शरणं व्रज ।।२९९

तस्मात् त्वमक्षरं रूपं नित्यं चारूपमैश्वरम् ।
आराधय प्रयत्नेन ततो बन्धं प्रहास्यसि ।।३००

---

ते$_1$ ज्ञाननिर्वृतकल्मषाः. –c) दे$_5$ सनानन्दा स[:], ते$_1$ सदा न चास्मिन् (→सदानन्दास्तु). –d) ब$_1$ जायन्ते न, दे$_1$ न ज्ञायन्ते, दे$_{10}$ प्रजायन्ते, ते$_1$ जायन्ते च (→न जायन्ते).

२९१. –a) ब$_1$ द$_1$ ग्र$_{1.2}$ म$_1$ °प्रयत्नेन (→°प्रकारेण). –b) दे$_1$ ग्र$_2$ मत्परायणाः (→मत्परायणः). –c) ते$_1$ मामेव चार्चय गिरे. –d) दे$_{8-10}$ मुवें. मुए. मुब. मनसा, द$_1$ ग्र$_{1.2}$ मामेव (→मेनया); ब$_1$ दे$_{1.4.8-10}$ न$_1$ ते$_1$ द$_1$ ग्र$_{1.2}$ म$_1$ मुवें. मुए. मुब. शरणं गतः (दे$_1$ द$_1$ °ताः), दे$_3$ सहसाङ्गतः (→सह सङ्गतः).

२९२. –a) दे$_4$ मे धातु, द$_1$ ग्र$_2$ म$_1$ मे (ग्र$_2$ म) ध्यानं (→मे ध्यातु); दे$_1$ अशक्तोऽसि यदि ध्यातुम्. –b) दे$_1$ रूपमैश्वरं, द$_1$ परमव्ययम (→रूपमव्ययम्). –c) दे$_4$ तत्वं (→ततो); दे$_{8-10}$ मुवें. मुए. मुब. परमं (→सकलं). –d) का$_1$ कलाढ्यं,+कालाढ्यं, दे$_4$ कल्पाद्यं, दे$_8$ कालढ्यं, दे$_9$ कलाढ्यं ते$_1$ कालाङ्ग- (→कालाद्यं); दे$_2$ सकलं (→शरणं); ब$_1$ का** शरणं व्रज.

२९३. –a) का$_1$ प्राद्यं, ब$_1$ दे$_{5.10}$ मुवें. मुए. मुब. तद्यत्, ते$_1$ येन, ग्र$_2$ अद्य (→यद्यत्); दे$_1$ सुरूपं, दे$_{8.9}$ सरूपं (→स्वरूपं); दे$_{10}$ तेन (→तात); ते$_1$ येन स्वरूपं मे*तां. –b) दे$_{10}$ मनसा (→मनसो); ब$_2$ गोचरे (→गोचरं); ब$_1$ दे$_{1.4.8-10}$ न$_1$ ते$_1$ द$_1$ ग्र$_{1.2}$ म$_1$ मुवें. मुए. मुब. तव (→भवेत्). –d) का$_1$ भव, + भवेत्, दे$_5$ भवा (?) (→भव).

२९४. –a) दे$_6$ यस्तु (→यत्तु); दे$_3$ रूपे, दे$_5$ रूप- (→रूपं). –d) दे$_6$ अनन्ते (→अनन्तम्).

२९५. –a) ब$_3$ °नैव तु (→°नैकेन); दे$_{10}$ तक्षक्यं(?) (→तल्लभ्यं). –b) ते$_1$ केवलं (→क्लेशेन). –c) दे$_3$ प्रशश्यंतो, दे$_4$ प्रपश्यन्ते, द$_1$ ग्र$_{1.2}$ म$_1$ प्रपद्यन्ते (ग्र$_1$ °न्तो, ग्र$_2$ °न्तु) (→प्रपश्यन्तो). –d) ते$_1$ च, म$_1$ हि (→ते).

२९६. –a) दे$_{10}$ तदात्मानं (→तदात्मानस्). –b) दे$_{1.10}$ °रायणः (→°रायणाः). –c) दे$_{5.10}$ गच्छन्ति पुनरावृत्तिं.

२९७. –a) ब$_1$ दे$_5$ ममा (?) (→माम-); ब$_3$ दे$_2$ अपाश्रित्य, दे$_3$ अपोछित्य (?), दे$_6$ अयोहृत्य (?), ते$_1$ अयोशेत्य, + अयोश्रित्य(?), द$_1$ ग्र$_{1.2}$ म$_1$ अनादृत्य (→अनाश्रित्य); म$_1$ परमां (→परमं). –b) दे$_{8.9}$ निर्वाणफलमप्रदम, दे$_{10}$ निर्वाणमफलप्रदम्; ग्र$_2$ निर्वाणम्मलिनं पदम, म$_1$ निर्वाणं परमं पदम्. –c) ते$_1$ प्रोच्यते (→प्राप्यते).

२९८. न$_1$ द$_1$ ग्र$_1$. ⊙ (द्द. सं.); ते$_1$. b ⊙. –a) ग्र$_2$ पृथक्त्वेन च ए** . –b) दे$_1$ तवाश्रो°, दे$_{10}$ तथा चौ° (→तथा चो°); दे$_{1.2.8-10}$ म$_1$ मुवें. मुए. मुब. °यथापिं (→°यतोऽपि); ब$_1$ ता, दे$_5$ च (→वा). –c) ब$_3$ दे$_4$ ग्र$_2$ उपास्व, दे$_3$ उपास्थ (?) (→उपास्य); दे$_{8-10}$ मुए. मुब. महीपाल, ग्र$_2$ यथा राजन, मुवें. महीपालं (→महाराज). –d) दे$_{10}$ ग्र$_2$ यास्यति (→यास्यसि); ब$_1$ ते$_1$ मत्पदम् (→तत्पदम्).

२९९. न$_1$ द$_1$ ग्र$_1$. ⊙ (द्द. सं.). –a) ग्र$_2$ मामेना(?) श्रित्य, म$_1$ मामनादृत्य (→मामनाश्रित्य). –b) दे$_1$ स्वभावममलं, ग्र$_2$ स्वभावं परमं (→स्वभावविमलं).

३००. –a) ब$_2$ तस्मादनक्षरं (→तस्मात्त्वमक्षरं). –b) ब$_1$ नित्यं च, दे$_{5.6.8-10}$ द$_1$ मुवें. मुए. मुब. नित्यं वा (→नित्यं चा-); ब$_{1-3}$ दे$_5$ °रूपमीश्वरं (→°रूपमैश्वरम्); न$_1$ ममैतत्परमैश्वरम्. –c) दे$_1$ (प्रध)प्रयत्नेन (→प्रयत्नेन). –d)

कर्मणा मनसा वाचा शिवं सर्वत्र सर्वदा ।
समाराधय भावेन ततो यास्यसि तत्पदम् ॥३०१
न वै पश्यन्ति तत् तत्त्वं मोहिता मम मायया ।
अनाद्यनन्तं परमं महेश्वरमजं शिवम् ॥३०२
सर्वभूतात्मभूतस्थं सर्वाधारं निरञ्जनम् ।
नित्यानन्दं निराभासं निर्गुणं तमसः परम् ॥३०३
अद्वैतमचलं ब्रह्म निष्कलं निष्प्रपञ्चकम् ।
स्वसंवेद्यमवेद्यं तत् परे व्योम्नि व्यवस्थितम् ॥३०४
सूक्ष्मेण तमसा नित्यं वेष्टिता मम मायया ।
संसारसागरे घोरे जायन्ते च पुनः पुनः ॥३०५
भक्त्या त्वनन्यया राजन् सम्यग् ज्ञानेन चैव हि ।
अन्वेष्टव्यं हि तद् ब्रह्म जन्मबन्धनिवृत्तये ॥३०६
अहंकारं च मात्सर्यं कामं क्रोधं परिग्रहम् ।
अधर्माभिनिवेशं च त्यक्त्वा वैराग्यमास्थितः ॥३०७
सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि ।
अन्वीक्ष्य चात्मनात्मानं ब्रह्मभूयाय कल्पते ॥३०८
ब्रह्मभूतः प्रसन्नात्मा सर्वभूताभयप्रदः ।
ऐश्वरीं परमां भक्तिं विन्देतानन्यगामिनीम् ॥३०९
वीक्षते तत् परं तत्त्वमैश्वरं ब्रह्मनिष्कलम् ।
सर्वसंसारनिर्मुक्तो ब्रह्मण्येवावतिष्ठते ॥३१० वें१.१२.२६६

---

दे8-10 मुवें. मुए. ततोऽन्धत्वं, द1 ततो बद्धात् (→ततो वन्धं); द1 प्रयास्यसि, ग्र2 प्रयास्यति (→प्रहास्यसि).

**३०१.** –c) द1 तदाराधय, ग्र1 सदाधारय, ग्र2 म1 सदाराधय (→समाराधय). –d) का1 ब1-3 दे2-6 ते1 मत्पदम् (→तत्पदम्).

**३०२.** –a) ब2 दे2 द1 ग्र1.2 म1 नैव (ब2 दे2 °वं), ते1 नैते (→न वै); दे2 मुवें. मुए. यास्यन्ति (→पश्यन्ति); दे1 तद् देव, दे2 तदेवं, + तत्तत्वं, दे3.6 तत्त्वज्ञं (दे6 °ज्ञ), दे8.9 मुवें. मुए. तं देवं, दे10 तंदेहं, द1 ग्र1.2 म1 तन्देवा (→तत् तत्त्वं). –c) द1 अनाद्यनन्तमपरं, ग्र2 अनाद्यन्तं परं ब्रह्म. –d) दे1 अजं परम्, दे3.6 -मतं शिवम्, दे4 समं शिवम् (→अजं शिवम्).

**३०३.** –a) दे1 सर्वा (→सर्व-). –b) ब1 दे1.8 न1 सर्वाधार- (→सर्वाधारं). –c) ब1 नित्यानन्द- (→नित्यानन्दं); म1 निराधारं (→निराभासं).

**३०४.** –a) ब1 अनन्तं (→अद्वैतं). –c) ब1 दे1 सुसंवेद्यम् (→स्वसंवेद्यम्); दे1 अवेद्यं च, दे4 तत्परमं (→अवेद्यं तत्); द1 ग्र1 म1 स्वसंवेद्यमसंवेद्यं. –d) का1 ब2.3 दे3 न1 द1 ग्र1.2 म1 परं, दे4.5 शिवं (→परे); म1 व्योमन्य° (→व्योम्नि व्य°); दे1 परं व्योममव्ययम्.

**३०५.** –a) दे9 सूष्मेण (→सूक्ष्मेण); ब3 तमसाः, दे1 ग्र2 तपसा, दे4 तमसं (→तमसा). –b) दे1.8-10 न1 द1 ग्र1 म1 वेष्टितं, दे4 चेष्टितं (→वेष्टिता); ग्र2 सृष्टितन्मायया जगत्. –c) ब3 °सागरो घोरे, दे10 °सागरो घोरो (→°सागरे घोरे). –d) ग्र2 जायते (→जायन्ते).

**३०६.** –a) दे3 ग्र2 भक्ता (→भक्त्या); द1 ग्र1.2 म1 ह्यनन्यया (→त्वनन्यया); दे1 चैव (→राजन्). –b) ते1 मम (→सम्यक्); ग्र2 सम्यग्ज्ञान* चैव हि. –c) दे3 अत्रेष्टव्यं (→अन्वेष्टव्यं); दे10 च (→हि); दे1 तं (→तत्). –d) ब3 °निवर्तते, ते1 °विमुक्तये (→°निवृत्तये).

**३०७.** –a) ग्र2 अहङ्कारश्च (→अहङ्कारं च). –b) ब1 दे3.6 न1 ग्र1.2 मुवें. काम-, दे5 कर्न- (→कामं); ग्र1.2 मुवें. मुए. मुब. क्रोध- (→क्रोधं). –d) दे1 त्यक्तो, दे3 त्यक्ता (→त्यक्त्वा).

**३०८.** का1. ⊙. –c) दे2 समीक्ष्य, दे5 अन्वीक्ष, दे8.9 मुवें. मुए. मुब. अवेक्ष्य, म1 अन्विष्य (→अन्वीक्ष्य); दे10 वीक्ष्य चात्मयमात्मानम्. –d) दे4 ब्रह्मरूपाय (→ब्रह्मभूयाय).

**३०९.** का1. ab ⊙. –a) ब3 दे2 न1 ब्रह्मभूत-, दे3 ब्रह्मभूतं, ग्र1.2 म1 सर्वभूत- (→ब्रह्मभूतः). –b) दे3 सर्वभूतो, द1 ग्र2 सर्वभूत- (→सर्वभूता-); दे6 °भयप्रदम् (→°भयप्रदः); ते1 सर्वभूतानुसूयकः. –c) दे1.8-10 मुवें. मुए. ऐश्वर्यं, दे2 ईश्वरे (→ऐश्वरीं); दे8-10 परमं (→परमां); का1 ब1.3 द1 ग्र2 म1 शक्ति (→भक्तिं). –d) का1 दे10 म1 विदते, न1 वितेता, द1 वेदान्ता- (→विदेत); का1 चान्यगामिनीम्, दे1 द1 ग्र1.2 म1 -नन्यभागिनीम्, दे4 नान्यगामिनीम्, दे8-10 मुवें. मुए. मुब. -नन्यभाविनीम् (→-नन्यगामिनीम्).

**३१०.** –a) ब1.3 दे1-4.6.10 न1 द1 म1 मुवें. मुए. मुब. वीक्ष्यते दे5 चाक्षते, (→वीक्षते). –b) का1 निष्कलं, ब2.3 दे3.5.6 न1 ते1 द1 ग्र1 म1 ईश्वरं (→ऐश्वरं); ग्र2 ***प्रेमनिष्कलम्. –c) ग्र2 संसारार्णवनिर्मुक्तो. –d) दे2 ब्रह्मण्येवा****, दे4 ब्रह्मणेवोपतिष्ठते, दे10 ब्रह्मण्येका च निष्ठतो (?).

२.३०० ब्रह्मणो हि प्रतिष्ठाऽयं परस्य परमः शिवः ।
अनन्तस्याव्ययस्यैकः स्वात्माधारो महेश्वरः ॥३११
ज्ञानेन कर्मयोगेन भक्तियोगेन वा नृप ।
सर्वसंसारमुक्त्यर्थमीश्वरं सततं श्रय ॥३१२
एष गुह्योपदेशस्ते मया दत्तो गिरीश्वर ।
अन्वीक्ष्य चैतदखिलं यथेष्टं कर्त्तुमर्हसि ॥३१३
अहं वै याचिता देवैः संजाता परमेश्वरात् ।
विनिन्द्य दक्षं पितरं महेश्वरविनिन्दकम् ॥३१४
धर्मसंस्थापनार्थाय तवाराधनकारणात् ।
मेनादेहसमुत्पन्ना त्वामेव पितरं श्रिता ॥३१५
स त्वं नियोगाद् देवस्य ब्रह्मणः परमात्मनः ।
प्रदास्यसे मां रुद्राय स्वयंवरसमागमे ॥३१६
तत्संबन्धाच्च ते राजन् सर्वे देवाः सवासवाः ।
त्वां नमस्यन्ति वै तात प्रसीदति च शंकरः ॥३१७
तस्मात् सर्वप्रयत्नेन मां विद्धीश्वरगोचराम् ।
संपूज्य देवमीशानं शरण्यं शरणं व्रज ॥३१८
स एवमुक्तो भगवान् देवदेव्या गिरीश्वरः ।
प्रणम्य शिरसा देवीं प्राञ्जलिः पुनरब्रवीत् ॥३१९
विस्तरेण महेशानि योगं माहेश्वरं परम् ।
ज्ञानं चैवात्मनो योगं साधनानि प्रचक्ष्व मे ॥३२०

---

३११. –a) दे$_{8.9}$ मुवें. मुए. मुब. ब्रह्मणोयं, दे$_{10}$ ब्रह्मो*यं (→ब्रह्मणो हि); का$_{1}$ दे$_{4}$ न$_{1}$ प्रतिष्ठोऽयं, ब$_{1-3}$ दे$_{3.6}$ ते$_{1}$ मुब. प्रतिष्ठेयं, दे$_{1.8-10}$ ग्र$_{2}$ प्रतिष्ठायां, दे$_{5}$ प्रतिष्ठोह (?) मुवें. मुए. प्रतिष्ठानं (→प्रतिष्ठाऽयं); दे$_{2}$ ****प्रतिष्ठोयं. –c) का$_{1}$ ब$_{3}$ दे$_{5.6}$ अनन्यस्याप्यजस्यैकः, ब$_{1}$ दे$_{1}$ अनन्यस्याप्यजस्यैकः, ब$_{2}$ अनन्तस्याप्यजन्यश्च, दे$_{2}$ अनन्यश्चाव्ययश्चैष, दे$_{3}$ अनन्यस्याथ यस्यैकः, दे$_{4}$ न$_{1}$ अनन्यस्याव्ययस्यैकं (न$_{1}$ °क), दे$_{8-10}$ मुवें. मुए. मुब. अनन्यश्चाव्ययश्चैकश् , ते$_{1}$ अनन्यश्चाप्यजश्चैकः. –d) दे$_{3}$ स्वात्माचारो, दे$_{8-10}$ मुवें. मुए. मुब. चात्माधारो, ग्र$_{2}$ -स्य वा माधारो (?)(→स्वात्माधारो).

३१२. –b) ब$_{1-3}$ दे$_{3.5.6.8-10}$ न$_{1}$ ग्र$_{2}$ मुवें. मुए. मुब. भक्त्या (→भक्ति-); दे$_{1}$ वै (→वा). –c) ब$_{2}$ दे$_{1}$ °मुक्ता° (→°मुक्त्य°). –d) दे$_{1.2.8-10}$ ते$_{1}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ मुवें. मुए. मुब. शरणं (→सततं); दे$_{1.2.8-10}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ मुवें. मुए. मुब. व्रज, दे$_{3.6}$ न$_{1}$ श्रयः, दे$_{5}$ श्रया (?) (→श्रय).

३१३. –a) दे$_{3}$ द$_{1}$ एवं (→एष). –b) न$_{1}$ म$_{1}$ गिरीश्वरः, ग्र$_{2}$ मुनीश्वराः (→गिरीश्वर). –c) दे$_{3}$ अन्धा (?) क्ष्य, दे$_{5}$ अन्वीक्ष, द$_{1}$ आन्वीक्ष्य (→अन्वीक्ष्य); दे$_{1}$ सकलं (→अखिलं).

३१४. –a) दे$_{4}$ च (→वै); दे$_{10}$ याचितो, म$_{1}$ याचितं (→याचिता); दे$_{3}$ दैवैः (→देवैः); ते$_{1}$ अहं चैवार्थितो देवैः. –b) द$_{1}$ ग्र$_{2}$ म$_{1}$ संस्मृता, ग्र$_{1}$ त्वस्मृता (→संजाता); दे$_{1}$ परमेश्वरः (→परमेश्वरात्). –c) दे$_{3.10}$ दक्ष- (→दक्षं). –d) दे$_{1}$ रत्नेश्वर° (→महेश्वर°); द$_{1}$ °मनिन्दकम् (→°विनिन्दकम्).

३१५. –a) दे$_{3.6}$ °स्थापनार्थञ्च, दे$_{5}$ °रक्षणार्थाय (→°स्थापनार्थाय). –b) दे$_{2}$ त्वदा° (→तवा°). –c) द$_{1}$ ग्र$_{1.2}$ म$_{1}$ °देहात् (→°देह-); दे$_{4}$ °समुत्पन्न- (→°समुत्पन्ना); दे$_{1}$ मेनेदिह समुद्भूता. –d) दे$_{4}$ ग्र$_{2}$ त्वमेव, दे$_{3}$ त्वामेवा (?) (→त्वामेव); का$_{1}$ पितरं श्रिताः, द$_{1}$ पितरं श्रिया, ग्र$_{2}$ परमाश्रिता (→पितरं श्रिता).

३१६ –a) ग्र$_{2}$ नियोगदेव° (→नियोगाद्देव°). –b) ग्र$_{1}$ ब्रह्मण्यः (→ब्रह्मणः). –c) ग्र$_{1}$ °सोमा (→°से मां).

३१७. –a) द$_{1}$ ग्र$_{1}$ ग्र$_{2}$ मत् (→तत्); दे$_{1}$ °धे ते ते (?), दे$_{2}$ °धाच्चिता, दे$_{8-10}$ मुवें. मुए. मुब. °धान्तरे, न$_{1}$ °धात्र ते, ग्र$_{2}$ °धाच्चरे (→°धाच्च ते). –b) दे$_{5.8-10}$ द$_{1}$ सर्व- (→सर्वे); दे$_{1}$ सबान्धवाः (→सवासवाः). –c) दे$_{10}$ नमस्यति (→नमस्यन्ति); म$_{1}$ चैतेन (→वै तात). –d) दे$_{1}$ प्रसीदेति च, ग्र$_{2}$ प्रसीद तव (→प्रसीदति च).

३१८. द$_{1}$. ⊙. –a) ग्र$_{2}$ तस्मै (→तस्मात्). –b) का$_{1}$ ब$_{1-3}$ दे$_{1-6}$ न$_{1}$ ते$_{1}$ ग्र$_{1}$ म$_{1}$ निन्दामी-, ग्र$_{2}$ निन्दादी- (→मां विद्धी-); का$_{1}$ ब$_{2}$ -गोचरीम् , दे$_{1}$ -गोचरात्, ग्र$_{2}$ -गोचरम् (→-गोचराम्). –c) का$_{1}$ ब$_{1-3}$ दे$_{1-6}$ न$_{1}$ ते$_{1}$ ग्र$_{1.2}$ म$_{1}$ सन्त्यज्य (→संपूज्य). –d) ग्र$_{1}$ मामेव (→शरण्यं).

३१९. –a) दे$_{1}$ स एवमूक्तौ (?), दे$_{4}$ एवमुक्ता स, न$_{1}$ एवमुक्तोऽथ (→स एवमुक्तो); का$_{1}$ ब$_{1}$ दे$_{2.8.9}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ मुवें. मुए. मुब. हिमवान् (→भगवान्). –b) ब$_{3}$ देव्या दे$_{2}$ देवं, दे$_{8-10}$ ग्र$_{2}$ देवो (→देव-); ब$_{3}$ °देव-, दे$_{10}$ °देव्यो (→°देव्या); ग्र$_{2}$ हिमेश्वरः (→गिरीश्वरः). –d) दे$_{3}$ द$_{1}$ प्राञ्जलि (→प्राञ्जलिः).

अतः परं ग्र$_{2}$ पुस्तके अधिकम्—हिमवान्.

३२०. –a) ग्र$_{2}$ विस्तारेण (→विस्तरेण); ग्र$_{2}$ महेश्वरी, म$_{1}$ महादेवि (→महेशानि). –b) दे$_{1.3}$ योग-, ग्र$_{2}$ योगात् (→योगं); ग्र$_{2}$ महेश्वरं (→माहेश्वरं); ब$_{2}$ म$_{1}$ पदम्

तस्यैतत् परमं ज्ञानमात्मयोगमनुत्तमम् ।
यथावद् व्याजहारेशा साधनानि च विस्तरात् ॥३२१
निशम्य वदनाम्भोजाद् गिरीन्द्रो लोकपूजितः ।
लोकमातुः परं ज्ञानं योगासक्तोऽभवत्पुनः ॥३२२
प्रददौ च महेशाय पार्वतीं भाग्यगौरवात् ।
नियोगाद् ब्रह्मणः साध्वीं देवानां चैव संनिधौ ॥३२३
य इमं पठतेऽध्यायं देव्या माहात्म्यकीर्तनम् ।
शिवस्य संनिधौ भक्त्या शुचिस्तद्भावभावितः॥३२४
सर्वपापविनिर्मुक्तो दिव्ययोगसमन्वितः ।
उल्लङ्घ्य ब्रह्मणो लोकं देव्याः स्थानमवाप्नुयात्॥३२५
यश्चैतत् पठते स्तोत्रं ब्राह्मणानां समीपतः ।
देव्याः समाहितमनाः सर्वपापैः प्रमुच्यते ॥३२६
नाम्नामष्टसहस्रं तु देव्या यत् समुदीरितम् ।
ज्ञात्वाऽर्कमण्डलगतां संभाव्य परमेश्वरीम् ॥३२७
अभ्यर्च्य गन्धपुष्पाद्यैर्भक्तियोगसमन्वितः ।
संस्मरन् परमं भावं देव्या माहेश्वरं परम् ॥३२८
अनन्यमानसो नित्यं जपेदामरणाद् द्विजः ।
सोऽन्तकाले स्मृतिं लब्ध्वा परं ब्रह्माधिगच्छति ॥३२९　वें १.१२.३१८

(→परम्). –c) दे1-3.8.9 न1 द1 ग्र2 मुवें. मुए. मुब. वैचा° (→चैवा°); दे10 °त्मना योगं, ग्र2 °त्मयोगं वा (→°त्मनो योगं). –d) दे3 साधर्म्माणि (→साधनानि); का1 दे5 ग्र1 प्रचक्ष मे, दे3.6 प्रचक्ष्वसे (→प्रचक्ष्व मे).

**३२१.** –a) ब2 दे1.4 न1 द1 ग्र1 तस्मै, दे6 तथै- (→तस्यै-); दे8.9 परमेशानम् (→परमं ज्ञानम्). –b) दे8.9 मुवें. मुए. मुब. आत्मनो योगमु°, द1 ग्र1.2 म1 मायायोगमनु°, (→आत्मयोगमनु°); दे1 आत्मयोगसमुद्भवम्, मुवें. मुए. मुब. आत्मना योगमुत्तमम्. –c) का1 व्याजहारेश, ब3 व्याजहारैषा, दे3 व्याजहरि (?) (→व्याजहारेशा).

**३२२.** –b) दे2 गिरीशो (→गिरीन्द्रो). –d) दे1 योगाशक्तो(?), ते1 योगं शान्तो, ग्र1 योगसिद्धो, म1 योगसक्तो (→योगासक्तो).

**३२३.** –a) दे6 प्रदद्यैव (→प्रददौ च); दे1 *मेशाय (→महेशाय). –b) दे1.2.6 द1 पार्वती- (→पार्वतीं); दे2 वाक्य°, दे6 योग्य° (→भाग्य°); न1 °गौरवाम् (→गौरवात्). –c) दे10 नियोगब्राह्मणः (→नियोगाद् ब्रह्मणः); ब1 दे1.10 द1 ग्र2 मुवें. मुए. साध्वी, ग्र1 पुत्रीं (→साध्वीं); म1 नियोगाद् ब्रह्मणस्पर्धि. –d) दे2 चापि (→चैव); दे1 देवतानां च संनिधौ, ते1 दत्तवान् धर्मसंनिधौ.

**३२४.** –a) का1 ब3 दे1-3.5.6.10 न1 द1 इदं (→इमं); ब1 दे1 पठ्यते (→पठते); द1 ध्यानं (→[अ]ध्यायं). –b) ग्र2 °त्म्यमुत्तमम् (→°त्म्यकीर्त्तनम्). –c) दे1 भूत्वा (→भक्त्या). –d) द1 ग्र1 म1 शुद्धस् (→शुचिस्); ब1 सद्भाव°, दे2 तद्गत°, ते1 मद्भाव°(→तद्भाव°); दे2 °मानसः, दे4 °भाषितः (→°भावितः).

**३२५.** म1. ⊙; दे3.6. ab ⊙. –a) ब1 °माया° (→°पाप°). –b) ब2.3 देव्या, दे1 दे*, दे2 देव्या, + दिव्य, ग्र2 देव्ये (?)(→दिव्यः); ब2.3 योगं(→-योग-); ब2.3 समाश्रितः (→समन्वितः). –c) दे10 लोके (→लोकं). –d) का1 दे1.2.4.6.8-10 देव्या (→देव्याः); दे2 लोकम् (→स्थानम्); ग्र2 च माप्नुयात् (?)(→अवाप्नुयात्).

**३२६.** म1. ab ⊙. –a) ब1 दे1 पठ्यते, दे4 पठिते, दे8.9 मुवें. मुए. पठति, दे10 पठितं (→पठते); द1 ग्र1.2 यस्तु मर्त्यः पठेत्स्तोत्रं. –c) दे8-10 मुवें. मुए. मुब. समाहितमनाः सोऽपि. –d) दे1 किल्विषैर्मप्रमुच ते(?).

**३२७.** दे6. ab पादयोः 'यत्' इति यावत् खण्डितम्. –b) न1-याः (→यत्); दे1 देवमाहेश्वरं पं *, ते1 देवस्वयमुदीरितम्. –c) ते1 गतं, ग्र2 मुवें. मुए. मुब. °गता (→°गतां). –d) ब1 दे1 ते1 ग्र1.2 म1 संभाष्य, दे8-10 मुवें. मुए. मुब. आवाह्य (→संभाव्य); दे3 परमेश्वरी, ते1 परमेश्वरम् (→परमेश्वरीम्).

३२७. श्लोकस्य b चरणानन्तरम् दे1 पुस्तके अधिकम्—
अनन्यमनसो नित्यं जपेदामरणाद् द्विजः ।
सौतकाले स्मृतिं लब्ध्वा परं ब्रह्माधिगच्छति ॥
अथवा जायतो विप्रो ब्रह्मणानां कुले*यौ ।
पूर्वं संस्कारमाहात्म्या ब्रह्मविद्यामवाप्य सः ॥
संप्राप्य योगं परमं दिव्या मत्समुदीरितम् ।
( = ३२९–३३१b)

b चरणानन्तरं म1 पुस्तके ३२५–३२७ ab आवृत्तम्.

**३२८.** –a) दे5 आपर्च्य (?)(→अभ्यर्च्य); दे10 अभ्यर्च्य पुष्पगन्धाद्यैर्. –c) दे4 संस्मरन्नैश्वरं भावम्. –d) दे6 म1 पदं (→परम्); दे1 देव्यं तत्परमेश्वरम्.

**३२९.** दे1. ⊙ (पूर्वमागतम्; द्र. ३२७ पा. वि.). –a) दे2 ग्र1 °मनसा, दे4.10 ग्र2 °मनसो (→°मानसो). –b) ब1-3 दे3.6 ते1 म1 आ (दे3 अ) मरणं, दे4.10 आमरण– (→आम-

वें१.१२.३१६

अथवा जायते विप्रो ब्राह्मणानां कुले शुचौ ।
पूर्वसंस्कारमाहात्म्याद् ब्रह्मविद्यामवाप्य सः ॥३३०
संप्राप्य योगं परमं दिव्यं तत् पारमेश्वरम् ।
शान्तः सर्वगतो भूत्वा शिवसायुज्यमाप्नुयात् ॥३३१
प्रत्येकं चाथ नामानि जुहुयात् सवनत्रयम् ।
पूतनादिकृतैर्दोषैर्ग्रहदोषैश्च मुच्यते ॥३३२
जपेद् वाऽहरहर्नित्यं संवत्सरमतन्द्रितः ।
श्रीकामः पार्वतीं देवीं पूजयित्वा विधानतः ॥३३३
संपूज्य पार्श्वतः शंभुं त्रिनेत्रं भक्तिसंयुतः ।
लभते महतीं लक्ष्मीं महादेवप्रसादतः ॥३३४
तस्मात् सर्वप्रयत्नेन जप्तव्यं हि द्विजातिभिः ।
सर्वपापापनोदार्थं देव्या नाम सहस्रकम् ॥३३५
प्रसङ्गात् कथितं विप्रा देव्या माहात्म्यमुत्तमम् ।
अतः परं प्रजासर्गं भृग्वादीनां निबोधत ॥३३६

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायां पूर्वविभागे एकादशोऽध्यायः ॥११॥

---

रणाद्); का$_1$ ब$_{2.3}$ दे$_{3.6}$ द्विजाः (→द्विजः); दे$_2$ जपेत्सत्र-मतंद्रितः,ग्र$_2$ जपेदामरणाद्धयः. –c) का$_1$ ब$_2$. दे$_{3.6}$ स तु(दे$_3$ °नु), ग्र$_2$ शोऽन्तः (→सोऽन्त-); दे$_6$ स्मृतिर् (→स्मृतिं); दे$_{4.8}$ लब्धा (→लब्ध्वा). –d) ब$_{1.3}$ ब्रह्मादिगच्छति, द$_1$ ग्र$_{1.2}$ म$_1$ ब्रह्माधिरोहति (→ब्रह्माधिगच्छति); दे$_{10}$ परमब्रह्मणाधिकम्.

**३३०**. दे$_1$. ⊙ (द्र. ३२७ पा. वि.). –a) म$_1$ अयं वा (→अथवा).–b) दे$_6$ ब्राह्मणश्च, दे$_{8-10}$ मुवें.मुए.ब्राह्मणस्य (→ब्राह्मणानां);ग्र$_2$ कुलं (→कुले); दे$_{8\cdot10}$ द$_1$ ग्र$_1$ म$_1$ कुले, ग्र$_2$ शुभं (→शुचौ);ब$_1$ दे$_3$ ते$_1$ ब्राह्मणानां कुलेषु वै. –c)ब$_1$ दे$_{8-10}$ सर्व° (→पूर्व°);ब$_3$ दे$_3$°माहात्म्या(?),दे$_6$ °माहात्म्य(→°माहात्म्याद्). –d) दे$_{8.9}$ मुवें. मुए. मुब. अवाप्नुयात्, दे$_{10}$ माहात्म्यां(?), दे$_{10}$ अवाप्स्यसि, द$_1$ ग्र$_{1.2}$ म$_1$ अवाप्य च (→अवाप्य सः).

**३३१**. दे$_1$. ab ⊙(द्र.३२७ पा. वि.). –b) दे$_5$ दिव्ये (→दिव्यं); ब$_1$ दे$_{3.10}$ न$_1$ परमे (नामी) श्वरम्, म$_1$ पारमैश्वरम् (→पारमेश्वरम्). –c) ग्र$_2$ शान्तास् (→शान्तः); दे$_{8-10}$ मुवें. मुए. मुब. सुसंयतो, ते$_1$ समगतो (→सर्वगतो).

**३३२**. –a) का$_1$ ब$_{1-3}$. दे$_{8.9}$ न$_1$ द$_1$ ग्र$_{1.2}$ म$_1$ वा, (→चा-); द$_1$ ग्र$_{1.2}$ म$_1$ [अ]पि (→[अ]थ); ते$_1$ प्रत्येकं वा ****. –b) का$_1$ दे$_{8-10}$ कुसुम°, ब$_1$ सधन°, दे$_3$ वत्सर° (→सवन°); न$_1$ जुहुयात्सवने त्रयम्, द$_1$ ग्र$_{1.2}$ म$_1$ जुहुयाद्भुव-नत्रयम्. –c) दे$_{8-10}$ मुवें. मुए. मुब. महामारि° (दे$_{10}$ °री) (→पूतनादि°). –d) दे$_4$ द$_1$ ग्र$_{1.2}$ म$_1$ प्रमुच्यते (→च मुच्यते).

**३३३**. –a) द$_1$ ग्र$_{1.2}$ म$_1$ °दहरहर् (→वाऽहरहर्).

**३३४**. –a) दे$_{8.9}$ सार्द्धतः, दे$_{10}$ साधनः, द$_1$ वाग्यतश्, ग्र$_2$ पार्वतश् (→पार्श्वतः). –b) द$_1$ ग्र$_{1.2}$ म$_1$शक्तिसंयुतम् (ग्र$_2$ °तः) (→भक्तिसंयुतः). –ab) ब$_1$ संपूज्य पार्श्वतो विप्रा देव्या नामसहस्रकम्. –c) ग्र$_2$ म$_1$ लभेत (→लभते); ब$_1$ दे$_1$ महती (?) (→महतीं). –d) दे$_1$ °प्रभावतः (→°प्रसादतः).

**३३५**. –b) दे$_1$ प्रजप्तव्यं च, ग्र$_2$ तप्तव्यं हि (→जप्तव्यं हि). –c) दे$_2$ द$_1$ ग्र$_{1.2}$ म$_1$ सर्वपापप्रणाशार्थं. –d) ते$_1$ देव, + देवी (→देव्या).

अतः परं दे$_{8-10}$ मुवें. मुए. अधिकम्—सूत उवाच.

**३३६**. –a) दे$_3$ कथिता (→कथितं). –c) दे$_4$ ततः परं (→अतः परं). –d) दे$_8$ भृत्यादीनां (→भृग्वादीनां); ब$_3$ दे$_1$ निबोधतः, दे$_6$ निवोच त(?) (→निबोधत).

**पुष्पिका** :—

**पुराणनाम**—का$_1$ दे$_{1.2.5.6.8-10}$ द$_1$ ग्र$_{1.2}$ म$_1$ मुवें. मुए. इति श्रीकूर्मपुराणे, ब$_1$ इत्यादिकौर्मे, ब$_{2.3}$ दे$_3$ इति कूर्मपुराणे, दे$_4$ न$_1$ ते$_1$ इत्यादिमहापुराणे श्रीकौर्मे(दे$_4$ कौर्म्ये), मुब. इति श्रीकौर्मे महापुराणे पूर्वभागे. **अध्यायनाम**—का$_1$ ब$_{1.3}$ दे$_{3-6}$ न$_1$ ते$_1$ ग्र$_2$. ⊙; ब$_2$ दे$_1$ देव्या नामसहस्रकं, दे$_2$ देव्याष्टोत्तर-सहस्रनाम, दे$_{8-10}$ मुवें. मुए. देव्या माहात्म्ये, द$_1$ग्र$_1$ देवी-सहस्रनामधेये,म$_1$ देवीसहस्रनामधेयो नाम, मुब. देवीमाहात्म्ये देव्या नामसहस्रकथनं नाम. **अध्यायसंख्या**—ब$_2$ दे$_6$. ⊙; का$_1$ ब$_{1.3}$ दे$_{2-5}$ न$_1$ ते$_1$ एकादशोऽध्यायः, दे$_{1.8-10}$ द$_1$ ग्र$_{1.2}$ म$_1$ मुवें मुए. मुब. द्वादशोऽध्यायः ॥१२॥.

अध्यायसमाप्तौ अधिकम्—दे$_{8.10}$ इति गौरीसहस्रनाम, दे$_9$ गौरीसहस्रनाम; न$_1$ दुर्गासहस्रनामाख्यानं नाम.

# १२

सूत उवाच ।❀

भृगोः ख्यात्यां समुत्पन्ना लक्ष्मीर्नारायणप्रिया ।
देवौ धाताविधातारौ मेरोर्जामातरौ तथा ।।१
आयतिर्नियतिर्मेरोः कन्ये चैव महात्मनः ।
धाताविधात्रोस्ते भार्य्ये तयोर्जातौ सुतावुभौ ।।२
प्राणश्चैव मृकण्डुश्च मार्कण्डेयो मृकण्डुतः ।
तथा वेदशिरा नाम प्राणस्य द्युतिमान् सुतः ।।३
मरीचेरपि संभूतिः पौर्णमासमसूयत ।
कन्या चतुष्टयं चैव सर्वलक्षणसंयुतम् ।।४
तुष्टिर्ज्येष्ठा तथा वृष्टिः कृष्टिश्चापचितिस्तथा ।
विरजाः पर्वतश्चैव पौर्णमासस्य तौ सुतौ ।।५
क्षमा तु सुषुवे पुत्रान् पुलहस्य प्रजापतेः ।
कर्दमं च वरीयांसं सहिष्णुं मुनिसत्तमम् ।।६
तथैव च कनीयांसं तपोनिर्द्धूतकल्मषम् । वें. १.१३.७

## १२

[अध्यायारम्भे अधिकम्–दे$_{10}$ गौरीसहस्रनाम, द$_{1}$ श्रीरामाय नमः].

❀ द$_{1}$ ग्र$_{1}$. ⊙; न$_{1}$ सूतः; ते$_{1}$ श्रीशिवः सूतः; ग्र$_{2}$ कूर्मः; म$_{1}$ श्रीकूर्मः.

१. –a) दे$_{3}$ भगोः, ग्र$_{1}$ ॐ भृगोः (→भृगोः); दे$_{3.6}$ ग्र$_{2}$ ख्याता (दे$_{3}$ °तां) (→ख्यात्यां); दे$_{10}$ समुत्पन्नां (→समुत्पन्ना). –c) दे$_{4}$ दिवो (→देवौ); दे$_{1}$ न$_{1}$ ते$_{1}$ म$_{1}$ धातृ° (→धाता°); ग्र$_{2}$ देवौ धातृश्च मार्कण्डेयः, + देवौ धात्राविधातारौ. –d) दे$_{4}$ मेनोर्, दे$_{6}$ ग्र$_{2}$ मेरौ (→मेरोर्); दे$_{1.2}$ द$_{1}$ म$_{1}$ उभौ, दे$_{8-10}$ ग्र$_{1.2}$ मुवें. मुए. मुब. शुभौ (→तथा).

२. दे$_{1}$. ⊙ (द्र. सं.); का$_{1}$. २c–३d ⊙. –a) का$_{1}$ दे$_{3}$ आयातिर्, ग्र$_{1}$ अयातिर् (→आयतिर्); दे$_{10}$ नियतश् (→नियतिर्); दे$_{2.8-10}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ मुवें. मुए. मुब. चैव (→मेरोः). –b) दे$_{2.8-10}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ मुवें. मुए. मुब. मेरोः कन्ये (द$_{1}$ °न्या) (→कन्ये चैव). –c) दे$_{2}$ ग्र$_{2}$ धात्रा (→धाता-); दे$_{8-10}$ मुवें. मुए. मुब. तयोर्धातृविधातृभ्यां. –d) दे$_{3}$ तयोर्ज्ञातौ, दे$_{8-10}$ मुवें. मुए. मुब. यौ च जातौ (→तयोर्जातौ); दे$_{10}$ इमौ (→उभौ).

३. का$_{1}$. ⊙. –a) ब$_{3}$ प्राणश्चैक-, ग्र$_{2}$ प्रीणाश्वेत (→प्राणश्चैव). –b) दे$_{1}$ न$_{1}$ मृकण्डकः, दे$_{3.6}$ $_{8-10}$ मृकंडतः, ग्र$_{2}$ म$_{1}$ मृकण्डुजः (→मृकण्डुतः). –c) दे$_{4}$ ततो, द$_{1}$ ग्र$_{1}$ म$_{1}$ अथ (→तथा); दे$_{4.10}$ न$_{1}$ °शिरो (→°शिरा); ग्र$_{2}$ अधिवेदचरा नाम. –d) ग्र$_{2}$ प्रणस्य (→प्राणस्य); दे$_{4}$ मतिभा (?) (→द्युतिमान्); दे$_{4}$ श्रुतः, द$_{1}$ ग्र$_{1.2}$ म$_{1}$ पुनः (→सुतः).

४. –a) दे$_{4}$ मरीचिरपि, दे$_{6}$ मरीचेरत्रि-, दे$_{10}$ मारीचेरपि (→मरीचेरपि). –b) दे$_{8-10}$ मुवें. मुए. मुब. पूर्ण°, ग्र$_{2}$ पौर्णि° (→पौर्ण°). –c) द$_{1}$ चतुष्टये (→चतुष्टयं); का$_{1}$ जातं (→चैव). –d) ग्र$_{1}$ संयुतैस्सर्वलक्षणैः.

५. –a) का$_{1}$ दृषिर्, ब$_{1}$ दृष्टिर्, ब$_{2}$ म$_{1}$ कृष्टिर् ब$_{3}$ दे$_{1.2.5.6}$ कृषिर्, दे$_{8-10}$ ऋषिर् (दे$_{10}$ °ष्टिर्), दे$_{4}$ ते$_{1}$ कृष्णिर्, न$_{1}$ कृषि-, ग्र$_{1}$ कृष्टी (→तुष्टिर्); न$_{1}$ ग्र$_{2}$ जेष्ठा (→ज्येष्ठा); का$_{1}$ ब$_{3}$ तपो दृष्टिः, ब$_{1}$ दे$_{6}$ तपो वृष्टिः, ब$_{2}$ ततो हृष्टिः, दे$_{2}$ म$_{1}$ तथा दृष्टिः, दे$_{4}$ तथा कृष्णि, दे$_{5}$ तमो वृष्टिः, न$_{1}$ ततो वृष्टिः, ते$_{1}$ तयोधृष्टिः, ग्र$_{2}$ तथा सृष्टिः (→तथा वृष्टिः); दे$_{3}$ कृषिष्वैष्वातपोकृष्टिः (?), द$_{1}$ कृष्टिज्येष्ठस्तथा कृष्टिस्. –b) ब$_{1.2}$ हृष्टिश्, दे$_{2.5.8.9}$ न$_{1}$ ते$_{1}$ कृषिश्, दे$_{3.6}$ कृष्टश्, दे$_{10}$ ऋषिश्, द$_{1}$ ग्र$_{1}$ म$_{1}$ तुष्टिश् (→कृष्टिश्); दे$_{1.10}$[अ]पि (→[अ]प-). –c) ते$_{1}$ विराजः, द$_{1}$ ग्र$_{1.2}$ म$_{1}$ विजयः (→विरजाः); ब$_{3}$ विरजा पर्वताश्चैव. –d) दे$_{8.9}$ मुवें. मुए. मुब. पूर्ण°, ग्र$_{2}$ पौर्णि° (→पौर्ण°); दे$_{3.6}$ द्वौ (→तौ); दे$_{1}$ पौर्णमाससुतावुभौ.

६. –a) ते$_{1}$ भार्या (→पुत्रान्). –b) ब$_{2}$ पुलहाच्च, दे$_{1}$ द$_{1}$ ग्र$_{1.2}$ पुलस्त्यस्य (→पुलहस्य). –c) का$_{1}$ ब$_{3}$ न$_{1}$ कर्दमश्चा (का$_{1}$ °श्चा)वरीवां (ब$_{3}$ °या)सं, ब$_{1.2}$ कर्दमश्चा(ब$_{2}$ °श्च) वरीणां-(ब$_{2}$ °वा) सं, दे$_{1}$ कर्दम चार्वरीवात्सं, दे$_{3}$ कर्द्दमञ्चार्चयां संख्ये, दे$_{6}$ कर्द्दमश्चार्व * यांसं, दे$_{8-10}$ कर्दमं चार्वरीयांसं, ते$_{1}$ कर्दमश्चार्परीवांश्च, ग्र$_{2}$ कर्दमञ्च करीयांसं. –d) द$_{1}$ ग्र$_{2}$ संहिष्णुर् (→सहिष्णुं); दे$_{1}$ °पुंगवं, ते$_{1}$ °सत्तमः (→°सत्तमम्).

७. –a) का$_{1}$ तथा परं कपीवासं, ब$_{1}$ तथापन कनीवांसं, ब$_{2}$ तथा पन्नकपीवासं, ब$_{3}$ तथा पन्नकपीवांसं, दे$_{1}$ तथावत

वं.१.१३.७ अनसूया तथैवात्रेर्जज्ञे पुत्रानकल्मषान् ॥७
सोमं दुर्वाससं चैव दत्तात्रेयं च योगिनम् ।
स्मृतिश्चाङ्गिरसः पुत्रीर्जज्ञे लक्षणसंयुताः ॥८
सिनीवालीं कुहूं चैव राकामनुमतिं तथा ।
प्रीत्यां पुलस्त्यो भगवान् दत्तात्रिमसृजत् प्रभुः ॥९
पूर्वजन्मनि सोऽगस्त्यः स्मृतः स्वायंभुवेऽन्तरे ।
वेदबाहुं तथा कन्यां सन्नतिं नाम नामतः ॥१०
पुत्राणां षष्टिसाहस्रं संततिः सुषुवे क्रतोः ।
ते चोर्ध्वरेतसः सर्वे बालखिल्या इति स्मृताः ॥११
वसिष्ठश्च तथोर्जायां सप्तपुत्रानजीजनत् ।
कन्यां च पुण्डरीकाक्षां सर्वशोभासमन्विताम् ॥१२
रजोहश्चोर्ध्वबाहुश्च सवनश्चानघस्तथा ।
सुतपाः शुक्र इत्येते सप्त पुत्रा महौजसः ॥१३
योऽसौ रुद्रात्मको वह्निर्ब्रह्मणस्तनयो द्विजाः ।
स्वाहा तस्मात् सुतान् लेभे त्रीनुदारान् महौजसः॥१४
पावकः पवमानश्च शुचिरग्निश्च ते त्रयः ।
निर्मथ्यः पवमानः स्याद् वैद्युतः पावकः स्मृतः ॥१५

कनीयांसो, दे2 तथा कनकपीताभं, दे3.6 तथा पल्वकपीवांसं, दे8-10 तथा वनकनी (दे10 °री) नासं, न1 द1 ग्र1 म1 तथा व (न1 क)नकपीवासं, ते1 तदापरक ***, ग्र2 तथा वनकवीवासा. –b) ब2 तथा निर्धूत°, ब3 द1 ग्र1.2 म1 तयोर्निर्धूत° (ग्र2 °य) (→तपोनिर्धूत°). –c) दे1.2.8 श्रनु° (→श्रन°); दे4 चाथ पुत्रेर्, न1 तथैवात्रैः, ग्र2 तथैवाद्रेर् (→तथैवात्रेर्). –d) दे4 यज्ञे पुत्र- (?)(→जज्ञे पुत्रान्).

८. ब1. द.६ ⊙. –c) ब3 दे1.2.8-10 द1 ग्र2 मुवें. मुए. मुब. पुत्री, दे3 पुत्राज्, दे4.5 ते1 पत्नी, दे6 पुत्रा (→पुत्रीर्). –d) का1 ब2.3 दे1.3.5.6.8.9 ते1 ग्र1.2 म1 मुवें. मुए. मुब. °संयुता, दे2.4 न1 °संयुतां (→°संयुता).

९. ब1. ⊙. –a) दे1.3.6 सिनीवाली (→सिनीवालीं); दे1 कुहूँश्चैव, दे6 कुहूश्चैव (→कुहूं चैव). –b) का1 दे5.8-10 ते1 द1 ग्र1.2 म1 मुवें. मुए. मुब. राकामनुमतीमपि, ब2.3 राकां चा (ब3 भा)नुमतीमपि, दे1.2 राका (दे2 कां) चानुमतिं तथा, दे3.6 कोकाचानुमतीस्तथा, दे4 राकामरुत्मनामपि. –c) ते1 व्रत्यां, द1 प्रीत्या (→प्रीत्यां); दे6 पुलस्त्यं (→पुलस्त्यो). –d) दे4 दत्तो विमृ°, दे6 दत्तात्रेम°, दे8-10 दत्तोनिम°, न1 दत्तोत्रिम°, द1 ग्र1 म1 मुब. दंभोलिम°, ग्र2 मुवें. मुए. दम्भोजिम° (→दत्तात्रिम°).

१०. –a) का1 ब2.3 दे1.4.5 न1 द1 ग्र1.2 म1 योगस्त्यः (दे4 स्थ, °दे5 °स्याः, न1 ग्र2 °स्य) (→सोगस्त्यः). –b) दे1 स्वायंभवोंतरे, ते1 द1 स्वायंभुवोंतरे (→स्वायम्भुवेऽन्तरे). –c) दे1 देववाहं तथा कन्यां, दे4 देववाहुं तथा कन्यां, दे6.8-10 मुवें. मुए. मुब. देववाहुस्तथा कन्या (दे10 °न्यां). –d) ब2 सुमतिं, दे1.10 द्वितीयां, दे6.8.9 ग्र2 मुवें. मुए. मुब. द्वितीया, न1 सद्वतीं, ते1 संहितां, द1 म1 संततिर्, ग्र1 सन्ततिं (→सन्नतिं).

११. –b) का1 सन्तती, ब1-3 दे1-3 ते1 सन्नतिः, दे4 संस्कृतिः, न1 संनतिं (→सन्ततिः); दे3 सुसुवे तदा, दे5 सुषु चक्रते, दे6 सुखुवे स्मृते, न1 सुषुवे क्रतौ, (→सुषुवे क्रतोः); ग्र2 संततिः साभीतिस्सुक्रतेः. –c) दे4 तदूर्द्ध°, दे10 न चोर्ध्व° (→ते चोर्ध्व°); दे3 ते सर्वे सन्नतेः पुत्राः, दे6 ऋषीणां सुखिताः सर्वे. –d) ब1-3 दे6 बालि° (→बाल°); दे1 श्रुतः (→स्मृताः).

१२. –a) दे2.10 न1 वसिष्ठस्य, द1 ग्र1 म1 वसिष्ठाच्च (→वसिष्ठश्च); दे2 ततो भार्या, दे4 न1 ततो जा (न1 °र्जा) यां, द1 ग्र1.2 म1 तथैवोर्जा (→तथोर्जायां). –c) ग्र2 कन्याश्च (→कन्यां च); का1 *****, ब1 दे6 पुण्डरीकाक्षं, ब2 दे2 दे5 द1 ग्र1.2 म1 पुण्डरीकाक्षीं, दे4 न1 पुण्डरीकाख्या (न1 °ख्यां), ते1 पुण्डरीकाक्ष (→पुण्डरीकाक्षां).

१३. –a) का1 रजोदश्वोर्द्धबाहुश्च, ब3 राजादश्चोर्द्धबाहुश्च, दे1 रजोहचोर्द्धवाहश्च, दे2 ते1 रजोहस्तोर्ध्वबाहुश्च, दे4 रजोहंसोर्द्धबाहुश्च, दे5 राजाहश्चोर्धबाहुश्च, दे8-10 मुवें. मुए. मुब. रजोमात्रोर्ध्व (दे8.10 °र्द्ध°) बाहुश्च (मुवें. मुए. °ञ्च), द1 ग्र1.2 म1 रजोभ(द1 °ह°)यश्चोर्ध्वबाहुः. –b) का1 सबलश्चानघस्तथा, दे2 सवनः संततस्तथा, + सबलश्चानघस्तथा, दे4 सवनश्चासनस्तदा, दे5 सवभाश्वानघस्तथा, द1 ग्र1.2 म1 च्यवनश्चावनस्तथा, मुवें. सवनश्चानगस्तथा. –c) दे1.4 सुतपः (→सुतपाः); ब1 दे10 द1 शक्र, ते1 चक्र (→शुक्र). –d) दे6 महौजसा (→महौजसः).

१४. –b) ग्र2 ब्रह्मणस्तेनजोद्विजाः. –c) दे4 सुता (→सुतान्); ब2 स्वाहा तस्यात्मजांल्लेभे, दे2 तस्मात्स्वाहा सुताल्लेभे. –c) न1 तान् (→त्रीन्); का1 ब1-3 दे3-6 न1 ते1 त्रीनुदारामितौजसः, दे2 त्रीनग्नीनमितौजसः.

१५. दे6.१५b–१७a ⊙ (द. सं.); दे4.10. cd ⊙. –a) ग्र2 पवनश्चैव (→पवमानश्च); म1 तु (→च). –b) दे1 श्रुतिर् (→शुचिर्); मुवें. मुए. मुब. रूपतः (→ते त्रयः);

यश्चासौ तपते सूर्यः शुचिरग्निस्त्वसौ स्मृतः ।
तेषां तु संततावन्ये चत्वारिंशच्च पञ्च च ।।१६
पावकः पवमानश्च शुचिस्तेषां पिता च यः ।
एते चैकोनपञ्चाशद् वह्नयः परिकीर्तिताः ।।१७
सर्वे तपस्विनः प्रोक्ताः सर्वे यज्ञेषु भागिनः ।
रुद्रात्मकाः स्मृताः सर्वे त्रिपुण्ड्राङ्कितमस्तकाः ।।१८
अयज्वानश्च यज्वानः पितरो ब्रह्मणः स्मृताः ।
अग्निष्वात्ता बर्हिषदो द्विधा तेषां व्यवस्थितिः ।।१९
तेभ्यः स्वधा सुतां जज्ञे मेनां वै तरणीं तथा ।
ते उभे ब्रह्मवादिन्यौ योगिन्यौ मुनिसत्तमाः ।।२०
असूत मेना मैनाकं क्रौञ्चं तस्यानुजं तथा ।
गङ्गा हिमवतो जज्ञे सर्वलोकैकपावनी ।।२१
स्वयोगाग्निबलाद् देवीं लेभे पुत्रीं महेश्वरीम् ।
यथावत् कथितं पूर्वं देव्या माहात्म्यमुत्तमम् ।।२२ वें.१.१३.२३

दे4 शुचिस्तेषां पिता च यः. –c) का1 निर्मन्थात्, ब1 निर्मन्युः, ब3 दे5 निर्मन्थ्य (दे5 °न्थ्यः), दे1.8 निर्मथ्य, न1 निर्मथ्यं, ग्र2 निर्वध्य·, म1 निर्मलः (→निर्मथ्यः); का1 दे8 पवमाना स्यात् दे2 पवमानश्च, न1 ते1 पवमानस्य (→पवमानः स्याद्); दे3 निर्मन्थ्यया च मानश्च, ग्र1 निर्मन्थ्यः पावमानिस्य.

१५ श्लोकात्परं म1 पुस्तके अधिकम्—

7. * और्वश्शुचिस्मृतोग्निस्तु सदाजलनिवासकः ।

१६. दे6. ⊙ (द्र. १५ पा. वि.); दे4.10 द1 ग्र1.2 म1. ab ⊙. –a) दे1.8.9 ते1 मुवें. मुए. मुब. सूर्ये (→सूर्यः). –c) दे1 द1 ग्र1.2 म1 च (→तु); ब3 सन्ततांश्चान्ये, दे1 सन्तरावन्ये, दे10 संततो वन्ये, द1 ग्र1 म1 सन्ततौ जज्ञे, ग्र2 सन्ततेर्जज्ञे (→सन्ततावन्ये). –d) का1 ब1.3 दे5 न1 तु (→च); द1 पंचकं, ग्र2 पंचमः (→पञ्च च).

१७. दे6. a ⊙. –a) द1 ग्र1.2 म1 तु (→च); दे8-10 मुवें. मुए. मुब पवमानः पावकश्च.–b) ग्र2 पितुस् (→शुचिस्); का1 पिशाचयः, दे1 महाबलः. दे2 पितात्रयः, + पितामहः, ते1 पितापरः (→पिता च यः). –c) का1 दे2 एकोन° (→चैकोन°). –d) का1 म1 अग्नयः (→वह्नयः); ब2 द1 ग्र1 °कीर्तितः (→°कीर्तिताः).

१८. –a) ब3 तेजस्विनः (→तपस्विनः). –b) ब3 सर्व– (→सर्वे); दे4 योगिनः, दे8-10 भोगिनः, द1 ग्र1 भाविनः (→भागिनः); दे1 सर्वे भाग्येषु भोगिनः. –c) दे1 3.6.10 रुद्रात्मिकाः (→रुद्रात्मकाः); न1 ह्येते (→सर्वे); ब1 रुद्रात्मकाश्च ते सर्वे. –d) का1 त्रिपुरांतिक°, दे4 त्रिरुद्रांकित° (→त्रिपुंड्राङ्कित°); दे9.10 °मस्तका (?) (→°मस्तकाः).

१९. –a) द1 ग्र1.2 म1 स (→च); ब1 यज्वानाः, दे1 विजानः (→यज्वानः). –b) दे8.9 इतरे (→पितरो); का1 ब्राह्मणाः, ग्र2 ब्राह्मणः (→ब्रह्मणः); ब2 दे2.8-10 ते1 ग्र2 मुवें. मुए. मुब. सुताः, दे1 शुभाः (→स्मृताः). –c) दे3 बर्हिर्दोषो (→बर्हिषदो). –d) दे6 ग्र2 व्यवस्थितः (→व्यवस्थितिः).

२०. ग्र2. २०b–२१c ⊙ (द्र. सं.). –a) ब3 दे3.6 स्वधा सुतं ज (दे6 य°) ज्ञे, दे1.5 स्वधा सुता जज्ञे, दे2.8-10 ते1 द1 म1 स्वधा सुते य(दे2 ते1 द1 म1 ज) ज्ञे, दे4 ग्र1 सुधा सुते य(ग्र1ज)ज्ञे, न1 स्वधा सुधां जज्ञे, ग्र2 सुता स्वधाजज्ञे (→स्वधा सुतां जज्ञे). –b) दे4.5 10 द1 ग्र1 म1 मेना, दे6 तेनां (→मेनां); दे2 वैतरिणी, दे8-10 न1 ते1 मुवें. मुए.मुब. वै धारिणीं (दे10 °णी) (→वैतरणीं). –c) का1 उभे ते, दे4 उभे च (→ते उभे). –d) ब2 स्मृते च (→योगिन्यौ); ब1 °सत्तमः, दे6 °सत्तमा (→°सत्तमाः).

२१. ग्र2. abc ⊙. (द्र. २० पा. वि.). –a) दे5 प्रसूत, दे6 प्रभूत (→असूत); दे4 मेना (→मेनां); ब3 दे10 मेनाकं, दे1 मैनार्क- (→मैनाकं). –b) ब2.3 ते1 क्रौञ्चस् (→क्रौञ्चं); का1 ब3 दे5.6 °स्मजं, ब2 दे3 ते1 °त्मजस्, दे1.4 °नुजस् (→°नुजं); द1 क्रौंचा ईरत्तजं तथा. –c) दे6 यदा (→गङ्गा); दे6 यज्ञे (→जज्ञे). –d) का1 °लोकस्य (→°लोकैक-).

२२. –a) दे8-10 स्वयोगात्म°, न1 स्वदेवाग्नि°, ग्र2 स्वयोग्याग्नि° (→स्वयोगाग्नि°); का1 दे6 °बलादेवीं (दे6 वी), ब1 °बलान्देवी, ब3 °बलान्द्देवीं, दे2 °बलाच्चैव, दे3.8-10 म1 °बलाद्देवी (→°बलाद्देवीं); ब2 स्वयोगातिशयाद्देवीं, दे1 योगाग्निधवला चैव. –b) ब1 लेभे पुत्रीन्, दे6 लेभे पुत्रान्, दे8-10 पतिं लेभे, मुवें. मुए. मुब. पुत्रीं लेभे (→लेभे पुत्रीं); दे8-10 महेश्वरं (→महेश्वरीम्). –c) द1 ग्र1.2 म1 सर्वं (→पूर्वं).

दे8-10 मुवें. मुए. पुस्तकेषु २२ श्लोकानन्तरं अधिकम्–

वं.१.१३.२४ एषा दक्षस्य कन्यानां मयाऽपत्यानुसंततिः । व्याख्याता भवतामद्य मनोः सृष्टिं निबोधत ॥२३

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायां पूर्वविभागे द्वादशोऽध्यायः ॥१२॥

# १३

सूत उवाच ।❀

प्रियव्रतोत्तानपादौ मनोः स्वायंभुवस्य तु ।
धर्मज्ञौ सुमहावीर्यौ शतरूपा व्यजीजनत् ॥१
ततस्तूत्तानपादस्य ध्रुवो नाम सुतोऽभवत् ।
भक्तो नारायणे देवे प्राप्तवान् स्थानमुत्तमम् ॥२
ध्रुवात् श्लिष्टिं च भव्यं च भार्या शम्भुर्व्यजायत ।
श्लिष्टेराधत्त सुच्छाया पञ्च पुत्रानकल्मषान् ॥३
वसिष्ठवचनाद् देवी तपस्तप्त्वा सुदुश्चरम् ।
आराध्य पुरुषं विष्णुं शालग्रामे जनार्दनम् ॥४

---

8. * धारिणी मेरुराजस्य पत्नी पद्मसमानना ।
देवौ धाताविधातारौ मेरोर्जामातरावुभौ । ( = १cd)

२३. –a) ब$_1$ एषां, दे$_5$ वृषा (→एषा); ग्र$_2$ कन्यायाः (→कन्यानां). –b) का दे$_5$ मयाप्रोक्तानु°, ब$_1$ मया मत्यानु°, ब$_2$ मया प्रत्यादि° दे$_4$ मया प्रीत्यास्क°; न$_1$ पर्य्यायस्यानु° (→मयाऽपत्यानु°); दे$_{10}$ °दांततिः, ते$_1$ °सन्तते, ग्र$_2$ °सन्तताः (→°सन्ततिः); दे$_2$ अपत्यानां तु सन्ततिः. –c) दे$_{8-10}$ मुवें. मुए. मुब. सद्यो, द$_1$ ग्र$_{1.2}$ अर्थं (द$_1$ °र्थे) (→अद्य). –d) ग्र$_2$ मयो, म$_1$ अन्यां (→मनोः); दे$_2$ षष्ठि, दे$_3$ सत्यं, दे$_6$ सत्वं (→सृष्टिं); ब$_1$ निबोधतः, दे$_1$ निबोध मे, म$_1$ अबोधत (→निबोधत).

**पुष्पिका** —ब$_{1.3}$ दे$_{3.4.6}$ न$_1$ ते$_1$ पुस्तकेषु अध्यायसमाप्ति र्नास्ति.

**पुराणनाम** —का$_1$ दे$_{1.2.5.8-10}$ द$_1$ ग्र$_{1.2}$ म$_1$ मुवें. मुए. इति श्रीकूर्मपुराणे, ब$_2$ इति कूर्मपुराणे, मुब. इति श्रीकौर्म्मे महापुराणे पूर्वभागे. **अध्यायनाम**—का$_1$ ब$_2$ दे$_{1.2.5.8-10}$ द$_1$ ग्र$_{1.2}$ म$_1$ मुवें. मुए. ⊙; मुब. भृग्वादिसर्गकथनं नाम. **अध्यायसंख्या**–का$_1$ दे$_5$ द्वादशोऽध्यायः, ब$_2$ ॥१२॥, दे$_{1.2.8.9}$ द$_1$ ग्र$_{1.2}$ म$_1$ त्रयोदशोऽध्यायः, दे$_{10}$ मुवें. मुए. मुब. त्रयोदशोऽध्यायः ॥१३॥

**१३**

❀ ब$_{1.3}$ दे$_{3.4.6}$ न$_1$ ते$_1$. ⊙; का$_1$ दे$_5$ कूर्म उवाच; द$_1$ म$_1$ श्रीकूर्मः; ग्र$_{1.2}$ श्रीकूर्मः, + सूतः.

१. –c) ब$_3$ दे$_4$ धर्मज्ञैः (→धर्मज्ञौ); ब$_1$ दे$_{1.2.8-10}$ द$_1$ ग्र$_{1.2}$ मुवें. मुए. मुब. तौ, म$_1$ तु (→सु–); ब$_3$ °वीर्यैः (→°वीर्यौ). –d) दे$_6$ –द्यजीजनत्, दे$_{8-10}$ –त्वजीजनत्, द$_1$ ग्र$_{1.2}$ –भ्यजीजनत् (→व्यजीजनत्).

२. ब$_1$. ab ⊙. –a) का$_1$ ब$_{2.3}$ दे$_{1-5}$ न$_1$ ते$_1$ द$_1$ ग्र$_1$ म$_1$ तयोरुत्तानपादस्य (ग्र$_1$ स्यात्). –ab) दे$_6$ नापादस्य ध्रुवोनाम ततो रुत्तामुतोऽभवत्(?). –c) दे$_{8-10}$ द$_1$ ग्र$_1$ म$_1$ मुवें. मुए. मुब. भक्त्या (→भक्तो); का$_1$ ब$_{1-3}$ दे$_{1-3.5.6}$ न$_1$ ग्र$_2$ नारायणं (→नारायणे); का$_1$ ब$_{1-3}$ दे$_{1-3.5.6}$ न$_1$ देवं, दे$_{10}$ देवो, दे$_4$ विप्राः (→देवे). –d) दे$_5$ उत्तमाम् (→उत्तमम्).

३. –a) का$_1$ ब$_2$ दे$_{2.4}$ ग्र$_1$ शिष्टिं, ब$_1$ दे$_1$ ग्र$_2$ म$_1$ शिष्टं, ब$_3$ शिष्टः, दे$_3$ कृष्टिः, दे$_{5.8-10}$ सृष्टिं, न$_1$ मुवें. मुए. मुब. शिष्टिः, ते$_1$ विष्टिं (→श्लिष्टिं); ब$_3$ दे$_{1.3}$ मुब. भव्यः, दे$_{4.8-10}$ न$_1$ धान्यं, द$_1$ ग्र$_{1.2}$ सानुं, म$_1$ मान्यं, मुवें. मुए. भाव्यः (→भव्यं) दे$_6$ जलाकृष्टिं च भव्यं च. –b) ब$_1$ मुब. भव्यात्, ब$_2$ दे$_{1.3.6}$ ते$_1$ मुवें. मुए. भाव्यात् (ते$_1$ °व्ये) (→भार्याः); न$_1$ द$_1$ शंभुं (द$_1$ °भो) (→शम्भुः); ते$_1$ व्यजायतः (→व्यजायत). –c) दे$_1$ न$_1$ ते$_1$ ग्र$_1$ मुवें. मुए. मुब. शिष्टेः, दे$_{5.8-10}$ सृष्टेः, न$_1$ शिष्टो, ग्र$_2$ क्लिष्टे (→श्लिष्टेः); का$_1$ आवरसु छाया, ब$_3$ आधत्त स्वच्छाया, दे$_5$ आधन सुछाया, दे$_6$ वाधनुस्वछाया, दे$_{10}$ आधत्छतमुच्छाया, ते$_1$ आदत्तनुश्चाया द$_1$ ग्र$_{1.2}$ आद(ग्र$_2$ °ध)त्त सुनया (→आधत्त सुच्छाया); दे$_3$ श्लिष्टेवा धनुश्चा छाया, म$_1$ शिष्टादधत्त सुमतिः. –d) दे$_1$ पुत्रान्नकल्मषान् (→पुत्रानकल्मषान्).

४. –a) दे$_{3.6}$ °तनया (→°वचनात्). –b) ग्र$_2$ तप्तं (→तप्त्वा); दे$_{1.2}$ सुदुष्करं, दे$_5$ सुदुस्तरं (→सुदुश्चरम्). –c) दे$_2$ तपसा, दे$_6$ पुरुषो (→पुरुषं).

रिपुं रिपुंजयं विप्रं वृकलं वृषतेजसम् ।
नारायणपरान् शुद्धान् स्वधर्मपरिपालकान् ।।५
रिपोराधत्त बृहती चक्षुषं सर्वतेजसम् ।
सोऽजीजनत् पुष्करिण्यां वैरण्यां चाक्षुषं मनुम् ।
प्रजापतेरात्मजायां वीरणस्य महात्मनः ।।६
मनोरजायन्त दश नड्वलायां महौजसः ।
कन्यायां सुमहावीर्या वैराजस्य प्रजापतेः ।।७
ऊरुः पूरुः शतद्युम्नस्तपस्वी सत्यवाक् शुचिः ।
अग्निष्टुदतिरात्रश्च सुद्युम्नश्चाभिमन्युकः ।।८
ऊरोरजनयत् पुत्रान् षडाग्नेयी महाबलान् ।
अङ्गं सुमनसं स्वातिं क्रतुमङ्गिरसं शिवम् ।।९
अङ्गाद् वेनोऽभवत् पश्चाद् वैन्यो वेनादजायत ।
योऽसौ पृथुरिति ख्यातः प्रजापालो महाबलः ।।१०
येन दुग्धा मही पूर्वं प्रजानां हितकारणात् ।
नियोगाद् ब्रह्मणः सार्द्धं देवेन्द्रेण महौजसा ।।११
वेनपुत्रस्य वितते पुरा पैतामहे मखे ।
सूतः पौराणिको जज्ञे मायारूपः स्वयं हरिः ।।१२　　वें.१.१४.१३

५. –a) दे4 रिपुंजयं जयं विप्रं. –b) का1 प्रकलं (?), दे10 वृषलं, ते1 विकलं (?), मुवें. मुए. कपिलं (→वृकलं); का1 पृक°, ब3 दे1.3-6 न1 ते1 द1 ग्र1.2 म1 मुब. वृक° (→वृष°).

६ –a) ते1 द1 ग्र1 आदत्त (→आधत्त); दे8-10 मुवें. मुए. मुब. महिषी (→बृहती). –b) का1 ब1-3 दे1-6.8-10 न1 ते1 म1 मुवें. मुए. चाक्षुषं (→चक्षुषं); म1 °दैवतं (→°तेजसम्). –c) का1 ब1.3 दे3-6 न1 ते1 अजीजनत्, दे1 सोऽजीज* (→सोऽजीजनत्); ब1 दे3.5 पुष्करिण्या (दे3 °ण्यं, दे5 °ण्यो); दे10 पुष्करण्यां (→पुष्करिण्यां). –d) का1 ब1.2 दे3.4.6 ते1 वैरिण्यां, दे1 वैराग्यं, दे8-10 मुवें. मुए. मुब. सुरूपं, न1 द1 ग्र1.2 म1 वारुण्यां (→वैरण्यां); ब3 चक्षुषं, ते1 चाक्षुषो (→चाक्षुषं); ब3 मनुः, दे4 मुनिं (→मनुं). –e) ब3 अर्थजायात्, दे1 म1 आत्मजाया (→आत्मजायां). –f) ब1.2 दे3.5.6.8-10 न1 अरण्यस्य, ब3 वैरण्यस्य, द1 ग्र1.2 अनलस्य (→वीरणस्य); का1 अरण्यायामहात्मं *, म1 नड्वलस्याख्यमात्मनः.

७. न1. ७a-९b ⊙. –a) का1 म1 अजायत (→अजायन्त); ग्र2 मनो * जयन्त दश. –b) का1 तदलायां, दे8-10 मुवें. मुए. सुतास्ते सु– (दे8.9 तु), ग्र1 –शास्वलायां (→नड्वलायां); ग्र2 महतौ °जसः (→महौजसः) –c) ब3 कन्यायं (→कन्यायां); ब2 दे1.6 ते1 द1 ग्र1 मुवें मुए. मुब. सु (ते1 स, द1 ग्र1 तु) महावीर्यो, दे2 ग्र2 म1 तु महावीर्या (ग्र2 °र्यौ), दे8-10 सुमहद्वीर्या (दे10 °र्यो) (→सुमहावीर्या). –d) दे10 द्वैरजेस्य (→वैराजस्य); ब3 दे3.6 प्रजापते (→प्रजापतेः).

८. न1. ⊙ –a) दे1 उक्तः, दे4 क्रतुः, द1 ऊरं (?) ग्र1 जयः (→ऊरुः); दे1.5 पुरुः, द1 पूरुं, ग्र2 पुरु (?) (→पूरुः); म1 ऊरुः पुरुषद्द्युम्नः. –b) का1 ब2.3 दे3-5 ते1 सत्यवान् (→सत्यवाक्); ब1 कविः (→शुचिः). –c) का1 अग्निपुर-, ब1-3 दे2.3.6 अग्निष्टुव-, दे1 अनिष्टद-, दे10 अग्नीषुद- (→अग्निष्टुद-); ब1 –रात्रं (→–रात्रः); दे4 अग्निः सुसरिरुद्रश्च, ते1 अग्निः सुरभिरंग्रञ्च, द1 ग्र1 म1 मुनिस्सूरनि (म1 °ग्नि) रुग्र (म1 °द्र)श्च, ग्र2 मुनिस्सन्दरग्निमश्च. –d) दे2.10 °ति मन्यु (दे10 °न्य)कः, द1 ग्र1 म1 °पि(म1°हि)मन्युकः (द1 °तः), दे3.6 °भिमन्युजः, दे4 °निरुद्धकः (→°भिमन्युकः).

९. न1. ab ⊙. –a) दे2.4 पुरोः, दे5 नरोः, ग्र2 ऊरुः (→ऊरोः); ग्र1 जरोरज * यत् पुत्रान्. –b) दे10 षडग्नयि, ग्र2 षडग्नेयी (→षडाग्नेयी); दे2 महाप्रभान् (→महाबलान्); ग्र1 षडाग्नेयमहाबलात्. –c) दे3.6 अङ्गं (→अङ्गं); का1 ब1-3 दे2.6 मुवें. मुए. मुब. ख्यातिं, द1 ग्र1.2 म1 सारं (→स्वातिं). –d) दे8-10 मुवें. मुए. मुब. क्रतुमाङ्गिरसं (दे10 °सः), द1 ग्र1.2 म1 उत्क्रनं (ग्र2 °मां) गिरसं (→क्रतुमंगिरसं); दे5.10 शिवः (→शिवम्). –cd) न1 मनोरंगोऽभवत् पुत्रः प्रसन्नः सततं शिवः.

१०. –a) का1 ब1-3 दे1-3.5.6 मुए. मुब. वेणो (→वेनो). –b) का1 ब1-3 दे2.3.5.6 मुए.मुब. वैण्यो (→वैन्यो); का1 ब1-3 दे1-3.6.9 मुए. मुब. वेणाद्, दे5 वैव्याद्, द1 वेनोद् (?) (→वेनाद्); ग्र2 वैन्यः सेनन्दजायत. –c) ते1 योनौ, + वैन्ये (→योऽसौ); दे2.6 ख्याता (दे6 °तिः) (→ख्यातः).

११. –a) दे2 तेन (→येन); ग्र2 पूर्वां (→पूर्वं). –b) दे2. 8-10 मुवें. मुए. मुब. °काम्यया (→°कारणात्). –d) दे3.4.6 ग्र1 महौजसः (दे4 °साः) (→महौजसा).

१२. –a) का1 ब1.3 दे1-3.5.6 वेण-, ब2 पुरा, द1 ग्र1.2 म1 तत्र (→वेन-); द1 ग्र1.2 म1 वैन्य(ग्र2 °द) स्य (→°पुत्रस्य); दे10 विनेत, ग्र2 वितते:, म1 यजतेः (→वितते). –b) दे5 पुण्ये (→पुरा); दे5 * तामरवौ, ते1 पैतामहो, द1

ततः स रुद्रो भगवान् सभार्यः सगणेश्वरः ।
स्पृशन् कराभ्यां ब्रह्मर्षिं दधीचं प्राह देवताः ॥५६
मन्त्राः प्रमाणं न कृता युष्माभिर्बलगर्वितैः ।
यस्मात् प्रसह्य तस्माद् वो नाशयाम्यद्य गर्वितम् ॥५७
इत्युक्त्वा यज्ञशालां तां ददाह गणपुंगवः ।
गणेश्वराश्च संक्रुद्धा यूपानुत्पाट्य चिक्षिपुः ॥५८
प्रस्तोत्रा सह होत्रा च अश्वं चैव गणेश्वराः ।
गृहीत्वा भीषणाः सर्वे गङ्गास्रोतसि चिक्षिपुः ॥५९
वीरभद्रोऽपि दीप्तात्मा शक्रस्योद्यच्छतःकरम् ।
व्यष्टम्भयददीनात्मा तथाऽन्येषां दिवौकसाम् ॥६०
भगस्य नेत्रे चोत्पाट्य करजाग्रेण लीलया ।
निहत्य मुष्टिना दन्तान् पूष्णश्चैवमपातयत् ॥६१
तथा चन्द्रमसं देवं पादाङ्गुष्ठेन लीलया ।
धर्षयामास बलवान् स्मयमानो गणेश्वरः ॥६२
बह्नेर्हस्तद्वयं छित्त्वा जिह्वामुत्पाट्य लीलया ।
जघान मूर्ध्नि पादेन मुनीनपि मुनीश्वराः ॥६३ वे१.१५.६५

मन्त्रा. –d) का$_1$ ब$_1$ दे$_{3.5.6}$ ते$_1$ ग्र$_2$ देवानुक्त्वा (दे$_3$ °क्ता), ब$_2$ देवांस्त्यक्त्वा, ब$_3$ देवान्त्यक्त्वा, दे$_4$ देवान्भुक्ता, दे$_{10}$ देवान्मुक्ता, द$_1$ देवान्मुक्तास् (→देवान्मुक्त्वा); ब$_3$ सुरालयं, दे$_3$ स्वमानयं (→स्वमालयम्).

५६. –a) का$_1$ समुद्रो, ब$_1$ सुभद्रो, ब$_{2.3}$ दे$_{1.3.5.6}$ न$_1$ ते$_1$ मुवें. मुए. मुब. स भद्रो (→स रुद्रो); दे$_4$ द$_1$ ग्र$_{1.2}$ म$_1$ ततः स भगवा रुद्रः. –b) द$_1$ सहायः (→सभार्यः); ते$_1$ स्मयमानो गणेश्वरः. –c) दे$_{3.5}$ न$_1$ द$_1$ स्पृशत्, दे$_4$ इत्थं (→स्पृशन्); दे$_{4.6}$ ब्रह्मर्षि-, दे$_{8.10}$ मुवें. मुए. मुब. विप्रर्षि-, न$_1$ द$_1$ ब्रह्मर्षिर् (→ब्रह्मर्षिं). –d) दे$_2$ ग्र$_2$ दधीचि (→दधीचं) का$_1$ सह (→प्राह); ब$_1$ देवता, ब$_2$ देवतः, दे$_6$ देवतान्, दे$_{8-10}$ मुवें. मुए. देवहा (→देवताः).

५७. –a) दे$_5$ मन्त्रां (→मन्त्राः); दे$_{4.10}$ ते$_1$ कृताः (→कृता); न$_1$ प्रमाणं न कृता मन्त्रा. –b) दे$_{8.9}$ मुवें. मुए. मुब. °दर्पितैः (→°गर्वितैः). –c) न$_1$ प्रसह्य, ते$_1$ प्रशंस्य (→प्रसह्य); का$_1$ दे$_5$ तस्मात्वां, दे$_{1.8-10}$ मुवें. मुए. मुब. तस्माद्वो, न$_1$ तस्माद्वौ, द$_1$ तस्माद्वा, ग्र$_2$ तत्तस्मात्, म$_1$ तस्मान्नो (→तस्माद्वो). –d) का$_1$ दे$_5$ गर्हितं, ब$_3$ गर्हितान्, दे$_8$ गर्वितां, दे$_9$ गर्विनां, ते$_1$ गर्वितान्, + गर्वितम्, ग्र$_2$*र्वितं, मुवें. मुए. मुब. गर्वितान् (→गर्वितम्); म$_1$ नाशयन्त्यवगर्वितम्.

५८. –a) दे$_{1.3.4}$ द$_1$ ग्र$_1$ इत्युक्ता (→इत्युक्त्वा). –b) का$_1$ °शक्तं त्वां, ते$_1$ °शालां ता, दे$_3$ °शालाज्ञां, दे$_4$ °शीलां ता, दे$_6$ °शालान्नं (→°शालां तां); ग्र$_2$ इत्युक्त्वाथ यज्ञशालां. –c) दे$_6$ गणेश्वरश् (→गणेश्वराश्); दे$_2$ तु (→च). –d) ब$_2$ यूपानुत्क्षिप्य, दे$_5$ यूपारुत्पाट्य, दे$_6$ यूपान्युत्पाट्य (→यूपानुत्पाट्य).

५९. दे$_{4.8-10}$. ⊙. –a) ग्र$_1$ होतृश्च (→होत्रा च); दे$_1$ प्रस्तोता स*होतारं, दे$_2$ प्रस्तोता चैव होता च, ग्र$_2$ प्रास्तोता स सहोत्रा च. –b) का$_1$ सहोत्रैव, दे$_1$ अश्वं चै*, दे$_2$ अश्वं चैव, दे$_3$ आश्वञ्चैव, दे$_5$ अध्वर्युं च, द$_1$ म$_1$ ह्यश्वं चैव, ग्र$_1$ सभ्यांश्चैव, ग्र$_2$ ईश्वरञ्च (→अश्वञ्चैव); दे$_{1.5}$ ग्र$_2$ गणेश्वरः (→गणेश्वराः).

६०. –a) दे$_{1.4}$ दीप्ता*, ते$_1$ विश्वात्मा (→दीप्तात्मा). –b) का$_1$ शक्रस्यो स्वच्छवः(च्छ्वसतः) करं, ब$_2$ शक्रस्योद्यमृतः करं, दे$_1$ शक्रस्योद्यतकरं तदा, दे$_3$ शक्रस्योयच्छतः करं, दे$_4$ शक्रस्याद्याछित्वकरं, दे$_5$ शक्रस्योछ्वसतः करं, दे$_6$ शक्रस्योद्यछतष्करं, दे$_{8-10}$ मुवें. मुए. मुब. शक्रस्यैवोद्यतं करम्, ग्र$_{1.2}$ शक्रस्योद्यच्छतं (ग्र$_2$ तत्) करं (ग्र$_2$ °रः). –c) का$_1$ ब$_3$ व्यस्तंभयददीनात्मा, दे$_1$ विष्टंभयददीनात्मा, दे$_2$ व्यष्टम्भयं च दीनात्मा, द$_1$ व्यष्टम्भयै*दीनात्मा, ग्र$_2$ व्यष्टाभय तदीनात्मा. –d) ग्र$_1$ तथान्येष्टा, ग्र$_2$ तदा तेषां (→तथान्येषां).

६० श्लोकानन्तरं दे$_4$ अधिकम्—

* प्रस्योत्रो सहहेत्रा च ह्यध्वर्युं च गणेश्वरः ।
गृहीत्वा भीषणः सर्वान् गंगास्रोतसि चिक्षिपुः ।
दंष्ट्राकरालवदनो नखाग्रेण च लीलया ॥ (= ५९,६१b)

६१. दे$_4$. ६१a–६३b ⊙; दे$_6$ द$_1$ ग्र$_{1.2}$ म$_1$. ६१c-६३b ⊙ (द्र. सं.); दे$_5$. cd ⊙. –a) दे$_6$ भगस्य नेत्रोनोत्पाट्व, दे$_{8-10}$ मुवें. मुए. मुब. भगनेत्रे तथोत्पाट्य, न$_1$ प्रहस्य नेत्रे चोत्पाट्व. –b) दे$_1$ कराग्रे हा तु, दे$_{2.5}$ कराग्रेण तु, ते$_1$ कराग्रेण*, दे$_{8-10}$ मुवें. मुए. मुब. कराग्रेणैव (→करजाग्रेण). –d) का$_1$ ब$_1$ दे$_1$ न$_1$ ते$_1$ पूष्णश्चैव न्य°, ब$_3$ पूष्णश्चैतान्य°, दे$_3$ पूष्णश्चैवान्य° (→पूष्णश्चैवम°).

६२. दे$_5$. ab ⊙; दे$_{4.6}$ द$_1$ ग्र$_{1.2}$ म$_1$ ⊙ (द्र. ६१ पा. वि.). –a) ते$_1$ यदा (→तथा); ब$_1$ ते$_1$ देव- (→देवं). –d) का$_1$ दे$_2$ स्मयमाणो, दे$_1$ स्व च भानोर् (→स्मयमानो); दे$_3$ गणेश्वरं, न$_1$ महेश्वरः (→गणेश्वरः).

६३. दे$_{4.6}$ द$_1$ ग्र$_{1.2}$ म$_1$. ab ⊙ (द्र. ६१ पा. वि.). –a) का$_1$ धृत्वा (→छित्त्वा). –d) ग्र$_2$ मुनीनामपि (→मुनीनपि); का$_1$ ब$_1$ दे$_2$ ग्र$_2$ मुनीश्वरः, ते$_1$ मुनीश्वराः(रः)

वें.१.१५.६५ तथा विष्णुं सगरुडं समायान्तं महाबलः ।
विव्याध निशितैर्बाणैः स्तम्भयित्वा सुदर्शनम् ॥६४
समालोक्य महाबाहुरागत्य गरुडो गणम् ।
जघान पक्षैः सहसा ननादाम्बुनिधिर्यथा ॥६५
ततः सहस्रशो भद्रः ससर्ज गरुडान् स्वयम् ।
वैनतेयादभ्यधिकान् गरुडं ते प्रदुद्रुवुः ॥६६
तान् दृष्ट्वा गरुडो धीमान् पलायत महाजवः ।
विसृज्य माधवं वेगात् तदद्भुतमिवाभवत् ॥६७
अन्तर्हिते वैनतेये भगवान् पद्मसंभवः ।
आगत्य वारयामास वीरभद्रं च केशवम् ॥६८
प्रसादयामास च तं गौरवात् परमेष्ठिनः ।
संस्तूय भगवानीशः साम्बस्तत्रागमत् स्वयम् ॥६९
वीक्ष्य देवाधिदेवं तं साम्बं सर्वगणैर्वृतम् ।
तुष्टाव भगवान् ब्रह्मा दक्षः सर्वे दिवौकसः ॥७०
विशेषात् पार्वतीं देवीमीश्वरार्द्धशरीरिणीम् ।
स्तोत्रैर्नानाविधैर्दक्षः प्रणम्य च कृताञ्जलिः ॥७१
ततो भगवती देवी प्रहसन्ती महेश्वरम् ।
प्रसन्नमानसा रुद्रं वचः प्राह घृणानिधिः ॥७२

---

(→मुनीश्वराः). –cd) दे1 पादेन तु तथा मुष्टि मुनीन्नपि मुनीश्वरान्.

६४. –a) ब3 सगारुडं, ते1 च गरुडं, ग्र2 समारूढं (→सगरुडं). –b) दे2.8 महाबलं (दे8 °ला) (→महाबलः). –d) दे4 सदर्शनं (→सुदर्शनम्).

६५. –b) ब1 अगत्या, न1 चागत्य (→आगत्य); दे1 गरुडगणं, दे2 गरुडागलं, ग्र1 गरुडोगजाम् (°णम्) (→गरुडो गणम्). –c) दे1 सहसा भद्रं (→पक्षैः सहसा). –d) दे1 निनादांबु°, दे2 ननादान्मु°, दे10 ननादांशु° (→ननादाम्बु°); दे4 ननाद गरुड स्वयं.

६६. दे4.ab ⊙. –a) दे2 सहस्रसा (→सहस्रशो); दे2 भ(रु)द्रः, दे8-10 मुवें. मुए. मुब. रुद्रः (→भद्रः). –b) न1 ससर्ग (→ससर्ज). –c) का1 दे1.4 वैनतेया (दे1 °य?) दप्यधिकान् (दे4 °तान्), दे2.5 वैनतेयादत्य(दे5 °द्य)धिकान्, दे3.6 द1 वैनतेयानभ्यधिकान्, ग्र2 वैनतेयादभ्यतिकारान्. –d) दे9.10 गरुडं तं(→गरुडं ते); दे4 प्रदुद्रुतुः, दे5 प्रदद्रुवुः (→प्रदुद्रुवुः).

६७. –a) दे5.10 न1 तां दृष्ट्वा, ग्र1 तन्दृष्ट्वा (→तान्दृष्ट्वा). –b) दे8.9 अपायत, दे10 पलायन, ग्र1 पलायन्ते, ग्र2 प्रपालयत (→पलायत); दे4 महाजलः, ग्र1 ते1 महाबलः (→महाजवः). –c) द1 योगी, ग्र1 म1 वेगी, ग्र2 वेत्ति (→वेगात्).

६७ श्लोकानन्तरं का1 दे1.5 अधिकम्—

11.* विसृष्टं वीरभद्रः स केशवं हीनविक्रमं ।
शूलमुद्यम्य वेगेन यावद्धन्तुं मनो दधे ।
महादेवविसृष्टं तं दधार पद्मसंभवः ।

[ –1) दे1 विहर्तुं (→विसृष्टं); दे5 °विद्रुमं (→°विक्रमं). –3) दे5 ब्रह्मणा (→महादेव-); दे1 तच्च धाव (?) (→तं दधार). ]

६८. –c) दे1 ग्र2 वर° (→वार°). –d) ते1 केशवः (→केशवम्); म1 प्रणिपत्य गणेश्वर.

६९. –b) न1 गौरवान् (→गौरवात्). –c) दे1 संस्तुत्य, दे2 संश्रुत्य, दे4 संश्रूय (→संस्तूय); दे8-10 मुवें. मुए. मुब. ईशं (→ईशः). –d) ब1 दे4 शांबस्, ब2 स्थाणुस्, दे8-10 मुवें. मुए. मुब. शम्भुस् (→साम्बस्); दे2 तत्रामगत्स्वयं, ग्र1 तत्रागत स्वयं, ग्र2 तत्रागमं स्वयं (→तत्रागमत् स्वयम्). –cd) न1 संस्तूय च महायोगं प्रणिपत्य कृताञ्जलिः.

६९ श्लोकानन्तरं न1 अधिकम्—

12.* अथास्मिन्नंतरे देवो देवदेवो महेश्वरः ।
प्रसंनो भगवानीशः सोमस्तत्रागमत् स्वयं ।

७०. –a) का1 ब1 दे3-6 द1 ग्र1.2 म1 देवादि° (→देवाधि°). –b) ब1 दे4 शांबं, ब2 स हि, दे8-10 मुवें. मुए. मुब. उमां, ते1 सोऽथ (→साम्बं); का1 ब1 दे6 सर्वगुणैर्वृतं, ब2 सर्वैर्गणैर्युतं, दे8-10 मुवें. मुए. मुब. सर्वगणैर्वृताम् (दे10 °तः), ते1 सर्वगणेश्वरम्, द1 ग्र1.2 पूर्वगणैर्वृतम्, म1 भूतगणैस्मृतं (→सर्वगणैर्वृतम्). –c) दे10 तुष्टुवं (→तुष्टाव); दे1 बलवान् (→भगवान्); द1 ब्रह्म (→ब्रह्मा); दे4 अथ तुष्टाव भगवान्. –d) दे1.5 द1 ग्र1 म1 दक्षः सर्व-, दे4 ब्रह्मा सर्व-(→दक्षः सर्वे).

७१. –a) द1 म1 पार्वती (→पार्वतीं). –b) दे5 °शरीरणीं, दे6 °शरीरिणां (→°शरीरिणीम्). –c) न1 दक्ष (→दक्षः).

७२. –b) ते1 महेश्वरी (→महेश्वरम्); दे1 प्रसन्ना तु महेश्वरी. –c) ब2 दे1.2.4.6.8-10 न1 ग्र2 मुवें. मुए. मुब. °मनसा, ते1 द1 ग्र1 म1 °मानसं (→°मानसा). –d) दे10 रवः प्राण- (→वचः प्राह); दे4 घृतां निधिः, दे6 मृणानिधिः, न1 घृणानिधि, द1 ग्र2 म1 कृपानिधिः, ग्र1 कृताञ्जलिः+कृपानिधिः (→घृणानिधिः).

त्वमेव जगतः स्रष्टा शासिता चैव रक्षकः ।
अनुग्राह्यो भगवता दक्षश्चापि दिवौकसः ॥७३

ततः प्रहस्य भगवान् कपर्दी नीललोहितः ।
उवाच प्रणतान् देवान् प्राचेतसमथो हरः ॥७४

गच्छध्वं देवताः सर्वाः प्रसन्नो भवतामहम् ।
संपूज्यः सर्वयज्ञेषु न निन्द्योऽहं विशेषतः ॥७५

त्वं चापि शृणु मे दक्ष वचनं सर्वरक्षणम् ।
त्यक्त्वा लोकैषणामेतां मद्भक्तो भव यत्नतः ॥७६

भविष्यसि गणेशानः कल्पान्तेऽनुग्रहान्मम ।
तावत् तिष्ठ ममादेशात् स्वाधिकारेषु निर्वृतः ॥७७

एवमुक्त्वा स भगवान् सपत्नीकः सहानुगः ।
अदर्शनमनुप्राप्तो दक्षस्यामिततेजसः ॥७८

अन्तर्हिते महादेवे शंकरे पद्मसंभवः ।
व्याजहार स्वयं दक्षमशेषजगतो हितम् ॥७९

ब्रह्मोवाच ।❀

किं तवापगतो मोहः प्रसन्ने वृषभध्वजे ।
यदाचष्ट स्वयं देवः पालयैतदतन्द्रितः ॥८०

सर्वेषामेव भूतानां हृद्येष वसतीश्वरः ।
पश्यन्त्येनं ब्रह्मभूता विद्वांसो वेदवादिनः ॥८१

स आत्मा सर्वभूतानां स बीजं परमा गतिः ।
स्तूयते वैदिकैर्मन्त्रैर्देवदेवो महेश्वरः ॥८२　वें.१.१५.८४

---

७३. –a) ब$_{3}$ जगता श्रे(सृ)ष्टा, दे$_{1.5}$ जगतां स्रष्टा, दे$_{2}$ जगता श्रेष्ठ, दे$_{6.10}$ म$_{1}$ जगतः सृष्टा (→जगतः स्रष्टा). –b) दे$_{3.5}$ शास्त्रासि, न$_{1}$ चासिता, ते$_{1}$ मानिता (→शासिता); दे$_{8-10}$ मुवें. मुए. मुब. रक्षिता (→रक्षकः); ग्र$_{1}$ शास्ता चैवाहि रक्षकः. –c) ते$_{1}$ सोऽनुग्राह्यो, ग्र$_{1}$ अनुग्राह्या(ह्यो) (→अनुग्राह्यो). –d) ग्र$_{2}$ दक्षेणापि (→दक्षश्चापि).

७४. –a) न$_{1}$ प्रहास्य (→प्रहस्य). –c) न$_{1}$ प्रणतीं (→प्रणतान्). –d) दे$_{1.2}$ प्रचेतसं (→प्राचेतसं); दे$_{2}$ इतो (→अथो).

७५. –a) ब$_{3}$ ग्र$_{1}$ म$_{1}$ गच्छध्वन् (→गच्छध्वं); दे$_{4}$ सर्वो (→सर्वाः). –b) दे$_{2}$ भगवानहं (→भवतामहम्). –c) का$_{1}$ ब$_{3}$ दे$_{3.5.6}$ ते$_{1}$ द$_{1}$ संपूज्य (→संपूज्यः); दे$_{1}$ पूज्यः सर्वस्य यज्ञेषु. –d) का$_{1}$ ना निंद्योहं, दे$_{2}$ न भिद्योहं (→न निन्द्योऽहं); दे$_{4}$ विशेषितः, ते$_{1}$ विशे(ष)षितः (→विशेषतः).

७६. –b) दे$_{5.6}$ °रक्षणां, म$_{1}$ °दक्षणं (→°रक्षणम). –c) दे$_{1.3}$ त्यक्ता (→त्यक्त्वा); द$_{1}$ म$_{1}$ लोकेषणां, ग्र$_{1}$ लोकेक्षणां, ग्र$_{2}$ लोकेर्षिणां (→लोकैषणां); दे$_{8.9}$ एनां, ग्र$_{2}$ एतं (→एतां).

७७. –a) दे$_{1}$ भवि * सि, दे$_{4-6}$ न$_{1}$ म$_{1}$ भविष्यति (→भविष्यसि); द$_{1}$ ग्र$_{1.2}$ म$_{1}$ गणाध्यक्षः (→गणेशानः). –b) दे$_{3}$ कल्पान्ते तु ग्रहान्मम, द$_{1}$ ग्र$_{1.2}$ म$_{1}$ कल्पान्ते मदनुग्रहात्. –c) ग्र$_{1.2}$ मामतिष्ठं (ग्र$_{2}$ ष्ठां), म$_{1}$ मावतिष्ठ (→तावत्तिष्ठ); द$_{1}$ मावतिष्ठ समादेशात्. –d) ब$_{2}$ निव्रतः, दे$_{6}$ निवृतः, ग्र$_{1.2}$ नित्यशः (→निर्वृतः); ब$_{3}$ स्वाधिकारस्व निवृतः, दे$_{1}$ स्वाधिकारे सु(मु)निर्वृतः, द$_{1}$ स्वाधिकारेष्वनित्यशः, म$_{1}$ साधिकारेषु नित्यशः.

७८. –a) दे$_{1.3.10}$ उक्ता (→उक्त्वा); का$_{1}$ दे$_{8-10}$ मुवें. मुए. मुब. तु, न$_{1}$ [अ]थ (→स). –b) दे$_{10}$ सहामनुः, ग्र$_{1}$ सहानुगाः (→सहानुगः).

७९. –a) दे$_{10}$ अन्तर्हितो, ग्र$_{1}$ अन्तस्थिते (→अन्तर्हिते). –b) दे$_{4}$ शंकरो (→शंकरे). –c) दे$_{10}$ द$_{1}$ व्याजहारः (→व्याजहार); ग्र$_{2}$ दक्षः (→दक्षं). –d) ग्र$_{2}$ अशेषं (→अशेष-).

❀ दे$_{1}$ ब्रह्म उवाच; न$_{1}$ ते$_{1}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ ब्रह्मा.

८०. –a) दे$_{1.5}$ किं तवोपगतो, दे$_{3}$ किन्तवाप्यागतो, दे$_{4}$ किं तवोपगता, दे$_{8}$ किं च यं भवतो, दे$_{9}$ किं त्वयं भवतो, दे$_{10}$ किं त्वहं भवतो, ते$_{1}$ किं तवाद्यगतो, द$_{1}$ ग्र$_{1}$ किं तवापहृतो, ग्र$_{2}$ म$_{1}$ किन्तवा (म$_{1}$ °वो) हि (म$_{1}$ °हृ) तो, मुवें. मुए. मुब. किञ्चायं भवतो (→किं तवापगतो). –c) दे$_{1}$ यदाचष्टे, दे$_{4}$ यथाचष्टः, दे$_{8.9}$ न$_{1}$ मुवें. मुए. मुब. यदा च स, दे$_{10}$ यदा च*, द$_{1}$ यथा रुचि, ग्र$_{1}$ यथा राज्यं, ग्र$_{2}$ यथा राजा, म$_{1}$ यथा राजन् (→यदाचष्ट); दे$_{4}$ देवाः, द$_{1}$ ग्र$_{2}$ म$_{1}$ देव (→देवः). –d) ब$_{1}$ पादायैतद्, दे$_{8.9}$ मुवें. मुए. मुब. पालये त्वां, दे$_{10}$ पालयित्वा, म$_{1}$ पालयैनं (→पालयैतद्); दे$_{6}$ पालयैततदंन्नितः, ग्र$_{2}$**येततन्द्रितः.

८१. –b) दे$_{1.5}$ हृद्देश, दे$_{3.6}$ कृत्येष, द$_{1}$ ग्र$_{1.2}$ म$_{1}$ हृदये (→हृद्येष); दे$_{1.2.8.9}$ मुवें. मुए. मुब. परमेश्वरः (→वसतीश्वरः); दे$_{4}$ हृद्यो वर्णं सतीश्वरः, दे$_{10}$ सबीजं परमा गतिः. –c) ब$_{1}$ पश्यन् देवं, दे$_{1}$ न$_{1}$ पश्यन्त्यैनं, दे$_{6}$ पश्यन्त्येव, दे$_{8-10}$ मुवें. मुए. मुब. पश्यन्ति यं (→पश्यन्त्येनं); का$_{1}$ ब$_{3}$ दे$_{3.5.6}$ महा° (→ब्रह्म°).

८२. –a) ब$_{2}$ दे$_{4}$ ह्यात्मा, दे$_{8-10}$ मुवें. मुए. मुब. चात्मा (→आत्मा). –b) ते$_{1}$ स वीर्यं (→सबीजं); ब$_{1}$ सर्व-

वें.१.१५.८४ तमर्चयति यो रुद्रं स्वात्मन्येकं सनातनम् ।
चेतसा भावयुक्तेन स याति परमं पदम् ॥८३
तस्मादनादिमध्यान्तं विज्ञाय परमेश्वरम् ।
कर्मणा मनसा वाचा समाराधय यत्नतः ॥८४
यत्नात् परिहरेशस्य निन्दामात्मविनाशनीम् ।
भवन्ति सर्वदोषाय निन्दकस्य क्रिया यतः ॥८५
यस्तवैष महायोगी रक्षको विष्णुरव्ययः ।
स देवदेवो भगवान् महादेवो न संशयः ॥८६
मन्यन्ते ये जगद्योनिं विभिन्नं विष्णुमीश्वरात् ।
मोहादवेदनिष्ठत्वात् ते यान्ति नरकं नराः ॥८७
वेदानुवर्तिनो रुद्रं देवं नारायणं तथा ।
एकीभावेन पश्यन्ति मुक्तिभाजो भवन्ति ते ॥८८
यो विष्णुः स स्वयं रुद्रो यो रुद्रः स जनार्दनः ।
इति मत्वा यजेद् देवं स याति परमां गतिम् ॥८९
सृजत्येतज्जगत् सर्वं विष्णुस्तत् पश्यतीश्वरः ।
इत्थं जगत् सर्वमिदं रुद्रनारायणोद्भवम् ॥९०
तस्मात् त्यक्त्वा हरेर्निन्दां विष्णावपि समाहितः ।
समाश्रयेन्महादेवं शरण्यं ब्रह्मवादिनाम् ॥९१

---

वीर्यपरागतिः. –c) ब1 दे3.5 द1 सूयते, ब2 दे1 ग्र2 श्रूयते, न1 सूयते (→स्तूयते). –d) ते1 देवैर् (→देव-).

८३. –a) दे1.8.10 मुवें. मुए. मुब. तमर्चयन्ति ये, दे2 तमर्चयो रुद्रं, दे4 तमर्चयति ये, ग्र2 तमर्चयन्ति यो (→तमर्चयति यो). –b) दे8-10 मुवें. मुए. मुब. स्वात्मना च (→स्वात्मन्येकं); ब1 स्वात्मन्येकं****. –c) ब2 भाग°, द1 भव° (→भाव°). –d) दे1.8-10 मुवें. मुए. मुब. ते यान्ति (→स याति); ब2 परमाङ्गतिः, ग्र2 परमां पतिं (→परमं पदम्).

८४. म1. ८४a-८५b ⊙; ग्र1. cd ⊙. –a) दे1 अनाद्य° (→अनादि°). –d) ब2 साचिरं, ते1 तत्वतः (→यत्नतः); न1 सम****त्नतः.

८५. म1. ab ⊙ (द्र. ८४ पा. वि.); दे1. ८५b-८६c ⊙. –a) द1 ग्र1 तस्मात् (→यत्नात्); दे1 °हरेत्सस्यक्, दे4 °हरेद्वश्यं, द1 ग्र1.2 °हरावश्यं (→°हरेशस्य); ते1 त्यक्त्वा परं महेशस्य. –b) दे8-10 मुवें. मुए. मुब. स्वात्म° (→आत्म°); ब2 दे4 ते1 °विनाशिनीम् (→°विनाशनीम्); ब3 निन्दामायुविनाशिनीं. दे2 निन्दामात्माविनाशिनीं, ग्र3 निन्दात्मकविनाशिनीं. –c) न1 °दोषायां (→°दोषाय). –d) दे5 निंदकस्य, न1 निन्दकस्य, + शिथिलस्य, ते1 निंदकानां (→निन्दकस्य); ब1 दे2.8.9 मुवें. मुए. मुब. क्रिया हिताः, ब2 क्रियारतः, दे3 क्रिया यज्ञः, दे10 क्रिया हताः (→क्रिया यतः).

८६. दे1. abc ⊙ (द्र. ८५ पा. वि.). –a) का1 यस्तवैषा, ब2 यस्तवैव, दे4 यस्त्ववैष, दे8.9 मुवें. मुए. मुब. यस्तु चैष, दे10 यैस्तु चैष (→यस्तवैष). –b) दे3 रञ्जको (→रक्षको). –c) दे8-10 मुवें. मुए. मुब. स देवो भगवान् रुद्रो. –d) दे4 महादेवात्र, दे5 महादेवेन (→महादेवो न); दे2 न संशयः, + महेश्वरः (→न संशयः).

८७. दे1 ग्र2 म1. cd ⊙. –a) ग्र2 मन्यते (→मन्यन्ते); ब3 दे4.6 यो, द1 म1 यं (→ये). –b) दे1 विभिन्नां (→विभिन्नं); दे10 विष्णुर् (→विष्णुं); न1 ईश्वरा, ग्र1 ईश्वरम् (→ईश्वरात्). –c) ब1 महा**दनिष्ठत्वात्, ब3 मोहादवेदनिष्ठात्मा, दे1 भेदवेदवनिष्टत्वात्, दे4 महादेवस्यनिष्टत्वात्, दे10 महादेवेदनिष्टत्वा (?). –d) ब1 नरकान् (→नरकं). –cd) ग्र1 ते महाघोरसंसारे पतन्त्येव न संशयः.

८८. –a) का1 दे2.3.5.6 ये चानुवर्त्तिनो, ब1 वेदार्थवर्त्तिनो, ब3 ये वा स्ववृत्तिनो, दे4 वेदावुद्वत्तिनो, दे10 वेदानुवर्तिनं, ते1 ग्र2 देवानुवर्तिनो, द1 महादेवं यथा (→वेदानुवर्तिनो); म1 महादेवानुवर्तिनो. –b) म1 रुद्रं (→देवं). –c) ब2 दे1 ते1 एक-, द1 ग्र1.2 म1 एवं (→एकी-); दे1 पश्यंन्ते, (→पश्यन्ति). –d) दे1 मुक्तिभावो, दे8 मुक्ति भाजो, म1 मूर्तिभाजो (→मुक्तिभाजो); म1 भजंति (→भवन्ति).

८९. –b) दे1 यो (तु) रुद्रः, म1 यो विष्णुः (→यो रुद्रः). –c) दे1 भजेदेवं, दे2.5 ते1 यजेदेवं, दे4.8-10 द1 ग्र1.2 म1 मुवें. मुए. मुब. भजेद्देवं, न1 भवेद्देवं (→यजेद्देवं).

९०. –a) ब1 मुवें. मुए. मुब. सृजत्येष, ब3 सृजन्त्येतत्, दे1.2.8.9 सृजत्येव (दे2 °वं), दे4 सृज्यते तत्, दे6 सृजत्येत (?), ग्र2 सृजते तत् (→सृजत्येतत्). –b) ब2 दे1 तस्यार्द्धमीश्वरः, दे8-10 तस्य महेश्वरः (→तत् पश्यतीश्वरः). –d) ब1 न1 रुद्र (न1 °द्र) नारायणात्मकं, दे9.10 जगन्नारायणोद्भवम्, ग्र2 रुद्रनारायणो भवं.

९१. –a) दे1 तस्माद्यत्नात्, दे3 तस्मात्त्यक्ता, दे4 तस्मात्त्य * (→तस्मात्त्यक्त्वा); दे5 हरे **, दे10 हरं नित्यं, न1 ग्र2 हरौ निंदां (→हरेर्निन्दां). –b) ब1 विष्णवेपि, दे3.6 विष्णोरपि, दे5 विष्णोवपि, दे8-10 मुवें. मुए. मुब. हरे चापि (→विष्णावपि). –c) दे4.5.8.9 द1 ग्र1.2 म1 मुवें. मुए. मुब.

उपश्रुत्याथ वचनं विरिञ्चस्य प्रजापतिः ।
जगाम शरणं देवं गोपतिं कृत्तिवाससम् ॥९२
येऽन्ये शापाग्निनिर्दग्धा दधीचस्य महर्षयः ।
द्विषन्तो मोहिता देवं संबभूवुः कलिष्वथ ॥९३
त्यक्त्वा तपोबलं कृत्स्नं विप्राणां कुलसंभवाः ।
पूर्वसंस्कारमाहात्म्याद् ब्रह्मणो वचनादिह ॥९४
मुक्तशापास्ततः सर्वे कल्पान्ते रौरवादिषु ।
निपात्यमानाः कालेन संप्राप्यादित्यवर्चसम् ।
ब्रह्माणं जगतामीशमनुज्ञाताः स्वयंभुवा ॥९५
समाराध्य तपोयोगादीशानं त्रिदशाधिपम् ।
भविष्यन्ति यथा पूर्वं शंकरस्य प्रसादतः ॥९६
एतद् वः कथितं सर्वं दक्षयज्ञनिषूदनम् ।
शृणुध्वं दक्षपुत्रीणां सर्वासां चैव संततिम् ॥९७ वें१.१५.९९

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायां पूर्वविभागे चतुर्दशोऽध्यायः ॥१४॥

---

समाश्रय (→समाश्रयेन्). –d) दे1 शरणं (→शरण्यं); का1 °वादिनीं, ब3 दे2.4.6 म1 °वादिनं (→°वादिनाम्).

९२. –a) का1 दे10 उपश्रुत्वाथ, दे1 पुनः श्रुत्वाथ, दे4 उपसृत्याद्य, दे5 उपकृत्याथ, ग्र2 इ ** त्याथ (→उपश्रुत्याथ). –b) दे1.4 विरिंच्यस्य (?), दे2.9.10 मुवें. मुए. मुब. विरंचस्य, दे6 विरिंचिस्य (?), द1 वैरोचस्य, ग्र1 म1 वैराजस्य (→विरिंचस्य); का1 प्रजापते, ब3 दे3.6 प्रजापतेः (→प्रजापतिः). –d) ते1 योगिनं (→गोपतिं).

९३. –a) दे3 °निर्दग्ध्वा (→°निर्दग्धा). –b) ब2 महात्मनः (→महर्षयः). –c) ब1 मोहिताः सर्वे (→मोहिता देवं); दे1 विद्विषंतो मोहतः देवं, न1 विषंतो मोहितो देवं. –d) दे6 कलिस्तथा, ते1 कलिष्वधः, ग्र2 कलिष्यथ (→कलिष्वथ); दे1 बभूवुः कलिकल्मषाः.

का1 दे1.5 पुस्तकेषु ९३. c, d मध्ये अधिकम्—
* शरण्यं ब्रह्मवादिनां उपश्रुत्याथ वचनं
(=९१d-९२a)

९४. –a) दे1.3 त्यक्ता (→त्यक्त्वा); ब3 दे3 द1 ग्र1. °वनं (→°बलं); दे2 सर्वं (→कृत्स्नं); ब2 देवसंभवः (→कुलसंभवाः). –c) दे1 महात्म्यं (?), न1 माहात्म्यां (→माहात्म्यात्).

९५. –a) ब1 मुक्तपाशास्, ब2 मुक्तशापात्, ब3 ते1 मुक्तपापास्, दे1 न1 मुक्तपाशस्, ग्र2 मुक्ताशापात् (→मुक्तशापास्). –b) दे1 शंकरस्य प्रसादतः. –c) ब3 ते1 निपात्यमाना, दे1 निपत्यमानाः, दे4 विपात्यमानोथ, ग्र2 ** त्यमा * (→निपात्यमानाः). –d) दे5 म1 संप्राप्तादित्य°, ते1 संप्राप्तानन्त° (→संप्राप्यादित्य°). –e) ब1 ब्राह्मणा, ब3 दे6 ब्राह्मणं, दे1.3 ब्राह्मणां, द1 ग्र1.2 म1 ब्रह्मणा (→ब्रह्माणं). –f) का1 अर्थं ज्ञात्वा, ब1 दे4 न1 द1 ग्र1 म1 अनुज्ञाता, ते1 अनुज्ञाषु (ता) (→अनुज्ञाताः); दे3.6 स्वयंभुवाः (दे6 °वः), दे4 स्वयंभुव (→स्वयंभुवा).

९६. –a) म1 समारुध्य (→समाराध्य); दे4.10 न1 ततो (→तपो). –b) दे2 अमराधिपं (→त्रिदशाधिपम्). –c) ब3 तथा (→यथा); ग्र2 भ **** था पूर्वं.

९७. –b) दे4 °प्रज्ञ° (→°यज्ञ°); ब2 °विनाशनं (→°निषूदनम्). –c) ब1-3 दे1.3.6 ते1 °पुत्राणां (→°पुत्रीणां). –d) का1 ब1.3 दे3.6 न1 ते1 पूर्वेषां चैव, दे1 पूर्वेषां चेह, दे4 द1 ग्र1 म1 पूर्वासां चैव, दे8-10 सर्वासां चेह (→सर्वासां चैव).

**पुष्पिका—**

**पुराणनाम—**का1 दे1.2.5.8-10 ग्र1.2 मुवें. मुए. इति श्रीकूर्मपुराणे, ब1 इत्यादिपुराणे कौर्म्मे, ब2.3 दे3.6 म1 इति कूर्मपुराणे, दे4 ते1 इत्यादिमहापुराणे श्रीकू (ते1 °कौ)र्मे, न1 द1 इति श्रीकौ (द1 °कू)र्मे, मुब. इति श्रीकौर्म्मे महापुराणे पूर्वभागे. **अध्यायनाम—**ब2 दे4 ते1 द1 ग्र1 म1. ⊙; का1 ब1.3 दे3.5.6 दक्षयज्ञम (ब3 °क)थने, दे1 दक्षयज्ञविध्वंसने, दे2 दक्षयज्ञविध्वंसनं नाम, दे8.9 दक्षयज्ञविध्वंसः, दे10 दक्षयज्ञविध्वंसं नाम, न1 दक्षयज्ञप्रमथनो नाम, ग्र2 दक्षयज्ञ ** सो नाम, मुवें. मुए. मुब. दक्षयज्ञविध्वंसो नाम. **अध्यायसंख्या—**ब2 दे6. ⊙; का1 ब1.3 दे3 न1 ते1 त्रयोदशोऽध्यायः, दे1.10 मुवें. मुए. मुब. पञ्चदशोऽध्यायः ॥१५॥, दे2.5.8-10 द1 ग्र1.2 म1 पञ्चदशोऽध्यायः, दे4 त्रयोदशोऽध्यायः ॥१३॥

# १५

सूत उवाच ।❀

वें.१.१६.१ प्रजाः सृजेति व्यादिष्टः पूर्वं दक्षः स्वयंभुवा ।
ससर्ज देवान् गन्धर्वान् ऋषींश्चैवासुरोरगान् ॥१
यदास्य सृजमानस्य न व्यवर्द्धन्त ताः प्रजाः ।
तदा ससर्ज भूतानि मैथुनेनैव धर्मतः ॥२
असिक्न्यां जनयामास वीरणस्य प्रजापतेः ।
सुतायां धर्मयुक्तायां पुत्राणां तु सहस्रकम् ॥३
तेषु पुत्रेषु नष्टेषु मायया नारदस्य सः ।
षष्टिं दक्षोऽसृजत् कन्या वैरण्यां वै प्रजापतिः ॥४
ददौ स दश धर्माय कश्यपाय त्रयोदश ।
विंशत् सप्त च सोमाय चतस्रोऽरिष्टनेमिने ॥५
द्वे चैव बहुपुत्राय द्वे कृशाश्वाय धीमते ।
द्वे चैवाङ्गिरसे तद्वत् तासां वक्ष्येऽथ विस्तरम् ॥६
अरुन्धती वसुर्जामी लम्बा भानुर्मरुत्वती ।
संकल्पा च मुहूर्ता च साध्या विश्वा च भामिनी ॥७
धर्मपत्न्यो दश त्वेतास्तासां पुत्रान् निबोधत ।
विश्वाया विश्वदेवास्तु साध्या साध्यानजीजनत् ॥८

---

❀ ग्र$_{1.2}$. ⊙; न$_{1}$ सूतः, ते$_{1}$ श्रीशिवः सूतः; द$_{1}$ श्रीसूत उवाच; म$_{1}$ श्री सूतः.

१. –a) ब$_{1}$ दे$_{1.6}$ प्रजा (→प्रजाः); दे$_{1 \, 8.10}$ मुवें. मुए. मुब. संदिष्टः (दे$_{8}$ °ष्टा), दे$_{4}$ व्यादिष्टं, ते$_{1}$ ह्यादिष्टः, द$_{1}$ व्यादिष्टा (→व्यादिष्टः). –b) दे$_{5}$ °भुवः (→°भुवा). –c) दे$_{1.2}$ देव-, दे$_{5}$ देवा (→देवान्). –d) का$_{1}$ ब$_{2.3}$ दे$_{5}$ °सुरोत्तमान् (→°सुरोरगान्); दे$_{1}$ ऋषीश्चैव महोरगान्, दे$_{2}$ महर्षींश्च महोरगान्, दे$_{3.6}$ ऋषीश्चैवाप्सरोगणान्.

२. –a) ब$_{2.3}$ दे$_{2-6}$ न$_{1}$ ते$_{1}$ सृज्य°, द$_{1}$ जय°, ग्र$_{1}$ म$_{1}$ यज° (→सृज°); दे$_{8-10}$ मुवें. मुए. मुब. यदास्य सृजतः पूर्वं, ग्र$_{2}$ दक्षस्य सृजमानस्य. –c) दे$_{2}$ द$_{1}$ ग्र$_{1.2}$ तथा (→तदा). –d) दे$_{4}$ मैथुनेनेव (→मैथुनेनैव); दे$_{8-10}$ मुवें. मुए. मुब. सर्वतः (→धर्मतः); दे$_{1}$ मिथुनेन प्रजापतिः.

३. दे$_{6}$ म$_{1}$. ३c–४d ⊙ (द्द. सं.). –a) ब$_{1.3}$ दे$_{3.6}$ न$_{1}$ ते$_{1}$ म$_{1}$ मुवें. मुए. मुब. अशिक्न्यां, दे$_{1}$ अशिक्त्वा, दे$_{4}$ अशिक्यां, दे$_{5}$ असिन्क्यां, दे$_{8.10}$ अशक्त्वां, दे$_{9}$ अशक्त्यां, ग्र$_{2}$ अदित्यां (→असिक्न्यां). –b) दे$_{1}$ वीरण्यस्य (→वीरणस्य).

४. दे$_{6}$ म$_{1}$. ⊙ (द्र. ३ पा. वि.). –a) दे$_{10}$ पुष्टेषु (→पुत्रेषु). –b) दे$_{8-10}$ मुवें. मुए. मुब. तु, ते$_{1}$ सः,+नः (→सः). –c) का$_{1}$ दे$_{1.4}$ षष्टि दक्षो, ब$_{1}$ षष्टिर्दक्षो (→षष्टिं दक्षो); का$_{1}$ ब$_{1-3}$ दे$_{3.10}$ न$_{1}$ ग्र$_{1}$ कन्यां (→कन्या[ः]). –d) का$_{1}$ ब$_{1.3}$ दे$_{2-5}$ ते$_{1}$ ग्र$_{1}$ मुवें. मुए. मुब. वैरिण्यां, दे$_{1}$ द$_{1}$ वीरि (द$_{1}$ °र) ण्यां, ग्र$_{2}$ वैरणां (→वैरण्यां); दे$_{8}$ हि, ब$_{2}$ च (→वै); न$_{1}$ वैरिण्यायां (→वैरण्यां वै); दे$_{2}$ °पति, दे$_{3}$ °पतेः (→°पतिः).

५. –a) दे$_{1}$ सुददौ, दे$_{5}$ दद्य (?) (→ददौ); का$_{1}$ ब$_{1.3}$ दे$_{4.5}$ ग्र$_{2}$ च (→स); न$_{1}$ द$_{1}$ ग्र$_{1}$ दश च (→स दश). –b) न$_{1}$ द$_{1}$ ग्र$_{1}$ म$_{1}$ काश्यपाय (→कश्यपाय). –c) म$_{1}$ सः (→च); दे$_{1-3.6}$ सप्तविंश(दे$_{1}$ °या)ति (दे$_{3}$ °तिं) सोमाय. –d) ब$_{1}$ °नेमिरे, दे$_{8-10}$ न$_{1}$ ते$_{1}$ ग्र$_{1.2}$ मुवें. मुए. मुब. °नेमये (→°नेमिने).

६. –a) दे$_{1}$ चैक (?) (→चैव). –b) का$_{1}$ कृशास्वाय, ब$_{3}$ कृशाषाय, न$_{1}$ भृताश्वाय, ग्र$_{2}$ कृशाश्वाया- (→कृशाश्वाय); दे$_{4}$ कृयायश्चायधीमते, दे$_{10}$ इक्ष्वशश्वाय धीमते. –c) ग्र$_{2}$ तत्त्वं (→तद्वत्); ब$_{1}$ द्वे चैवाङ्गिरसते द्वत् (?), न$_{1}$ द्वे चैवाङ्गिरस-रेतद्वत् (?). –d) दे$_{4}$ वक्ष्ये प्र-, द$_{1}$ ग्र$_{1}$ म$_{1}$ वक्ष्यामि (→वक्ष्येऽथ); ग्र$_{2}$ यावद्वक्षथ विस्तरम्.

६. श्लोकस्य स्थाने ते$_{1}$ पाठः—

द्वै चैव बहुपुत्राय द्वे चे (चै ?)वाङ्गिरसे तथा ।
द्वे कृशाश्वाय विदुषे तासां वक्ष्येऽथ विस्तरम् ॥

७. –a) दे$_{8-10}$ मुवें. मुए. मुब. मरुत्वती, ते$_{1}$ अरुण्वती (→अरुन्धती); ब$_{1.2}$ दे$_{2-6.8-10}$ न$_{1}$ मुवें. मुए. मुब. यामी (→जामी). –b) का$_{1}$ तुम्बा, दे$_{2}$ द$_{1}$ अम्बा, दे$_{10}$ रम्भा (→लम्बा); दे$_{8-10}$ मुवें. मुए. मुब. अरुन्धती (→मरुत्वती); न$_{1}$ म$_{1}$ लम्बभा (म$_{1}$ °हा)नुर्मरुत्वती, ग्र$_{2}$ अम्बचानुभरीद्वती. –ab) दे$_{1}$ अरुन्धती सुवीर्यासु सुवला भानुमरुन्धती. –d) दे$_{1}$ संध्या (→साध्या); दे$_{4}$ विश्व च, ग्र$_{1}$ विश्वाश्च, (→विश्वा च); का$_{1}$ ब$_{1-3}$ दे$_{3.5}$ भाविनी (→भामिनी); ग्र$_{2}$ साध्या विश्वेशभाविनी.

८. –c) दे$_{3.6}$ ते$_{1}$ विश्वाया, ग्र$_{2}$ विश्वाय, म$_{1}$ विश्वधा (→विश्वाया); दे$_{3}$ म$_{1}$ विश्वदेवांस्तु, ते$_{1}$ विश्वदेवास्स्युः

मरुत्वन्तो मरुत्वत्यां वसवोऽष्टौ वसोः सुताः ।
भानोस्तु भानवश्चैव मुहूर्ता वै मुहूर्तजाः ॥९
लम्बायाश्चाथ घोषो वै नागवीथी तु जामिजा ।
पृथिवी विषयं सर्वमरुन्धत्यामजायत ।
संकल्पायास्तु संकल्पो धर्मपुत्रा दश स्मृताः ॥१०
आपो ध्रुवश्च सोमश्च धरश्चैवानिलोऽनलः ।
प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्तिताः ॥११

आपस्य पुत्रो वैतण्डश्च: श्रमः श्रान्तो धुनिस्तथा ।
ध्रुवस्य पुत्रो भगवान् कालो लोकप्रकालनः ॥१२
सोमस्य भगवान् वर्चा धरस्य द्रविणः सुतः ।
पुरोजवोऽनिलस्य स्यादविज्ञातगतिस्तथा ॥१३
कुमारो ह्यनलस्यासीत् सेनापतिरिति स्मृतः ।
देवलो भगवान् योगी प्रत्यूषस्याभवत् सुतः ।
विश्वकर्मा प्रभासस्य शिल्पकर्ता प्रजापतिः ॥१४ वें१.१६.१६

(→विश्वदेवास्तु); दे$_{1.2.4.8-10}$ मुवें. मुए. मुब. विश्वे देवास्तु विश्वायां.

९. –a) ब$_{1}$ अरुन्धतीस्त्वरुन्धत्या, दे$_{1.4}$ अरुंधता (दे$_{1}$ त्यां) ह्यरुंधत्या (दे$_{1}$ °त्यां), दे$_{8-10}$ मुवें. मुए. मुब. मरुत्वत्यां मरुत्वन्तो, न$_{1}$ अरुंधत्यां ह्यरुंधाता, ते$_{1}$ अरुण्वती ह्यरुण्वत्यो, द$_{1}$ ग्र$_{1.2}$ म$_{1}$ अरुन्धतो ह्यरुन्धत्या. –b) ब$_{1}$ वसुः, दे$_{4}$ चसोः (→वसोः); दे$_{1.2.8-10}$ मुवें. मुए. वसो (मुवें. मुए. °स्वा)स्तु वसव(दे$_{10}$ वचन)स्तथा (दे$_{2}$ स्मृताः). –c) ब$_{2}$ दे$_{2}$ भानवः पुत्रा, ग्र$_{2}$ भावनञ्चैव, मुवें. मुए. भानवाश्चैव (→भानवश्चैव). –d) दे$_{1.2.8-10}$ ते$_{1}$ मुवें मुए. मुब. मुहूर्तास्तु, दे$_{3.6}$ मुहूर्ताया, द$_{1}$ म$_{1}$ मुहूर्तो वै, ग्र$_{2}$ मुहूर्तं वै (→मुहूर्ता वै); ब$_{1}$ दे$_{4}$ मुहूर्तजा, दे$_{1}$ मुहूर्तयः, दे$_{6}$ मुहूर्तताः, म$_{1}$ मुहूर्तजः (→मुहूर्तजाः).

१०. ते$_{1}$. ef ⊙. –a) दे$_{2.4}$ द$_{1}$ ग्र$_{2}$ अम्बायाश् (→लम्बायाश्); ब$_{1}$ चापि, दे$_{1.2}$ चाप्य–, ते$_{1}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ चैव (→चाथ); का$_{1}$ ब$_{1-3}$ दे$_{5}$ ते$_{1}$ घोषोथ, दे$_{2}$ द्योषोप्य (?), द$_{1}$ ग्र$_{1}$ म$_{1}$ घोषात्मा, ग्र$_{2}$ सा घोषा (→घोषो वै); दे$_{3.6}$ तु तथा घोषो, न$_{1}$ च तथैवैषा (→चाथ घोषो वै). –b) ब$_{2}$ दे$_{2}$ ते$_{1}$ च, दे$_{5}$ नु (→तु); दे$_{1.4}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ नागवी(ग्र$_{2}$° वि)थ्या (दे$_{4}$ ग्र$_{2}$ °द्या, द$_{1}$ °ध्या, ग्र$_{1}$ °र्यो)स्तु (→नागवीथी तु); दे$_{1}$ जामजाः, दे$_{2}$ द$_{1}$ ग्र$_{1}$ जामिजाः, दे$_{8-10}$ मुवें. मुए. मुब. यामिजा, ते$_{1}$ जामिजौ, ग्र$_{2}$ जामिकाः, म$_{1}$ जात्मजाः (→जामिजा); दे$_{6}$ नाथवीस्त्रीरुजामिजा (?). –c) दे$_{4}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ °वी (दे$_{4}$ वि)रु (ग्र$_{1}$ वृ) धस्सर्वं (→°विषयं सर्वम्). –d) ते अरुण्वत्यां (→अरुन्धत्यां); ब$_{2}$ दे$_{1}$ व्यजायत (→अजायत). –e) म$_{1}$ संकल्पा (→संकल्पो). –f) दे$_{4}$ दश (→धर्म–).

१० श्लोकानन्तरं दे$_{8-10}$ मुवें. मुए. मुब. अधिकम्—

13. * ये त्वनेकवसुप्राणा देवा ज्योतिःपुरोगमाः ।
वसवोऽष्टौ समाख्यातास्तेषां वक्ष्यामि विस्तरम् ॥

११. ते$_{1}$. ⊙. –a) दे$_{10}$ आकाश (?) (→सोमश्च). –b) दे$_{10}$ धराश्, ग्र$_{2}$ रथश् (→धरश्); ब$_{1}$ दे$_{8.9}$ म$_{1}$ मुवें. मुए. मुब. चैवानलोऽनिलः, दे$_{10}$ चैव निलोनिलः (?) (→चैवानिलोऽनलः). –c) दे$_{5}$ प्रत्युषश्, न$_{1}$ पत्यूषश् (→प्रत्यूषश्); का$_{1}$ प्रभावश्च, ब$_{1}$ दे$_{1}$ प्रभाषश्च (→प्रभासश्च).

१२. ते$_{1}$. a ⊙. –a) दे$_{10}$ अपस्य, ग्र$_{2}$ आपश्च (→आपस्य); ग्र$_{1}$ पुत्रा (→पुत्रो); का$_{1}$ वैतङ्घ्रः, दे$_{4}$ वैचाड्यः, दे$_{5}$ वैतण्डूः, ग्र$_{1}$ वैतान (नः ?), ग्र$_{2}$ वैदण्ड्यः, म$_{1}$ वैताड्यो (→वैतण्ड्यः). –b) दे$_{2}$ समः, न$_{1}$ शमः (→श्रमः); ब$_{1-3}$ दे$_{1-4.6.8.9}$ ग्र$_{2}$ म$_{1}$ मुवें. मुए. मुब. शान्तो (→श्रान्तो); का$_{1}$ ब$_{1-3}$ दे$_{3.5.6}$ धुरिस्, दे$_{1}$ धृतिस्, दे$_{8-10}$ ग्र$_{2}$ मुवें. मुए. मुब. ध्वनिस्, ग्र$_{1}$ यरिस् (→धुनिस्); न$_{1}$ शमशाण्डा धुनिस्तथा, ते$_{1}$ श्रान्ताध्वनि तपस्तदा. –d) का$_{1}$ काले, दे$_{5}$ काल (?), (→कालो); दे$_{3}$ लीक° (?) (→लोक°); का$_{1}$ °प्रकालतः, दे$_{1}$ द$_{1}$ °प्रकाशकः, दे$_{6}$ °प्रकोपनः, न$_{1}$° प्रभावनाः, ग्र$_{1}$°प्रकालकः (→°प्रकालनः).

१३. ते$_{1}$. ab 'वर्चा…द्रविणः' ⊙. –a) ग्र$_{1}$ भार्गवान् (→भगवान्); का$_{1}$ श्वर्चो, ब$_{3}$ शोथ, दे$_{1}$ वर्च्चो, दे$_{3.6}$ सोथ (→वर्चा); ग्र$_{2}$ सामस्य वर्चो भगवान्. –b) दे$_{1}$ सुताः (→सुतः). –c) ब$_{2.3}$ दे$_{1.2.8-10}$ मुवें. मुए. मुब. मनोजवो (→पुरोजवो); दे$_{8}$ [अ]नलस्थ, दे$_{10}$ [अ]मलस्य (→[अ]निलस्य); दे$_{1.2.8-10}$ मुवें. मुए. मुब. [अ]निलस्यासीद् (→[अ]निलस्य स्याद्); दे$_{4}$ पुरोजवोथा नीलस्याद्, ग्र$_{2}$ पुरोजवोयनिलस्य स्याद् (?). –d) दे$_{4.6.10}$ अविज्ञान°, ग्र$_{2}$ विविज्ञात° (→अविज्ञात°); का$_{1}$ °गिरिस्, ब$_{1}$ °दरिस् (→°गतिस्).

१४. म$_{1}$. ab ⊙. –a) दे$_{4}$ कुमारोथ (→कुमारो ह्य–); का$_{1}$ ह्रदलस्यासीत्, ब$_{3}$ ह्यनवस्यासीत्, दे$_{1.8.10}$ न$_{1}$ मुए. ह्यनिलस्यासीत्, दे$_{3}$ ह्यग्निजश्चासीत्, ते$_{1}$ ज्वलनस्यासीत्, द$_{1}$ ग्र$_{1.2}$ ह्यनिलस्य स्याद् (→ह्यनलस्यासीत्). –b) का$_{1}$ ब$_{3}$ दे$_{3.5}$ श्रुतिः, ब$_{1}$ दे$_{4.6}$ ते$_{1}$ ग्र$_{2}$ श्रुतः, ब$_{2}$ स्थितिः (→स्मृतः); न$_{1}$ सेनापतिरधिसृतः, द$_{1}$ ग्र$_{1}$ देवसेनापतिः स्मृतः. –c) न$_{1}$ देवलोके भवाद्योगी. –d) दे$_{5}$ प्रत्युवस्या° (→प्रत्यूषस्या°); द$_{1}$ सुताः

वें१.१६.१७

अदितिर्दितिर्दनुस्तद्वदरिष्टा सुरसा तथा ।
सुरभिर्विनता चैव ताम्रा क्रोधवशा इरा ।
कद्रुर्मुनिश्च धर्मज्ञा तत्पुत्रान् वै निबोधत ।।१५
अंशो धाता भगस्त्वष्टा मित्रोऽथ वरुणोऽर्यमा ।
विवस्वान् सविता पूषा ह्यंशुमान् विष्णुरेव च ।।१६
तुषिता नाम ते पूर्वं चाक्षुषस्यान्तरे मनोः ।
वैवस्वतेऽन्तरे प्रोक्ता आदित्याश्चादितेः सुताः ।।१७
दितिः पुत्रद्वयं लेभे कश्यपाद् बलसंयुतम् ।
हिरण्यकशिपुं ज्येष्ठं हिरण्याक्षं तथापरम् ।।१८
हिरण्यकशिपुर्दैत्यो महाबलपराक्रमः ।
आराध्य तपसा देवं ब्रह्माणं परमेष्ठिनम् ।
दृष्ट्वा लेभे वरान् दिव्यान् स्तुत्वाऽसौ विविधैः स्तवैः ।।१९
अथ तस्य बलाद् देवाः सर्व एव सुरर्षयः ।
बाधितास्ताडिता जग्मुर्देवदेवं पितामहम् ।।२०
शरण्यं शरणं देवं शंभुं सर्वजगन्मयम् ।
ब्रह्माणं लोककर्त्तारं त्रातारं पुरुषं परम् ।
कूटस्थं जगतामेकं पुराणं पुरुषोत्तमम् ।।२१

---

(→सुतः); न$_1$ -स्यात्मजः सुतः, ग्र$_2$ स्यात् भवत्पुनः (→-स्याभवत्सुतः). –e) ब$_1$ °कर्म (→°कर्मा); का प्रभासस्य,+प्रभावस्य, दे$_3$ प्रभाखस्य, दे$_5$ प्रभात्यस्य, ग्र$_2$ प्रवर्गस्य (→प्रभासस्य). –f) ते$_1$ विश्व° (→शिल्प°); ब$_2$ दे$_2$ °क्रर्मा (→°कर्ता).

१५. –a) ब$_3$ दे$_{3.6}$ तत्त्वद्, दे$_4$ ग्र$_1$ म$_1$ कद्रू(म$_1$ °द्रु)र्, द$_1$ कण्डूर् (→तद्वद्); ग्र$_2$ अदितिर्दीनकः कद्रुः. –b) ग्र$_2$ अरिष्टौ, मुए. अरिष्टा (→अरिष्टा); का$_1$ दे$_5$ न$_1$ सुरसा स्व (का$_1$ श्व)सा, ब$_{1\text{-}3}$ दे$_3$ मुब. सुरसाथ(दे$_3$ °थे ?) सा, दे$_4$ सुरसा प्रथा, दे$_6$ सुरसाथवा, दे$_{8\text{-}10}$ सुरसास्तथा, ते$_1$ द$_1$ सु(ते$_1$ स)रसाक्ष (द$_1$ क) षा (→सुरसा तथा). –c) ग्र$_2$ जरिता (→विनता). –d) दे$_{3.6}$ तासा, दे$_{10}$ तापा, ग्र$_2$ ताम्र-(→ताम्रा); दे$_2$ क्रोश° (→क्रोध°); का$_1$ इडा, ब$_{1\text{-}3}$ दे$_{8.9}$ मुवें. मुए. मुब. त्विरा, दे$_5$ इव, न$_1$ त्विला, द$_1$ ग्र$_1$ म$_1$ तथा, ग्र$_2$ इला (→इरा); दे$_{3.6}$ °वशाद्धिरा, दे$_4$ °वशान्विता, दे$_{10}$ °वशत्विहा, ते$_1$ °वशात्विका (→°वशा इरा); दे$_1$ तौ प्रोक्ताधवशात्तव (?). –e) दे$_{1.8.10}$ कद्रू (→कद्रुर्); का$_1$ ब$_3$ दे$_{1.3.4.6}$ धर्मज्ञस्, ब$_{1.2}$ दे$_2$ ते$_1$ धर्मज्ञास् (→धर्मज्ञा); दे$_4$ द$_1$ मुनिश्चैताश्च धर्मज्ञस्, ग्र$_1$ मूर्तिश्चैरावती प्रोक्तास्, ग्र$_2$ मुनीशेताय धर्मज्ञ (?), म$_1$ मुनीश्वराश्च धर्मज्ञा. –f) द$_1$ ग्र$_1$ म$_1$ च (→वै).

१६. –a) दे$_4$ हंशो धरो, न$_1$ अंशर्धाता, ग्र$_2$ हंसा याता (→अंशो धाता); का$_1$ भवत् स्वाष्ट्रा, न$_1$ भवत्स्रष्टा, द$_1$ भवत्सृष्टा, ग्र$_1$ भगोस्त्वष्टा, ग्र$_2$ भवस्तुष्टा, म$_1$ भवस्त्वष्टा (→भगस्त्वष्टा). –b) का$_1$ मित्रश्च (→मित्रोथ); दे$_4$ करणो° (→वरुणो°); का$_1$ दे$_9$ वरुणोर्यमः, दे$_{1.2}$ वरुणो यमः (→वरुणोऽर्यमा). –d) दे$_2$ अंशुमान्, दे$_{10}$ ह्यशमान्, ग्र$_2$ विधाता (→ह्यंशुमान्).

१६ श्लोकस्य b, c मध्ये ते$_1$ अधिकम्—विधाता.

१७. –a) दे$_1$ पूर्वं च, द$_1$ ते सर्वे, म$_1$ ते पूर्वाः (→ते पूर्वं); दे$_{8.9}$ तुषिते नमते पूर्वं. –b) दे$_{10}$ °स्यान्तरो (→°स्यान्तरे). –c) दे$_1$ ते$_1$ वैवस्वता° (→वैवस्वते°); ब$_2$ प्राप्ते, दे$_3$ प्रोक्तो, ग्र$_2$ प्रोक्तः (→प्रोक्ता). –d) का$_1$ ब$_2$ दे$_{1.3.5.6}$ ते$_1$ म$_1$ ह्या(म$_1$ ह्य)दित्या, न$_1$ चादित्याः (→आदित्याः); का$_1$ ब$_{1\text{-}3}$ दे$_{5.6}$ ते$_1$ अ (ब$_1$ दे$_6$ आ)दितेः, दे$_1$ त्वदितेः, दे$_{2.4}$ न$_1$ द$_1$ ग्र$_{1.2}$ म$_1$ ह्यदितेः (→चादितेः); दे$_4$ सुतः (→सुताः).

१८. –a) दे$_{10}$ पुत्रं (→पुत्र-); दे$_2$ यज्ञे (→लेभे). –b) न$_1$ ग्र$_{1.2}$ म$_1$ काश्यपाद् (→कश्यपाद्); दे$_{3.6}$ वन° (?), ग्र$_2$ गुण° (→बल°); दे$_{1.2.8\text{-}10}$ मुवें. मुए. मुब. °गर्वितम्,(दे$_1$ °तः, दे$_2$ °ताः) (→°संयुतम्). –c) का$_1$ °कश्यपुं, दे$_1$ °कश्यपं, दे$_5$ °कपिपुं(→°कशिपुं); दे$_1$ श्रेष्ठं (→ज्येष्ठं). –d) दे$_2$ हिरण्याख्यं (→हिरण्याक्षं); ब$_1$ निसूदनं, दे$_{1.8\text{-}10}$ मुवें. मुए. मुब. तथानुजं, दे$_{3.4.6}$ ततः परं (→तथापरम्).

१९. –a) द$_1$ °कशिपोर् (→°कशिपुर्); ब$_2$ दक्षो (→दैत्यो). –d) ब$_2$ दे$_{1.8\text{-}10}$ न$_1$ मुवें. मुए. परमेश्वरं (दे$_{10}$ °रीं) (→परमेष्ठिनम्). –e) दे$_1$ इंष्टा, दे$_{10}$ दृश्य (→दृष्ट्वा); दे$_3$ न$_1$ दृष्ट्वालभे (→दृष्ट्वा लेभे); का$_1$ दे$_{3.6}$ परान् (→वरान्); दे$_4$ द$_1$ दिव्या, दे$_6$ दिव्यं, म$_1$ देव्या (→दिव्यान्); ग्र$_2$ दृष्ट्वा देवान् वरान्**. –f) दे$_1$ स्तुत्वा तै, दे$_6$ श्रुत्वासौ (→स्तुत्वासौ).

२०. –a) दे$_9$ देव्याः (→देवाः). –b) ब$_3$ दे$_{1.8\text{-}10}$ मुवें. मुए. मुब. महर्षयः (→सुरर्षयः); दे$_2$ सर्वे वै परमर्षयः, म$_1$ सर्वे चैव सुरर्षयः. –c) दे$_{3.6}$ आहिता, न$_1$ त(ता?) पितो, द$_1$ ग्र$_1$ म$_1$ त्रासिता (→ताडिता); दे$_{10}$ जन्तुर् (→जग्मुर्). –d) दे$_{10}$ देवदेव- (→देवदेवं).

२१. –a) ग्र$_2$ शरण्यश् (→शरण्यं). –b) द$_1$ ग्र$_1$ म$_1$ °जगत्पतिम् (→°जगन्मयम्).

स याचितो देववरैर्मुनिभिश्च मुनीश्वराः ।
सर्वदेवहितार्थाय जगाम कमलासनः ॥२२
संस्तूयमानः प्रणतैर्मुनीन्द्रैरमरैरपि ।
क्षीरोदस्योत्तरं कूलं यत्रास्ते हरिरीश्वरः ॥२३
दृष्ट्वा देवं जगद्योनिं विष्णुं विश्वगुरुं शिवम् ।
ववन्दे चरणौ मूर्ध्ना कृताञ्जलिरभाषत ॥२४
ब्रह्मोवाच ।❀
त्वं गतिः सर्वभूतानामनन्तोऽस्यखिलात्मकः ।
व्यापी सर्वामरवपुर्महायोगी सनातनः ॥२५
त्वमात्मा सर्वभूतानां प्रधानं प्रकृतिः परा ।
वैराग्यैश्वर्यनिरतो रागातीतो निरञ्जनः ॥२६
त्वं कर्ता चैव भर्ता च निहन्ता सुरविद्विषाम् ।
त्रातुमर्हस्यनन्तेश त्राता हि परमेश्वरः ॥२७
इत्थं स विष्णुर्भगवान् ब्रह्मणा संप्रबोधितः ।
प्रोवाचोन्निद्रपद्माक्षः पीतवासाऽसुरद्विषः ॥२८
किमर्थं सुमहावीर्याः सप्रजापतिकाः सुराः ।
इमं देशमनुप्राप्ताः किं वा कार्यं करोमि वः ॥२९
देवा ऊचुः ।❀
हिरण्यकशिपुर्नाम ब्रह्मणो वरदर्पितः ।
बाधते भगवन् दैत्यो देवान् सर्वान् सहर्षिभिः ॥३० वें१.१६.३४

२२. दे4. २२b–२३ b 'मरैर' यावत् ⊙ (इ. सं.). –a) दे10 ग्र2 सा (→स); दे4 पातितो (→याचितो); ब1.3 दे3.6 देवदेवैर्, दे2 मुनिवरैर् (→देववरैर्). –c) न1 °भूत° (→°देव°).

२३. दे4. ab ⊙.–a) का1 दे3 संस्तूयमाणः, द1 संस्तूयमानाः (→संस्तूयमानः); दे2 प्रवणो (→प्रणतैर्). –b) द1 अपरैरपि,ग्र2 दुर्भरैरपि (→अमरैरपि). –c) दे1.4 द1 ग्र1 म1 °स्योत्तरे (→°स्योत्तरं); ब3 तीरं, दे4 द1 ग्र1 कूले, म1 तीरे (→कूलं). –d) दे4 यस्तेन्ना-, ग्र2 यस्यास्ते (→यत्रास्ते); न1 °रीश्वराः (→°रीश्वरः).

२४. –b) दे1 °जगद्गुरुं, दे2 न1 °गुरुं हरिं, द1 ग्र1 म1 °मुखं शिवं, ग्र2 °गतं शिवं (→°गुरुं शिवम्). –c) दे1 चरणं (→चरणौ).

❀ न1 ते1 द1 ग्र1.2 म1 ब्रह्मा.

२५. –b) ब1 दे4 अनन्तोस्या° (→अनन्तोस्य°); दे1 प्रधानं पुरुषः परः, दे10 प्रणतोस्मि खिलात्मक, द1 ग्र1 अनन्तश्चाखिलात्मकः, म1 मनसश्चाखिलात्मकः –c) ब1 सर्वावर°, म1 सर्वासुर° (→सर्वामर°); दे2 व्यापी मखवपुः सर्वैर्, + व्यापी सर्वामरवपुर्.

२६. –a) का1 स्वमात्मा, ग्र1 त्वं माता (→त्वमात्मा); दे10 °भूतात्मा (→°भूतानां). –b) ग्र2 मुवें. मुए. प्रधान- (→प्रधानं); दे1 प्रकृतेः, द1 प्रकृतिं (→प्रकृतिः); ब1 न1 पुरा, दे1 पर, दे2 द1 परां, ग्र1 परः (→परा). –c) ब1 दे3.6 न1 ते1 °र्यनिरता, दे1 °र्यनिरते, दे2 °र्याभिरतो, दे10 °र्यनियतो (→°र्यनिरतो). –d) ब1 दे3.6 न1 ते1 वागतीता, ब2 वादातीतो, ब3 दे10 वागातीतो, दे1.2.8.9 मुवें. मुए. मुब. वागतीतो, दे4 रागतांतो (→रागातीतो); ब1 दे3 न1 ते1 निरञ्जना, दे4 निरञ्जन, ग्र1 निरञ्जकः (→निरञ्जनः).

२७. –a) दे3 चैककर्ता, ग्र2 वैकिकर्ता (→चैव भर्ता); दे1.4.8.9 न1 द1 हर्ता (→भर्ता). –b) ब1 दे4.5.8-10 मुवें. मुए. विहन्ता (→निहन्ता); दे4 ग्र2 सर्वविद्विषां, ब1 मुवें. मुए. मुब. च सुरद्विषाम् (→सुरविद्विषां). –d) दे1.2. 6.8-10 न1 द1 ग्र1 म1 मुवें. मुए. मुब. त्रातासि (→त्राता हि); दे1 2.10 द1 ग्र1 मुवें. परमेश्वर (→परमेश्वरः).

२८. –a) का1 दे4.5 इत्येष (→इत्थं स); दे1 इत्थं स भगवान् विष्णुः. –b) दे6 ब्रह्मणं (→ब्रह्मणा); दे2 संप्रचोदितः, दे4 संप्रबोधिताः, म1 समबोधितः (→संप्रबोधितः). –c) दे3.6 प्रोवाचोच्चि(दे6 °न्वि)त° (→प्रोवाचोन्निद्र°); का1 °पद्माक्षं (→°पद्माक्षः). –d) ब1 पीतवासा सुरार्चितः, ब2.3 दे1.2 मुवें. मुए. मुब. पीतवासाः (दे1 °सः) सुरान् द्विजाः, ते1 पीतावासास्सुराधिपः, द1 पीतवासाः मुरद्विषः, म1 पीतवासा जनार्दनः.

२८ श्लोकात्परं का1 दे4.5 द1 ग्र1.2 म1. अधिकम्—
का1 दे5 कूर्म उवाच; दे4 श्रीकूर्मोवाच; द1 ग्र1 श्रीभगवानुवाच; ग्र2 म1 श्रीभगवान्.

२९. –a) दे1 तु (→सु-). –b) न1 सु- (→स°) दे10 सपद्म° (→सप्रजा°); ब3 प्रजापतिपुरस्सराः. –c) का1 इमां दशम् (?), ब3 इन्द्रं देवम् (→इमं देशम्). –d) किं यः कार्यं करोम्यहम्.

❀ ते1 ग्र1.2 म1 देवाः.

३०. –a) दे1 °कश्यपु° (→°कशिपु°). –b) दे3.6 बल° (→वर°). –c) ग्र1 बाधन्ते (?) (→बाधते); का1 दे1.4.10 भगवान्, ब2 सकलान् (→भगवन्); न1 दैत्या (→दैत्यो). –d) का1 ब1.3 दे1.3.5.6.10 द1 ग्र1 महर्षिभिः, म1 ऋषींस्तथा (→सहर्षिभिः); दे6 देवान्सर्वं महर्षिभिः, ते1 देवान्देवैः सहर्षिभिः.

१.१६.३४

अवध्यः सर्वभूतानां त्वामृते पुरुषोत्तम ।
हन्तुमर्हसि सर्वेषां त्वं त्राताऽसि जगन्मय ।।३१
श्रुत्वा तद्दैवतैरुक्तं स विष्णुर्लोकभावनः ।
वधाय दैत्यमुख्यस्य सोऽसृजत् पुरुषं स्वयम् ।।३२
मेरुपर्वतवर्ष्माणं घोररूपं भयानकम् ।
शङ्खचक्रगदापाणिं तं प्राह गरुडध्वजः ।।३३
हत्वा तं दैत्यराजं त्वं हिरण्यकशिपुं पुनः ।
इमं देशं समागन्तुं क्षिप्रमर्हसि पौरुषात् ।।३४
निशम्य वैष्णवं वाक्यं प्रणम्य पुरुषोत्तमम् ।
महापुरुषमव्यक्तं ययौ दैत्यमहापुरम् ।।३५
विमुञ्चन् भैरवं नादं शङ्खचक्रगदाधरः ।
आरुह्य गरुडं देवो महामेरुरिवापरः ।।३६
आकर्ण्य दैत्यप्रवरा महामेघरवोपमम् ।
समाचचक्षिरे नादं तदा दैत्यपतेर्भयात् ।।३७

असुरा ऊचुः ।❀

कश्चिदागच्छति महान् पुरुषो देवचोदितः ।
विमुञ्चन् भैरवं नादं तं जानीमोऽमरार्दन ।।३८
ततः सहासुरवरैर्हिरण्यकशिपुः स्वयम् ।
संनद्धैः सायुधैः पुत्रैः प्रह्लादाद्यैस्तदा ययौ ।।३९
दृष्ट्वा तं गरुडासीनं सूर्यकोटिसमप्रभम् ।
पुरुषं पर्वताकारं नारायणमिवापरम् ।।४०

---

३१. –b) दे$_{4.10}$ पुरुषोत्तमः, ग्र$_{2}$ मुवें. मुए. मुब. पुरुषोत्तमम् (→पुरुषोत्तम). –c) दे$_{1}$ सर्वेश (→सर्वेषां). –d) ब$_{2}$ त्वं हि त्राता, दे$_{1.2.8-10}$ मुवें. मुए. मुब. त्रातासि त्वं (→त्वं त्रातासि); ब$_{2.3}$ दे$_{3.5}$ ते$_{1}$ जगन्मयः (→जगन्मय).

३२. –a) का$_{1}$ तं दैवतैरुक्तं, ब$_{3}$ दे$_{3.5.6}$ न$_{1}$ तदैव तैरुक्तं (ब$_{3}$ °क्तः), दे$_{1.4.8}$ ते$_{1}$ द$_{1}$ ग्र$_{1.2}$ मुवें. मुए. मुब. तद्दैवतैरुक्तं, दे$_{10}$ तदैवतेरुक्तं (→तद्दैवतैरुक्तं); म$_{1}$ श्रुत्वा तु वचनं तेषां. –b) म$_{1}$ भगवान् (→स विष्णुर्); दे$_{2}$ लोकपा°, ग्र$_{2}$ भूतभा° (→लोकभा°). –c) दे$_{1.3.6}$ °राजस्य(→°मुख्यस्य). –d) दे$_{4}$ परमेश्वरः, दे$_{10}$ पुरुषः स्वयम् (→पुरुषं स्वयम्).

३३. दे$_{4}$. ३३-३४ab ⊙. –a) ब$_{1}$ दे$_{5}$ °वर्षाणं (?), दे$_{2}$ °संकाशं (→°वर्ष्माणं); द$_{1}$ ग्र$_{1.2}$ म$_{1}$ अधृष्यं मेरुवर्ष्माणं. –b) ग्र$_{1}$ घोरं रूपं (→घोररूपं). –d) ब$_{1}$ त्वं प्राह, न$_{1}$ तत्प्राह, म$_{1}$ तमाह (→तं प्राह); ब$_{1}$ °ध्वज, ब$_{3}$ दे$_{10}$ न$_{1}$ °ध्वजं (→°ध्वजः).

३४. दे$_{4}$. ab ⊙. –a) का$_{1}$ च (→तं); ब$_{2}$ दे$_{1.2.8-10}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ मुवें. मुए. मुब. हत्वा तं (ब$_{2}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ त्वं) दैत्यराजानं. –b) दे$_{1}$ °कश्यपुं (→°कशिपुं); दे$_{2}$ रिपुं (→पुनः). –c) ग्र$_{1}$ इदं (→इमं). –d) ब$_{3}$ गौरवात् (→पौरुषात्). –cd) न$_{1}$ इमं देशं समागच्छेत्यादिदेश स वै रुषा.

ग्र$_{1}$. ३४ श्लोकात् परं ३३c–३४ d पुनरागतः.

३५. –d) दे$_{2.5.6}$ ययौ दैत्य (दे$_{2}$ °त्यं) महासुरम्.

३६. म$_{1}$. ३६b-३८c ⊙ (द्र. सं.). –a) दे$_{4}$ विमुक्त, दे$_{5}$ विमुच्यन्, दे$_{6}$ विमुच्य (→विमुञ्चन्). –b) ब$_{1}$ दे$_{4}$ ग्र$_{2}$ °धरं (→°धरः). –c) ब$_{1}$ दे$_{1}$ ते$_{1}$ देवं, दे$_{4}$ द$_{1}$ ग्र$_{1.2}$ दिव्यं (→देवो). –d) दे$_{1}$ ते$_{1}$ ग्र$_{1}$ °मिवापरं, दे$_{4}$ °शिवापरः, दे$_{5}$ °रिवापुरः, न$_{1}$ ग्र$_{2}$ °रिवापरम् (→°रिवापरः).

३७. म$_{1}$. ⊙; का$_{1}$. ३७d-३८c ⊙ (द्र. सं). –a) ते$_{1}$ ग्र$_{2}$ °प्रवरो, द$_{1}$ °पतयो (→°प्रवरा). –b) दे$_{5}$ °रघोषजम् (?), दे$_{10}$ °वरोपमम्, ते$_{1}$ °रवौपमं, न$_{1}$ °स्वनोपमाः, ग्र$_{1}$ °स्वरोपमाः (→°रवोपमम्). –c) का$_{1}$ समाय चक्षिरे (?), ब$_{1}$ समाचचक्रिरे, दे$_{4.5}$ द$_{1}$ समा ससर्जिरे, दे$_{8-10}$ मुवें. मुए. मुब. समं च चक्रिरे, ते$_{1}$ सममाचक्रिरे, ग्र$_{1}$ समास्ससृजिरे (→समाचचक्षिरे); ग्र$_{2}$ समासाद्य चिरं वाक्यं. –d) दे$_{4.8-10}$ द$_{1}$ ग्र$_{1.2}$ मुवें. मुए. मुब. तथा, ते$_{1}$** (→तदा); दे$_{8-10}$ °पतिर् (→°पतेर्).

❀ का$_{1}$ म$_{1}$. ⊙; दे$_{1}$ अरूचुः (?); दे$_{4}$ हिरण्यकशिपुर्वाच; दे$_{5}$ न्यसुराऊचुः; ते$_{1}$ दैत्याः; ग्र$_{1.2}$ असुराः (ग्र$_{2}$ °रः).

३८. का$_{1}$ म$_{1}$. abc ⊙. –a) दे$_{4}$ पुमान् (→महान्). –b) दे$_{2.4.5}$ दैव° (→देव°); दे$_{8-10}$ मुवें. मुए. मुब. नो (दे$_{10}$ ना) दितः (→°चोदितः). –c) दे$_{5}$ विमुच्यन् (→विमुञ्चन्); ब$_{1}$ विमुञ्चन भैरवात्मा न (?). –d) दे$_{1}$ द$_{1}$ ग्र$_{1.2}$ न (→तं); ब$_{1}$ द$_{1}$ °मरार्दनः (→°मरार्दन); ब$_{2}$ जानीमोऽसुरमर्दनम्, दे$_{1}$ न$_{1}$ तं (दे$_{1}$ न) जानीमोसुरार्दन (न$_{1}$ °नं); दे$_{2}$ तं जानीमः सुदर्शनं, दे$_{4.5.8-10}$ ते$_{1}$ म$_{1}$ मुवें. मुब. मुए. तं जानीमो जनार्दनं (दे$_{10}$ °नः), ग्र$_{2}$ न जानीव सुरार्दनं.

३९. –a) दे$_{2}$ ततो महा° (→ततः सहा°); ब$_{2}$ ततोसुरवरैर्दिव्यैर्. –b) का$_{1}$ °कशिपुं (→°कशिपुः). –c) ब$_{1}$ सर्थेत्नैः (?); दे$_{2}$ सरथः, दे$_{6}$ सान्नद्धैः, दे$_{10}$ संनिद्धैः (→संनद्धैः). –d) ब$_{1}$ दे$_{2.5.6}$ न$_{1}$ ग्र$_{1}$ म$_{1}$ मुब. प्रह्लादा°, ते$_{1}$ द$_{1}$ ग्र$_{2}$ संह्लादा° (→प्रह्लादा°); दे$_{1.2}$ समाययौ, दे$_{3.6}$ तथासुराः, ग्र$_{2}$ तथायुधः (→तदा ययौ); ब$_{2}$ पुत्रसौद्यैस्तदाययौ दे$_{8-10}$ मुवें. मुए. सप्रह्ला(दे$_{8}$ °ह्ला)दैस्तदा ययौ.

४०. –a) दे$_{2}$ तु (→तं); दे$_{8-10}$ मुवें. मुए. मुब.

दुद्रुवुः केचिदन्योन्यमूचुः संभ्रान्तलोचनाः
अयं स देवो देवानां गोप्ता नारायणो रिपुः ॥४१
अस्माकमव्ययो नूनं तत्सुतो वा समागतः ।
इत्युक्त्वा शस्त्रवर्षाणि ससृजुः पुरुषाय ते ।
तानि चाशेषतो देवो नाशयामास लीलया ॥४२
तदा हिरण्यकशिपोश्चत्वारः प्रथितौजसः ।
पुत्रा नारायणोद्भूतं युयुधुर्मेघनिःस्वनाः ।
प्रह्लादश्चाप्यनुह्लादः संह्लादो ह्लाद एव च ॥४३
प्रह्लादः प्राहिणोद् ब्राह्ममनुह्लादोऽथ वैष्णवम् ।
संह्लादश्चापि कौमारमाग्नेयं ह्लाद एव च ॥४४
तानि तं पुरुषं प्राप्य चत्वार्यस्त्राणि वैष्णवम् ।
न शेकुर्बाधितुं विष्णुं वासुदेवं यथा तथा ॥४५
अथासौ चतुरः पुत्रान् महाबाहुर्महाबलः ।
प्रगृह्य पादेषु करैः संचिक्षेप ननाद च ॥४६
विमुक्तेष्वथ पुत्रेषु हिरण्यकशिपुः स्वयम् ।
पादेन ताडयामास वेगेनोरसि तं बली ॥४७
स तेन पीडितोऽत्यर्थं गरुडेन तथाऽऽशुगः ।
अदृश्यः प्रययौ तूर्णं यत्र नारायणः प्रभुः ।
गत्वा विज्ञापयामास प्रवृत्तमखिलं तथा ॥४८ वें.१.१६.५३

गरुडारूढं (→गरुडासीनं); ग्र$_{2}$ दृष्ट्वा ते च सुरास्सर्वे. –d) ग्र$_{2}$ अनामयं (→इवापरं).

४१. –a) न$_{1}$ दुद्रवुः, द$_{1}$ म$_{1}$ मदृदुः, ग्र$_{1}$ ममृन्दुः (→दुद्रुवुः). –b) दे$_{2.10}$ °लोचनः दे$_{8}$ °लोचनां (→°लोचनाः). –c) दे$_{1}$ आदि [दे] वोथ देवानां, दे$_{2}$ आदिदेवोथ भगवान्. –d) ब$_{3}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ विभुः, ते$_{1}$ हरिः (→रिपुः).

४२. –a) दे$_{1.4}$ ग्र$_{1}$ आगतो नूनं, दे$_{2}$ अप्यथो नूनं, दे$_{8-10}$ अव्ययोनन्तः, ते$_{1}$ अप्ययो नूनं, द$_{1}$ अग्रया नूनं, ग्र$_{1}$ आययौ नूनं, म$_{1}$ मायमा नूनं (→अव्ययो नूनं). –b) दे$_{4}$ स्वसुतो (→तत्सुतो); ब$_{2}$ आगमत् (→आगतः); न$_{1}$ वधार्थमयमागत (?). –c) ब$_{1}$ सर्व°, ग्र$_{1}$ शर° (→शस्त्र°). –d) दे$_{10}$ ग्र$_{1}$ ससजुः (→ससृजुः); दे$_{2}$ तु (→ते). –e) दे$_{1}$ मुवें. मुए. मुब. स तानि चाक्षतो देवो, दे$_{8}$ तां श्रुत्वाथ ततो देवो, दे$_{9.10}$ तांस्तु (दे$_{10}$ स्तू) स चाक्षतो देवो. –f) न$_{1}$ बभञ्जास्त्राणि लीलया.

४३. –a) दे$_{4}$ ग्र$_{2}$ तथा, दे$_{6}$ **, न$_{1}$ द$_{1}$ ग्र$_{1}$ म$_{1}$ ततो (→तदा); दे$_{8-10}$ मुवें. मुए. हिरण्यकशिपोः पुत्राश् . –b) दे$_{3}$ पुष्पितौ°, द$_{1}$ ग्र$_{1}$ म$_{1}$ त्वमितौ° (→प्रथितौ°). –c) मुवें. मुए. मुब. पुत्रं (→पुत्रा); ग्र$_{2}$ °भूता (→°भूतं); दे$_{2}$ पुत्रा नारायणसुतं, ते$_{1}$ पुत्राश्च यशसोद्भूताः. –d) का$_{1}$ ब$_{1.3}$ दे$_{2.4-6.9}$ ते$_{1}$न$_{1}$ निस्वनाः(न$_{1}$ °नं, दे$_{6}$ °नः) (→निःस्वनाः). –e) का$_{1}$ दे$_{1.5.6.10}$ ते$_{1}$ द$_{1}$ ग्र$_{1}$ प्रह्लादश् (→प्रह्लादश्); दे$_{1.5.}$ न$_{1}$ ते$_{1}$ द$_{1}$ ग्र$_{1}$ म$_{1}$ °प्यह्लादः (→°प्यह्लादः); दे$_{8-10}$ मुवें. मुए. मुब. प्रह्ला (दे$_{10}$ °ह्ला) दश्चानुह्ला (दे$_{10}$ °ह्ला)दश्च, ग्र$_{2}$ प्रह्लादश्च.- प्यनुस्तातः –f) दे$_{4}$ ह्लादम् (→ह्लादः); दे$_{5.10}$ न$_{1}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ सं (दे$_{5}$ न$_{1}$ ग्र$_{2}$ स) ह्लादो ह्लाद एव च (न$_{1}$ ये).

४४. दे$_{10}$. ⊙; ब$_{2}$ द$_{1}$. cd ⊙. –a) का$_{1}$ दे$_{1.5}$ ते$_{1}$ द$_{1}$ प्रह्लादः (→प्रह्लादः); ब$_{1}$ प्राहणोद्, दे$_{1}$ ग्र$_{1}$ प्रहिणोद् (→प्राहिणोद्); का$_{1}$ ब$_{1}$ दे$_{5}$ न$_{1}$ ब्रह्मम्, ते$_{1}$ रौद्रम्, द$_{1}$ बाणम्, ग्र$_{1}$ त्वाष्ट्रम् (→ब्राह्मम्). –b) दे$_{5.6}$ न$_{1}$ ते$_{1}$ °नुह्लादोथ, द$_{1}$ ग्र$_{1}$ म$_{1}$ °नुह्लादश्च, ग्र$_{2}$ °नुह्लादस्तु (→°नुह्लादोथ). –c) दे$_{5}$ न$_{1}$ ग्र$_{1}$ म$_{1}$ सं(दे$_{5}$ न$_{1}$ स)ह्लाद° (→संह्लाद°); दे$_{8.9}$ [अ]थ(→[अ]पि); न$_{1}$ वायव्यं (→कौमारं). –d) दे$_{1}$ अस्त्रं (?), दे$_{8.9}$ वाह्नेयं (→आग्नेयं); दे$_{5}$ ग्र$_{1.2}$ न$_{1}$ म$_{1}$ ह्लाद (→ह्लाद); दे$_{3}$ वा (→च); का$_{1}$ आग्नेय (?) ह्लादमेव च (?).

४५. द$_{1}$. ab ⊙. –a) का$_{1}$ ब$_{2.3}$ दे$_{5}$ एतानि, दे$_{3.6}$ तानि तत् (→तानि तं); दे$_{6}$ पुरुषा (→पुरुषं). –b) दे$_{3}$ चश्रार्य° (?), दे$_{4}$ चत्वार्थ° (→चत्वार्य°); दे$_{8}$ वैष्णवी, न$_{1}$ वै तदा (→वैष्णवं). –c) का$_{1}$ दे$_{4}$ सेकुर् (→शेकुर्); दे$_{1.8.9}$ मुवें. मुए. मुब. चालितुं, दे$_{10}$ चतुली (?), न$_{1}$ चलितुं (→बाधितुं). –d) ग्र$_{2}$ वामदेवं (→वासुदेवं); दे$_{1}$ यथाबलात्, दे$_{8.9}$ मुवें. मुए. मुब. यथातथम्, दे$_{10}$ यथा तव (→यथा तथा).

४६. –b) दे$_{1}$ °बलात्, द$_{1}$ ग्र$_{1}$ म$_{1}$ °बलान्, ग्र$_{2}$ °बलाः (→°बलः). –c) दे$_{1}$ संगृह्य (→प्रगृह्य); का$_{1}$ सुरा, दे$_{2}$ नखैः (→करैः); दे$_{4}$ प्रगृह्य पादमेकैकं. –d) दे$_{1.2.8-10}$ म$_{1}$ मुवें. मुए. मुब. चिक्षेप च, ग्र$_{1}$ सञ्चिक्षे स, ग्र$_{2}$ संक्षिपे[स](→संचिक्षेप).

४७. दे$_{3.6}$. ४७-५५ ⊙ (द्र. सं.). –a) ग्र$_{2}$ °ष्वपि (→°ष्वथ). –c) दे$_{5}$ नादयामास (→ताडयामास).

४८. दे$_{3.6}$. ⊙. –a) द$_{1}$ ग्र$_{1.2}$ म$_{1}$ ताडितो° (→पीडितो°). –b) ते$_{1}$ गरुडोथ, म$_{1}$ गरुडश्च (→गरुडेन); दे$_{1}$ सह पुनः, दे$_{2}$ महोरगः, दे$_{4}$ तथा खगः, दे$_{8-10}$ मुवें. मुए. मुब. सहानुगः, न$_{1}$ सहाशुगं, द$_{1}$ तथा शुभः, ग्र$_{2}$ तयाशु यः, म$_{1}$ यथाशुगः (→तथाशुगः). –c) का$_{1}$ ब$_{1}$ अदृश्यं (→अदृश्यः); दे$_{1}$ तूक्तं (→तूर्णं). –f) का ब$_{1.2}$ दे$_{1.5.8-10}$ न$_{1}$ ग्र$_{2}$ मुवें. मुए. मुब. तदा (→तथा).

बें.१.१६.५४ संचिन्त्य मनसा देवः सर्वज्ञानमयोऽमलः ।
नरस्यार्धतनुं कृत्वा सिंहस्यार्धतनुं तथा ॥४९
नृसिंहवपुरव्यक्तो हिरण्यकशिपोः पुरे ।
आविर्बभूव सहसा मोहयन् दैत्यपुंगवान् ॥५०
दंष्ट्राकरालो योगात्मा युगान्तदहनोपमः ।
समारुह्यात्मनः शक्तिं सर्वसंहारकारिकाम् ।
भाति नारायणोऽनन्तो यथा मध्यंदिने रविः ॥५१
दृष्ट्वा नृसिंहवपुषं प्रह्लादं ज्येष्ठपुत्रकम् ।
वधाय प्रेरयामास नरसिंहस्य सोऽसुरः ॥५२
इमं नृसिंहवपुषं पूर्वस्माद् बहुशक्तिकम् ।
सहैव त्वनुजैः सर्वैर्नाशयाशु मयेरितः ॥५३
तत्संनियोगादसुरः प्रह्लादो विष्णुमव्ययम् ।
युयुधे सर्वयत्नेन नरसिंहेन निर्जितः ॥५४
ततः संचोदितो दैत्यो हिरण्याक्षस्तदानुजः ।
ध्यात्वा पशुपतेरस्त्रं ससर्ज च ननाद च ॥५५
तस्य देवादिदेवस्य विष्णोरमिततेजसः ।
न हानिमकरोदस्त्रं यथा देवस्य शूलिनः ॥५६
दृष्ट्वा पराहतं त्वस्त्रं प्रह्लादो भाग्यगौरवात् ।
मेने सर्वात्मकं देवं वासुदेवं सनातनम् ॥५७

---

४९. दे3.6. ⊙. –a) द1 ग्र1.2 म1 [ग्र] चिन्त्य:(→देव:). –b) ब3 म1 °मयोहरि:, दे4 °मयोमलं, न1 °मनोमय:, + °मनोमल: (→°मयोऽमल:). –c) दे2 ग्र2 °स्यार्धं (→°स्यार्ध-) दे2 तनु: (→-तनुं). –d) का1 ब2.3 दे1.5 न1 तदा, दे2 तत: (→तथा).

५०. दे3.6. ⊙. –a) दे1 नृसिंहं (→नृसिंह–); दे2 °तनु° (→°वपु°); ब2.3 न1 °रव्यग्रो (→°रव्यक्तो). –b) ब1 गृहे, दे4 द1 ग्र1.2 पुर:, दे5 पुरं (→पुरे). –ab) म1 हिरण्यकशिपुं हन्तुं नारसिंहवपुस्तदा. –d) न1 मोक्षयन् (→मोहयन्); दे1.8-10 मुबें. मुए. मुब. °दानवान् (→°पुंगवान्); दे2 मोहयन्निव दानवान्.

५१. दे3.6. ⊙. –a) दे4 द1 ग्र1.2 म1 दुर्धर्षो (→योगात्मा). –d) ब2 °कारणं, दे1 °कारणात्, दे2 ग्र2 °कारिणीं, द1 °कारकाम्, ग्र1 °कारकं (→°कारिकाम्). –f) न1 रविं (→रवि:).

५२. दे3.6. ⊙; दे4. ५२c–५३b ⊙; दे8-10. ५२b-५३a. ⊙ (द्र. सं.)–a) ग्र2 दंष्ट्रा (→दृष्ट्वा); ब2.3 दे5 तेसिंह° (→नृसिंह°); का1 दृष्ट्वा ते सिंहपुरुषं, ब1 दे2.8-10 मुबें. मुए. मुब. दृष्ट्वा नृसिंहं (दे10 ह) पुरुषं, दे1 नृसिंहं वपुषं दृष्ट्वा, ते1 द1 ग्र1.2 दृष्ट्वा नृसिंहं वपुषं. –c) ब1 धारया(?), ते1 विधाय (→वधाय); का1 ब1.2 दे5 द1 ग्र1.2 म1 प्रेषया° →प्रेरया°); ब1 दे5 ते1 ग्र1 नारसिंहस्य, दे1 नृसिंहस्य च (→नरसिंहस्य).

५३. दे3.6. ⊙; दे4. ab ⊙; 8-10. a ⊙. –a) ब3 इदं, दे1 दृष्ट्वा, दे5 द1 इयं (→इमं); ब3 दे1.2 मुबें. मुए. मुब. नृसिंहं (ब3 ह) पुरुषं, ग्र2 नृसिंहं वपुषं (→नृसिंहवपुषं). –b) ब1 पूर्वङ्कुरुन्, ब2 पूर्वस्माद्दर-, ब3 पूर्वस्मान्नर:, दे2 पूर्वस्मादुग्र-, दे8.10 न1 मुबें. मुए. मुब. पूर्वस्माद्दून-, ते1 पूर्वस्मादुरु-, द1 पूर्वस्मान्मम, ग्र1 प्रह्लादभुज,+पूर्वे स्वाजन, ग्र2 पर्वस्मन्दून- (→पूर्वस्माद्बहु-); द1 शक्तिक: (→-शक्तिकं:); म1 पुरुषं पुरुषर्षभम्. –c) म1 सह त्वम् (→सहैव); दे1.2 द1 तनुजै:, दे5 दनुजै:, दे8-10 मुबें. मुए. मुब. तेऽनुजै:, म1 अनुजै: (→त्वनुजै:). –d) का1 नाशयाशु, दे1 नाशयस (?) (→नाशयाशु); ते1 मयेरितम्, द1 ग्र1 रथेरित:, ग्र2 वधेरित:, म1 रथेस्थित: (→मयेरित:).

५४. दे3.6. ⊙. –a) दे1.2.8-10 मुबें. मुए. मुब. स तन्नियोगाद् (→तत्संनियोगाद्);म1 तन्नियोगादसुरज:. –b) का1 दे1.4.5.10 द1 प्रह्लादो (→प्रह्लादो). –c) दे2 युयोधे (ध ?) (→युयुधे). –d) दे1 यत्नत:, दे10 नजित: (?), ग्र2 निर्जितम् (→निर्जित:); दे4 नृसिंहेन विवर्जित:.

५५. दे3.6. ⊙; दे10. ५५d-५६c ⊙; म1. d ⊙. –a) दे2 स चोदितो, दे8-10 मुबें. मुए. संमोहितो, ते1 स चोदिते, द1 ग्र1 म1 स बाधितो, ग्र2 संबोधितो (→संचोदितो); ते1 दैत्यैर्, (→दैत्यो); का1 तत: सश्चोदितो तेन. –b) का1 हिरण्यक्षस्, दे2 हिरण्याख्यस् (→हिरण्याक्षस्); ब1 दे4 द1 ग्र2 म1 तथानुज:, ग्र1 सहानुज: (→तदानुज:); ते1 हिरण्याक्षानुजात्मज:. –c) द1 ग्र1 म1 धृत्वा (→ध्यात्वा); न1 ध्यात्वा पाशुपतं रुद्रं. –d) दे1 स दानव: (→ननाद च).

५६. दे10. abc ⊙. –a) दे4 तस्या (?) (→तस्य); दे1.2.8-9 मुबें. मुए. मुब. देवा (दे1 °वो) धि° (→देवादि°). –c) दे6 अक्षो (→अस्त्रं). –d) मुबें. मुब. तथा (→यथा).

५७. म1. a ⊙. –a) दे4 द1 ग्र1.2 °वरं (→°हतं); दे1-3.6 शस्त्रं, दे4 द1 ग्र1.2 तत्त्वं (→त्वस्त्रं). –b) का1 दे1.4.10 ते1 द1 प्रह्लादो (→प्रह्लादो);ग्र1 वाक्य° (→भाग्य°). –c) दे8 नेमै (→मेने); ते1 सर्वात्मना (→सर्वात्मकं). –d) ब1 वासुदेव:, दे4 सर्वात्मानं (→वासुदेवं).

संत्यज्य सर्वशस्त्राणि सत्त्वयुक्तेन चेतसा ।
ननाम शिरसा देवं योगिनां हृदयेशयम् ॥५८
स्तुत्वा नारायणैः स्तोत्रैः ऋग्यजुःसामसंभवैः ।
निवार्य पितरं भ्रातॄन् हिरण्याक्षं तदाऽब्रवीत् ॥५९
अयं नारायणोऽनन्तः शाश्वतो भगवानजः ।
पुराणपुरुषो देवो महायोगी जगन्मयः ॥६०
अयं धाता विधाता च स्वयंज्योतिर्निरञ्जनः ।
प्रधानपुरुषस्तत्त्वं मूलप्रकृतिरव्ययः ॥६१
ईश्वरः सर्वभूतानामन्तर्यामी गुणातिगः ।
गच्छध्वमेनं शरणं विष्णुमव्यक्तमव्ययम् ॥६२
एवमुक्ते सुदुर्बुद्धिर्हिरण्यकशिपुः स्वयम् ।
प्रोवाच पुत्रमत्यर्थं मोहितो विष्णुमायया ॥६३
अयं सर्वात्मना वध्यो नृसिंहोऽल्पपराक्रमः ।
समागतोऽस्मद्भुवनमिदानीं कालचोदितः ॥६४
विहस्य पितरं पुत्रो वचः प्राह महामतिः ।
मा निन्दस्वैनमीशानं भूतानामेकमव्ययम् ॥६५
कथं देवो महादेवः शाश्वतः कालवर्जितः ।
कालेन हन्यते विष्णुः कालात्मा कालरूपधृक् ॥६६
ततः सुवर्णकशिपुर्दुरात्मा विधिचोदितः ।
निवारितोऽपि पुत्रेण युयोध हरिमव्ययम् ॥६७
संरक्तनयनोऽनन्तो हिरण्यनयनाग्रजम् ।
नखैर्विदारयामास प्रह्लादस्यैव पश्यतः ॥६८ बें.१.१६.७४

५८. –a) का$_{1}$ °शस्त्राणि,+°शास्त्राणि (→°शस्त्राणि). –b) दे$_{2}$ द$_{1}$ °मुक्तेन (→°युक्तेन); दे$_{4}$ ग्र$_{1.2}$ तेजसा (→चेतसा). –c) का$_{1}$ दे$_{6.10}$ नमामि (→ननाम). –d) दे$_{10}$ हृदयादयं, द$_{1}$ ग्र$_{1}$ म$_{1}$ हृदयंगमम् (→हृदयेशयम्).

५९. –a) दे$_{5}$ कृत्वा (→स्तुत्वा); का$_{1}$ ब$_{3.5.6}$ ते$_{1}$ म$_{1}$ मुवें. मुए. मुब. नारायणं, ब$_{1}$ नारायणो, दे$_{4}$ ग्र$_{2}$ नारायण- (→नारायणैः). –c) दे$_{8-10}$ पितरो (→पितरं). –d) दे$_{2}$ हिरण्याख्यं (→हिरण्याक्षं); दे$_{4}$ ग्र$_{1}$ म$_{1}$ तथा, ग्र$_{2}$ अथो (→तदा).

६०. –b) दे$_{9}$ शास्त्रतो (→शाश्वतो); दे$_{4.10}$ °नुजः (→°नजः). –c) ब$_{3}$ दे$_{3.4.6.8.9}$ मुवें. मुए. मुब. पुराणः, ग्र$_{2}$ पुराणं (→पुराण-). –d) ग्र$_{2}$ महर्षयः (→जगन्मयः).

६१. –a) ब$_{3}$ स्वयं ज्ञाता, दे$_{2}$ एष धाता (→अयं धाता). –b) दे$_{4}$ स्वयंयोनिर् (→स्वयंज्योतिर्). –c) ब$_{1.3}$ दे$_{3.6}$ ते$_{1}$ म$_{1}$ प्रधानं पुरुषस्, ब$_{2}$ प्रधानप्रकृतिस्, दे$_{8-10}$ ग्र$_{1}$ मुवें. मुए. मुब. प्रधानं पुरुषं, ग्र$_{2}$ प्रधानपुरुषं (→प्रधानपुरुषस्). –d) का$_{1}$ दे$_{2}$ °रव्ययं, ब$_{1.2}$ दे$_{8-10}$ ग्र$_{1}$ मुवें. मुए. मुब. °रव्यया (→°रव्ययः).

६२. –a) का$_{1}$ ब$_{1.3}$ दे$_{1.3.5.6}$ ते$_{1}$ °भावानाम् (→°भूतानाम्). –b) न$_{1}$ गुणोतिगः, ग्र$_{2}$ गुणागतिः (→गुणातिगः). –c) का$_{1}$ ब$_{1-3}$ दे$_{3.5.6}$ म$_{1}$ गच्छ त्वं, ते$_{1}$ गच्छ वै (→गच्छध्वं); ब$_{2}$ पुरुषं (→शरणं). –d) दे$_{1.2.10}$ मुब. अच्युतं (→अव्ययम्); ब$_{2}$ शरणं विष्णुमच्युतम्.

६३. –a) का$_{1}$ ब$_{2.3}$ एवमुक्तः स, ब$_{1}$ एवमुक्तेषु, दे$_{2.5.6}$ ग्र$_{2}$ मुवें. मुब. एवमुक्तः सु-, दे$_{3}$ एवमुक्तेः सु-, दे$_{4}$ एवमुक्तिस्तु, ते$_{1}$ एवमुक्तेन, द$_{1}$ म$_{1}$ एवमुक्ते स, (→एवमुक्ते सु-).

६४. –a) दे$_{1}$ सर्वात्मको देवो, दे$_{10}$ सर्वात्मनो बध्या, ग्र$_{2}$ सर्वात्मको बध्यो (→सर्वात्मना वध्यो). –b) ग्र$_{2}$ नृसिंह्यो ह्यल्पपुरुषः (?). –c) दे$_{9.10}$ भुवनं (→भवनं); ब$_{1}$ ग्र$_{1}$ म$_{1}$ समागतोस्मान् (ब$_{1}$ °स्म) भगवान्, द$_{1}$ समाहितो स्मान्भगवान्. –d) दे$_{10}$ इदानीं कलशोदितः (?).

६५. –a) म$_{1}$ प्राह (→पुत्रो). –b) द$_{1}$ वाचं (→वचः); म$_{1}$ पुत्रो (→प्राह); म$_{1}$ °द्युतिः (→°मतिः). –c) दे$_{10}$ मां (→मा); दे$_{1}$ मानिन्द देवमीशानं, दे$_{4}$ द$_{1}$ ग्र$_{1}$ म$_{1}$ मा निन्दस्व तमीशान, ते$_{1}$ मुनिन्द्रन् वै नमीशानं, ग्र$_{2}$ मारीदस्वेकमीशानं. –d) दे$_{1}$ ईश्वरम् (→अव्ययम्)

६६. –a) दे$_{10}$ देवा (→देवो). –c) ग्र$_{2}$ स हन्यते तथा विष्णुः. –d) ब$_{2}$ कालात्मा कालकालधृक्.

६७. –a) दे$_{1.2}$ ग्र$_{2}$ हिरण्य° (→सुवर्ण°). –b) दे$_{8.9}$ प्रोवाच, दे$_{10}$*** (→दुरात्मा); द$_{1}$ ग्र$_{1.2}$ म$_{1}$ मुवें. मुए. मुब. कालचोदितः, दे$_{8-10}$ विधिनोदितः (→विधिचोदितः). –c) दे$_{1}$ निराकृतोपि (→निवारितोऽपि). –d) दे$_{4}$ न$_{1}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ मुवें. मुए. मुब. युयुधे (ग्र$_{1}$ °धेर्) (→युयोध).

६८. –a) दे$_{10}$ संरस्तु (?) (→संरक्त-); दे$_{6}$ ते$_{1}$ °नयना° (→°नयनो°). –b) दे$_{3.6}$ °नयनाग्रजः, ग्र$_{1}$ °नयनोग्रजम् (→°नयनाग्रजम्). –d) का$_{1}$ दे$_{5}$ प्रहलादस्य च, ब$_{1.3}$ दे$_{3}$ प्रह्लादस्य च, दे$_{1.4.10}$ द$_{1}$ प्रह्लादस्यैव, ते$_{1}$ प्रह्लादस्याथ (→प्रह्लादस्यैव).

वे॰१.१६.७४ हते हिरण्यकशिपौ हिरण्याक्षो महाबलः ।
विसृज्य पुत्रं प्रह्लादं दुद्रुवे भयविह्वलः ॥६९
अनुह्लादादयः पुत्रा अन्ये च शतशोऽसुराः ।
नृसिंहदेहसंभूतैः सिंहैर्नीता यमालयम् ॥७०
ततः संहृत्य तद्रूपं हरिर्नारायणः प्रभुः ।
स्वमेव परमं रूपं ययौ नारायणाह्वयम् ॥७१
गते नारायणे दैत्यः प्रह्लादोऽसुरसत्तमः ।
अभिषेकेण युक्तेन हिरण्याक्षमयोजयत् ॥७२
स बाधयामास सुरान् रणे जित्वा मुनीनपि ।
लब्ध्वाऽन्धकं महापुत्रं तपसाराध्य शंकरम् ॥७३
देवाञ्जित्वा सदेवेन्द्रान् बध्वा च धरणीमिमाम् ।
नीत्वा रसातलं चक्रे वन्दीमिन्दीवरप्रभाम् ॥७४
ततः सब्रह्मका देवाः परिम्लानमुखश्रियः ।
गत्वा विज्ञापयामासुर्विष्णवे हरिमन्दिरम् ॥७५
स चिन्तयित्वा विश्वात्मा तद्वधोपायमव्ययः ।
सर्वदेवमयं शुभ्रं वाराहं वपुराददे ॥७६
गत्वा हिरण्यनयनं हत्वा तं पुरुषोत्तमः ।
दंष्ट्रयोद्धारयामास कल्पादौ धरणीमिमाम् ॥७७
त्यक्त्वा वराहसंस्थानं संस्थाप्य च सुरद्विजान् ।
स्वामेव प्रकृतिं दिव्यां ययौ विष्णुः परं पदम् ॥७८

६९. दे8-10. ⊙. –a) दे1 °कशिपे (→°कशिपौ). –b) दे2 हिरण्याख्यो, ग्र2 हिरण्याक्ष- (→हिरण्याक्षो). –c) दे3 विमृज्य (→विसृज्य); दे4.5 ते1 द1 प्रह्‌लादं (→प्रह्लादं).

७०. –a) दे4.5.10 न1 द1 अनुह्‌लादा°(→अनुह्लादा°). –b) का1 ब1-3 दे2.3.5.6 न1 ते1 ह्यन्ये च, ग्र2**श्च (→अन्ये च). –c) ब1 दे10 °देव° (→°देह°); दे5 संभूतेः (→°संभूतैः). –d) दे3 नातां (?), द1 नातैद् (?), ग्र2 भूता (→नीता); दे1-3.6.8-10 मुवें. मुए. मुब. यमक्षयम् (→यमालयं).

७१. ब1 दे3.4.6 न1 ते1 द1 ग्र1.2 म1. cd ⊙. –a) दे2 प्रहृत्य (→संहृत्य). –b) न1 नर-, ग्र2 ययौ (→हरिर्); ब1 नारायाणो गतः (→नारायणः प्रभुः). –c) ब2.3 रूपं परमं (→परमं रूपं). –d) ब2.3 ययौ शाश्वतमव्ययम्, दे1 ययौ नारायणः स्वयम्.

७२. –a) ग्र2 ततो (→गते); ग्र2 म1 नारायणो (→नारायणे); ब1-3 दे3.6 दैत्यैः, दे1.2 देवे, न1 दैत्ये (→दैत्यः). –b) का1 दे1.4.5.10 ते1 मुब. प्रह्‌लादो° (→प्रह्लादो); दे2 दैत्य°, द1 सुर°(?) (→[अ]सुर°). –c)का1 ब1 दे1-4.6.9.10 द1 ग्र1 म1 अभिषेकेन (→अभिषेकेण). –d) दे2 °ण्याख्यम् (→°ण्याक्षम्); दे5.10 अयोजगत्, न1 अचोदयत्, द1 अपूजयत्, ग्र1 अयोजनत् (→अयोजयत्).

७३. –a) दे1 बोधयामास (→बाधयामास). –b) का1 मुनीरपि,+मुनीनपि (→मुनीनपि). –c) ते1 शब्द्वा चैकं (?), द1 म1 लब्ध्वान्तकं, ग्र2 लब्धां** (→लब्ध्वाऽन्धकं).

७४. ब1. cd ⊙. –a) दे2 देवान् जित्वावसेन्द्रादीन्. –b) ब3**ब्ध्वा, दे2 लब्ध्वाथ, दे4.9 लब्ध्वा च, दे8 मुवें. मुए. मुब. क्षुब्ध्वा च, दे10 कुब्धां च (→बध्वा च). –c) दे1 रसातले (→रसातलं). –d) का1 दे2.4.5 देवीम् (दे5 °विम्), ब3 दे3.6 वन्दिम्, न1 वलिम् (→वन्दीम्); दे3 °प्रभः (→°प्रभाम्); दे8-10 मुवें. मुए. मुब. वेदान्वै निष्प्रभांस्तथा.

७५. –a) ते1 साब्रह्मका, ग्र2 सहस्रका (→सब्रह्मका). –b) दे1 परिभ्रष्टा (→परिम्लान-); दे4 °सुख, (→दे6 °सुखा (→°मुख-). –c) दे4.6.10 विज्ञापयामास (→विज्ञापयामासुर्). –d) ग्र2 वैष्ण******.

७६. ग्र2. b खण्डितम्. –a) दे2 सर्वात्मा (→विश्वात्मा). –c) ब1**, दे2 °वेद° (→°देव°); ग्र2 शुभं (→शुभ्रं). –d) न1 ग्र1 वराहं (→वाराहं); ब1.2 दे1.3.6.8-10 मुवें. मुए. मुब. वाराहश्च (→वाराहं व-); दे3.4.6 न1 ते1 द1 ग्र1.2 म1 -[अा]ददे (→[अा]दधे).

७७. –a) दे1 °तनयं (→°नयनं). –b) द1 पुरुषोत्तमं (→पुरुषोत्तमः). –c) ब1 दे4 द1 म1 द्रंष्ट्रयोर्द्धा°, दे5 इन्द्रयोद्धा° (→द्रंष्ट्रयोद्धा°); का1 दे4 ते1 इव, दे5 इतः (→इमां); न1 कल्पादाविव सर्वधृक्.

७८. –a) ब2 दे6.8-10 ते1 द1 ग्र1 मुवें. मुए. मुब. वाराह° (→वराह°). –b) दे2 संस्थाप्य चा-, दे8 मुवें. मुए. मुब. संस्थाप्यैवं, दे9 संस्थास्यैवं, दे10 संस्था चैव, ग्र2 संप्राप्य च (→संस्थाप्य च); ब1 न1 सुरद्विषात् (?), दे4 सुरान् द्विजाः, दे5 तुराहितान् (?), दे8-10 मुवें. मुए. मुब. सुरद्विषः, ते1 सुरद्विजान् + सुरद्विजाः, द1 द्विजान् सुरान्, ग्र1.2 सुरा द्विजान् (ग्र2 जाः), म1 वसुन्धरां (→सुरद्विजान्). –c) दे1 प्राकृतिं (→प्रकृतिं); दे4 दिव्यं (→दिव्यां). –d) म1 ययौ स परमं पदम्.

तस्मिन् हतेऽमररिपौ प्रह्लादो विष्णुतत्परः ।
अपालयत् स्वकं राज्यं भावं त्यक्त्वा तदाऽऽसुरम् ॥७९
इयाज विधिवद् देवान् विष्णोराराधने रतः ।
निःसपत्नं तदा राज्यं तस्यासीद् विष्णुवैभवात् ॥८०
ततः कदाचिदसुरो ब्राह्मणं गृहमागतम् ।
तापसं नार्चयामास देवानां चैव मायया ॥८१
स तेन तापसोऽत्यर्थं मोहितेनावमानितः ।
शशापासुरराजानं क्रोधसंरक्तलोचनः ॥८२
यत्तद्बलं समाश्रित्य ब्राह्मणानवमन्यसे ।
सा भक्तिर्वैष्णवी दिव्या विनाशं ते गमिष्यति ॥८३
इत्युक्त्वा प्रययौ तूर्णं प्रह्लादस्य गृहाद् द्विजः ।
मुमोह राज्यसंसक्तः सोऽपि शापबलात् ततः ॥८४
बाधयामास विप्रेन्द्रान् न विवेद जनार्दनम् ।
पितुर्वधमनुस्मृत्य क्रोधं चक्रे हरिं प्रति ॥८५
तयोः समभवद् युद्धं सुघोरं रोमहर्षणम् ।
नारायणस्य देवस्य प्रह्लादस्यामरद्विषः ॥८६
कृत्वा तु सुमहद् युद्धं विष्णुना तेन निर्जितः ।
पूर्वसंस्कारमाहात्म्यात् परस्मिन् पुरुषे हरौ ।
संजातं तस्य विज्ञानं शरण्यं शरणं ययौ ॥८७
ततः प्रभृति दैत्येन्द्रो ह्यनन्यां भक्तिमुद्वहन् ।
नारायणे महायोगमवाप पुरुषोत्तमे ॥८८ वें. १.१६.६४

७९. –a) दे$_3$ सुररिपौ (→[अ]मररिपौ). –b) दे$_{1.4.10}$ ते$_1$ द$_1$ प्रह्लादो (→प्रह्लादो); दे$_{3.6}$ प्रह्लादो विष्णुमव्ययः (दे$_6$ °यं). –c) द$_1$ ग्र$_1$ स्वयं (→स्वकं). –d) दे$_{10}$ भवं (→भावं); का$_1$ द$_1$ ग्र$_1$ म$_1$ तथासुरम्, ब$_{2.3}$ दे$_{3.6}$ महासुरम् (→तदाऽऽसुरम्).

८०. –a) दे$_{1.2.8-10}$. मुवें. मुए. यजते, न$_1$ द$_1$ ग्र$_1$ म$_1$ ययाज (→इयाज); दे$_2$ न$_1$ विधिना, ग्र$_2$ विविधैर् (→विधिवद्). –c) दे$_{8-10}$ मुवें. मुए. मुब. सदा, द$_1$ ग्र$_1$ म$_1$ तथा (→तदा). –d) ब$_1$ तदा° (→तस्या°); दे$_4$ °वैभवान् (?) (→°वैभवात्).

८१. –a) दे$_1$ तदा (→ततः); दे$_8$ °चिदसुरौ (?), म$_1$ °चिदस्थानो (?) (→°चिदसुरो). –b) का$_1$ ब$_3$ दे$_{2.3.10}$ ते$_1$ ब्रह्माणं (→ब्राह्मणं). –c) ब$_1$ नर्चया°, दे$_2$ चार्षया°, ग्र$_2$ दर्वया° (?) (→नार्चया°); दे$_{8-10}$ मुवें. मुए. न च संभासयामास.

८२. –b) दे$_5$ मोहितो (→मोहिते-); ब$_1$ दे$_1$ °मानतः (→°मानितः). –c) ब$_3$ शशाप, दे$_{6.8.9}$ सशा (दे$_6$ °सा) पा- (→शशापा-); का$_1$ ब$_{1-3}$ दे$_{1.2.5}$ न$_1$ ते$_1$ °राजं तं, द$_1$ ग्र$_{1.2}$ म$_1$ °भावं तं (→°राजानं).

८३. –a) न$_1$ यत्तं, ते$_1$ यस्या (→यत्तद्); म$_1$ बन्धं (→बलं); म$_1$ समाहृत्य (→समाश्रित्य). –b) ब$_1$ ब्राह्मेणा° (→ब्राह्मणा°); दे$_{1.4}$ ब्रह्मणा (दे$_1$ °ण) नावमन्यसे. –c) दे$_8$ मुवें. मुए. मुब. शक्तिर्, ते$_1$ भक्ति(स्तु) (→भक्तिर्). –d) का$_1$ ब$_{1.3}$ दे$_{3.5.6}$ न$_1$ विनाशं च (→विनाशं ते); न$_1$ गमिष्यतु (→गमिष्यति)

८४. –a) का$_1$ हन्तुं (→तूर्णं). –b) का$_1$ दे$_{1.4.10}$ ते$_1$ प्रह्लादस्य (→प्रह्लादस्य); का$_1$ द$_1$ महाद्विजः, ग्र$_2$ द्विजोत्तमः (→गृहाद्द्विजः). –c) ब$_1$ (अ)मुमोह, दे$_{10}$ स्वमोह (?), द$_1$ मुमोद (→मुमोह); ब$_3$ राज्यं, दे$_4$ राज-, न$_1$ राजा (→राज्य-); दे$_{1.5}$ °संत्यक्तस्, ग्र$_2$ °संतप्तस् (→°संसक्तः). –d) दे$_{10}$ तमः (?) (→ततः).

८५. –a) ग्र$_2$ साध° (→बाध°); ग्र$_1$ विप्रेन्द्र, ग्र$_2$ विप्रेन्द्रं (→विप्रेन्द्रान्). –b) न$_1$ अपि वेदं, द$_1$ न विभेद, ग्र$_2$ न वै वेदं, म$_1$ शापि देवं (→न विवेद). –d) दे$_3$ क्रोधश् (→क्रोधं).

८६. –b) दे$_{3.6}$ सुमहल् (→सुघोरं); ब$_2$ नाम, दे$_{2.3.6}$ लोम-(→रोम-). –d) दे$_{1.4.10}$ ते$_1$ द$_1$ प्रह्लादस्या° (→प्रह्लादस्या°); ब$_2$ प्रह्लादस्य सुरद्विषः, ग्र$_2$ प्रह्लादामरविद्विषः.

८७. –a) दे$_{8.9}$ मुवें. मुए. मुब. स (→तु); दे$_4$ समहद्, न$_1$ स चिरं (→सुमहद्); दे$_1$ कृतयो समभवद्युद्धं, दे$_{10}$ कृत्वा समभवद्युद्धं. –b) न$_1$ सहसा (→विष्णुना); दे$_{10}$ द$_1$ वर्जितः (→निर्जितः). –d) दे$_{1.4}$ न$_1$ द$_1$ ग्र$_1$ पुरुषो, दे$_5$ पुरुषैः (→पुरुषे); दे$_4$ परौ (?) (→हरौ). –f) दे$_2$ ययौ स शरणं हरिम्.

८८. –a) दे$_5$ ह्यमन्यां, म$_1$ ह्यादरात् (→ह्यनन्यां). –c) दे$_{4.10}$ नारायण-, ते$_1$ नारायणो (→नारायणे); ग्र$_2$ योगी (→योगम्).

वें. १.१६.६५ हिरण्यकशिपोः पुत्रे योगसंसक्तचेतसि ।
अवाप तन्महद् राज्यमन्धकोऽसुरपुंगवः ॥८९
हिरण्यनेत्रतनयः शंभोर्देहसमुद्भवः ।
मन्दरस्थामुमां देवीं चकमे पर्वतात्मजाम् ॥९०
पुरा दारुवने पुण्ये मुनयो गृहमेधिनः ।
ईश्वराराधनार्थाय तपश्चेरुः सहस्रशः ॥९१
ततः कदाचिन्महती कालयोगेन दुस्तरा ।
अनावृष्टिरतीवोग्रा ह्यासीद् भूतविनाशिनी ॥९२
समेत्य सर्वे मुनयो गौतमं तपसां निधिम् ।
अयाचन्त क्षुधाविष्टा आहारं प्राणधारणम् ॥९३
स तेभ्यः प्रददावन्नं मृष्टं बहुतरं बुधः ।
सर्वे बुभुजिरे विप्रा निर्विशङ्केन चेतसा ॥९४
गते तु द्वादशे वर्षे कल्पान्त इव शंकरी ।
बभूव वृष्टिर्महती यथापूर्वमभूज्जगत् ॥९५
ततः सर्वे मुनिवराः समामन्त्र्य परस्परम् ।
महर्षिं गौतमं प्रोचुर्गच्छाम इति वेगतः ॥९६
निवारयामास च तान् कंचित् कालं यथासुखम् ।
उषित्वा मद्गृहेऽवश्यं गच्छध्वमिति पण्डिताः ॥९७
ततो मायामयीं सृष्ट्वा कृशां गां सर्व एव ते ।
समीपं प्रापयामासुर्गौतमस्य महात्मनः ॥९८
सोऽनुवीक्ष्य कृपाविष्टस्तस्याः संरक्षणोत्सुकः ।
गोष्ठे तां बन्धयामास स्पृष्टमात्रा ममार सा ॥९९

---

८९. –a) दे1 पुत्रो (→पुत्रे). –b) का1 ब2.3 दे2.5 °संयुक्त°, दे4 °संशक्त°, ग्र2 °संहर्त्त° (?) (→°संसक्त°). –c) का1 ब2 दे2.5.10 ग्र1 म1 महाराज्यं, ग्र2 महाप्राज्ञ (→महद्राज्यं).

दे2. b, c मध्ये अधिकम्—

इति कौर्ममहापुराणे ॥ सूत उवाच.

९०. –a) का1 ब3 दे8.9 न1 °नयनः (→°तनयः); द1 ग्र1 हिरण्यनयनश्शंभोर्, ग्र2 हिरण्यतनयं शंभोर्, म1 हिरण्याक्षसुतश्शंभोर्. –b) ते1 शम्भोर्नेत्र°, द1 ग्र1.2 म1 नेत्रद्वय° (→शम्भोर्देह°). –c) ते1 महादेवीं, ग्र2 मुदान्देवीं, (→उमां देवीं); न1 मन्दरं तामुमादेवीं. –d) दे1 चकम्पे, ते1 चकमे, + कचमे (→चकमे).

९१. –a) दे2 रम्ये (→पुण्ये). –d) दे10 चक्रे, ते1 चक्रुः (→चेरुः).

९२. –a) दे1.2 ग्र2 महता (→महती). –b) दे3 दुस्तराः (→दुस्तरा). –c) दे4-6 अती चोग्रा, ग्र2 अतीव्योग्रा (→अतीवोग्रा). –d) ब1 विनाशनी (→विनाशिनी).

९३. –a) दे1.4.6 ते1 द1 ग्र1 म1 सर्व- (→सर्वे). –b) दे5 निधिः (→निधिं). –c) का1 ग्र2 म1 अयाचत, ब1 अया-चष्ट, दे1 अयांतस्ते (→अयाचन्त). –d) का1 ब1-3 दे2.5 न1 ते1 ह्याहारं, दे1 ह्यहारं, दे3.6 ह्याधारं (→आहारं); दे1 °धारकम् (→°धारणम्).

९४. –a) दे2 स तु तेभ्यः प्रदावन्नं. –b) का1 दे1 इष्टं, ब2 श्रेष्ठं, दे6 सृष्टं (→मृष्टं); दे6 °विधं, न1 °धरं (→°तरं); द1 ग्र1.2 म1 बुधाः (→बुधः); ग्र2 ****** बुधाः. –c) दे1 सर्वेषु भुज रे विप्र (?). –d) द1 ग्र2 तेजसा (→चेतसा).

९५. –a) दे1.8-10 मुवें. मुए. मुब. च (→तु). –b) ब2.3 इह (→इव); ब1 दे8.9 द1 ग्र1 मुवें. शाङ्करी, न1 शंकरि (→शंकरी). –c) ब2 म1 बभूव महती वृष्टिर् (म1 °ष्टिस्). –d) दे4 द1 ग्र1.2 म1 तोयपूर्ण, दे9 यया पूर्णं (→यथा पूर्वं); दे10 अयं जगत् (→अभूज्जगत्).

९६. –a) न1 द1 ग्र1.2 म1 तत्र (→ततः). –c) द1 महर्षिर् (→महर्षिं); का1 ब1.3 दे5 न1 द1 ग्र1 ब्रूयुर्, ब2 ब्रह्मन्, दे3.6 प्राहुर्, ते1 ब्रूयुः, + ब्रुवन्, म1 गत्वा (→प्रोचुर्). –d) ब3 दे1 गच्छतः (→वेगतः).

९७. –a) दे1.2.4 स तान् (→च तान्); दे5 विचार-यामास च तान्. –d) दे4 गच्छ त्वमतिपण्डिताः, न1 गन्तव्य-मिति पण्डिताः.

९७ श्लोकात् परं ग्र2. अधिकम्—

14. * इत्युक्त्वा सर्वमुनयो गौतम * महात्मना ।

९८. –a) दे1 दृष्ट्वा, द5 वध्या (→सृष्ट्वा). –b) का1 ब1.3 दे1.5 ते1 कृशांगीं (दे5 °गी), दे3 कृपांगा, दे6 कृषांगा, दे8-10 मुवें. मुए. मुब. कृष्णां गां (→कृशां गां); ब1 हि (→ते). –c) दे10 प्राप्नुया° (→प्रापया°).

९९. –a) द1 सोनुवीज्य, ग्र2 सोनुवेक्ष्य (→सोऽनुवीक्ष्य); दे1 °विष्टं, दे4 °दृष्टः (→°विष्टः). –b) म1 तस्मात् (→तस्याः). –c) दे1.10 बाधया°, दे2 निरुन्धया°, न1 वधया° (→बन्धया°). –d) ब3 पृष्ट° (→स्पृष्ट°).

स शोकेनाभिसंतप्तः कार्याकार्यं महामुनिः ।
न पश्यति स्म सहसा तादृशं मुनयोऽब्रुवन् ॥१००
गोवध्येयं द्विजश्रेष्ठ यावत् तव शरीरगा ।
तावत् तेऽन्नं न भोक्तव्यं गच्छामो वयमेव हि ॥१०१
तेन ते मुदिताः सन्तो देवदारुवनं शुभम् ।
जग्मुः पापवशं नीतास्तपश्चर्तुं यथा पुरा ॥१०२
स तेषां मायया जातां गोवध्यां गौतमो मुनिः ।
केनापि हेतुना ज्ञात्वा शशापातीवकोपनः ॥१०३
भविष्यन्ति त्रयीबाह्या महापातकिभिः समाः ।
बभूवुस्ते तथा शापाज्जायमानाः पुनः पुनः ॥१०४
सर्वे संप्राप्य देवेशं शंकरं विष्णुमव्ययम् ।
अस्तुवन् लौकिकैः स्तोत्रैरुच्छिष्टा इव सर्वगौ ॥१०५
देवदेवौ महादेवौ भक्तानामार्तिनाशनौ ।
कामवृत्त्या महायोगौ पापान्नस्त्रातुमर्हथः ॥१०६
तदा पार्श्वस्थितं विष्णुं संप्रेक्ष्य वृषभध्वजः ।
किमेतेषां भवेत् कार्यं प्राह पुण्यैषिणामिति ॥१०७
ततः स भगवान् विष्णुः शरण्यो भक्तवत्सलः ।
गोपतिं प्राह विप्रेन्द्रानालोक्य प्रणतान् हरिः ॥१०८
न वेदबाह्ये पुरुषे पुण्यलेशोऽपि शंकर ।
संगच्छते महादेव धर्मो वेदाद् विनिर्बभौ ॥१०९   कू १.१६.११५

१००. –a) दे$_1$ शोकेनापि° (→शोकेनाभि°). –b) दे$_1$ कार्यं, दे$_3$ कार्यः (→कार्या-). –c) दे$_6$ न$_1$ पश्यंति स्म (→पश्यति स्म). –d) दे$_1$ तान् दृष्ट्वा, दे$_{8-10}$ मुवें. मुए. मुब. तमृषिं, द$_1$ तां वीक्ष्य (→तादृशं); दे$_3$ तादृशं मुनयो ब्रवीत् (?), ग्र$_2$ तादृशं मुनिरब्रवीत्.

१०१. –a) का$_1$ गोवध्येयं, +गोवधोयं, दे$_{1.3.4}$ ग्र$_2$ म$_1$ गोवधोयं, द$_1$ गोवधेयं, ग्र$_1$ गोवधाय (→गोवध्येयं); न$_1$ म$_1$ °श्रेष्ठा (→°श्रेष्ठ). –b) का$_1$ ब$_1$ दे$_{10}$ शरीरगाः, दे$_{1.2.4.5.9}$ द$_1$ शरीरगः, ग्र$_{1.2}$ शरीरतः, म$_1$ शरीरगं (→शरीरगा). –c) ब$_1$ ते$_1$ द$_1$ ग्र$_{1.2}$ म$_1$ तावन्न तेन्नं (→तावत्तेन्नं). –d) दे$_4$ गच्छामोद्य वयं वहिः, द$_1$ ग्र$_{1.2}$ गच्छामोथ वयं वहिः, म$_1$ गच्छामोपि वयं बहिः .

१०२. –a) ब$_2$ दे$_{1.2.8-10}$ ग्र$_2$ तेन तेनुमताः, दे$_4$ तेन चारुदिताः, दे$_5$ मुब. तेन तेऽनुदिताः, म$_1$ तेन ते दूषिताः, मुवें. मुए. तेनातोनुमताः (→तेन ते मुदिताः). –c) का$_1$ दे$_{2.5}$ शाप° (→पाप°); ब$_{2.3}$ °वशा (→°वशं); दे$_{8-10}$ मुवें. मुए. नीत्वा (→नीतास् ). –d) दे$_2$ तपस्तेपुर् (→तपश्चर्तुं).

१०३. –a) का$_1$ दे$_1$ जातो, दे$_2$ जातं, दे$_6$ जाता (→जातां). –b) दे$_1$ गोवधो, दे$_2$ गोवधं (→गोवध्यां). –c) दे$_{10}$ त्वज्ञा (?) (→ज्ञात्वा). –d) म$_1$ शशापातीत- (→शशापातीव); ब$_1$ दे$_{1.3.4.8-10}$ मुवें. मुए. मुब. °कोपतः (→°कोपनः).

१०४. –a) का$_1$ ब$_{1-3}$ दे$_{3.5.6}$ न$_1$ ते$_1$ भविष्यध्वं, दे$_2$ द$_1$ ग्र$_1$ म$_1$ भविष्यथ (→भविष्यन्ति); ग्र$_2$ विविच्य धात्रीथीबाह्या. –b) म$_1$ °पातकिनस् (→°पातकिभिस् ). –c) दे$_{8-10}$ मुवें. मुए. मुब. बहुशस् (→बभूवुस् ); दे$_1$ ततः, दे$_2$ तदा, ग्र$_2$ यथा (→तथा); न$_1$ शप्ता (→शापाज् ). –d) ब$_1$ न$_1$ ग्र$_2$ म$_1$ जायमानः (→जायमानाः).

१०५. –a) का$_1$ सर्वेशं (→सर्वे सं-); दे$_{10}$ देवेषु (→देवेशं). –b) न$_1$ एव च (→अव्ययं). –d) ग्र$_2$ *क्रुष्ट (?) (→उच्छिष्टा); दे$_4$ सर्वकाः, ते$_1$ सर्वगैः, द$_1$ ग्र$_2$ सेवकाः, ग्र$_1$ सायकाः, म$_1$ साधकाः (→सर्वगौ).

१०६. –a) दे$_{1.2}$ ऊचुर्देवो, दे$_3$ देवे देवौ, दे$_{4.10}$ देवदेवो, ग्र$_2$ देवदेव- (→देवदेवौ); दे$_4$ महादेवो (→महादेवौ); दे$_1$ °नाशकौ, दे$_4$ °नाशनः, म$_1$ °शासनौ (→°नाशनौ). –c) का$_1$ कामवृत्तिर् , ब$_1$ दे$_{2.3.5.6}$ कालो वृत्तिर् , ब$_2$ कालमूर्त्ती, ब$_3$ कालौ वृत्ती, दे$_1$ कामो वृत्तिर् , दे$_4$ यानो वृत्तिर् , न$_1$ यानोर्वत्तिर् (?), ते$_1$ द$_1$ ग्र$_1$ म$_1$ कानो वृत्तिर्, ग्र$_2$ कौलावृत्तिर् (→कामवृत्त्या); का$_1$ महायोगी, दे$_4$ महायोग (→महायोगौ). –d) का$_1$ पपार्था (?), दे$_2$ विप्रान् नस् , दे$_5$ पापार्तां, द$_1$ पापान्नास् (→पापान्नस् ); का$_1$ दे$_5$ म$_1$ अर्हथ, दे$_1$ अर्हसि, दे$_4$ अर्हति, दे$_{8-10}$ मुवें. मुए. मुब. अर्हतः (→अर्हथः).

१०७. म$_1$. d ⊙. –a) ब$_1$ तथा, दे$_4$ द$_1$ ग्र$_1$ म$_1$ ततः (→तदा); दे$_6$ °स्थिता(?), न$_1$ °स्थितिं(?) (→°स्थितं). –b) दे$_6$ °ध्वजं (→°ध्वजः). –c) दे$_4$ द$_1$ ग्र$_2$ यत्किं तेषां, (→किमेतेषां); का$_1$ भवत् (→भवेत्); ग्र$_1$ यमस्तेषां भवेत्केन. –d) दे$_4$ प्राप्यं, ग्र$_1$ भण (→प्राह); का$_1$ पुण्यैषिनाम्, दे$_1$ पुण्येष्विनाम्, ग्र$_{1.2}$ म$_1$ पुण्येषि (म$_1$ °ष)णाम् (→पुण्यैषिणाम्); दे$_2$ ग्र$_2$ अपि, दे$_4$ इते(?) (→इति).

१०८. म$_1$. ⊙. –b) दे$_3$ शरण्यौ(?) (→शरण्यो); दे$_5$ भक्ति° (→भक्त°). –c) ग्र$_2$ गोपतिः (→गोपतिं); ग्र$_2$ विप्रेशं (→विप्रेन्द्रान्). –d) ग्र$_2$ दातालोक्य(?) (→आलोक्य); दे$_{10}$ हरिम् (→हरिः).

१०९. –a) न$_1$ द$_1$ ग्र$_2$ म$_1$ °बाह्य- (→°बाह्ये); दे$_4$ पुरुषो, न$_1$ पुर्षे (→पुरुषे). –b) ब$_1$ पुण्यलेशश्च, दे$_4$ पुण्यःलेषोपि, ग्र$_2$ पुण्यलोकोपि (→पुण्यलेशोपि); का$_1$ ब$_3$ दे$_{10}$

बें१.१६.११६ तथापि भक्तवात्सल्याद् रक्षितव्या महेश्वर ।
अस्माभिः सर्व एवेमे गन्तारो नरकानपि ।।११०
तस्माद् वै वेदबाह्यानां रक्षणार्थाय पापिनाम् ।
विमोहनाय शास्त्राणि करिष्यामो वृषध्वज ।।१११
एवं संबोधितो रुद्रो माधवेन मुरारिणा ।
चकार मोहशास्त्राणि केशवोऽपि शिवेरितः ।।११२
कापालं नाकुलं वामं भैरवं पूर्वपश्चिमम् ।
पञ्चरात्रं पाशुपतं तथान्यानि सहस्रशः ।।११३
सृष्ट्वा तानूचतुर्देवौ कुर्वाणाः शास्त्रचोदितम् ।
पतन्तो निरये घोरे बहून् कल्पान् पुनः पुनः ।।११४
जायन्तो मानुषे लोके क्षीणपापचयास्ततः ।
ईश्वराराधनबलाद् गच्छध्वं सुकृतां गतिम् ।
वर्तध्वं मत्प्रसादेन नान्यथा निष्कृतिर्हि वः ।।११५
एवमीश्वरविष्णुभ्यां चोदितास्ते महर्षयः ।
आदेशं प्रत्यपद्यन्त शिरसाऽसुरविद्विषोः ।।११६

---

ग्र$_{1.2}$ शंकरः (→शंकर). –c) का$_1$ ब$_{2.3}$ दे$_{3.5.6}$ संगच्छति, दे$_{10}$ संगच्छसे, ग्र$_2$ संगच्छन्ते (→संगच्छते); का$_1$ ब$_3$ °देवं (→°देव). –d) ग्र$_2$ पुण्यो (→धर्मो); ब$_3$ वेदा वि-, दे$_4$ वेदान्वि-, दे$_{10}$ वेदाधि-, ग्र$_{1.2}$ वेदार्थ-, म$_1$ वेदाद्धि (→वेदाद् वि-); न$_1$ वेदाद् धर्मो हि निर्बभौ.

११०. –a) ब$_3$ दे$_{1.4-6}$ भक्ति-, दे$_9$ भक्ता (→भक्त-). –b) दे$_1$ रक्षितव्यो, दे$_{10}$ ईप्सितव्यो (→रक्षितव्या); ब$_1$ दे$_{5.6}$ द$_1$ महेश्वरः, दे$_4$ महाश्वरान् (→महेश्वर). –c) न$_1$ आवाह्या (→अस्माभिः); का$_1$ एवं मे(?); दे$_{1.2.8-10}$ न$_1$ मुवें. मुए. मुब. एवैते (→एवेमे). –d) न$_1$ विप्रा वै नात्र संशयः.

१११. दे$_{10}$. ११०d–१११c ⊙ (द्र. सं). –a) दे$_{8-10}$ मुवें. मुए. मुब. तस्माद्धि (→तस्माद्वै); दे$_4$ देव° (→वेद°). –b) ब$_2$ रक्षणाय च, दे$_3$ रञ्जनार्थाय (→रक्षणार्थाय); ब$_1$ प्राणिनाम् (→पापिनाम्). –c) का$_1$ दे$_5$ न$_1$ विमोहनानि, दे$_9$ विमोहनायथ(?), ग्र$_1$ विमोहन ना(?), म$_1$ विमोहनाग्नि(?) (→विमोहनाय). –d) ब$_1$ दे$_{3-6}$ न$_1$ ते$_1$ द$_1$ ग्र$_1$ म$_1$ करिष्यावो (→करिष्यामो); दे$_{1.3.6}$ ग्र$_{1.2}$ म$_1$ मुवें. मुए. मुब. °ध्वजः, दे$_4$ °ध्वजम् (→°ध्वज).

११२. दे$_{10}$. abc ⊙. –a) का$_1$ संबोधितो, + संभाषितो, दे$_2$ संभावितो (→संबोधितो). –b) का$_1$ माधवेन सुरा°, + माधवेनासुरा°, दे$_{1-3.5.6}$ ते$_1$ माधवेना (दे$_5$ ते$_1$ °न, दे$_6$ °ण) सुरा° (→माधवेन मुरा°). –d) दे$_1$ शिवे रतिः, दे$_{10}$ शिवे रतः (→शिवेरितः); दे$_4$ केशिवोऽपि शिवोपि च, ग्र$_2$ केशवोपि निवेशितः.

११३. –a) ब$_{2.3}$ दे$_1$ द$_1$ कपालं, दे$_{3.6}$ सपालं, (→कापालं); का$_1$ दे$_5$ लाङ्गलं, ब$_3$ नकुलं, दे$_1$ जामलं, दे$_2$ लाकुचं, + लाङ्गलं, दे$_{8-10}$ न$_1$ द$_1$ ग्र$_1$ लाकुलं, ते$_1$ लागलं म$_1$ लकुटं (→नाकुलं); दे$_1$ (मा)वामं, दे$_6$ वाम-, ते$_1$ चापि, ग्र$_1$ यामं (→वामं). –b) द$_1$ °पश्चिमे (→°पश्चिमं); दे$_1$ भैरवं पार्श्वपाश्चिमम्. –ab) दे$_4$ कापालत्वा ************. –c) दे$_4$ ग्र$_{1.2}$ पाञ्चरात्रं, दे$_5$ पाञ्चपात्रं, दे$_{10}$ पञ्चरात्रि (→पञ्चरात्रं); दे$_5$ पाशुशूतं, दे$_{10}$ पाशुपतिं (→पाशुपतं). –d) दे$_1$ चान्यानि च, दे$_5$ तयान्यानि (→तथान्यानि).

११४. –a) का$_1$ दे$_{3.6}$ देवो (→देवौ); दे$_{8-10}$ मुवें. मुए. मुब. सृष्ट्वा ता (दे$_{10}$ °तां?)न्या (मुवें. मुए. मुब. °ना) ह (दे$_9$ °हः) निर्वेदाः. –b) दे$_4$ ग्र$_2$ कुर्वाणौ, न$_1$ कर्बाणाः, द$_1$ कुर्वाणः (→कुर्वाणाः); द$_1$ ग्र$_{1.2}$ म$_1$ °बोधितम् (ग्र$_2$ °तौ, म$_1$ °तः) (→°चोदितम्). –c) का$_1$ दे$_{2.5}$ पतन्ते, ब$_1$ तपन्ते, दे$_3$ एतत्ते, द$_1$ ग्र$_{1.2}$ म$_1$ पतन्ति (→पतन्तो); दे$_{8-10}$ म$_1$ मुवें. मुए. मुब. नरके (→निरये). –d) दे$_2$ अब्दाम्, दे$_5$ कल्प्यान्, न$_1$ कालान् (→कल्पान्).

११५. दे$_{10}$. ११५ e–११६ b ⊙; ग्र$_2$. ११५ b 'ततः' इत्यारभ्य ११७b 'रताः' यावत् ⊙. –a) का$_1$ ब$_3$ दे$_{1-3.6.10}$ ते$_1$ जायन्ते, दे$_4$ जयन्ते, दे$_5$ श्रूयते, द$_1$ सञ्जातो, ग्र$_1$ सञ्जाते, म$_1$ सञ्जातः, ग्र$_2$ एवन्ते (→जायन्तो). –b) का$_1$ ब$_{1-3}$ दे$_{3-6}$ °पुण्य° (→°पाप°); न$_1$ क्षीणपुण्यरयास्ततः, द$_1$ क्षीणपुण्यचयास्तु नः, ग्र$_1$ क्षीणो पुण्यचयोस्तु वः, ग्र$_2$ क्षेमपुण्यचया **, म$_1$ क्षीणपापचयास्थितः. –c) दे$_2$ °पराः (→°बलाद्). –d) दे$_{3.6}$ सुहृदां (→सुकृतां). –e) का$_1$ न$_1$ अप्रदानेन, ब$_{2.3}$ ग्र$_1$ म$_1$ अप्रमादेन, दे$_3$ द$_1$ अप्रसादेन, दे$_5$ सप्रसादेन (?) (→मत्प्रसादेन); दे$_4$ तत्तद्धर्मप्रमादेन. –f) दे$_1$ नान्या निस्कृतिहेतवः, दे$_4$ द$_1$ ग्र$_1$ म$_1$ नान्यथास्ति गतिर्हि (दे$_4$ दि) वः.

११६. ग्र$_2$. ⊙; दे$_{10}$. ab ⊙. –b) दे$_4$ द$_1$ ग्र$_1$ म$_1$ बोधितास्, दे$_6$ चोदितस्, ते$_1$ भोधितास् (?) (→चोदितास्). –c) का$_1$ आदेशः, दे$_1$ अदेशं (→आदेशं); दे$_2$ तत्प्रपद्यन्त, दे$_5$ सत्प्रपद्यन्त, दे$_6$ प्रत्ययद्वाक्यं, दे$_{10}$ प्रत्यपद्येत, न$_1$ प्रतिपद्यन्त (→प्रत्यपद्यन्त). –d) दे$_3$ खरसा, दे$_6$ सुरसां, दे$_{8-10}$ मुवें. मुए. मुब. शिवस्या-, ते$_1$ शिरस्य (→शिरसा-); दे$_3$ स्वर-, दे$_6$

चक्रुस्तेऽन्यानि शास्त्राणि तत्र तत्र रताः पुनः ।
शिष्यानध्यापयामासुर्दर्शयित्वा फलानि तु ॥११७
मोहयन्त इमं लोकमवतीर्य महीतले ।
चकार शंकरो भिक्षां हितायैषां द्विजैः सह ॥११८
कपालमालाभरणः प्रेतभस्मावगुण्ठितः ।
विमोहयँल्लोकमिमं जटामण्डलमण्डितः ॥११९
निक्षिप्य पार्वतीं देवीं विष्णावमिततेजसि ।
नियोज्याङ्गभवं रुद्रं भैरवं दुष्टनिग्रहे ॥१२०
दत्त्वा नारायणे देवीं नन्दिनं कुलनन्दिनम् ।
संस्थाप्य तत्र गणपान् देवानिन्द्रपुरोगमान् ॥१२१

प्रस्थितेऽथ महादेवे विष्णुर्विश्वतनुः स्वयम् ।
स्त्रीरूपधारी नियतं सेवते स्म महेश्वरीम् ॥१२२
ब्रह्मा हुताशनः शक्रो यमोऽन्ये सुरपुंगवाः ।
सिषेविरे महादेवीं स्त्रीवेशं शोभनं गताः ॥१२३
नन्दीश्वरश्च भगवान् शंभोरत्यन्तवल्लभः ।
द्वारदेशे गणाध्यक्षो यथापूर्वमतिष्ठत ॥१२४
एतस्मिन्नन्तरे दैत्यो ह्यन्धको नाम दुर्मतिः ।
आहर्तुकामो गिरिजामाजगामाथ मन्दरम् ॥१२५
संप्राप्तमन्धकं दृष्ट्वा शंकरः कालभैरवः ।
न्यषेधयदमेयात्मा कालरूपधरो हरः ॥१२६  वे१.१६.१३३

---

वर- (→[अ]सुर-); दे1-विद्विषौ, दे3.5- विद्विषाः, दे8-10 न1 मुवें. मुए. मुब.-विद्विषः, ते1-विद्विषः,+-विद्विषाः(→-विद्विषोः)

**११७.** अ2. ab 'चक्रु'''रताः' यावत् ⊙. –a) ब3 शस्त्राणि (→शास्त्राणि). –b) दे4 च ताः (→रताः). –d) ब2 दे8-10 मुवें. मुए. मुब. च, दे1 नु (→तु).

**११८.** –a) का1 ब2 दे2.3.5 अ2 मोहयन्तं, दे4 मोहयन्ते (→मोहयन्त); का1 द1 इमां (→इमं); दे1 मोहयन् सप्तमं लोकं, दे8-10 मोहाय स इमं लोकम्, मुवें. मुए. मोहापसदनं लोकम्. –b) अ2 महतीर्य महीतलम् (?). –c) ब1 चकारो (?) (→चकार); दे3 भिञ्जां (→भिक्षां). –d) म1 हितायेष्ट (→हितायैषां); ब1 द्विजाः (?) (→द्विजैः); का1 सहा (→सह).

**११९.** –a) दे4.10 °भरणाः (→°भरणः) –b) का1 ब2.3 दे5 °भस्माभि° (→°भस्माव°); दे4 °कुण्ठिताः, न1 द1 अ1 म1 °कुण्ठितः, ते1 °कुण्ठिताः, अ2 °कुण्ठनः(→°गुण्ठितः); दे1 शिवः भस्मावकुण्ठितः. –c) दे4 इदं (→इमं). –d) दे1 जटामुकुट°, दे4 जलामण्डल° (→जटामण्डल°).

**१२०.** –a) दे2 देवो (→देवीं). –b) ब1.3 विष्णोरमित°, दे10 द1 विष्ण्वावमित°, म1 विष्णावेमित° (→विष्णावमित°); अ2 विष्णो वा कृतवानसि. –c) दे1.4 नियोज्य भगवान् रुद्रं, दे8-10 मुवें. मुए. मुब. नियोज्य भगवान् रुद्रो, द1 अ1.2 म1 नियोक्ष्य (म1 °ज्य) भगवान् रुद्रं. –d) का1 ब3 दे1.4.5 ते1 अ1.2 म1 °निग्रहं (दे5 °हां), द1 °विग्रहं (→°निग्रहे).

**१२१.** –a) दे1.2 कृत्वा, दे5 दृष्ट्वा, द1 अ1 म1 हित्वा (→दत्त्वा); का1 दे1.5 न1 द1 नारायणो, अ2 म1 नारायणं (→नारायणे); का1 ब3 दे2.8 ते1 देव्यां, ब1 मुवें. मुए. मुब. देव्या, दे3 दिव्यां, दे5 देव्यै, दे6 दिव्यं (→देवीं); दे4 देव्याश्च रक्षणार्थाय. –b) दे9 नन्दितं, मुवें. मुए. मुब. नन्दनं (→नन्दिनं); का1 °नन्दितं, दे5 °नन्दिनां, मुवें. मुए. मुब. °नन्दनं (→°नन्दिनं). –c) दे8-10 मुवें. मुए. मुब. च गणान्(→गणपान्). –cd) ब3 संस्थाप्य गणपान् देवानिन्द्रग्निपुरोगमान्.

**१२२.** –a) दे1.2.8-10 द1 अ1.2 म1 मुवें मुए. मुब. च (→[अ]थ). –b) दे1 शिवः (→स्वयं); का1 विष्णुर्विश्वस्वयंतनुः. –c) दे1 ते1 श्रीरूप°, अ2 श्रीवेष° (→स्त्रीरूप°); का1 ब1-3 दे2.3.5.6 न1 ते1 नियतः, द1 अ1.2 म1 पुरुषः (→नियतं). –d) ते1 °श्वरम् (→°श्वरीम्); अ2 प्रपेदे स महेश्वरीम्.

**१२३.** –a) म1 हुताग्निः (→हुताशनः); का1 दे5 शुक्रो (→शक्रो); अ2 ब्रह्मभूताशनः शक्रो. –b) दे5 यमो मे, दे10 यमो नो, अ2 यमोन्य- (→यमोऽन्ये); दे10 °पुङ्गवः (→°पुङ्गवाः). –c) ब1 शिषेविरे, दे10 सिषेवरे, ते1 निषेविरे (→सिषेविरे); मुवें मदादेवीं(?) (→महादेवीं). –d) दे4 श्रीवेशं, दे8-10 मुवें. मुए. मुब. स्त्रीरूपं (→स्त्रीवेशं); दे1 तथा, दे10 गता, ते1 गता, + गताः, द1 गतां (→गताः).

**१२४.** –a) दे2 °श्वरःस, दे4 °श्वरोथ, द1 अ1 म1 °श्वरोपि (→°श्वरश्च). –b) दे1 °वर्गवः(?), द1 अ1 म1 °वत्सलः (→°वल्लभः). –c) अ2 °देशो, म1 °पूर्वे (→°देशे). –d) दे1 °ध्रुवम्(?), दे2 °वत्सम्(?) (→°पूर्वम्); ब3 अतिष्ठतः, दे2 अवस्थितः, दे5 अतिवृत(?), अ1 अधिष्ठित (→अतिष्ठत).

**१२५.** –b) दे1 अन्धको (→ह्यन्धको). –c) ब3 समाजगामाथ, अ2 जगामाथ च (→आजगामाथ). –d) का1 ब1-3 दे1.2.4.10 द1 अ2 म1 मन्दिरम् (→मन्दरं). –cd) दे2 आहर्तुं गिरिजां देवीमयया(?) हरिमन्दिरम्.

**१२६.** –b) अ2 °भैरवं (→°भैरवः). –c) दे1 निषे° (→न्यषे°); दे4 ताडयामास वेगेन. –d) ब1 °रूपो (→°रूप-).

वें१.१६.१३३ तयोः समभवद् युद्धं सुघोरं रोमहर्षणम् ।
शूलेनोरसि तं दैत्यमाजघान वृषध्वजः ।।१२७
ततः सहस्रशो दैत्यः ससर्जान्धिकसंज्ञितान् ।
नन्दिषेणादयो दैत्यैरन्धकैरभिनिर्जिताः ।।१२८
घण्टाकर्णो मेघनादश्चण्डेशश्चण्डतापनः ।
विनायको मेघवाहः सोमनन्दी च वैद्युतः ।।१२९
सर्वेऽन्धकं दैत्यवरं संप्राप्यातिबलान्विताः ।
युयुधुः शूलशक्त्यृष्टिगिरिकूटपरश्वधैः ।।१३०
भ्रामयित्वाऽथ हस्ताभ्यां गृहीतचरणद्वयाः ।
दैत्येन्द्रेणातिबलिना क्षिप्तास्ते शतयोजनम् ।।१३१
ततोऽन्धकनिसृष्टास्ते शतशोऽथ सहस्रशः ।
कालसूर्यप्रतीकाशा भैरवं त्वभिदुद्रुवुः ।।१३२
हा हेति शब्दः सुमहान् बभूवातिभयंकरः ।
युयोध भैरवो रुद्रः शूलमादाय भीषणम् ।।१३३
दृष्ट्वाऽन्धकानां सुबलं दुर्जयं तर्जितो हरः ।
जगाम शरणं देवं वासुदेवमजं विभुम् ।।१३४
सोऽसृजद् भगवान् विष्णुर्देवीनां शतमुत्तमम् ।
देवीपार्श्वस्थितो देवो विनाशायामरद्विषाम् ।।१३५

१२७. –b) ब3 दे2.3 ते1 लोम° (→रोम°); दे5 सुघोरं लोमहर्षणाम्. –c) द1 ग्र1.2 म1 दैत्यं तं (→तं दैत्यं). –d) दे5 आजगाम (→आजघान); दे6 °ध्वज (→°ध्वजः).

१२८. –a) ब1 दे8-10 मुवें मुए. दैत्याः, दे1.5 द1 ग्र1.2 म1 दैत्यान् (→दैत्यः). –b) ब3 °सम्मितान् (→°संज्ञितान्); दे8-10 मुवें. मुए. सहस्रान्धकसंज्ञिताः. –c) का1 नन्दिकेशादयो, ब1 ते1 नन्दिशेषादयो, ब2 दे8-10 मुवें. मुए. मुब. नन्दीश्वरादयो, ब3 दे3.6 द1 ग्र1.2 म1 नन्दि (दे3.6 °न्दी) सेनादयो, दे2 नन्दीशाद्याश्च तैर्, दे4 नन्दी सेनाययौ (→नन्दिषेणादयो). –d) दे1 अभिवर्जिताः, दे2 अभितर्जिताः दे4 अपि निर्जिता, द1 ग्र1 म1 अतिनिर्जिताः, ग्र2 अभि**ताः (→अभिनिर्जिताः).

१२९. ग्र1. ⊙. –a) दे4 द1 पूर्ण-, ग्र2 पूर्ण (→घण्टा-°); दे1 °करणे (→°कर्णो). –b) का1 चण्डीशश्, दे5 चण्डिशः, द1 म1 खण्डश (→चण्डेशश्); ब1 ते1 चन्द्रता°, द1 म1 खण्डता° (→चण्डता°); दे1 चण्डतापनचण्डतः, ग्र2*** खर्णवादनः. –c) का1 दे5 °वाहुः, दे2 ते1 °नादः, न1 °वहः (→°वाहः). –d) दे6 सोमं (→सोम-); का1 ब1-3 दे3.5 6 ते1 विशांपतिः, दे1 च वंद्युतिः, दे2 च विद्युतः, दे4*भद्युतिः, दे10 च वैद्यतः, न1 च विद्यतिः, द1 ग्र2 म1 च विद्युतिः (→च वैद्युतः).

१३०. ग्र1. ab ⊙. –a) दे3 सर्वेन्धकदेववरं, दे6 सर्वेन्ध*****. –b) दे2 संप्राप्याथ, दे3 संप्राप्याभि- (→संप्राप्याति-); का1 दे5 °न्वितं, ग्र2 •न्वितः (→°न्विताः). –c) दे1 °शक्त्याष्टि-, दे2 °शक्तिष्टि-, दे4 द1 °शक्त्यष्टि-, दे5 °शत्कृष्णि-, दे10 °शक्त्यष्टौ-, ग्र2 °शक्रयष्टि- (→°शक्त्यृष्टि-). –d) का1 ब3 दे1 -परस्व° (→-परश्व°); ग्र2 गिरि******.

१३१. –a) दे1.2.6 स हस्ता (दे2 °स्ता)भ्यां, दे8.9 सुहस्ताभ्यां, मुवें. मुए. मुब. तु हस्ताभ्यां (→[अ]थ हस्ताभ्यां). –b) दे2.8-10 मुवें. मुए. मुब. गृहीत्वा, दे3 गृहीव (→गृहीत-); का1 दे2 ग्र2 -द्वयं, दे1.8 -द्वयोः, दे4.9.10 मुए. मुब. -द्वये, ग्र1 -युधाः, मुवें. -द्वय (→-द्वयाः). –c) का1 दे3.6 दैत्येन्द्रे (दे6 °दे?) नाभि (का1 °ति) (→दैत्येन्द्रेणाति°). –d) दे3.6 क्षिप्रास्ते (→क्षिप्तास्ते); का1 दे3 शतशो (दे3 °यो) जलं, ब3 दे4.6 शतशो(दे4 °सो) जनं (दे6 °णाः?) (→शतयोजनम्).

१३२. –a) दे5 °निशब्दास् (→°निसृष्टास्); दे8-10 मुवें. मुए. मुब. ये (→ते). –c) दे2 °रूप- (→°सूर्य-); दे3 -काशं, दे2 -काशो, दे4 द1 ग्र2 म1 -काशैः, ग्र1 -कारैः (→-काशा). –d) दे4 द1 ग्र1 म1 भैरवैस् (→भैरवं); दे8-10 मुवें. मुए. मुब. चाभि°, दे4 म1 अभि°, ग्र1 त्वति° (→त्वभि°).

१३३. –a) दे8-10 जहीति (→हा हेति); न1 दानः (?)(→शब्दः); ब1 स महान् (→सुमहान्). –b) दे3 °कराः (→°करः). –c) ग्र2 अयोध(ध?), मुवें. मुए. मुब. युयुधे (→युयोध); दे1.2.8-10 मुवें. मुए. मुब. देवः (→रुद्रः). –d) दे8-10 मुवें. मुए. मुब. भैरवम् (→भीषणम्).

१३४. ग्र2. d ⊙. –a) द1 दृष्ट्वान्धको मे (→दृष्ट्वाऽन्धकानां); का1 दे8-10 सबलं, ब2.3 दे1 स्वबलं (→सुबलं). –b) दे1.8-10 न1 मुवें. मुए. मुब. निर्जितो (न1 °तं), दे4 तर्जितं, द1 तर्जिता, ग्र1 भीषणं, ग्र2 म1 भैरवो (→तर्जितो); न1 स्वयं (→हरः). –c) दे1 जगाम देवं शरणम्.

१३५. –b) न1 °मुत्तमा (→°मुत्तमम्). –d) न1 °द्विषं (→°द्विषां); दे8-10 मुवें. मुए. मुब. विनाशाय सुरद्विषाम्, ग्र2 नाशयामास विद्विषाम्.

तदाऽन्धकसहस्रं तु देवीभिर्यमसादनम् ।
नीतं केशवमाहात्म्याल्लीलयैव रणाजिरे ॥१३६
दृष्ट्वा पराहतं सैन्यमन्धकोऽपि महासुरः ।
पराङ्मुखो रणात् तस्मात् पलायत महाजवः ॥१३७
ततः क्रीडां महादेवः कृत्वा द्वादशवार्षिकीम् ।
हिताय लोके भक्तानामाजगामाथ मन्दरम् ॥१३८
संप्राप्तमीश्वरं ज्ञात्वा सर्व एव गणेश्वराः ।
समागम्योपतस्थुस्तं भानुमन्तमिव द्विजाः ॥१३९
प्रविश्य भवनं पुण्यमयुक्तानां दुरासदम् ।
ददर्श नन्दिनं देवं भैरवं केशवं शिवः ॥१४०
प्रणामप्रवणं देवं सोऽनुगृह्याथ नन्दिनम् ।
आघ्राय मूर्द्धनीशानः केशवं परिषस्वजे ॥१४१
दृष्ट्वा देवी महादेवं प्रीतिविस्फारितेक्षणा ।
ननाम शिरसा तस्य पादयोरीश्वरस्य सा ॥१४२
निवेद्य विजयं तस्मै शंकरायाथ शंकरी ।
भैरवो विष्णुमाहात्म्यं प्रणतः पार्श्वगोऽवदत् ॥१४३
श्रुत्वा तद्विजयं शंभुर्विक्रमं केशवस्य च ।
समास्ते भगवानीशो देव्या सह वरासने ॥१४४
ततो देवगणाः सर्वे मरीचिप्रमुखा द्विजाः ।
आजग्मुर्मन्दरं द्रष्टुं देवदेवं त्रिलोचनम् ॥१४५　वें १.१६.१५२

१३६. –a) दे4 द1 ग्र1.2 तथा (→तदा); ब1.3 दे2.3.5.6 ते1 ग्र1 तद्, दे4 द1 तं (→तु). –b) दे3.6 देवीनि (दे3 °ति)यम°, म1 देशभिर्यम° (→देवीभिर्यम°); दे10 देवीनियमसाधनम्. –c) दे6 माहात्म्य(?), ते1 माहात्म्यं (→माहात्म्यात्).

१३७. –a) दे1 दैत्यं, दे6 सेव्यं (→सैन्यं). –b) द1 ह्यन्धको (→अन्धको). –c) म1 ज्योतिर्मुखो (→पराङ्मुखो). –d) दे1 पद्यत(?) (→पलायत); ब1 दे6 महायवः, दे3 महाजवं, ते1 महाजवः, + महाजवं, द1 महासुराः (?). (→महाजवः).

१३८. –a) ब2 क्रीडा(→क्रीडां); दे1 महावेशां (→महादेवः). –b) ब1 दे1 °वार्षिकी (→°वार्षिकीम्). –c) का1 ब2.3 दे5 ग्र2 लोकभक्तानां, दे3.6.8-10 मुवें. मुए. मुब. भक्तलोकानाम् (→लोके भक्तानां). –d) का1 ब3 दे3.6 जगाम स च, ब1 ते1 जगाम च स, ब2 स जगाम च, दे4 न1 आजगाम च, म1 आजगामानु- (→आजगामाथ); ब2.3 दे1.10 न1 द1 ग्र2 म1 मन्दिरम् (→मन्दरम्).

१३९. –b) दे2 तदा सर्वे (→सर्व एव); ग्र2 म1 गुणेश्वराः (ग्र2 °रः) (→गणेश्वराः). –c) ब1 दे1.2.4 ते1 द1 ग्र1.2 म1 समागत्यो° (→समागम्यो°); दे8-10 मुवें. मुए. मुब. °पतिष्ठन्त (→°पतस्थुस्तं).

१४०. दे3. d ⊙. –a) ब2 प्रविशन्, ब3 प्रणम्य (→प्रविश्य); दे4 च वनं, दे9.10 भुवनं (→भवनं). –b) दे1.2 अभक्तानां, दे4 अशुद्धानां (→अयुक्तानां); दे3 दुरासदां (→दुरासदं). –c) दे10 तं देवदेवं, ग्र2 म1 नन्दिनं देवो (→नन्दिनं देवं). –d) का1 ब2.3 दे3.5.6 हरः (दे3.6 °रं), ब1 दे1.4 ते1 शिवं, न1 द1 ग्र1 म1 शिवां (द1 °वा) (→शिवः); ग्र2 भैरवं प्राहमवृणं (?).

१४१. ग्र2. a ⊙. –a) दे4 न1 °प्रणवं (→°प्रवणं); ब1 दे4 ग्र1 म1 देवः (→देवं); दे1 प्रणम्य प्रणतं देवं, दे2 प्रमाणप्रणतं देवं. –b) का1 सोनुगृह्यार्थ-, दे2 सोनुगृह्याप्य-दे4 सोनुगृह्य, ते1 सोनुग्राह्याथ, ग्र2 सोनुगृह्यस्तु (→सोनुगृह्याथ) –c) दे8-10 मुवें. मुए. मुब. प्रीत्यैनं पूर्वमीशानः, ग्र2 आघ्राय मूर्ध्निमीशानो. –d) द1 ग्र1.2 माधवं, म1 भैरवं (→केशवं); दे1 रिवज्यते (?) (→परिषस्वजे).

१४२. –a) दे1 ग्र2 देवं, दे8-10 देवीम्, मुवें. मुए. देवो (→देवी); दे8-10 मुवें. मुए. महादेवीं (→महादेवं); ते1 दृष्ट्वा दृष्ट्वाथ देव्योमा. –b) दे1 प्रीतिप्रस्फुरितेक्षणः, दे2 प्रीतिप्रस्तारितेक्षणा, दे8.9 द1 मुवें. मुए. मुब. प्री (दे8.9 द1 प्र) तिविस्फारितेक्षणाम्. –c) दे8-10 मुवें. मुए. प्रणतः (→ननाम); दे1 देवं, दे8 मुवें. मुए. तस्याः (→तस्य). –d) दे4 मूर्ध्नि तस्य, ग्र2 प्रणतस्य (→ईश्वरस्य); दे1 सः, दे8-10 मुवें. मुए. मुब. च (→सा).

१४३. –a) का1 ब1-3 दे3.5.6 निवेद्याह (दे6 द्यः) जयं तस्मै, दे8-10 मुवें. मुए. मुब. न्यवेदयन् (मुवें. त्) जयं तस्मै, न1 निवेद्य स जयं तस्मै. –b) का1 ब1-3 दे2.3.5.6.8-10 न1 ते1 मुवें. मुए. मुब. शंकरः, दे1 भैरवः (→शंकरी). –d) दे5 ब्रह्मणः, दे8 9 मुवें. मुए. मुब. प्रतीतः, दे10 प्रणीतः, म1 प्रत्रणः (→प्रणतः); का1 ब2.3 दे1-6.8-10 ते1 मुवें. मुए. मुब. पार्श्वगोऽभवत्, न1 पार्श्वगो भवान् (→पार्श्वगोऽवदत्).

१४४. –a) ब3 तद्विक्रमं, दे2 तु विजयं, दे8-10 मुवें. मुए. मुब. तं विजयं (→तद्विजयं). –b) दे1.2 न1 तु (→च). –d) दे10 ते1 म1 वरासन (?) (→वरासने).

१४५. –a) ते1 ततो गणाधिपास्सर्वे. –b) दे5 द्विज, दे10 द्विजः (→द्विजाः). –c) ग्र2 मन्दिरं (→मन्दरं).

१.१६.१५२ येन तद् विजितं पूर्वं देवीनां शतमुत्तमम् ।
समागतं दैत्यसैन्यमीशदर्शनवाञ्छया ॥१४६
दृष्ट्वा वरासनासीनं देव्या चन्द्रविभूषणम् ।
प्रणेमुरादराद् देव्यो गायन्ति स्मातिलालसाः ॥१४७
प्रणेमुर्गिरिजां देवीं वामपार्श्वे पिनाकिनः ।
देवासनगतं देवं नारायणमनामयम् ॥१४८
दृष्ट्वा सिंहासनासीनं देव्या नारायणेन च ।
प्रणम्य देवमीशानं पृष्टवत्यो वराङ्गनाः ॥१४९

कन्या ऊचुः ।❀

कस्त्वं विभ्राजसे कान्त्या केयं बालरविप्रभा ।
कोऽन्वयं भाति वपुषा पङ्कजायतलोचनः ॥१५०
निशम्य तासां वचनं वृषेन्द्रवरवाहनः ।
व्याजहार महायोगी भूताधिपतिरव्ययः ॥१५१
अहं नारायणो गौरी जगन्माता सनातनी ।
विभज्य संस्थितो देवः स्वात्मानं बहुधेश्वरः ॥१५२
न मे विदुः परं तत्त्वं देवाद्या न महर्षयः ।
एकोऽयं वेद विश्वात्मा भवानी विष्णुरेव च ॥१५३
अहं हि निष्क्रियः शान्तः केवलो निष्परिग्रहः ।
मामेव केशवं देवमाहुर्देवीमथाम्बिकाम् ॥१५४

---

१४६. –a) द1 सृजितं (?) (→विजितं). –b) दे1 देवानां (→देवीनां); दे3 शतरुत्तमं (→शतमुत्तमम्). –c) द1 देव° (→दैत्य°). –d) दे8-10 न1 मुवें. मुए. मुब. °काङ्क्षया (→°वाञ्छया).

१४७. द1 ग्र1. १४७c–१४६b ⊙. –b) का1 ब2.3 दे3.5.6 द1 °विभूषितम् (दे5 °ताम्) (→°विभूषणम्); ग्र1 देव्या नारायणेन च. –c) ब1 दे1 देव्या, ब2 ते1 देवा, दे10 देव्यै (→देव्यो). –d) ब1.3 दे3.4.6 स्मानि (ब3 दे4 °ति) लालसा, दे1 स्मरति लालसाः, ग्र2 स्म समाकुलाः (→स्मातिलालसाः).

१४८. द1 ग्र1. ⊙; दे10. bc ⊙; न1. १४८c–१५४ b ⊙. –a) दे4 ग्र2 गिरिजा, दे3.6 दिविजां (दे6 °जं) (→गिरिजां). –c) दे8.9 मुवें. मुए. °गतां देवीं, दे3.6 °गतं देवीं (→°गतं देवं); दे4.5 दिव्यासन (दे4 °ना) गतं देवं. –d) ब1 °मनोमयं, दे8-10 मुवें. मुए. मुब. °मनोमयीम् (→°मनामयम्).

१४९. न1. ⊙; द1 ग्र1. ab ⊙. –a) दे10 °रूढां (→°सीनम्). –b) ग्र2 दण्डचा (→देव्या); दे2 वा (→च); दे8-10 मुवें. मुए. देव्यो नारायणं तथा. –c) द1 प्रणम्य भैरवं देवं. –d) का1 दे10 पृष्टवन्त्यो, ब1.3 दे5.6 ते1 ग्र1.2 दृष्टवत्यो (दे6 °न्त्यो), ब2 तुष्टुवुस्ता, ग्र2 दृष्टन्त्येव (→पृष्टवत्यो); द1 गायन्ति स्म सुराङ्गनाः.

❀ न1 द1. ⊙; दे1 श्रीदेव्युवाच; ते1 ग्र1.2 म1 कन्याः.

१५०. न1. ⊙. –a) दे10 कंश्चि विभ्राजते केन्यो(?). –b) ब2 दे8-10 द1 ग्र1 मुवें. मुए. मुब. बाला (→बाल-); दे1 केयं बालेन्दुसन्निभा. –c) का1 दे9.10 का त्वियं भाति, दे1 कोयं संभाति, दे2 कानुयं भाति, ग्र2 को वयं भाति (→कोन्वयं भाति). –d) का1 दे9.10 °लोचना, दे8 °लोचन, ग्र1 °लोचनाः (→°लोचनः).

१५१. न1. ⊙; दे6. ab ⊙. –a) का1 निसम्य (→निशम्य); द1 ग्र1.2 म1 वचनं तासां (→तासां वचनं). –d) दे5 भूतादि° (→भूताधि°).

१५१ श्लोकात् परं म1 अधिकम्–ईश्वरः.

१५२. न1. ⊙. –a) दे1.8-10 दे1 ग्र1.2 म1 मुवें. मुए. मुब. अयं (→अहं); ग्र2 म1 देवी (→गौरी). –b) का1 सनातनः, + सनातनी, ब2.3 दे3-6.8-10 मुवें. मुए. मुब. सनातनः, दे1 सनातना (→सनातनी). –c) दे5 विसृज्यं, दे10 निसृज्ज(?) (→विभज्य); दे8 मुवें. मुए. मुब. संस्तितो, द1 ग्र1.2 म1 संस्थिता (→संस्थितो); ब2 देहं, द1 ग्र1.2 म1 देवी (→देवः). –d) ते1 च गणेश्वरः, द1 ग्र1 म1 बहुधेश्वरं (→बहुधेश्वरः).

१५३. न1. ⊙. –b) का1 ब3 दे2.3.5.6 न देवा न, ब1 ग्र1 म1 देव्याद्या न, ब2 नमो देवा, दे1 स देवाद्या, दे4 वेदवाद्यान्, दे8.9 मुवें. मुए. मुब. देव्याश्च न, दे10 देवांश्चैव, (→देवाद्या न). –c) दे4 द1 ग्र1.2 म1 एकोहं (→एकोऽयं); ग्र2 देव- (→वेद). –d) दे1 भवानिविश्वरेव च.

१५४. न1. ab ⊙. –a) दे4 न नियः (?), दे6 निःश्रियः, दे8-10 मुवें. मुए. मुब. निस्पृहः (→निष्क्रियः); द1 ग्र1.2 म1 अहं हि निष्क्रिया (ग्र1 °यो) यातः (ग्र1 °तं). –c) न1 निरीक्ष्य (→मामेव); दे8-10 मुवें. मुए. मुब. प्राहुर्, ग्र2 देवा (→देवं). –d) दे8-10 मुवें. मुए. मुब. लक्ष्मीं (→आहुर्); द1 ग्र1 म1 देवं (→देवीं); दे4 आहुर्देवो हतान्धकाः.

एष धाता विधाता च कारणं कार्यमेव च ।
कर्ता कारयिता विष्णुर्भुक्तिमुक्तिफलप्रदः ॥१५५
भोक्ता पुमानप्रमेयः संहर्ता कालरूपधृक् ।
स्रष्टा पाता वासुदेवो विश्वात्मा विश्वतोमुखः ॥१५६
कूटस्थो ह्यक्षरो व्यापी योगो नारायणः स्वयम् ।
तारकः पुरुषो ह्यात्मा केवलं परमं पदम् ॥१५७
सैषा माहेश्वरी गौरी मम शक्तिर्निरञ्जना ।
शान्ता सत्या सदानन्दा परं पदमिति श्रुतिः ॥१५८
अस्याः सर्वमिदं जातमत्रैव लयमेष्यति ।
एषैव सर्वभूतानां गतीनामुत्तमा गतिः ॥१५९
तयाऽहं संगतो देव्या केवलो निष्कलः परः ।
पश्याम्यशेषमेवेदं यस्तद् वेद स मुच्यते ॥१६०
तस्मादनादिमद्वैतं विष्णुमात्मानमीश्वरम् ।
एकमेव विजानीध्वं ततो यास्यथ निर्वृतिम् ॥१६१
मन्यन्ते विष्णुमव्यक्तमात्मानं श्रद्धयाऽन्विताः ।
ये भिन्नदृष्ट्यापीशानं पूजयन्तो न मे प्रियाः ॥१६२
द्विषन्ति ये जगत्सूतिं मोहिता रौरवादिषु ।
पच्यमाना न मुच्यन्ते कल्पकोटिशतैरपि ॥१६३
तस्मादशेषभूतानां रक्षको विष्णुरव्ययः ।
यथावदिह विज्ञाय ध्येयः सर्वापदि प्रभुः ॥१६४
श्रुत्वा भगवतो वाक्यं देव्यः सर्वगणेश्वराः ।
नेमुर्नारायणं देवं देवीं च हिमशैलजाम् ॥१६५ वें१.१६.१७२

१५५. –d) ब$_3$ दे$_1$ भक्ति° (→भुक्ति°); दे$_4$ भुक्तिमुक्तिपरिग्रहाः.

१५६. –a) ब$_1$ प्रणाम°(?) (→पुमान°); दे$_6$ भोक्त प्रमान्प्रमेयः स, ग्र$_2$ भोक्ता भोजयिता पुत्रान्. –b) ते$_1$ संहर्त्तान्(?) (→संहर्ता). –c) ब$_1$ सृष्टा, दे$_3$ ग्रष्टा, दे$_5$ सुष्वा, दे$_{10}$ दष्टा, म$_1$ दृष्टा (→स्रष्टा); का$_1$ ब$_{1-3}$ दे$_{2.3.5.6}$ ते$_1$ धाता (→पाता); ब$_3$ वाम° (→वासु°); दे$_1$ स्रष्टा पालयता देवो. –d) दे$_6$ विशतो° (→विश्वतो°).

१५७. –a) दे$_3$ ह्यक्षरे, दे$_4$ संक्षयो, दे$_6$ सृक्षर(?) (→ह्यक्षरो); दे$_5$ वापी, ग्र$_1$ वापि (→व्यापी). –b) दे$_{1.4}$ द$_1$ ग्र$_{1.2}$ म$_1$ नारायणाह्वयः, दे$_{8-10}$ मुवें. मुए. मुब. नारायणोऽ (मुवें. मुए. मुब. °णा) व्ययः (→नारायणः स्वयं). –c) दे$_1$ तारकं, दे$_3$ तावकः (→तारकः). –d) ब$_3$ प्रबलं (→परमं).

१५८. –a) ब$_2$ देवी, ते$_1$ नारी (→गौरी). –c) दे$_{10}$ सत्वा, द$_1$ ग्र$_{1.2}$ म$_1$ तस्य (→सत्या); दे$_4$ सदानन्ता, ग्र$_2$ शतानन्दा (→सदानन्दा). –d) दे$_1$ सर्वापदं, दे$_6$ परस्पर, ग्र$_2$ परंपरं (→परं पदं); दे$_2$ इति स्मृतिः, + इति श्रुतिः (→इति श्रुतिः).

१५९. –a) दे$_{8-10}$ मुवें. मुए. मुब. अस्यां (→अस्याः); दे$_3$ अस्यास्सर्वमिवं शातम् (?). –b) ब$_1$ बलम्, दे$_1$ क्षयम्, दे$_3$ कयम् (?) (→लयम्); दे$_6$ इच्छति (→एष्यति). –d) दे$_3$ यतीनाम्, ग्र$_2$गिरीणाम् (→गतीनां); का$_1$ गतीनां गतिरुत्तमाः.

१६०. –a) दे$_3$ जयाहं(?), म$_1$ तयैव (→तयाऽहं); ब$_3$ सर्वतो, दे$_4$ सांगतो (→संगतो); म$_1$ देव्यो (→देव्या). –b) दे$_4$ केशवो, दे$_{10}$ कैवल्यो (→केवलो); म$_1$ परं (→परः). –c) दे$_{8-10}$ मुवें. मुए. मुब. एवाहं (→एवेदं). –d) ब$_1$ ते$_1$ यस्तं (→यस्तद्); दे$_{8-10}$ मुवें. मुए. मुब. परमात्मानमव्ययम्.

१६१. –a) दे$_1$ °नादमद्वैतं, दे$_4$ द$_1$ ग्र$_{1.2}$ म$_1$ °नादिमध्यान्तं, ते$_1$ °नादिमध्य* (→°नादिमद्वैतं). –b) ते$_1$** (→विष्णुम्); दे$_4$ मे प्रिया, म$_1$ अव्ययम् (→ईश्वरम्). –c) दे$_4$ एवमीकं (?), दे$_6$ एषमेव, द$_1$ ग्र$_{1.2}$ म$_1$ एवमेकं (ग्र$_2$ °वं, म$_1$ °व) (→एकमेव); दे$_{8-10}$ मुवें. मुए. मुब. विजानीथ (→विजानीध्वं). –d) दे$_{3.4}$ ग्र$_1$ दास्यति, ग्र$_2$ यास्यन्ति (→यास्यथ); दे$_6$ ग्र$_1$ निवृतिं (→निर्वृतिं).

१६२. –a) दे$_5$ अन्येऽन्ये, न$_1$ म$_1$ अन्यं ते, ते$_1$ मन्यन्तो (→मन्यन्ते); का$_1$ मन्यन्ते विष्णुरव्यक्तं. –b) ब$_1$ दे$_3$ °न्वितः (→°न्विताः). –c) दे$_1$ °दृष्टा त्वीशानं, ब$_3$ दे$_3$ °दृष्टचामीशानं, दे$_5$ °द्वयमीशानं, दे$_{8-10}$ मुवें. मुए. मुब. °दृष्टचा चेशानं, द$_1$ ग्र$_1$ म$_1$ °दृष्टचा ईशानीं, ग्र$_2$ °दृष्टा***(→°दृष्ट्यापीशानं). –d) न$_1$ ते$_1$ पूजयन्ति, ग्र$_1$ पूजयन्ते (→पूजयन्तो); दे$_{10}$ -मेश्वराः, ग्र$_2$ मे प्रजाः (→मे प्रियाः).

१६३. –a) न$_1$ ग्र$_1$ यो(→ये); दे$_2$ यज्ञपतिम्, न$_1$ जगत्सूतिर्, ग्र$_2$ म$_1$ जगद्भूतिम् (→जगत्सूतिम्). –b) न$_1$ मोहितो (→मोहिता). –c) दे$_{3.6}$ पश्यमाना, दे$_4$ अर्घमाना, ग्र$_2$ पच्यमानं (→पच्यमाना); दे$_3$ मुग्रन्ते (→मुच्यन्ते).

१६४. –a) का$_1$ तस्मादशेष-, + तस्मादशेष हि (?), दे$_1$ तस्मादेष- (→तस्मादशेष-). –c) न$_1$ यथावदभि- (→यथावदिह); ग्र$_2$ यस्सर्वं (→विज्ञाय). –d) दे$_1$ ध्येयः साक्षी यदि प्रभुः, ग्र$_2$ सर्वापतिता वहुः (?).

१६५. –a) दे$_4$ वाकं, द$_1$ ग्र$_1$ विद्यां, ग्र$_2$ भीत्या (→वाक्यं). –b) ब$_1$ दे$_2$ देव्या, दे$_1$ देव्याः, दे$_{4.8-10}$ द$_1$ ग्र$_{1.2}$ म$_1$ मुवें. मुए. मुब. देवाः (→देव्यः); ब$_{1.2}$ दे$_{1.8-10}$ द$_1$ म$_1$ मुवें. मुए. मुब. सर्वे, दे$_3$ सर्वा (→सर्व-).

वे१.१६.१७२ प्रार्थयामासुरीशाने भक्तिं भक्तजनप्रिये ।
भवानीपादयुगले नारायणपदाम्बुजे ॥१६६
ततो नारायणं देवं गणेशा मातरोऽपि च ।
न पश्यन्ति जगत्सूतिं तदद्भुतमिवाभवत् ॥१६७
तदन्तरे महादैत्यो ह्यन्धको मन्मथार्दितः ।
मोहितो गिरिजां देवीमाहर्तुं गिरिमाययौ ॥१६८
अथानन्तवपुः श्रीमान् योगी नारायणोऽमलः ।
तत्रैवाविरभूद् दैत्यैर्युद्धाय पुरुषोत्तमः ॥१६९
कृत्वाऽथ पार्श्वे भगवन्तमीशो
युद्धाय विष्णुं गणदेवमुख्यैः ।
शिलादपुत्रेण च मातृकाभिः
स कालरुद्रोऽभिजगाम देवः ॥१७०
त्रिशूलमादाय कृशानुकल्पं
स देवदेवः प्रययौ पुरस्तात् ।
तमन्वयुस्ते गणराजवर्या
जगाम देवोऽपि सहस्रबाहुः ॥१७१
रराज मध्ये भगवान् सुराणां
विवाहनो वारिदवर्णवर्णः ।
तदा सुमेरोः शिखराधिरूढ-
स्त्रिलोकदृष्टिर्भगवानिवार्कः ॥१७२
जगत्यनादिर्भगवानमेयो
हरः सहस्राकृतिराविरासीत् ।
त्रिशूलपाणिर्गगने सुघोषः
पपात देवोपरि पुष्पवृष्टिः ॥१७३

---

१६६. –a) दे6 °मास° (→°मासु°); दे3 °रीशानि, दे4 °रीशानं, द1 °रीशानो (→°रीशाने). –b) दे1.5 भक्ति भक्ति, दे3.6 भक्तिमुक्ति-, म1 भक्त्या भक्त- (→भक्तिं भक्त-); द1 °प्रियां (→°प्रिये); दे3 भक्तिमुक्तिजना प्रियो. –c) दे3 तदानीपाद° (→भवानीपाद°).

१६७. –a) द1 देवीं (→देवं). –b) का1 दे9 गणेशं, ब1 गणेश-, दे1 गणाद्या, दे10 गणेशो (→गणेशा); ग्र2 म1 गणेशा अमरा अपि. –c) दे5 जगन्मूर्तिं, दे6 जगत्युतिं, दे10 जगत्सूतीम् (→जगत्सूतिं). –d) ब3 मेतद्भुत°(?), दे10 मत्तदभुत्त°(?) (→तदद्भुत°).

१६८. –b) दे10 धुन्धको (→ह्यन्धको); का1 मन्मथान्धकः, +मन्मथान्तकः, दे8-10 मुवें. मुए. मुब. मन्मथान्धकः, न1 मन्मथान्वितः (→मन्मथार्दितः); दे1 मन्मथान्धकन्धकः. –c) ब1 मोहिता माययौ, ग्र2 ह्यन्धको यन्मदार्दितः. –c) ब1 मोहिता (→मोहितो). –d) ब3 आहर्तुर् (→आहर्तुम्); ग्र2 अहर्तुं गिरिमायया.

१६९. –a) ग्र2 अथानन्द° (→अथानन्त°). –b) दे5 नारायणोत्तमः, ते1 नारायणो बलः (→नारायणोऽमलः). –c) दे10 तथैवा° (→तत्रैवा°); दे3 भृत्यैर्, दे4 देवो, द1 दैत्यः (→दैत्यैर्). –d) ब3 युद्धार्थं (→युद्धाय).

१७०. दे4. cd ⊙. –a) का1 ब3 दे5 कृत्वा तु (→कृत्वाऽथ); दे5 पार्श्वौ (→पार्श्वे). –b) ते1 विष्णुर् (→विष्णुं); दे4 गणनाथमुख्यैः, ते1 गणदेवमुख्यः, द1 ग्र1.2 म1 गणनाथमुख्यम् (→गणदेवमुख्यैः). –c) ब1 शिवा च पुत्रेण, दे1 शैलादपुत्रेण, दे10 शिलादिपुत्रेण, ते1 शिलाद्वपुत्रेण, ग्र2 शिलातपत्रेण (→शिलादपुत्रेण); न1 मातृकोटिभिः (→मातृकाभिः). –d) ब2 कालः स रुद्रोभि-, दे10 सहकालदेवोपि (→स कालरुद्रोऽभि-); दे5.8.9 मुवें. मुए. मुब. °रुद्रोपि, ते1 °रुद्रोथ (→°रुद्रोऽभि-); दे2 दैत्यं (→देवः).

१७१. –a) न1 शितानुकूलं (→कृशानुकल्पं). –b) ते1 देवदेवम् (→देवदेवः). –c) द1 गणनाथ°, ग्र1 गजराज°, ग्र2 गिरिवर्य° (→गणराज°); दे1 °वर्गा (→°वर्या). –d) दे1 °बाहः (→°बाहुः); न1 जगाम देवः सह वज्रबाहुः.

१७२. –a) म1 जगाम (→रराज); दे3 पुराणो, दे6 पुराणां (→सुराणां). –b) दे2 गोवारिजो, दे4 विवाहिनो, दे10 विवादतो, ग्र1 विहायनो (→विवाहनो); का1 दे4.10 न1 द1 ग्र1.2 म1 वारिजवर्ण°, दे1 वारिदवारि°, दे8-9 मुवें. मुए. मुब. वारिजपर्ण° (→वारिदवर्ण°). –c) दे9 तमाशु मेरोः, दे8-9 तमाशुमोराः, द1 ग्र1.2 म1 यथा सुमेरोः (→तदा सुमेरोः); दे1 शिखराभिजूदस्, दे6 शिखराधिरूढास्, द1 शिखरादिकूटस् (→शिखराधिरूढस्). –d) दे1 त्रैलोक्य° (→त्रिलोक°); दे10 °वृत्तिर् (→°दृष्टिर्); न1 यथार्कः (→इवार्कः).

१७३. –a) ब1 जगन्त्यनादिर्, दे1 जगन्निनादैर्, दे8-10 ग्र1 जयत्यनादिर्, न1 अथ त्वनादिर्, ते1 जयत्वनादिर् मुवें. मुए. मुब. जयन्ननादिर् (→जगत्यनादिर्). –b) दे8-10 हरिः (→हरः); ब1 सहस्रक्षशिरा°, दे3.6 सहस्राकृतिना° (दे6 वा°) (→सहस्राकृतिरा°). –c) दे6 °पाणिं, ते1 °पाणे (→°पाणिर्); ब1 ते1 गमने, ब3 दे2.3.4.6 गगणे (→गगने); ब2.3 दे1 सुघोरः, दे2 सुशोभा, द1 ग्र1 सुघोषा, ग्र2 सुघोषे (→सुघोषः). –d) दे5 पुष्प° (?) (→पुष्प°).

समागतं वीक्ष्य गणेशराजं
समावृतं देवरिपुर्गणेशैः ।
युयोध शक्रेण समातृकाभि-
र्गणैरशेषैरमरप्रधानैः ॥१७४

विजित्य सर्वानपि बाहुवीर्यात्
स संयुगे शंभुमनन्तधाम ।
समाययौ यत्र स कालरुद्रो
विमानमारुह्य विहीनसत्त्वः ॥१७५

दृष्ट्वाऽन्धकं समायान्तं भगवान् गरुडध्वजः ।
व्याजहार महादेवं भैरवं भूतिभूषणम् ॥१७६

हन्तुमर्हसि दैत्येशमन्धकं लोककण्टकम् ।
त्वामृते भगवान् शक्तो हन्ता नान्योऽस्य विद्यते ॥१७७

त्वं हर्ता सर्वलोकानां कालात्मा ह्यैश्वरी तनुः ।
स्तूयते विविधैर्मन्त्रैर्वेदविद्भिर्विचक्षणैः ॥१७८

स वासुदेवस्य वचो निशम्य भगवान् हरः ।
निरीक्ष्य विष्णुं हनने दैत्येन्द्रस्य मतिं दधौ ॥१७९

जगाम देवतानीकं गणानां हर्षमुत्तमम् ।
स्तुवन्ति भैरवं देवमन्तरिक्षचरा जनाः ॥१८०

जयानन्त महादेव कालमूर्ते सनातन ।
त्वमग्निः सर्वभूतानामन्तश्चरसि नित्यशः ॥१८१

त्वं यज्ञस्त्वं वषट्कारस्त्वं धाता हरिरव्ययः ।
त्वं ब्रह्मा त्वं महादेवस्त्वं धाम परमं पदम् ॥१८२　　वें१.१६.१८८

---

१७४. –a) द$_{1}$ गणाधि° (→गणेश°); दे$_{1}$ °राजः (→°राजं). –b) दे$_{4}$ ग्र$_{1}$ समाश्रितं, द$_{1}$ समागतं (→समावृतं); ब$_{1}$ देविरिपुं, दे$_{1}$ देवरिपुं, दे$_{8-10}$ मुवें. मुए. मुब. दैत्यरिपुं, ग्र$_{2}$ देवनिभैर् (→देवरिपुर्); ग्र$_{2}$ गणेशः (→गणेशैः). –c) ग्र$_{2}$ म$_{1}$ चक्रेण (→शक्रेण); ब$_{1}$ दे$_{1}$ समातृ*भिर्, न$_{1}$ समातृका-(दि)भिर् (→समातृकाभिर्).

१७५. ते$_{1}$. b⊙. –a) ग्र$_{1.2}$ म$_{1}$ विचिन्त्य (→विजित्य). –b) का$_{1}$ दे$_{5.6}$ सत्तं, ब$_{1-3}$ दे$_{4.8-10}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ मुवें. मुए. मुब. शंभुर्, न$_{1}$ नित्यम् (→शंभुम्); का$_{1}$ ब$_{2.3}$ दे$_{2.3.5.8.9}$ न$_{1}$ द$_{1}$ ग्र$_{1}$ म$_{1}$ मुवें. मुए. मुब. °धामा, ब$_{1}$ °वीर्यः (→°धाम). –c) दे$_{5}$ शंभु (?), दे$_{10}$-रत्र(?), ग्र$_{2}$ तत्र (→यत्र). –d) का$_{1}$ समानसत्वः, दे$_{2}$ विनाशबुद्धिः, दे$_{4.5}$ विमा (दे$_{5}$ °मो) नसंस्थः (→विहीनसत्त्वः); ब$_{1}$ दे$_{10}$° सत्त्व(?), दे$_{3}$ °सत्त्वा, ग्र$_{2}$ °सत्वकः (→°सत्त्वः). –cd) म$_{1}$ स मायया-वन्धकसंहरार्थं सकालरुद्रो भगवानमेयः.

१७६. –a) ग्र$_{2}$ दृष्ट्वान्तकं (→दृष्ट्वाऽन्धकम्). –d) ग्र$_{2}$ भूत° (→भूति°); दे$_{4}$ भैरवं भाषणं तथा.

१७७. –a) ग्र$_{2}$ म$_{1}$ दैत्येन्द्रं (→दैत्येशं). –b) ग्र$_{2}$ अन्तकं (→अन्धकं). –c) दे$_{1.3.4.9}$ न$_{1}$ म$_{1}$ भगवन् (→भगवान्); ब$_{1}$ ब्रह्मन्, दे$_{6}$ व्यक्तो, दे$_{5}$ शक्तौ, द$_{1}$ शक्तिः (→शक्तो). –d) ब$_{1}$ द$_{1}$ हन्तुर् (→हन्ता); दे$_{2}$ नान्योस्ति, दे$_{6}$ वान्योसि, दे$_{10}$ नान्यो(न्य ?)श्च, ते$_{1}$ नास्यान्य (→नान्योऽस्य).

१७८. –a) दे$_{2}$ हन्ता (→हर्ता). –b) दे$_{1}$ एकात्मा (→कालात्मा); दे$_{4}$ द्यैश्वरी, ग्र$_{2}$ ऐश्वरं (→ह्यैश्वरी). –c) ब$_{1}$ दे$_{1.3.5.6}$ न$_{1}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ स्तूयसे, दे$_{8-10}$ श्रूयते (→स्तूयते); दे$_{8-10}$ निनदो(दे$_{9}$ °दौ) (→विवधैर्); ब$_{3}$ दे$_{2}$ स्तोत्रैर् (→मन्त्रैर्). –cd) दे$_{8-10}$ श्रूयते निनदो (दे$_{9}$ °दौ ?) भीमो दानवानां समागमे (दे$_{10}$ °ते).

१७९. दे$_{3.6}$. १७९ a–१८० d ⊙. –a) द$_{1}$ ग्र$_{1.2}$ म$_{1}$ स वासुदेववचनं. –c) दे$_{2}$ निरीक्ष्य हनने विष्णुं. –d) ब$_{2}$ मनो (→मतिं); का$_{1}$ ब$_{3}$ दे$_{4.5}$ न$_{1}$ द$_{1}$ ग्र$_{1}$ दधे (→दधौ).

१८०. दे$_{3.6}$. ⊙. –a) का$_{1}$ ब$_{3}$ दे$_{5}$ जगाम देवतानां च. –b) न$_{1}$ देवानां (→गणानां); का$_{1}$ ब$_{2.3}$ दे$_{5}$ हर्षगन् बलं, दे$_{1}$ मुवें. मुए. मुब. हर्षवर्द्धनम्, दे$_{2.8-10}$ न$_{1}$ हर्षमुद्वहन् (→हर्षमुत्तमम्). –c) दे$_{10}$ भैरवाः (→भैरवं). –d) ग्र$_{2}$ जनः (?) (→जनाः).

१८१. –a) दे$_{6}$ मयानन्त, ग्र$_{2}$ जयानन्द (→जयानन्त); ग्र$_{2}$ °देवं (→°देव). –b) दे$_{6}$ कालमूर्तिः, ग्र$_{2}$ काममूर्तिः (→कालमूर्ते); ब$_{1}$ सनातनः, दे$_{2}$ सनातनाः, ग्र$_{2}$ सनंतन, ते$_{1}$ **** (→सनातन). –c) ब$_{1}$ ते$_{1}$ त्वमग्ने (→त्वमग्निः); दे$_{8.9}$ मुवें. मुए. मुब. °भावानां (→°भूतानां). –d) ब$_{1}$ चरति, दे$_{1.8-10}$ मुवें. मुए. मुब. तिष्ठसि (→चरसि); दे$_{1.2}$ सर्वदा, दे$_{8-10}$ मुवें. मुए. मुब. सर्वगः (→नित्यशः); ग्र$_{2}$ मन्दरस्थायि नित्यशः.

१८२. –a) दे$_{1.8-10}$ मुवें. मुए. मुब. त्वमन्तको लोकक (दे$_{1}$ °ह)र्ता; न$_{1}$ त्वं धाता सर्वलोकानां, ते$_{1}$ त्वं यज्ञस्त्वमहं धाता. –b) दे$_{4}$ त्वं पतिर्, दे$_{5}$ त्वं धातुर्, न$_{1}$ त्वमेव, ते$_{1}$ विधाता, द$_{1}$ ग्र$_{1.2}$ म$_{1}$ त्वं पाता (→त्वं धाता); दे$_{10}$ त्वं धाता धातकस्तवः. –d) दे$_{8-10}$ न$_{1}$ धाता, ते$_{1}$ नाम (→धाम).

१.१६.१८६ ओङ्कारमूर्तिर्योगात्मा त्रयीनेत्रस्त्रिलोचनः ।
महाविभूतिर्देवेशो जयाशेषजगत्पते ॥१८३

ततः कालाग्निरुद्रोऽसौ गृहीत्वाऽन्धकमीश्वरः ।
त्रिशूलाग्रेषु विन्यस्य प्रननर्त सतां गतिः ॥१८४

दृष्ट्वाऽन्धकं देवगणाः शूलप्रोतं पितामहः ।
प्रणेमुरीश्वरं देवं भैरवं भवमोचकम् ॥१८५

अस्तुवन् मुनयः सिद्धा जगुर्गन्धर्वकिंनराः ।
अन्तरिक्षेऽप्सरःसङ्घा नृत्यन्ति स्म मनोरमाः ॥१८६

संस्थापितोऽथ शूलाग्रे सोऽन्धको दग्धकिल्बिषः ।
उत्पन्नाखिलविज्ञानस्तुष्टाव परमेश्वरम् ॥१८७

अन्धक उवाच ।❀

नमामि मूर्ध्ना भगवन्तमेकं
समाहिता यं विदुरीशतत्त्वम् ।
पुरातनं पुण्यमनन्तरूपं
कालं कविं योगवियोगहेतुम् ॥१८८

दंष्ट्राकरालं दिवि नृत्यमानं
हुताशवक्त्रं ज्वलनार्करूपम् ।
सहस्रपादाक्षिशिरोभियुक्तं
भवन्तमेकं प्रणमामि रुद्रम् ॥१८९

जयादिदेवामरपूजिताङ्घ्रे
विभागहीनामलतत्त्वरूप ।
त्वमग्निरेको बहुधाऽभिपूज्यसे
वाय्वादिभेदैरखिलात्मरूप ॥१९०

१८३. –a) ब$_3$ दे$_{3.4.10}$ °मूर्ति-, द$_1$ °मूर्त (→°मूर्तिर्); ग्र$_2$ येवं तदोङ्कारमूर्तिस् . –b) दे$_4$ ह्यप्रमेय-, द$_1$ ग्र$_{1.2}$ म$_1$ त्वं वायुस्त्वं (→त्रयीनेत्रस् ); दे$_{3.6}$ त्रिलोचन (→त्रिलोचनः). –c) दे$_{1.2.8-10}$ मुवें. मुए. मुब. विश्वेशो (→देवेशो). –d) दे$_{8-10}$ मुवें. मुए. मुब. ज (दे$_{10}$ ना ?) यानन्त (→जयाशेष-); का$_1$ न$_1$ °पतेः (→°पते).

१८४. –a) दे$_1$ °रूपोसौ (→°रुद्रोऽसौ). –c) ब$_3$ दे$_{2-4.6}$ म$_1$ त्रिशूलाग्रेण विन्यस्य. –d) का$_1$ प्रणनर्त, + प्रननर्त, ब$_{2.3}$ दे$_{2.5.6}$ प्रणनर्त, दे$_1$ प्रणतार्तिः, द$_1$ ग्र$_1$ म$_1$ प्रणनाद, ग्र$_2$ ननर्तार्थं (→प्रननर्त); ते$_1$ प्रणम्य तनुतां गतः .

१८५. दे$_5$. १८५b–१८८a ⊙. –a) दे$_5$ °गणं, दे$_{10}$ °गणः (→°गणाः); ब$_1$ दृष्ट्वान्धकवरं देवाः . –b) दे$_3$ शान° (→शूल°); दे$_{10}$ ग्र$_2$ °प्रोक्तं (→°प्रोतं); द$_1$ ग्र$_{1.2}$ म$_1$ पितामहम् (→पितामहः). –c) दे$_3$ प्रणेसुर् , दे$_4$ प्रमेसुर् (?) (→प्रणेमुर् ); दे$_8$ मुवें. दैवं (→देवं). –d) का$_1$ दे$_1$ भय-मोचकं, ब$_2$ दे$_{3.6.8-10}$ म$_1$ मुवें. मुए. मुब. भवमोचनम् , दे$_2$ भयपातकं, दे$_4$ च विमोचकं (→भवमोचकम्).

१८६. दे$_5$. ⊙. –a) का$_1$ स्तुवन्तु (→अस्तुवन्). –c) ब$_1$ °सङ्घान् (→°सङ्घाः); दे$_4$ अन्तरिक्षेश्वराः सर्वाः, ते$_1$ अन्तरिक्षे चाप्सरसो, ग्र$_2$ अन्तरिक्षेप्यप्सरसा. –d) ब$_1$ नृत्य-न्तीव, दे$_4$ नृत्यन्ते स्म, ग्र$_2$ नृत्यन्ति सन्, म$_1$ नृत्यन्ति सु- (→नृत्यन्ति स्म); दे$_{8-10}$ ग्र$_2$ मुवें. मुए. मुब. मनोहराः (→मनोरमाः).

१८७. दे$_5$. ⊙. –a) न$_1$ संस्थावितो (?) (→संस्था-पितो). –b) दे$_4$ द$_1$ ग्र$_{1.2}$ म$_1$ हत° (→दग्ध°). –c) दे$_3$ उत्पन्नस्विन- (?), ग्र$_2$ उत्पन्न किल (?) (→उत्पन्नाखिल-). –d) दे$_6$ न$_1$ परमेश्वरः (→परमेश्वरम्).

❀ दे$_5$. ⊙; दे$_1$ अ[न्ध]क; दे$_{8-9}$ अन्धक उ.; न$_1$ ते$_1$ द$_1$ ग्र$_{1.2}$ म$_1$ अन्धकः .

१८८. दे$_5$. a ⊙. –a) दे$_{1.3}$ ते$_1$ मूर्धा (→मूर्ध्ना); दे$_4$ न$_1$ द$_1$ ग्र$_{1.2}$ म$_1$ परमेशं (→भगवन्तं). –b) दे$_5$ समाहि-ताद्यं, दे$_{8-10}$ मुवें. मुए. मुब. समाहितोयं (→समाहिता यं); का$_1$ समाहिता विद्धदुरीशतत्त्वं (?), दे$_2$ समाहितायं विदुरीश्वरं तम्. –d) दे$_{10}$ कविर्, न$_1$ ते$_1$ म$_1$ कलिं (→कविं); ब$_3$ °नियोग° (→°वियोग°).

१८९. ग्र$_2$. c ⊙. –a) ब$_1$ दिवि वृत्य°, दे$_5$ दिवि तृप्त°, दे$_{8-10}$ च नि(दे$_{10}$ न)नर्त (→दिवि नृत्य°). –b) दे$_1$ हताश° (→हुताश°); दे$_5$ °वक्त्रे, मुवें. मुए. °वक्रं (→°वक्त्रं); दे$_3$ हुताशवक्त्रं ज्वलनसरूपं. –c) दे$_3$ °पादात्रि°, द$_1$ °पादाक्ष° (→°पादाक्षि°); दे$_1$ °शिरोवि°, दे$_2$ न$_1$ °शिरोरु°, दे$_5$ °शिरांसि°, दे$_{10}$ °शि[रा]ति°, ते$_1$ °शिराभि° (→°शिरोभि°) –d) दे$_1$ पूर्वं, दे$_5$ रुद्रां, द$_1$ ग्र$_{1.2}$ म$_1$ रूपं (→रुद्रम्).

१९०. –a) न$_1$ °जयाति° (→जयादि°); दे$_4$ °देवो° (→°देवा°); द$_1$ °पूजिताङ्घ्रो (→°पूजिताङ्घ्रे). –b) न$_1$ विभो विरूपा-, द$_1$ ग्र$_{1.2}$ म$_1$ विभागरूपा- (→विभागहीना-); ब$_1$ दे$_{6.10}$ न$_1$ म$_1$ -रूपं, ब$_3$ -रूपः, ग्र$_{1.2}$ -रूपा (→-रूप). –c) दे$_1$ त्वमग्निरेके, दे$_4$ त्वमेव चैको, ग्र$_2$ त्वमग्निशोको (→त्वमग्निरेको); ब$_2$ दे$_2$ बहुधाति°, ग्र$_2$ बहुधापि° (→बहुधाऽभि°); दे$_1$ बहुधा विभज्यसे, दे$_{8-10}$ मुवें. मुए. मुब. बहुधाऽभिपूज्यो, न$_1$ बहुधाभियुज्यसे (→बहुधाऽभिपूज्यसे);

त्वामेकमाहुः पुरुषं पुराण-
 मादित्यवर्णं तमसः परस्तात् ।
त्वं पश्यसीदं परिपास्यजस्रं
 त्वमन्तको योगिगणाभिजुष्टः ॥१९१

एकोऽन्तरात्मा बहुधा निविष्टो
 देहेषु देहादिविशेषहीनः ।
त्वमात्मशब्दं परमात्मतत्त्वं
 भवन्तमाहुः शिवमेव केचित् ॥१९२

त्वमक्षरं ब्रह्म परं पवित्र-
 मानन्दरूपं प्रणवाभिधानम् ।
त्वमीश्वरो वेदपदेषु सिद्धः
 स्वयं प्रभोऽशेषविशेषहीनः ॥१९३

त्वमिन्द्ररूपो वरुणाग्निरूपो
 हंसः प्राणो मृत्युरन्तासि यज्ञः ।
प्रजापतिर्भगवानेकरुद्रो
 नीलग्रीवः स्तूयसे वेदविद्भिः ॥१९४

नारायणस्त्वं जगतामथादिः
 पितामहस्त्वं प्रपितामहश्च ।
वेदान्तगुह्योपनिषत्सु गीतः
 सदाशिवस्त्वं परमेश्वरोऽसि ॥१९५

नमः परस्तात् तमसः परस्मै
 परात्मने पञ्चपदान्तराय ।
त्रिशक्त्यतीताय निरञ्जनाय
 सहस्रशक्त्यासनसंस्थिताय ॥१९६ वें१.१६.२०२

---

का$_1$ दे$_{2.4.5}$ शिवादिभेदैर्, ब$_{1-3}$ दे$_{8-10}$ मुवें. मुए. बाह्यादिभेदैर्, दे$_{1.6}$ वाद्यादिभेदैर्, दे$_2$ वाग्वादिभेदैर्, न$_1$ द$_1$ वादिभेदैर्, ते$_1$ वस्वादिभेदैर्, ग्र$_2$ सोपाधिभेदैर्, म$_1$ विद्यादिभेदैर् (→वाय्वादिभेदैर्); का$_1$ दे$_5$ अखिलानु (दे$_5$ °तु)- (→अखिलात्म-); का$_1$ ब$_{1-3}$ दे$_{1-3.5.6.8-10}$ ग्र$_2$ मुवें. मुए. मुब. -रूपः, दे$_4$ -रूपाः (→-रूप).

१९१. –a) दे$_{3.10}$ त्वमेकं (→त्वामेकं). –b) दे$_{10}$ पुरस्तात् (→परस्तात्). –c) दे$_1$ सृजस्यजस्रं (→त्वं पश्यसीदं); म$_1$ परिमास्य° (→परिपास्य°). –d) ब$_1$ मुवें. मुए. मुब. °गणानुजुष्टः, दे$_1$ °गणाभपुष्टः, दे$_4$ गणाभिजुष्टाः, दे$_6$ °गणाभिसंसम्, दे$_{8-10}$ °गणानुसृष्टः (→°गणाभिजुष्टः).

१९२. –a) दे$_4$ -भिविष्टो, द$_1$ विशिष्टो (→निविष्टो). –b) दे$_3$ वेदेषु (→देहेषु); ब$_{1.3}$ दे$_{3-6}$ न$_1$ ते$_1$ ग्र$_{1.2}$ म$_1$ देवादि°, दे$_2$ द$_1$ वेदादि° (→देहादि°). –c) दे$_{8.9}$ त्वाम् (→त्वम्); दे$_{1.8-10}$ मुवें. मुए. मुब. °तत्त्वं (→°शब्दं); का$_1$ दे$_5$ परमार्थं° (→परमात्म°); दे$_1$ °संज्ञं, दे$_{4.8-10}$ द$_1$ ग्र$_{1.2}$ म$_1$ मुवें. मुए. मुब. °शब्दं (→°तत्त्वं). –d) दे$_4$ द$_1$ ग्र$_{1.2}$ म$_1$ परात्मतत्त्वं च भवन्तमाहुः.

१९३. –a) दे$_4$ पवित्र[रूपं] (→पवित्रं). –c) ग्र$_2$ देव° (→वेद°); दे$_{1.2.5}$ न$_1$ °विदेषु, दे$_{8-10}$ मुवें. मुए. मुब. °विदां प्र-, द$_1$ ग्र$_1$ म$_1$ °वादेषु (म$_1$ °न)(→°पदेषु). –d) ब$_3$ दे$_{3.4.6}$ ग्र$_2$ स्वयं प्रभाशेष°, दे$_{1.8-10}$ मुवें. मुए. मुब. स्वायंभुवोऽशेष°, द$_1$ स्वयं प्रभाहीनं (→स्वयं प्रभोऽशेष°).

१९४. ते$_1$.d ⊙. –a) का$_1$ ब$_3$ दे$_{2.5.8.9}$ मुवें. मुए. मुब. वरुणोग्नि° (→वरुणाग्नि°). –b) दे$_3$ दंसः, ते$_1$ धर्मः (→हंसः); ग्र$_2$ प्रमाणो (→प्राणो); का$_1$ मुवें. मुए. मुब. °रन्तोऽसि, ब$_1$ °रतोसि, ब$_{2.3}$ °रुद्रासि, दे$_{1.4}$ न$_1$ °रत्रासि, दे$_5$ °रजासि, दे$_{8.9}$ °रतोधि-, दे$_{10}$ °रतोहि, ते$_1$ °रन्तरा(?), द$_1$ °रतासि, ग्र$_1$ °रात्मासि, ग्र$_2$ °रात्मावि(?); म$_1$ °रक्तोसि (→°रन्तासि); दे$_4$ यक्षः, न$_1$ यज्ञं, ग्र$_2$ वज्ञः(?) (→यज्ञः). –c) दे$_2$ एष (→एक-); का$_1$ ब$_{1-3}$ दे$_{3.5.6}$ मुवें. मुए. मुब. °रूपो (→°रुद्रो). –d) ब$_{1.3}$ दे$_{3.6.10}$ न$_1$ द$_1$ ग्र$_{1.2}$ म$_1$ नीलग्रीव (→नीलग्रीवः); दे$_4$ स्वयमे(?) (→स्तूयसे).

१९५. का$_1$. a⊙. –a) दे$_1$ नारायणं, दे$_1$ °नारायणास् (→नारायणस्); दे$_{1.2.4.5.8-10}$ द$_1$ ग्र$_{1.2}$ म$_1$ मुवें. मुए. मुब. अनादिः, न$_1$ अथो(पि)दिः (→अथादिः). –b) दे$_4$ च (→त्वं). –c) ग्र$_2$ अशेष° (→वेदान्त°). –d) दे$_4$ तां (→त्वं); दे$_{3.6}$ ग्र$_2$ परमेश्वरोपि, दे$_5$ परमेश्वरो हि (→परमेश्वरोऽसि).

१९६. दे$_{8-10}$. b⊙. –a) ब$_2$ पुरस्तात्, न$_1$ परस्मात् (→परस्तात्); दे$_{8-10}$ नमः परस्मै च परान्त (दे$_{10}$ °त्प) राय, मुवें. मुए. मुब. नमः परस्मै तमसः परस्तात्. –b) दे$_4$ परात्परे (→परात्मने); दे$_1$ °चरात्मकाय, दे$_4$ °परान्तराय, दे$_5$ °महान्तराय, द$_1$ ग्र$_1$ °वरान्तकाय, ग्र$_2$ °वराननाय, म$_1$ °भूतान्तकाय, मुवें. मुए. मुब. °नवान्तराय (→°पदान्तराय). –c) दे$_1$ त्रिशक्तगीताय, दे$_3$ त्रिशक्तिलीलाय, दे$_{10}$ त्रिशक्यतीताय, द$_1$ ग्र$_{1.2}$ म$_1$ श्रीशक्त्य (ग्र$_2$ °क्त्या) तीताय (→त्रिशक्त्यतीताय). –d) दे$_1$ °शक्त्यात्मक° (→°शक्त्यासन°); ब$_3$ °संहिताय (→°संस्थिताय); ग्र$_2$ सहस्रशक्त्यस्थितरूयनाय(?).

त्रिमूर्त्तयेऽनन्तपदात्ममूर्त्ते
जगन्निवासाय जगन्मयाय ।
नमो ललाटार्पितलोचनाय
नमो जनानां हृदि संस्थिताय ॥१९७
फणीन्द्रहाराय नमोऽस्तु तुभ्यं
मुनीन्द्रसिद्धार्चितपादयुग्म ।
ऐश्वर्यधर्मासनसंस्थिताय
नमः परान्ताय भवोद्भवाय ॥१९८
सहस्रचन्द्रार्कविलोचनाय
नमोऽस्तु ते सोम सुमध्यमाय ।
नमोऽस्तु ते देव हिरण्यबाहो
नमोऽम्बिकायाः पतये मृडाय ॥१९९
नमोऽतिगुह्याय गुहान्तराय
वेदान्तविज्ञानसुनिश्चिताय ।
त्रिकालहीनामलधामधाम्ने
नमो महेशाय नमः शिवाय ॥२००
एवं स्तुवन्तं भगवान् शूलाग्रादवरोप्य तम् ।
तुष्टः प्रोवाच हस्ताभ्यां स्पृष्ट्वाऽथ परमेश्वरः ॥२०१
प्रीतोऽहं सर्वथा दैत्य स्तवेनानेन सांप्रतम् ।
संप्राप्य गाणपत्यं मे सन्निधाने वसामरः ॥२०२
अरोगश्छिन्नसंदेहो देवैरपि सुपूजितः ।
नन्दीश्वरस्यानुचरः सर्वदुःखविवर्जितः ॥२०३

१९७. दे1 मुवें. मुए. मुब. c ⊙; दे10.d ⊙. –a) ग्र2 °नन्द-(→°नन्त-); का1 दे5 -पदार्थ-, दे3 -यदारगु(?), दे4 ग्र2 म1 -परात्म-, दे6 -परानु-, द8-10 -व(दे10 वि)दात्म- (→-पदात्म-); ब2 दे2.4 न1 ते1 ग्र1.2 म1 मुवें. मूर्तये (→-मूर्त्ते). –b) दे3 °निरासाय (→°निवासाय). –c) दे3 नलाटार्पितलोचनाय, दे4 ललाटेऽग्नित्रिलोचनाय, द1 म1 ललाटेर्पितलोचनाय, ग्र1 ललाटे स्थितलोचनाय (→ललाटार्पितलोचनाय).

१९८. दे10. abc ⊙. –b) दे1.2.8.9 ते1 मुवें. मुए. मुब. °पद्म, दे4 न1 °युग्मं, दे5 °य।म (→°युग्म). –d) का1 पदा° (→परा°).

१९९. दे5. cd ⊙; दे8-10. bcd ⊙; दे1.4 न1 द1 ग्र1.2 म1. d ⊙. –a) दे4 विलोकनाय. (→विलोचनाय), दे1.8-10 मुवें.मुए.मुब. सहस्रचन्द्रार्कसहस्रमूर्ते, न1 सहस्रचन्द्रार्कसमानमूर्तये, + नमोऽग्निचन्द्रार्कविलोचनाय. –b) न1 द1 ग्र1.2 म1 मुवें.मुए. मुब. नमोस्तु सोमाय सुमध्यमाय. –c) दे3.6 ते हेम, ग्र1 देवेश, ग्र2 ते सोम, मुवें. मुए. मुब. देवाय (→ते देव); दे3 °आहवे, द1 °बाहवो (→°बाहो). –d) का1 नृपाय, दे2.6 मृताय (→मृडाय); दे1 नमोस्तु सोमाय सुमध्यमाय.

१९९. श्लोकस्य a चरणानन्तरं दे10 अधिकम्—
* नमो जनानां हृदि संस्थिताय त्रिमूर्तयेनंत तव दात्ममूर्तये ।
जगन्निवासाय जगन्मयाय फणीन्द्रहाराय नमोस्तु तुभ्यं ।
मुनीन्द्रसिद्धार्चितपादपद्म ऐश्वर्यधर्मासनसंस्थिताय ।
नमः परान्ताय भवोद्भवाय सहस्रचन्द्रार्कसहस्रमूर्ते ।
(= १९७a-१९९a)

१९९ श्लोकस्य c, d मध्ये मुवें. मुए. मुब. अधिकम्—
* नमोऽग्निचन्द्रार्कविलोचनाय. (= १९९ a)

२००. दे8-10. a ⊙; दे5. ab ⊙. –a) ब1 दे1 मुवें. मुए. मुब. नमोस्तु, दे3.6 नमो त्रि- (→नमोऽति-); ग्र2 °गुण्याय (→°गुह्याय); द1 गुहान्तकाय, म1 गुणान्तराय (→गुहान्तराय). –b) का1 ब2.3 दे1.2.4.8-10 मुवें. मुए. मुब. °विनिश्चिताय, ब1 °विनिश्चयाय (→°सुनिश्चिताय). –c) ब1 °होम°, द1 °नाम° (→°धाम°); दे10 °नाम्ने (→°धाम्ने); ग्र2 त्रिकालहीनायन मामि नाम्ने. –d) द1 ग्र1 म1 नमो महादेव (→नमो महेशाय).

२०० श्लोकात्परम् दे4 द1 ग्र1.2 म1 अधिकम्—
15. * नमः परस्मै पुरुषाय नित्यम्.

२०१. –a) दे8-10 मुवें. मुए. मुब. एवं स्तुतः स भगवान्, ते1 एवं स्तुवन्तमसुरं. –b) ब3 अवरूप्य, दे1 अवरोह्य, दे8-10 मुवें. मुए. मुब अवतार्य (→अवरोप्य); ब3 दे5.6 ताम्, दे4 ते, दे10 च, ग्र2 सः (→तम्). –d) दे1.8-10 न1 मुवें. मुए. मुब. स्पृष्ट्वा च, दे4 स्मृत्वाथ, ग्र2 पृष्ठाथ (→स्पृष्ट्वाऽथ) .

२०२. –a) दे2 प्रीतोस्मि (→प्रीतोऽहं); दे10 ग्र1 सर्वधा (→सर्वथा); ते1 प्रीतोहं तव दैत्येन्द्र, ग्र2 प्रीतेनानेन दैत्येन्द्र. –c) दे2.4 गण° (→गाण°). –d) का1 दे3 च सामरः, दे8.9 मुवें. मुए. मुब. सदा वस, दे10 सदा शिव, न1 वसामर (→वसामरः).

२०३. –b) ब1 सुपूजितैः, दे10 स पूजितः (→सुपूजितः). –c) दे5. °स्यातुवरः (?) (→°स्यानुचरः). –d) दे3 °निर्वर्जितः (→°विवर्जितः).

एवं व्याहृतमात्रे तु देवदेवेन देवताः ।
गणेश्वरा महादेवमन्धकं देवसन्निधौ ॥२०४

सहस्रसूर्यसंकाशं त्रिनेत्रं चन्द्रचिह्नितम् ।
नीलकण्ठं जटामौलिं शूलासक्तमहाकरम् ॥२०५

दृष्ट्वा तं तुष्टुवुर्दैत्यमाश्चर्यं परमं गताः ।
उवाच भगवान् विष्णुर्देवदेवं स्मयन्निव ॥२०६

स्थाने तव महादेव प्रभावः पुरुषो महान् ।
नेक्षतेऽज्ञानजान् दोषान् गृह्णाति च गुणानपि ॥२०७

इतीरितोऽथ भैरवो गणेशदेवपुंगवैः ।
सकेशवः सहान्धको जगाम शंकरान्तिकम् ॥२०८

निरीक्ष्य देवमागतं स शंकरः सहान्धकं ।
समाधवं समातृकं जगाम निर्वृतिं हरः ॥२०९

प्रगृह्य पाणिनेश्वरो हिरण्यलोचनात्मजं ।
जगाम यत्र शैलजा विमानमीशवल्लभा ॥२१०

विलोक्य सा समागतं भवं भवार्तिहारिणं ।
अवाप सान्धकं सुखं प्रसादमन्धकं प्रति ॥२११

अथान्धको महेश्वरीं ददर्श देवपार्श्वगां ।
पपात दण्डवत्क्षितौ ननाम पादपद्मयोः ॥२१२

नमामि देववल्लभामनादिमद्रिजामिमां ।
यतः प्रधानपूरुषौ निहन्ति याऽखिलं जगत् ॥२१३ वें १.१६ २१६

---

२०४. –a) दे$_{6.10}$ ग्र$_{2}$ व्याहृत्य (→व्याहृत-); का$_{1}$ ब$_{2.3}$ दे$_{3.5.6}$ -मात्रेण, ब$_{1}$ -मात्रे च (→-मात्रे तु); ते$_{1}$ ** *** मात्रे तु. –b) ब$_{1}$ धीमतः (→देवताः). –c) दे$_{1}$ द$_{1}$ ग्र$_{2}$ गणेश्वर, दे$_{2.6.8-10}$ ग्र$_{2}$ मुवें. मुए. मुब. गणेश्वरं (→गणेश्वराः); दे$_{1.2.8-10}$ मुवें. मुए. मुब. °दैत्यम् (→°देवम्).

२०५. –a) दे$_{5}$ सहस्रस्तर्पसंस्कारां (?). –b) द$_{1}$ ग्र$_{1.2}$ म$_{1}$ त्रिणेत्रं (→त्रिनेत्रं); ग्र$_{2}$ सहस्र° (?) (→चन्द्र°); दे$_{2}$ °भूषितम् (→°चिह्नितम्); न$_{1}$ त्रिनेत्रं चिन्हचन्द्रितं. –c) दे$_{1.4.10}$ °कण्ठ- (→°कण्ठं); दे$_{1}$- मौलि-, दे$_{10}$ -मौली (→मौलिम्). –d) का$_{1}$ शूलं शक्तं, + शूलाशक्तं, ब$_{1}$ दे$_{8}$ मुवें. मुए. मुब. शूलासक्तं, दे$_{1.6}$ शूलशक्ति-, दे$_{2}$ शूलसक्त-, दे$_{4}$ शूलहस्त-, दे$_{10}$ शूलसक्तं (→शूलासक्त-).

२०६. –a) दे$_{3}$ दृष्टा, ग्र$_{2}$ तुष्टा (→दृष्ट्वा); द$_{1}$ ग्र$_{1.2}$ म$_{1}$ तु (→तं); म$_{1}$ सर्वे (→दैत्यम्). –b) दे$_{8.9}$ द$_{1}$ ग्र$_{1}$ म$_{1}$ ऐश्वर्यं, दे$_{10}$ ग्र$_{2}$ ऐश्वरं (→आश्चर्यं); दे$_{4}$ गतः, द$_{1}$ ग्र$_{1.2}$ म$_{1}$ गतम् (→गताः). –d) दे$_{4}$ न$_{1}$ ते$_{1}$ देवदेव (→देवदेवं).

२०७. –a) का$_{1}$ स्थानेतर-(?), दे$_{2}$ न भैरवो, + स्थाने-तव (→स्थाने तव); का$_{1}$ दे$_{2}$ न$_{1}$ द$_{1}$ म$_{1}$ °देवः (→°देव). –b) ब$_{2}$ भवान् (→महान्). –c) ब$_{2}$ मोक्ष्यते°, न$_{1}$ नेक्षसे° (→नेक्षते°); दे$_{8-10}$ मुवें. मुए. मुब. ज्ञाति(दे$_{10}$ °नि)जान् (→[अ]ज्ञानजान्); ग्र$_{2}$ दोषं (→दोषान्). –d) न$_{1}$ गृह्णासि (→गृह्णाति).

२०८. –a) दे$_{1}$ बभौ देवा (→[अ]थ भैरवो). –b) दे$_{1}$ ते$_{1}$ द$_{1}$ ग्र$_{2}$ गणेशं, दे$_{8-10}$ गणेशो (→गणेश-); ब$_{2.3}$ दे$_{1.8-10}$ मुवें. मुए. मुब. °पुंगवः, ग्र$_{2}$ -पुंगवे (→°पुंगवैः). –c) का$_{1}$ महेशभस्मसाधको, ब$_{1}$ सकेशवः समान्धको, ब$_{2}$ सकेशवश्च सोन्धको, ब$_{3}$ सकेशभस्मसान्धको, दे$_{3}$ स केशवस्य सान्धको, दे$_{4}$ (स हा) सकेशवः स सान्धको, दे$_{5}$ सहैव भस्मनान्धको, दे$_{6.8-10}$ सकेशवः स चान्ध(दे$_{6}$ साध)को, न$_{1}$ ते$_{1}$ सकेशवः स सान्धको, द$_{1}$ ग्र$_{1.2}$ म$_{1}$ सकेशवोथ सान्ध(ग्र$_{1}$ °ध)को.

२०९. दे$_{3.6}$ ab ⊙. –a) म$_{1}$ आगत्य(→आगतं). –b) न$_{1}$ द$_{1}$ स शंकरं (→स शंकरः); का$_{1}$ ग्र$_{1}$ ससाधकं, ब$_{1}$ समान्धकं, दे$_{1}$ सशांकरं, दे$_{4}$ न$_{1}$ ससान्धकं, दे$_{5}$ ससान्धका, दे$_{8-10}$ सहान्धकः, ते$_{1}$ तु सान्धकम्, द$_{1}$ ग्र$_{1}$ म$_{1}$ ससान्ध (ग्र$_{1}$ °ध) कं (द$_{1}$ °कः)(→सहान्धकम्). –c) ते$_{1}$ समात्यकं(→समाधवं); दे$_{1}$ समाविकं, ते$_{1}$ समाधवं (→समातृकं). –d) दे$_{4}$ निवृतिं (→निर्वृतिं).

२१०. ते$_{1}$. b ⊙. –b) °नात्मकं, दे$_{3.6}$ °नानुजं (→°नात्मजं); दे$_{1}$ हिरण्यनाभ आत्मजम्. –c) दे$_{1}$ द$_{1}$ शैलजां (→शैलजा). –d) ब$_{1}$ विमानमानवल्लभा, दे$_{1}$ भवानीमीशवल्लभाम्, दे$_{10}$ विनाशमीशवल्लभा, न$_{1}$ विमानामीशभावितम्, ते$_{1}$ विमानरोश (ष) वल्लभा.

२११. ब$_{1}$ ते$_{1}$. cd ⊙. –a) दे$_{1}$ सापि आगतं (→सा समागतं). –b) दे$_{1.8-10}$ मुवें. मुए. मुब. पतिं (→भवं); का$_{1}$ ब$_{2}$ दे$_{5.6}$ भयार्ति°, द$_{1}$ ग्र$_{1.2}$ म$_{1}$ जनार्ति° (→भवार्ति°); दे$_{4}$ °हारिणा (→°हारिणम्). –c) दे$_{1.2.8-10}$ मुवें. मुए. मुब. उवाच (→अवाप); दे$_{2}$ सादरं, द$_{1}$ साधकं, ग्र$_{1}$ चान्धकं, ग्र$_{2}$ तं वीतं. म$_{1}$ तं हतं (→सान्धकं); का$_{1}$ दे$_{4.5.9}$ मुखं, दे$_{10}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ सुतं (→सुखं). –d) ग्र$_{1}$ अप्रियं (→अन्धकं). –ab) दे$_{2}$ विलोक्य सागतं पतिं भवाहिहारिणं शिवं, न$_{1}$ विलोक्य सा समागतं भवार्तिहारिणं हरः. –d) ग्र$_{1}$ अप्रियं (अन्धकं).

२१२. –d) दे$_{8-10}$ नमामि, द$_{1}$ ननाद (→ननाम).

२१३. दे$_{4}$ cd ⊙. –b) का$_{1}$ ब$_{3}$ दे$_{3.6}$ अनादिमध्यमामिमाम्, दे$_{4}$ भयामि मद्रिजामिमाम्, दे$_{5}$ नमामि मध्यजामिमी (मां

वें१.१६.२१७

विभाति या शिवासने शिवेन साकमव्यया ।
हिरण्मयेऽतिनिर्मले नमामि तामिमामजाम् ॥२१४

यदन्तराखिलं जगज्जगन्ति यान्ति संक्षयं ।
नमामि यत्र तामुमामशेषभेदवर्जिजताम् ॥२१५

न जायते न हीयते न वर्द्धते च तामुमां ।
नमामि या गुणातिगा गिरीशपुत्रिकामिमाम् ॥२१६

क्षमस्व देवि शैलजे कृतं मया विमोहतः ।
सुरासुरैर्यदर्च्चितं नमामि ते पदाम्बुजम् ॥२१७

इत्थं भगवती गौरी भक्तिनम्रेण पार्वती ।
संस्तुता दैत्यपतिना पुत्रत्वे जगृहेऽन्धकम् ॥२१८

ततः स मातृभिः सार्द्धं भैरवो रुद्रसंभवः ।
जगामानुज्ञया शंभोः पातालं परमेश्वरः ॥२१९

यत्र सा तामसी विष्णोर्मूर्तिः संहारकारिका ।
समास्ते हरिरव्यक्तो नृसिंहाकृतिरीश्वरः ॥२२०

ततोऽनन्ताकृतिः शंभुः शेषेणापि सुपूजितः ।
कालाग्निरुद्रो भगवान् युयोजात्मानमात्मनि ॥२२१

युञ्जतस्तस्य देवस्य सर्वा एवाथ मातरः ।
बुभुक्षिता महादेवं प्रणम्याहुस्त्रिशूलिनम् ॥२२२

मातर ऊचुः ।❀

बुभुक्षिता महादेव अनुज्ञा दीयतां त्वया ।
त्रैलोक्यं भक्षयिष्यामो नान्यथा तृप्तिरस्ति नः॥२२३

---

?), ग्र$_{1}$म$_{1}$ अनादिनिधनामिमाम्, ग्र$_{2}$ सनादिनीध्यानमामिमां(?). –c) का$_{1}$ दे$_{1.2.5}$ न$_{1}$ द$_{1}$ ग्र$_{1.2}$ °पूरुषो (→°पूरुषौ). –d) का$_{1}$ दे$_{1.2.5}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ यो, ब$_{2}$ दे$_{8.9}$ सा, दे$_{10}$ सो (→या); दे$_{1}$ जारिवं भजत् (?) (→याऽखिलं जगत्).

२१४. दे$_{4}$. ab ⊙. –a) न$_{1}$ विवासने (→शिवासने). –b)दे$_{3}$ शैवेन(→शिवेन);का$_{1}$ साकमध्यमा, दे$_{1}$ नाकमध्यया, ते$_{1}$ शक्तिमध्यगा, द$_{1}$ सार्धमव्यया (→साकमव्यया). –c) ते$_{1}$ ग्र$_{1}$ विनिर्मले, ग्र$_{2}$ [अ]व निर्मले, म$_{1}$ [अ]निर्मितो (→[अ]तिनिर्मले). –d) का$_{1}$ तामुमामजाम्, दे$_{1.2}$ ता नगात्मजाम् , दे$_{4}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ तामजामिमाम्, दे$_{5}$ तामसीमयी, दे$_{8-10}$ मुवें. मुए. मुब. तां हिमाद्रिजाम्, ते$_{1}$ तामगात्मजाम् (→तामिमामजाम्).

२१५. –a)दे$_{5}$ यदन्तरी (→यदन्तरा). –b) का$_{1}$ दे$_{5}$ पतन्ति (→जगन्ति); म$_{1}$ जगन्त्रिधात्रि संक्षयम्. –c) म$_{1}$ सर्वंगाम् (→यत्र ताम्); दे$_{1}$ शैलजाम् , दे$_{4}$ तामिमां, दे$_{8-10}$ तत्पदम् (→तामुमाम्). –d) दे$_{8-10}$ मुवें. मुए. °दोष°, ग्र$_{1}$ °भूत° (→°भेद°).

२१६. –a) दे$_{1}$ कामये, दे$_{10}$ जाग्रते, ते$_{1}$ भूयते (→जायते). –b) दे$_{2}$ तु (→च); दे$_{4}$ न वा पुमान् (→च तामुमाम्). –c) का$_{1}$ मुवें. मुए. मुब. तां गुणातिगां (का$_{1}$ °कां), दे$_{4}$ च गुणातिगां, ग्र$_{1}$ यां गुणातिगां (→या गुणातिगा). –d) दे$_{1}$ °पुत्रकां (→°पुत्रिकां).

२१७. –b) ब$_{1}$ दे$_{1.8-10}$ मुवें मुए. मुब. विमोहितं, दे$_{4}$ विमोहनं, न$_{1}$ ग्र$_{1.2}$ विमोहितः (→विमोहतः). –c) मुए. मुवें. मुब. नमस्कृतं (→यदर्चितं).

२१८. म$_{1}$. ab ⊙. –a) ब$_{2}$ दे$_{2.4.8-10}$ ग्र$_{1.2}$ मुवें. मुए. मुब. देवी (→गौरी). –b) दे$_{1}$ भक्त° (→भक्ति°); ग्र$_{2}$ °युक्तेन (→°नम्रेण).

२१९. ग्र$_{1}$. २१९ a–२२० b ⊙ (द्र. सं ). –c) दे$_{1}$ जगामानुज्ञाया, दे$_{8-10}$ मुवें. मुए. जगाम त्वा(दे$_{10}$ चा) ज्ञया (→जगामानुज्ञया). –d) दे$_{5}$ पाताले, दे$_{8-10}$ सलयं (→पातालं); दे$_{8-10}$ परमेश्वरे (दे$_{9}$ °र), न$_{1}$ परमेष्ठिनः (→परमेश्वरः).

२२०. ग्र$_{1}$. ab ⊙ (द्र. २१९ पा. वि.). –a) द$_{1}$ ग्र$_{2}$ म$_{1}$ महती (→तामसी); दे$_{3.6}$ शंभोर्, न$_{1}$ मूर्तिर् , ग्र$_{2}$ विष्णुर् (→विष्णोर्). –b) न$_{1}$ विष्णोः (→मूर्तिः). –c) ग्र$_{1}$ तलस्ते (→समास्ते); का$_{1}$ समस्तां हरते व्यक्तो, दे$_{1}$ समाहरितिरव्यक्तो (?). –d) न$_{1}$ अव्ययः (→ईश्वरः).

२२१. –a) दे$_{4}$ सोथ (→शंभुः). –b) ग्र$_{1}$ शेषव्यापी, ग्र$_{2}$ शेषोव्यापी, म$_{1}$ शेषो ह्यपि (→शेषेणापि). –d) दे$_{1}$ पूज्यो ह्यात्मनिमात्मनि, ते$_{1}$ ययौ चात्मानमात्मनि, ग्र$_{2}$ योजयात्मानमात्मनि.

२२२. –a) का$_{1}$ जजन्तस् , दे$_{1}$ पूजतस् (→युञ्जतस्); म$_{1}$ बुबुधे (→देवस्य). –b) दे$_{3.4}$ ते$_{1}$ म$_{1}$ सर्वं, दे$_{5}$ स चा (?) (→सर्वा); दे$_{4}$ एवाद्य (→एवाथ); ग्र$_{2}$ मा गिरः (→मातरः). –c) दे$_{1}$ बुभुक्षितो, दे$_{2}$ सुपूजिता, दे$_{6}$ बुभुक्षितं (→बुभुक्षिता); दे$_{3}$ महाबुभुक्षिता देवं. –d) ब$_{1}$ दे$_{1-3.5.6.8-10}$ ग्र$_{2}$ म$_{1}$ मुवें. मुए. मुब. त्रिलोचनम्(म$_{1}$ °नः), न$_{1}$ त्रिशूलिनः (→त्रिशूलिनम्).

❀ ग्र$_{1.2}$. ⊙; का$_{1}$ मातर उवाच; दे$_{1}$ मा*र*चुः ; दे$_{4}$ न$_{1}$ ते$_{1}$ म$_{1}$ मातरः .

२२३. ग्र$_{2}$. ⊙. –a) न$_{1}$ महादेवं (→महादेव). –b) का$_{1}$ ब$_{1.3}$ दे$_{3.4}$ ते$_{1}$ द$_{1}$ ग्र$_{1}$ त्वनुज्ञा, ब$_{2}$ तत्राज्ञा, दे$_{2.5.6}$ ह्यनुज्ञा (→अनुज्ञा); दे$_{8-10}$ मुवें. मुए. मुब. त्वमनुज्ञातुमर्हसि. –c) दे$_{4}$ त्वलोकां (→त्रैलोक्यं). –d) ते$_{1}$ तुष्टि° (→तृप्ति°).

एतावदुक्त्वा वचनं मातरो विष्णुसंभवाः ।
भक्षयाञ्चक्रिरे सर्वं त्रैलोक्यं सचराचरम् ॥२२४
ततः स भैरवो देवो नृसिंहवपुषं हरिम् ।
दध्यौ नारायणं देवं क्षणात्प्रादुरभूद्धरिः ॥२२५
विज्ञापयामास च तं भक्षयन्तीह मातरः ।
निवारयाशु त्रैलोक्यं त्वदीया भगवन्निति ॥२२६
संस्मृता विष्णुना देव्यो नृसिंहवपुषा पुनः ।
उपतस्थुर्महादेवं नरसिंहाकृतिं च तम् ॥२२७
संप्राप्य सन्निधिं विष्णोः सर्वाः संहारकारिकाः ।
प्रददुः शंभवे शक्तिं भैरवायातितेजसे ॥२२८

अपश्यंस्ता जगत्सूतिं नृसिंहमथ भैरवम् ।
क्षणादेकत्वमापन्नं शेषाहिं चापि मातरः ॥२२९
व्याजहार हृषीकेशो ये भक्ताः शूलपाणिनः ।
ये च मां संस्मरन्तीह पालनीयाः प्रयत्नतः ॥२३०
ममैव मूर्तिरतुला सर्वसंहारकारिका ।
महेश्वरांशसंभूता भुक्तिमुक्तिप्रदा त्वियम् ॥२३१
अनन्तो भगवान् कालो द्विधाऽवस्था ममैव तु ।
तामसी राजसी मूर्तिर्देवदेवश्चतुर्मुखः ॥२३२
सोऽयं देवो दुराधर्षः कालो लोकप्रकालनः ।
भक्षयिष्यति कल्पान्ते रुद्रात्मा निखिलं जगत् ॥२३३

वें१.१६.२३४

---

२२४. ग्र$_{2}$. ⊙. –a) दे$_{1.3.10}$ उक्ता (दे$_{1.3}$ °क्ता ?) (→उक्त्वा). –b) न$_{1}$ °संभवः (?), दे$_{9}$ °संभवा (→°संभवाः).

२२५. –a) दे$_{2}$ म$_{1}$ देवान् (→देवो). –b) ब$_{3}$ दे$_{1}$ नृसिंहं (→नृसिंह-). –c) न$_{1}$ दध्य (→दध्यौ). –d) न$_{1}$ क्षणादाविरभूद्धरिः.

२२५. श्लोकस्य c, d चरणयोर्मध्ये दे$_{8.9}$ मुवें. मुए. मुब. अधिकम्—

*प्रणम्य च कृताञ्जलिः । ममेशचिन्तितं (दे$_{9}$ तैं) ज्ञात्वा .

२२५ श्लोकस्य b, c चरणयोर्मध्ये ग्र$_{2}$ पुस्तके २२३, २२४ श्लोकौ वर्तेते.

२२६. –a) दे$_{1}$ स (→च). –c) दे$_{1}$ विनाशयास्व, दे$_{1}$ निवारयामास, दे$_{8-10}$ विनाशयन्ति (→निवारयाशु); दे$_{1}$ त्रैलोक्ये (→त्रैलोक्यं). –d) का$_{1}$ दे$_{4}$ त्वदीयं, ब$_{1}$ त्वदीय-, दे$_{3.6}$ त्वदीयो (→त्वदीया); दे$_{1}$ ग्र$_{1}$ भगवानिति, दे$_{3.6}$ भगवत्त्विति (→भगवन्निति).

२२७. –a) द$_{1}$ देवौ (→देव्यो). –d) न$_{1}$ नार° (→नर°); दे$_{2}$ तथा, दे$_{8.9}$ तु तम्, मुवें. मुए. मुब. ततः (→च तं); का$_{1}$ नृसिंहाकृति च तम्, दे$_{1}$ नृसिंहाकृतिवर्द्धताम्, दे$_{4}$ नृसिंहाकृतिकृत्तिमम्, दे$_{10}$ नृसिंहाकृतिरुत्तमम्.

२२८. –a) ब$_{2}$ संप्राप्ताः (→संप्राप्य); दे$_{1}$ संप्राप्य विष्णुना शंभुः. –b) का$_{1}$ दे$_{1.5.6.10}$ मुवें. सर्व-(→सर्वाः); ग्र$_{2}$ संभार-(?) (→संहार-); दे$_{1.3}$ न$_{1}$ -कारिकां (दे$_{1}$ °रकं), दे$_{4}$ द$_{1}$ ग्र$_{1.2}$ -कारकाः (→-कारिकाः). –c) का$_{1}$ दे$_{6}$ संभवे (→शंभवे); दे$_{10}$ चैव (→शक्तिं). –d) ब$_{2}$ भैरवायामितेजसे (?), ब$_{3}$ दे$_{6}$ भैरवायाय तेजसे.

२२९. –a) का$_{1}$ ब$_{2}$ दे$_{5}$ तां, ब$_{3}$ तान्, दे$_{1}$ ते, दे$_{4}$ त्वं, दे$_{10}$ त्वां (→ता); दे$_{2.5}$ °मूर्ति, दे$_{4}$ °धात्री (→°सूर्तिं). –b) दे$_{8-10}$ नृसिंहमिति, ग्र$_{1}$ मुवें. मुए. मुब. नृसिंहमति- (→नृसिंहमथ). –c) दे$_{1}$ आप्राप्त-, ते$_{1}$ आपन्नान्, द$_{1}$ आपन्ना (→आपन्नं). –d) ब$_{1-3}$ दे$_{3.6}$ शेषाहेश्, दे$_{4}$ शेषादिं, मुवें. शेषाहि(?) (→शेषाहिं); दे$_{1}$ त्वापि (→चापि).

२३०. दे$_{2}$. २२५ b 'पाणिनः' इत्यारभ्य २२६b 'संहार' यावत् ⊙.–b) ब$_{1}$दे$_{3}$ °पाणिनं, दे$_{6}$पाणिनं,+पाणिनः, दे$_{8-10}$ मुवें. मुए. मुब. °पाणये, द$_{1}$ °पाणिने, ग्र$_{1.2}$ म$_{1}$ °पाणिनि (→°पाणिनः). –c) दे$_{5}$ येव मां दे$_{8-10}$ ये धर्मान् (→ये च मां); ते$_{1}$ ये च मां स्मरयन्तीह, द$_{1}$ ग्र$_{1.2}$ म$_{1}$ ये चात्र मां भजन्तीह. –d) दे$_{3}$ प्रयत्नयः (→प्रयत्नतः).

२३१. दे$_{2}$ ab 'ममैम''संहार' ⊙. –a) दे$_{4}$ मयैतन्, ग्र$_{2}$ तमेव (→ममैव);का$_{1}$ ब$_{1-3}$ दे$_{3.5.6}$ ते$_{1}$ सोहमस्याः(का$_{1}$ °सा त्वमश्या, ब$_{3}$ साहमस्या, दे$_{3.6}$ साहमन्या, दे$_{5}$ सा त्वमस्या, ते$_{1}$ अहमस्य) परा मूर्तिः. –c) का$_{1}$ माहेश्वरी स, ब$_{2}$ दे$_{2.8-10}$ ते$_{1}$ ग्र$_{2}$ मुवें. मुए. मुब. महेश्वराङ्ग-, दे$_{1}$ माहेश्वरोङ्ग-, दे$_{4}$ महेश्वरी च, दे$_{5}$ माहेश्वरीश- (→महेश्वरांश-); दे$_{1}$ -संभूतो (→-संभूता). –d) ब$_{1}$ भक्ति° (→भुक्ति°) दे$_{1}$ °प्रदायिनां, दे$_{2}$ °प्रदायिका, दे$_{3.6}$ °प्रदा द्विषाम्, दे$_{5}$ °प्रदाविकं, दे$_{8-10}$ मुवें. मुए. मुब. °प्रदायिनी (→°प्रदा त्वियाम्).

२३२. –a) द$_{1}$ काले (→कालो). –b) ब$_{1}$ द्विधा मूर्तिः, दे$_{4}$ द्विधा संस्था, ते$_{1}$ द्वेधावस्था (→द्विधावस्था); का$_{1}$ ब$_{2.3}$ दे$_{3.5.6}$ ते$_{1}$ शिवस्य (→ममैव). –d) न$_{1}$ सहस्रवदना प्रभुः.

२३३. –a) का$_{1}$ दे$_{2.4.8-10}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ मुवें. मुए. मुब. सोऽहं (→सोऽयं). –b) म$_{1}$ काले (→कालोः); दे$_{1.2-10}$ °पका(दे$_{10}$पा)लकः (→°प्रकालनः).–c) दे$_{1.2.4.8-10}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ मुवें. मुए. मुब. भक्षयिष्यामि (→भक्षयिष्यति); न$_{1}$ कालान्ते (→कल्पान्ते). –d) दे$_{1.2}$ रुद्रेण, दे$_{4.8-10}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ मुवें. मुए. मुब. रौद्रेण, न$_{1}$ रुद्रोयं (→रुद्रात्मा); दे$_{3.6}$ [अ]प्यखिलं (→निखिलं).

.१६.२३५ या सा विमोहिका मूर्तिर्मम नारायणाह्वया ।
सत्त्वोद्रिक्ता जगत्कृत्स्नं संस्थापयति नित्यदा ॥२३४
स हि विष्णुः परं ब्रह्म परमात्मा परा गतिः ।
मूलप्रकृतिरव्यक्ता सदानन्देति कथ्यते ॥२३५
इत्येवं बोधिता देव्यो विष्णुना विश्वमातरः ।
प्रपेदिरे महादेवं तमेव शरणं हरिम् ॥२३६
एतद्वः कथितं सर्वं मयाऽन्धकनिबर्हणम् ।
माहात्म्यं देवदेवस्य भैरवस्यामितौजसः ॥२३७

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायां पूर्वविभागे पञ्चदशोऽध्यायः ॥१५॥

# १६

श्रीकूर्म उवाच ।❋
अन्धके निगृहीते वै प्रह्लादस्य महात्मनः ।
विरोचनो नाम सुतो बभूव नृपतिः पुरा ॥१
देवाञ्जित्वा स देवेन्द्रान् बहून् वर्षान् महासुरः ।

---

**२३४.** –a) दे$_{6}$ विमोहिता, दे$_{8-10}$ मुवें. मुए. मुब. विमोहिनी (→विमोहिका); न$_{1}$ शक्तिर् (→मूर्तिर्). –b) का$_{1}$ ब$_{1-3}$ दे$_{3.5.6}$ ते$_{1}$ अस्य (→मम); दे$_{3.6}$ नारायणाज्ञया, ते$_{1}$ नारायणः स्वयम् (→नारायणाह्वया). –c) का$_{1}$ शतोद्रिक्ता(?), दे$_{1}$ यच्छक्त्या (?), न$_{1}$ सात्त्वोद्रिक्ता, ग्र$_{2}$ शर्वोदीक्षा (→सत्त्वोद्रिक्ता); दे$_{4}$ दे $_{1.2.8-10}$ म$_{1}$ मुवें. मुए. मुब. सर्वं (→कृत्स्नं); दे$_{2}$ सत्त्वोद्रिका लगत् कृत्स्नं, दे$_{10}$ स चोद्रिकूले तत् सर्वं. –d) दे$_{2}$ सर्वदा, दे$_{4}$ सर्वतः (→नित्यदा).

**२३५.** –a) का$_{1}$ ब$_{2.3}$ दे$_{3.6}$ परं विप्राः, ते$_{1}$ स च ब्रह्मा (→परं ब्रह्म); दे$_{1.2.8-10}$ न$_{1}$ मुवें. मुए. मुब. स वि (न$_{1}$ जि)ष्णुः परमं ब्रह्म (दे$_{10}$ धर्मं). –b) ग्र$_{2}$ परागतः (→परा गतिः).

**२३६.** द$_{1}$ ग्र$_{1.2}$ म$_{1}$. cd ⊙. –a) दे$_{1}$ मोहिताः, दे$_{2}$ चोदिताः, द$_{1}$ ग्र$_{1.2}$ म$_{1}$ विष्णुना (→बोधिता); ग्र$_{2}$ ** (→देव्यो). –b) द$_{1}$ ग्र$_{1}$ म$_{1}$ विज्ञप्ता, ग्र$_{2}$ निवृत्ता (→विष्णुना); ब$_{3}$ ब$_{2}$ देव°, दे$_{8.9}$ मुवें. मुए. मुब. विष्णु° (→विश्व°); दे$_{4}$ विष्णुना विश्वमूर्तिना. –c) दे$_{4}$ स्वपेदिरे (→प्रपेदिरे). –d) दे$_{1}$ त्वमे *, दे$_{3}$ तमेवं (→तमेव); दे$_{1.2.8-10}$ मुवें. मुए. मुब. परम् (→हरिम्).

**२३७.** –b) दे$_{1}$ °विनिग्रहम्, दे$_{8-10}$ मुवें. मुए. मुब. °निषूदनम् (→°निबर्हणम्); म$_{1}$ माययाऽन्धकबर्हणम्. –d) ब$_{2.3}$ दे$_{2.6}$ °स्यातितेजसः (→°स्यामितौजसः); ते$_{1}$ भवस्यामिततेजसः.

**पुष्पिका—**

**पुराणनाम—**का$_{1}$ दे$_{1.2.5.8-10}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ मुवें. मुए. मुब. इति श्रीकूर्मपुराणे, ब$_{1}$ इत्यादिमहापुराणे कौर्मे, ब$_{2.3}$ दे$_{3.6}$ इति कूर्मपुराणे, दे$_{4}$ ते$_{1}$ इत्यादिमहापुराणे श्रीकौर्मे, न$_{1}$ इति श्रीकौर्मे, मुब. इति श्रीकौर्मे महापुराणे पूर्वभागे. **अध्यायनाम—** का$_{1}$ ब$_{1-3}$ दे$_{3.6.8.9}$ न$_{1}$ ते$_{1}$ म$_{1}$. ⊙; दे$_{1}$ दैत्यवंशानुकीर्त्तने, दे$_{2}$ मुवें. अन्धकनिबर्हणं नाम, दे$_{10}$ अंधकाख्यानं नाम, द$_{1}$ ग्र$_{1.2}$ अन्धकवधो नाम, मुए. राजवंशानुकीर्तने, मुब. दक्षसुतावंशकीर्तने. **अध्यायसंख्या—**दे$_{6}$. ⊙; का$_{1}$ ब$_{1.3}$ दे$_{3.5}$ न$_{1}$ ते$_{1}$ चतुर्दशोऽध्यायः, ब$_{2}$ ॥१४॥, दे$_{1}$ मुवें. मुए. मुब. षोडशोऽध्यायः ॥१६॥, दे$_{2.8.9}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ षोडशोऽध्यायः, दे$_{4}$ चतुर्दशोऽध्यायः ॥१४॥, दे$_{10}$ षोडशोध्यायः ॥१६॥ श्रीसीतारामचन्द्राय नमः.

### १६

[अध्यायारम्भे अधिकम्—दे$_{8.9}$ वंशानुकीर्तने, दे$_{10}$ श्रीगणेशायनमः]

❋ दे$_{4.8.9}$. ⊙; का$_{1}$ ब$_{1-3}$ दे$_{5.6}$ कूर्म उवाच; दे$_{1.2.10}$ द$_{1}$ मुवें. मुए. मुब. सूत उवाच; न$_{1}$ कूर्मः; ते$_{1}$ ग्र$_{2}$ म$_{1}$ श्रीकूर्म्मः; ग्र$_{1}$ सूतः,+श्रीकूर्म्मः.

**१.** –a) दे$_{2}$ तु निवर्त्ते, दे$_{5}$ म$_{1}$ -न गृहीते (म$_{1}$ °तो) (→निगृहीते); ब$_{2}$ तु (→वै). –b) दे$_{3.8.9}$ प्रह्रादस्य (→प्रह्लादस्य). –c) का$_{1}$ ब$_{1-3}$ दे$_{3-6}$ न$_{1}$ ते$_{1}$ पुत्रो, दे$_{8-10}$ मुवें. मुए. मुब. बली (→सुतो). –d) दे$_{8-10}$ मुवें. मुए. मुब. सुतः (→पुरा).

**२.** दे$_{1}$. ab ⊙. –a) ग्र$_{2}$ त्व था (?) (→जित्वा); दे$_{4}$ देवेन्द्रो (→देवेन्द्रान्). –b) का$_{1}$ ब$_{2}$ दे$_{3.5}$ ते$_{1}$ बहुवर्षान्,

पालयामास धर्मेण त्रैलोक्यं सचराचरम् ॥२
तस्यैवं वर्तमानस्य कदाचिद् विष्णुचोदितः ।
सनत्कुमारो भगवान् पुरं प्राप महामुनिः ॥३
दृष्ट्वा सिंहासनगतो ब्रह्मपुत्रं महासुरः ।
ननामोत्थाय शिरसा प्राञ्जलिर्वाक्यमब्रवीत् ॥४
धन्योऽस्म्यनुगृहीतोऽस्मि संप्राप्तो मे पुरातनः ।
योगीश्वरोऽद्य भगवान् यतोऽसौ ब्रह्मवित् स्वयम् ॥५
किमर्थमागतो ब्रह्मन् स्वयं देवः पितामहः ।
ब्रूहि मे ब्रह्मणः पुत्र किं कार्यं करवाण्यहम् ॥६
सोऽब्रवीद् भगवान् देवो धर्मयुक्तं महासुरम् ।
द्रष्टुमभ्यागतोऽहं वै भवन्तं भाग्यवानसि ॥७
सुदुर्लभा नीतिरेषा दैत्यानां दैत्यसत्तम ।
त्रिलोके धार्मिको नूनं त्वादृशोऽन्यो न विद्यते ॥८
इत्युक्तोऽसुरराजस्तं पुनः प्राह महामुनिम् ।
धर्माणां परमं धर्मं ब्रूहि मे ब्रह्मवित्तम ॥९
सोऽब्रवीद् भगवान् योगी दैत्येन्द्राय महात्मने ।
सर्वगुह्यतमं धर्ममात्मज्ञानमनुत्तमम् ॥१०
स लब्ध्वा परमं ज्ञानं दत्त्वा च गुरुदक्षिणाम् ।
निधाय पुत्रे तद्राज्यं योगाभ्यासरतोऽभवत् ॥११ वं१.१७ ११

---

दे$_{2}$ बहून् युद्धे, दे$_{10}$ वर्षान् शत (→बहून् वर्षान्); दे$_{10}$ ॰सुरान् (→सुरः); दे$_{4}$ देव वै वार्षिकाबहून्, द$_{1}$ दैत्येन्द्रो वर्षकान् बहून्, ग्र$_{1}$ म$_{1}$ दैत्यो वर्षगणान् बहून्, ग्र$_{2}$ दैत्यानथगणान् बहून. –d) द$_{1}$ त्रैलोक्य-(→त्रैलोक्यं).

३. –a) न$_{1}$ तस्यैव (→तस्यैवं). –b) दे$_{4}$ कथाभि-विष्णुबोधितः. –d) दे$_{4}$ सुरं (→पुरं); दे$_{1.2}$ प्राप्तो, दे$_{4}$ द$_{1}$ ग्र$_{1}$ प्राप्य (→प्राप).

४. –a) दे$_{8.9}$ मुवें. मुए. गत्वा (→दृष्ट्वा); म$_{1}$ सिंहासनारुढो (→सिंहासनगतो). –b) दे$_{2}$ ब्राह्मपुत्रं, ग्र$_{2}$ पुरं प्राप्तं (→ब्रह्मपुत्रं); दे$_{4}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ महामुनिं, दे$_{10}$ महापुरः (→महासुरः). –c) दे$_{1}$ न *मो°, दे$_{8-10}$ नमामो°, दे$_{9}$ ननामो°, +नमामो° (→ननामो°); दे$_{5}$ [उ]त्थापरि (?) (→[उ] त्थाय); न$_{1}$ शिरसो, द$_{1}$ ग्र$_{1.2}$ म$_{1}$ सहसा (→शिरसा).

५. –b) न$_{1}$ संप्राप्ता (→संप्राप्तो); का$_{1}$ दे$_{2.3.5.6.8-10}$ मुवें. मुए. मुब. पुरोत्तमम्, ब$_{1}$ न$_{1}$ ते$_{1}$ पुरान्तरम्, ब$_{3}$ पुरातनं, दे$_{4}$ पुरा ततः (→पुरातनः). –c) दे$_{2}$ [अ] सौ, दे$_{4}$ ते$_{1}$ [अ]थ (→[अ] द्य); दे$_{6}$ भगवन्, द$_{1}$ ग्र$_{1}$ म$_{1}$ [आ] गतवान् (→भगवान्); दे$_{5}$ योगीश्वरोश्च भगवान्. –d) दे$_{2}$ यतात्मा, दे$_{8.9}$ जितोऽसौ, ते$_{1}$ यदसौ, ग्र$_{2}$ म$_{1}$ यतो वै (→यतोऽसौ); न$_{1}$ ब्रह्मवित्तमः (→ब्रह्मवित् स्वयम्).

६. –a) दे$_{3}$ स्वयं देवा, दे$_{4}$ स्वयं वेधा, दे$_{10}$ स्वयं (स्वयं) देवाः, ते$_{1}$ स्वयं यन्नः (→स्वयं देवः). –c) ते$_{1}$ नो (→मे).

७. –a) ब$_{1}$ सा (→सो); न$_{1}$ देवा (→देवो). –b) दे$_{3}$ धर्ममुक्तम्, दे$_{4}$ ब्रह्मपुत्रं (→धर्मयुक्तं); दे$_{5}$ °पुरं (→°सुरं). –c) दे$_{10}$ इषुम (?) (→द्रष्टुम्); दे$_{6}$ अव्यागतो, ग्र$_{1}$ असमागतो, ग्र$_{2}$ अभ्यागमो (→अभ्यागतो).

८. द$_{1}$. ८८-९ ⊙ (द्र. सं.). –a) ब$_{3}$ दे$_{1.2}$ दुर्लभा (दे$_{2}$ °भो), द$_{1}$ ग्र$_{1.2}$ म$_{1}$ सुदुर्ग्रहा (→सुदुर्लभा); ब$_{3}$ रीतिरेषा, दे$_{1}$ नीतिरेषा वः, दे$_{2}$ [अ]न्यतरेषां च, दे$_{9}$ नीतरेषां, दे$_{10}$ नीलरेषां, न$_{1}$ नीति तेषां, द$_{1}$ ग्र$_{1}$ म$_{1}$ नीतिरेषां (→नीतिरेषा). –b) दे$_{10}$ देवानां (→दैत्यानां); ब$_{1}$ दे$_{4}$ °सत्तमः, दे$_{10}$ °सत्तमा (→°सत्तम). –c) ब$_{1.2}$ त्रैलोक्ये (ब$_{1}$ °क्य), दे$_{1.4}$ त्रैलोके, दे$_{9}$ त्रिलोक्ये, दे$_{10}$ विलोके (→त्रिलोके); का$_{1}$ धार्मिकै [:], दे$_{10}$ धार्मिकं, म$_{1}$ त्वादृशो (→धार्मिको). –d) दे$_{4}$ तादृशो, म$_{1}$ धार्मिको (→त्वादृशो); ब$_{2}$ °शो नान्यः, दे$_{6}$ °शोन्योन्य (→°शोऽन्यो न).

९. द$_{1}$. ⊙ (द्र. ८ पा. वि.). –a) दे$_{4}$ इत्युक्तं (→इत्युक्तो); का$_{1}$ दे$_{8-10}$ मुवें. मुए. मुब. °राजोऽसौ, दे$_{4}$ °राजं तं, दे$_{6}$ °राजास्त्वं (→°राजस्तं). –b) ग्र$_{2}$ प्रत्याह (→पुनः प्राह); न$_{1}$ °मुनिः (→°मुनिं). –c) ब$_{1}$ दे$_{5}$ धर्म (→धर्मं). –d) दे$_{10}$ धर्म°, ग्र$_{1}$ वेद° (→ब्रह्म°); ग्र$_{2}$ ब्रूहि मे मुनिसत्तम.

१०. –b) दे$_{1}$ महामतिः, दे$_{2}$ महामुनिः (→महात्मने). –d) दे$_{10}$ आत्मा° (→आत्म°); दे$_{1}$ * मुत्तमं, न$_{1}$ अनुत्तमः (→अनुत्तमम्).

११. –a) का$_{1}$ समाप्य, दे$_{4}$ लब्ध्वा च (→स लब्ध्वा); म$_{1}$ सर्वं लब्ध्वा परं ज्ञानम्. –b) दे$_{2}$ दत्त्वाथ (→दत्त्वा च); ब$_{1}$ दात्वा चागुरुदक्षिणा, ग्र$_{2}$ दत्त्वा च गुरूणां वसु. –c) दे$_{1}$ नियम्य (→निधाय); ब$_{1}$ दे$_{4}$ पुत्रं (→पुत्रे); दे$_{8-10}$ तं (→तद्); दे$_{4}$ राज्ये (→राज्यं). –d) का$_{1}$ यो मानुस° (?), ते$_{1}$ **ध्यान° (→योगाभ्यास°); दे$_{2.5}$ °रसोऽभवत्, दे$_{10}$ °रतो महत्, ग्र$_{2}$ °रतो भवेत् (→°रतोऽभवत्).

वें. १.१७.१२ स तस्य पुत्रो मतिमान् बलिर्नाम महासुरः ।
ब्रह्मण्यो धार्मिकोऽत्यर्थं विजिग्येऽथ पुरंदरम् ॥१२
कृत्वा तेन महद् युद्धं शक्रः सर्वामरैर्वृतः ।
जगाम निर्जितो विष्णुं देवं शरणमच्युतम् ॥१३
तदन्तरेऽदितिर्देवी देवमाता सुदुःखिता ।
दैत्येन्द्राणां वधार्थाय पुत्रो मे स्यादिति स्वयम् ॥१४
ततापं सुमहद् घोरं तपोराशिस्तपः परम् ।
प्रपन्ना विष्णुमव्यक्तं शरण्यं शरणं हरिम् ॥१५
कृत्वा हृत्पद्मकिञ्जल्के निष्कलं परमं पदम् ।
वासुदेवमनाद्यन्तमानन्दं व्योम केवलम् ॥१६
प्रसन्नो भगवान् विष्णुः शङ्खचक्रगदाधरः ।
आविर्बभूव योगात्मा देवमातुः पुरो हरिः ॥१७

दृष्ट्वा समागतं विष्णुमदितिर्भक्तिसंयुता ।
मेने कृतार्थमात्मानं तोषयामास केशवम् ॥१८

अदितिरुवाच ।※

जयाशेषदुःखौघनाशैकहेतो
जयानन्तमाहात्म्ययोगाभियुक्त ।
जयानादिमध्यान्तविज्ञानमूर्त्ते
जयाशेषकल्पामलानन्दरूप ॥१९
नमो विष्णवे कालरूपाय तुभ्यं
नमो नारसिंहाय शेषाय तुभ्यम् ।
नमः कालरुद्राय संहारकर्त्रे
नमो वासुदेवाय तुभ्यं नमस्ते ॥२०

---

१२. –a) दे8-10 भगवान् (→मतिमान्); ग्र2 तस्य पुत्रोऽथ मतिमान्. –b) दे4 नाम्ना (→नाम). –c) ग्र2 ब्राह्मण्यो (→ब्रह्मण्यो); ग्र2 धार्मिकी (→धार्मिको); ब1 धीमान्, दे4 न1 द1 ग्र1.2 म1 नित्यं (→[ग्र]त्यर्थं). –d) का1 ब1 दे1.4.5.6 विजिज्ञेथ, दे2 विजित्य स, दे3 विजि*थ (→विजिग्येऽथ).

१३. –a) दे2 म1 महायुद्धं (→महद् युद्धं). –b) दे1 शक्रुः(?) (→शक्रः). –c) दे4 ययाम (?) (→जगाम); दे4 विष्णुः, दे5 विष्णु (?) (→विष्णुं). –d) दे5 ये कं (→देवं).

१४. –a) दे3.4 तदन्तरो(दे4 °रं) (→तदन्तरे); दे2.3.6 [अ]दितिर्देव, ग्र2 [अ]मृतिर्देवी (→[अ]दितिर्देवी). –b) दे2 माता चैव (→देवमाता). –c) दे3.6 युधार्थाय (→वधार्थाय). –d) म1 सुतो (→पुत्रो).

१५. –a) का1 सुमहद(?)घोरं, ब1 दे2.5.8.9 न1 मुवें. मुए. मुब. सुमहाघोरं (→सुमहद्घोरं). –b) का1 ब2.3 दे3.5.6.8-10 न1 ग्र1 मुवें. मुए. मुब. तपो (दे10 °तो) राशि (दे6 °सिं) (→तपोराशिस्); दे3.4.8-10 मुवें. मुए. मुब. ततः, न1 स्तवः, द1 तमः (→तपः).–c). दे5 प्रयत्ना, दे10 प्रसन्न(?), ग्र2 प्रसन्ना, म1 प्रपन्नं (→प्रपन्ना). –d) दे4 हरिः, दे8-10 शिवं (→हरिं).

१६. –a) ग्र2 कृत्वा हि (→कृत्वा हृत्-); दे3.6 °किंजल्कं (→°किंजल्के); दे8-10 कृत्वा किञ्जल्कमध्ये तु. –b) दे10 निष्फलं (→निष्कलं); का1 ब3 परं (→पदम्). –c) दे3.6 अनात्यन्तम् (→अनाद्यन्तम). –d) दे4 द1 ग्र1 धाम (→व्योम); ग्र2 आनन्दादाम केशवं, म1 आनन्दं केवलं परं.

१७. दे4. १७d-१८c ⊙ (इ. सं.). –c) दे5 अर्चिर्वभूव (→आविर्बभूव); ते1 =र्मात्मा (→योगात्मा). –d) दे5 पुरोगमः, न1 पुरा हरिः (→पुरो हरिः).

१८. –a) का1 दे1 दृष्ट्रा (→दृष्ट्वा); दे5 विष्णु [:] (→विष्णुं). –c) ब1 कृता(कृता)र्थम् (→कृतार्थम्); ग्र2 आनन्दो (→आत्मानं).

※ग्र1. ⊙; दे1 आ*ति*वा*; ते1 ग्र2 म1 अदितिः.

१९. –a) का1 दे2.4 °दुःखौघनाशस्य, ब1 °दुःखैक नाशैक-, दे3 °मदुःखौघनाथैक-, दे5 °दुःखौघनाश*, द1 °दुखादिनाशैक-, म1 °दुखौघविनाश- (→°दुःखौघनाशैक-); ग्र2 जया जयाशेषदुःखाघनाश. –b) दे2-4 जयानन्द (दे3 °न्त्य) (→जयानन्त); ब3 °योगातियुक्तः, दे3.8-10 न1 °योगाभि यु (दे3 °मु)क्तः, दे4 °योगाधियुक्त, दे5 द1 °योगाभि-युक्ते (दे5 °क्ता), ग्र1 °यौगैकयुक्त (→°योगाभियुक्त); ग्र2 जयानन्दमाहात्म्ययोगैकयुक्ता. –c) ब3 यया° (→जया°). –d) ब3 ययाशेषं, दे1.8-10 न1 द1 मुवें. मुए. मुब. जयाकाश° (→जयाशेष°); ब1 °कल्पायनानन्दरूप, दे2 °कल्पामलानन्तरूप, दे3 °कल्पामनानन्दरूप, दे4 °कल्पामला भेदरूपा, दे5 न1 कल्पामलानन्दरूपः (न1 °पं), दे6 ग्र2 °कल्पा (ग्र2 °ल्पो) ममा (ग्र2 °ला)नन्दरूपा, ते1 °कल्पामहानन्दरूप.

२०. –a) ब1 °रुद्राय (→°रूपाय). –c) ब1.2 दे2.3.6 द1 ग्र1.2 °रूपाय (→°रुद्राय); का1 कर्त्रेप्रकर्त्रे, न1 द1 ग्र2 संहारमूर्त्ते (→संहारकर्त्रे). –d) न1 नमोऽस्तु (→नमस्ते).

२० श्लोकस्य aचरणानन्तरं ब1 पुस्तके आधिकम्–
नमो योगगम्याय सत्याय तुभ्यं
नमो धर्मविज्ञाननिष्ठाय तुभ्यं । (= २१ bc).

नमो विश्वमायाविधानाय तुभ्यं
नमो योगगम्याय सत्याय तुभ्यम् ।
नमो धर्मविज्ञाननिष्ठाय तुभ्यं
नमस्ते वराहाय भूयो नमस्ते ॥२१

नमस्ते सहस्रार्कचन्द्राभमूर्त्ते
नमो वेदविज्ञानधर्माभिगम्य ।
नमो देवदेवादिदेवादिदेव
प्रभो विश्वयोनेऽथ भूयो नमस्ते ॥२२

नमः शंभवे सत्यनिष्ठाय तुभ्यं
नमो हेतवे विश्वरूपाय तुभ्यम् ।
नमो योगपीठान्तरस्थाय तुभ्यं
शिवायैकरूपाय भूयो नमस्ते ॥२३

एवं स भगवान् कृष्णो देवमात्रा जगन्मयः ।
तोषितश्छंदयामास वरेण प्रहसन्निव ॥२४

प्रणम्य शिरसा भूमौ सा वव्रे वरमुत्तमम् ।
त्वामेव पुत्रं देवानां हिताय वरये वरम् ॥२५

तथास्त्वित्याह भगवान् प्रपन्नजनवत्सलः ।
दत्त्वा वरानप्रमेयस्तत्रैवान्तरधीयत ॥२६

ततो बहुतिथे काले भगवन्तं जनार्दनम् ।
दधार गर्भं देवानां माता नारायणं स्वयम् ॥२७

समाविष्टे हृषीकेशे देवमातुरथोदरम् ।
उत्पाता जज्ञिरे घोरा बलेर्वैरोचनेः पुरे ॥२८ वे. १.१७.२८

---

**२१.** दे4. २१-२२. ⊙ (द्र. सं.); म1. ⊙; ब1. bcd ⊙; न1. a, c ⊙. –a) दे1 °विरोधाय, दे2 °वितानाय, ते1 ग्र2 °विनाशाय, ग्र1 °विधाम्नाय (→°विधानाय). –b) ब2 योगि° (→योग°). –c) ग्र2 °विज्ञाय (→°विज्ञान-); दे1 °वासाय (→°निष्ठाय). –d) ग्र2 वराहाय भूयो नमो नमस्ते.

**२२.** दे4. ⊙ (द्र. २१ पा. वि.); दे1. ⊙. –a) दे8.9 °चन्द्राक्षमूर्ते, दे10 °चन्द्राय मूर्ते, न1 °चन्द्रार्कमूर्त्ते, द1 °चन्द्रार्धमूर्त्ते, ग्र2 °चन्द्रार्क**(→°चन्द्राभमूर्त्ते); दे3.6 नमस्ते चन्द्रार्कसहस्राभमूर्त्ते. –b) ब1 द1 ग्र1 म1 देवविज्ञान-, दे5 विद*ज्ञान-, न1 वेदविज्ञेय- (→वेदविज्ञान-); दे3 न1 -धर्मभिगम्यं, ते1 -धर्मादिगम्य, ग्र2 -धर्माय गम्य, म1 -धर्माधिगम्य (→-धर्माभिगम्य). –c) का1 ते1 नमो देवदेवादिदेव***, ब1 नमो देवादि देव*****, ब2 नमो देवदेवादिदेवाय तुभ्यं, दे3.6 नमो देवदेवादिधर्म (दे6 °र्मं) प्रधान, दे5 नमो देवदेवादिदेवदेव*, दे8-10 मुवें. मुए. मुब. नमो भूधरायाप्रमेयाय तुभ्यं, न1 नमो वेदवेद्याय पाराय तुभ्यं, द1 ग्र1 म1 नमो देवदेवादिदेवात्ममूर्त्ते, ग्र2 नमो देवदेवादिदेवादि मूर्त्ते. –d) दे3 नमो भो विश्वयोने, दे5.6 नमो विश्वयोनेऽथ, द1 ग्र1 म1 प्रभो विश्वयोने तु, ग्र2 नमो (हो) विश्वयोने तु (→प्रभो विश्वयोनेऽथ).

**२३.** दे5 cd 'पीठो'…'यैक' इति खण्डितम्, न1. b ⊙. –a) दे2 ते1 सत्वनिष्ठाय, दे3.6 सत्यनित्याय, दे4 सत्यसंधाय (→सत्यनिष्ठाय). –c) दे1 °पीठांतसंस्थाय, ग्र2 °निष्ठान्तरस्थाय (→°पीठान्तरस्थाय). –d) ब2 नमस्ते नमस्ते, ब3 तुभ्यं नमस्ते, दे3 परमो नमस्ते, दे6 नमो नमस्ते (→भूयो नमस्ते); दे10 नमो हेतवे विश्वरूपाय तुभ्यं.

२३ श्लोकानन्तरं ग्र1.2 पुस्तके अधिकम्—सूतः.

**२४.** दे10.२४ c 'तोषित' इत्यारभ्य २५c 'त्वामेव' यावत् खण्डितम्. –a) दे6.8-10 न1 द1 ग्र1.2 म1 मुवें. मुए. मुब. विष्णु [:] (→कृष्णो). –b) दे5 देवमानी (→देवमात्रा); दे10 न1 जगन्मय (दे10 °ये). (→जगन्मयः). –c) न1 तोषितं (→तोषितश्); का1 चोदयामास (→छंदयामास). –d) दे2 वरेणैवादिति मुदा.

**२५.** दे10. ab ⊙. –a) ग्र2 माता (→भूमौ). –b) का1 स (→सा); का1 परम् (→वरम्). –c) ब1 त्वामेक-, दे6 त्वमेव (→त्वामेव).

**२६.** –a) दे1 तथास्त्विति स, न1 तथेत्युक्त्वाह, ग्र2 तथा स्तुवत्या (→तथास्त्वित्याह). –b) दे3 प्रसन्नो, दे10 न1 प्रसन्न-(→प्रपन्न-); दे1.2 °वल्लभ (दे1 °भः) (→°वत्सलः).–c) ग्र1 तत्वा (→दत्त्वा); दे1 वरम् (→वरान्); द1 [अ]प्रमेयास् (→[अ]प्रमेयस्); दे10 दत्त्वा वरान्प्रमेयस्ते. –d) दे5 °धीयतः (→°धीयत).

**२७.** ग्र2. d ⊙. –c) दे4 ते1 द1 ग्र1.2 म1 गर्भे (→गर्भं). –d) दे10 नमो (→माता); ब1.3 दे4.6 द1 नारायणः (दे4.6 °ण) (→नारायणं); न1 हरिं (→स्वयम्).

**२८.** दे8. ⊙. –a) ग्र2 हृषीकेशो (→हृषीकेशे). –b) दे1 अथोदरे, दे4 अथो वरे (→अथोदरम्). –c) दे5 उत्पता, दे10 उत्पन्नो, ग्र1 उत्पात(?), ग्र2 उत्पाताज् (→उत्पाता);

वं.१.१७.२६ निरीक्ष्य सर्वानुत्पातान् दैत्येन्द्रो भयविह्वलः ।
प्रह्लादमसुरं वृद्धं प्रणम्याह पितामहम् ।।२९

बलिरुवाच ।❀

पितामह महाप्राज्ञ जायन्तेऽस्मत्पुरेऽधुना ।
किमुत्पाता भवेत् कार्यमस्माकं किंनिमित्तकाः।।३०
निशम्य तस्य वचनं चिरं ध्यात्वा महासुरः ।
नमस्कृत्य हृषीकेशमिदं वचनमब्रवीत् ।।३१

प्रह्लाद उवाच ।❀

यो यज्ञैरिज्यते विष्णुर्यस्य सर्वमिदं जगत् ।
दधारासुरनाशार्थं माता तं त्रिदिवौकसाम् ।।३२
यस्मादभिन्नं सकलं भिद्यते योऽखिलादपि ।
स वासुदेवो देवानां मातुर्देहं समाविशत् ।।३३
न यस्य देवा जानन्ति स्वरूपं परमार्थतः ।
स विष्णुरदितेर्देहं स्वेच्छयाऽद्य समाविशत् ।।३४
यस्माद् भवन्ति भूतानि यत्र संयान्ति संक्षयम् ।
सोऽवतीर्णो महायोगी पुराणपुरुषो हरिः ।।३५
न यत्र विद्यते नामजात्यादिपरिकल्पना ।
सत्तामात्रात्मरूपोऽसौ विष्णुरंशेन जायते ।।३६

---

दे4 घोरे, द1 ग्र1.2 विप्राः (→घोरा). –d) ब1 दे10 द1 म1 बलिर्, ग्र1 बलैर् (→बलेर्); का1 दे4.10 ते1 वैरोचने (→वैरोचनेः); ब1 परे, दे10 पुरेः (→पुरे).

२९. –c) दे9 प्रह्लादम् (→प्रह्लादम्); न1 बुधं (→वृद्धं); का1 प्रह्लादञ्च प्रणम्याह, ते1 प्रह्लादमब्रवीत् वाक्यं. –d) दे4 म1 प्रणम्याथ (→प्रणम्याह); का1 वैरोचनपितामहम्, ते1 बलिरेष पितामहम्.

❀ ग्र1. ⊙; दे1 ब* रु* च; दे4 न1 ते1 द1 ग्र2 म1 बलिः.

३०. –a) दे4 न1 पितामहः, दे6 पितामहं (→पितामह); दे4 न1 **प्राज्ञः (न1 °ज्ञं) (→महाप्राज्ञ). –b) दे5 म1 ज्ञायन्ते, न1.मुवें. जायते(?) (→जायन्ते); दे1 [अ]स्मत्पुरांतरे, दे2 मत्पुरान्तरे, दे4 द1 -स्म पुरेधुना, दे6 ग्र1 [अ]स्मत् पुरोधुना, दे8-10 मुवें. मुए. [अ]स्मिन् पुरान्तरे, म1 [अ]स्मत् पुरेधमाः (→[अ]स्मत् पुरेऽधुना); ग्र2 जायन्तेस्तु पुरेधुना. –c) न1 मुवें. मुए. उत्पातो, ग्र1 उत्पातात् (→उत्पाता). –d) दे6.10 मुवें. मुए. मुब. किन्निमित्तकः, न1 किन्निमित्ततः, ग्र2 दुर्निमित्तकाः (→किंनिमित्तकाः).

३१. –a) दे1 तस्य(तस्य) (→तस्य). –c) का1 नमस्कृत, ब1 दे1.2.4 न1 ते1 द1 ग्र1.2 म1 नमस्कृत्वा (→नमस्कृत्य).

* दे1 प्रह्ला*उ*च; दे2 प्रह्लादोवाच; दे3.9 प्रह्लाद उवाच; न1 ते1 ग्र1.2 म1 प्रह्लादः .

३२. दे4. द1 ग्र1.2. cd ⊙. –a) का1 इत्यते, दे1 यजते, दे2 ईज्यते, दे3 इष्यते (→इज्यते). –b) ब3 ह्यस्य (→यस्य); दे5 नमस्कृत्यमिदं जगत्. –c) ब1 °नाशान्नं, दे2 °नाशाय (→°नाशार्थं). –d) का1 मातायं, दे2 मातेयं, दे5 माताय (→माता तं); दे3 स्त्रि(?) दिवौकसाम् (→त्रिदिवौकसाम्).

३३. –a) न1 तस्मात् (→यस्मात्); ग्र1 अभिन्न- (→अभिन्नं). –b) दे10 भिद्याता(?) (→भिद्यते); दे10 याखिलादपि, ग्र2 योखिलञ्जगत् (→योऽखिलादपि). –c) दे10 वासुदेवो हि देवानां. –d) दे3.4 देह-, न1 देवं, ग्र2 गर्भो (→देहं).

३३ श्लोकस्य b, c मध्ये दे4 द1 ग्र1 म1 पुस्तकेऽधिकम्.
* दधारासुरनाशार्थमात्मानं त्रिदिवौकसाम् । ( = ३२ cd)
ग्र2 अधिकम्—
यस्याभिन्नं सकला भिद्यते योऽखिलञ्जगत् ।
दधारासुरनाशार्थमात्मानं त्रिदिवौकसाम् ।
( = ३२cd–३३ab)

३४. दे4. ⊙. –a) का1 दे3.6 न तस्य (→न यस्य); ब1 देवान् (→देवा). –c) ब1 दे1.10 अदितिर् (→अदितेर्).

३५. –a) दे6 भवति (→भवन्ति). –b) ब1 दे3-6 न1 संया(ब1 °जा)ति (→संयान्ति). –c) यो (→सो); दे10 ते1 [अ]वतीर्य (दे10 °र्यो) (→[अ]वतीर्णो). –d) का1 दे1.3.5.6 पुराणः (→पुराण-); द1 ग्र1.2 म1 °पुरुषोत्तमः (→°पुरुषो हरिः).

३६. –a) ब3 ननाम, दे3 न यस्य (→न यत्र); दे2 विशते (→विद्यते); ब3 यत्र (→नाम-).–b) दे1 °जप्यादि°, दे4 °यात्यादि° (→°जात्यादि°); न1-रपिकल्पना (→-परिकल्पना). –c) ब1 सत्तामात्रार्थं°, दे3.6 सत्य (दे6 °त्ता) मात्रानु°, द1 सत्वात्मात्मात्म°, म1 सत्तामात्रस्व° (→सत्रामात्रात्म°); ते1 सत्तामात्रात्मको योगी. –d) दे1.8.9 रूपेण, दे10 रूपे* (→अंशेन); ते1 विष्णुरेष न जायते.

यस्य सा जगतां माता शक्तिस्तद्धर्मधारिणी ।
माया भगवती लक्ष्मीः सोऽवतीर्णो जनार्दनः ॥३७
यस्य सा तामसी मूर्त्तिः शंकरो राजसी तनुः ।
ब्रह्मा संजायते विष्णुरंशेनैकेन सत्त्वभृत् ॥३८
इत्थं विचिन्त्य गोविन्दं भक्तिनम्रेण चेतसा ।
तमेव गच्छ शरणं ततो यास्यसि निर्वृतिम् ॥३९
ततः प्रह्लादवचनाद् बलिर्वैरोचनिर्हरिम् ।
जगाम शरणं विश्वं पालयामास धर्मतः ॥४०
काले प्राप्ते महाविष्णुं देवानां हर्षवर्द्धनम् ।
असूत कश्यपाच्चैनं देवमाताऽदितिः स्वयम् ॥४१
चतुर्भुजं विशालाक्षं श्रीवत्साङ्कितवक्षसम् ।
नीलमेघप्रतीकाशं भ्राजमानं श्रियावृतम् ॥४२
उपतस्थुः सुराः सर्वे सिद्धाः साध्याश्च चारणाः ।
उपेन्द्रमिन्द्रप्रमुखा ब्रह्मा चर्षिगणैर्वृतः ॥४३
कृतोपनयनो वेदानध्यैष्ट भगवान् हरिः ।
समाचारं भरद्वाजात् त्रिलोकाय प्रदर्शयन् ॥४४
एवं हि लौकिकं मार्गं प्रदर्शयति स प्रभुः ।
स यत् प्रमाणं कुरुते लोकस्तदनुवर्तते ॥४५　वे.१.१७.४५

३७. –a) दे$_{4}$ द$_{1}$ ग्र$_{1}$ म$_{1}$ यस्येशा, दे$_{8-10}$ तस्य सा, ते$_{1}$ यस्यसौ, ग्र$_{2}$ यस्येह (→यस्य सा); ग्र$_{1,2}$ जगतो (→जगतां) दे$_{1.2}$ यस्य (दे$_{2}$ °स्तु) साक्षाज्जगन्माता, न$_{1}$ यस्य सांतत्व तां माता. –b) का$_{1}$ ब$_{1-3}$ दे$_{2-4}$ ते$_{1}$ °धर्मधर्मिणी (ब$_{1}$ °रणा), दे$_{10}$ °धर्म्यधर्मिणी, न$_{1}$ °धर्मधर्मणी (→°धर्मधारिणी); दे$_{5}$ शक्तिस्वधर्मधर्मिणां, दे$_{6}$ शक्तिमुद्धर्मधर्मिरणी, द$_{1}$ नात्माशक्तिस्वधर्मिणी, ग्र$_{1.2}$ माताशक्तिस्वधर्मिरणी, म$_{1}$ मायाशक्तिस्वधर्मिणी. –c) ब$_{2}$ माता (→माया) दे$_{5}$ लक्षाः (→लक्ष्मीः); दे$_{6}$ [अ]वतीर्णं- (→[अ]वतीर्णो).

३८. –b) ग्र$_{2}$ शांकरी, मुब. शंकरी (→शंकरो); दे$_{1}$ जायसी तनुः, म$_{1}$ (रा) जायसी तनुः (→राजसी तनुः). –c) दे$_{1}$ ब्रह्म (→ब्रह्मा); द$_{1}$ ग्र$_{1.2}$ म$_{1}$ स जायते (→संजायते). –d) दे$_{5}$ स्वांशेन (→अंशेन); दे$_{8-10}$ ते$_{1}$ म$_{1}$ मुवें. मुए. मुब. सत्त्वधृक् (→सत्वभृत्).

३९. –a) का$_{1}$ दे$_{2.8-10}$ मुवें. मुए. मुब. इति सञ्चिन्त्य, ग्र$_{2}$ इत्थं विसृज्य (→इत्थं विचिन्त्य); दे$_{1}$ प्रह्लादो(→गोविन्दं). –b) ग्र$_{2}$ तेजसा (→चेतसा). –c) दे$_{2}$ न$_{1}$ म$_{1}$ शरणं गच्छ (→गच्छ शरणं). –d) दे$_{5}$ हितो (→ततो); दे$_{10}$ ग्र$_{1}$ निर्वृतम् न$_{1}$ निर्वृतिः, ते$_{1}$ निर्वृतिम्, + निर्वृतिः (→निर्वृतिम्).

४०. –a) ब$_{3}$ दे$_{3.9}$ प्रह्राद° (→प्रह्लाद°). –b) दे$_{10}$ बहि[:] (→बलिर्); दे$_{1.2.10}$ ते$_{1}$ म$_{1}$ वैरोचनो हरिं (म$_{1}$ °रिः), दे$_{6}$ वैरोचनिं हरि, न$_{1}$ वैरोचनस्तदा, ग्र$_{2}$ वैरोचनिर्हरिः (→वैरोचनिर्हरिम्). –c) दे$_{4.6}$ विष्णुं, दे$_{10}$ विश्वं, + विष्णुं, न$_{1}$ विष्णुः (→विश्वं). –d) दे$_{8-10}$ मुवें. मुए. धर्मवित्, न$_{1}$ मेदिनीं (→धर्मतः).

४१. –a) ब$_{1}$ कालप्राप्ते, दे$_{4}$ काले प्राप्तं (→काले प्राप्ते). –c) दे$_{5}$ प्रसूत (→असूत); का$_{1}$ ब$_{3}$ कश्यपादेनं, ब$_{1}$ दे$_{3.4.6}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ क(द$_{1}$ ग्र$_{1}$ म$_{1}$का)श्यपस्यैनं (दे$_{4}$ °तां), दे$_{1}$ कश्यपाद्यैनं, दे$_{5}$ कश्यपाद्देवं, न$_{1}$ कश्यपादेव (→कश्यपाच्चैनं). –d) का$_{1}$ दे$_{5}$ न$_{1}$ म$_{1}$ °मातादिति[:], दे$_{10}$ °मातादिभिः (→°माताऽदितिः); ग्र$_{2}$ देवतादितिरस्वयम्.

४२. –a) ब$_{1}$ चतुर्भुज- (→चतुर्भुजं). –b) दे$_{5}$ °वक्षसां (→°वक्षसं); दे$_{4}$ वरीवत्साङ्कितवत्सकम्. –c) दे$_{2}$ नीलवर्ण° (→नीलमेघ°). –d) दे$_{1}$ भाजमानं(?), दे$_{5}$ भ्राजमान- (→भ्राजमानं); दे$_{4}$ द$_{1}$ ग्र$_{1}$ म$_{1}$ श्रियायुतम् (→श्रियावृतम्).

४३. –a) दे$_{1}$ सुरा, दे$_{4}$ यतः (→सुराः). –b) ग्र$_{2}$ सिद्ध-(→सिद्धाः); दे$_{4}$ तु(→च); का$_{1}$ दे$_{4}$ चारणः (दे$_{4}$ °रण), ब$_{1}$ वारणाः, दे$_{10}$ चारुणाः, ग्र$_{1}$ दारुणाः (→चारणाः). –c) ब$_{1}$ मुवें. मुए. उपेन्द्र इन्द्र°, दे$_{5}$ उपेन्द्र(?)द्रेन्द्र° (→उपेन्द्रमिन्द्र°); दे$_{3.6}$ °प्रमुखो (→°प्रमुखा); म$_{1}$ महेन्द्रप्रमुखा ब्रह्मा. –d) का$_{1}$ दे$_{3}$ ब्रह्म च(दे$_{3}$ °व)र्षि, दे$_{1}$ ब्रह्मातृषि°(?), दे$_{4}$ ब्रह्मत्वेन°, दे$_{6}$ द$_{1}$ ग्र$_{1.2}$ ब्रह्मा ऋषि°, म$_{1}$ सर्वं ऋषि° (→ब्रह्मा चर्षि°); दे$_{2}$ सह, ग्र$_{2}$ युतः (→वृतः).

४४. –a) का$_{1}$ °नयने (→°नयनो); ग्र$_{2}$ देवान् (→वेदान्). –b) दे$_{4}$ अध्येष्व, ते$_{1}$ अध्येष्ट (→अध्यैष्ट); दे$_{1}$ साध्या शिष्टावयो हरिः, दे$_{2}$ अध्यगीष्ठा व्यपोहरिः. –c) का$_{1}$ दे$_{2}$ मुवें. मुए. मुब. सदाचारं (का$_{1}$ °र-), ब$_{1}$ समाचरद्. दे$_{3.6}$ समाश्चिरं (→समाचारं); का$_{1}$ -भजः सर्वं, दे$_{1}$ भरद्वाजान्, दे$_{5}$ भ**ज-, ग्र$_{2}$ म$_{1}$ भरद्वाजस् (→भरद्वाजात्). –d) दे$_{2}$ त्रैलोक्याय (→त्रिलोकाय); दे$_{4}$ प्रदर्शयत्, दे$_{6}$ प्रदर्शय, द$_{1}$ ग्र$_{1.2}$ म$_{1}$ प्रदर्शितं (→प्रदर्शयन्).

४५. –a) दे$_{1}$ एवं स, दे$_{2.8-10}$ मुवें. मुए. मुब. एवं च (→एवं हि); का$_{1}$ लौकिकः (→लौकिकं); का$_{1}$ सर्गं, दे$_{5}$ सर्वं (→मार्गं). –b) दे$_{4}$ सर्वेषां तु प्रदर्शय. –d) दे$_{1}$ लोकास् (→लोकम्).

वें.१.१७.४६ ततः कालेन मतिमान् बलिर्वैरोचनिः स्वयम् ।
यज्ञैर्यज्ञेश्वरं विष्णुमर्चयामास सर्वगम् ॥४६
ब्राह्मणान् पूजयामास दत्त्वा बहुतरं धनम् ।
ब्रह्मर्षयः समाजग्मुर्यज्ञवाटं महात्मनः ॥४७
विज्ञाय विष्णुर्भगवान् भरद्वाजप्रचोदितः ।
आस्थाय वामनं रूपं यज्ञदेशमथागमत् ॥४८
कृष्णाजिनोपवीताङ्ग आषाढेन विराजितः ।
ब्राह्मणो जटिलो वेदानुद्गिरन् भस्ममण्डितः ॥४९
संप्राप्यासुरराजस्य समीपं भिक्षुको हरिः ।
स्वपादैर्विमितं देशमयाचत बलिं त्रिभिः ॥५०
प्रक्षाल्य चरणौ विष्णोर्बलिर्भावसमन्वितः ।
आचामयित्वा भृङ्गारमादाय स्वर्णनिर्मितम् ॥५१

दास्ये तवेदं भवते पदत्रयं
प्रीणातु देवो हरिरव्ययाकृतिः ।
विचिन्त्य देवस्य कराग्रपल्लवे
निपातयामास जलं सुशीतलम् ॥५२
विचक्रमे पृथिवीमेष एता-
मथान्तरिक्षं दिवमादिदेवः ।
व्यपेतरागं दितिजेश्वरं तं
प्रकर्तुकामः शरणं प्रपन्नम् ॥५३
आक्रम्य लोकत्रयमीशपादः
प्राजापत्याद् ब्रह्मलोकं जगाम ।
प्रणेमुरादित्यसहस्रकल्पं
ये तत्र लोके निवसन्ति सिद्धाः ॥५४

४६. –a) दे$_{10}$ अतः (→ततः). –b) दे$_{1.10}$ वैरोचनः, दे$_{2.6}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ वैरोचनि- (दे$_{2}$ °न-) (→वैरोचनिः). –c) दे$_{4}$ द$_{1}$ ग्र$_{1.2}$ यज्ञे (→यज्ञैर्).

४७. –a) दे$_{2}$ अर्च्चयामास, ते$_{1}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ भोजयामास (→पूजयामास). –b) दे$_{4}$ कृत्वा(→दत्त्वा); दे$_{4}$ वाह्यान्तरं, ते$_{1}$ च*** (→बहुतरं).–c) द$_{1}$ ग्र$_{1.2}$ ब्रह्मादयस् (→ब्रह्मर्षयः); द$_{1}$ ग्र$_{1.2}$ सुरा जग्मुः (→समाजग्मुः). –d) दे$_{3}$ °वादं(→°वाटं).

४८. –a) दे$_{1}$ यज्ञाय(→विज्ञाय); ब$_{1}$ मूर्त्तिर् (→विष्णुर्). –b) ब$_{3}$ भरद्वाजः, दे$_{1}$ भारद्वाज- (→भरद्वाज-). –c) ते$_{1}$ आस्थाय,+आज्ञाय (→आस्थाय). –d) दे$_{4}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ यज्ञवाटम् (→यज्ञदेशम्); ब$_{1}$ ते$_{1}$ अथागतः (→अथागमत्).

४९. –a) दे$_{1}$ कृष्णज (?) नो*वीती च, दे$_{4}$ कृत्वाजिनोपनीतांगं, ग्र$_{2}$ कृष्णजिनोपवीत(सर्वा)गं. –b) ग्र$_{2}$ विराजितं (→विराजितः). –c) का$_{1}$ ब$_{2.3}$ दे$_{1-3.5}$ ब्रह्मण्यो (दे$_{1}$ °णो) (→ब्राह्मणो). –d) दे$_{4}$ उच्चरन् (?), द$_{1}$ ग्र$_{1}$ म$_{1}$ उदीरन्, ग्र$_{2}$ निरयन् (→उद्गिरन्); दे$_{6}$ तस्म मंडितः, दे$_{8-10}$ मुवें. मुए. मुब. सु (दे$_{8.9}$ स) महाद्युतिः, द$_{1}$ ग्र$_{1.2}$ यज्ञमन्दिरं (→भस्ममण्डितः); ब$_{1}$ उद्गिरन्तस्समन्ततः .

५०. –a) ते$_{1}$ संप्राप (→संप्राप्य); दे$_{3}$ सुर° (→[अ]सुर°). –b) न$_{1}$ समेघं (→समीपं). –c) न$_{1}$ द$_{1}$ ग्र$_{1.2}$ स्वपदैः (द$_{1}$ °तैः), मुवें. स्वपद्भ्यां (→स्वपादैर्); का$_{1}$ दे$_{5}$ निर्मि (का$_{1}$ °मि) तं, दे$_{4}$ न$_{1}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ सम्मितं (न$_{1}$ °तां); दे$_{8-10}$ मुवें. मुए. क्रमितं, ते$_{1}$ मापितं (→विमितं); दे$_{5}$ देशां, न$_{1}$ भूमिं (→देशं). –d) दे$_{8}$ ग्र$_{1}$ अयाचित (→अयाचत); का$_{1}$ बलारिभिः, दे$_{3.6}$ बलिन्दि (दे$_{6}$ °न्द्रि)भिः, दे$_{5}$ च लिक्षितं (→बलिं त्रिभिः).

५१. –b) ब$_{1}$ दे$_{1}$ वलि-, दे$_{5}$ वाली (→बलिर्); दे$_{4}$ आचारयित्वा, (→आचामयित्वा). –c) दे$_{1}$ भृंगारुम् (→भृङ्गारम्). –d) दे$_{5}$ °निर्मितां, न$_{1}$ °मण्डितम् (→°निर्मितम्); ग्र$_{2}$ स्वर्णपात्रेण निर्मितम्.

५२. –a) ब$_{2.3}$ दास्येत्तवोहं, दे$_{1}$ ददाम्यर्थं च, दे$_{2}$ ददाम्यथेदं, दे$_{4}$ न$_{1}$ म$_{1}$ मुवें. मुए. मुब, दास्ये तथेदं, दे$_{10}$ दास्ये तदेवं (→दास्ये तवेदं); दे$_{4}$ तवते, ते$_{1}$ भगवन् (→भवते); दे$_{10}$ परत्र* (→पदत्रयं). –b) दे$_{10}$ प्रीणाति, ते$_{1}$ प्रीत्यादि, म$_{1}$ प्रीणाय (→प्रीणातु); दे$_{3}$ देवी, ते$_{1}$ देवं (→देवो); दे$_{2.3.6}$ अव्ययात्मा, ते$_{1}$ अव्ययाकृतिम् (→अव्ययाकृतिः). –c) न$_{1}$ इतीरयित्वा स कराग्रपल्लवे. –d) दे$_{1}$ $_{2.8-10}$ मुवें. मुए. मुब. सुशीतलं जलम् (→जलं सुशीतलम्).

५३. –a) का$_{1}$ एवम् (→एष); दे$_{3}$ एतौ, दे$_{8-10}$ मुवें. मुए. मुब. चैताम्, म$_{1}$ एकाम् (→एताम्). –b) ब$_{1}$ दे$_{4}$ द$_{1}$ दिवि, ते$_{1}$ स्वयं (→दिवम्); ब$_{1}$ दे$_{4}$ °देव (→°देवः). –c) दे$_{2}$ दितिजेश्वरेश्वरं, ते$_{1}$ दितिजात्मजं तं (→दितिजेश्वरंतं); ब$_{1}$ व्यपेतरागादितिजेश्वरत्वं, ग्र$_{2}$ व्याप्तो तरागादितिजेश्वरन्तं. –d) का$_{1}$ ब$_{2.3}$ दे$_{2.5}$ न$_{1}$ प्रहर्तुकामं, दे$_{4}$ प्रपन्नकामः (→प्रकर्तुकामः); दे$_{3.6}$ प्रपन्नः (→प्रपन्नम्).

५४. –a) दे$_{2}$ °त्रयमस्य° (→°त्रयमीश°); द$_{1}$ ग्र$_{1.2}$ म$_{1}$ °पादम् (→°पादः). –b) का$_{1}$ दे$_{4}$ न$_{1}$ द$_{1}$ म$_{1}$ प्राजापत्यं, ग्र$_{2}$ प्रजापतिस्तद् (→प्राजापत्याद्). –c) दे$_{1.2}$ °शरीरकल्पा, दे$_{8-10}$ मुवें. मुए. मुब. °मुखाः सुरेन्द्राः (→°सहस्रकल्पं).

वें. १.१७.४६

ततः कालेन मतिमान् बलिर्वैरोचनिः स्वयम् ।
यज्ञैर्यज्ञेश्वरं विष्णुमर्चयामास सर्वगम् ॥४६

ब्राह्मणान् पूजयामास दत्त्वा बहुतरं धनम् ।
ब्रह्मर्षयः समाजग्मुर्यज्ञवाटं महात्मनः ॥४७

विज्ञाय विष्णुर्भगवान् भरद्वाजप्रचोदितः ।
आस्थाय वामनं रूपं यज्ञदेशमथागमत् ॥४८

कृष्णाजिनोपवीताङ्ग आषाढेन विराजितः ।
ब्राह्मणो जटिलो वेदानुद्गिरन् भस्ममण्डितः ॥४९

संप्राप्यासुरराजस्य समीपं भिक्षुको हरिः ।
स्वपादैर्विमितं देशमयाचत बलिं त्रिभिः ॥५०

प्रक्षाल्य चरणौ विष्णोर्बलिर्भावसमन्वितः ।
आचामयित्वा भृङ्गारमादाय स्वर्णनिर्मितम् ॥५१

दास्ये तवेदं भवते पदत्रयं
प्रीणातु देवो हरिरव्ययाकृतिः ।
विचिन्त्य देवस्य कराग्रपल्लवे
निपातयामास जलं सुशीतलम् ॥५२

विचक्रमे पृथिवीमेष एता-
मथान्तरिक्षं दिवमादिदेवः ।
व्यपेतरागं दितिजेश्वरं तं
प्रकर्तुकामः शरणं प्रपन्नम् ॥५३

आक्रम्य लोकत्रयमीशपादः
प्राजापत्याद् ब्रह्मलोकं जगाम ।
प्रणेमुरादित्यसहस्रकल्पं
ये तत्र लोके निवसन्ति सिद्धाः ॥५४

---

४६. –a) दे$_{10}$ अतः (→ततः). –b) दे$_{1.10}$ वैरोचनः, दे$_{2.6}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ वैरोचनि- (दे$_{2}$ °न-) (→वैरोचनिः). –c) दे$_{4}$ द$_{1}$ ग्र$_{1.2}$ यज्ञे (→यज्ञैर्).

४७. –a) दे$_{2}$ अर्च्चयामास, ते$_{1}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ भोजयामास (→पूजयामास). –b) दे$_{4}$ कृत्वा(→दत्त्वा); दे$_{4}$ वाह्यान्तरं, ते$_{1}$ च*** (→बहुतरं).–c) द$_{1}$ ग्र$_{1.2}$ ब्रह्मादयस् (→ब्रह्मर्षयः); द$_{1}$ ग्र$_{1.2}$ सुरा जग्मुः (→समाजग्मुः). –d) दे$_{3}$ °वादं(→°वाटं).

४८. –a) दे$_{1}$ यज्ञाय(→विज्ञाय); ब$_{1}$ मूत्तिर् (→विष्णुर्). –b) ब$_{3}$ भरद्वाजः, दे$_{1}$ भारद्वाज- (→भरद्वाज-). –c) ते$_{1}$ आस्थाय,+आज्ञाय (→आस्थाय). –d) दे$_{4}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ यज्ञवाटम् (→यज्ञदेशम्); ब$_{1}$ ते$_{1}$ अथागतः (→अथागमत्).

४९. –a) दे$_{1}$ कृष्णज (?) नो*वीती च, दे$_{4}$ कृत्वाजिनोपनीतांगं, ग्र$_{2}$ कृष्णजिनोपवीत(सर्वा)गं. –b) ग्र$_{2}$ विराजितं (→विराजितः). –c) का$_{1}$ ब$_{2.3}$ दे$_{1-3.5}$ ब्रह्मण्यो (दे$_{1}$ °णो) (→ब्राह्मणो). –d) दे$_{4}$ उचरन् (?), द$_{1}$ ग्र$_{1}$ म$_{1}$ उदीरन्, ग्र$_{2}$ निरयन् (→उद्गिरन्); दे$_{6}$ तस्म मंडितः, दे$_{8-10}$ मुवें. मुए. मुब. सु (दे$_{8.9}$ स) महाद्युतिः, द$_{1}$ ग्र$_{1.2}$ यज्ञमन्दिरं (→भस्ममण्डितः); ब$_{1}$ उद्गिरन्तस्समन्ततः .

५०. –a) ते$_{1}$ संप्राप (→संप्राप्य); दे$_{3}$ सुर° (→[अ] सुर°). –b) न$_{1}$ समेघं (→समीपं). –c) न$_{1}$ द$_{1}$ ग्र$_{1.2}$ स्वपदैः (द$_{1}$ °तैः), मुवें. स्वपद्भ्यां (→स्वपादैर्); का$_{1}$ दे$_{5}$ निर्मि (का$_{1}$ °मि) तं, दे$_{4}$ न$_{1}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ सम्मितं (न$_{1}$ °तां); दे$_{8-10}$ मुवें. मुए. क्रमितं, ते$_{1}$ मापितं (→विमितं); दे$_{5}$ देशां, न$_{1}$ भूमिं (→देशं). –d) दे$_{8}$ ग्र$_{1}$ अयाचित (→अयाचत); का$_{1}$ बलारिभिः, दे$_{3.6}$ बलिन्दि (दे$_{6}$ °न्द्रि)भिः, दे$_{5}$ च लिक्षितं (→बलिं त्रिभिः).

५१. –b) ब$_{1}$ दे$_{1}$ वलि-, दे$_{5}$ वाली (→बलिर्); दे$_{4}$ आचारयित्वा, (→आचामयित्वा). –c) दे$_{1}$ भृंगारुम् (→भृङ्गारम्). –d) दे$_{5}$ °निर्मितां, न$_{1}$ °मण्डितम् (→°निर्मितम्); ग्र$_{2}$ स्वर्णपात्रेण निर्मितम्.

५२. –a) ब$_{2.3}$ दास्येत्तवोहं, दे$_{1}$ ददाम्यथं च, दे$_{2}$ ददाम्यथेदं, दे$_{4}$ न$_{1}$ म$_{1}$ मुवें. मुए. मुब, दास्ये तथेदं, दे$_{10}$ दास्ये तदेवं (→दास्ये तवेदं); दे$_{4}$ तवते, ते$_{1}$ भगवन् (→भवते); दे$_{10}$ परत्र* (→पदत्रयं). –b) दे$_{10}$ प्रीणाति, ते$_{1}$ प्रीत्यादि, म$_{1}$ प्रीणाय (→प्रीणातु); दे$_{3}$ देवी, ते$_{1}$ देवं (→देवो); दे$_{2.3.6}$ अव्ययात्मा, ते$_{1}$ अव्ययाकृतिम् (→अव्ययाकृतिः). –c) न$_{1}$ इतीरयित्वा स कराग्रपल्लवे. –d) दे$_{1}$ $_{2.8-10}$ मुवें. मुए. मुब. सुशीतलं जलम् (→जलं सुशीतलम्).

५३. –a) का$_{1}$ एवम् (→एष); दे$_{3}$ एतौ, दे$_{8-10}$ मुवें. मुए. मुब. चैताम्, म$_{1}$ एकाम् (→एताम्). –b) ब$_{1}$ दे$_{4}$ द$_{1}$ दिवि, ते$_{1}$ स्वयं (→दिवम्); ब$_{1}$ दे$_{4}$ °देव (→°देवः). –c) दे$_{2}$ दितिजेश्वरेश्वरं, ते$_{1}$ दितिजात्मजं तं (→दितिजेश्वरं तं); ब$_{1}$ व्यपेतरागादितिजेश्वरत्वं, ग्र$_{2}$ व्याप्तो तरागादितिजेश्वरन्तं. –d) का$_{1}$ ब$_{2.3}$ दे$_{2.5}$ न$_{1}$ प्रहर्तुकामं, दे$_{4}$ प्रपन्नकामः (→प्रकर्तुकामः); दे$_{3.6}$ प्रपन्नः (→प्रपन्नम्).

५४. –a) दे$_{2}$ °त्रयमस्य° (→°त्रयमीश°); द$_{1}$ ग्र$_{1.2}$ म$_{1}$ °पादम् (→°पादः). –b) का$_{1}$ दे$_{4}$ न$_{1}$ द$_{1}$ म$_{1}$ प्राजापत्यं, ग्र$_{2}$ प्रजापतिस्तद् (→प्राजापत्याद्). –c) दे$_{1.2}$ °शरीरकल्पा, दे$_{8-10}$ मुवें. मुए. मुब. °मुखाः सुरेन्द्राः (→°सहस्रकल्पं).

अथोपतस्थे भगवाननादिः
　　पितामहस्तोषयामास विष्णुम् ।
भित्त्वा तदण्डस्य कपालमूर्ध्वं
　　जगाम दिव्यावरणानि भूयः ॥५५

अथाण्डभेदान्निपपात शीतलं
　　महाजलं तत् पुण्यकृद्भिश्च जुष्टम् ।
प्रवर्तते चापि सरिद्वरा तदा
　　गङ्गेत्युक्ता ब्रह्मणा व्योमसंस्था ॥५६

गत्वा महान्तं प्रकृतिं प्रधानं
　　ब्रह्माणमेकं पुरुषं स्वबीजम् ।
अतिष्ठदीशस्य पदं तदव्ययं
　　दृष्ट्वा देवास्तत्र तत्र स्तुवन्ति ॥५७

आलोक्य तं पुरुषं विश्वकायं
　　महान् बलिर्भक्तियोगेन विष्णुम् ।
ननाम नारायणमेकमव्ययं
　　स्वचेतसा यं प्रणमन्ति देवाः ॥५८

तमब्रवीद् भगवानादिकर्त्ता
　　भूत्वा पुनर्वामनो वासुदेवः ।
ममैव दैत्याधिपतेऽधुनेदं
　　लोकत्रयं भवता भावदत्तम् ॥५९

प्रणम्य मूर्ध्ना पुनरेव दैत्यो
　　निपातयामास जलं कराग्रे ।
दास्ये तवात्मानमनन्तधाम्ने
　　त्रिविक्रमायामितविक्रमाय ॥६०　　वें.१.१७.६०

---

–d) दे$_4$ ग्र$_1$ यतत्रिलोके, न$_1$ एत्र त्रिलोके, म$_1$ ये तत्र ते वै (→ये तत्र लोके); ग्र$_1$ [अ]पि वसन्ति, ग्र$_2$ विवदन्ति(→निव॰ सन्ति).

५५. –a) दे$_2$ ग्र$_1$ म$_1$ अतोपतस्थे, दे$_4$ अथोपतस्थो, ग्र$_2$ अपेत तस्थे (→अथोपतस्थे). –b) ग्र$_1$ विप्रम् (→विष्णुम्). –c) दे$_{3.6}$ न$_1$ तदन्तस्य (→तदण्डस्य); ब$_1$ कटाहमूर्ध्वं, दे$_{10}$ कपालमूर्ध्नां, ग्र$_2$ कपोलमूर्ध्निः (→कपालमूर्ध्वं). –d) ब$_{1.3}$ दे$_{1.2}$ ग्र$_2$ दिव्याचरणानि, ब$_2$ मुब. वारावरणानि, दे$_{4.5}$ ते$_1$ म$_1$ दिव्याभरणानि, दे$_{3.6}$ देव्याचरणाभि– (दे$_3$ °नि), दे$_{8-10}$ मुवें. मुए. दिव्याभरणोथ (→दिव्यावरणानि).

५६. दे$_5$. bcd ⊙. –a) म$_1$ अपतच्च (→निपपात); दे$_4$ शा*ल, ग्र$_1$ शी*लम् (→शीतलम्). –b) का$_1$ महातले तत्, दे$_{1.2}$ पुण्यं जलं, दे$_{4.8-10}$ न$_1$ ते$_1$ म$_1$ मुवें. मुए. महाजलं (→महाजलं तत्); ब$_1$ पुण्यवद्भिश्च, दे$_3$ तदृषिभिश्च (→पुण्यकृद्भिश्च); का$_1$ तुष्टं, ब$_1$ दृष्टं, दे$_4$ नुष्टं, दे$_{10}$ जिष्णुं (→जुष्टम्). –c) दे$_{8-10}$ मुवें. मुए. मुब. प्रवर्तिता चापि, न$_1$ प्रवर्ततेऽद्यापि, ते$_1$ प्रवर्तते चात्र, ग्र$_1$ प्रवर्तते सापि, ग्र$_2$ प्रवर्तिता द्वारि (→प्रवर्तते चापि);का$_1$ दे$_{8-10}$ न$_1$ मुवें. मुए. मुब. सरिद्वरा सा, दे$_2$ स सरिद्वरा, दे$_4$ शरिद्वरा तला, ते$_1$ सरिद्वराऽत्र (→सरिद्वरा तदा). –d) का$_1$ ब$_{2.3}$ दे$_{2.6}$ न$_1$ ग्र$_2$ मुवें. मुए. गंगेत्युक्त्वा, ब$_1$ दे$_4$ ते$_1$ द$_1$ ग्र$_1$ गंगेत्युक्ता (ब$_1$ द$_1$ °क्त्वा) सा(→गंगेत्युक्ता); ब$_3$ न$_1$ ते$_1$ ब्रह्मणो, द$_1$ ब्राह्मणा, ग्र$_2$ ब्राह्मण- (→ब्राह्मणा); दे$_{8-10}$ गंगेति नाम्ना म (दे$_{10}$ °न) नु व्योमसंस्था.

५७. दे$_5$. a ⊙, न$_1$. ५७ d–५८ c ⊙ (द्र. सं.); दे$_4$. ५७ d "त्र तत्र" इत्यारभ्य ५८c 'मव्य' यावत् खण्डितम्. –a) दे$_{10}$ महां त्वं (→महान्तं); दे$_{1.8-10}$ न$_1$ मुवें. मुए. मुब. ब्रह्मयोनिं (→प्रधानं). –b) का$_1$ दे$_2$ ब्रह्मण्यम् (→ब्रह्माणम्); ब$_1$ दे$_1$ न$_1$ ते$_1$ म$_1$ विश्वबीजं, दे$_4$ विश्वभेजं (?), दे$_{8-10}$ मुवें. मुए. मुब. विश्वयोनिं (→स्वबीजम्). –c) दे$_1$ आदिष्टम्, ग्र$_1$ आतिष्ठद् (→अतिष्ठद्); ब$_1$ पश्य तं (→पदं); का$_1$ दे$_1$ पदव्ययं, ब$_{1.3}$ दे$_{2.3.5.6}$ य (दे$_6$ °ज)दव्ययं (→तदव्ययं).

५८. दे$_4$ न$_1$. abc ⊙ (द्र. ५७ पा. वि.). –a) दे$_5$ आलोक तं, दे$_6$ आलोक्य तां (→आलोक्य तं); ब$_1$ °कामं, दे$_1$ °कार्यं (→°कायं). –b) का$_1$ ब$_{1-3}$ दे$_{3.5.6}$ द$_1$ ग्र$_1$ म$_1$ महाबलिर् , दे$_1$ बलिर्महा, दे$_2$ बलिर्महान्तं, ते$_1$ महाबलं (→महान् बलिर्); ब$_1$ होमेन (→योगेन). –c) दे$_{1.8-10}$ नमामि (→ननाम); ब$_1$ देवायनम् (→नारायणम्); ते$_1$ अद्वयं (→अव्ययं). –d) ब$_1$ दे$_1$ स्वतेजसा, द$_1$ ग्र$_{1.2}$ म$_1$ स चेतसा (→स्व चेतसा); ब$_1$ सं- (→यं); दे$_{1.6.8-10}$ मुवें. मुए. मुब. वेदाः, दे$_2$ वेदाः, + देवाः, द$_1$ ग्र$_{1.2}$ म$_1$ सिद्धाः (→देवाः).

५९. –a) दे$_3$ अनादिकर्त्ता (→आदिकर्त्ता). –b) द$_1$ भूता (→भूत्वा); दे$_2$ देवो वामनो, दे$_4$ पुनः सोसुरं, द$_1$ तनुर्वामनो (→पुनर्वामनो). –c) ते$_1$ ममेव (→ममैव); दे$_2$ तदेदं, दे$_{10}$ [अ]धुनेव, ग्र$_2$ सुदेवं, म$_1$ पदेषु (→[अ]धुनेदं), दे$_4$ ममेव दैत्यादिपतेषुनेदं. –d) ब$_{1.3}$ भवतो, दे$_{3.6}$ भवतां (→भवता); दे$_{3.6}$ तावदन्नं (दे$_6$ °न्तं), दे$_4$ ग्र$_2$ वाथ दत्तम्, दे$_5$ मा च दत्तः, दे$_{10}$ भावयन्तं, न$_1$ दत्तमेव, द$_1$ ग्र$_1$ चाथ दत्तम् (→भावदत्तम्). म$_1$ लोकत्रयं भाति न चाभ्यदत्तम्.

६०. –a) ग्र$_2$ दत्तो (→दैत्यो). –c) का$_1$ तस्मै (→दास्ये); दे$_1$ ममात्मानं, दे$_3$ तरात्मानम्, दे$_4$ तथात्मानम्, द$_1$ ग्र$_1$ म$_1$ तदात्मानम् (→तवात्मानम्); का$_1$ अनंग°, ते$_1$

वें.१.१७.६१

प्रगृह्य सूनोरपि संप्रदत्तं
प्रह्लादसूनोरथ शङ्खपाणिः ।
जगाद दैत्यं जगदन्तरात्मा
पातालमूलं प्रविशेति भूयः ॥६१

समास्यतां भवता तत्र नित्यं
भुक्त्वा भोगान् देवतानामलभ्यान् ।
ध्यायस्व मां सततं भक्तियोगात्
प्रवेक्ष्यसे कल्पदाहे पुनर्माम् ॥६२

उक्त्वैवं दैत्यसिंहं तं विष्णुः सत्यपराक्रमः ।
पुरंदराय त्रैलोक्यं ददौ विष्णुरुरुक्रमः ॥६३

संस्तुवन्ति महायोगं सिद्धा देवर्षिकिन्नराः ।
ब्रह्मा शक्रोऽथ भगवान् रुद्रादित्यमरुद्गणाः ॥६४

कृत्वैतदद्भुतं कर्म विष्णुर्वामनरूपधृक् ।
पश्यतामेव सर्वेषां तत्रैवान्तरधीयत ॥६५

सोऽपि दैत्यवरः श्रीमान् पातालं प्राप चोदितः ।
प्रह्लादेनासुरवरैर्विष्णुना विष्णुतत्परः ॥६६

अपृच्छद् विष्णुमाहात्म्यं भक्तियोगमनुत्तमम् ।
पूजाविधानं प्रह्लादं तदाहासौ चकार सः ॥६७

अथ रथचरणासिशङ्खपाणिं
सरसिजलोचनमीशमप्रमेयम् ।
शरणमुपययौ स भावयोगात्
प्रणतगतिं प्रणिधाय कर्मयोगम् ॥६८

---

अचिन्त्य° (→अनन्त°). –d) दे4 [अ]मित°, + [अ]कित°, दे10 [अ]दित° (→[अ]मित°).

**६१.** दे4. ab ⊙; का1. 'रपि·······'सूनो' ab ⊙ (द. सं.). –a) ते1 प्रगृह्य सोऽसुरपतिसंप्रदत्तं. –b) ब3 दे3.9 प्रह्लाद° (→प्रह्लाद°); दे2 न1 ते1 द1 अपि (→अथ); का1 दे5 न1 द1 ग्र1.2 म1 चक्रपाणिः (→शङ्खपाणिः). –c) दे4 द1 ग्र1.2 जगाम, न1 जयाद (→जगाद); दे1 न1 द1 ग्र1.2 म1 दास्यं (दे1 °स्यां), दे4 सौख्यं, दे9.10 वश्यं, ते1 वाक्यं (→दैत्यं); दे3.10 जगदान्त° (→जगदन्त°). –d) दे4 मूले (→मूलं); का1 प्रविशन्ति, दे8 प्रविशश्च दे9.10 प्रविशस्व (→प्रविशेति); दे4 भूयां (→भूयः).

**६२.** –a) दे1.2 द1 ग्र1 समास (द1 ग्र1 °स्य)ता, दे3 ससाभ्यतां (→समास्यतां); द1 ग्र1.2 यत्र (→तत्र). –b) दे1.3.9 भुक्ता भोगान्, म1 भुवोधस्तात् (→भुक्त्वा भोगान्); दे3.6 अलभ्यां, न1 द1 ग्र2 अलभ्यात् (→अलभ्यान्). –c) दे1 ध्यायंस्त्वं (→ध्यायस्व); का1 मा (→मां). –d) दे1 प्रवेक्षसे, दे10 प्रव(?) क्ष्यसे (→प्रवेक्ष्यसे); न1 कल्पनाशे, ते1 कल्पकाले (→कल्पदाहे).

**६३.** ग्र1. cd ⊙. –a) ब1 उ * वं, दे1.3-5.10 उक्तै (दे4 °क्ते) वं (→उक्त्वैवं); दे2 म1 तु (→तं); ते1 उक्त्वैवं तं दैत्यपतिं. –b) दे9.10 जिष्णुः (→विष्णुः). –d) दे4 विष्णुं, दे8-10 मुवें. मुए. मुब. जिष्णुर् (→विष्णुर्).

**६४.** –a) द1 ग्र1.2 म1 अस्तुवंस्तम् (द1 °तं) (→संस्तुवन्ति); दे1.2 महादेवं, दे4 द1 ग्र1.2 म1 महाभागं (→महायोगं). –b) दे1 सिद्धि (?), दे2.4 न1 द1 ग्र1.2 म1 सिद्ध-(→सिद्धा [:]); का1 देवार्षि°, दे2 -देवादि° (→देवर्षि°); म1 -कन्यकाः (→-किन्नराः). –c) दे5 ब्रह्म (→ब्रह्मा); न1 वसवो (→भगवान्). –d) ब1 रुद्रा(दित्य) दित्य- दे6.10 रुद्रो दैत्य- (दे10 °त्यं-), ते1 द1 ग्र1 रुद्रादित्या (→रुद्रादित्य-).

**६५.** –a) ग्र2 कृत्वा तद् (→कृत्वैतद्); म1 धर्मं (→कर्म). –b) ते1 °धृत् (→°धृक्). –c) द1 एष (→एव). –d) दे8 ग्र2 मुवें. तत्र वान्त° (→तत्रैवान्त°).

**६६.** –a) द1 ग्र1.2 म1 °वर (→°वरः). –b) का1 दे2 प्राप्य, दे1 * प्य (→प्राप); दे8.9 मुवें. मुए. मुब. नोदितः (→चोदितः). –c) ब3 दे3.9 प्रह्लादेन (→प्रह्लादेन); का1 [अ]सुरवरः, दे2 ते1 [अ]सुरवरो, दे8.9 [अ]वरसुरैर् (→[अ]सुरवरैर्). –d) दे4 द1 ग्र1.2 म1 प्रविष्टो (→विष्णुना); का1 भक्तितत्परः, ब1 विष्णुरव्ययः, दे8-10 ग्र2 विष्णुतत्पराः (→विष्णुतत्परः); दे1.2 विष्णुभक्तै(दे1 °क्त्यै) क तत्परः, मुवें. मुए. मुब. विष्णुभक्तस्तु तत्परः.

**६७.** –a) ब3 दे4 न1 आपृच्छद्, ते1 आलभद् (→अपृच्छद्); दे10 °महा° (→°माहा°). –c) ब3 दे9 प्रह्लादस्, दे3.6.8.10 प्रह्लादस्, (दे6 °द) ; द1 ग्र1.2 प्रह्लादो (→प्रह्लादं). –d) ब2 तदात्मासौ, दे3 तदा चासौ, दे4 द1 ग्र1.2 म1 यथाहा (ग्र2 °भा) सौ (दे4 द1 °सो), दे6 तथा चासौ (→तदाहासौ).

**६८.** –a) दे1 °चरणस्त्र-, दे8.9 मुवें. मुए. °चरणं स–, दे10 °चर * स–, ते1 °चरणोसि, मुब. °चरणाब्ज- (→°चरणासि-); द1 ग्र1.2 म1 रथचरणगदासिपद्मपाणिं. –b) न1 सरसिजलोचनमतनीलकायं. –c) दे1 उपाययौ (→उपययौ); दे1.2 स भाग्ययोगात्, दे5 समधियोगात्, दे10 सभ(?)वयोगात् न1 स्वभावयोगात् (→स भावयोगात्). –d) का1 प्रणतपतिं, दे8-10 मुवें. मुए. मुब. प्रणयगतिं (→प्रणतगतिं);

एष वः कथितो विप्रा वामनस्य पराक्रमः । स देवकार्याणि सदा करोति पुरुषोत्तमः ।।६९

इति श्रीकूर्मपुराणे षटसाहस्र्यां संहितायां पूर्वविभागे षोडशोऽध्यायः ।।१६।।

# १७

सूत उवाच ।❀

बलेः पुत्रशतं त्वासीन्महाबलपराक्रमम् ।
तेषां प्रधानो द्युतिमान् बाणो नाम महाबलः ।।१
सोऽतीव शंकरे भक्तो राजा राज्यमपालयत् ।
त्रैलोक्यं वशमानीय बाधयामास वासवम् ।।२
ततः शक्रादयो देवा गत्वोचुः कृत्तिवाससम् ।
त्वदीयो बाधते ह्यस्मान् बाणो नाम महासुरः ।।३
व्याहृतो दैवतैः सर्वैर्देवदेवो महेश्वरः ।
ददाह बाणस्य पुरं शरेणैकेन लीलया ।।४
दह्यमाने पुरे तस्मिन् बाणो रुद्रं त्रिशूलिनम् ।
ययौ शरणमीशानं गोपतिं नीललोहितम् ।।५
मूर्द्धन्याधाय तल्लिङ्गं शांभवं भीतिवर्जितः ।
निर्गत्य तु पुरात् तस्मात् तुष्टाव परमेश्वरम् ।।६

वें१.१८.६

---

द1 ग्र1.2 प्रणि(ग्र1 °ण)नीय (→प्रणिधाय); ब2.3 दे1 भक्तियोगं (→कर्मयोगम्).

६९. दे1.8-10. ⊙. –a) ब2 म1 एवं वः, दे3.6 न1 एतद्वः, दे4 एषः * (→एष वः). –c) दे5 सहा (?) (→सदा).

**पुष्पिका—**

**पुराणनाम**—का1 दे1.2.5.8-10 द1 ग्र1 मुवें. मुए. इति श्रीकूर्मपुराणे, ब1 इत्यादिमहापुराणे कौर्मे, ब2.3 दे3.6 ग्र2 म1 इति कूर्मपुराणे, दे4 ते1 इत्यादिमहापुराणे श्रीकौ(दे4 कू)र्मे, न1 इति श्रीकौर्मे, मुब. इति श्रीकौर्मे महापुराणे पूर्वभागे. **अध्यायनाम**—दे4 न1 ते1 म1. ⊙; का1 ब1.3 श्रीवामनप्रादुर्भावे, ब2 दे3.5.6 वामनप्रादुर्भावे (ब2 °वः), दे1.2.8-10 मुए. त्रिविक्रमचरिते (दे10 °त्रे), द1 ग्र1.2 वामनप्रादुर्भावो नाम, मुवें. त्रिविक्रमचरितवर्णनं नाम, मुब. दक्षसुतावंशानुकीर्तने त्रिविक्रमचरितं नाम. **अध्यायसंख्या**—दे6. ⊙; का1 ब1.3 दे3.4 न1 ते1 पंचदशोऽध्यायः, ब2 ।।१५।।, दे1.10 मुवें. मुए. मुब. सप्तदशोऽध्यायः ।।१७।।, दे2.8.9 द1 ग्र1.2 म1 सप्तदशोऽध्यायः, दे5 शोडषोध्यायः.

**१७**

[अध्यायरम्भे दे10. पुस्तके अधिकम्—श्रीसीतारामचन्द्राय नमो नमः.]

❀ न1 ग्र1.2 सूतः; ते1 श्री शिवः, + सूतः; म1 श्रीसूतः.

१. –a) न1 द1 चासीत् (→त्वासीत्). –b) दे3.6 ग्र2 पराक्रमः (→पराक्रमं); म1 महत्कृतपराक्रमः. –c) दे2 बलवान्, न1 मतिमान् (→द्युतिमान्). –d) दे2.4 द1 ग्र1.2 म1 महासुरः (→महाबलः); दे1 बाणां (?) नाम पराक्रमः, दे8-10 महाबलपराक्रमः (दे10 °माः).

२. –a) दे4 बालो सो शङ्करेतीव, द1 ग्र1.2 म1 बाणोऽसौ शङ्करेतीव. –b) दे4 द1 ग्र1 म1 भक्तो (→राजा); दे5 राजरम्यम् (→राजा राज्यम्); न1 अकारयत्(→अपालयत्); ग्र2 भक्तियुक्तेन चेतसा. –c) दे1.2 वशमानिन्ये, दे3 उपमानीय, न1 वशमानीयं (→वशमानीय). –d) न1 वाससम् (?) (→वासवम्).

३. –c) दे5 त्वद्वीयों (→त्वदीयो); ब1.3 बाध्यते (→बाधते); दे6 ह्यस्माद्, ग्र2 [अ]प्यस्मात् (→ह्यस्मान्).

४. –a) का1 ब1.3 दे3.6 ते1 व्याहूते, दे5 आहूते (→व्याहृतो); दे1.10 ग्र1 देवतैः (→दैवतैः); न1 एवं (→सर्वैः) –c) न1 ब्राह्मणस्य(?) (→बाणस्य).

५. ग्र2. c ⊙. –a) का1 दे5.6 °माणे (→°माने) –b) ग्र2 [अ]द्राक्षीत् (→रुद्रं). –d) दे2.5 °लोहितः (दे5 °तां) (→लोहितं).

६. –a) ते1 म1 सूर्धन्यादाय, ग्र1 मूर्द्धन्याधाय स, ग्र2 मुध्न्यीय तस्य(→मूर्द्धन्याधाय); दे10 मल्लिङ्गं (→तल्लिङ्गं). –b) ब1 शांभवे (→शांभवं); दे3 द1 भीत°, दे8-10 मुवें. मुए. मुब. राग° (→भीति°); दे10 ते1 द1 °वर्जितम् (→°वर्जितः). –c) दे1 निर्गत्याथ (→निर्गत्य तु); ग्र2 पुरं (→पुरात्). –d) ब1 ग्र2 परमेश्वरः (→परमेश्वरम्).

१.१८.७ संस्तुतो भगवानीशः शंकरो नीललोहितः ।
गाणपत्येन बाणं तं योजयामास भावतः ॥७
अथाभवन् दनोः पुत्रास्ताराद्या ह्यतिभीषणाः ।
तारस्तथा शम्बरश्च कपिलः शंकरस्तथा ।
स्वर्भानुर्वृषपर्वा च प्राधान्येन प्रकीर्तिताः ॥८
सुरसायाः सहस्रं तु सर्पाणामभवद् द्विजाः ।
अनेकशिरसां तद्वत् खेचराणां महात्मनाम् ॥९
अरिष्टा जनयामास गन्धर्वाणां सहस्रकम् ।
अनन्ताद्या महानागाः काद्रवेयाः प्रकीर्तिताः ॥१०
ताम्रा च जनयामास षट् कन्या द्विजपुंगवाः ।
शुकीं श्येनीं च भासीं च सुग्रीवां गृध्रिकां शुचिम् ॥११
गास्तथा जनयामास सुरभिर्महिषीस्तथा ।
इरा वृक्षलतावल्लीस्तृणजातीश्च सर्वशः ॥१२
खसा वै यक्षरक्षांसि मुनिरप्सरसस्तथा ।
रक्षोगणं क्रोधवशा जनयामास सत्तमाः ॥१३
विनतायाश्च पुत्रौ द्वौ प्रख्यातौ गरुडारुणौ ।
तयोश्च गरुडो धीमान् तपस्तप्त्वा सुदुश्चरम् ।
प्रसादाच्छूलिनः प्राप्तो वाहनत्वं हरेः स्वयम् ॥१४

---

७. –c) दे$_{4.5}$ ग्र$_2$ म$_1$ गा (दे$_4$ ग°) णपत्येन, दे$_{10}$ गणपत्येन (→गाणपत्येन); का$_1$ विधिना, ते$_1$ भावं तु, + भाणं तु (→बाणं तं). –d) दे$_{3.6}$ भारतं (दे$_6$ °तः), दे$_4$ पार्वतः, द$_1$ ग्र$_1$ भावनः, म$_1$ भावः* (→भावतः).

८. –a) दे$_1$ अथान्येऽपि, दे$_{8-9}$ मुवें. मुए. मुब. अथैवञ्च, न$_1$ तथो भवं (→अथाभवन्); दे$_{10}$ अथैवं दानवः पुत्राः, ग्र$_2$ अथाभ*नोः पुत्राः. –b) दे$_{8-10}$ मुवें. मुए. मुब. ताराद्याश्चाति°, म$_1$ ताराद्या अति° (→ताराद्या ह्यति°). –c) दे$_1$ ग्र$_2$ तरः, दे$_3$ तावनः, दे$_5$ त्वारः (→तारः); का$_1$ दे$_5$ ते$_1$ संवरणः (दे$_5$ °णाः), ब$_3$ सञ्चरश्च, दे$_4$ संकरश्च (→शम्बरश्च) दे$_2$ तारश्च शम्बरश्चैव. –d) ग्र$_2$ कविवः (→कपिलः); का$_1$ ब$_3$ दे$_5$ ते$_1$ शम्बरः, का$_1$ ब$_{1.3}$ दे$_5$ ते$_1$ शम्बरः, दे$_{3.6}$ समरः (→शंकरः); न$_1$ कपिलः कालशंवरः. –e) दे$_1$ स्वर्चान्विचिषपर्वा च, दे$_5$ स्वर्भानुधृषपर्वं च, ग्र$_2$ सविर्भानुर्वृषपर्वा च. –f) का$_1$ दे$_6$ प्रतिष्ठितः, ब$_{1-3}$ दे$_{3.5}$ ते$_1$ प्रतिष्ठिताः (→प्रकीर्तिताः).

९. –a) का$_1$ सुरराजः ब$_1$ दे$_{3.6}$ ग्र$_2$ सुरसाया (ग्र$_2$ °य) (→सुरसायाः). –b) दे$_{10}$ द्विजः (→द्विजाः). –c) दे$_5$ °शिरसी (→°शिरसां). –d) दे$_5$ खेचराणी (→खेचराणां).

१०. –a) दे$_5$ आविष्टा, ते$_1$ ग्र$_2$ अरिष्ट (→अरिष्टा). –c) का$_1$ ब$_{1.2}$ दे$_{2.4.6.10}$ महाभागाः, द$_1$ ग्र$_{1.2}$ महाभोगा (→महानागाः). –d) दे$_{1.4}$ काद्रवेयः (दे$_4$ °या) (→काद्रवेयाः).

११. –a) द$_1$ ग्र$_1$ नाम्रा (→ताम्रा). –b) द$_1$ ग्र$_{1.2}$ म$_1$ °सत्तमाः (→°पुङ्गवाः). –c) ब$_1$ दे$_4$ ते$_1$ शुकी (→शुकीं°); का$_1$ सेनीं, द$_1$ शेनीं, ग्र$_2$ *नीं (→श्येनीं); दे$_1$ काकीं, दे$_3$ भखां (→भासीं). –d) का$_1$ ब$_{1-3}$ दे$_{2.4.5.6}$ न$_1$ ते$_1$ सुग्रीवीं (दे$_{4.5}$ °वा) (→सुग्रीवां); ब$_{1.2}$ दे$_{1.8-10}$ म$_1$ मुवें. मुए. ग्रन्थिकां, दे$_2$ चवकीं, दे$_3$ गृद्धिकां, दे$_6$ मूर्धिनकां, न$_1$ वृ(धि)वतं, ग्र$_2$ सुनिकां (→गृध्रिकां); ब$_1$ दे$_4$ न$_1$ ते$_1$ शुचिः, द$_1$ ग्र$_{1.2}$ म$_1$ शुनीं (म$_1$ °नीः) (→शुचिम्).

१२. –a) ते$_1$ गास्तु वै, द$_1$ गौस्तथा, ग्र$_1$ तास्तथा (→गास्तथा). –b) ब$_1$ महिषां, ब$_2$ दे$_4$ द$_1$ म (द$_1$ मा°) हिषीं, दे$_{8.9}$ ते$_1$ महिषी, ग्र$_{1.2}$ माहिषं (→महिषीः). –c) का$_1$ इडा मृक्ष-, ब$_3$ इरा वृक्षा-, दे$_3$ इवा वृक्षा-, दे$_4$ त्विरा वृक्षा-, द$_1$ ग्र$_{1.2}$ म$_1$ इरावती (→इरा वृक्ष-); का$_1$ ब$_{1.3}$ दे$_{1-3.5.8.9}$ न$_1$ द$_1$ ग्र$_{1.2}$ म$_1$ मुवें. मुए. मुब. -वल्ली- (→-वल्लीः). –d) दे$_5$ नृण- (→तृण-); दे$_1$ -जातींश्च, दे$_5$ -ज्ञातीः, दे$_8$ द$_1$ -जातिश्च (→-जातीश्च).

१३. –a) ब$_{1-3}$ दे$_{2.5}$ वसा, दे$_{3.6}$ स्व(दे$_3$ श्व)शा, न$_1$ स्वषा, दे$_4$ ग्र$_1$ कसा (ग्र$_1$ °षा), दे$_{8.9}$ मुवें. मुए. तथा, ते$_1$ भासा, द$_1$ काषा, ग्र$_2$ तुषा, म$_1$ कुषा (→खसा); ब$_1$ च (→वै); दे$_{10}$ तथैव (→खसा वै); ग्र$_2$ रक्ष° द$_1$ -र्यक्ष°,(→यक्ष°). –b) द$_1$ अप्सरसं (→अप्सरसः); ग्र$_1$ मुनीनप्सरसस्तथा, ग्र$_2$ मुनिरप्यवरस्तथा. –c) न$_1$ °गणान्, ते$_4$ °वनं(→°गणं); ब$_{2.3}$ दे$_9$ ते$_1$ ग्र$_{1.2}$ मुवें. मुए. °वशात् (→°वशा). –d) दे$_5$ संतुमा, ग्र$_2$ सत्तम (→सत्तमाः).

१४. –a) का$_1$ ब$_{2.3}$ दे$_5$ म$_1$ द्वौ पुत्रौ (→पुत्रौ द्वौ); दे$_{10}$ विनयामास पुत्रौ द्वौ, ते$_1$ विनतायाः सुतौ द्वौ तु, ग्र$_2$ विनतायाश्चैव पुत्रो. –b) दे$_3$ °रुणैः (→°रुणौ). –c) का$_1$ ब$_{1-3}$ दे$_{3-6}$ स (→च). –d) दे$_1$ सु*ष्करम्, दे$_{2.4}$ ते$_1$ सुदुष्करम (→सुदुश्चरम्). –e) दे$_{10}$ शूलिनं (?) (→शूलिनः). –f) ब$_1$ दे$_6$ ग्र$_2$ वाहनं (ग्र$_2$ *नः) (→वाहन-); ब$_1$ द$_1$ ग्र$_1$ म$_1$ हरे, दे$_5$ हरौं (→हरेः).

आराध्य तपसा रुद्रं महादेवं तथाऽरुणः ।
सारथ्ये कल्पितः पूर्वं प्रीतेनार्कस्य शंभुना ॥१५
एते कश्यपदायादाः कीर्त्तिताः स्थाणुजङ्गमाः ।
वैवस्वतेऽन्तरे ह्यस्मिञ्छृण्वतां पापनाशनाः ॥१६
सप्तविंशत् सुताः प्रोक्ताः सोमपत्न्यश्च सुव्रताः ।
अरिष्टनेमिपत्नीनामपत्यानीह षोडश ॥१७
बहुपुत्रस्य विदुषश्चतस्रो विद्युतः स्मृताः ।
तद्वदङ्गिरसः पुत्रा ऋषयो ब्रह्मसत्कृताः ॥१८
कृशाश्वस्य तु देवर्षेर्देवप्रहरणाः सुताः ।
एते युगसहस्रान्ते जायन्ते पुनरेव हि ।
मन्वन्तरेषु नियतं तुल्यैः कार्यैः स्वनामभिः ॥१९ वें१.१८,१९

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायां पूर्वविभागे सप्तदशोऽध्यायः ॥१७॥

१५. –a) दे$_{8.9}$ तं परं (→तपसा); दे$_{1.2.8-10}$ न$_{1}$ मुवें. मुए. मुब. देवं (→रुद्रं). –b) ब$_{1}$ महादेवान् (→महादेवं); दे$_{2}$ ततो, दे$_{4}$ यथा (→तथा); ग्र$_{2}$ [अ]रुणं (→[अ]रुणः). –c) ग्र$_{1}$ म$_{1}$ पूर्वः, ग्र$_{2}$ **(→पूर्वं). –d) दे$_{4}$ प्रतीना°, दे$_{6}$ प्रीतिना°, ग्र$_{2}$ प्रीतोना° (→प्रीतेना°); दे$_{5}$ प्रीतेनाकाश्य शंभुना.

१६. –a) दे$_{3.5.6}$ ग्र$_{1.2}$ म$_{1}$ काश्यप° (→कश्यप°); का$_{1}$ °दयादाः, ब$_{3}$ °दारायाः (→°दायादाः). –b) ग्र$_{2}$ कीर्तिता(स्ते)स्था(रु)ण जङ्गमाः.–d) दे$_{5}$ शृणुतां (→शृण्वतां); ग्र$_{2}$ °नाशनः, मुवें.मुए. °नाशनम् (→°नाशनाः).

१७. –a) दे$_{3.4.6.8}$ न$_{1}$ मुवें. मुए. मुब. सप्तविंश (दे$_{6}$ °शः) (→सप्तविंशत्); दे$_{2}$ शुभाः, दे$_{3}$ स्वनाः, दे$_{6}$ तथा (→सुताः); ते$_{1}$ ग्र$_{2}$ प्रोक्ता (→प्रोक्ताः). –b) दे$_{2.6}$ ते$_{1}$ पत्न्यस्तु, दे$_{4}$ न$_{1}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ पत्नीषु, दे$_{5}$ पत्योश्च, दे$_{8}$ मुवें. मुए. मुब. पत्न्याश्च (→पत्न्यश्च); का$_{1}$ सुव्रतः, म$_{1}$ सर्वथा (→सुव्रताः); ब$_{1}$ सोम******, दे$_{4}$. सौम्यपुत्रं च सुव्रताः. –d) मुवें. मुए. मुब. अपत्यानां, ते$_{1}$ दुरिष्टानि (→अपत्यानि); दे$_{1}$ मुवें. मुए. मुब. अनेकशः, दे$_{8-10}$ न$_{1}$ [इ]ह वेध (ते$_{1}$ °न) सः (→[इ]ह षोडश); द$_{1}$ ग्र$_{1.2}$ म$_{1}$ अपत्यानि निबोधत.

१८. –a) दे$_{10}$ विदुषा (→विदुषः). –b) दे$_{3.6}$ विद्युताः (दे$_{6}$ °ता), न$_{1}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ विद्युत (→विद्युतः); दे$_{2.5}$ सुताः, ग्र$_{2}$ स्मृतः (→स्मृताः); ब$_{2}$ चत्वारो वैद्युताः सुताः. –c) दे$_{10}$ तद्विद् (→तद्वद्); का$_{1}$ अंगिरिशः, द$_{1}$ अंगिरः (→अंगिरसः); दे$_{1.2.8-10}$ मुवें. मुए. श्रेष्ठा (→पुत्राः). –d) दे$_{8-10}$ न$_{1}$ मुवें. मुए. वृष° (→ब्रह्म°); दे$_{1.2}$ ब्रह्मसत्तमाः, न$_{1}$ ब्रह्मसत्कृतां (→ब्रह्मसत्कृताः).

१९. –a) दे$_{4}$ ग्र$_{2}$ शाश्वतस्य, दे$_{10}$ कूराश्चस्य (→कृशाश्वस्य); दे$_{1.4}$ च (→तु); दे$_{10}$ देवर्षैः (→देवर्षे). –b) दे$_{3.8.9}$ मुवें. मुए. मुब. देवः (→देव-); दे$_{1}$ -प्रह*णः, दे$_{8-10}$ मुवें. मुए. मुब. प्रहरणः (→-प्रहरणाः); दे$_{4}$ ते$_{1}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ स्मृताः (→सुताः); दे$_{2}$ देवप्रहरणादयः. –e) ग्र$_{2}$ मन्वन्तरासु (→मन्वन्तरेषु); का$_{1}$ नियते(?) (→नियतं). –f) दे$_{8-10}$ मुवें. मुए. मुब. तुल्य-, द$_{1}$ ग्र$_{1.2}$ म$_{1}$ साम्यैः (→तुल्यैः); दे$_{3.6}$ न$_{1}$ कालैः (→कार्यैः); ब$_{1}$ ते$_{1}$ च, दे$_{3}$ सु- (→स्व-).

**पुष्पिका**—

**पुराणनाम**—का$_{1}$ ब$_{1-3}$ दे$_{3.5.6}$ ग्र$_{2}$ इति कूर्मपुराणे, दे$_{1.2.4.8-10}$ द$_{1}$ ग्र$_{1}$ म$_{1}$ मुवें. मुए. इति श्रीकूर्मपुराणे, न$_{1}$ इति श्रीकौर्मे, ते$_{1}$ इत्यादिमहापुराणे श्रीकौर्मे, मुब. इति श्रीकौर्मे महापुराणे पूर्वभागे. **अध्यायनाम**—ब$_{2}$ दे$_{2.4.8-10}$ न$_{1}$ ते$_{1}$ म$_{1}$. ⊙; का$_{1}$ ब$_{1.3}$ दे$_{3.5.6}$ द$_{1}$ ग्र$_{1.2}$ मुए. वंशानुकीर्त्तने, दे$_{1}$ वंशानुचरिते, मुवें. वंशानुकीर्त्तनं नाम, मुब. दक्षसुतावंशानुकीर्त्तनं नाम. **अध्यायसंख्या**—दे$_{6}$. ⊙; का$_{1}$ ब$_{1.3}$ दे$_{3.5}$ न$_{1}$ ते$_{1}$ षोडशोऽध्यायः, ब$_{2}$ ॥१६॥, दे$_{1.2.8-10}$ ग्र$_{2}$ म$_{1}$ मुब. अष्टादशोऽध्यायः, दे$_{4}$ शोडशोऽध्यायः ॥१६॥, द$_{1}$ सप्तदशः, ग्र$_{1}$ सप्तदशोऽध्यायः, मुवें. मुए. अष्टादशोऽध्यायः ॥१८॥

# १८

सूत उवाच ।❀

१.१६.१

एतानुत्पाद्य पुत्रांस्तु प्रजासंतानकारणात् ।
कश्यपो गोत्रकामस्तु चचार सुमहत् तपः ॥१
तस्य वै तपतोऽत्यर्थं प्रादुर्भूतौ सुताविमौ ।
वत्सरश्चासितश्चैव तावुभौ ब्रह्मवादिनौ ॥२
वत्सरान्नैध्रुवो जज्ञे रैभ्यश्च सुमहायशाः ।
रैभ्यस्य जज्ञिरे रैभ्याः पुत्रा द्युतिमतां वराः ॥३
च्यवनस्य सुता पत्नी नैध्रुवस्य महात्मनः ।
सुमेधा जनयामास पुत्रान् वै कुण्डपायिनः ॥४
असितस्यैकपर्णायां ब्रह्मिष्ठः समपद्यत ।
नाम्ना वै देवलः पुत्रो योगाचार्यो महातपाः ॥५
शाण्डिल्यानां परः श्रीमान् सर्वतत्त्वार्थवित् सुधीः ।
प्रसादात् पार्वतीशस्य योगमुत्तममाप्तवान् ॥६
शाण्डिल्या नैध्रुवा रैभ्यास्त्रयः पक्षास्तु काश्यपाः ।
नरप्रकृतयो विप्राः पुलस्त्यस्य वदामि वः ॥७

---

## १८

❀ दे$_{1}$ सुत उवाच; दे$_{8.9}$ सूत उ.; न$_{1}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ सूतः; ते$_{1}$ श्रीशिवः सूतः.

१. –a) ग्र$_{2}$ पुत्रानुत्पाद्य (→उत्पाद्य पुत्रान्); का$_{1}$ वै, ग्र$_{2}$ * (→तु). –b) दे$_{4}$ प्रजायंतेन (→प्रजासंतान-); ब$_{3}$ °कारणाः, दे$_{1}$ °वारणात् (→°कारणात्). –c) ग्र$_{1.2}$ म$_{1}$ काश्यपो (→कश्यपो); दे$_{8\text{-}10}$ म$_{1}$ मुवें. मुए. मुब. पुत्र° (→गोत्र°); का$_{1}$ च (→तु). –d) ब$_{1}$ दे$_{1.3.5.6}$ चकार (→चचार).

२. –a) दे$_{1.6.8\text{-}10}$ न$_{1}$ मुवें. मुए. मुब. तस्यैवं, दे$_{2}$ द$_{1}$ तस्यैव (→तस्य वै); ब$_{1\text{-}3}$ दे$_{3.6}$ ते$_{1}$ ग्र$_{2}$ तप्यतो, म$_{1}$ तपसो (→तपतो); दे$_{5}$ तस्य वैवस्वतोऽत्यर्थं. –b) दे$_{1.3.5}$ ग्र$_{2}$ °वुभौ (→°विमौ). –c) न$_{1}$ चाशितश् (→चासितश्); दे$_{4}$ वत्सरश्च सितश्चैव; मुवें. वत्सरश्चासिश्चैव (?).

३. –a) का$_{1}$ वत्सरान्तेध्रुवो, दे$_{2.3.6}$ वत्सरान्वै ध्रुवो, दे$_{5}$ वत्सरान्नैक्रुवो, ते$_{1}$ वत्सरान्नेध्रुवो (→वत्सरान्नैध्रुवो); का$_{1}$ दे$_{6}$ यज्ञे, दे$_{4.10}$ यज्ञै (?) (→जज्ञे). –b) का$_{1}$ दैत्यश्, दे$_{5}$ रौप्यश् (→रैभ्यश्); दे$_{3.6}$ तु (→च); दे$_{6}$ स° (→सु°); न$_{1}$ ग्र$_{1}$ °महायशः, म$_{1}$ °महातपाः (→°महायशाः); दे$_{2}$ रैभ्यश्चैव महायशाः. –c) का$_{1}$ दित्यां च, ब$_{1}$ ग्र$_{2}$ रैभ्यश्च, ब$_{2.3}$दे$_{3.6.10}$ ते$_{1}$ रैभ्याच्च, दे$_{5}$ रौपाद्या, ग्र$_{1}$ **स्य(→रैभ्यस्य); का$_{1}$ दैत्याः, दे$_{5}$ रौप्याः, दे$_{10}$ रौद्राः, दे$_{8.9}$ मुवें. मुए. मुब. शूद्राः (→रैभ्याः). –d) का$_{1}$ द्युतिमतो, दे$_{5}$ द्युतिमता, दे$_{3.6}$ ह्यभिमता, दे$_{8}$ धृतिमतां, ग्र$_{2}$ मुवें. श्रुतिमतां (→द्युतिमतां); का$_{1}$ दे$_{2.5.6}$ सुराः, ग्र$_{1}$ वरः (→वराः).

४. –a) दे$_{1.2.8\text{-}10}$ मुवें. मुए. मुब. भार्या (→पत्नी). –b) दे$_{4}$ महात्मना (→महात्मनः). –d) दे$_{2}$ पुत्रास्ते (→पुत्रान् वै); दे$_{3.6}$ ते$_{1}$ म$_{1}$ वैकुण्ठ- (→वै कुण्ड-); का$_{1}$ दे$_{2}$ -शायिनः, ब$_{2.3}$ दे$_{3.5}$ -याजिनः, ग्र$_{2}$ ते$_{1}$ -वासिनः (→-पायिनः).

५. –a) दे$_{1}$ असितस्यैव, न$_{1}$ आसीतस्यैक-(→असितस्यैक-); का$_{1}$ ब$_{3}$ दे$_{4.10}$ द$_{1}$ °वर्णायां, ब$_{2}$ °पर्णाया, दे$_{3.6}$ °वर्णासां, दे$_{5}$ °वर्णापी, ते$_{1}$ °वर्णोऽयं, ग्र$_{1}$ °वार्त्तायां (→°पर्णायां); म$_{1}$ असितश्चैव कर्त्तायां. –b) का$_{1}$ वसिष्ठः, ब$_{2}$ ब्रह्मणो, दे$_{4}$ ब्रह्मेष्ठः, ते$_{1}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ धर्मिष्ठः (→ब्रह्मिष्ठः). –c) दे$_{4}$ च, द$_{1}$ ग्र$_{1.2}$ म$_{1}$ तु (→वै); म$_{1}$ पुत्रो मेधावी (→देवलः पुत्रो). –d) दे$_{5}$ °चर्यो (→°चार्यो).

६. ब$_{1}$. ६c–२२d ⊙. –a) न$_{1}$ ते$_{1}$ द$_{1}$ म$_{1}$ वरः (→परः); दे$_{1.2}$ शाण्डिल्या तनयः श्रीमान्, दे$_{8\text{-}10}$ मुवें. मुए. शाण्डिल्यः परमः श्रीमान्, दे$_{5}$ शाण्डिल्यानी परः श्रीमान्, मुब. शाण्डिल्योऽप्यपरः श्रीमान्. –b) दे$_{1}$ °शुद्धधीः, दे$_{4}$ °विष्णुधीः, दे$_{8\text{-}10}$ मुवें. मुए. मुब. °विच्छुचिः (→°वित्सुधीः). –c) दे$_{2}$ पर्वती° (→पार्वती°). –d) दे$_{4}$ योगस्यान्तमवा°, दे$_{8}$ योगमुक्तममा°, म$_{1}$ योगमूर्त्तिमवा° (→योगमुत्तममा°); मुवें. मुए. योगमुक्तमवाप्तवान्.

७. ब$_{1}$. ⊙ (द्र. ६ पा. वि.); दे$_{6}$. ७d–९c ⊙ (द्र. सं.). –a) का$_{1}$ न$_{1}$ शाण्डिल्य-, दे$_{2.8\text{-}10}$ ग्र$_{2}$ म$_{1}$ मुवें. मुए. मुब. शाण्डिल्यो, ग्र$_{1}$ दे$_{1}$ शाण्डिल्यात् (→शाण्डिल्याः); दे$_{2.8\text{-}10}$ न$_{1}$ ग्र$_{2}$ म$_{1}$ मुवें. मुए. मुब. नैध्रुव, दे$_{5}$ नैधृवा, दे$_{6}$ वैध्रुवा(→नैध्रुवा); का$_{1}$ रौत्यास्, दे$_{3}$ रैन्यास्, दे$_{4}$ रभ्यस्, दे$_{8\text{-}10}$

तृणबिन्दोः सुता विप्रा नाम्ना त्विलविला स्मृता ।
पुलस्त्याय स राजर्षिस्तां कन्यां प्रत्यपादयत् ॥८
ऋषिस्त्वैलविलिस्तस्यां विश्रवाः समपद्यत ।
तस्य पत्न्यश्चतस्रस्तु पौलस्त्यकुलवर्द्धिकाः ॥९
पुष्पोत्कटा च राका च कैकसी देववर्णिनी ।
रूपलावण्यसंपन्नास्तासां वै शृणुत प्रजाः ॥१०
ज्येष्ठं वैश्रवणं तस्य सुषुवे देवरूपिणी ।
कैकसी जनयत् पुत्रं रावणं राक्षसाधिपम् ॥११
कुम्भकर्णं शूर्पणखां तथैव च विभीषणम् ।
पुष्पोत्कटा व्यजनयत् पुत्रान् विश्रवसः शुभान् ॥१२
महोदरं प्रहस्तं च महापार्श्वं खरं तथा ।
कुम्भीनसीं तथा कन्यां राकायां शृणुत प्रजाः ॥१३
त्रिशिरा दूषणश्चैव विद्युज्जिह्वो महाबलः ।
इत्येते क्रूरकर्माणः पौलस्त्या राक्षसा दश ।
सर्वे तपोबलोत्कृष्टा रुद्रभक्ताः सुभीषणाः ॥१४
पुलहस्य मृगाः पुत्राः सर्वे व्यालाश्च दंष्ट्रिणः ।
भूताः पिशाचाः सर्पाश्च शूकरा हस्तिनस्तथा ॥१५

वे.१.१९.१५

म1 मुवें. मुए. मुब. रैभ्यस् (→रैभ्यास्). –b) दे1.3.8-10 मुवें. मुए. मुब. पुत्रास्, दे4 कक्षास्, न1 प्रोक्तास् (→पक्षास्). –c) का1 दे2.4.5 द1 ग्र1.2 म1 नव°, दे3.6 पर° (→नर°); दे3 °प्रख्यतयो, दे6 °प्रख्यततो(→°प्रकृतयो); दे3 विप्रो (→विप्राः). –d) दे10 पुलस्तस्य (→पुलस्त्यस्य); दे3 पुलस्त्यकुलवर्द्धनाः.

८. ब1. ⊙ (द्र.६ पा. वि.); दे6. ⊙ (द्र. ७ पा. वि.); दे3. ८a–९d ⊙. –b) दे1 चेलिविला, दे2 वेलविला, दे5 द्विलंविना, दे8.9 मुवें. मुए. मुब. ऐलविलाः, दे10 एलसुताः, न1 इलिपुला, ते1 द1 ग्र1.2 त्विलिविला, म1 त्विलिविलिः (→त्विलविला). –c) दे9 पुलस्त्यात् स (→पुलस्त्याय); ब3 सा, दे8.9 मुवें. मुए. मुब. तु, ग्र1 सु- (→स).

९. ब1. ⊙ (द्र.६ पा. वि.); दे3. ⊙ दे6. abc ⊙ (द्र. ८ पा. वि.); दे6. abc ⊙. –a) ब2.3 दे2.8.9 मुवें. मुए. मुब.त्वैलविलस्, दे1 चैलिविलिस्, न1 रैलविलस्, ते1 चैलिविलस् (→त्वैलविलिस्); दे4 तस्या (→तस्यां); द1 ग्र1.2 म1 ऋषिस्त्विलिविलायां तु. –b) ग्र2 सः प्रपद्यत (→समपद्यत). –d) दे2.6 ग्र1 म1 °वर्द्धनाः (दे6 °नः), ग्र2 °वार्धिवः (→°वर्धिकाः).

१०. ब1. ⊙ (द्र. ६ पा. वि.). –a) ब2.3 दे4.8-10 न1 ते1 मुवें. मुए. मुब. वाका, दे1 शुक्रा, दे2 शाका, ग्र1.2 म1 काला (→राका); द1 पुष्पोत्कटा वलाका च. –b) का1 कैकशी, ब3 दे3.6 नैकसी (दे6 °शी), दे1.2 निकषा, दे4 कौशिकी (→कैकसी). –c) न1 रूपे (→रूप-). –d) दे1 वि-, दे8.9 मुवें. मुए. मुब. च (→वै); दे3.5 शृण्वत, दे4 शृणु तत् (→शृणुत).

११. ब1. ⊙ (द्र. ६ पा. वि.). –a) दे5 ज्येष्ठा, दे10 ज्येष्ठ-, म1 ज्येष्ठां (→ज्येष्ठं); म1 वैश्रवणस् (→वैश्रवणं). –b) ब2 दे1.4.8-10 द1 ग्र1 म1 मुवें. मुए. मुब. देववर्णिनी, दे2 वरवर्णिनी, दे3 सुरवर्णिनी (→देवरूपिणी). –c) ब2 दे1.2 निकषा, ब3 दे3.6 नैकस्यां, दे4 कैकया, दे5.8-10 मुवें. मुए. मुब. कैकस्य, न1 कैक*, ते1 कैकश्च, + कैकसी, द1 ग्र1.2 के (द1 को) कस्या (ग्र2 °स्य) (→कैकसी). –d) का1 राक्षसं, दे3 शरण (→रावणं).

१२. ब1. ⊙ (द्र. ६ पा. वि.). –a) दे1.2.6 सूर्पणखां, दे4.9 ग्र1.2 शु(दे4 सू) र्पणखीं, दे5 शूर्पनखां (→शूर्पणखां). –c) दे1 पुष्पोत्करा (→पुष्पोत्कटा); दे1.8.9 ग्र2 मुवें. मुए. मुब. -प्यजनयत् , दे4 साजनयत्, दे5 विजनयत् (→व्यजनयत्). –d) ब2 दे1-4.6 द1 म1 सुतान् (→शुभान्).

१३. ब1. ⊙. (द्र. ६ पा. वि.). –a) का1 द1 प्रशस्तं, दे1 ***(→प्रहस्तं). –b) का1 दे4 महापार्श्व (दे4 °र्श्वे) स्व (दे4 श्व)रं तथा, दे3 महापार्श्वं श्वरं तथा दे10 महापार्श्वं वहं तथा. –c)दे10 कुंभमासीं (→कुम्भीनसीं); द1 ग्र1.2 कुंभ्यां (→कन्यां). –d) ब2.3 न1 वाकायां, दे1.8-10 ते1 मुवें. मुए. मुब. वाकायाः, दे2.3.5.6 राकायाः, दे4 लोकाया, ग्र1.2 म1 कालायाः (→राकायां); दे3.5.6 शृण्वत, मुवें. मुए. मुब. सृजत (→शृणुत); द1 वलाकायाः शृणु प्रजाः .

१४. ब1. ⊙. (द्र ६ पा. वि.). –a) ते1 ग्र2 त्रिशिरं (ग्र2 °रो) (→त्रिशिरा); ते1 दूषणं (→दूषणश् ). –b) दे8-10 महाबली (दे10 °लिः) (→महाबलः); ते1 विद्युज्जिह्वं महाबलम्. –d) दे5 पौलस्त्यां (→पौलस्त्या). –f ) दे2 शिव°, दे5 गुरु° (→रुद्र°); दे10 °भक्त्या (→°भक्ताः); दे1 च, दे2 तु, दे3* (→सु-); न1 रुद्रा भक्तिसमन्विताः.

१५. ब1. ⊙. (द्र. ६ पा. वि.). –a) दे1.3-6.8-10 न1 ते1 ग्र2 म1 पुलस्त्यस्य (→पुलहस्य); दे5 छगाः, ग्र2 मृगोः (→मृगाः). –b) दे3 छालाश् (→व्यालाश् ). –c) दे8 मुवें. मुए. मुब. ऋक्षाश् , दे9 रक्षाश् (→सर्पाश् ); दे10 भूता पिशाचास्तथा रक्षा.

.१६.१६ अनपत्यः क्रतुस्तस्मिन् स्मृतो वैवस्वतेऽन्तरे ।
मरीचेः कश्यपः पुत्रः स्वयमेव प्रजापतिः ॥१६
भृगोरप्यभवच्छुक्रो दैत्याचार्यो महातपाः ।
स्वाध्याययोगनिरतो हरभक्तो महाद्युतिः ॥१७
अत्रेः पत्न्योऽभवन् बह्वचः सोदर्यास्ताः पतिव्रताः ।
कृशाश्वस्य तु विप्रेन्द्रा घृताच्यामिति मे श्रुतम्॥१८
स तासु जनयामास स्वस्त्यात्रेयान् महौजसः ।
वेदवेदाङ्गनिरतांस्तपसा हतकिल्विषान् ॥१९
नारदस्तु वसिष्ठाय ददौ देवीमरुन्धतीम् ।
ऊर्ध्वरेतास्तत्र मुनिः शापाद् दक्षस्य नारदः ॥२०
हर्यश्वेषु तु नष्टेषु मायया नारदस्य तु ।
शशाप नारदं दक्षः क्रोधसंरक्तलोचनः ॥२१
यस्मान्मम सुताः सर्वे भवतो मायया द्विज ।
क्षयं नीतास्त्वशेषेण निरपत्यो भविष्यति ॥२२
अरुन्धत्यां वसिष्ठस्तु शक्तिमुत्पादयत् सुतम् ।
शक्तेः पराशरः श्रीमान् सर्वज्ञस्तपतां वरः ॥२३
आराध्य देवदेवेशमीशानं त्रिपुरान्तकम् ।
लेभे त्वप्रतिमं पुत्रं कृष्णद्वैपायनं प्रभुम् ॥२४

१६. ब1. ⊙ (द्र. ६ पा. वि.). -a) का1 दे3.5 अनपत्य-, दे1.4 अनुपत्यः (→अनपत्यः); द1 ग्र1.2 म1 तत्र (→तस्मिन्). -b) दे1 मृतो, दे4 सुता, द1 ग्र1.2 म1 ततो (→स्मृतो). -c) न1 ग्र1.2 म1 काश्यपः (→कश्यपः).

१७. ब1. ⊙ (द्र. ६ पा. वि.). -a) न1 मुवें. मुए. मुब. °रथा° (→°रप्य°); दे1.10 -छ(श) क्रो, दे2 द1 पुत्रो (→-छुक्रो). -b) दे2 महानयः (→महातपाः). -c) दे10 साध्याय°, ग्र2 सध्यान° (→स्वाध्याय°); दे2 °संयुक्तो (→°निरतो). -d) दे1 हरि° (→हर°); दे10 महा** (→महाद्युतिः).

१८. ब1. ⊙ (द्र. ६ पा. वि.); दे1. १८c-१९b ⊙. -a) द1 ग्र1.2 म1 अत्रि-(→अत्रेः); का1 ब3 पुत्र्या (ब3 °त्र्यो), ब2 दे2.3.5.6.8-10 न1 तै1 द1 ग्र1.2 म1 मुवें. मुए. मुब. पुत्रो (→पत्न्यो); का1 भगवान्, दे4 [अ]भवत्पूर्व्या, दे8-10 [अ]भव-द्बह्विः मुवें. मुए. मुब.; न1 [अ]भवन्वाह्यः, द1 ग्र1[अ]भवत्पुत्रो, ग्र2 [अ] भवद्विप्रो, म1 [अ]भवंस्तिस्रः (→[अ] भवन्बह्व्यः). -b) ब2.3 दे8-10 तै1 मुवें. मुए. मुब. सो (दे10 सौ) दर्यस्, दे4 द1 ग्र2 म1 सोदरास् (द1 °रस् ) (→सोदर्यास् ); दे8-10 मुवें. मुए. मुब. तस्य नैध्रुवः, ग्र2 म1 तु प्रतिप्रभाः (→ताः पतिव्रताः); का1 सोदर्या* पतिव्रताः; ग्र1 दुर्वासाश्चन्द्र एव च. -c) न1 ग्र1 म1 भृशा° (→कृशा°); ब2 विप्रेन्द्रो, दे8-10 न1 मुवें. मुए. मुब. विप्रर्षेर् (→विप्रेन्द्रा). -d) दे8-10 मुवें. मुए. मुब. नः (→मे).

ग्र1 पुस्तके १८ श्लोकस्य b, c चरणयोर्मध्ये अधिकम्—

16. * सोदरास्ते महात्मानस्त्रयोप्यप्रतिमप्रभाः ।

१८ श्लोकात्परं दे2 पुस्तके अधिकम्—

* त्रिशाखास्य च विप्रर्षे घृताचीमिति विश्रुतं । ( = १८cd)

१९. ब1. ⊙ (द्र.६ पा. वि.); दे1. ab ⊙. -a) दे2 म1 सुतासु, दे8-10 मुवें. मुए. मुब. स तस्यां (→स तासु); का1 दे5 जनयामासुः; ब3 [अ]जनयत् (→जनयामास). -b) ग्र1 स्वसात्रेयान् (→स्वस्त्यात्रेयान्); दे2 महायशाः, दे4 महात्मनः, द1 ग्र1.2 म1 महाजनान् (→महौजसः). -c) तै1 °वेदार्थ° (→°वेदांग°). -d) द1 ग्र1.2 म1 तापसान् (→तपसा); न1 दग्ध°, ग्र2 वीत° (→हत°); ग्र2 °कल्मषान् (→°किल्विषान्).

२०. ब1. ⊙ (द्र. ६ पा. वि.). -a) दे8 वशिष्ठस्य (→वसिष्ठाय). -b) दे5.6 ग्र2 अरुन्धती (→अरुन्धतीम्). -c) दे1.2 देवमुनिः, दे8-10 मुवें. मुए. मुब. तु तत्रैव, तै1 द1 ग्र1.2 स तु मुनिः, म1 स तु मन्त्रः (→तत्र मुनिः).

२१. ब1. ⊙ (द्र. ६ पा. वि.). -a) का1 दे5 [अ]नु, दे4 तै1 च, द1 ग्र1.2 म1 [अ]थ (→तु). -b) म1 मृगया (→मायया); का1 ब2.3 दे3.4.5 न1 तै1 द1 ग्र1 म1 सः, दे2 वा, दे6 यः, ग्र2 वै (→तु). -d) दे2.3 कोप° (→क्रोध°).

२२. ब1. ⊙ (द्र. ६ पा. वि.). -b) ब2 दे1.2.5 मुवें. मुए. मुब. भवता, ग्र2 भवन्तो (→भवतो); दे4 न1 ग्र2 द्विजः (दे4 °जाः) (→द्विज). -c) दे1 नीतस्तु, दे5 नीताश्च, ग्र1 नीतासु (→नीतास्तु); दे5 ग्र2 शेषेण (→[अ]शेषेण). -d) ब2 दे2.3. 5.6.10 न1 तै1 द1 ग्र2 मुवें. मुए. मुब. भविष्यसि (→भविष्यति).

२३. -a) ब1 अरुन्धत्या (→अरुन्धत्यां); ब2 दे3 बशिष्ठस्तु, दे10 विशिष्ठं तु (→वसिष्ठस्तु). -b) दे2 ह्यजनयत्, दे4 च जनयत् (→उत्पादयत्); ब2 स्वयं, दे5 सुतां, ग्र2 इव (→सुतं). -c) न1 ग्र1.2 पराशर- (→पराशरः). -d) ब2.3 म1 तपसां (→तपतां); तै1 सर्वज्ञानवतां वरः.

२४. -a) म1 देवम् (→देव-); ग्र2 ईशान-, म1 ईशानम् (→देवेशम्). -b) म1 ईश्वरं (→ईशानम्); दे3.6 त्रिपुराननं, दे4 त्रिपुरानलं, दे5 त्रिपुरान्तकां, द1 त्रिपुरान्तरं (→त्रिपुरान्तकम्); ग्र2 त्रिपुरान्तक ईश्वरं. -c) का1 स्व-, दे3.6 त्वत्-, दे4 च, दे10 ग्र2 त्वं (→त्व-). -d) न1 द्वैपायनः (→द्वैपायनं).

द्वैपायनाच्छुको जज्ञे भगवानेव शंकरः ।
अंशांशेनावतीर्योर्व्यां स्वं प्राप परमं पदम् ॥२५
शुकस्याप्यभवन् पुत्राः पञ्चात्यन्ततपस्विनः ।
भूरिश्रवाः प्रभुः शंभुः कृष्णो गौरश्च पञ्चमः ।
कन्या कीर्त्तिमती चैव योगमाता धृतव्रता ॥२६
एतेऽत्र वंश्याः कथिता ब्राह्मणा ब्रह्मवादिनाम् ।
अत ऊर्ध्वं निबोधध्वं कश्यपाद्राजसंततिम् ॥२७

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायां पूर्वविभागे अष्टादशोऽध्यायः ॥१८॥

# १९

सूत उवाच ।❀
अदितिः सुषुवे पुत्रमादित्यं कश्यपात् प्रभुम् ।
तस्यादित्यस्य चैवासीद् भार्याणां तु चतुष्टयम् ।
संज्ञा राज्ञी प्रभा छाया पुत्रांस्तासां निबोधत ॥१
संज्ञा त्वाष्ट्री च सुषुवे सूर्यान्मनुमनुत्तमम् ।
यमं च यमुनां चैव राज्ञी रैवतमेव च ॥२　वें. १.२०.३

---

२५. –a) ब$_{3}$ दे$_{3.6}$ यज्ञे (→जज्ञे). –c) दे$_{1}$ [अ]वतीर्णोर्व्यां (→[अ]वतीर्योर्व्यां). –d) ब$_{2.3}$ दे$_{1}$ ते$_{1}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ सं- (→स्वं); दे$_{2}$ स प्राप पितरं तदा.

२६. –a) दे$_{8.9}$ मुवें. मुए. मुब. शुकस्यास्या°, द$_{1}$ म$_{1}$ शुकस्य चा° (→शुकस्याप्य°); न$_{1}$ पुत्रो (→पुत्राः). –b) दे$_{1}$ पश्चासं च, दे$_{3}$ पंचाद्यंत-, दे$_{6}$ पश्चाद्यंतं, दे$_{8}$ संशत्पंच, दे$_{9}$ संचात्यं च, दे$_{10}$ पंचात्पंच (→पंचात्यन्त-). –c) दे$_{1}$ भूरिश्रवः, द$_{1}$ म$_{1}$ भूतिश्रवाः (→भूरिश्रवाः); दे$_{2}$ कृपः (→प्रभुः); ग्र$_{1}$ शक्तिः (→शंभुः). –d) द$_{1}$ कृष्ण- (→कृष्णो); दे$_{1}$ गौरस्तु, ग्र$_{2}$ गौरव-, मुब. पौरश्च (→गौरश्च). –e) न$_{1}$ म$_{1}$ मुवें. चैवं (→चैव). –f) द$_{1}$ ग्र$_{1.2}$ योगमाया (→योगमाता); ब$_{1}$ दे$_{6}$ द$_{1}$ ग्र$_{1}$ मुए. धृतव्रताः (→धृतव्रता).

२७. –a) ब$_{1}$ एतेषु, ब$_{2}$ दे$_{1.4.8-10}$ द$_{1}$ ग्र$_{1.2}$ मुवें. मुए. मुब. एतेऽत्रि- (→एतेऽत्र); ब$_{1.3}$ दे$_{1.2.8-10}$ न$_{1}$ ग्र$_{2}$ वंशाः (→वंश्याः); ते$_{1}$ एते वंशाः प्रकथिताः. –b) ब$_{1.2}$ दे$_{3.6.8-10}$ न$_{1}$ मुवें. मुए. मुब. ब्रह्मणा (→ब्राह्मणा); का$_{1}$ ब$_{2.3}$ दे$_{4-6}$ न$_{1}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ °वादिनः, दे$_{3}$ °वादिना (→°वादिनाम्). –c) का$_{1}$ दे$_{3.5}$ निबोध त्वं, ब$_{3}$ निबोधाद्यं, न$_{1}$ निबोधेदं, ग्र$_{2}$ निबोधयध्वं (→निबोधध्वं). –d) ब$_{2}$ दे$_{1}$ ग्र$_{1}$ म$_{1}$ काश्यपाद् (दे$_{1}$ °पां) (→कश्यपाद्).

**पुष्पिका**—

**पुराणनाम**—द$_{1}$. ⊙, का$_{1}$ दे$_{1.2.4.5.8-10}$ ग्र$_{1.2}$ मुवें. मुए. इति श्रीकूर्मपुराणे, ब$_{1-3}$ दे$_{3.6}$ म$_{1}$ इति कूर्मपुराणे, न$_{1}$ इति श्रीकौर्मे, ते$_{1}$ इत्यादिमहापुराणे श्रीकौर्मे, मुब. इति श्रीकौर्मे महापुराणे पूर्वभागे. **अध्यायनाम**—दे$_{4}$ न$_{1}$ ते$_{1}$ द$_{1}$ म$_{1}$. ⊙; का$_{1}$ ब$_{1-3}$ दे$_{3.5}$ वंशानुकीर्त्तने (ब$_{1}$ °नं), दे$_{1.8.9}$ मुए. ऋषिवंशे, दे$_{2}$ ऋषि अत्रे वंशे, दे$_{6}$ ग्र$_{1}$ ऋषिवंशानुकीर्त्तने, दे$_{10}$ ऋषिवंशकथनोन्नाम, ग्र$_{2}$ ऋषिवंशानुकीर्त्तनं नाम, मुवें. ऋषिवंशवर्णनं नाम, मुब. ऋषिवंशकीर्तनं नाम. **अध्यायसंख्या**—दे$_{6}$ द$_{1}$. ⊙; का$_{1}$ ब$_{1-3}$ दे$_{3.5}$ न$_{1}$ ते$_{1}$ सप्तदशोऽध्यायः, दे$_{1.2.8.9}$ ग्र$_{2}$ म$_{1}$ एकोनविंशोऽध्यायः, दे$_{10}$ मुवें. मुए. मुब. एकोनविंशोऽध्यायः ॥१९॥, ग्र$_{1}$ अष्टादशोऽध्यायः.

### १९

❀ दे$_{2}$ सूत उ.; न$_{1}$ द$_{1}$ ग्र$_{1.2}$ सूतः; ते$_{1}$ श्रीशिवः सूतः; म$_{1}$ श्रीकूर्मः.

१. –a) दे$_{5}$ सुश्रुवे (→सुषुवे). –b) न$_{1}$ काश्यपां, ग्र$_{1.2}$ म$_{1}$ काश्यपात् (→कश्यपात्). –d) ग्र$_{1.2}$ म$_{1}$ च (→तु). –e) दे$_{1}$ संज्ञा रात्रिः (→संज्ञा राज्ञी); का$_{1}$ प्रभा छाया, + तथा छाया, ब$_{1.3}$ प्रभाच्छाया, न$_{1}$ प्रभाछायां (→प्रभा छाया); द$_{1}$ संज्ञां राज्ञीं प्रभां छायां. –f) दे$_{3.4}$ द$_{1}$ ग्र$_{1.2}$ पुत्रास्तासां, म$_{1}$ तासां पुत्रं (→पुत्रांस्तासां).

२. –a) का$_{1}$ ग्र$_{1}$ संज्ञा त्वष्ट्री, दे$_{4}$ ते$_{1}$ संज्ञा त्वाष्ट्रं, दे$_{10}$ संज्ञां त्वां * (→संज्ञा त्वाष्ट्री); दे$_{8-10}$ मुवें. मुए. मुब. तु (→च); ग्र$_{2}$ म$_{1}$ संज्ञा त्वजनयत् पुत्रं. –b) दे$_{3}$ सूर्यान्मूल°, दे$_{4}$ सूर्यात्मिज°, दे$_{5}$ सूर्यान्मातु° (→सूर्यान् मनु°); म$_{1}$ मनुं वैवस्वतं स्मृतं. –c) न$_{1}$ यन्मुं, ग्र$_{2}$ सूर्यं (→यमं); न$_{1}$ यमुमां (→यमुनां). –d) दे$_{1}$ रात्री, ग्र$_{2}$ राज्ञा (→राज्ञी); ब$_{2.3}$ दे$_{1-3.6.8-10}$ ते$_{1}$ मुवें. मुए. मुब. रेवन्त°, न$_{1}$ रेवत°, ग्र$_{2}$ चैवत° (→रैवत°).

वें. १.२०.३

प्रभा प्रभातमादित्याच्छाया सावर्णमात्मजम् ।
शनिं च तपतीं चैव विष्टिं चैव यथाक्रमम् ॥३
मनोस्तु प्रथमस्यासन् नव पुत्रास्तु संयमाः ।
इक्ष्वाकुर्नभगश्चैव धृष्टः शर्यातिरेव च ॥४
नरिष्यन्तश्च नाभागो ह्यरिष्टः कारुषकस्तथा ।
पृषध्रश्च महातेजा नवैते शक्रसन्निभाः ॥५
इला ज्येष्ठा वरिष्ठा च सोमवंशविवृद्धये ।
बुधस्य गत्वा भवनं सोमपुत्रेण संगता ॥६
असूत सौम्यजं देवी पुरूरवसमुत्तमम् ।
पितॄणां तृप्तिकर्त्तारं बुधादिति हि नः श्रुतम् ॥७
संप्राप्य पुंस्त्वममलं सुद्युम्न इति विश्रुतः ।
इला पुत्रत्रयं लेभे पुनः स्त्रीत्वमविन्दत ॥८
उत्कलश्च गयश्चैव विनताश्वस्तथैव च ।
सर्वे तेऽप्रतिमप्रख्याः प्रपन्नाः कमलोद्भवम् ॥९
इक्ष्वाकोश्चाभवद् वीरो विकुक्षिर्नाम पार्थिवः ।
ज्येष्ठः पुत्रशतस्यापि दश पञ्च च तत्सुताः ॥१०

---

३. –a) का1 ब2 दे1-4.6.8-10 न1 द1 ग्र1 म1 मुवें. मुए. मुब. [आ] दित्या (→[आ]दित्यात्); दे5 प्रभा प्रभवा * दित्या. –b) ब2 दे2 द1 ग्र1.2 म1 मुवें. मुए. मुब. सावर्णिमात्मजम्, दे4.5 सावर्ण्यं (दे5 °र्णं) मात्मजां, न1 सूत तथात्मजं (→सावर्णमात्मजं). –c) ब1 द1 ग्र1.2 म1 शनिञ्चै (ब1 °श्चै)व तपन्ती(ब1 °ती)ञ्च (ग्र2° ञ्चेत्), दे4 शनिं चैव तपंतं च, न1 शनैश्चरं च तपतीं. –d) दे4 व्युष्टिञ्चैव, न1 वृष्टिं चैव, ते1 विष्णिं चैव, द1 ग्र1 उषिं चैव, ग्र2 म1 उषा चैव (→विष्टिं चैव); का1 तथा° (→यथा°).

४. –a) ब1 न1 नमोस्तु (→मनोस्तु); द1 प्रथमादासन् (→प्रथमस्यासन्). –b) ब2.3 संयताः, दे1 सत्तमाः, दे2.8-10 मुवें. मुए. मुब. तत्समाः, न1 मानवाः, द1 ग्र1.2 म1 सम्मताः (→संयमाः). –c) ब1-3 दे2.3.5.6 इक्ष्वाकुर्नाभगश्चैव, दे4 इक्ष्वाकुनाभवं चैव, दे8-10 मुवें. मुए. मुब. इक्ष्वाकुश्चैव नाभागो (दे10 °रा, मुब. °गे), ग्र2 इक्ष्वाकुर्नहुषश्चैव. –d) ब1 वृष्टः, ब3 ध्रष्टः, दे1 धृष्यः, दे4 दृष्ट्वा, दे8 धृष्णुः, ते1 दृष्टः, + धृष्टः, द1 ग्र1.2 म1 दृष्टः (म1 °ष्टिः), मुब. धृष्टा (→धृष्टः); न1 शैर्यातिर्, द1 ग्र1.2 संयातिर्, म1 शंयातिर् (→शर्यातिर्).

५. –a) दे4 नरान्तकश्च, द1 ग्र1 म1 निरीक्षित (द1 °ति)श्च ग्र2 नरिष्यतश्च (→नरिष्यन्तश्च); का1 नरिष्यंतनाभागो. –b) ते1 दृष्टोऽथ, द1 म1 अरिष्टः (→ह्यरिष्टः), ब1-3 दे1.8-10 ते1 मुवें. मुए. मुब. करुष(ते1 °श)स्तथा, दे2 करुषकस्तथा, दे3.6 करुषे(दे6 °षै)स्तथा, दे4 कर्षकस्तथा, न1 करुकस्तथा, म1 कुषयस्तथा (→कारुषकस्तथा); दे5 ह्यारिकारुषकस्तथा, ग्र2 ह्यरिस्तकुरुषस्तथा. –c) का1 दे9 द1 वृषध्रश्च, दे1 वृषभश्च, दे10 दृषध्रश्च, ते1 पृषदश्व-, म1 विषध्रश्च (→पृषध्रश्च); दे3.5 महाभागौ, दे4 महाभागा (→महातेजा). –d) दे3 द1 न चैते (→नवैते); ग्र2 चेन्द्र° (→शक्र°).

६. –a) दे5.10 इलां (→इला); दे1 वशिष्ठा च, ग्र2 वरिष्ठाश्च (→वरिष्ठा च). –b) दे4.6 द1 ग्र1 सोमवंश (दे4 °शं) विवर्द्धये, दे8-10 मुवें. मुए. मुब. सोमवंशं व्यवर्द्धयत्, न1 सोमवंशविवर्द्धनी, ग्र2 वंशसोमसमृद्धये. –c) दे2.4 न1 भवनं गत्वा, दे8-10 गत्वा भुवनं, द1 ग्र2 गत्वा भगवान् (→गत्वा भवनं); ग्र1 बुधेन कर्दमसुता. –d) ग्र1 संगतां (→संगता). –cd) म1 पुत्रेण सोमपुत्रेण संगता सा वरानना.

७. –a) का1 सोमजं, ब1 दे4.8 न1 ते1 द1 ग्र1.2 म1 मुवें. मुए. मुब. सोमजाद्, दे1.9.10 सोमजा, दे3 सोमजं, दे5 सोम्यजं (→सौम्यजं); द1 ग्र1 म1 देवात्, ग्र2 देवान् (→देवी). –b) दे10 समुद्भवं, + समुत्तमं (→समुत्तमम्). –c) दे4 पितृ° (→तृप्ति°). –d) द1 बुध्यादिति (→बुधादिति); दे6 हितः श्रुतं, दे10 हि नः श्रुतिं, ग्र2 श्रुतं हितं (→हि नः श्रुतं).

८. –a) ब3 संप्राप्य पुंस्त्वमखिलं, दे5 संत्राणपुंस्त्वममलं, दे8-10 मुवें. मुए. मुब. प्राप्य पुत्रं सुविमलं, न1 संप्राप्य पुंस्त्वमथ सा. –b) का1 न1 प्रद्युम्न, दे3 सुसुम्न, दे6 सुषुम्न, ग्र1 सद्युम्न (→सुद्युम्न); दे10 ग्र2 मुवें. मुए. विश्रुतम् (→विश्रुतः). –c) दे1 ग्र2 इडा (→इला); का1 ब2.3 दे3.5.6 ते1 °द्वयं (→°त्रयं). –d) दे5 अविक्षतः (→अविन्दत).

९. –a) दे1.3.8-10 न1 मुवें. मुए. मुब. उत्कलं च (→उत्कलश्च); दे1 जयं चैव, दे4 मयश्चैव, दे8-10 न1 मुवें. मुए. मुब. गयं चैव (→गयश्चैव). –b) का1 विनतश्च, दे1 विनताश्वं, दे3 विनताञ्च, दे4 विनीताश्वस्, दे5.6 न1 विनताश्च, दे8-10 मुवें. मुए. मुब. विनतं च, द1 ग्र1.2 म1 विनीतश्च (→विनताश्वस्). –c) ग्र1 सर्वै (→सर्वे); ब3 °ख्याताः (→°प्रख्याः). –d) ते1 प्रसन्नाः (→प्रपन्नाः); दे4 °द्भवा (→°द्भवम्).

१०. –a) दे4 इक्ष्वाकुश्च (→इक्ष्वाकोश्च); दे2 [अ] भवत्पुत्रो, दे3.6.8 भवद्धीरो, ग्र1 [अ]भवद् धीरो (→[अ]भवद्वीरो). –b) ब3 द्विद्वक्षिर्नाम, दे2 विकुक्षिरिति, दे5 विकुक्षिर्नाम-, दे10 विकुक्षिनां न (→विकुक्षिर्नाम); दे2 विश्रुतः, दे4

तेषां ज्येष्ठः ककुत्स्थोऽभूत् काकुत्स्थो हि सुयोधनः।
सुयोधनात् पृथुः श्रीमान् विश्वकश्च पृथोः सुतः ॥११
विश्वकादार्द्रको धीमान् युवनाश्वस्तु तत्सुतः।
स गोकर्णमनुप्राप्य युवनाश्वः प्रतापवान् ॥१२
दृष्ट्वा तु गौतमं विप्रं तपन्तमनलप्रभम्।
प्रणम्य दण्डवद् भूमौ पुत्रकामो महीपतिः।
अपृच्छत् कर्मणा केन धार्मिकं प्राप्नुयात् सुतम् ॥१३

गौतम उवाच ।※

आराध्य पूर्वपुरुषं नारायणमनामयम्।
अनादिनिधनं देवं धार्मिकं प्राप्नुयात् सुतम् ॥१४
यस्य पुत्रः स्वयं ब्रह्मा पौत्रः स्यान्नीललोहितः।
तमादिकृष्णमीशानमाराध्याप्नोति सत्सुतम् ॥१५
न यस्य भगवान् ब्रह्मा प्रभावं वेत्ति तत्त्वतः।
तमाराध्य हृषीकेशं प्राप्नुयाद्धार्मिकं सुतम् ॥१६
स गौतमवचः श्रुत्वा युवनाश्वो महीपतिः।
आराधयन्महायोगं वासुदेवं सनातनम् ॥१७
तस्य पुत्रोऽभवद् वीरः श्रावस्तिरिति विश्रुतः।
निर्मिता येन श्रावस्तिर्गौडदेशे महापुरी ॥१८ वें.१.२०.१९

ते1 द1 ग्र1.2 म1 नामतः (→पार्थिवः). –c) ब1 दे4 ते1 द1 ग्र1.2 म1 ज्येष्ठः (ग्र1.2 म1 °ष्ठ) पुत्रशतस्यार्यो (ब1 °र्या, ते1 °र्यो), दे1.2 ज्येष्ठ (दे2 °ष्ठः) पुत्रशतस्यासीद्, दे8-10 मुवें मुए. मुब. ज्येष्ठपुत्रः स तस्यासीद्, न1 ज्येष्ठाः पुत्रशतस्यासं. –d) ग्र2 तु वा (→च तत्-).

**११.** ते1. ⊙. –a) न1 ज्येष्ठाः (→ज्येष्ठः); ब1 दे1-3 ग्र1 म1 ककुस्थो, दे5 ककुस्थौ, दे6 क्रकत्स्थो (→ककुत्स्थो). –b) का1 ब3 काकुस्थस्तु, ब2 मुवें. मुए. मुब. काकुत्स्थस्तु, दे1.2 न1 काकुस्थ (न1 °स्थो) स्य, दे3.8-10 काकुस्था (दे10 °त्स्था) तु, दे5 ककुस्थस्तु, दे6 कालस्थं तु, द1 ककुत्स्थो हि, ग्र1 म1 क (म1 का)कुत्स्थाद्धि (→काकुत्स्थो हि); ते1 सनातनः (→सुयोधनः). –c) ब1.3 न1 द1 ग्र1.2 म1 पृथु (→पृथुः); ते1 चासीत् (→श्रीमान्). –d) ब1.3 दे1-3.6 ग्र1.2 म1 विश्वकः स्यात् (ग्र2 °कस्या), दे5 विकुसा स्यात्, न1 विश्वकस्याः, द1 युवनाश्वः (→विश्वकश्च); का1 ततः (→सुतः); दे4 विश्वकस्यादयो सुतः, ग्र2 विश्वकस्यापृथोजसः.

**१२.** द1. ab ⊙; ते1. a ⊙. –a) ब3 आद्रको, दे4 आहुको, ग्र1 आत्मको, म1 आद्रिको (→आर्द्रको); दे1 श्रीमान्, न1 जज्ञे (→धीमान्); दे1 विश्वकादादुकः श्रीमान्, ग्र2 विश्वका विश्वकाद्धीमान्. –b) दे10 यवनाश्वश्, ग्र2 मन्युमानस् (→युवनाश्वस्); दे1.2.8-10 न1 मुवें. मुए. मुब. च (→तु). –c) ब3 अनुः (→अनु-). –d) ग्र1 युवा° (→युव°).

**१३.** –a) दे8-10 मुवें. मुए. मुब. दृष्ट्वासौ (दे10 °सो?) (→दृष्ट्वा तु); दे4 विप्र (→विप्रं). –b) दे4 तपेतं (→तपन्तं); ब2 अमरप्रभं, ब3 अमलप्रभं, दे5 अनलप्रभां, न1 अनलं प्रभुं (→अनलप्रभम्). –d) द1 महामतिः (→महीपतिः). –f) का1 दे2 द1 ग्र1.2 मुवें. प्राप्नुयां सुतम्, दे5 प्राप्नुयात्सुतां, न1 पुत्रमाप्नुयां (→प्राप्नुयात् सुतम्); ते1 प्राप्नुयाद्धार्मिकं सुतम्.

※ दे3.8.9 गौतम उ.; न1 ते1 द1 ग्र1.2 म1 गौतमः.

**१४.** ग्र2. ⊙. –a) दे1.2.4.8-10 ते1 द1 ग्र1 म1 मुवें. मुए. मुब. पुरुषं पूर्वं (दे4 °र्ण), न1 पुरुषं विष्णुं (→पूर्वपुरुषं). –d) दे3 प्राप्नुयात्सुकं, + प्राप्नुयात्सुतं, ते1 प्राप्नुयात्सुतः, न1 प्राप्नुयां सुतं (→प्राप्नुयात् सुतम्).

**१५.** –a) दे2.8-10 मुवें. मुए. मुब. तस्य, म1 यत्र (→यस्य); ब1 दे3.6 द1 ग्र1.2 म1 पुत्र (→पुत्रः). –b) दे1 पौत्रा स्यात्, दे6 द1 ग्र1.2 म1 पुत्रस्यात्, न1 पौत्रः स्यां (→पौत्रः स्यात्). –c) ब2 धर्मादि, ब3 दे2 ते1 तमादि, दे5 तमाहुं (→तमादि). –d) दे1.8-10 न1 तत्सुतम्, दे3.6 यत्सुतम्, दे5 सत्सुताम्, द1 ग्र1.2 म1 तं सुतम् (→सत्सुतम्).

**१६.** दे1.8-10. d ⊙ (द. सं.). –a) ब2 यस्य न (→न यस्य); दे6 भगवद् (→भगवान्). –b) द1 ग्र1.2 म1 विभागं (ग्र1 °गा) (→प्रभावं); दे5 त*तः, दे10 भक्तितः (→तत्त्वतः). –d) न1 धार्मिकं पुत्रमाप्नुयात्.

१६ श्लोकात्परं ग्र2 अधिकम्—

* यस्य पुत्रः स्वयं ब्रह्मा पौत्रस्यान्नीललोहितः ( = १५ab)

**१७.** दे1.8-10. abc ⊙ (द. सं.). –c) दे2 आराध्यते (→आराधयन्); ब3 ग्र1 महादेवं, दे2 मुवें. मुए. मुब. हृषीकेशं, ते1 महाभागं (→महायोगं).

**१८.** –a) का1 पुत्रोऽभवेद्वीरः, दे10 पुत्रोभवत्वीरः, दे1 ग्र2 पुत्रोऽभवद्वीरो, न1 पुत्रानभवद्वीरः (→पुत्रोऽभवद्वीरः). –b) दे1 मुवें. मुए. सावस्तिर्, दे4 ते1 शताश्व, द1 शावस्त, ग्र2 श्रावस्त (→श्रावस्तिर्). –c) ब1.2 दे2.8-10 श्रावन्ती, दे1 मुवें. मुए. सावस्तिः, दे5.6 मुब. श्रावस्ति-, न1 म1 शावस्ति (म1 °स्तिर्) (→श्रावस्तिर्); द1 निर्मिता एव शावस्ति, ग्र2 निर्मीयते न शावस्ति. –d) न1 **देशे, ग्र2 भौमदेशे (→गौडदेशे); दे10 महापुरीं (→महापुरी).

वं.१.२०.२०० तस्माच्च बृहदश्वोऽभूत् तस्मात् कुवलयाश्वकः ।
धुन्धुमारत्वमगमद् धुन्धुं हत्वा महासुरम् ॥१९
धुन्धुमारस्य तनयास्त्रयः प्रोक्ता द्विजोत्तमाः ।
दृढाश्वश्चैव दण्डाश्वः कपिलाश्वस्तथैव च ॥२०
दृढाश्वस्य प्रमोदस्तु हर्यश्वस्तस्य चात्मजः ।
हर्यश्वस्य निकुम्भस्तु निकुम्भात् संहताश्वकः ॥२१
कृशाश्वश्च रणाश्वश्च संहताश्वस्य वै सुतौ ।
युवनाश्वो रणाश्वस्य शक्रतुल्यबलो युधि ॥२२
कृत्वा तु वारुणीमिष्टिमृषीणां वै प्रसादतः ।
लेभे त्वप्रतिमं पुत्रं विष्णुभक्तमनुत्तमम् ।
मान्धातारं महाप्राज्ञं सर्वशस्त्रभृतां वरम् ॥२३
मान्धातुः पुरुकुत्सोऽभूदम्बरीषश्च वीर्यवान् ।
मुचुकुन्दश्च पुण्यात्मा सर्वे शक्रसमा युधि ॥२४
अम्बरीषस्य दायादो युवनाश्वोऽपरः स्मृतः ।
हरितो युवनाश्वस्य हारितस्तत्सुतोऽभवत् ॥२५
पुरुकुत्सस्य दायादस्त्रसदस्युर्महायशाः ।
नर्मदायां समुत्पन्नः संभूतिस्तत्सुतोऽभवत् ॥२६
विष्णुवृद्धः सुतस्तस्य त्वनरण्योऽभवत् परः ।
बृहदश्वोऽनरण्यस्य हर्यश्वस्तत्सुतोऽभवत् ॥२७

---

**१९.** –a) दे$_{3.6}$ बृष° (→बृह°). –b) न$_{1}$ ततः (→तस्मात्); ब$_{2}$ कुवला*श्वकः, द$_{1}$ कुवलयाश्वतः, ग्र$_{2}$ कुवलयाम्बरं (→कुवलयाश्वकः). –c) दे$_{8-10}$ मुवें. मुए. मुब. धुन्धुमारः समभवत् , ते$_{1}$ धुन्धुमारत्वमावाप. –d) ब$_{1.3}$ युद्धं, दे$_{10}$ बंधु, ग्र$_{2}$ तं*(→धुन्धुं ); ब$_{2}$ °बलः, दे$_{1}$ °बलं, न$_{1}$ °सुरः (→°सुरम्).

**२०.** –b) दे$_{1}$ प्रोक्तो (→प्रोक्ता). –c) दे$_{10}$ दृष्ट्वाश्वश्चैव (→दृढाश्वश्चैव); ब$_{1.3}$ दे$_{8}$ दंडाश्व, दे$_{9}$ दंडाश्च, दे$_{10}$ दंडश्च, ते$_{1}$ चन्द्राश्वः, म$_{1}$ दासाश्व (→दण्डाश्वः). –d) दे$_{1}$ कविकाश्वः तथैव च, ते$_{1}$ ****स्तथैव च, ग्र$_{2}$ वादिनाश्वस्तथैव च.

**२१.** –a) दे$_{3}$ न$_{1}$ प्रमेदिस्तु, दे$_{4.8-10}$ प्रमेय (दे$_{10}$ °ह) स्तु (→प्रमोदस्तु); द$_{1}$ ग्र$_{1.2}$ म$_{1}$ दृढाश्वस्याप्रमेयस्तु. –b) दे$_{10}$ हर्यश्वं (→हर्यश्वस्); दे$_{1}$ त* चात्मजाः (→तस्य चात्मजः). –c) दे$_{10}$ हर्यश्वश्च (→हर्यश्वस्य); दे$_{1}$ च (→तु). –d) दे$_{3.6}$ संहजानुकः, दे$_{4}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ संभवाश्वकः (→संहताश्वकः).

**२२.** –a) ब$_{1.2}$ दे$_{2.5}$ कृशाश्वोथ, दे$_{4}$ रूपाश्वेह्यो, दे$_{8}$ मुवें. मुए. कृताश्वोऽथ, न$_{1}$ कुशाश्वोऽथ, ग्र$_{1}$ रूपाश्वोथ (→कृशाश्वश्च); ब$_{3}$ मुब. कृशाश्वोथा- (मुब° ऽथ) रुणाश्वश्च, दे$_{1}$ कृताश्वो वरुणाश्वश्च, दे$_{9}$ कृताश्वोप्यरणाश्वश्च, दे$_{10}$ ऋताश्वो वरणाश्वश्च, ते$_{1}$ कृताश्वश्च रथाश्वश्च, द$_{1}$ म$_{1}$ रूपाश्वोधारुणाश्वस्य (म$_{1}$ °श्च), ग्र$_{2}$ रूपाश्वश्वोयारुणाश्व. –b) दे$_{4}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ संभवाश्वस्य, दे$_{8-10}$ न$_{1}$ मुवें. मुए. संहिताश्वश्च (न$_{1}$ मुवें. मुए. °स्य) (→संहताश्वस्य); ग्र$_{2}$ द्वौ (→वै). –c) का$_{1}$ युवनाशोरनाश्वस्य, ब$_{1}$ युवनाश्वो दशश्वस्य, ब$_{2.3}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ मुब. युवनाश्वोरुणाश्वस्य, दे$_{10}$ युवानाश्वो रणाश्वश्च, ते$_{1}$ युवनाश्वो वनाश्वश्च.–d) ब$_{1.2}$ न$_{1}$ ते$_{1}$ °पराक्रमः, दे$_{1}$ °वतो बुधः (→°बलो युधि).

**२३.** –a) ब$_{3}$ वारणीमिष्टिं, द$_{1}$ वारुणी मुष्टिं (→वारुणीमिष्टिं). –c) दे$_{6}$ स्वप्रतिमं, दे$_{10}$ त्वं प्रतिमं, द$_{1}$ त्वत्प्रतिमं (→त्वप्रतिमं); दे$_{5}$ पुत्रीं (→पुत्रं). –d) दे$_{3.6}$ विष्णुतीर्थ°, दे$_{4}$ विष्णुभक्ति°, दे$_{5}$ विष्णुकर्म° (→विष्णुभक्त°). –e) का$_{1}$ महाप्रज्ञं, ग्र$_{2}$ महात्मानं (→महाप्राज्ञं). –f ) का$_{1}$ दे$_{2.4.5}$ द$_{1}$ ग्र$_{1}$ मुवें. मुए. मुब. सर्वशास्त्र° (→सर्वशस्त्र°).

**२४.** –a) दे$_{10}$ पुत्र° (→पुरु°). –c) दे$_{1.5.8-10}$ मुचु (दे$_{5.10}$ °च) कुन्दस्तु (→मुचुकुन्दश्च); दे$_{2}$ धर्मात्मा, द$_{1}$ ग्र$_{1}$ म$_{1}$ वीर्यात्मा (→पुण्यात्मा). –d) दे$_{3}$ °समायुधि, दे$_{5}$ °समोयुधि, दे$_{10}$ °समायुधीः, ग्र$_{2}$ °बलायुधि (→°समा युधि).

**२५.** –a) दे$_{10}$ च (→-स्य). –b) दे$_{4}$ °वरः (→°परः); दे$_{6}$ न$_{1}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ परस्मृतः (→परः स्मृतः); ग्र$_{1}$ युवानश्वः पुरस्मृतः. –c) ब$_{1}$ हरिते (→हरितो). –d) ब$_{1.2}$ दे$_{2}$ न$_{1}$ ते$_{1}$ द$_{1}$ ग्र$_{1}$ म$_{1}$ हारीतस्तत्, दे$_{1.4}$ हारीतस्य, दे$_{5}$ हरितस् (→हारितस्).

**२६.** दे$_{4.5}$ द$_{1}$.⊙ (द. सं.).–b) ब$_{2}$ °बलः(→°यशाः). –c) ग्र$_{2}$ समुद्भूतः (→समुत्पन्नः). –d) का$_{1}$ सस्मृतिस्तत्, ग्र$_{2}$ सम्भूतिस्तु (→सम्भूतिस्तत्-); दे$_{8-10}$ मुवें. मुए. मुब. सुतः स्मृतः (→ सुतोऽभवत्).

**२७.** –a) ब$_{3}$ दे$_{1.8.9}$ ग्र$_{1}$ विष्णुवृद्ध-, दे$_{4}$ विष्णुवद्धः, ते$_{1}$ विष्णुवृन्दस्, द$_{1}$ विष्णुविद्धस् (→विष्णुवृद्धः); ग्र$_{2}$ तस्मात् (→तस्य). –b) ब$_{3}$ त्वनारण्यो, दे$_{3}$ श्वनरण्यो, दे$_{4}$ ह्यनरण्यो, ते$_{1}$ ग्र$_{2}$ म$_{1}$ श्रनरण्यो (→त्वनरण्यो); ब$_{2}$ ते$_{1}$ ग्र$_{2}$ सुतः, ब$_{3}$ पुनः, दे$_{1.2.4.8-10}$ मुवें. मुए. मुब. ततः, द$_{1}$ पुरः (→परः). –c) का$_{1}$ ब$_{1}$ दे$_{4.5}$ न$_{1}$ ते$_{1}$ द$_{1}$ पृषदश्वो, दे$_{6}$ ग्र$_{1.2}$ म$_{1}$ वृषदश्वो (दे$_{6}$ °स्यो) (→बृहदश्वो); न$_{1}$ °ण्यश्चा (→°ण्यस्य); दे$_{3}$ पृषदश्वोनरण्यश्च. –d) दे$_{4}$ हरिदश्वसुतोऽभवत्, दे$_{5}$ हर्यश्वस्त्वसुतोभवत्.

सोऽतीव धार्मिको राजा कर्दमस्य प्रजापतेः ।
प्रसादाद्धार्मिकं पुत्रं लेभे सूर्यपरायणम् ।।२८
स तु सूर्यं समभ्यर्च्य राजा वसुमनाः शुभम् ।
लेभे त्वप्रतिमं पुत्रं त्रिधन्वानमरिंदमम् ।।२९
अयजच्चाश्वमेधेन शत्रून् जित्वा द्विजोत्तमाः ।
स्वाध्यायवान् दानशीलस्तितिक्षुर्धर्मतत्परः ।।३०
ऋषयस्तु समाजग्मुर्यज्ञवाटं महात्मनः ।
वसिष्ठकश्यपमुखा देवाश्चेन्द्रपुरोगमाः ।।३१
तान् प्रणम्य महाराजः पप्रच्छ विनयान्वितः ।
समाप्य विधिवद् यज्ञं वसिष्ठादीन् द्विजोत्तमान् ।।३२

वसुमना उवाच ।❀
किंस्विच्छ्रेयस्करतरं लोकेऽस्मिन् ब्राह्मणर्षभाः ।
यज्ञस्तपो वा संन्यासो ब्रूत मे सर्ववेदिनः ।।३३

वसिष्ठ उवाच ।❀
अधीत्य वेदान् विधिवत् पुत्रानुत्पाद्य धर्मतः ।
इष्ट्वा यज्ञेश्वरं यज्ञैर् गच्छेद् वनमथात्मवान् ।।३४

पुलस्त्य उवाच ।❀
आराध्य तपसा देवं योगिनं परमेष्ठिनम् ।
प्रव्रजेद् विधिवद् यज्ञैरिष्ट्वा पूर्वं सुरोत्तमान् ।।३५

पुलह उवाच ।❀
यमाहुरेकं पुरुषं पुराणं परमेश्वरम् ।　　वें.१.२०.३७

---

२८. –a) दे$_{1}$ साऽतीव (→सोऽतीव). –b) न$_{1}$ गालवस्य महामुनेः. –c) न$_{1}$ धार्मिकः (→धार्मिकं); ब$_{3}$ राजा (→पुत्रं). –d) दे$_{4}$ वसु° (→सूर्य°); न$_{1}$ °यणः (→°यणं).

अतः परं न$_{1}$ पुस्तके अधिकम्—

17. * ययातेरात्मजायां तु माधव्यां वै महाबलं ।

२९. –a) दे$_{4}$ स च, द$_{1}$ ग्र$_{1.2}$ म$_{1}$ सकृत् (→स तु ). –b) ग्र$_{1}$ राज्ञा (→राजा); ब$_{1.3}$ °मनाशुभम (ब$_{2}$ °भः), दे$_{1.4}$ °मनः (दे$_{4}$ °तो) सुतं, दे$_{10}$ °तनाः शुभं, ग्र$_{2}$ °मनं शुभं(→°मनाः शुभम्). –c) ग्र$_{1}$ लेभे त्वत्प्रतिमं, ग्र$_{2}$ लभताप्रतिमं (→लेभे त्वप्रतिमं). –d) द$_{1}$ सुधन्वा° (→त्रिधन्वा°).

३०. –a) दे$_{1}$ अजयत्सोश्वमेधेन, दे$_{3.4}$ अजया(दे$_{4}$ °य) च्चाश्वमेधेन, दे$_{5.6.10}$ अयजश्चा(दे$_{5}$ °द्या)श्वमेधेन, ते$_{1}$ य इष्ट्वा वाजिमेधेन, म$_{1}$ सोयजच्चाश्वमेधेन. –b) का$_{1}$ ब$_{2}$ दे$_{3.5.6}$ शक्रं (→शत्रून्). –c) न$_{1}$ द$_{1}$ ग्र$_{1.2}$ धर्मशीलः (न$_{1}$ °लाः) (→दानशीलस्). –d) दे$_{1}$ तितीर्षा, दे$_{2.8-10}$ ग्र$_{2}$ मुवें. मुए. तितीर्षुर्, न$_{1}$ ततक्षुर् (→तितिक्षुर्).

३१. –a) ब$_{1-3}$ दे$_{2-6}$ ते$_{1}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ ऋषयश्च (→ऋषयस्तु). –c) ब$_{1}$ दे$_{1.6.9.10}$ वशिष्ठ- (वसिष्ठ-); न$_{1}$ ग्र$_{1.2}$ म$_{1}$-काश्यप° (→-कश्यप°); न$_{1}$ वासिष्ठाः कश्यपमुखाः. –d) ब$_{3}$ दे$_{10}$ देवाश्चन्द्र°, दे$_{3}$ देवाश्चैन्द्र°, ग्र$_{1.2}$ म$_{1}$ देवास्सेन्द्र° (ग्र$_{1}$ °न्द्राः) (→देवाश्चेन्द्र°).

३२. –a) ग्र$_{1}$ महाराजा (→महाराजः). –b) दे$_{10}$ पपृच्छ (→पप्रच्छ). –d) ब$_{1.3}$ दे$_{3.5.6}$ वसिष्ठादि- (→वसिष्ठादीन्); दे$_{5}$ द्विजोत्तमा (→द्विजोत्तमान्).

❀ दे$_{1}$ व* म* उ*च; दे$_{3}$ वसुमना उ.; दे$_{10}$ न$_{1}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ वसुमनाः; ते$_{1}$ राजा.

३३. –a) का$_{1}$ ब$_{2}$ दे$_{1}$ ते$_{1}$ किंचित्, ब$_{1.3}$ किन्तत्, दे$_{8-10}$ मुवें. मुए. मुब. किं हि, ग्र$_{2}$ किंसेत् (→किंस्वित्); दे$_{2}$ श्रेयस्करो लोके, दे$_{4}$ श्रेयस्तुरतमं, ग्र$_{2}$ श्रेयस्करं** (→श्रेयस्करतरं); का$_{1}$ ब$_{2.3}$ दे$_{1.3.5.6}$ न$_{1}$ ते$_{1}$ द$_{1}$ ग्र$_{1}$ म$_{1}$ °तमं (→°तरं). –b) न$_{1}$ ब्राह्मणोत्तमाः (→ब्राह्मणर्षभाः); का$_{1}$ लोकेऽस्मिन् ब्रह्मर्षभ, दे$_{2}$ किंस्विद् बाह्मणपुङ्गवाः. –c) दे$_{8-10}$ यज्ञास्तपो, ते$_{1}$**** (→यज्ञस्तपो). –d) दे$_{4}$ ध्रुवं, ते$_{1}$ ब्रूहि (→ब्रूत). ते$_{1}$ सर्व**नः (→सर्ववेदिनः); ग्र$_{2}$ ब्रुवत मे सर्ववेदिनः.

❀ ब$_{2.3}$ वशिष्ठ उवाच; दे$_{3.8.9}$ वसि(दे$_{3}$-शि)ष्ठ उ.; न$_{1}$ वसिष्ठाः; ते$_{1}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ वसिष्ठः.

३४. दे$_{5}$. bcd ⊙. –a) म$_{1}$ अधीत्य विधिवद्वेदान्. –b) दे$_{1.2.10}$ पुत्रांश्चो°, दे$_{8.9}$ मुवें. मुए. मुब. सुतांश्चो° (→पुत्रानु°); दे$_{1.8-10}$ ग्र$_{2}$ मुवें. मुए. मुब. यत्नतः (→धर्मतः). –c) का$_{1}$ यज्ञे (→यज्ञैर्). –d) ते$_{1}$ अथापि वा (→अथात्मवान्); दे$_{4}$ गच्छेत वनमात्मवान्, म$_{1}$ गच्छेद्वनमवाप्तवान्, + इष्ट्वा पूर्वं सुरोत्तमान्.

❀ म$_{1}$. ⊙; दे$_{1}$ पुलह उवाच; दे$_{8.9}$ पुलस्त्य उ.; न$_{1}$ ते$_{1}$ द$_{1}$ ग्र$_{1}$ पुलस्त्यः; ग्र$_{2}$ पुलत्यः.

३५. म$_{1}$. ⊙. –a) दे$_{10}$ त*सा (→तपसा). –b) दे$_{1.8-10}$ मुवें. मुए. मुब. परमेश्वरं (→परमेष्ठिनम्); दे$_{5}$ योवगिरं परमेष्ठिनं, द$_{1}$ ग्र$_{1.2}$ योगि(ग्र$_{1}$°गी)नां प्रवरंवरं. –c) ब$_{2}$ विविधैर्, दे$_{1}$ विव* (→विधिवद्). –d) दे$_{3}$ इष्ट्वो (→इष्ट्वा); का$_{1}$ तत्र, दे$_{4}$ पूर्त्तं, दे$_{10}$ सूर्यं (→पूर्वं).

❀ दे$_{1.6}$ मुब. पुलस्त्य उवाच; दे$_{8.9}$ पुलह उ.; न$_{1}$ ते$_{1}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ पुलहः.

३६. –a) दे$_{1}$ यमाररेकं, दे$_{4}$ यमाहुरेवं, द$_{1}$ यमाहुमेकं, म$_{1}$ यमाहु एवं (→यमाहुरेकं); –b) ते$_{1}$ पूषणं

वें. १.२०.३७ तमाराध्य सहस्रांशुं तपसा मोक्षमाप्नुयात् ॥३६

जमदग्निरुवाच ॥❀

अजस्य नाभावध्येकमीश्वरेण समर्पितं ।
बीजं भगवता येन स देवस्तपसेज्यते ॥३७

विश्वामित्र उवाच ॥❀

योऽग्निः सर्वात्मकोऽनन्तः स्वयंभूर्विश्वतोमुखः ।
स रुद्रस्तपसोग्रेण पूज्यते नेतरैर्मखैः ॥३८

भरद्वाज उवाच ॥❀

यो यज्ञैरिज्यते देवो जातवेदाः सनातनः ।
स सर्वदैवततनुः पूज्यते तपसेश्वरः ॥३९

अत्रिरुवाच ॥❀

यतः सर्वमिदं जातं यस्यापत्यं प्रजापतिः ।
तपः सुमहदास्थाय पूज्यते स महेश्वरः ॥४०

गौतम उवाच ॥❀

यतः प्रधानपुरुषौ यस्य शक्तिमयं जगत् ।
स देवदेवस्तपसा पूजनीयः सनातनः ॥४१

कश्यप उवाच ॥❀

सहस्रनयनो देवः साक्षी स तु प्रजापतिः ।
प्रसीदति महायोगी पूजितस्तपसा परः ॥४२

---

(→पुराणं); दे$_{1}$ पुरुषोत्तमं, दे$_{2}$ शाश्वतं प्रभुं, दे$_{4}$ ग्र$_{2}$ पुरुषेश्वरं (→परमेश्वरम् ). –c) दे$_{3}$ तामाराध्य (→तमाराध्य); का$_{1}$ सहस्रांश्च (घ्रि), दे$_{1}$ महाशंभुं, दे$_{3}$ सहस्रान्द्यु (→सहस्रांशुम). –d) ब$_{1}$ दे$_{3.4.6}$ ते$_{1}$ ग्र$_{1.2}$ म$_{1}$ तापसो, दे$_{8\text{-}10}$ न$_{1}$ मुवें. मुए. मुब. तपसो (→तपसा); ब$_{2}$ लभते शुभं, दे$_{1}$ मोक्षमवाप्नुयात्, द$_{1}$ ग्र$_{1.2}$ म$_{1}$ योगमाप्नुयात् (→मोक्षमाप्नुयात्).

❀ ब$_{1}$दे$_{1.6}$ यमदग्निरुवाच; ब$_{3}$ दे$_{3}$ जामदग्नि (दे$_{3}$ °ग्न्य) रुवाच; दे$_{8.9}$ जमदग्निरु.; दे$_{10}$ जमदग्नि उवाच; न$_{1}$ ते$_{1}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ जमदग्निः.

३७. –a) ब$_{1.2}$ °भवद्वैकम् , दे$_{3.6}$ °भा(दे$_{6}$ °भ)रतद्वैकम्, दे$_{4}$ °मावप्येकम् (→°भावध्येकम्); दे$_{1}$ अज्ञस्य नाभौ मध्येकम्. –ab) दे$_{8\text{-}10}$ मुवें. मुए. मुब. अजो विश्वस्य कर्त्तायो जगद्वीजं सनातनः . –c) दे$_{4}$ द$_{1}$ ग्र$_{1.2}$ बीजं संयम्य (दे$_{4}$ स येन) विश्वस्य, दे$_{8\text{-}10}$ मुवें. मुए. मुब. अन्तर्यामी च भूतानां. –d) दे$_{1}$ देव*, ते$_{1}$ (त) स देवस् (→स देवस् ); ब$_{1}$ °सेज्यते,+ °सेत्यजे (→°सेज्यते); दे$_{4}$ द$_{1}$ म$_{1}$ भगवांस्तपसेष्य (दे$_{4}$ °ज्य) ते, ग्र$_{1}$ भगवांस्तपसेक्ष्यते, ग्र$_{2}$ भगवान् तोषयिष्यसि.

❀ दे$_{8.9}$ विश्वामित्र उ.; न$_{1}$ ते$_{1}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ विश्वामित्रः.

३८. दे$_{4.10}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$. ३८d–४०c ⊙ (द. सं.). –a) दे$_{1}$ योनिः (→योऽग्निः); ग्र$_{2}$ सर्वात्मगो (→सर्वात्मको); दे$_{4}$ सर्वात्मको यतोऽनन्तः . –c) न$_{1}$ सा (→स); दे$_{4}$ ततः स मद्दशं स्थाप्य, द$_{1}$ ग्र$_{1.2}$ म$_{1}$ तपस्सु महदास्थाय. –d) ते$_{1}$ चैतरैर्मखैः (→नेतरैर्मखैः).

❀ दे$_{4.10}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$. ⊙ (द्र. ३८ पा. वि.); दे$_{3.8\text{-}10}$ भरद्वाज उ.; न$_{1}$ भारद्वाजः; ते$_{1}$ भरद्वाजः.

३९. दे$_{4.10}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$. ⊙ (द्र. ३८ पा. वि.). –a) दे$_{1}$ देवैः (→देवो). –b) दे$_{1.8.9}$ मुवें. मुए. मुब. वासुदेवः (→जातवेदाः). –c) दे$_{1}$ स सदा दैवततनुः . –d) दे$_{2}$ इज्यते, दे$_{6}$ (स) पूज्यते (→पूज्यते); ब$_{1.2}$ दे$_{3.6.8.9}$ मुवें. मुए. मुब. परमेश्वरः (→तपसेश्वरः).

❀ दे$_{4.10}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$. ⊙ (द्र. ३८ पा. वि.); दे$_{8.9}$ अत्रिरु.; न$_{1}$ ते$_{1}$ अत्रिः.

४०. दे$_{4.10}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$. abc ⊙ (द्र. ३८ पा. वि.). –b) ब$_{2}$ प्रजापतेः (→प्रजापतिः). –c) का$_{1}$ तपस्तु (→तपः सु-). –d) ते$_{1}$ प्रोच्यते (→पूज्यते); दे$_{2.10}$ ग्र$_{2}$ परमेश्वरः, न$_{1}$ सुमहेश्वरः (→स महेश्वरः).

❀ दे$_{1.8\text{-}10}$. ⊙; न$_{1}$ ते$_{1}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ गौतमः.

४१. –a) दे$_{5}$ यत्ता (→यतः); ब$_{3}$ दे$_{1.6.10}$ न$_{1}$ ते$_{1}$ द$_{1}$ ग्र$_{1.2}$ पुरुषो (न$_{1}$ °षोर्) (→पुरुषौ). –b) दे$_{8\text{-}10}$ मुवें. मुए. मुब. शक्तिरिदं, ते$_{1}$ शाक्तमिदं (→शक्तिमयं). –d) दे$_{5}$ प्रयत्नतः (→सनातनः). –cd) न$_{1}$ सदेवस्तपसापूज(?)देवदेवो महेश्वरः.

❀ ब$_{1.3}$ दे$_{6}$ काश्यप उवाच; दे$_{3}$ काश्यप उ.; दे$_{8\text{-}10}$ कश्यप उ.; न$_{1}$ म$_{1}$ ग्र$_{1}$ काश्यपः; ते$_{1}$ द$_{1}$ ग्र$_{2}$ कश्यपः.

४२. –b) ब$_{1}$ दे$_{1.2.4.8\text{-}10}$ न$_{1}$ ते$_{1}$ ग्र$_{1.2}$ म$_{1}$ मुवें. मुए. मुब. साक्षी (न$_{1}$ क्षिः) शंभुः, दे$_{6}$ साक्षी मनु-, द$_{1}$ साक्षाछंभुः (→साक्षी स तु); दे$_{1}$ सनातनः, दे$_{5}$ धरांपतिः (→प्रजापतिः). –c) दे$_{10}$ प्रसीद स, म$_{1}$ प्रसीदतु (→प्रसीदति); ते$_{1}$ सदायोगी (→महायोगी). –d) दे$_{8\text{-}10}$ पूज्यते (→पूजितस्); दे$_{4}$ तापसा (→तपसा); ते$_{1}$ वरः (→परः); दे$_{5}$ पूजित स्तूय सा परः.

क्रतुरुवाच ।※
प्राप्ताध्ययनयज्ञस्य लब्धपुत्रस्य चैव हि ।
नान्तरेण तपः कश्चिद्धर्मः शास्त्रेषु दृश्यते ।।४३
इत्याकर्ण्य स राजर्षिस्तान् प्रणम्यातिहृष्टधीः ।
विसर्जयित्वा संपूज्य त्रिधन्वानमथाब्रवीत् ।।४४
आराधयिष्ये तपसा देवमेकाक्षराह्वयम् ।
प्राणं बृहन्तं पुरुषमादित्यान्तरसंस्थितम् ।।४५
त्वं तु धर्मरतो नित्यं पालयैतदतन्द्रितः ।
चातुर्वर्ण्यसमायुक्तमशेषं क्षितिमण्डलम् ।।४६
एवमुक्त्वा स तद्राज्यं निधायात्मभवे नृपः ।
जगामारण्यमनघस्तपश्चर्तुमनुत्तमम् ।।४७
हिमवच्छिखरे रम्ये देवदारुवने शुभे ।
कन्दमूलफलाहारो मुन्यन्नैरयजत् सुरान् ।।४८
संवत्सरशतं साग्रं तपोनिर्द्धूतकल्मषः ।
जजाप मनसा देवीं सावित्रीं वेदमातरम् ।।४९
तस्यैवं जपतो देवः स्वयंभूः परमेश्वरः ।
हिरण्यगर्भो विश्वात्मा तं देशमगमत् स्वयम् ।।५०
दृष्ट्वा देवं समायान्तं ब्रह्माणं विश्वतोमुखम् ।
ननाम शिरसा तस्य पादयोर्नाम कीर्त्तयन् ।।५१
नमो देवाधिदेवाय ब्रह्मणे परमात्मने ।
हिरण्यमूर्त्तये तुभ्यं सहस्राक्षाय वेधसे ।।५२
नमो धात्रे विधात्रे च नमो वेदात्ममूर्त्तये ।
सांख्ययोगाधिगम्याय नमस्ते ज्ञानमूर्त्तये ।।५३
नमस्त्रिमूर्त्तये तुभ्यं स्रष्ट्रे सर्वार्थवेदिने ।
पुरुषाय पुराणाय योगिनां गुरवे नमः ।।५४ वे.१.२०.५५

※ दे4 ग्र1.2 म1. ⊙; दे8.9 क्रतुरु.; दे10 ऋतुरुवाच; न1 ते1 द1 क्रतुः.

४३. –a) का1 सत्या°, दे4 सप्त°, ग्र2 वृता° (→प्राप्ता°). –b) दे1 लब्धपत्रस्य, दे4 लब्धे पुत्रस्य (→लब्धपुत्रस्य). –c) ब2 द1 ग्र1 म1 किञ्चित् (→कश्चित्). –d) का1 ब1.2 दे2.4.10 न1 ते1 द1 ग्र1.2 म1 मुवें. मुए. मुब. धर्मशास्त्रेषु (द1 ग्र1.2 °ण) (→धर्मः शास्त्रेषु).

४४. –a) ग्र2 च (→स). –b) दे1 द1 प्रणम्याथ, ग्र2 प्रणामाय (→प्रणम्याति-).

४५. –b) ब1 एवाक्षराह्वयम्, ब2.3 एकक्षरा (ब3 °र) द्वयं, दे3.6 एवाक्षरज्ञयं, दे4 एकाक्षरस्वयं, दे1 एको हरिर्हयं, ग्र1.2 म1 एको हरान्वहं (ग्र2 °यं) (→एकाक्षराह्वयम्). –c) का1 प्राणां विहंतं, दे10 प्रणं विहंतं (→प्राणं बृहन्तं). –d) दे3.6 आदित्यान्तव संस्थितम्, दे4 आदित्यान्तरसंस्थिताम्.

४६. –a) का1 त्वं सु-, ब2 पूर्ण-, दे3.6 हंतु- दे4 त्वं च (→त्वं तु). –b) दे3 पानयैतद्, दे4 न1 पालयेतद्, ग्र2 पालयैतम्, म1 पालयैवम् (→पालयैतद्). –c) दे9.10 चातुर्वर्ण° (→चातुर्वर्ण्य°).

४७. –a) दे1.2 तु (→स). –b) दे1 विधायात्म° (→निधायात्म°); ब1.3 दे3 ग्र2 °भवेन्नृपः, दे6 °भवेनृप, ते1 ग्र2 °भुवे (ग्र2 °वो) नृपः (→°भवे नृपः). –c) दे3.6 °मनसस् (→°मनघस्). –d) दे1.8-10 मुवें. मुए. मुब. तपस्तप्तुं (→तपश्चर्तुं); ब1 तपश्चर्त्तुमनुत्तमं (मनोदधे).

४८. –b) दे8-10 मुवें. मुए. मुब. °वनाश्रये (→°वने शुभे); ब2 देवानां परमे शुभे. –c) मुवें. मुब. °फलाहारैर् (→°फलाहारो). –d) ब1***, दे4 उत्पन्नोर्, मुवें. मुए. मुब. उत्पन्नैर् (→मुन्यन्नैर्); दे4 अयजं, दे10 द1 अजयत् (→अयजत्) ब3 दे3.6 अन्यन्नैव (ब3 °रा) यजत् सुरान्.

४९. दे10. cd ⊙. –b) ब1 ततो निर्द्धूत°, द1 तपसा धूत° (→तपोनिर्द्धूत°); दे8-10 मुवें. मुए. मुब. °किल्विषः, ग्र1 °किल्विषाः (→°कल्मषः). –c) ब1 दे6 देवी (→देवीं). –d) ब1 दे6 सावित्री (→सावित्रीं); का1 ग्र2 देव° (→वेद°).

४९ श्लोकानन्तरं दे8.9 अधिकम्—

* संवत्सरशतं साग्रं तपोनिर्द्धूतकिल्विषः (= ४९ab)

५०. –a) का1 दे3 जयतो, दे8.9 मुवें. मुए. तपतो, दे10 पततो (→जपतो); न1 द1 ग्र1.2 म1 देव (→देवः). –c) ब1 भगवान्, + विश्वा.मा (→विश्वात्मा). –d) न1 तद्देशमुपजग्मिवान्.

५१. –a) दे3 समायुक्तं (→समायान्तं). –b) दे2 ब्रह्माणममितौजसं. –c) दे2.10 नमामि, दे3 प्रनाम, द1 ननामि (→ननाम). –d) दे1.3.6 कीर्त्तनं, दे10 ग्र1 कीर्त्तयत् (→कीर्त्तयन्).

५२. –a) का1 ब1 दे3.5.6 न1 ते1 द1 ग्र1.2 म1 देवादि° (→देवाधि°). –b) दे2 परमेष्ठिने (→परमात्मने).

५३. म1. cd ⊙. –a) दे3 धात्रै (→धात्रे). –b) का1 ब1.3 दे5.6.8.9 ते1 द1 ग्र1.2 म1 मुवें. मुए. मुब. देवात्म°, (→वेदात्म°). –c) दे1 °योगाय, ते1 °यो ग्व-, ग्र2 °योगादि- (→°योगाधि-).

५४. –b) का1 दे1 त्वष्ट्रे, दे4 स्रष्टे, दे10 सृष्टे (→स्रष्ट्रे); ब3 °सिद्धये (→°वेदिने).

वैं. १.२०.५६

ततः प्रसन्नो भगवान् विरिञ्चो विश्वभावनः ।
वरं वरय भद्रं ते वरदोऽस्मीत्यभाषत ॥५५

राजोवाच ।❀

जपेयं देवदेवेश गायत्रीं वेदमातरम् ।
भूयो वर्षशतं साग्रं तावदायुर्भवेन्मम ॥५६
बाढमित्याह विश्वात्मा समालोक्य नराधिपम् ।
स्पृष्ट्वा कराभ्यां सुप्रीतस्तत्रैवान्तरधीयत ॥५७
सोऽपि लब्धवरः श्रीमान् जजापातिप्रसन्नधीः ।
शान्तस्त्रिषवणस्नायी कन्दमूलफलाशनः ॥५८
तस्य पूर्णे वर्षशते भगवानुग्रदीधितिः ।
प्रादुरासीन्महायोगी भानोर्मण्डलमध्यतः ॥५९
तं दृष्ट्वा वेदविदुषं मण्डलस्थं सनातनम् ।
स्वयंभुवमनाद्यन्तं ब्रह्माणं विस्मयं गतः ॥६०
तुष्टाव वैदिकैर्मन्त्रैः सावित्र्या च विशेषतः ।
क्षणादपश्यत् पुरुषं तमेव परमेश्वरम् ॥६१
चतुर्मुखं जटामौलिमष्टहस्तं त्रिलोचनम् ।
चन्द्रावयवलक्ष्माणं नरनारीतनुं हरम् ॥६२
भासयन्तं जगत् कृत्स्नं नीलकण्ठं स्वरश्मिभिः ।
रक्ताम्बरधरं रक्तं रक्तमाल्यानुलेपनम् ॥६३
तद्भावभावितो दृष्ट्वा सद्भावेन परेण हि ।
ननाम शिरसा रुद्रं सावित्र्यानेन चैव हि ॥६४
नमस्ते नीलकण्ठाय भास्वते परमेष्ठिने ।
त्रयीमयाय रुद्राय कालरूपाय हेतवे ॥६५

---

५५. –a) दे$_{5}$ प्रद्युम्नो (→प्रसन्नो). –b) का$_{1}$ विरंचिर्, दे$_{1.8}$ ग्र$_{2}$ मुवें. विरिंचिर्, दे$_{2.6}$ विरंच्यो, दे$_{4}$ विरिंच्यो, दे$_{10}$ विरंचो (→विरिंचो). –c) ग्र$_{2}$ वरान् (→वरं). –d) दे$_{1}$ वरदोस्मात् प्रभाषते.

❀ दे$_{8-10}$ राजा उवाच; ते$_{1}$ राजा; द$_{1}$ ग्र$_{1.2}$ म$_{1}$ वसुमनाः.

५६. –a) का$_{1}$ दे$_{4}$ जपेहं (→जपेयं). –b) दे$_{1}$ गायत्री (→गायत्रीं). –c) ब$_{3}$ त्रयो (→भूयो). –d) म$_{1}$ यावत् (→तावत्); ब$_{1}$ भविष्यति, + भवेन्मम, दे$_{5}$ भवे मम, ग्र$_{2}$ हिते मम (→भवेन्मम).

५७. –a) ग्र$_{2}$ भगवान् (→विश्वात्मा). –b) ब$_{2}$ तमालोक्य, दे$_{6}$ समासो वा, ग्र$_{2}$ विश्वालोक्य (→समालोक्य). –c) दे$_{1}$ स्पृष्टा, द$_{1}$ सृष्ट्वा (→स्पृष्ट्वा). –cd) ग्र$_{2}$ स्पृष्ट्वा स्पृष्ट्वा कराभ्यां संप्रीतस्तैवान्तरधीयत.

५८. –a) दे$_{1}$ लध्वीवरः, ग्र$_{2}$ लब्ध्वावरं (→लब्धवरः). –d) दे$_{4}$ °फलाशनाः (→°फलाशनः).

५९. –a) न$_{1}$ °गते (→°शते); दे$_{4}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ पूर्णे वर्षशते तस्य, दे$_{10}$ तस्य पूर्णशते वर्षे. –d) न$_{1}$ भानुमण्डल° (→भानोर्मण्डल°); ब$_{2}$ दे$_{8-10}$ °मध्यगः (→°मध्यतः).

६०. –a) दे$_{4}$ द$_{1}$ ग्र$_{1}$ म$_{1}$ स, दे$_{6}$ ता (→तं); ब$_{1}$ दे$_{1.10}$ देववपुषं, ब$_{2}$ दे$_{4}$ न$_{1}$ वेदपुरुषं, दे$_{8.9}$ ते$_{1}$ मुवें. मुए. मुब. वेदवपुषं, द$_{1}$ ग्र$_{1}$ म$_{1}$ देवपुरुषं, ग्र$_{2}$ (स) देवं पुरुषं (→वेदविदुषं). –b) ग्र$_{1}$ मण्डलस्तं (→मण्डलस्थं). –c) दे$_{4}$ स्वायंभुवं, ग्र$_{2}$ स्ययंभुवां (→स्वयंभुवं); दे$_{6}$ अनात्यंतं, ग्र$_{1}$ अनाद्यान्तं (→अनाद्यन्तं). –d) ग्र$_{1}$ ब्रह्मणं (→ब्रह्माणं); ब$_{2}$ विश्वसङ्गतः (→विस्मयं गतः).

६१. –a) दे$_{3}$ तुष्ट्वा च (→तुष्टाव). –d) दे$_{10}$ पुरुषेश्वरं, ग्र$_{2}$ पुरुषोत्तरं (→परमेश्वरम्).

६२. –a) ब$_{1}$ दे$_{1}$ चतुर्मुख-, दे$_{4}$ चतुर्भुजं (→चतुर्मुखं). –c) ग्र$_{2}$ चन्द्रावतंस°, म$_{1}$ चन्द्रावलय° (→चन्द्रावयव°); दे$_{1}$ *द्रावयवलक्ष्माणां. –d) का$_{1}$ हरिं (→हरम्).

६३. –a) ब$_{1}$ मास*न्तं, दे$_{3}$ भावयन्तं (→भासयन्तं); दे$_{1}$ भासयं जगतं कृत्स्नं. –b) ग्र$_{2}$ म$_{1}$ नीलग्रीवं (→नीलकण्ठं); दे$_{3.6}$ म$_{1}$ सुरश्मिभिः, दे$_{4}$ वरस्मितिः (→स्वरश्मिभिः). –c) दे$_{1.2}$ देवं (→रक्तं); दे$_{4}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ रक्तांबरं रक्तमाल्यं. –d) दे$_{4.10}$ द$_{1}$ ग्र$_{1.2}$ रक्तगन्धा°, ते$_{1}$ रक्तमाला°, म$_{1}$ रक्तलेपा° (→रक्तमाल्या°).

६४. –a) ब$_{2}$ तद्भावभासितो, दे$_{1}$ तद्भावभावितं, दे$_{3}$ तद्भावनाचितं, दे$_{5}$ तदावभावितो (→तद्भावभावितो); दे$_{1}$ दृष्टा, म$_{1}$ दृष्ट्वा (→दृष्ट्वा). –b) दे$_{1}$ सद्भावे परमेण हि, दे$_{2}$ भावेन परमेण हि, दे$_{4}$ सद्भावं न परेन हि, –c) दे$_{1.3}$ नमाम (→ननाम). –d) दे$_{4}$ सावित्र्याख्येन, दे$_{6.8.9}$ मुवें. मुए. मुब. सावित्र्या तेन, द$_{1}$ सावित्र्यान्नेन, ग्र$_{1}$ म$_{1}$ सावित्र्यान्येन (→सावित्र्यानेन).

६५. –b) दे$_{1}$ शास्वते, दे$_{6}$ भास्वंत-, ग्र$_{2}$ वाससे (→भास्वते); म$_{1}$ परमेष्ठि ते (→परमेष्ठिने). –d) दे$_{1.2.10}$ न$_{1}$ °रुद्राय (→°रूपाय); ग्र$_{2}$ ते नमः (→हेतवे).

तदा प्राह महादेवो राजानं प्रीतमानसः ।
इमानि मे रहस्यानि नामानि शृणु चानघ ।।६६
सर्ववेदेषु गीतानि संसारशमनानि तु ।
नमस्कुरुष्व नृपते एभिर्मां सततं शुचिः ।।६७
अध्यायं शतरुद्रीयं यजुषां सारमुद्धृतम् ।
जपस्वानन्यचेतस्को मय्यासक्तमना नृप ।।६८
ब्रह्मचारी मिताहारो भस्मनिष्ठः समाहितः ।
जपेदामरणाद् रुद्रं स याति परमं पदम् ।।६९
इत्युक्त्वा भगवान् रुद्रो भक्तानुग्रहकाम्यया ।
पुनः संवत्सरशतं राज्ञे ह्यायुरकल्पयत् ।।७०
दत्त्वाऽस्मै तत् परं ज्ञानं वैराग्यं परमेश्वरः ।
क्षणादन्तर्दधे रुद्रस्तदद्भुतमिवाभवत् ।।७१
राजाऽपि तपसा रुद्रं जजापानन्यमानसः ।
भस्मच्छन्नस्त्रिषवणं स्नात्वा शान्तः समाहितः ।।७२
जपतस्तस्य नृपतेः पूर्णे वर्षशते पुनः ।
योगप्रवृत्तिरभवत् कालात् कालात्मकं परम् ।।७३
विवेश तद् वेदसारं स्थानं वै परमेष्ठिनः ।
भानोः स मण्डलं शुभ्रं ततो यातो महेश्वरम् ।।७४ वें.१.२०.७४

---

६६. –a) ग्र2 ततः (→तदा). –b) दे5 राजा न (→राजानं); ब1.3 दे3.6 ग्र2 प्रीतिमानसः, न1 प्रीतमानसं (→प्रीतमानसः). –c) म1 इदानीं (→इमानि). –d) का1 दे2.5 मेनघ (→चानघ).

६७. ग्र1. ab ⊙; दे5. ६७–६८ ⊙. –a) दे10 न1 °देवेषु (→°वेदेषु). –b) ब1 °गमनानि तु, दे4 °समनातिषु, द1 ग्र1 म1 °शमनानि च (→°शमनानि तु). –c) का1 ब1-3 दे2.4 न1 ते1 द1 ग्र1.2 म1 सततं (→नृपते); दे1 नमस्कुरुतः च्वशतशः(?), दे2 नमस्कृत्वा सुसननं (?), दे6 नमस्कृत्वा तु सततं. –d) का1 रविं, दे2 शुचिं, दे6 मुनिं (→शुचिः); दे1 एभिर्मा शतशं भुमिः (?), दे4 भक्तिमान्संनतः शुचिः, द1 एभिर्मा स नरं शुचिः, ग्र1.2 एभिर्मा सन्नतश्शुचिः, म1 एभिर्नामपदैश्शुभैः .

६८. दे5. ⊙ (द्र. ६७ पा. वि.). –a) दे8-10 मुवें. मुए. अधीष्व (→अध्यायं). –b) दे10 यजुषा (→यजुषां); ब2 उत्तमं, दे1 उद्धतां (→उद्धृतम्); म1 याजुषां सार (स)मुद्धृतं. –c) का1 ब1 दे8 जयस्वान° (→जपस्वान°); ब3 °चेतस्थो, दे10 °तेनस्थो (→°चेतस्को). –d) का1 मथाशक्त°, दे1 मध्याशक्त°, दे4 मयासक्त° (→मय्यासक्त°); ब2 द1 नृपः (→नृप).

६९. दे1. cd ⊙. –a) ग्र2 ब्रह्मचर्य- (→ब्रह्मचारी); दे8-10 मुवें. मुए. मुब. निराहारो (→मिताहारो). –b) ब1 भस्मान्निष्ठ, दे1 तस्मिन्निष्ठः, दे2 भस्मदिग्धा, दे3 भस्मालिप्तः, दे5 भस्मनि*, दे6 भस्मलिप्त- (→भस्मनिष्ठः). –c) दे4 आमरणादूर्ध्वं, न1 आमरणं रुद्रं (→आमरणाद्रुद्रं). –d) ब2 न1 ग्र2 परमां गतिं (→परमं पदम्).

७०. –a) दे1.3 इत्युक्ता (→इत्युक्त्वा). –b) ग्र2 म1 °कारकः (→°काम्यया). –d) दे1.2 ते1 राज्ञो (→राज्ञे); दे1 ह्यायुरुषस्य यत्, दे4 पुरमकल्पयत् , दे6 ह्यचरकल्पयत्, द1 ग्र1.2 म1 चायुरकल्पयत् (→ह्यायुरकल्पयत् ).

७१. ग्र1. ७१c–७३b ⊙. –a) का1 दे5 दत्वासौ, दे6 दत्वास्म, ग्र2 दत्वा च, म1 दत्वा यत् (→दत्त्वाऽस्मै); दे10 ग्र2 म1 परमं, द1 वत्सर-, ग्र2 वत्सरात् (→तत् परं). –b) न1 परमेश्वरं (→परमेश्वरः). –c) दे1 अन्तर्हितो (→अन्तर्दधे).

७२. ग्र1. ⊙ (द्र. ७१ पा. वि.). –a) का1 ब1 दे3.6 न1 ते1 तरसा (→तपसा). –b) ब3 जजापोनन्य°, ग्र2 म1 ययाजानन्य° (→जजापानन्य°). –c) ब3 दे2 न1 भस्माच्छन्नस् (→भस्मच्छन्नस् ); दे1.6 त्रिषवनं, दे5 त्रिवर्णं, द1 त्रिषवणः (→त्रिषवणं). –d) दे2 चान्तः, ते1 चैव (→शान्तः).

७३. ग्र1. ab ⊙ (द्र. ७१ पा. वि.); का1 ७३c–७४d ⊙. –a) दे4.8.9 नृपते (→नृपतेः). –b) म1 पूर्णं (→पूर्णे); का1 वर्षे शते, दे10 म1 वर्षशतं (→वर्षशते); ग्र2 भवत्, म1 तथा (→पुनः). –c) दे1 °प्रभृत्तिर् (→°प्रवृत्तिर् ). –d) ब3 कालात् कालात् स्वकं परं, दे1 कालात्कालसकं परं, दे2.3.6 कालात्कालात्मकं पदं (दे3.6 °रः), दे4 कालात्कालात्मनः परं, दे8.9 कालात्कालात् परं पदम् , द1 ग्र1.2 म1 कालात्मा आत्मनः परं, मुवें. मुए. मुब. कालात् कालपरं पदम्.

७४. का1. ⊙ (द्र. ७३ पा. वि.). –a) ब2.3 विवेद-तद्, दे1.8-10 न1 मुवें. मुए. मुब. विवेशैतद् , दे4 द1 ग्र1.2 म1 विवेश तं (→विवेश तद् ). –c) ब3 दे1 न1 मुवें. मुए. भानोः सुमण्डलं शुभ्रं, दे2.6 द1 ग्र1.2 म1 भानोस्तु मण्डलं शुभ्रं (दे2 म1 °द्धं), दे3 तावोसुमण्डलं शुभ्रं, दे4 भानोस्तु मण्डलशुभं, दे5 भानोस्वमण्डलं शुभ्रं. –d) दे4 धाता, दे6 जातो, ते1 यातं (→यातो); ब3 दे2.5 न1 महेश्वरः (→महेश्वरम्); दे1 ततो माहेश्वरं पदं.

वें.१.२०.७५ यः पठेच्छृणुयाद् वापि राज्ञश्चरितमुत्तमम् । सर्वपापविनिर्मुक्तो ब्रह्मलोके महीयते ॥७५

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायां पूर्वविभागे एकोनविंशोऽध्यायः ॥१९॥

# २०

सूत उवाच ।❀

त्रिधन्वा राजपुत्रस्तु धर्मेणापालयन्महीम् ।
तस्य पुत्रोऽभवद् विद्वांस्त्रय्यारुण इति स्मृतः ॥१
तस्य सत्यव्रतो नाम कुमारोऽभून्महाबलः ।
भार्या सत्यधना नाम हरिश्चन्द्रमजीजनत् ॥२
हरिश्चन्द्रस्य पुत्रोऽभूद् रोहितो नाम वीर्यवान् ।
हरितो रोहितस्याथ धुन्धुस्तस्य सुतोऽभवत् ॥३
विजयश्च सुदेवश्च धुन्धुपुत्रौ बभूवतुः ।
विजयस्याभवत् पुत्रः कारुको नाम वीर्यवान् ॥४
कारुकस्य वृकः पुत्रस्तस्माद् बाहुरजायत ।
सगरस्तस्य पुत्रोऽभूद् राजा परमधार्मिकः ॥५

---

७५. –a) दे$_{3}$ एवे (→पठेत्). –b) म$_{1}$ चारित्रं (→चरितं).

**पुष्पिका—**

**पुराणनाम**—का$_{1}$ दे$_{1.4.5.8-10}$ द$_{1}$ ग्र$_{1.2}$ मुवें. मुए. इति श्रीकूर्मपुराणे, ब$_{1}$ इति कौर्मे, ब$_{2.3}$ दे$_{2.3.6}$ म$_{1}$ इति कूर्मपुराणे, न$_{1}$ इति श्रीकौर्मे, ते$_{1}$ इत्यादिमहापुराणे श्रीकौर्मे, मुब. इति श्रीकौर्मे महापुराणे पूर्वभागे. **अध्यायनाम**—ब$_{1.2}$ दे$_{4}$ न$_{1}$ ते$_{1}$ म$_{1}$. ⊙; का$_{1}$ वंशानुकीर्तने, ब$_{3}$ दे$_{1.3.5.6}$ राजवंशानुकीर्तने (दे$_{6}$ °नं), दे$_{2}$ राजवंशकीर्तनं नाम, दे$_{8-10}$ मुवें. मुए. मुब. राजवंशकीर्त्तने, द$_{1}$ ग्र$_{1}$ इक्ष्वाकुवंशानुकीर्त्तने, ग्र$_{2}$ इक्ष्वाकुवंशकीर्त्तने. **अध्यायसंख्या**—दे$_{2.6}$. ⊙; का$_{1}$ ब$_{1.3}$ दे$_{3-5}$ न$_{1}$ ते$_{1}$ अष्टादशोऽध्यायः, ब$_{2}$ ॥१८॥, दे$_{1}$ मुवें. मुब. विंशोऽध्यायः ॥२०॥, दे$_{8.9}$ विंशतितमोऽध्यायः, दे$_{10}$ विंशतिमोऽध्यायः ॥२०॥ श्रीसीतारामचन्द्राय नमः ॥ भग्नपृष्टकटिग्रीवस्तब्धदृष्टिरधोमुखः ॥ कष्टेन लिखितं ग्रन्थो यत्नेन परिपालयेत् ॥ श्रीराम श्रीराम श्रीराम ॥, द$_{1}$ ग्र$_{1}$ एकोनविंशोऽध्यायः, ग्र$_{2}$ म$_{1}$ मुए. विंशोऽध्यायः .

## २०

[ अध्यायारम्भे दे$_{10}$ पुस्तके अधिकम्—'श्रीगणेशाय नमः']

❀ दे$_{8.9}$ सूत उ.; न$_{1}$ ग्र$_{1}$ सूतः; ते$_{1}$ श्रीशिवः, + सूतः; द$_{1}$ श्रीसूत उवाच; ग्र$_{2}$ म$_{1}$ श्रीसूतः.

१. दे$_{4}$. ⊙. –a) ग्र$_{1.2}$ त्रिधन्व(?) (→त्रिधन्वा); ग्र$_{2}$ -पुत्रोऽथ (→-पुत्रस्तु). –b) ब$_{3}$ प्रजां (→महीम्). –c) का$_{1}$ विप्रः, न$_{1}$ वीरः, ते$_{1}$ धीमान् (→विद्वांस्). –d) दे$_{3.6}$ ते$_{1}$ द$_{1}$ त्रैया° (द$_{1}$ °र्या), न$_{1}$ ग्र$_{1}$ सूर्या° (→त्रय्या°); ब$_{1}$ दे$_{1.8.9}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ मुवें. मुए. मुब. श्रुतः, ब$_{3}$ स्मृतिः, दे$_{6}$ स्मृताः, दे$_{10}$ श्रुतिः (→स्मृतः).

२. –a) द$_{1}$ ग्र$_{1.2}$ म$_{1}$ सत्यधनो (→सत्यव्रतो); म$_{1}$ नाम्ना (→नाम). –c) दे$_{1}$ सत्यवरा, दे$_{2}$ सत्यव्रता, दे$_{4}$ सत्यवती (→सत्यधना); द$_{1}$ ग्र$_{1.2}$ भार्या सत्यधनस्यापि, म$_{1}$ भार्या सत्यधनश्चापि.

३. दे$_{8-10}$ द$_{1}$ मुए. ३c–४d ⊙ (द्र. सं.). –b) दे$_{5}$ नति, ग्र$_{2}$ मनु (→नाम); म$_{1}$ रोहिताश्वो महाबलः. –c) ब$_{1}$ दे$_{1}$ न$_{1}$ ते$_{1}$ ग्र$_{2}$ रोहितो, दे$_{4}$ ग्र$_{1}$ लोहितो (→हरितो); ग्र$_{2}$ लोहितस्य (→रोहितस्य); म$_{1}$ रोहितो रोहिताश्वस्य. –d) का$_{1}$ बंधुः, दे$_{2}$**, दे$_{3}$ पुत्रं, दे$_{5}$ धनः (→धुन्धुः); ग्र$_{2}$ तस्या (→तस्य).

दे$_{8-10}$ द$_{1}$ मुवें. मुए. पुस्तकेषु b अनन्तरमधिकम्—

* रोहितस्य वृकः पुत्रस्तस्माद्बाहुरजायत । (=५ ab) [ –1). दे$_{8-10}$ द$_{1}$ कु(द$_{1}$ का)रुकस्य (→रोहितस्य). ]

४. दे$_{8-10}$ द$_{1}$ मुए. ⊙(द्र. ३ पा. वि.). –a) ब$_{1}$ सुदेयश् (→सुदेवश्). –b) का$_{1}$ बन्धु-, दे$_{4}$ द्वंदुः (→धुन्धु-). –d) का$_{1}$ कारुको, + बाहुको, दे$_{1}$ कुरुको, दे$_{4}$ कारुषो (→कारुको); ते$_{1}$ कारुकस्सुमहायशाः.

५. दे$_{8-10}$ द$_{1}$ मुवें. मुए. ab चरणौ पूर्वमेवागतौ. –a) दे$_{1}$ कुरुकस्य, दे$_{4}$ कारुणस्य (→कारुकस्य). –b दे$_{1}$ तस्मिन् (→तस्माद्); ते$_{1}$ तु जारीवान् (?) (→अजायत). –d) दे$_{5}$ °धार्मिकाः (→°धार्मिकः).

द्वे भार्ये सगरस्यापि प्रभा भानुमती तथा ।
ताभ्यामाराधितः प्रादादौर्वाग्निर्वरमुत्तमम् ॥६
एकं भानुमती पुत्रमगृह्णादसमञ्जसम् ।
प्रभा षष्टिसहस्रं तु पुत्राणां जगृहे शुभा ॥७
असमञ्जस्य तनयो ह्यंशुमान् नाम पार्थिवः ।
तस्य पुत्रो दिलीपस्तु दिलीपात् तु भगीरथः ॥८
येन भागीरथी गङ्गा तपः कृत्वाऽवतारिता ।
प्रसादाद् देवदेवस्य महादेवस्य धीमतः ॥९
भगीरथस्य तपसा देवः प्रीतमना हरः ।
बभार शिरसा गङ्गां सोमान्ते सोमभूषणः ॥१०
भगीरथसुतश्चापि श्रुतो नाम बभूव ह ।
नाभागस्तस्य दायादः सिन्धुद्वीपस्ततोऽभवत् ॥११
अयुतायुः सुतस्तस्य ऋतुपर्णस्तु तत्सुतः ।
ऋतुपर्णस्य पुत्रोऽभूत् सुदासो नाम धार्मिकः ।
सौदासस्तस्य तनयः ख्यातः कल्माषपादकः ॥१२
वसिष्ठस्तु महातेजाः क्षेत्रे कल्माषपादके ।
अश्मकं जनयामास तमिक्ष्वाकुकुलध्वजम् ॥१३
अश्मकस्योत्कलायां तु नकुलो नाम पार्थिवः ।
स हि रामभयाद् राजा वनं प्राप सुदुःखितः ॥१४  वें. १.२१.१३

६. –a) न$_1$ द्वौ (?) (→द्वे); ग्र$_2$ भार्या (→भार्ये); दे$_4$ सगरस्यास्त्वं, ते$_1$ द$_1$ ग्र$_{1.2}$ म$_1$ सगरस्यास्तां (→सगरस्यापि). –b) ग्र$_2$ शुभा (→तथा). –c) दे$_{8-10}$ मुवें. मुए. मुब. वह्निः (→प्रादाद्). –d) ब$_1$ औ**, ब$_{2.3}$ दे$_{2.3.5}$ और्वोग्निः, दे$_1$ पुराग्निः, दे$_{8-10}$ स ददौ, मुवें. मुए. मुब. प्रददौ (→और्वाग्निः); दे$_4$ और्वः परमधर्मवित्, द$_1$ ग्र$_{1.2}$ म$_1$ और्वः परमवीर्यवान्.

७. दे$_2$. ७a 'एकं' इत्यारभ्य ३६ c 'आन' यावत् खण्डितम्. –a) दे$_3$ एका (→एकं); द$_1$ पुत्राद् (→पुत्रम्). –c) दे$_{10}$ वृष्टि° (→षष्टि°); दे$_1$ न$_1$ °सहस्राणां (न$_1$ °णि), द$_1$ °सहस्रस्तु (→°सहस्रं तु ). –d) दे$_4$ पुत्रास्तां, द$_1$ ग्र$_1$ पुत्रांस्तान् (→पुत्राणां); दे$_4$ शुभाः, द$_1$ ग्र$_1$ शुभान्, ग्र$_2$ शुभं, म$_1$ शुभं,+ सुतं (→शुभा).

८. दे$_2$. ⊙ (द्र. ७ पा. वि.). –a) ब$_3$ असमंजसस्, दे$_3$ असमंज(सस्)स्तु, दे$_4$ असमंज(स)स्य, दे$_6$ असमंजस्तु, दे$_8$ मुवें. मुए. मुब. असमंजस-(→असमंजस्य); दे$_{1.8-10}$ न$_1$ मुवें. मुए. मुब. पुत्रोऽभूद् (→तनयो). –b) ब$_2$ अंशुमानेन, दे$_{1.8-10}$ न$_1$ ग्र$_2$ मुवें. मुए. मुब. अंशुमान्नाम, दे$_4$ त्वंशुमान्नाम (→ह्यंशुमान्नाम); दे$_8$ वीर्यवान्, दे$_9$ वीर्यवान्,+पार्थिवः, म$_1$ नामतः. (→पार्थिवः). –c) ग्र$_1$ अस्य (→तस्य). –d) का$_1$ दे$_{4.5}$ न$_1$ च (→तु).

९. दे$_2$. ⊙ (द्र.७ पा. वि.). –a) न$_1$ एन (→येन). –c) दे$_5$ प्रसा*द् (→प्रसादाद्).

१०. दे$_2$. ⊙ (द्र. ७ पा. वि.). –a) दे$_1$ भगीर्थस्य (→भगीरथस्य). –b) का$_1$ दे$_{10}$ द$_1$ देव- (→देवः); का$_1$ प्रीतिः, दे$_5$ प्रीति- (→प्रीत-); का$_1$ दे$_5$ न$_1$ मनोहरः, दे$_1$ मनः हरः (→-मना हरः). –c) का$_1$ ब$_{2.3}$ दे$_{3.5.6}$ द$_1$ ग्र$_1$ म$_1$ दधार, ब$_1$ ***, दे$_4$ चचार (→बभार); दे$_{5.6.9.10}$ न$_1$ ते$_1$ गङ्गा (→गङ्गां). –d) ते$_1$ सोमांशः (→सोमान्ते); म$_1$ °शेखरः (→°भूषणः).

११. दे$_2$. ⊙ (द्र. ७ पा. वि.). –a) दे$_{10}$ भागीरथ° (→भगीरथ°); दे$_4$ भगीरथस्तु तश्चापि, द$_1$ ग्र$_{1.2}$ म$_1$ भगीरथस्य तनयः (ग्र$_{1.2}$ °या). –b) दे$_1$ सुतो नाम, दे$_4$ शृण्वता मा, ते$_1$ क्रतुर्नाम, म$_1$ सूतो नाम (→श्रुतो नाम). –c) का$_1$ नाभगस्तस्य, दे$_1$ नाभागतस्य (→नाभागस्तस्य); द$_1$ दायादाः (→दायादः). –d) दे$_3$ सिन्धुः (→सिन्धु-); दे$_{8.9}$ समो, दे$_{10}$ तथा (→ततो).

१२. दे$_2$. ⊙ (द्र. ७ पा. वि.); द$_1$. १२c–१४b ⊙ (द. सं.); दे$_{10}$ ab ⊙. –a) ब$_3$ अस्मतायुः, दे$_1$ अयुनायुः (→अयुतायुः); ब$_{1-3}$ दे$_{3.5}$ ते$_1$ तस्या (→तस्य). –b) दे$_4$ ग्र$_2$ म$_1$ ऋतुपर्णस्य, दे$_5$ धृतुपर्णस्तु (→ऋतुपर्णस्तु); दे$_{8.9}$ मुवें. मुए. मुब. ऋतुपर्णो महा (मुवें. °या(?))बलः, ते$_1$ ऋतुपर्णोऽभवत् सुतः. –c) दे$_{8-10}$ तत्राभूत् (→पुत्रोऽभूत्). –d) द$_1$ सुदामा (→सुदासो). –e) ग्र$_2$ सौधासः(?) (→सौदासस्). –f). दे$_6$ ख्याता (→ख्यातः).

१३. दे$_2$. ⊙ (द्र. ७ पा. वि.); द$_1$. ⊙ (द्र. १२ पा. वि.). –a) दे$_3$ न$_1$ वसिष्ठाः (→वसिष्ठः). –b) ग्र$_2$ कल्मष° (→कल्माष°). –c) दे$_4$ अस्माकं, न$_1$ ग्र$_2$ अस्मकं (→अश्मकं). –d) का$_1$ चेक्ष्वाकूनां कुलध्वजम्, दे$_{1.5}$ इक्ष्वाकुकुलवर्द्धनं (दे$_5$ °जं), दे$_{10}$ सा यमिक्ष्वा कुले ध्वजं, ग्र$_2$ ईक्ष्वाकुकुलसद्धणं, म$_1$ इक्ष्वाकुकुलनन्दनं.

१४. दे$_2$. ⊙ (द्र. ७ पा. वि.); द$_1$. ab ⊙ (द्र. १२ पा. वि.). –a) का$_1$ ब$_{1-3}$ दे$_{3-6}$ न$_1$ ते$_1$ ग्र$_1$ म$_1$ [उ]त्तरायां (→[उ]त्कलायां); ब$_1$ च (→तु); दे$_1$ अश्मकस्य करुषायां, ग्र$_2$ आस्मकस्योत्सकायस्तु. –b) दे$_4$ ग्र$_{1.2}$ धार्मिकः (→पार्थिवः). –c) का$_1$ ग्र$_2$ स हिरण्यो भवद् राजा. –d) दे$_{1.4}$ प्राप्य (→प्राप).

वें.१.२१.१४ विभ्रत् स नारीकवचं तस्माच्छतरथोऽभवत् ।
तस्माद् बिलिबिलिः श्रीमान् वृद्धशर्मा च तत्सुतः ।।१५
तस्माद् विश्वसहस्तस्मात् खट्वाङ्ग इति विश्रुतः ।
दीर्घबाहुः सुतस्तस्य रघुस्तस्मादजायत ।।१६
रघोरजः समुत्पन्नो राजा दशरथस्ततः ।
रामो दाशरथिर्वीरो धर्मज्ञो लोकविश्रुतः ।।१७
भरतो लक्ष्मणश्चैव शत्रुघ्नश्च महाबलः ।
सर्वे शक्रसमा युद्धे विष्णुशक्तिसमन्विताः ।
जज्ञे रावणनाशार्थं विष्णुरंशेन विश्वकृत् ।।१८

रामस्य सुभगा भार्या जनकस्यात्मजा शुभा ।
सीता त्रिलोकविख्याता शीलौदार्यगुणान्विता ।।१९
तपसा तोषिता देवी जनकेन गिरीन्द्रजा ।
प्रायच्छज्जानकीं सीतां राममेवाश्रिता पतिम् ।।२०
प्रीतश्च भगवानीशस्त्रिशूली नीललोहितः ।
प्रददौ शत्रुनाशार्थं जनकायाद्भुतं धनुः ।।२१
स राजा जनको विद्वान् दातुकामः सुतामिमाम् ।
अघोषयदमित्रघ्नो लोकेऽस्मिन् द्विजपुंगवाः ।।२२
इदं धनुः समादातुं यः शक्नोति जगत्त्रये ।
देवो वा दानवो वाऽपि स सीतां लब्धुमर्हति ।।२३

१५. दे$_{2}$. ⊙ (द्र. ७ पा. वि.). –a) दे$_{1}$ सुतं स, दे$_{8-10}$ विधत् स, न$_{1}$ सो सूजं, ग्र$_{1}$ भीतात् स, मुवें. मुए. मुब. दधत् स (→विभ्रत् स); दे$_{1}$ ग्र$_{2}$ °कवच(नं) (→°कवचं). –b) दे$_{1}$ शा*, ते$_{1}$ च त°, द$_{1}$ ग्र$_{1.2}$ म$_{1}$ दश° (→शत°). –c) का$_{1}$ ब$_{3}$ दे$_{3.6}$ न$_{1}$ ते$_{1}$ इलिबिलिः, ब$_{1}$ इलिवलिः, ब$_{2}$ दे$_{5}$ इलबिलिः, दे$_{4}$ इति वलिः, दे$_{9.10}$ चिलिबिलिः, द$_{1}$ ग्र$_{1}$ अतिरथः, ग्र$_{2}$ अति**, म$_{1}$ दशरथात् (→बिलिबिलिः). –d) न$_{1}$ वयचर्मा, ते$_{1}$ भूवर्मा* (→वृद्धशर्मा); ग्र$_{2}$ शत्रुवृद्ध-(श्च) महाबलः.

१६. दे$_{2}$. ⊙ (द्र. ७ पा. वि.); ग्र$_{2}$. १६a–१८b ⊙ (द्र. सं.). –a) ब$_{1.3}$ दे$_{3.6}$ °रहः, ब$_{2}$ ते$_{1}$ द$_{1}$ ग्र$_{1}$ °वहः, न$_{1}$ मह(तिः) (→°सहः). –b) ब$_{3}$ दे$_{6}$ कट्वां (ब$_{3}$ °ट्वं) गं, दे$_{3}$ कङ्काङ्गं (→खट्वाङ्गं). –c) दे$_{1.4.6.9.10}$ दीर्घबाहु (→दीर्घबाहुः); ब$_{3}$ *स्य, दे$_{8-10}$ मुवें. मुए. मुब. तस्माद् (→तस्य); न$_{1}$ नाम्ना दिलीपो धर्मात्मा. –d) दे$_{3.6}$ व्यजायत (→अजायत).

१७. ब$_{2}$. अपठनीयः; दे$_{2}$. ⊙ (द्र. ७ पा. वि.); ग्र$_{2}$. ⊙ (द्र. १६ पा. वि.). –a) दे$_{4}$ तस्माद् (→रघो); ते$_{1}$ समुत्पन्न (?) (→समुत्पन्नो). –b) ते$_{1}$ अजां (→राजा); दे$_{1}$ द* रथः (→दशरथः) ते$_{1}$ द$_{1}$ सुतः (→ततः). –c) दे$_{1}$ शूरो (→वीरो).

१८. ब$_{2}$. अपठनीयः; दे$_{2}$. ⊙ (द्र.७ पा. वि.); ग्र$_{2}$. ab ⊙ (द्र. १६ पा. वि.). –a) दे$_{10}$ भारतो (→भरतो); दे$_{3}$ भवतो लक्षणश्चैव, न$_{1}$ लक्ष्मणो भरतश्चैव, म$_{1}$ भरतो लक्ष्मणःश्रीमान्. –c) दे$_{4}$ शक्त° (→शक्र°). –d) का$_{1}$ ते$_{1}$ ग्र$_{2}$ म$_{1}$ भक्ति° (→शक्ति°); दे$_{10}$ न$_{1}$ °समन्वितः (→°समन्विताः); ग्र$_{1}$ विष्णोरंशसमुद्भवाः. –e) दे$_{1}$ ना*र्थं, न$_{1}$ नाशाय, द$_{1}$ ग्र$_{1.2}$ नाशार्थे (→नाशार्थं). –f) दे$_{5}$ विष्णोः, दे$_{10}$ विश्वः (→विष्णुः); दे$_{8-10}$ द$_{1}$ मुवें. मुए. मुब. विश्वभुक् (द$_{1}$ °सृक्) (→विश्वकृत्); दे$_{1}$ विश्वसृग्विश्वभावनः, दे$_{3}$ विष्णु-वंशैलविश्वकृत्, दे$_{6}$ विस्तरं शैलविश्वकृत्.

१९. दे$_{2}$. ⊙ (द्र. ७ पा. वि.). –a) ब$_{1}$ रामसु (?) (→रामस्य); दे$_{1}$ भार्या सु*गा, दे$_{3}$* सुभगार्या, दे$_{8-10}$ न$_{1}$ मुवें. मुए. मुब. भार्या सुभगा, द$_{1}$ ग्र$_{1}$ सुमहाभार्या (→सुभगा भार्या). –b) दे$_{8.9}$ सुता (→शुभा). –c) का$_{1}$ ब$_{1-3}$ दे$_{3-6}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ सीतेति लोक- (ब$_{3}$ दे$_{3.4}$ लोके) (→सीता त्रिलोक-). –d) दे$_{8.9}$ शीलौदार°, दे$_{10}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ शीलाचा (दे$_{10}$ °दा) र° (→शीलौदार्य°).

२०. दे$_{2}$. ⊙ (द्र. ७ पा. वि.). –a) न$_{1}$ तस्य सा (→तपसा); दे$_{1}$ तोषितो (→तोषिता). –c) का$_{1}$ दे$_{1.8.10}$ ते$_{1}$ ग्र$_{2}$ प्रयच्छत् (→प्रायच्छत्); ब$_{2.3}$ सा तं (→सीतां). –d) दे$_{4}$ एवाथ तां (?), दे$_{3}$ द$_{1}$ ग्र$_{1}$ मुवें. मुए. मुब. एवाश्रितां (→एवाश्रिता).

२१. दे$_{2}$. ⊙ (द्र. ७ पा. वि.). –a) दे$_{1.4}$ द$_{1}$ ग्र$_{1}$ म$_{1}$ प्रीतस्तु, दे$_{6}$ प्रीतस्य, ग्र$_{2}$ ईशस्तु (→प्रीतश्च).

२२. दे$_{2}$. ⊙ (द्र. ७ पा. वि.). –a) दे$_{1.8-10}$ मुवें. मुए. मुब. धीमान् (→विद्वान्). –b) दे$_{1}$ **(→दातु°); न$_{1}$ सतीमिमाम् (→सुतामिमाम्). –c) दे$_{3}$ आघोषयद् (→अघोषयद्); दे$_{5}$ अमित्रस्तो (→अमित्रघ्नो). –d) ग्र$_{2}$ °पुंगवः (→°पुंगवाः).

२३. दे$_{2}$. ⊙. –a) दे$_{4}$ समाधातुं, दे$_{8.10}$ समादत्ते, दे$_{9}$ समावृत्ते (→समादातुं). –c) दे$_{4}$ * (→वा); न$_{1}$ मानुषो (→दानवो). –d) दे$_{10}$ सतीना (→स सीतां).

विज्ञाय रामो बलवान् जनकस्य गृहं प्रभुः ।
भञ्जयामास चादाय गत्वाऽसौ लीलयैव हि ॥२४
उद्ववाह च तां कन्यां पार्वतीमिव शंकरः ।
रामः परमधर्मात्मा सेनामिव च षण्मुखः ॥२५
ततो बहुतिथे काले राजा दशरथः स्वयम् ।
रामं ज्येष्ठं सुतं वीरं राजानं कर्तुमारभत् ॥२६
तस्याथ पत्नी सुभगा कैकेयी चारुभाषिणी ।
निवारयामास पतिं प्राह संभ्रान्तमानसा ॥२७
मत्सुतं भरतं वीरं राजानं कर्त्तुमर्हसि ।
पूर्वमेव वरो यस्माद् दत्तो मे भवता यतः ॥२८

स तस्या वचनं श्रुत्वा राजा दुःखितमानसः ।
बाढमित्यब्रवीद् वाक्यं तथा रामोऽपि धर्मवित् ॥२९
प्रणम्याथ पितुः पादौ लक्ष्मणेन सहाच्युतः ।
ययौ वनं सपत्नीकः कृत्वा समयमात्मवान् ॥३०
संवत्सराणां चत्वारि दश चैव महाबलः ।
उवास तत्र मतिमान् लक्ष्मणेन सह प्रभुः ॥३१
कदाचिद् वसतोऽरण्ये रावणो नाम राक्षसः ।
परिव्राजकवेषेण सीतां हृत्वा ययौ पुरीम् ॥३२
अदृष्ट्वा लक्ष्मणो रामः सीतामाकुलितेन्द्रियौ ।
दुःखशोकाभिसंतप्तौ बभूवतुररिंदमौ ॥३३ वें.१.२१.३३

२४. दे$_{2}$. ⊙. (द्र. ७ पा. वि ). –a) दे$_{1}$ भगवान् (→बलवान्). –b) ते$_{1}$ गृहे, द$_{1}$ महं (?) (→गृहं); दे$_{1}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ प्रति (→प्रभुः). –c)दे$_{1}$भजयामास (→भञ्जयामास); द$_{1}$ ग्र$_{1}$ म$_{1}$ च धनुर् (→चादाय); ग्र$_{2}$ आरोपयामास च तं. –d) का$_{1}$ गत्वेमां (→गत्वासौ); दे$_{5}$ न$_{1}$ लीलया बहिः (न$_{1}$ धनुः) (→लीलयैव हि).

२५. दे$_{2}$. ⊙ (द्र. ७ पा. वि.). –a) का$_{1}$ दे$_{5.6}$ उद्व-वाह्यतां, ब$_{2}$ दे$_{1}$ उदुवाह वाहय (का$_{1}$ $^{\circ}$यत्), दे$_{8-10}$ मुवें. मुए. मुब. उद्ववाहाथ, ग्र$_{2}$ उद्वाह्य च * (→उद्ववाह च); ब$_{2}$ देवीं, म$_{1}$ सीतां (→कन्यां). –d) ग्र$_{2}$ सेनानीव (→सेनामिव); दे$_{1}$ देव सेनामि * ग्निजः.

२६. दे$_{2}$. ⊙ (द्र. ७ पा. वि.); दे$_{6}$. २६d–२८a. (ह. सं.) ⊙. –b) दे$_{10}$ ग्र$_{1}$ म$_{1}$ दशरथ(?)(→दशरथः). –c) दे$_{1.4.8-10}$ ग्र$_{1}$ मुवें. मुए. मुब. ज्येष्ठ- (→ज्येष्ठं). –d) ब$_{1}$ दे$_{4}$ न$_{1}$ आरभे(न$_{1}$ $^{\circ}$भेत्), दे$_{1}$ अर्हति (→आरभत्); दे$_{10}$ राजानं कर्तुनारभूत्.

२७. दे$_{2}$. ⊙ (द्र. ७ पा. वि.); दे$_{6}$. ⊙ (द्र. २६ पा. वि.). –a) न$_{1}$ तस्यापि (→तस्याथ); दे$_{1}$ तस्याथ सुभगा देवी. –b) ब$_{2}$ केकयी, ते$_{1}$ केकया (→कैकेयी); ते$_{1}$ ** (→चारु-); दे$_{1.4.8-10}$ न$_{1}$ ते$_{1}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ मुवें. मुए. मुब. $^{\circ}$हासिनी (→$^{\circ}$भाषिणी). –d) ग्र$_{1}$ प्रभा (→प्राह); ग्र$_{2}$ $^{\circ}$मानसं (→$^{\circ}$मानसा); दे$_{1}$ प्राह सांप्रतमानसं.

२८. दे$_{2}$. ⊙ (द्र. ७ पा. वि. ); दे$_{6}$. a ⊙ (द्र. २६ पा. वि.). –a) दे$_{5}$ मत्सुतः, दे$_{10}$ तत्सुतं (→मत्सुतं); का$_{1}$ वीरराजानं, दे$_{10}$ भारतं वीरं (→भरतं वीरं). –b) ब$_{3}$ दे$_{3}$ अर्हति (→अर्हसि); का$_{1}$ कर्तुमर्हसि वै प्रभो. –c) दे$_{1}$ त्वया पूर्व-, दे$_{10}$ पूर्वमेवं (→पूर्वमेव); ब$_{1}$ दे$_{8}$ मुवें. मुब. वरौ, दे$_{5}$ चरो, न$_{1}$ वयो (→वरो). –d) का$_{1}$ दत्ते हि, ब$_{1-3}$ दे$_{8}$ न$_{1}$ द$_{1}$ मुवें. मुब. दत्तौ मे, दे$_{3}$ व्योमे *, दे$_{6}$ गतो मे (→दत्तो मे); ब$_{1.3}$ दे$_{5}$ ते$_{1}$ च यत्, ब$_{2}$ दे$_{1}$ [अ]नघ, दे$_{6}$ वयं, न$_{1}$ प्रभो !, द$_{1}$ ग्र$_{1.2}$ म$_{1}$ चयः (ग्र$_{2}$ *) (→यतः); दे$_{4}$ तं मे भगवता च यत्.

२९. दे$_{2}$. ⊙ (द्र. ७ पा. वि.). –a) ब$_{1}$ न$_{1}$ स तस्य, ग्र$_{2}$ ** स्य (→स तस्य). –b) न$_{1}$ राजा न सितमानसः, द$_{1}$ राजा चकितमानसः. –d) दे$_{4}$ ते$_{1}$ द$_{1}$ ग्र$_{1}$ म$_{1}$ तदा (→तथा); का$_{1}$ ब$_{2.3}$ दे$_{3.5.6}$ रामो हि (→रामोऽपि).

३०. दे$_{2}$. ⊙ (द्र. ७ पा. वि.). –a) ग्र$_{1.2}$ प्रणम्य च (ग्र$_{2}$ $^{\circ}$तत्) (→प्रणम्याथ). –b) दे$_{10}$ लक्ष्यमणेना (?) (→लक्ष्मणेन); म$_{1}$ सह (→सहा-). –c) द$_{1}$ सपत्नीकं (→सपत्नीकः), –d) दे$_{1}$ $^{\circ}$वाप्तवान् (→$^{\circ}$मात्मवान्).

३१. दे$_{2}$. ⊙ (द्र. ७ पा. वि.). –b) द$_{1}$ दशश्चैव (→दश चैव). –c) दे$_{1}$ न$_{1}$ उवाच, ग्र$_{2}$ निवासः (→उवास); ग्र$_{2}$ तस्य (→तत्र); दे$_{8-10}$ मुवे. मुए. मुब. भगवान् (→मतिमान्).

३२. दे$_{2}$. ⊙ (द्र. ७ पा. वि.). –a) का$_{1}$ वसते, दे$_{1}$ वसरो ? (→वसतो). –c) ते$_{1}$ परिव्राड् छद्म$^{\circ}$ (→परिव्राजक$^{\circ}$); का$_{1}$ ब$_{1-3}$ दे$_{1.3.5.6}$ $^{\circ}$वेशेन, ग्र$_{2}$ $^{\circ}$रूपेण (→$^{\circ}$वेषेण).–d) दे$_{3.6}$ कृत्वा (→हृत्वा); ग्र$_{2}$ पुरं(?)(→पुरीं).

३३. दे$_{2}$. ⊙ (द्र. ७ पा. वि.). –a) दे$_{10}$ अदृष्टा (→अदृष्ट्वा). –b) का$_{1}$ ब$_{1.3}$ दे$_{3.6.10}$ ते$_{1}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ $^{\circ}$तेन्द्रियः (दे$_{10}$ $^{\circ}$यो), ब$_{2}$ $^{\circ}$तेक्षणः (→$^{\circ}$तेन्द्रियौ); दे$_{1}$ सीतामाकुलचेन्द्रियो. –c) दे$_{6}$ संतप्तो, दे$_{8.9}$ संप्राप्तौ (→सन्तप्तौ); ब$_{3}$ दुःखशोकातिसन्तप्तौ, ग्र$_{1}$ दुःखशोकोभि*न्तप्तौ. –d) दे$_{5}$ अविंदमौ (→अरिन्दमौ).

वें.१.२१.३३ ततः कदाचित् कपिना सुग्रीवेण द्विजोत्तमाः ।
वानराणामभूत् सख्यं रामस्याक्लिष्टकर्मणः ॥३४
सुग्रीवस्यानुगो वीरो हनुमान् नाम वानरः ।
वायुपुत्रो महातेजा रामस्यासीत् प्रियः सदा ॥३५
स कृत्वा परमं धैर्यं रामाय कृतनिश्चयः ।
आनयिष्यामि तां सीतामित्युक्त्वा विचचार ह ॥३६
महीं सागरपर्यन्तां सीतादर्शनतत्परः ।
जगाम रावणपुरीं लङ्कां सागरसंस्थिताम् ॥३७
तत्राथ निर्जने देशे वृक्षमूले शुचिस्मिताम् ।
अपश्यदमलां सीतां राक्षसीभिः समावृताम् ॥३८
अश्रुपूर्णेक्षणां हृद्यां संस्मरन्तीमनिन्दिताम् ।
राममिन्दीवरश्यामं लक्ष्मणं चात्मसंस्थितम् ॥३९
निवेदयित्वा चात्मानं सीतायै रहसि स्वयम् ।
असंशयाय प्रददावस्यै रामाङ्गुलीयकम् ॥४०
दृष्ट्वाऽङ्गुलीयकं सीता पत्युः परमशोभनम् ।
मेने समागतं रामं प्रीतिविस्फारितेक्षणा ॥४१
समाश्वास्य तदा सीतां दृष्ट्वा रामस्य चान्तिकम् ।
नयिष्ये त्वां महाबाहुरुक्त्वा रामं ययौ पुनः ॥४२
निवेदयित्वा रामाय सीतादर्शनमात्मवान् ।
तस्थौ रामेण पुरतो लक्ष्मणेन च पूजितः ॥४३

---

**३४.** दे2. ⊙ (द्र. ७ पा. वि.). –a) दे4 न1 द1 ग्र1.2 पतिना (न1 °नी) (→कपिना). –c) ब1 संख्यं (→सख्यं).

**३५.** दे2. ⊙ (द्र. ७ पा. वि.). –a) न1 [अ]नुजो (→[अ]नुगो).ते1 सुग्रीव; सचिवोधीरो. –b) का1 दे3.6 ते1 म1 हनूमान् (→हनुमान्). –c) ते1 महातेजाः(?) (→महातेजा). –d) दे1 सखः (→सदा); दे5 रामस्या सा प्रियः सह, + रामस्याकृतनिश्चयः.

**३६.** दे2. ab ⊙ (द्र. ७ पा. वि.); दे5. ab ⊙. –a) ते1 सौख्यं, + सख्यं (→धैर्यं). –c) ब2 आनायिष्ये, दे2 ** यिष्यामि (→आनयिष्यामि); दे1 ** (→सीतां). –d) दे2 वि * चार (→विचच र).

**३७.** –a) दे5 मही- (→महीं). –b) दे1 सीतां (→सीता-); ब1 लालसः, ग्र1 तत्परैः (→तत्परः). –d) का1 दे3.5.6 °संवृतां (दे6 °तं) (→°संस्थिताम्); दे4 द1 ग्र1.2 लंकां रावणसं (ग्र2 सु)स्थिताम्, म1 लङ्कां रावणपालिताम्.

**३८.** न1.d ⊙. –a) ब2 तथाथ, ग्र2 तत्रासौ (→तत्राथ); दे10 रिजने(?) (→निर्जने). –b) द1 ग्र1.2 म1 वृक्षमूलेषु विष्ठिताम्. –d) द1 राक्षसी च (→राक्षसीभिः); दे1 समागतां, दे5 समावृता (→समावृताम्).

**३९.** –a) का1 ब2.3 दीनां, ब1 दे3.6 कृत्यां (दे3 °त्यं), दे5 हृत्यं, न1 तदा, द1 हृद्यं, म1 रामं (→हृद्यां). –b) दे1 ग्र2 स स्मरन्तीं, दे10 संस्मरन् तां (→संस्मरन्तीम्); दे5 संस्मरन्तीमनीक्षितां, म1 संश्मरन्ती दिवानिशं. –d) का1 चान्तः°, ब1.3 चान्न-, ब2 चानु-, दे3.6 चार्थं- (दे3 °र्थं) (→चात्म-); ब1 -सस्मितं, ब2 मुवें. मुब. -संस्थिताम्, दे4 द1 ग्र1 -सम्मितं, ते1 °सम्मतम्, (→-संस्थितम्); ग्र2 प्रलपन् विह्वलेक्षणं, म1 प्रीतिविह्वलितेक्षणा.

न1 पुस्तके a चरणानन्तरमधिकम्-हृदा विद्यमानेन

**४०.** ग्र2. ab ⊙; म1. ४०-४१ d ⊙ (द्र. सं.). –b) ब1 र** (→रहसि); दे1.2.8-10 मुवें. मुए. मुब. प्रभुः (→स्वयं); न1 सीतायै हरिपुङ्गवः. –c) दे3 प्रददाः ? (→प्रददौ). –d) दे2 तस्यै, ग्र2 अस्य (→अस्यै); ब2 न1 रामस्यै वाङ्गुलीयकम्.

**४१.** म1. ⊙ (द्र. ४० पा. वि.). –a) ब1-3 दे3 [अ]-ङ्गरीयकं (→[अ]ङ्गुलीयकं); न1 म1 सीतां (→सीता). –d) ब1 दे6.8.9 न1 मुवें. मुए. मुब. विस्फुरिते°, दे10 विस्फुरते°, द1 ग्र1 म1 विह्वलिते° (→विस्फारिते°); दे1.5.10 °क्षणां (दे1 °णं) (→°क्षणा); ग्र2 महाबाहुं महाकृतिं.

**४२.** –a) दे4 तथा, द1 म1 च तां (→तदा); ग्र2 समाश्वासयतां सीतां. –b) ब2 दे5 वान्तिकं (→चान्तिकं); दे1 दृष्ट्वा रामं तदन्तिकम्, ग्र2 पत्युः परम शोभनम्. –c) दे1 अन्वेष्य तं (→नयिष्ये त्वां); ब1 दे1.5 ते1 मुवें. मुए. मुब. महाबाहुं, द1 ग्र1 महाबाहोः, ग्र2 अहं सूते, म1 अहं रामं (→महाबाहुः); ब2 नयिष्यति त्वां का * हः, ब3 नयिष्यति त्वां श्रीरामः. –d) का1 त्यक्त्वा, ब2.3 प्रोक्त्वा, न1 मुक्त्वा (→उक्त्वा); ग्र2 लक्ष्मणं परमधार्मिकम्, म1 लक्ष्मणश्चात्मसम्मितम्.

**४३.** –a) ग्र2 म1 चात्मानं (→रामाय). –b) दे4 दर्श*म् (→दर्शनम्); ग्र2 म1 सीतायै रहसि स्थितम् (म1 °स्वयम्). –d) दे1 सु (→च).

ततः स रामो बलवान् सार्द्धं हनुमता स्वयम् ।
लक्ष्मणेन च युद्धाय बुद्धिं चक्रे हि रक्षसाम् ॥४४
कृत्वाऽथ वानरशतैर्लङ्कामार्गं महोदधेः ।
सेतुं परमधर्मात्मा रावणं हतवान् प्रभुः ॥४५
सपत्नीकं च ससुतं सभ्रातृकमरिंदमः ।
आनयामास तां सीतां वायुपुत्रसहायवान् ॥४६
सेतुमध्ये महादेवमीशानं कृत्तिवाससम् ।
स्थापयामास लिङ्गस्थं पूजयामास राघवः ॥४७
तस्य देवो महादेवः पार्वत्या सह शंकरः ।
प्रत्यक्षमेव भगवान् दत्तवान् वरमुत्तमम् ॥४८
यत् त्वया स्थापितं लिङ्गं द्रक्ष्यन्तीह द्विजातयः ।
महापातकसंयुक्तास्तेषां पापं विनश्यतु ॥४९
अन्यानि चैव पापानि स्नातस्यात्र महोदधौ ।
दर्शनादेव लिङ्गस्य नाशं यान्ति न संशयः ॥५०
यावत् स्थास्यन्ति गिरयो यावदेषा च मेदिनी ।
यावत् सेतुश्च तावच्च स्थास्याम्यत्र तिरोहितः ॥५१
स्नानं दानं जपः श्राद्धं भविष्यत्यक्षयं कृतम् ।
स्मरणादेव लिङ्गस्य दिनपापं प्रणश्यति ॥५२ वें. १.२१.५२

---

अतः परं ग्र$_{2}$ म$_{1}$ पुस्तकयोरधिकम्—
*असंशयाय प्रददावस्यै रामाङ्गुलीयकम् ॥
दृष्ट्वाङ्गुलीयं सीतां पत्युः परमशोभनः ।
मेने समागतं रामं प्रीतिविह्वलितेक्षणा ॥
समाश्वास्य तदा सीतां वायुपुत्रः पुनर्ययौ । [४]
निवेदयित्वा रामाय सीता दर्शनमात्मवान्॥( = ८०c-४३b)

[ –1) ग्र$_{2}$ प्रददावस्य (→प्रददावस्यै). –2) ग्र$_{2}$ °शोभनं (→°शोभनः). –3) ग्र$_{2}$ महाबाहुं महामतिं (→प्रीतिविह्वलितेक्षणा). –4) ग्र$_{2}$ मा सीते दुःखजातासि सृजे रामं ययौ पुनः. ]

**४४.** –a) दे$_{1}$ तु (→स). –b) दे$_{5}$ सार्धं हं च मना स्वयम्. –d) म$_{1}$ मतिं (→बुद्धिं); दे$_{1}$ चक्रेभि-, दे$_{3.6}$ चक्रेथ, दे$_{8-10}$ चक्रेति (→चक्रे हि); ब$_{1}$ राक्षसा, ब$_{3}$ राक्षसां, दे$_{1.4}$ ते$_{1}$ द$_{1}$ ग्र$_{1}$ म$_{1}$ रक्षसा, दे$_{5}$ राक्षसी, दे$_{8-10}$ राक्षसं, ग्र$_{2}$ मुवें. राक्षसः (→रक्षसां).

**४५.** –a) दे$_{1}$ वानरं (→वानर-); दे$_{5}$ **(→-शतैः); न$_{1}$ रामश्चकार भगवान्, ते$_{1}$ कृत्वाथ वानरैस्सेतुं, द$_{1}$ ग्र$_{1}$ म$_{1}$ कृत्वा सेतुं वानरेशैः, ग्र$_{2}$ कृत्वा सेतुपरैश्शैलं. –b) दे$_{1.2}$ न$_{1}$ मार्गें (→मार्गं); ब$_{1}$ दे$_{5}$ महो(दे$_{5}$ *)दधे, दे$_{1.2}$ महोदधिः, दे$_{4}$ न$_{1}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ महोदधौ, दे$_{8-10}$ दे$_{1}$ महोदधिम् (दे$_{10}$ °धि) (→महोदधेः). –c) ते$_{1}$ तीर्त्वा, ग्र$_{1}$ सेतुः (→सेतुं).

**४६.** दे$_{3.6}$. ४६c–४८d ⊙ (द. सं.). –a) दे$_{8-10}$ मुवें. मुए. मुब. हि ससुतं, ते$_{1}$ सह सुतं (→च ससुतं); न$_{1}$ सानुगं चैव ससुतं. –b) दे$_{2.4}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ सभ्रातरं (→सभ्रातृकं); ब$_{1}$ दे$_{5.6.10}$ ग्र$_{2}$ अरिन्दम, न$_{1}$ द$_{1}$ ग्र$_{1}$ अरिदमम् (→अरिन्दमः).

**४७.** दे$_{3.6}$. ⊙ (द्र. ४६ पा. वि.). –b) दे$_{5}$ ईशानां कृत्तिवाससाम्. –c) ब$_{2}$ लिङ्गं च (→लिङ्गस्थं); द$_{1}$ ग्र$_{1.2}$ संस्थापयामास लिङ्गं, म$_{1}$ संस्थाप्य च महालिङ्गं. –d) ते$_{1}$ शांकरम् (→राघवः).

**४८.** दे$_{3.6}$. ⊙ (द्र. ४६ पा. वि.). –d) ते$_{1}$ ददौ च (→दत्तवान्).

**४९.** –a) ब$_{1-3}$ दे$_{3.5.6}$ न$_{1}$ ते$_{1}$ ग्र$_{1}$ म$_{1}$ ये, (→यत्). –b) दे$_{1.8-10}$ द$_{1}$ मुवें. मुए. मुब. द्रक्ष्यन्तीदं (→द्रक्ष्यन्तीह). –c) का$_{1}$ °पात* (→°पातक°); ब$_{1}$ दे$_{4.10}$ °संयुक्ता(?) (→°संयुक्ताः). –d) दे$_{1}$ *पं, दे$_{5}$ पापां (→पापं); ब$_{3}$ न$_{1}$ ते$_{1}$ विनश्यति, दे$_{1}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ प्रणश्यति, दे$_{4}$ विनश्यसि, दे$_{8-10}$ मुवें. मुए. मुब. विनंक्ष्यति (→विनश्यतु).

**५०.** दे$_{3.6}$. ५०a–५१d ⊙. –a) दे$_{5}$ चैवं (→चैव). –b) का$_{1}$ स्नातस्य च, दे$_{1}$ तापस्यात्र, म$_{1}$ स्नानस्यात्र (→स्नातस्यात्र). –d) दे$_{1.4.5.10}$ याति (→यान्ति).

**५१.** दे$_{3.6}$. ⊙. –b) ब$_{3}$ एवष्व, दे$_{4.5}$ ते$_{1}$ ग्र$_{2}$ म$_{1}$ एव च (दे$_{4}$ °त्र), द$_{1}$ एव तु, ग्र$_{1}$ एव त्व (→एषा च). –c) दे$_{4}$ मेरुश् (→सेतुश्); दे$_{1.8-10}$ म$_{1}$ यावत् (→तावत्). –d) दे$_{4}$ [अ]त्रा-, दे$_{5}$ [अ]नु- (→[अ]त्र); दे$_{1}$ स्थास्यन्तीह रतोहितः, द$_{1}$ संस्था- स्याम्यतिरोहितः.

**५२.** –a) दे$_{1}$ स्नान-(→स्नानं); जपः,+तपः. ब$_{1-3}$ दे$_{1.2.6.8-10}$ मुवें. मुए. मुब. तपः का$_{1}$, द$_{1}$ ग्र$_{1.2}$ जपं, म$_{1}$ जप- (→जपः). –b) का$_{1}$ ब$_{1-3}$ दे$_{3.5.6}$ न$_{1}$ ते$_{1}$ महत्, दे$_{4}$ द$_{1}$ ग्र$_{1}$ म$_{1}$ मतं, ग्र$_{2}$ ततः (→कृतम्), दे$_{8-10}$ मुवें. मुए. मुब. सर्वं भवतु चाक्षयम्. –c) दे$_{5}$ **स्य (→लिङ्गस्य). –d) दे$_{2}$ चिरं पापं, न$_{1}$ दीनवीतं (→दिनपापं); का$_{1}$ ब$_{2.3}$ दे$_{3-6}$ प्रणश्य (क$_{1}$ °स्य) तु (→प्रणश्यति).

वें. १.२१.५२ इत्युक्त्वा भगवाञ्छंभुः परिष्वज्य तु राघवम् ।
सनन्दी सगणो रुद्रस्तत्रैवान्तरधीयत ॥५३
रामोऽपि पालयामास राज्यं धर्मपरायणः ।
अभिषिक्तो महातेजा भरतेन महाबलः ॥५४
विशेषाद् ब्राह्मणान् सर्वान् पूजयमास चेश्वरम् ।
यज्ञेन यज्ञहन्तारमश्वमेधेन शंकरम् ॥५५
रामस्य तनयो जज्ञे कुश इत्यभिविश्रुतः ।
लवश्च सुमहाभागः सर्वतत्त्वार्थवित् सुधीः ॥५६
अतिथिस्तु कुशाज्जज्ञे निषधस्तत्सुतोऽभवत् ।
नलस्तु निषधस्याभून्नभस्तस्मादजायत ॥५७
नभसः पुण्डरीकाख्यः क्षेमधन्वा च तत्सुतः ।
तस्य पुत्रोऽभवद् वीरो देवानीकः प्रतापवान् ॥५८
अहीनगुस्तस्य सुतो सहस्वांस्तत्सुतोऽभवत् ।
तस्माच्चन्द्रावलोकस्तु तारापीडस्तु तत्सुतः ॥५९
तारापीडाच्चन्द्रगिरिर्भानुवित्तस्ततोऽभवत् ।
श्रुतायुरभवत् तस्मादेते इक्ष्वाकुवंशजाः ।
सर्वे प्राधान्यतः प्रोक्ताः समासेन द्विजोत्तमाः ॥६०

५३. ग्र2. ⊙; दे1. cd ⊙. –a) दे9 इत्युक्ता, ते1 इत्याह (→इत्युक्त्वा); का1 ब1 दे2.3.6 न1 साम्बः, दे4 देवः, दे5 साक्षात्, द1 ग्र1 म1 वाचं (→शम्भुः); दे10 इत्युक्त्वा स*****. –b) दे2 परिपूज्य, दे3.5.6 परित्यज्य (→परिष्वज्य); का1 ब1-3 दे1-6 न1 ते1 द1 ग्र1 म1 च (→तु); दे3.6 राघवौ (→राघवं); दे10 परितुष्यति राघवम्. –c) का1 ब1.3 दे3.5.6 ते1 स नन्दिः, दे2 सहांषः (→स नन्दी).

५४. ग्र2. ab ⊙. –a) दे10 रामादि (→रामोऽपि). –b) न1 परायणं (→परायणः); दे3 *****रायणः, दे4 द1 ग्र1 म1 राज्यं परमधार्मिकः. –c) दे2 महाबाहुः (→महातेजा). –d) दे2 अयोध्यायां (→भरतेन).

५५. –a) द1 ग्र1.2 विदु(द1 ग्र2 °दो)षात् (→विशेषाद्); दे5 प्रणता (→ब्राह्मणात्). –b) ब2.3 चेश्वरः (→चेश्वरम्). –c) द1 ग्र1.2 म1 यज्ञैश्च (→यज्ञेन); द1 हुंता च (→हन्तारं). –d) ते1 चेश्वरम् (→शंकरम्).

५६. –b) ब3 °धीयते (→°विश्रुतः). –c) दे4 लवस्य (→लवश्च); दे4 महाभागाः (→महाभागः). –d) द1 तत्सुधीः (→°वित् सुधीः).

अतः परं दे9 पुस्तके अधिकम् :—

*अतिथिस्तु **** कुशा इत्यभिविश्रुतः ।

लवश्च सुमहाभागः सर्वतत्त्वार्थवित्सुधीः । (=५६)

५७. –b) का1 निषिधः, दे10 निषेधः, द1 निषदः (→निषधः). –c) ब2 दे8-10 न1 मुवें. मुए. मुब. नलश्च, दे5 नलस्य (→नलस्तु); का1 निषिधः, द1 निषदः (→निषधः); दे1.2.8-10 म1 मुवें. मुए. मुब. आसीत् (→अभूत्). –d) दे6 रजः, ग्र1 नभात्, मुवें. मुए. मुब. नभाः (→नभः).

५८. दे10. ⊙. –a) दे5 नभसात् (→नभसः); का1 ब1-3 दे1-3.5.6.8.9 मुवें. मुए. मुब. °काक्षः, न1 °कश्च, ते1 °कोऽभूत् (→°काख्यः). –b) दे1.8.9 मुवें. मुए. मुब. तु (→च). –d) दे5 धीरो (→वीरो); न1 वेधानीकः, ते1 मेधाकीनः (→देवानीकः).

५९. दे1. ⊙; दे10.५९c–६०b ⊙. –a) दे4 अहीहयुः, ते1 द1 म1 अहीनगः (→अहीनगुः); न1 सुतस्तस्य (→तस्य सुतो). –b) ब1 सहस्त्रांस्तत्, दे3 सहस्रांशुः तत्, दे4 सहस्वस्तत, द1 सहस्त्वां तत्, ग्र2 स विश्वान् तत्, मुवें. मुए. मुब. महस्त्रांस्तत् (→सहस्वांस्तत्); का1 सहस्रस्य सुतोऽभवत्, ब2.3 सहस्रांशुस्ततोऽभवत्, दे5 सहस्तस्य सुतोऽभवत्. –c) न1 अस्मात् (→तस्मात्); द1 ग्र1.2 म1 क्षुद्रा° (→चन्द्रा°). –d) दे8.9 ग्र2 मुवें. मुए. मुब. ताराधीशः (→तारापीडः) दे4.8.9 न1 मुवें. मुए. मुब. च (→तु).

अतः परं ग्र2 पुस्तके अधिकम्:—

*तस्य पुत्रोऽभवत् पुत्रो देवानीकं प्रतापवान् । (=५८ cd)

६०. दे1.10. ab ⊙. –a) दे8.9 मुवें. मुए. मुब. ताराधीशात्, ग्र2 **** (→तारापीडात्); द1 ग्र1.2 म1 चन्द्रशिरा (→चन्द्रगिरिः). –b) ब1 दे4 ते1 म1 भानुचित्तस् (ते1 म1 °श्वस्), ब2.3 भानुविन्दस् (ब3 °ब्रस्), द1 ग्र1 भानुचित्रस् (→भानुवित्तस्); का1 ब1.3 दे 3-6 तथा (→ततो); दे8.9 भानुवित् तत्सुतोऽभवत्. –c) दे2 शतायुः (→श्रुतायुः); दे3.6 श्रुतानुभवतस्तस्माद्, दे5 श्रुतायुर्भव * तस्माद्. –d) का1 ब1 दे4-6 न1 ते1 द1 ग्र1 म1 हीक्ष्वाकु°, दे8-10 मुवें. मुए. मुब. चेक्ष्वाकु° (→इक्ष्वाकु°); दे1 एते हीक्ष्वाकुजाः सुताः दे2 एते दीक्ष्वाकुवंशजः, दे3 एते हीक्ष्वाकुरङ्गजाः. –e) का1 एते, द1 सर्व (→सर्वे); दे1.10 प्रधान्यतः (→प्राधान्यतः); ग्र1 प्रोक्तः (→प्रोक्ताः). –f) दे1 समासे*, ग्र1 समा (न) सेन (→समासेन); दे5 द्विजोत्तमः (→द्विजोत्तमाः).

य इमं शृणुयान्नित्यमिक्ष्वाकोर्वंशमुत्तमम् । सर्वपापविनिर्मुक्तो स्वर्गलोके महीयते ।।६१

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायां पूर्वविभागे विंशोऽध्यायः ।।२०।।

# २१

रोमहर्षण उवाच ।※

ऐलः पुरूरवाश्चाथ राजा राज्यमपालयत् ।
तस्य पुत्रा बभूवुर्हि षडिन्द्रसमतेजसः ।।१
आयुर्मायुरमावायुर्विश्वायुश्चैव वीर्यवान् ।
शतायुश्च श्रुतायुश्च दिव्याश्चैवोर्वशीसुताः ।।२
आयुषस्तनया वीराः पञ्चैवासन् महौजसः ।
स्वर्भानुतनयायां वै प्रभायामिति नः श्रुतम् ।।३
नहुषः प्रथमस्तेषां धर्मज्ञो लोकविश्रुतः ।
नहुषस्य तु दायादाः षडिन्द्रोपमतेजसः ।।४
उत्पन्नाः पितृकन्यायां विरजायां महाबलाः ।
यतिर्ययातिः संयातिरायातिः पञ्चकोऽश्वकः ।।५
तेषां ययातिः पञ्चानां महाबलपराक्रमः ।

वें. १.२२.६

६१. –a) का1 ब3 दे1.9 न1 द1 ग्र2 म1 य इदं, दे2 इमं यः, दे10 यमिमं (→य इमं). –b) द1 ग्र1 म1 °कीर्तनं (→°मुत्तमं); ग्र2 इक्ष्वाकुकुलकीर्तनम्. –d) दे8-10 न1 मुवें. मुए. मुब. देवलोके, ग्र2 ब्रह्मलोके (→स्वर्गलोके); ते1 श्रवणात् पापनिर्मुक्तः.

**पुष्पिका—**

**पुराणनाम**—का1 दे1.2.4-6.8-10 द1 ग्र1.2 मुवें. मुए. इति श्रीकूर्मपुराणे, ब1 इति कौर्मे, ब2.3 दे3 म1 इति कूर्मपुराणे, न1 इति श्रीकौर्मे, ते1 इत्यादिमहापुराणे श्रीकौर्मे, मुब. इति श्रीकौर्मे महापुराणे पूर्वभागे. **अध्यायनाम**—ब2 दे4 न1 ते1. ⊙; का1 ब1.3 दे5 द1 इक्ष्वाकुवंशानुकीर्तने, (ब1 °नं), दे1.2.8-10 मुए. इक्ष्वाकुवंशे, दे3.6 वंशानुकीर्त्तने, ग्र1 म1 इक्ष्वाकुवंशकीर्त्तनं नाम, ग्र2 इक्ष्वाकुवंशकथने, मुवें. इक्ष्वाकुवंशवर्णनं नाम, मुब. सूर्यवंशे इक्ष्वाकुवंशकथनं नाम. **अध्यायसंख्या**—ब1 दे6 द1. ⊙; का1 ब3 दे3-5 न1 ते1 एकोनविंशोऽध्यायः; ब2 ।।१९।।, दे1 मुवें. मुए. मुब. एकविंशोऽध्यायः ।।२१।।, दे2 ग्र2 म1 एकविंशोऽध्यायः, दे8.9 द्वाविंशोऽध्यायः, दे10 एकविंशोध्यायः ।।२१।। श्रीरामचन्द्रार्पणमस्तु ।। शके १८१६ संवत १९५१ मार्गशीर्ष शुक्ल ११ मंदवासरे प्रातः प्रथमप्रहरे दिछेत्युपनामक परभूजातीय कृष्णराव विटलयांचे मूलप्रतिकरून रामचंद्र यश्वंत मराठेयाणी स्वार्थ परार्थलिखितं । श्रीरस्तु । शुभं भवतु ।।, ग्र1 विंशोऽध्यायः.

**२१**

※ ब2 दे1.2 लोमहर्षण उवाच; दे3.4.6.8-10 मुवें. मुए. मुब. सूत उवाच; न1 ग्र1.2 सूतः; ते1 श्री शिवः, +सूतः; द1 म1 श्री सूतः.

१. –a) दे1.10 एलः (→ऐलः); ब1 न1 पुरूरवश्, दे4 पुरूरवा (→पुरूरवाश्); दे1 चास्य (→चाथ). –c) का1 दे1.2 बभूवुश्च (→बभूवुर्हि). –d) ब2 षडिन्द्रोपमतेजसः.

२. –a) ब3 दे1 वायुर्, ग्र2 रायुर् (?) (→मायुर्); दे1 ****, दे4.8-10. °रमायुश्च, द1 ग्र1.2 म1 °रवा(म1 °पा) मायुर् (→°रमावायुर्). –b) ब1 चापि (→चैव). –c) द1 ग्र1 म1 श्रुतायुश् (→शतायुश्); ब2.3 चायुतायुश्, द1 ग्र1.2 म1 च शतायुश् (→च श्रुतायुश्). –d) का1 दिव्यायुश्चो°, ब1 दिव्याश्चैत्रो°, ग्र1 दिव्या वै चो° (→दिव्याश्चैवो°).

३. –a) दे1 आयुषस्तु यथा वीराः. –b) दे6 पंचैतासन्, न1 पञ्च वासन् (→पञ्चैवासन्); न1 महौजसाः (→महौजसः). –c) न1 तनयायां व, ग्र1 °तनयाया वै (→°तनयायां वै) –d) दे6 प्रभाषाम्, ते1 भार्यायां (→प्रभायाम्); का1 ब2.3 दे2.5 विश्रुतं (→नः श्रुतं).

४. –c) दे1 च (→तु). –d) दे6 दायादः (→दायादाः). –d) दे4 पञ्चेन्द्रसम°, मुवें. मुए. मुब. पञ्चेन्द्रोपम°, द1 ग्र1.2 म1 देवेन्द्रसम° (→षडिन्द्रोपम°).

५. –b) दे5 विष्णु° (→विर°); ब1 महाबलः, ब2 महौजसः (→महाबलाः). –c) दे8-10 मुवें. मुए. यातिर् (→यतिर्); ब1 दे5 संजातिर्, ब2 सर्यातिर्, दे1 सर्यातिर्, ग्र2 *** (→संयातिर्); दे4 ग्र1 ययातिर्यातिः संयातिर्. –d) ब1 पञ्चको स्वरः, ब3 दे1.4.8.9 न1 ते1 मुवें. मुए. मुब. पञ्चमोऽश्वकः, दे2 पञ्चमोंशकः, दे10 पञ्चमोश्च सः, द1 ग्र1.2 म1 सोमवंशजाः (→पञ्चकोऽश्वकः). See Cr. Notes.

६. ब1. f ⊙ (द. सं.). –c) का1 ब2 दे6 देवजानीम् (→देवयानीम्); ब1 दे5 सुमनसः (→उशनसः). –d) ब1 दे6

वें. १.२२.६

देवयानीमुशनसः सुतां भार्यामिवाप सः ।
शर्मिष्ठामासुरीं चैव तनयां वृषपर्वणः ॥६
यदुं च तुर्वसुं चैव देवयानी व्यजायत ।
द्रुह्युं चानुं च पूरुं च शर्मिष्ठा चाप्यजीजनत् ॥७
सोऽभ्यषिञ्चदतिक्रम्य ज्येष्ठं यदुमनिन्दितम् ।
पूरुमेव कनीयांसं पितुर्वचनपालकम् ॥८
दिशि दक्षिणपूर्वस्यां तुर्वसुं पुत्रमादिशत् ।
दक्षिणापरयो राजा यदुं ज्येष्ठं न्ययोजयत् ।
प्रतीच्यामुत्तरायां च द्रुह्युं चानुमकल्पयत् ॥९
तैरियं पृथिवी सर्वा धर्मतः परिपालिता ।
राजाऽपि दारसहितो वनं प्राप महायशाः ॥१०
यदोरप्यभवन् पुत्राः पञ्च देवसुतोपमाः ।
सहस्रजित् तथा ज्येष्ठः क्रोष्टुर्नीलोऽजितो रघुः ॥११
सहस्रजित्सुतस्तद्वच्छतजिन्नाम पार्थिवः ।
सुताः शतजितोऽप्यासंस्त्रयः परमधार्मिकाः ॥१२
हैहयश्च हयश्चैव राजा वेणुहयः परः ।
हैहयस्याभवत् पुत्रो धर्म इत्यभिविश्रुतः ॥१३
तस्य पुत्रोऽभवद् विप्रा धर्मनेत्रः प्रतापवान् ।
धर्मनेत्रस्य कीर्त्तिस्तु संजितस्तत्सुतोऽभवत् ॥१४

---

स तां (→सुतां); न$_1$ उपयेमे सुता च सः. –f) दे$_1$ सुतां तु (→तनयां).

७. ब$_1$. a ⊙ (द. सं). –a) दे$_4$ यदुश्च (→यदुं च); द$_1$ ग्र$_1$ म$_1$ मुए. तुर्वशुम्, दे$_{10}$ न$_1$ तुर्वसम् (→तुर्वसुम्). –b) का$_1$ दे$_6$ देवजानी (→देवयानी); दे$_4$ -मजायत (→व्यजायत). –c) का$_1$ दे$_{1-4.8-10}$ न$_1$ द$_1$ ग्र$_{1.2}$ द्रुह्यम् (→द्रुह्युम्); दे$_{1.8.6.}$ चाणुं च, दे$_5$ वातुं च (→चानुं च); दे$_{10}$ पुरं च, ग्र$_1$ पूरं च (→पूरुं च); ब$_2$ द्रुह्युं चानुं पुरुं चैव. –d) दे$_5$ वा व्यजीजनत्, द$_1$ ग्र$_{1.2}$ म$_1$ च व्यजायत (→चाप्यजीजनत्).

८. –a) का$_1$ सोऽभ्यर्षिच्य, दे$_{1.4}$ सोऽभिषिचद् (→सोऽभ्यषिञ्चद्); ग्र$_1$ °दधिक्रम्य (→°दतिक्रम्य). –b) दे$_1$ अरिंदमम्, दे$_{10}$ अनिन्दतम् (→अनिन्दितम्). –c) का$_1$ ब$_{1-3}$ दे$_{1-6.10}$ न$_1$ ते$_1$ द$_1$ ग्र$_{1-2}$ मुवें. मुए. मुब. पुरुमेव, म$_1$ पूर्वमेव (→पूरुमेव). –d) दे$_2$ °कारणं, न$_1$ °पालकः, द$_1$ °कालकं, ग्र$_2$ °पालनं (→°पालकम्); दे$_4$ पितुर्दयितमुत्तमम्.

९. –a) दे$_4$ °पूर्वस्य (→°पूर्वस्यां). –b) का$_1$ द$_1$ ग्र$_1$ म$_1$ मुए. तुर्वशुं, दे$_{1.8.9}$ तुर्वसं, दे$_{10}$ न$_1$ तुर्वशं, ग्र$_2$ दुर्विशं (→तुर्वसुं); दे$_9$ आविशत्, +आदिशत् (→आदिशत्). –c) का$_1$ दे$_3$ दक्षिणां, दे$_4$ दक्षिणो (→दक्षिणा-); का$_1$ -परमो, ब$_1$ -पथयो, दे$_3$ -परमे (→-परयो); दे$_4$ ग्र$_{1.2}$ म$_1$ राज्ये (→राजा); द$_1$ दक्षिणापरयोगेन. –d) दे$_1$ यदु-, दे$_{3.5.6}$ यत्वं (→यदुं), ब$_{2.3}$ दे$_{2.3.6.8-10}$ न$_1$ मुवें. मुए. मुब. श्रेष्ठं (→ज्येष्ठं); दे$_1$ नियोजयत्, दे$_2$ द$_1$ ग्र$_{1.2}$ म$_1$ अयोजयत् (→न्ययोजयत्); दे$_4$ परज्येष्ठनियोजयत्. –e) ब$_3$ उत्तरस्यां, दे$_{9.10}$ उत्तमायां च (→उत्तरायां च). –f) का$_1$ दे$_{1-4.6.8-10}$ न$_1$ द$_1$ ग्र$_1$ द्रुह्यं (→द्रुह्युं); दे$_1$ चाणुं, दे$_2$ चारुं (→चानुं); दे$_1$ व्यकल्पयत् (→अकल्पयत्); ग्र$_2$ दिश्या * नुमकल्पयत्.

१०. –a) न$_1$ इत्थं (→इयं). –b) दे$_2$ प्रति° (→परि°). –c) दे$_4$ दारा° (→दार°). –d) का$_1$ दे$_{1.2}$ ग्र$_2$ म$_1$ प्राप्य (→प्राप); दे$_1$ महायशः (→महायशाः).

११. –c) दे$_1$ सहस्रजितश्च (→सहस्रजित्तथा); दे$_{4.8-10}$ मुवें. मुए. मुब. श्रेष्ठः (→ज्येष्ठः). –d) दे$_1$ क्रोष्टु–, दे$_{4.10}$ क्रोषु–, न$_1$ वलि– (→क्रोष्टुर्); का$_1$ नीलोंजनो, ब$_1$ दे$_8$ मुवें. मुए. मुब. नीलोजिनो, ब$_3$ दे$_2$ नीतो जितो, दे$_4$ नीलौ जितो, दे$_5$ नीतो जिघो, दे$_{9.10}$ नीलौजिनो, द$_1$ ग्र$_1$ म$_1$ नीलजितो, ग्र$_2$ नीलसुते (→नीलोजितो); दे$_2$ लघुः (→रघुः); ब$_2$ क्रोष्टुर्नीलोक्षिजे बभौ, ते$_1$ क्रोष्टुर्नीलोजितारिहा.

१२. –b) °जिच्चैव (→°जिन्नाम). –c) दे$_{4.5}$ सुतान्, न$_1$ सुतः (→सुताः); दे$_4$ दश° (→शत°). द$_1$ पुत्राः, ग्र$_1$ म$_1$ पुंसः (→-प्यासन्); ग्र$_2$ सुताश्च जितः पुंस *. –d) दे$_4$ स्तवः (→त्रयः); ब$_1$ दे$_{3.6.10}$ ग्र$_1$ °धार्मिकः (→°धार्मिकाः).

१३. –a) न$_1$ ग्र$_{1.2}$ हेहयश् (→हैहयश्); दे$_4$ हैहयश्चौहवश्चैव, म$_1$ हेहेयो हिरयश्चैव. –b) ब$_3$ वेणुहयः पुनः, दे$_{1.8-10}$ मुवें. मुए. मुब. वेणुहयश्च यः (दे$_1$ सः), द$_1$ ग्र$_2$ म$_1$ वेणुरयः (ग्र$_2$ °यं) परः, म$_1$ वेणुरथः परः (→वेणुहयः परः) –c) दे$_{9.10}$ हैहय (दे$_{10}$ °या) श्चा–, न$_1$ म$_1$ हेहयस्या–, द$_1$ हैहयास्या–, ग्र$_2$ एकस्या * (→हैहयस्या–).

१४. –a) द$_1$ ग्र$_{1.2}$ म$_1$ विद्वान् (→विप्रा). –b) दे$_{2.4}$ धर्मनेत्राः, दे$_{10}$ धर्मी तत्र (→धर्मनेत्रः); ब$_3$ प्रजा परान् (→प्रतापवान्). –c) ब$_{1.2}$ दे$_{4.9}$ धर्मनेत्रस्तु (→धर्मनेत्रस्य); न$_1$ च, + तु (→तु). –d) का$_1$ संहितस्, ब$_2$ दे$_{2-6.9.10}$ द$_1$ ग्र$_2$ म$_1$ मुब. संज्ञितस्, ते$_1$ समंकिस् (→संजितस्).

महिष्मान् संजितस्याभूद् भद्रश्रेण्यस्तदन्वयः ।
भद्रश्रेण्यस्य दायादो दुर्दमो नाम पार्थिवः ॥१५
दुर्दमस्य सुतो धीमान् धनको नाम वीर्यवान् ।
धनकस्य तु दायादाश्चत्वारो लोकसम्मताः ॥१६
कृतवीर्यः कृताग्निश्च कृतवर्मा तथैव च ।
कृतौजाश्च चतुर्थोऽभूत् कार्त्तवीर्योऽर्जुनोऽभवत् ॥१७
सहस्रबाहुर्द्युतिमान् धनुर्वेदविदां वरः ।
तस्य रामोऽभवन्मृत्युर्जामदग्न्यो जनार्दनः ॥१८
तस्य पुत्रशतान्यासन् पञ्च तत्र महारथाः ।
कृतास्त्रा बलिनः शूरा धर्मात्मानो मनस्विनः ॥१९

शूरश्च शूरसेनश्च धृष्णः कृष्णस्तथैव च ।
जयध्वजश्च बलवान् नारायणपरो नृपः ॥२०
शूरसेनादयः सर्वे चत्वारः प्रथितौजसः ।
रुद्रभक्ता महात्मानः पूजयन्ति स्म शंकरम् ॥२१
जयध्वजस्तु मतिमान् देवं नारायणं हरिम् ।
जगाम शरणं विष्णुं दैवतं धर्मतत्परः ॥२२
तमूचुरितरे पुत्रा नायं धर्मस्तवानघ ।
ईश्वराराधनरतः पिताऽस्माकमभूदिति ॥२३
तानब्रवीन्महातेजा एष धर्मः परो मम ।
विष्णोरंशेन संभूता राजानो यन्महीतले ॥२४ वें.१.२२.२५

१५. –a) दे3.4 महिष्वान् (दे4 °ष्यात्), दे6 सहिस्वात्, दे8-10 मुवें. मुए. महिष्मः, न1 अहिष्ठाः, द1 सहिष्मान् (→महिष्मान्); का1 ब1.2 दे2.3.5.6.8-10 द1 ग्र1.2 म1 संज्ञितस्या° (द1 °स्सो) (→संजितस्या°); ते1 माहिष्मत् संज्ञकस्तस्मात्. –b) का1 भद्रसेनस्, दे1 भ*श्रेणस्, दे6 भद्रसेन्यस्, द1 भद्रः श्रेयस्, ग्र2 भद्रशोह्यस् (→भद्रश्रेण्यस्); दे1 तदन्वये, न1 तदान्वये (→तदन्वयः). –c) दे6 °सेन्यस्य, दे9 °श्रेणस्य, ग्र1 °शोण्यस्य (→°श्रेण्यस्य); ग्र2 भद्रस्य श्रेण्यदायादो. –d) का1 ब2 दे2.5 दुर्मदो, ब3 दुर्गदो (→दुर्दमो).

१६. का1 ब2 दे2.5 दुर्मदस्य, ब1.3 दुर्गदस्य (→दुर्दमस्य). –b) ब2 नवगो, दे1 वनको, दे8-10 मुवें. मुए. मुब. अंधको, ग्र2 तनदो (→धनको). –c) ब2 लवणस्य, दे1 वनकस्य, दे8-10 मुवें. मुए. मुब. अंधकस्य, ग्र2 तनदस्य (→धनकस्य). का1 धनकस्य तु तास्ते च. –d) दे1 ग्र2 °विश्रुताः (→°सम्मताः).

१७. –a) दे3 कृतानग्निः (→कृताग्निश्च). –b) दे1 °धर्माश्च (→°वर्मा त°); दे1 °सुताः (→°सुतः); दे8-10 न1 मुवें. मुए. कृतव (न1 °श)र्मा च तत्सुतः. –c) दे10 सुकृतोजाश्, ग्र1 कृतोजश्च, म1 कृतोऽर्थश्च (→कृतौजाश्च).–d) दे1.8-10 न1 मुवें. मुए. मुब. कृतवीर्यस्तथा(न1 °दा)र्जुनः, ते1 कृतवीर्योऽथ सोऽभवत्.

दे4. १७ b, c मध्ये अधिकम्—

*'जयध्वजश्च बलवान्नारायणपरो नृपः' (= २० cd)

१८. –a) द1 ग्र1.2 म1 धृतिमान् (→द्युतिमान्). –c) द1 म1 तस्य रामोऽभव(म1 °वं)ज्जेता, ग्र1 तस्य रामो बलं जेता.

१९. म1. cd ⊙. –a) दे10 °शतान्वासन्, न1 °दशान्यासन्, म1 °शतं चासीत् (→°शतान्यासन्). –b) न1 °पुत्राः (→तत्र); द1 ग्र1.2 म1 महाबलाः (द1 °लः) (→महारथाः) –c) का1 दे5 धृतास्त्राः, दे4 द1 ग्र1 धृतास्त्र- (→कृतास्त्रा). –d) का1 दे5 तपस्विनः, दे6 जनार्दनः (→मनस्विनः).

२०. –a) ब1 दे8 सूरश्च सूरसेनश्च, ग्र2 शूरसेनश्च वृष्णिश्च. –b) का1 दे2.3.5.6 धृष्टः (दे3 °ष्टं), दे4 द1 म1 वृष्णिः (दे4 °ष्णि), दे9 ग्र1 द्रुष्णः, ते1 वृषः, मुवें. मुए. मुब. कृष्णः (→धृष्णः); दे6 हृष्टः, न1 मुवें. मुए. मुब. धृष्णः (→कृष्णः); ग्र2 वृष्णश्चैव तथैव च. –c) दे10 भगवान् (→बलवान्).

२१. –a) ब1 दे8.10 सूर° (→शूर°); ब3 दे2. 6.8-10 मुवें. मुए. मुब. पूर्वे (→सर्वे). –b) दे5 °जसाः (→°जसः). –c) म1 रुद्रे (→रुद्र-). –d) दे2 केशवं (→शंकरम्).

२२. –a) दे3.4.6 न1 म1 च (→तु). –b) दे2 प्रभुं (→हरिं). –c) दे6 ग्र2 विष्णो (→विष्णुं). –d) न1 देवं तं (→दैवतं); दे6 दैवं धर्मानुतत्परः.

२३. –a) ब1 इव तं, दे2 इति ते (→इतरे); ते1 तत्र (→पुत्रा). –b) दे4 तथा तव (→तवानघ); दे3.6 नायं धर्मतरानघ. –c) दे1.2 म1 °परः, दे4 ततः, ग्र1 °रताः (→°रतः). –d) दे1 इति प्रभुः, दे8-10 मुवें. मुए. मुब. इति श्रुतिः (→अभूदिति).

२४. –b) का1 ब1-3 दे1-3.5.6.8-10 न1 मुवें. मुए. मुब. ह्येष, दे4 यज्ञ-(→एष); का1 ब1-3 दे1.3.6 ग्र2 धर्म-(→धर्मः); दे3 [अ] नघ (→मम). –d) दे2.8.9 मुवें. मुए. ये (→यन्)-.

वें.१.२२.२६ राज्यं पालयताऽवश्यं भगवान् पुरुषोत्तमः ।
पूजनीयो यतो विष्णुः पालको जगतो हरिः ॥२५
सात्त्विकी राजसी चैव तामसी च स्वयंभुवः ।
तिस्रस्तु मूर्त्तयः प्रोक्ताः सृष्टिस्थित्यन्तहेतवः ॥२६
सत्त्वात्मा भगवान् विष्णुः संस्थापयति सर्वदा ।
सृजेद् ब्रह्मा रजोमूर्त्तिः संहरेत् तामसो हरः ॥२७
तस्मान्महीपतीनां तु राज्यं पालयतामयम् ।
आराध्यो भगवान् विष्णुः केशवः केशिमर्दनः ॥२८
निशम्य तस्य वचनं भ्रातरोऽन्ये मनस्विनः ।
प्रोचुः संहारकृद् रुद्रः पूजनीयो मुमुक्षिभिः ॥२९
अयं हि भगवान् रुद्रः सर्वं जगदिदं शिवः ।
तमोगुणं समाश्रित्य कल्पान्ते संहरेत् प्रभुः ॥३०
या सा घोरतरा मूर्त्तिरस्य तेजोमयी परा ।
संहरेद् विद्यया सर्वं संसारं शूलभृत् तया ॥३१
ततस्तानब्रवीद् राजा विचिन्त्यासौ जयध्वजः ।
सत्त्वेन मुच्यते जन्तुः सत्त्वात्मा भगवान् हरिः ॥३२
तमूचुर्भ्रातरो रुद्रः सेवितः सात्त्विकैर्जनैः ।
मोचयेत् सत्त्वसंयुक्तः पूजयेशं ततो हरम् ॥३३
अथाब्रवीद् राजपुत्रः प्रहसन् वै जयध्वजः ।
स्वधर्मो मुक्तये पन्था नान्यो मुनिभिरिष्यते ॥३४
तथा च वैष्णवी शक्तिर्नृपाणां देवता सदा ।
आराधनं परो धर्मो मुरारेरमितौजसः ॥३५

२५. –a) ब2 दे8-10 न1 मुवें. मुए. मुब. पालयिता°, द1 ग्र1 पालयते°, म1 पालयतो° (→पालयता°). –c) दे1.2 ह्यतो, ग्र1 पालयते°, म1 ... –d) ब1 दे4 यस्तु, दे8.9 मुवें. मुए. [ग्र]जितो (→यतो). –d) ब1 दे4 यस्तु, दे8.9 मुवें. मुए. [ग्र]जितो (→यतो). दे1.2.4. 8.9 ग्र1.2 न1 ते1 मुवें. मुए. मुब. जगतां (→जगतो).

२६. –a) दे2 तामसी (→राजसी). –b) दे2 राजसी (→तामसी); दे1.4.8-10 द1 ग्र1.2 मुवें. मुए. स्वयं प्रभुः, म1 स्वयं प्रभोः (→स्वयंभुवः). –c) दे1 ता (→तु). –d) दे5 वृष्टि° (→सृष्टि°); दे1 °मूर्त्तयः (→°हेतवः).

२७. –a) दे1 सर्वात्मा (→सत्त्वात्मा). –c) दे6 राजन् (→सृजेद्); दे3 राज° (→रजो°). –d) ते1 ग्र2 संहार- (→संहरेत्); का1 ब1 तामसीं, ब3 दे6.8-10 न1 ते1 तामसी (न1 °सीर्) (→तामसो).

२८. –b) दे8.9 मुवें. मुए. मुब. इदं, द1 ग्र1.2 म1 अथ (→अयं); दे6.10 स राज्यं पाल(दे6 लय)तामयं. –d) ते1 क्लेश°, ग्र2 केश° (→केशि°); दे10 केशवः केशमर्दिनः.

२९. –a) दे3.6 निविश्य (→निशम्य). –c) दे8-10 न1 द1 ग्र1.2 म1 मुवें. मुए. मुब. °को (→°कृद्).

३०. ब1. ३० b–३३a ⊙ (द. सं.). –a) ब2 अहं (→अयं); दे1 देवः, दे4 इन्द्रः (→रुद्रः). –b) ग्र2 शिवं (→शिवः). –d) दे8-10 मुवें. मुए. मुब. कालान्ते(→कल्पान्ते); दे4 स हरेत् (→संहरेत्).

३१. ब1. ⊙ (द्र. ३० पा. वि.). –a) ब2 दे8.9 न1 द1 ग्र1 म1 मुवें. मुए. मुब. °तमा (→°तरा). –b) ते1 अन्ते, म1 यस्य (→अस्य); दे1.2 शुभा, दे10 पुरा (→परा). –c) दे1 सर्व–, दे8-10 मुवें. मुए. मुब. पूर्वं (→सर्वं); म1 संहरेत् तु तया सर्वं –d) दे1 संसारे, दे10 संहरन् (→संसारं); दे1.3.6 °भृत्तदा, दे4 °वृत्तया, दे9 भृत्तय, दे10 भृत्य या, द1 ग्र1.2 म1 °भृत्तथा (→°भृत्तया).

३२. ब1. ⊙ (द्र. ३० पा. वि.); ग्र2 म1.३२.c-३४b ⊙ (द. सं.). –a) ग्र2 तत्तत् (→ततस्); ग्र1 राजो (→राजा). –b) दे4 द1 विचिन्त्यायं, न1 विचिन्त्योसौ, ग्र1 म1 विचिन्तयन् (→विचिन्त्यासौ); ग्र2 ततो न्याय-जयध्वनिः. –c) द1 जायते (→मुच्यते). –d) दे3.6 सर्वात्मा (→सत्त्वात्मा).

३३. ब1.a ⊙ (द्र. ३० पा. वि); ग्र2 म1. ⊙ (द्र. ३२ पा. वि. ). –b) का1 सेवितैः (→सेवितः) –c) ब1 सत्य-, दे10 स तु (→सत्त्व-); दे4 द1 ग्र1 °संयुक्तं (→°संयुक्तः). –d) दे3 हरिं (→हरं); ब2 ते1 द1 ग्र1 मुब. पूजयेच्च (द1 °त्तु) ततो हरं (द1 °रिं), दे1.2 पूजया शंकरो हरः, दे4 पूजयेच्च ततो शिवं, दे5 पूजाय स ततो हरिः, दे8-10 मुवें. मुए. पूजयेत्सततं हरम्.

३४. दे4. ⊙; ग्र2 म1. ab ⊙ (द्र. ३२ पा. वि.). –b) दे1 स (→प्र-). c–) ब1 दे1 स्वधर्म-, दे5 सधर्मो, दे8.10 अधर्म- (→स्वधर्मो); दे8-10 मुवें. मुए. युंक्तो, द1 नित्यं (→पन्थाः) –d) द1 ग्र1 सर्वे, ग्र2 म1 ततो (→नान्यो); का1 ब2.3 दे5 मुब. उच्यते (→इष्यते).

३५. –a) ब1 दे1.4.6.8.9 न1 ते1 द1 ग्र1 मुवें. मुए. मुब. तथा च वैष्णवीं शक्ति, ग्र2 म1 तथा वै शक्तिरुद्राणां. –b) दे1.8-10 न1 मुवें. मुए. दधतां, दे4 दयितां, ते1 ददतां, द1 ग्र1.2 दे (ग्र2 दै) वतां (→देवता); दे10 सदा, + सतां, द1 ग्र1 तथा, ग्र2 तदा (→सदा). –c) ब1 दे6 आराधन-, दे1 द1 ग्र1 तथा, ग्र2 तदा (→सदा). –c) ब1 दे6 आराधन-, दे1 अराधतो, द1 ग्र1.2 म1 आराध्यते (→आराधनं); ग्र2 परं (→परो). –d) दे5.10 मुरारिर् (→मुरारेर्).

तमब्रवीद् राजपुत्रः कृष्णो मतिमतां वरः ।
यदर्जुनोऽस्मज्जनकः स्वधर्मं कृतवानिति ॥३६
एवं विवादे वितते शूरसेनोऽब्रवीद् वचः ।
प्रमाणमृषयो ह्यत्र ब्रूयुस्ते यत् तथैव तत् ॥३७
ततस्ते राजशार्दूलाः पप्रच्छुर्ब्रह्मवादिनः ।
गत्वा सर्वे सुसंरब्धाः सप्तर्षीणां तदाश्रमम् ॥३८
तानब्रुवंस्ते मुनयो वसिष्ठाद्या यथार्थतः ।
या यस्याभिमता पुंसः सा हि तस्यैव देवता ॥३९
किन्तु कार्यविशेषेण पूजिताश्चेष्टदा नृणाम् ।
विशेषात् सर्वदा नायं नियमो ह्यन्यथा नृपाः ॥४०
नृपाणां दैवतं विष्णुस्तथैव च पुरंदरः ।
विप्राणामग्निरादित्यो ब्रह्मा चैव पिनाकधृक् ॥४१
देवानां दैवतं विष्णुर्दानवानां त्रिशूलभृत् ।
गन्धर्वाणां तथा सोमो यक्षाणामपि कथ्यते ॥४२
विद्याधराणां वाग्देवी साध्यानां भगवान् रविः ।
रक्षसां शंकरो रुद्रः किंनराणां च पार्वती ॥४३
ऋषीणां दैवतं ब्रह्मा महादेवश्च शूलभृत् ।
मनूनां स्यादुमा देवी तथा विष्णुः सभास्करः ॥४४
गृहस्थानां च सर्वे स्युर्ब्रह्मा वै ब्रह्मचारिणाम् ।
वैखानसानामर्कः स्याद् यतीनां च महेश्वरः ॥४५
भूतानां भगवान् रुद्रः कूष्माण्डानां विनायकः ।
सर्वेषां भगवान् ब्रह्मा देवदेवः प्रजापतिः ॥४६　वें.१.२२.४७

---

३६. –a) ग्र$_2$ तां (→तं). –b) न$_1$ °वरं (→°वरः). –c) ग्र$_2$ य दुर्जने समञ्जकं. –d) का$_1$ ब$_3$ दे$_{1.4-6.8-10}$ न$_1$ ते$_1$ ग्र$_1$ म$_1$ मुवें. मुए. मुब. स(→स्व-); दे$_{1.4}$ धर्मः, दे$_5$ धर्मं (→-धर्मं); न$_1$ सदा (→इति); ब$_1$ स्वधर्मजनकानिति.

३७. दे$_1$. cd ⊙. –b) का$_1$ ब$_1$ दे$_{5.8-10}$ सूरसेनो, ग्र$_2$ म$_1$ स तेनोक्तो (→शूरसेनो). –c) न$_1$ प्रामाण्यम् (→प्रमाणम्); ब$_2$ मुनयो (→ऋषयो); ब$_1$ यत्र, न$_1$ सर्वे (→ह्यत्र). –d) का$_1$ दे$_5$ यं, दे$_{3.6.8-10}$ मुवें. मुए. तत्, द$_1$ ग्र$_2$ यस् (→यत्); का$_1$ ग्र$_1$ म$_1$ च, दे$_{3.6}$ द$_1$ ग्र$_2$ तु (→तत्); न$_1$ ब्रूयुस्तेन यथैव तु.

३८. दे$_1$. ab ⊙. –a) ग्र$_2$ °शार्दूल (→शार्दूलाः). –c) दे$_2$ ःससंरभाः, दे$_4$ ससंरब्धाः (→सुसंरब्धाः); दे$_1$ ** सर्वेति संरब्धा. –d) ते$_1$ तथा° (→तदा°).

३९. –a) दे$_6$ ग्र$_2$ तानाब्रुवन् (→तानब्रुवन्). –b) दे$_1$ वशिष्ठाद्या (→वसिष्ठाद्या). –c) दे$_{4.10}$ यो (→या); का$_1$ दे$_{1.3.4}$ °मतः, न$_1$ म$_1$ °हितः (म$_1$ °ता). (→°मता); ब$_1$ पुत्राः (→पुंसः). –d) दे$_4$ स (→सा); दे$_{10}$ ग्र$_2$ देवताः (→देवता); ते$_1$ सा तस्यैव हि देवता; ग्र$_2$ सहिता तस्यैव देवताः.

४०. दे$_{10}$, cd ⊙. –a) धर्म° (→कार्य°). –b) ब$_{1-3}$ दे$_{1.3.8-10}$ ग्र$_{1.2}$ मुवें. मुए. मुब. पूजिता (→पूजिताश्); ग्र$_1$ ज्येष्ठदा, ग्र$_2$ शेषदा (→चेष्टदा); दे$_4$ चिन्तिताश्चेष्टदायिनः. –c) दे$_4$ विशेषः (→विशेषात्); दे$_2$ द$_1$ ग्र$_{1.2}$ सर्वधा, दे$_4$ म$_1$ सर्वथा (→सर्वदा); ब$_1$ दे$_9$ °दानाय, न$_1$ °दा नोयं (→°दा नायं). –d) दे$_{1.3.6}$ नृप, दे$_2$ भवेत् (→नृपाः).

४१. दे$_{10}$. ४१b–४२a ⊙ (द्द. सं.). –a) का$_1$ ब$_{2.3}$ दे$_{3.5.6}$ देवता (→दैवतं). –b) दे$_{1.8.9}$ न$_1$ मुवें. मुए. तथेशश्च, दे$_2$ तथा शेषः (→तथैव च). –c) ग्र$_2$ श्रादिर् (→अग्निर्).

४२. ब$_1$. ४२c–४४b ⊙ (द्द. सं.); दे$_{10}$. a ⊙ (द्द. सं.) (द्र. ४१ पा. वि.); द$_1$. ab ⊙. –a) दे$_{1.3.5}$ देवता (→दैवतं). –b) ब$_2$ दानवानां च (→दानवानां त्रि-); ग्र$_{1.2}$ म$_1$ पिनाक- (→त्रिशूल-); ब$_3$ दे$_{8-10}$ न$_1$ ग्र$_{1.2}$ म$_1$ मुवें. मुए. -धृक् (→-भृत्).

४३. ब$_1$. ⊙ (द्द. सं. द्र. ४२ पा. वि.); ग्र$_2$. b ⊙. –b) दे$_{1.8-10}$ न$_1$ मुवें. मुए. मुब. सिद्धानां, दे$_2$ सिद्धानां, +साध्यानां (→साध्यानां); दे$_{1.8-10}$ न$_1$ मुवें. मुए. मुब. हरिः (→रविः). –d) ग्र$_1$ किंनरीणां (→किंनराणां).

४४. ब$_1$. ab ⊙ (द्द. सं. द्र. ४२ पा. वि.). –a) दे$_{8-10}$ मुवें. मुए. मुब. भगवान् (→दैवतं). –b) दे$_{8-10}$ मुवें. मुए. मुब. त्रिशूल-, द$_1$ ग्र$_{1.2}$ सशूल- (→च शूल-); दे$_2$ ग्र$_2$ -धृक्, दे$_{10}$ -भृत्, + -धृक् (→-भृत्). –c) दे$_2$ मनूनां स्यात्, +मातृणा स्यात्, दे$_{8-10}$ मुवें. मुए. मुब. मान्या स्त्रीणां, ग्र$_1$ मन्मनां स्यात्, ग्र$_2$ जन्मनां स्यात् (→मनूनां स्यात्). –d) का$_1$ सवासवः, ब$_2$ ग्र$_2$ म$_1$ च भास्करः, दे$_6$ प्रभाकरः (→सभास्करः); दे$_{2.4.8-10}$ न$_1$ द$_1$ ग्र$_1$ मुवें. मुए. मुब. तथा विष्वीशभास्कराः.

४५. का$_1$. ⊙. –a) दे$_1$ च सर्वेषां, स धर्मे स्युर् (→च सर्वे स्युर्). –b) ब$_1$ दे$_{8-10}$ मुवें. मुए. मुब. ब्रह्म (→ब्रह्मा); दे$_4$ द$_1$ ग्र$_{1.2}$ म$_1$ च (→वै). –c) ब$_1$ दे$_1$ वैश्वानराणां (→वैखानसानां); ग्र$_1$ कर्म स्यात् (→अर्कः स्याद्).

४६. का$_1$. ab ⊙. –a) म$_1$ भूतानामभवद्रुद्रः. –b) दे$_{4.5}$ विनायकाः (→विनायकः). –d) दे$_{8-10}$ ब्रह्मा देवः (→देवदेवः).

वें.१.२२.४८ इत्येवं भगवान् ब्रह्मा स्वयं देवोऽभ्यभाषत ।
तस्माज्जयध्वजो नूनं विष्ण्वाराधनमर्हति ॥४७
तान् प्रणम्याथ ते जग्मुः पुरीं परमशोभनाम् ।
पालयाञ्चक्रिरे पृथ्वीं जित्वा सर्वरिपून् रणे ॥४८
ततः कदाचिद् विप्रेन्द्रा विदेहो नाम दानवः ।
भीषणः सर्वसत्त्वानां पुरीं तेषां समाययौ ॥४९
दंष्ट्राकरालो दीप्तात्मा युगान्तदहनोपमः ।
शूलमादाय सूर्याभं नादयन् वै दिशो दश ॥५०
तन्नादश्रवणान्मर्त्यास्तत्र ये निवसन्ति ते ।
तत्यजुर्जीवितं त्वन्ये दुद्रुवुर्भयविह्वलाः ॥५१
ततः सर्वे सुसंयत्ताः कार्त्तवीर्यात्मजास्तदा ।
युयुधुर्दानवं शक्तिगिरिकूटासिमुद्गरैः ॥५२
तान् सर्वान् दानवो विप्राः शूलेन प्रहसन्निव ।
वारयामास घोरात्मा कल्पान्ते भैरवो यथा ॥५३
शूरसेनादयः पञ्च राजानस्तु महाबलाः ।
युद्धाय कृतसंरम्भा विदेहं त्वभिदुद्रुवुः ॥५४
शूरोऽस्त्रं प्राहिणोद् रौद्रं शूरसेनस्तु वारुणम् ।
प्राजापत्यं तथा कृष्णो वायव्यं धृष्ण एव च ॥५५

---

४७. -b) ब2 द1 ग्र1.2 म1 देवदेवो (→स्वयं देवो); ब1 दे1.2.8-10 मुवें. मुए. ह्यभाषत, ब2 [ग्र] भ्यभाषत, दे1 ह्यभावत, ग्र2 ह्यतोषत (→[ग्र]भ्यभाषत). -c) ब2.3 दे3.6 नायं, ते1 राजा (→नूनं). -d) ब3 विश्वा°, दे4.6 विष्णु°, दे9.10 विष्णो° (→विष्ण्वा°); दे5 अर्हसि (→अर्हति).

४७ श्लोकात्परं का1 ब1-3 दे2.3.5.6 ते1 मुवें. मुब. पुस्तके अधिकम्—

18. * किन्तु रुद्रेण तादात्म्यं बुद्ध्वा पूज्यो हरिर्नरैः ।
अन्यथा नृपतेः शत्रुं न हरिः संहरेद्यतः ॥

[-1) ब1 तादात्म्ये, दे3.6 मुब. तादात्म्य– (→तादात्म्यं). -2) का1 पालने, ब1 दे5 ते1 नृपते (→नृपतेः); का1 शक्तः, ब2 शत्रुर्, दे3 चक्रं, ते1 शक्रं, मुब. शत्रून् (→शत्रुं); ब2 हरिं (→हरिः); का1 पुनः (→यतः).]

४८. -a) दे8-10 मुवें. मुए. सं– (→तान्); दे4 तं (→ते). -b) दे5 °शोभितां (→°शोभनां). -d) दे1.2.6.8-10 न1 मुवें. मुए. मुब. सर्वान्, दे5 ** (→सर्व–); द1 ग्र1.2 म1 जित्वा शत्रून् रणाजिरे.

४९. -a) द1 विप्रेन्द्रो, ग्र2 विप्रेन्द्र (→विप्रेन्द्रा). -b) दे10 विवेहा (→विदेहो); का1 पार्थिवः (→दानवः). -c) न1 °तत्त्वानां, द1 °भूतानां (→°सत्त्वानां); दे4 ज्योतिष्मती नाम पुरी. -d) ब1 ते1 द1 ग्र1.2 म1 पुरं, ब3 पुरीस्, दे4 सुरं (→पुरीं);

५०. -a) का1 दीनात्मा (→दीप्तात्मा). -d) दे4 नादयेन् (→नादयन्); का1 विदिशो (→वै दिशो); दे10 न1 दशः, दे5 दशा (→दश).

५१. -a) दे2 द1 म1 तन्नाम- (→तन्नाद-); दे2 -स्मरणात् (→-श्रवणात्). -b) दे1 सूर्त्याः, द1 मर्त्यौः (→मर्त्याः); का1 तत्रैव, दे2 तत्र ते (→तत्र ये); का1 ब1-3 दे3-6 ते1 द1 ग्र1.2 म1 वै, दे2 ये (→ते). -d) दे4 दद्रुशुर्, द1 ग्र1.2 ममृदुर् (→दुद्रुवुर्); का1 दे3.5.6 °विक्लवाः (→°विह्वलाः).

५२. का1 a 'संयत्ता' इत्यारभ्य c 'दानवं' यावन् नास्ति;दे8-10. cd ⊙. -a) दे10 तु (→सु-); ब2 स्वयं यत्ताः, दे1 स्वयं पन्नाः, दे5 सुसंपन्नाः, दे3 सुसंसक्ताः, ते1 समापन्नाः, ग्र2 ससंयत्ताः (→सुसंयत्ताः); दे2 ततः सर्वेषु संपन्नाः, दे6 ततः सर्वेषु मद्भक्ताः. -b) का1 ब2.3 दे1.3.5.6 द1 तथा (→तदा). -c) का1 दानवैः (→दानवं).-d) दे4 ग्र2 प्रासपासासि°, दे5 ते1 गिरिकूटस°, न1 गिरिकूटासि°, द1 प्रासपासादि°, ग्र1 म1 प्रासपाशासि°(ग्र1°स्स)(→गिरिकूटासि°). दे8-10 मुवें. मुब. पुस्तके c, d मध्ये अधिकम्:–

* शूरसेनादयः पञ्चराजानस्तु महाबलाः । (=५४ab).

[-1) दे8-10 सूर° (→शूर°).]

५३. दे8-10 मुए. मुब. ⊙; मुवें. cd ⊙; -a) का1 दानवान् विप्राः, मुवें. स हि विपपेन्द्राः (→दानवो विप्राः). -c) दे1 न1 मारयामास (→वारयामास); द1 ग्र1.2 निवारया मास घोरान् (द1 पुरान्), म1 वारयामास स घोरान्.

५४. दे8-10 मुवें. मुए. मुब. ab ⊙. -a) दे1 सर्वे (→पञ्च). -c) न1 युधा च (→युद्धाय); दे3.6 °संभारं, दे4 °संदेहाः, न1 °सौरम्भाः, ते1 °संरब्धा (→°संरम्भाः). -d) ब2 तं प्र°, दे4 द1 ग्र1.2 म1 अभि° (→त्वभि°).

५५. -a) दे1 प्रहणोद् (→प्राहिणोद्); न1 द1 रुद्रं (→रौद्रं). -b) दे8.10 सूर° (→शूर°); दे4 सुवारुणं, ते1 तुवारणं (→तु वारुणं). -c) दे4 द1 ग्र1.2 तथा वृष्णिः, म1 महाविष्णुः (→तथा कृष्णो). -d) का1 वृषः, ब1.3 दे1.3.5.6 धृष्ट, दे4 द1 ग्र1.2 म1 कृष्ण, दे10 धृष्टयुः, न1 धृत, ते1 विष्णुर् (→धृष्ण).

जयध्वजश्च कौबेरमैन्द्रमाग्नेयमेव च ।
भञ्जयामास शूलेन तान्यस्त्राणि स दानवः ॥५६
ततः कृष्णो महावीर्यो गदामादाय भीषणाम् ।
स्पृष्ट्वा मन्त्रेण तरसा चिक्षेप च ननाद च ॥५७
संप्राप्य सा गदाऽस्योरो विदेहस्य शिलोपमम् ।
न दानवं चालयितुं शशाकान्तकसंनिभम् ॥५८
दुद्रुवुस्ते भयग्रस्ता दृष्ट्वा तस्यातिपौरुषम् ।
जयध्वजस्तु मतिमान् सस्मार जगतः पतिम् ॥५९
विष्णुं ग्रसिष्णुं लोकादिमप्रमेयमनामयम् ।
त्रातारं पुरुषं पूर्वं श्रीपतिं पीतवाससम् ॥६०
ततः प्रादुरभूच्चक्रं सूर्यायुतसमप्रभम् ।
आदेशाद् वासुदेवस्य भक्तानुग्रहकारणात् ॥६१
जग्राह जगतां योनिं स्मृत्वा नारायणं नृपः ।
प्राहिणोद् वै विदेहाय दानवेभ्यो यथा हरिः ॥६२
संप्राप्य तस्य घोरस्य स्कन्धदेशं सुदर्शनम् ।
पृथिव्यां पातयामास शिरोऽद्रिशिखराकृति ॥६३
तस्मिन् हते देवरिपौ शूराद्या भ्रातरो नृपाः ।
समाययुः पुरीं रम्यां भ्रातरं चाप्यपूजयन् ॥६४
श्रुत्वाजगाम भगवान् जयध्वजपराक्रमम् ।
कार्त्तवीर्यसुतं द्रष्टुं विश्वामित्रो महामुनिः ॥६५
तमागतमथो दृष्ट्वा राजा संभ्रान्तमानसः ।
समावेश्यासने रम्ये पूजयामास भावतः ॥६६ वें.१.२२.६६

५६. –a) का$_1$ ब$_{1-3}$ दे$_{2-6}$ न$_1$ ते$_1$ द$_1$ ग्र$_{1.2}$ तु (→च); ग्र$_2$ कौबेरः (→कौबेरं). –b) दे$_{10}$ इन्द्रमग्नीय एव च. –c) का$_1$ दे$_{1.5}$ वेगेन (→शूलेन). –d) दे$_{10}$ सदाशिवः (→स दानवः).

५७. –a) द$_1$ तत्र (→ततः); दे$_2$ महातेजा (→महावीर्यो). –b) दे$_{4.6}$ न$_1$ द$_1$ म$_1$ भीषणं (→भीषणां). –c) ब$_2$ दे$_{1.8-10}$ मुवें मुए. मुब. स्पृष्टमात्रेण, ब$_3$ पृष्ट्वा मंत्रेण, न$_1$ सृष्ट्वा मात्रेण (→स्पृष्ट्वा मंत्रेण); ग्र$_1$ शिरसा (→तरसा).

५८. –a) दे$_1$ स (→सा); का$_1$ दे$_6$ गदा घोरा, दे$_{1.2}$ गदा यस्माद्, दे$_4$ द$_1$ ग्र$_{1.2}$ म$_1$ विदेहस्य, न$_1$ ते$_1$ गदाऽस्योरुं (→गदाऽस्योरो). –b) दे$_1$ शिलोपमा (→शिलोपमम्); दे$_4$ द$_1$ ग्र$_{1.2}$ म$_1$ गदा शैलोपमं शिरः. –c) दे$_1$ चालयतुं (→चालयितुं); दे$_{3.6}$ न दानं चालयित्वा तु. –d) ब$_2$ °काचन° ब$_3$ °काऽचल° (→°कान्तक°).

५९. –a) दे$_4$ ददृशुस् (→दुद्रुवुस्); ब$_{1.2}$ दे$_{3.4.5.6}$ ग्र$_2$ °त्रस्ता, म$_1$ °त्रस्तान् (→°ग्रस्ता). –b) का$_1$ दे$_1$ तस्यापि, दे$_5$ तस्यासि, म$_1$ तत्रासि (→तस्याति-). –c) म$_1$ च (→तु). –d) द$_1$ जगतां (→जगतः).

६०. –a) दे$_{8-10}$ मुवें. मुए. मुब. जयिष्णुं (→ग्रसिष्णुं); द$_1$ लोकादीन् (→लोकादिम्); ग्र$_2$ विष्णुः स्मरति लोकादि. –c) ब$_1$ भ्रातरं (→त्रातारं). –d) दे$_5$ °वससां (→°वाससं).

६१. –d) दे$_1$ °णाय तत्, दे$_{8-10}$ न$_1$ मुवें. मुए. °णात्तदा (→°कारणात्).

६२. –b) दे$_5$ दृष्ट्वा (→स्मृत्वा); दे$_6$ नृप, दे$_{10}$ प्रभुः, द$_1$ नृपं (→नृपः). –c) दे$_1$ प्राह° (→प्राहि°); दे$_1$ द$_1$ विदा° (→विदे°). –d) दे$_5$ दानवेन्द्रम् (→दानवेभ्यो)

६३. –a) ग्र$_1$ देशस्य (→घोरस्य). –b) ब$_{1.3}$ स्कन्द° (→स्कन्ध°); ब$_2$ दे$_2$ °र्शनः, ते$_1$ °र्शनं, + °र्शनः (→°र्शनं). –c) दे$_4$ पृथिवी (→पृथिव्यां). –d) ब$_1$ दे$_{1.9}$ न$_1$ ग्र$_1$ °कृति, ब$_3$ दे$_{4.5.10}$ म$_1$ °कृतिः, ते$_{10}$ °कृतेः (→°कृति); ग्र$_2$ शिरोद्रिशिखरं प्रति.

६३ श्लोकात् परं का$_1$ ब$_{1-3}$ दे$_{1-3.5.6}$ ते$_1$ मुवें. अधिकम्:—

19. * तद्धि चक्रं पुरा विष्णुस्तपसाराध्य शंकरम् ।
यस्मादवाप तत्तस्मादसुराणां विनाशकम् ॥

[–1) ते समाराध्य (→तपसाराध्य); दे$_5$ शंकत (→शंकरं). –2) का$_1$ तस्माद् (→यस्माद्); विनाशकृरे (→विनाशकम्). ]

६४. मुवें. ab ६३ श्लोकानन्तरमागतस्य अधिकश्लोक पूर्वं वर्तते. –a) दे$_{10}$ वेद° (→देव°); ग्र$_2$ स तस्मिन्निहिते (देव) रिपौ. –b) न$_1$ नृपः (→नृपाः). –c) न$_1$ पुरं (→पुरीं). –d) ब$_{1.3}$ ते$_1$ चाभ्य-°, दे$_3$ चाथ, न$_1$ वाप्य- (→चाप्य-).

६५. –a) का$_1$ तरसा (→भगवान्). –b) दे$_{8.9}$ कृत्वा जय° (→जयध्वज°); दे$_5$ °क्रमां (→°क्रमं). –c) दे$_5$ कीर्त° (→कार्त्त°); दे$_1$ दृष्टं, दे$_{3.6}$ त्रस्तं, ग्र$_1$ दृष्ट्वा (→द्रष्टुं).

६६. –a) दे$_2$ न$_1$ अतो (→अथो). –b) दे$_{1.8-10}$ मुवें. मुए. मुब. °लोचनः (→°मानसः); दे$_4$ राजानं भ्रान्तमानसः. –c) दे$_2$ तमा° (→समा°); दे$_1$ समादिश्यास्य पुरे रम्ये. –d) दे$_6$ भारत (→भावतः).

वे.१.२२.६६ उवाच भगवन् घोरः प्रसादाद् भवतोऽसुरः ।
निपातितो मया संख्ये विदेहो दानवेश्वरः ॥६७
त्वद्वाक्याच्छिन्नसंदेहो विष्णुं सत्यपराक्रमम् ।
प्रपन्नः शरणं तेन प्रसादो मे कृतः शुभः ॥६८
यक्ष्यामि परमेशानं विष्णुं पद्मदलेक्षणम् ।
कथं केन विधानेन संपूज्यो हरिरीश्वरः ॥६९
कोऽयं नारायणो देवः किंप्रभावश्च सुव्रत ।
सर्वमेतन्ममाचक्ष्व परं कौतूहलं हि मे ॥७०

विश्वामित्र उवाच ।❀

यतः प्रवृत्तिर्भूतानां यस्मिन् सर्वमिदं जगत् ।
स विष्णुः सर्वभूतात्मा तमाश्रित्य विमुच्यते ॥७१
स्ववर्णाश्रमधर्मेण पूज्योऽयं पुरुषोत्तमः ।
अकामहतभावेन समाराध्यो न चान्यथा ॥७२
एतावदुक्त्वा भगवान् विश्वामित्रो महामुनिः ।
शूराद्यैः पूजितो विप्रा जगामाथ स्वमालयम् ॥७३

---

६७. –a) का1 भगवान्, + भगवन्, ब1-3 दे1.2 4-6.8-10 न1 ग्र2 भगवान् (→भगवन्). –b) दे4 प्रमादात् (→प्रसादाद्). –c) ब2 मया युद्धे, ब3 दे5 द1 ग्र1.2 मया सार्धं, दे1 मयास्त्रेण, दे2 महास्त्रेण, दे8-10 मुवें. मुए. मुब. मया सोऽथ, न1 [अ]मुना सार्धं, म1 मया विद्वन् (→मया संख्ये). –d) दे2 दानवोत्तमः, दे4 दानवेश्वरैः, द1 ग्र1 म1 दानवः शरैः (→दानवेश्वरः).

६८. –a) का1 तद्वाक्य°, दे1 त्वद् वाक्य°, दे3 अहं त्व°, दे10 त्वद् वाञ्छा° (→त्वद्वाक्या°); दे2 त्वद् वाक्योदितसंदेहो, दे6 त्वयि संछिन्नसंदेहो. –c) दे 8-10 प्रपन्नं, द1 ग्र1.2 म1 प्रपन्न– (→प्रपन्नः). –d) दे10 शुभः कृतः (→कृतः शुभः).

६९. –c) दे10 तेन (→केन).

७०. –b) दे3.5 सुव्रताः (दे5 °तः) →सुव्रत). –c) ब1 महाचक्ष्व (→ममाचक्ष्व).

७० श्लोकात् परं मुवें. पुस्तके अधिकम्—
20. *जयध्वजस्य वचनं श्रुत्वा शान्तो मुनिस्ततः ।
दृष्ट्वा हरौ परां भक्तिं विश्वामित्र उवाच ह ॥

❀ दे8.9 विश्वामित्र उ.; न1 ते1 द1 ग्र1.2 म1 विश्वामित्रः.

७१. –b) का1 ब1-3 दे1-6.8-10 न1 ते1 मुवें. मुए. मुब. यतो (→इदं). –c) का1 यमा° (→तमा°). –d) द1 ग्र1.2 म1 प्रमुच्यते (→विमुच्यते).

७१ श्लोकात् परं का1 ब2.3 दे1.2.5.8-10 न1 मुवें. मुए. मुब. पुस्तकेषु अधिकम्—
21. *. यमक्षरात् परतरात् परं प्राहुर्गुहाश्रयम् ।
आनन्दं परमं व्योम स वै नारायणः स्मृतः ।
नित्योदितो निर्विकल्पो नित्यानन्दो निरञ्जनः ।
चतुर्व्यूहधरो विष्णुरव्यूहः प्रोच्यते स्वयम् । [4]
परमात्मा परं धाम परं व्योम परं पदम् ।
त्रिपादमक्षरं ब्रह्म तमाहुर्ब्रह्मवादिनः ।
स वासुदेवो विश्वात्मा योगात्मा पुरुषोत्तमः ।
यस्यांशसंभवो ब्रह्मा रुद्रोऽपि परमेश्वरः । [8]

[ब.2.3.7-8 ⊙. –1) का1 दे5 योऽक्षरात्परतो नान्यस्त्रिषु लोकेषु विद्यते, दे1 यमक्षरात्परतो नान्यो त्रिषु लोकेषु विद्यते. –2) न1 शुभः (→स्मृतः); दे1 नारायणाच्युतः (→नारायणः स्मृतः). –4) दे2 °भूयो(→°धरो); दे2 °व्यापः(→°रव्यूहः ); का1 दे2.5 बुधैः, ब2-3 यतः (→स्वयम्). –5) का1 ब2.3 दे1.2.5 व्योम (→धाम); का1 ब2.3 दे1.2.5 धाम (→व्योम); ब2.3 तपः (→पदं). —6) ब3 द्विपादम् (→त्रिपादम्); का1 दे5 यम् (→तम्); का1 ब2.3 दे2.5 वेद° (→ब्रह्म°); ब2.3 °वेदिनः [(→°वादिनः). –8) का1 दे2.5 यस्यांगाद् (दे2 °काद्) भवद् (→यस्यांशसंभवो); न1 यस्यांशांशं भवोद्रो; दे10 ब्रह्मवादिनः (→परमेश्वरः).]

७२. दे3.6. cd ⊙. –a) दे1 न1 स° (→स्व°); दे9.10 °धर्मा° (→°वर्णा°). –b) ब1 पुंसीयां, ब2 दे10 पुंसोऽयं, दे1 मुवें. पुंसां यः, दे2.9 पुंसां यं, दे4.8 द1 ग्र1 म1 मुए. मुब. पुंसायं, ग्र2 पुमांसं (→पूज्योऽयं); दे3.6 परमेश्वरः (→पुरुषोत्तमः). –c) दे1.2.8 द1 मुवें. मुए. अकामाद्, दे9.10 अकामा-, अक्रमाद् (→अकाम–); दे9 -हृत°, दे10 -हुत°, मुवें. मुए. व्रत° (→-हत°); ब1-3 ते1 मुब. रुद्रस्येयं (ब1 ते1 मुब. °स्यायं) परामूर्त्तिर्, न1 अकामश्च न भावेन, ग्र2 जगामादत-भावेन. –d) मुब. इत्या° (→समा°); ब1-3 ते1 विद्या (ते1 नित्या) राध्या (ते1 °यो)न चान्यथा.

अतः परं का1दे5 पुस्तकयोरधिकम्—
*रुद्रस्यायं (का1 °पि) परामूर्त्तिरित्याराध्यो न चान्यथा.
( = ७२cd द्र. पाठभेदः)

७३. –a) दे3 उक्ता (→उक्त्वा). –b) दे1.2.8-10 न1 मुवें. मुए. मुब. महातपाः (→महामुनिः). –c) दे; सु° (→शू°); ग्र2 पूर्वतो (→पूजितो); दे8-10 मुवें. मुए. मुब.

अथ शूरादयो देवमयजन्त महेश्वरम् ।
यज्ञेन यज्ञगम्यं तं निष्कामा रुद्रमव्ययम् ॥७४
तान् वसिष्ठस्तु भगवान् याजयामास सर्ववित् ।
गौतमोऽत्रिरगस्त्यश्च सर्वे रुद्रपरायणाः ॥७५
विश्वामित्रस्तु भगवान् जयध्वजमरिंदमम् ।
याजयामास भूतादिमादिदेवं जनार्दनम् ॥७६
तस्य यज्ञे महायोगी साक्षाद् देवः स्वयं हरिः ।
आविरासीत् स भगवान् तदद्भुतमिवाभवत् ॥७७
य इमं शृणुयान्नित्यं जयध्वजपराक्रमम् ।
सर्वपापविमुक्तात्मा विष्णुलोकं स गच्छति ॥७८ वें१.२२.८७

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायां पूर्वविभागे एकविंशोऽध्यायः ॥२१॥

---

विप्रो (→विप्राः). –d) दे$_{1.2.4.8-10}$ द$_1$ ग्र$_{1.2}$ म$_1$ मुवें. मुए. मुब. आश्रमम् (→आलयं).

७४. –b) ब$_3$ द$_1$ अयजन् तं, ग्र$_2$ अयजन् तत्, म$_1$ अविन्दन्त (→अयजन्त); दे$_3$ अयजन् परमेश्वरं. –d) दे$_{10}$ निष्कामात् (→निष्कामा).

७५. –a) दे$_1$ वशिष्ठस् (→वसिष्ठस्). –b) ब$_1$ दे$_{1.2.8-10}$ मुवें. मुए. मुब. धर्मवित् (→सर्ववित्). –c) दे$_4$ न$_1$ गोतमो (→गौतमो); दे$_1$ गौतमोऽत्र वशिष्ठस्तु, दे$_{8-10}$ मुवें. मुए. मुब. गौतमोऽगस्तिरत्रिश्च. –d) का$_1$ दे$_{3.5.6}$ °परायणान्, दे$_{8-10}$ मुवें. मुए. मुब. °पराक्रमाः, न$_1$ °पराक्रमान् (→°परायणाः).

७६. –c) द$_1$ ग्र$_{1.2}$ भूतानां, म$_1$ देवानां (→भूतादिं).

अतः परं ब$_{1-3}$ दे$_{3.5.6}$ ते$_1$ मुब. अधिकम्—

22. * जयध्वजोऽपि तं विष्णुं रुद्रस्य परमां तनुम् ।
इत्येवं सर्वदा बुद्ध्वा यत्नेनायजदच्युतम् ।

[–2) का$_1$. ⊙; ते$_1$ यज्ञेना° (→यत्नेना°).]

का$_1$ दे$_2$ मुवें. अयं श्लोकः ७७ श्लोकानन्तरमधिकरूपेण वर्तते.

७७. –a) म$_1$ यज्ञं (→यज्ञे). –b) का$_1$ विष्णुराविर्भवत्तदा. –c) का$_1$ तत्रैवासीत् (→आविरासीत्); दे$_{2.4}$ न$_1$ द$_1$ म$_1$ स भागार्थं, दे$_{5.6}$ ते$_1$ ग्र$_{1.2}$ स्वभागार्थं (→स भगवान्).

७८. –a) ब$_{1-3}$ दे$_{1.10}$ न$_1$ ग्र$_2$ म$_1$ इदं (→इमं); का$_1$ ब$_{1-3}$ दे$_{1.3.5.6}$ ते$_1$ मर्त्यो (→नित्यं). –c) ब$_{2.3}$ न$_1$ ते$_1$ ग्र$_2$ विशुद्धात्मा, दे$_{1.2.6.8-10}$ मुवें. मुए. मुब. °विनिर्मुक्तो (→°विमुक्तात्मा). –d) ग्र$_1$ °लोके (→°लोकं); दे$_2$ अवाप्नुयात् (→स गच्छति).

**पुष्पिका—**

**पुराणनाम—**द$_1$. ⊙; का$_1$ दे$_{1.2.4.8-10}$ ग्र$_{1.2}$ म$_1$ मुवें. मुए. इति श्रीकूर्मपुराणे, ब$_1$ इति कौर्मे, ब$_{2.3}$ दे$_{3.5.6}$ इति कूर्मपुराणे, न$_1$ इति श्रीकौर्मे, ते$_1$ इत्यादिमहापुराणे श्रीकौर्मे, मुब. इति श्रीकौर्मे महापुराणे पूर्वभागे. **अध्यायनाम—** ब$_2$ दे$_4$ ते$_1$ द$_1$ ग्र$_{1.2}$ म$_1$. ⊙; का$_1$ ब$_{1.3}$दे.$_{3.5}$ विदेहवंशानुकीर्त्तने (न$_1$ °नं), दे$_{1.8-10}$ न$_1$ मुए. मुब. सोमवंशानुकीर्तने (दे$_{8.9}$ °नं), दे$_2$ राजवंशानुकीर्तने, दे$_6$ विदेहवंशानुकीर्तनं नाम, मुवें. सोमवंशानुकीर्तनं नाम. **अध्यायसंख्या—** ब$_1$ दे$_6$ द$_1$. ⊙; का$_1$ ब$_3$ दे$_{3.4.5}$ न$_1$ ते$_1$ ग्र$_1$ विंशोऽध्यायः, ब$_2$ ॥२०॥, दे$_1$ मुवें. मुब. द्वाविंशोऽध्यायः ॥२२॥, दे$_2$ ग्र$_2$ म$_1$ मुए. द्वाविंशोऽध्यायः, दे$_{8.9}$ त्रयोविंशोऽध्यायः, दे$_{10}$ द्वाविंशतितमोऽध्यायः ॥२३॥ श्री सीतारामचन्द्रार्पणमस्तु.

# २२

सूत उवाच ।❀

वें.१.२३.१ जयध्वजस्य पुत्रोऽभूत् तालजङ्घ इति स्मृतः ।
शतपुत्रास्तु तस्यासन् तालजङ्घाः प्रकीर्तिताः ॥१
तेषां ज्येष्ठो महावीर्यो वीतिहोत्रोऽभवन्नृपः ।
वृषप्रभृतयश्चान्ये यादवाः पुण्यकर्मिणः ॥२
वृषो वंशकरस्तेषां तस्य पुत्रोऽभवन्मधुः ।
मधोः पुत्रशतं त्वासीद् वृषणस्तस्य वंशभाक् ॥३
वीतिहोत्रसुतश्चापि विश्रुतोऽनन्त इत्युत ।
दुर्जयस्तस्य पुत्रोऽभूत् सर्वशास्त्रविशारदः ॥४
तस्य भार्या रूपवती गुणैः सर्वैरलंकृता ।
पतिव्रतासीत् पतिना स्वधर्मपरिपालिका ॥५
स कदाचित् महाभागः कालिन्दीतीरसंस्थिताम् ।
अपश्यदुर्वशीं देवीं गायन्तीं मधुरस्वनाम् ॥६
ततः कामाहतमनास्तत्समीपमुपेत्य वै ।
प्रोवाच सुचिरं कालं देवि रन्तुं मयाऽर्हसि ॥७
सा देवी नृपतिं दृष्ट्वा रूपलावण्यसंयुतम् ।
रेमे तेन चिरं कालं कामदेवमिवापरम् ॥८
कालात् प्रबुद्धो राजा तामुर्वशीं प्राह शोभनाम् ।
गमिष्यामि पुरीं रम्यां हसन्ती साऽब्रवीद् वचः ॥९

**२२**

❀ म1. ⊙; दे8.9 सूत उ.; न1 ग्र1.2 सूतः; ते1 श्रीशिवः, सूतः.

१. –b) का1 दे1.2 न1 द1 ग्र1.2 श्रुतः, दे5 स्मृतः (→स्मृतः). –c) ब1.2 दे2-6.8-10 न1 ते1 द1 ग्र1 म1 मुवें. मुए. मुब. शतं, ग्र2 सप्तं (→शत-); दे1 तस्याभूत् (→तस्यासन्). –d) का1 ब1.2 दे1-3.5 न1 ते1 म1 तालजङ्घः, ग्र2 तालघातः (→तालजङ्घाः); दे8-10 मुवें. मुए. मुब. इति स्मृताः, दे6 प्रकीर्तितः, ग्र2 प्रकी*ताः (→प्रकीर्तिताः).

२. –a) न1 ज्येष्ठा (?) (→ज्येष्ठो); दे3 महवीर्य्यो (→महावीर्यो). –b) ग्र2 वीतिहोत्रोऽभया नृप. –c) ते1 पृथुः (→वृष-). –d) का1 नृ देवा, दे4 न1 यादवान् (→यादवाः). का1 दे4 ग्र1.2 म1 पुण्यकर्मणः (ग्र2 °काः) (→पुण्यकर्मिणः); दे5 यवि: पुण्यकर्मिष्ठ साः.

३. ग्र2. ३d –५c आसीत्' यावत् ⊙ (द्र. सं.). –a) दे6 वृको, ते1 पृथोः, +पृथुः, द1 ग्र1.2 कृष्णो, म1 वृष्णिः (→वृषो); न1 वंशकरं (→वंशकरः). –c) दे1 माधोः, दे4 मधुः, ग्र2 म* (→मधोः); ग्र2 म1 चासीद् (→त्वासीद्). –d) दे1 कृषणः, दे3.6 वृषभाः (दे6 °भः) दे8.9 वृषणः, द1 सुषेणः, ग्र1 म1 वर्षणः (→वृषणः); दे4 वंशवत् (→वंशभाक्).

४. ग्र2. ⊙ (द्र. ३ पा० वि०). –a) ग्र1 वीतिहोत्रस् (→वीतिहोत्र-); दे1.2 वीति (दे1 °त) होत्रस्य पुत्रोऽभूद्. –b) ग्र1 विश्रुतेनन्त (→विश्रुतोनन्त); दे2 उच्यते, ग्र1 इत्युतौ (?), मुवें. मुए. मुब. इत्यतः (→इत्युत); दे1 विश्रवो नाम कथ्यते. –d) म1 सर्वशस्त्रभृतां वरः.

५. ग्र2. a –c 'आसीत्' यावत् ⊙ (द्र. ३ पा. वि). –a) दे1 सुरूपा च, दे2 स्वरूपा च (→रूपवती). –c) दे1.2 पतिव्रता सत्यवती. –d) दे1.6.10 ग्र1 म1 °परिपालका, दे5 °परिपालिता (→°परिपालिका).

६. –a) का1 ग्र1 महाभागाः, दे1 महाराजा, दे8-10 न1 मुवें. मुए. मुब. महाराजः (दे8-10 °ज) (→महाभागः). –b) ग्र2 कालिन्दीश्वर° (→कालिन्दीतीर°); का1 °संश्रितः, ब1.2 दे3.6 °संश्रितां (→°संस्थिताम्); दे4 दे1 कालिन्दीतीरमाश्रितम् (ते1 °तां). –c) दे2 तत्र, दे5 देवं (→देवीं). –d) द1 सुरूपां, ग्र1.2 म1 स्वरूपां (→गायन्तीं); दे1 ते1 मधुरान् (→मधुर-); ब1-3 दे2 म1 मुब. स्वराम्, दे1.8 -श्रुतीं, दे9.10 मुवें. मुए. -श्रुतिं, न1 -स्वनं, ते1 स्वरान् (→स्वनां).

७. दे6. ७a-८b ⊙. –a) ग्र2 * मा° (→कामा°); दे1 ततः कामयमाना तां. –b) दे1 स समीपं (→तत्समीपं). –c) ग्र2 (सं)कालं (→कालं). –d) दे1 °तुमथार्हसि, दे2 °तुमिहार्हसि (→°तुं मयाऽर्हसि); म1 देवि ! मां रन्तुमर्हसि.

८. दे6. ab ⊙; म1. cd ⊙. –a) दे2 वीक्ष्य (→दृष्ट्वा). –b) दे1 °संस्थितम्, म1 °संयुतः (→°संयुतम्). –d) ग्र1 कामदेववशं रयं, ग्र2 तान् देवेन्योनिशं स्वयं.

९. ग्र2. ९c–१३b cd ⊙. (द्र. सं.). –a) दे4 ग्र1.2 म1 प्रमुच्य (→प्रबुद्धो); ब1-3 दे3.5 न1 ते1 म1

न ह्यनेनोपभोगेन भवता राजसुन्दर ।
प्रीतिः संजायते मह्यं स्थातव्यं वत्सरं पुनः ॥१०
तामब्रवीत् स मतिमान् गत्वा शीघ्रतरं पुरीम् ।
आगमिष्यामि भूयोऽत्र तन्मेऽनुज्ञातुमर्हसि ॥११
तमब्रवीत् सा सुभगा तथा कुरु विशांपते ।
नान्ययाऽप्सरसा तावद् रन्तव्यं भवता पुनः ॥१२
ओमित्युक्त्वा ययौ तूर्णं पुरीं परमशोभनाम् ।
गत्वा पतिव्रतां पत्नीं दृष्ट्वा भीतोऽभवन्नृपः ॥१३
संप्रेक्ष्य सा गुणवती भार्या तस्य पतिव्रता ।
भीतं प्रसन्नया प्राह वाचा पीनपयोधरा ॥१४
स्वामिन् किमत्र भवतो भीतिरद्य प्रवर्तते ।
तद् ब्रूहि मे यथा तत्त्वं न राज्ञां कीर्त्तये त्विदम् ॥१५
स तस्या वाक्यमाकर्ण्य लज्जावनतचेतनः ।
नोवाच किञ्चिन्नृपतिर्ज्ञानदृष्ट्या विवेद सा ॥१६
न भेतव्यं त्वया स्वामिन् कार्यं पापविशोधनम् ।
भीते त्वयि महाराज राष्ट्रं ते नाशमेष्यति ॥१७
तदा स राजा द्युतिमान् निर्गत्य तु पुरात् ततः ।
गत्वा कण्वाश्रमं पुण्यं दृष्ट्वा तत्र महामुनिम् ॥१८ वें.१.२३.१८

---

राजासाव्, दे1.2 राजा स(दे1सा), दे4 मानी तां, दे6 राजासीद्, ग्र1.2 रजसाद् (→राजा तां); द1 कालात् प्रमुच्यते राजा. –d) का1 ब1.3 दे3.5.6 हसंती (का1 ब1 °तीं)चा°, दे4 हसंतीत्व°, दे8-10 म1 मुवें. मुए. हसन्तीत्य°, द1 ग्र1 हसंती ह्य° (→हसंती सा°); दे4 द्विजाः (→वचः); न1 हसंतीं प्राप्य साब्रवीत्.

१०. ग्र2. ⊙ (द्र.६ पा. वि). –a) ब3 नह्याननो°, दे2.8-10 मुवें. मुए. मुब. न ह्येतेनो° (→न ह्यनेनो°); दे5 न ह्यनेनोपते गर्भ; न म1 न ह्यनेनैव भोगेन. –b) दे8-10 ग्र1 म1 मुवें. मुए. मुब. भवतो (→भवता); का1 दे4 °सुन्दरी, ब1.3 °सुन्दरः, दे5.6 °सुन्दरा (→°सुन्दर).

११. ग्र2. ⊙ (द्र. ६ पा. वि.); म1. ११-१२ ⊙ (द्र. सं.). –a) द1 तं (→तां); ते1 सुमतिमान् (→स मतिमान्). –b)ब3 शीघ्रतरां, दे4 न1 ते1 द1 तीव्रतरं, दे5 शीघ्रांतरं, दे10 शीघ्रततं (→शीघ्रतरं); ग्र1 गच्छामि प्रदरं पुरीम्. –c) दे3.6 भूयोऽपि (→भूयोऽत्र). –d) दे2 तदनु° (→तन्मेऽनु°); दे5.10 [अ]नुज्ञातं (→[अ]नुज्ञातुं); का1 अर्हति (→अर्हसि); ब2 तन्मे ज्ञातुमिहार्हसि.

१२. ग्र २. ⊙ (द्र. ६ पा. वि.); म1. ⊙ (द्र.११ पा. वि.). –a) दे2.10 ताम् (→तम्); दे3.6 सुगता (→सुभगा). –c) ब1 नान्याया°, दे4 न त्वया°, दे10 नान्य *, द1 नान्यथा° (→नान्यया°); दे4 तव, द1 ग्र1 तत्र (→तावद्). –d) का1 वर्तव्यं, दे4.6 द1 ग्र1 गन्तव्यं, ते1 वक्तव्यं (→रन्तव्यं); द1 भविता (→भवता).

१३. ग्र2. ab ⊙ (द्र. ६ पा. वि.). –a) दे1 ओमि* त्या, ते1 तामित्युक्त्वा (→ओमित्युक्त्वा); दे4 ततो (→ययौ); का1 तूर्ष्णीं, दे5 रूह्वं (→तूर्णं). –c) दे5 पत्न्यां (→पत्नीं). –d) द1 गत्वा (→दृष्ट्वा); का1 भीतोभवे, दे5 भीतोभया, दे10 भीतेभवं (→भीतोऽभवन्).

१४. –b) न1 तीर्या (→भार्या). –c) ब1 दे5 प्रपन्नया, ते1 प्रपन्नया, + प्रसन्नया (→प्रसन्नया); का1 वाचा (→प्राह); दे1 भीती प्राह हसन्नेव, दे8-10 न1 भीतं प्राह प्रसन्नेव (न1 °संनेन). –d) का1 पीनजंघ°, दे1 वचसोन्न° (→वाचा पीन°).

अतः परं दे1 पुस्तके १२-१३ श्लोकौ आवृत्तौ.

१५. –a) दे4 द1 ग्र1.2 म1 किमर्थं (→किमत्र); दे3.6 भवता (→भवतो); दे1 स्वामिक्षेमात्र भवतो. –b) ग्र1.2 म1 अत्र (→अद्य). –c) दे1.8.9 न1 तद् ब्रवीहि, दे2 ब्रूहि मे त्वं (→तद् ब्रूहि मे); ब1 तथा तत्वं, ब3 यथातथ्यं, दे1 यथात्वैतत्, दे 8-10 यथावत्त्वं (→यथा तत्त्वं). –d) का1 राजन्, दे9.10 राजा (→राज्ञां); ब2 कीर्तयेमलम्, दे4 न1 कीर्तये त्वियं, द1 ग्र1.2 म1 कीर्तयेदिदं (→कीर्तये त्विदम्); दे1.2 न भयं कर्तुमर्हसि.

१६. –a) दे5 सा (→स); दे4 न1 ग्र2 तस्य (→तस्या); दे1 तस्याः तद्वाक्यमाकर्ण्य, द1 तस्य वाक्यं समाकर्ण्य, म1 स तस्य वचनं श्रुत्वा. –b) ब1 °चेतसः, दे8-10 मुवें. मुए. मुब. °मानसः, द1 ग्र1.2 म1 °कन्धरः (→°चेतनः); दे1 लज्जावन*मस्तकः. –c) दे3.6 नृपतिः किञ्चित् (→किञ्चिन्नृ-पतिः).

१७. –a) ग्र1 हेतव्यं (→भेतव्यं); ग्र1 तया (→त्वया); दे1.2.8-10 न1 मुवें. मुए. मुब. राजन् (दे9 °जान्) (→स्वामिन्). –b) दे1.2 कुरु (→कार्यं). –c) ग्र1 चित्ते (→भीते); ग्र1 म1 महाराजा (→महाराज). –d) नाशयिष्यति (→नाशमेष्यति).

१८. –a) दे8-10 न1 म1 मुवें. मुए. मुब. ततः (→तदा). –b) ब1 निष्क्रान्तवन्तः, ब2 निष्क्रम्य तु, दे1 निर्गत्स्यानु, दे5 निर्गत्य *, दे10 निर्गच्छतु (→निर्गत्य तु). द1 बहिः (→ततः). –c) द1 रम्यं (→पुण्यं). –d) दे4 रथात्तत्र (→दृष्ट्वा तत्र). दे1 महामतिः, ग्र2 महामुनिः (→महामुनिम्).

वें.१.२३.१६

निशम्य कण्ववदनात् प्रायश्चित्तविधिं शुभम् ।
जगाम हिमवत्पृष्ठं समुद्दिश्य महाबलः ॥ १९

सोऽपश्यत् पथि राजेन्द्रो गन्धर्ववरमुत्तमम् ।
भ्राजमानं श्रिया व्योम्नि भूषितं दिव्यमालया ॥२०

वीक्ष्य मालाममित्रघ्नः सस्माराप्सरसां वराम् ।
उर्वशीं तां मनश्चक्रे तस्या एवेयमर्हति ॥२१

सोऽतीव कामुको राजा गन्धर्वेणाथ तेन हि ।
चकार सुमहद् युद्धं मालामादातुमुद्यतः ॥२२

विजित्य समरे मालां गृहीत्वा दुर्जयो द्विजाः ।
जगाम तामप्सरसं कालिन्दीं द्रष्टुमादरात् ॥२३

अदृष्ट्वाऽप्सरसं तत्र कामबाणाभिपीडितः ।
बभ्राम सकलां पृथ्वीं सप्तद्वीपसमन्विताम् ॥२४

आक्रम्य हिमवत्पार्श्वमुर्वशीदर्शनोत्सुकः ।
जगाम शैलप्रवरं हेमकूटमिति श्रुतम् ॥२५

तत्र तत्राप्सरोवर्या दृष्ट्वा तं सिंहविक्रमम् ।
कामं संदधिरे घोरं भूषितं चित्रमालया ॥२६

संस्मरन्नुर्वशीवाक्यं तस्यां संसक्तमानसः ।
न पश्यति स्म ताः सर्वा गिरिशृङ्गाणि जग्मिवान् ॥२७

तत्राप्यप्सरसं दिव्यामदृष्ट्वा कामपीडितः ।
देवलोकं महामेरुं ययौ देवपराक्रमः ॥२८

स तत्र मानसं नाम सरस्त्रैलोक्यविश्रुतम् ।
भेजे शृङ्गाण्यतिक्रम्य स्वबाहुबलभावितः ॥२९

---

१९. –a) दे$_{9.10}$ निर्दिश्य (→निशम्य); ब$_{2}$ दे$_{2}$ न$_{1}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ °वचनात् (ग्र$_{2}$ °नं), दे$_{10}$ °वदनां (→°वदनात्). –b) दे$_{1}$ ग्र$_{2}$ विधिं शुभां, न$_{1}$ विधीयते (→विधिं शुभं). –c) का$_{1}$ पूज्यं (→-पृष्ठं). –d) दे$_{8-10}$ मुवें. मुए. समुद्दिष्टं (→समुद्दिश्य); दे$_{4}$ महाबलं, ग्र$_{1.2}$ म$_{1}$ महामनाः (→महाबलः).

२०. –a) दे$_{8-10}$ अथ (→पथि); न$_{1}$ राजेंद्र (→राजेन्द्रो); ग्र$_{2}$ सोऽपश्यत् *****. –b) ब$_{2}$ गन्धर्वेश्वर° (→गन्धर्ववर°); ब$_{3}$ व* (→वर). –d) म$_{1}$ °माल्यया (→°मालया).

२१. –a) ब$_{3}$ दे$_{9}$ वीक्ष, ते$_{1}$ दृष्ट्वा, द$_{1}$ दिव्य (→वीक्ष्य); दे$_{3.6}$ वीक्ष्यमाणो ममित्रघ्नः, दे$_{8-10}$ वीक्ष्य (दे$_{9}$ °क्ष) माणो ह्यमित्रघ्नः. –b) दे$_{8-10}$ [अ]प्सरसो, ते$_{1}$ मुवें. मुए. [अ]प्सरसं (→[अ]प्सरसां); दे$_{4}$ वरः, दे$_{9}$ परां, ग्र$_{2}$ वरं (→वराम्). –c) दे$_{4}$ म$_{1}$ तं (→तां); दे$_{10}$ नमः (→मनः). –d) दे$_{4}$ तस्य (→तस्या); ब$_{1}$ एवेतं, दे$_{4}$ म$_{1}$ मेवेयं, दे$_{4}$ एवायं दे$_{9.10}$ एवेहं (→एवेयं); दे$_{5}$ अहनि (→अर्हति); दे$_{1}$ तस्यामेव महामतिः, ग्र$_{2}$ तस्यै वै वायमर्हति.

२२. –a) न$_{1}$ कार्मुको (→कामुको). –b) ब$_{3}$ गन्धर्वाणाञ्च, ब$_{2}$ दे$_{3.6}$ गन्धर्वेण च, दे$_{4.5}$ गंधर्वेणाग्र- (दे$_{5}$ °प्याथ) (→गन्धर्वेणाथ); ग्र$_{2}$ गन्धर्वेणाधनेन हि. –c) ब$_{3}$ सुमहायुद्धं (→सुमहद्युद्धं). –d) दे$_{1.4}$ आदायं, दे$_{6}$ आदा*, द$_{1}$ आहर्तुं (→आदातुं).

२३. दे$_{6}$. २३a-२४b ⊙. –a) दे$_{3}$ निर्जित्य (→विजित्य); दे$_{1.4}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ तरसा (→समरे). –d) का$_{1}$ दृष्टं, दे$_{6}$ दध्मुं (→द्रष्टुं).

२४. दे$_{6}$. ab ⊙. –b) दे$_{2}$ °बाणनि° (→बाणाभि°); दे$_{4.5}$ पीड़िताः (दे$_{5}$ °तां) (→पीडितः). –c) दे$_{4}$ बभ्रा * (→बभ्राम). –d) दे$_{1}$ °स*न्विताम् (→°समन्विताम्).

२५. –a) का$_{1}$ आगम्य, दे$_{4}$ आक्रम्या (→आक्रम्य); दे$_{5.10}$ पार्श्वे (→पार्श्वं). –c) दे$_{4}$ °प्रवरे (→°प्रवरं). –d) दे$_{2.8.9}$ स्मृतं, दे$_{5}$ श्रुतां (→श्रुतम्).

२६. –a) दे$_{3.6}$ म$_{1}$ °वर्यां, दे$_{10}$ ते$_{1}$ °वीर्याः (→°वर्या); द$_{1}$ तत्राप्सरो वराश्चान्या. –b) म$_{1}$ अदृष्ट्वा (→दृष्ट्वा तं); दे$_{4}$ दृष्ट्वा तत् सिं* विक्रमम्. –c) दे$_{10}$ संदस्विरे (→सन्दधिरे). –d) ब$_{1}$ दे$_{1}$ भूषितां (→भूषितं).

२७. –a) ब$_{3}$ दे$_{4}$ सस्मरन्, दे$_{1.5}$ संस्मारं (→संस्मरन्). –b) का$_{1}$ ते$_{1}$ आसक्त°, दे$_{10}$ सतत° (→संसक्त°). –c) न$_{1}$ द$_{1}$ पश्यन्ति (?) (→पश्यति); दे$_{4}$ सम्यक् (→सर्वा). –d) ब$_{1}$ दे$_{2.4.8-10}$ न$_{1}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ मुवें. मुए. मुब. गिरेः (→गिरि-); ब$_{1-3}$ दे$_{2.5.6}$ मुवें. मुए. मुब. -शृङ्गानि (→-शृङ्गाणि).

२८. –a) दे$_{4}$ तत्राप्या° (→तत्राप्य°); ब$_{3}$ द$_{1}$ [अ]प्सरसां (→[अ]प्सरसं); दे$_{5}$ दृष्ट्वा (→दिव्यां). –b) ब$_{3}$ दे$_{1}$ स दृष्ट्वा, ते$_{1}$ अपश्यत् (→अदृष्ट्वा). –c) ब$_{2}$ ग्र$_{2}$ महादेवं, दे$_{5}$ महादेहं (→महामेरुं).

२९. –a) ब$_{3}$ °मासनं (→°मानसं). –b) द$_{1}$ सरस्त्रैलोक्यमुत्तमम्. –c) दे$_{3}$ भोग-(→भेजे); दे$_{4}$ शृङ्गाय°, दे$_{8.9}$ मुवें. मुए. मुब. शृङ्गम°, दे$_{10}$ श्राम्यम° (→शृङ्गाण्य°). –d) दे$_{3.6}$ सु- (→स्व-); दे$_{1}$ °गर्वतः, दे$_{10}$ °भाविनः, ते$_{1}$ °दर्पितः (→°भावितः); दे$_{4}$ स्वभावजलभावितः.

रुक्मिण्यां वासुदेवस्य महाबलपराक्रमाः ।
विशिष्टाः सर्वपुत्राणां संबभूवुरिमे सुताः ।।८१
तान् दृष्ट्वा तनयान् वीरान् रौक्मिणेयाञ्जनार्दनम् ।
जाम्बवत्यब्रवीत् कृष्णं भार्या तस्य शुचिस्मिता ।।८२
मम त्वं पुण्डरीकाक्ष विशिष्टं गुणवत्तमम् ।
सुरेशसदृशं पुत्रं देहि दानवसूदन ।।८३
जाम्बवत्या वचः श्रुत्वा जगन्नाथः स्वयं हरिः ।
समारेभे तपः कर्त्तुं तपोनिधिररिंदमः ।।८४
तच्छृणुध्वं मुनिश्रेष्ठा यथाऽसौ देवकीसुतः ।
दृष्ट्वा लेभे सुतं रुद्रं तप्त्वा तीव्रं महत् तपः ।।८५　बं.१.२४.८६

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायां पूर्वविभागे त्रयोविंशोऽध्यायः ।।२३।।

---

८१. –a) ब$_1$ रुक्मिण्याद्, दे$_3$ रुक्मिण्या, द$_1$ रुक्मिणीं (→रुक्मिण्यां); दे$_{10}$ वासुदेवश्च (→वासुदेवस्य). –b) दे$_{1.4.5}$ ग्र$_2$ °पराक्रमः (→°पराक्रमाः). –c) का$_1$ वसिष्ठाः, दे$_1$ विशिष्टः, द$_1$ वशिष्ठाः, ग्र$_1$ म$_1$ वरिष्ठाः, ग्र$_2$ वरिष्टः (→विशिष्टाः). –d) ते$_1$ इति (→इमे); दे$_4$ सुतः, न$_1$ सुतां (→सुताः).

८२. –a) द$_1$ वीराः (→वीरान्). –b) दे$_{4.9}$ ते$_1$ जनार्दनः, दे$_5$ म$_1$ जनार्दनां, दे$_{8.10}$ द$_1$ ग्र$_{1.2}$ मुवें. मुए. मुब. जनार्द्दनात् (→जनार्दनम्). –c) ग्र$_2$ म$_1$ वाक्यं (→कृष्णं); दे$_{3.6}$ जाम्बवत्प्र (दे$_6$ °त्या) ब्रवीत् कृष्णं. –d) ग्र$_2$ म$_1$ कृष्णं भार्या (→भार्या तस्य); ब$_3$ शुचिः (→शुचि–); दे$_6$ °स्मिताः (→°स्मिता).

८३. –a) दे$_1$ समत्वं, दे$_5$ तान् दृष्ट्वा, द$_1$ न मेत्वं (→मम त्वं); ब$_1$ दे$_{4.5}$ न$_1$ पुण्डरीकाक्षं (→पुण्डरीकाक्ष). –b) का$_1$ दे$_{3.6}$ न$_1$ मुवें. मुए. मुब. विशिष्ट- (→विशिष्टं); का$_1$ ब$_{1-3}$ दे$_{1.3-6.8-10}$ म$_1$ मुवें. मुए. मुब. गुणवत्तरम् (दे$_5$ °रो) (→गुणवत्तमम्). –c) दे$_{3.6}$ सुवेश-, न$_1$ सुदेश- (→सुरेश-); दे$_{1.8}$ न$_1$ मुवें. मुए. मुब. -सम्मितं, दे$_{9.10}$ -सस्मितं (→-सदृशं); ते$_1$ सुरेश्वरेप्सितं पुत्रं, द$_1$ ग्र$_{1.2}$ म$_1$ पुत्रं परमधर्मिष्ठं. –d) दे$_5$ °सूदनः (→°सूदन).

८४. –b) दे$_{4.5}$ ग्र$_{1.2}$ म$_1$ जगन्नाथ (→जगन्नाथः); दे$_1$ हरिः स्वयं (→स्वयं हरिः). –c) दे$_{10}$ जयः (→तपः); द$_1$ ग्र$_{1.2}$ म$_1$ चतुं (→कर्तुं). –d) दे$_{4.6}$ °रिन्दमं (दे$_6$ °म) (→°रिन्दमः).

८५. –a) दे$_{5.6}$ तं शृ (दे$_6$ वृ)णुध्वं, म$_1$ तच्छ्रुत्वा तु (→तच्छृणुध्वं); दे$_{4.5.9.10}$ °श्रेष्ठा (?), ग्र$_2$ °श्रेष्ठ (→°श्रेष्ठा). –c) दे$_1$ कृष्णो, दे$_9$ इष्ट्वा,+दृष्ट्वा (→दृष्ट्वा). –d) का$_1$ तथा, ग्र$_1$ तप्ता (→तप्त्वा); ब$_3$ दे$_5$ तीव्र- (→तीव्रं); दे$_{10}$ महातपः (→महत्तपः).

पुष्पिका —

**पुराणनाम**—का$_1$ इत्यादिमहापुराणे कौर्मे, ब$_{1-3}$ दे$_{2.3.6}$ ग्र$_1$ इति कूर्मपुराणे, दे$_{1.4.8-10}$ द$_1$ ग्र$_2$ म$_1$ मुवें. मुए. इति श्रीकूर्मपुराणे, दे$_5$ इति श्रीमहापुराणे कौर्मे, न$_1$ इति श्रीकौर्मे, ते$_1$ इत्यादिमहापुराणे श्रीकौर्मे, मुब. इति श्रीकौर्मे महापुराणे पूर्वभागे. **अध्यायनाम**—दे$_4$ न$_1$ ते$_1$ द$_1$ ग्र$_{1.2}$ म$_1$. ⊙; का$_1$ ब$_{1-3}$ दे$_{1-3.5.8-10}$ मुए. यदुवंशानुकीर्त्तने, दे$_6$ मुवें. यदुवंशानुकीर्त्तनं नाम, मुब. सोमवंशे यदुवंशानुकीर्तने. **अध्यायसंख्या**—दे$_6$. ⊙; का$_1$ ब$_{1.3}$ दे$_{3-5}$ न$_1$ ते$_1$ द$_1$ ग्र$_1$ द्वाविंशोऽध्यायः, ब$_2$ ।।२२।।, दे$_1$ चतुर्विंशतमोऽध्यायः ।।२४।।, दे$_{2.8.9}$ ग्र$_2$ म$_1$ चतुर्विंशोध्यायः, दे$_{10}$ चतुर्विंशतितमोऽध्यायः ।।२४।। श्रीराम, मुवें. मुए. मुब. चतुर्विंशोऽध्यायः ।।२४।।

# २४

सूत उवाच ।※

बं.१.२५.१ अथ देवो हृषीकेशो भगवान् पुरुषोत्तमः ।
ततापं घोरं पुत्रार्थं निदानं तपसस्तपः ॥१
स्वेच्छयाऽप्यवतीर्णोऽसौ कृतकृत्योऽपि विश्वधृक् ।
चचार स्वात्मनो मूलं बोधयन् भावमैश्वरम् ॥२
जगाम योगिभिर्जुष्टं नानापक्षिसमाकुलम् ।
आश्रमं तूपमन्योर्वै मुनीन्द्रस्य महात्मनः ॥३
पतत्त्रिराजमारूढः सुपर्णमतितेजसम् ।
शङ्खचक्रगदापाणिः श्रीवत्सकृतलक्षणः ॥४
नानाद्रुमलताकीर्णं नानापुष्पोपशोभितम् ।
ऋषीणामाश्रमैर्जुष्टं वेदघोषनिनादितम् ॥५
सिंहर्क्षशरभाकीर्णं शार्दूलगजसंयुतम् ।
विमलस्वादुपानीयैः सरोभिरुपशोभितम् ॥६
आरामैर्विविधैर्जुष्टं देवतायतनैः शुभैः ।
ऋषिकैर्ऋषिपुत्रैश्च महामुनिगणैस्तथा ॥७
वेदाध्ययनसंपन्नैः सेवितं चाग्निहोत्रिभिः ।
योगिभिर्ध्याननिरतैर्नासाग्रगतलोचनैः ॥८

## २४

[दे10 पुस्तके अध्यायारम्भे अधिकम्–श्रीगणेशाय नमः]

※ न1 ग्र1.2 सूतः; ते1 श्रीशिवः,+सूतः; द1 म1 श्रीसूतः.

१. –b) द1 ग्र1.2 म1 देवकीसुतः (→पुरुषोत्तमः). –c) न1 त (पा) ताप (→ततापं); ब2.3 दे3 ते1 पुत्रार्थी (→पुत्रार्थम्); का1 तेपे घोरं च पुत्रार्थं. –d) का1 ब1-3 दे1-3.5.6.8-10 न1 मुवें. मुए. मुब. निधानं (→निदानं); का1 ब2 तपसां तपः, दे4 तपसत्तमः (→तपसस्तपः).

२. –a) दे4 सोवतीर्णो, दे8-10 ह्यवतीर्णो, द1 [अ]प्यवकीर्णो, ग्र1 [अ]प्यवतीर्ण्यो (?) (→[अ]प्यवतीर्णो). –b) ब1 दे8.9 न1 मुवें. मुए. विश्वसृक्, ब2 दे6 ते1 द1 ग्र1.2 म1 विश्वकृत्, दे3 विश्वदृक् (→विश्वधृक्). –c) ते1 जगाम (→चचार); ब2 आत्मनो (→स्वात्मनो). –d) का1 न1 बोधयन्भावमीश्वरं (न1 °रः), दे2 भाषयन् स्थानमैश्वरम्, दे3.6 योधयन् भावमैश्वरं, दे4 द1 ग्र1.2 म1 भावयन्भावमै (ग्र2 °मी) श्वरं, दे8-10 मुवें. मुए. मुब. बोधयन् परमेश्वरम्, ते1 वेदयन् भावमैश्वरं.

३. –a) का1 युष्टं, दे10 दृष्टं (→जुष्टं). –b) दे4 °यक्ष–, ग्र2 °पक्षिस् (→°पक्षि–). –c) ब1 तपम * न्योर्वै, दे1 त्रिणमन्योर्वै, दे2 चोपमन्योर्वै, दे4.10 रूपमन्योर्वै, दे5 त्यूपमन्योर्वै, दे6 –द्रूपमन्योर्वै, द1 उपमन्योर्वै (→तूपमन्योर्वै).

४. –a) दे3.6 पतन्ति (→पतत्त्रि–); दे4.8-10 °मा (दे10 सा) रुढं (→°मारूढः). –b) दे5 ग्र1 °तेजसां (ग्र2 °सः) (→°तेजसं). –c) का1 दे5.8.9 ग्र1.2 म1 °पाणि (का1 ग्र1 म1 °णि ?) (→°पाणिः). –d) दे1.4.8-10 मुवें. मुए. श्रीवत्साङ्कित- (→श्रीवत्सकृत-); दे1 -वक्षसः, दे4.8-10 -लक्षणम् (→-लक्षणः).

५. ग्र1. ५c-६d ⊙ (द्र. सं.). –a) दे4 लता– (→नाना); दे1 °समाकीर्णं (→°लताकीर्णं). –b) दे5 °शोभितां (→°शोभितम्). –c) ते1 युक्तं (→जुष्टं). –d) ब2 वंश° (→वेद°); दे3 °घोषा° (→°घोष°); ते1 ग्र2 म1 °विनादितं (→°निनादितम्); दे4 देवघोषसमाकुलम्.

६. ग्र1. ⊙ (द्र. ५ पा. वि.). –a) दे5 निनाद°, ग्र2 ससिंहा° (→सिंहर्क्ष°); का1 °शरशार्दूल, दे1 °शलभाकीर्णं, दे8.9 °सरभाकीर्णं° (→°शरभाकीर्णं). –b) ब3 शार्दूलं (→शार्दूल–); ब1-3 दे2-6 द1 ग्र2 म1 °संकुलम् (→°संयुतम्); का1 वलवह्निपसंकुलम्. –c) दे8-10 विमलं (→विमल–); दे10 सुरभिश्च शोभितम्.

७. –a) का1 युष्टं (→जुष्टं). –b) का1 शुभं (→शुभैः). –c) दे8-10 ते1 म1 मुवें. मुए. मुब. ऋषिभिर् (→ऋषिकैर्); दे5 °पूर्वैश्च (→°पुत्रैश्च). –d) का1 य1 महामणि°, दे4 सह मुनि° (→महामुनि°).

८. –b) दे1 °होत्रभिः(?) (→°होत्रिभिः). –d) दे1 नासाग्रे न्यस्त, दे4 नासाग्र*त° दे5 मा(?)साग्रमत°, दे6 नाशाग्रगत°, दे8-10 न1 ते1 द1 ग्र1 म1 मुवें. मुए. मुब. नासाग्रन्यस्त°, ग्र2 सा नासान्यस्त° (→नासाग्रगत°).

उपेतं सर्वतः पुण्यं ज्ञानिभिस्तत्त्वदर्शिभिः ।
नदीभिरभितो जुष्टं जापकैर्ब्रह्मवादिभिः ॥९
सेवितं तापसैः पुण्यैरीशाराधनतत्परैः ।
प्रशान्तैः सत्यसंकल्पैर्निःशोकैर्निरुपद्रवैः ॥१०
भस्मावदातसर्वाङ्गैः रुद्रजाप्यपरायणैः ।
मुण्डितैर्जटिलैः शुद्धैस्तथान्यैश्च शिखाजटैः ।
सेवितं तापसैर्नित्यं ज्ञानिभिर्ब्रह्मचारिभिः ॥११
तत्राश्रमवरे रम्ये सिद्धाश्रमविभूषिते ।
गङ्गा भगवती नित्यं वहत्येवाघनाशिनी ॥१२

स तानन्विष्य विश्वात्मा तापसान् वीतकल्मषान् ।
प्रणामेनाथ वचसा पूजयामास माधवः ॥१३
तं ते दृष्ट्वा जगद्योनिं शङ्खचक्रगदाधरम् ।
प्रणेमुर्भक्तिसंयुक्ता योगिनां परमं गुरुम् ॥१४
स्तुवन्ति वैदिकैर्मन्त्रैः कृत्वा हृदि सनातनम् ।
प्रोचुरन्योन्यमव्यक्तमादिदेवं महामुनिम् ॥१५
अयं स भगवानेकः साक्षान्नारायणः परः ।
आगच्छत्यधुना देवः पुराणपुरुषः स्वयम् ॥१६
अयमेवाव्ययः स्रष्टा संहर्त्ता चैव रक्षकः ।
अमूर्त्तो मूर्तिमान् भूत्वा मुनीन् द्रष्टुमिहागतः ॥१७ वें.१.२५.१८

९. –a) दे$_3$ उपेत, दे$_5$ उपते (→उपेतं); दे$_4$ सर्वं तं (→सर्वतः). –b) का$_1$ ज्ञातिभिः, ग्र$_2$ मुनिभिस् (→ज्ञानिभिस्); दे$_4$ द$_1$ ग्र$_{1.2}$ म$_1$ सर्व° (→तत्त्व°). –d) दे$_{3.6}$ जा(दे$_6$ था) परै[ः], दे$_{10}$ ज्ञापकैर्, न$_1$ तावकैर् (→जापकैर्); का$_1$ ब$_1$ दे$_{2.4.5}$ ब्रह्मचारिभिः (→ब्रह्मवादिभिः).

१०. द$_1$ ग्र$_{1.2}$ म$_1$. १०a–११f ⊙ (द्र. सं.). –a) का$_1$ शोभितं (→सेवितं); दे$_1$ पुण्यं (→पुण्यैः). –b) दे$_4$ ईश्वराधन°, दे$_1$ शिवाराधन° (→ईशाराधन°). –c) ब$_3$ प्रशान्तै(श्च), ते$_1$ स्वाचारैः (→प्रशान्तैः); दे$_2$ सर्व° (→सत्य°); दे$_1$ °संकल्पोर् (→°संकल्पैर्). –d) ब$_1$ दे$_{1.2.4}$ ते$_1$ विशोकैर् (→निःशोकैर्); ब$_1$ न्निर*प्लवैः, ब$_{2.3}$ दे$_{3.4.6.8-10}$ ते$_1$ निरुपप्लवैः (→निरुपद्रवैः).

११. द$_1$. ग्र$_{1.2}$ म$_1$. ⊙ (द्र. १० पा. वि.). –a) का$_1$ °वदातैः, दे$_5$ °वदा*(→°वदात-); ब$_3$ दे$_{10}$ सर्वाङ्गे (→सर्वाङ्गैः). –b) ब$_{2.3}$ दे$_{2.3.5}$ न$_1$ ते$_1$ जप्य°, दे$_1$ जाप° (→जाप्य°). –c) दे$_4$ रौक्मिकैर्, दे$_5$ मुंडिते (→मुण्डितैर्); दे$_2$ विविधैः (→जटिलैः); दे$_2$ सिद्धैः (→शुद्धैः). –d) ते$_1$ °जुषैः (→°जटैः); दे$_4$ तथान्यैश्चाशिखोज्वलैः. –e) दे$_2$ चापरैर् (→तापसैर्). –b) ब$_{1.3}$ दे$_{3.4.6}$ न्या(दे$_3$ना)सि (दे$_4$ °शि)भिर्, दे$_{10}$ ज्ञातिभिर् (→ज्ञानिभिर्); दे$_{1.2.4.8-10}$ न$_1$ ते$_1$ मुवें. मुए. मुब. ब्रह्मवादिभिः (→ब्रह्मचारिभिः); का$_1$ संन्यासिभिर्ब्रह्मचारिभिः.

१२. –a) दे$_{10}$ °चरे, न$_1$ °वरं, द$_1$ ग्र$_{1.2}$ म$_1$ °पदे (→°वरे); न$_1$ रम्यं (→रम्ये). –b) म$_1$ विद्या° (→सिद्धा°) दे$_9$ न$_1$ विभूषितं (→विभूषिते). –c) दे$_4$ नित्यं(च) (→नित्यं). –d) का$_1$ दे$_5$ वहते (दे$_5$ °त्ये) चाघनाशिनी, ब$_1$ बहत्येवाहनाशिनी, दे$_1$ वहत्येषौघनाशिनी, दे$_{4.6}$ बहत्येवाघनाशनी (दे$_4$ °नीं), ते$_1$ म(व)हत्यत्राघनाशिनी, द$_1$ ग्र$_{1.2}$ म$_1$ वहत्यघविनाशिनी.

१३. –a) का$_1$ तान्विष्टाति(?), ब$_1$ तान्नि*क्ष्य, ब$_2$ मुवें. मुए. तत्र वीक्ष्य, ब$_3$ मुब. तन्नीरीक्ष्य, दे$_1$ तान्सवीक्ष्य, दे$_{8-10}$ द$_1$ ग्र$_1$ तामन्वीक्ष्य, न$_1$ तानद्वीक्ष्य, ग्र$_2$ म$_1$ तान्वीक्ष्य च (→तानन्विष्य); दे$_4$ स तान्वीक्ष्य विशालात्मा, ते$_1$***** विश्वात्मा. –b) ग्र$_1$ तपसान्, म$_1$ तपसा (→तापसान्); ब$_2$ नष्ट°, दे$_{3.5}$ हीन°, दे$_{10}$ वीक्ष°, न$_1$ क्षीण° (→वीत°); ब$_{1.3}$ दे$_{1.6}$ म$_1$ तापसा (ब$_3$ °सान्) दीनकल्मषान् (दे$_6$ °षः). –c) दे$_3$ प्रमाणेनाथ, ते$_1$ प्रणम्य चाथ (→प्रणामेनाथ).

१४. –a) का$_1$ ब$_{2.3}$ दे$_{3.5.6}$ ते तु, ते$_1$ तेऽथ (→तं ते); ब$_2$ जगन्नाथं (→जगद्योनिं); दे$_4$ तं दृष्ट्वा च जगद्योनिं. –c) दे$_5$ पुण्येयुर् (→प्रणेमुर्). –d) ब$_1$ योगिनी, ग्र$_2$ योगानां, म$_1$ लोकानां (→योगिनां); दे$_{5.6}$ परमां (→परमं).

१५. –a) ग्र$_2$ स्तुवन्तु (→स्तुवन्ति); ते$_1$ वैष्णवैर्विविधैर्मन्त्रैः. –b) द$_1$ ग्र$_{1.2}$ म$_1$ ध्यात्वा (→कृत्वा). –c) दे$_5$ अव्यंगम्, न$_1$ सव्यक्तम्, ते$_1$ अव्यग्राः, ग्र$_2$ संयुक्तं (→अव्यक्तम्). –d) ते$_1$ वासुदेवम् (→आदिदेवं).

१६. –a) ते$_1$ अयं च (→अयं स). –b) दे$_{1.8-10}$ न$_1$ मुवें. मुए. मुब. साक्षी (→साक्षात्); दे$_4$ नारायणा (→नारायणः); द$_1$ ग्र$_{1.2}$ म$_1$ हरिः (→परः). –d) मुवें. मुए. मुब. प्रधान° (→पुराण°); दे$_1$ द$_1$ ग्र$_{1.2}$ म$_1$ °पुरुष[?] (→°पुरुषः).

१७. –a) द$_1$ म$_1$ सृष्टा (→स्रष्टा). –c) दे$_3$ वृद्धान्, दे$_6$ वृद्धा (→भूत्वा). –d) ब$_3$ मुनीन्द्रस्त्वं (→मुनीन् द्रष्टुं); द$_1$ ग्र$_1$ उपागतः (→इहागतः); ग्र$_2$ म$_1$ मुनीन्द्रान् द्रष्टुमागतः.

ं.१.२५.१८ एष धाता विधाता च समागच्छति सर्वगः ।
अनादिरक्षयोऽनन्तो महाभूतो महेश्वरः ।।१८
श्रुत्वा श्रुत्वा हरिस्तेषां वचांसि वचनातिगः ।
ययौ स तूर्णं गोविन्दः स्थानं तस्य महात्मनः ।।१९
उपस्पृश्याथ भावेन तीर्थे तीर्थे स यादवः ।
चकार देवकीसूनुर्देवर्षिपितृतर्पणम् ।।२०
नदीनां तीरसंस्थानि स्थापितानि मुनीश्वरैः ।
लिङ्गानि पूजयामास शंभोरमिततेजसः ।।२१
दृष्ट्वा दृष्ट्वा समायान्तं यत्र यत्र जनार्दनम् ।
पूजयाञ्चक्रिरे पुष्पैरक्षतैस्तत्र वासिनः ।।२२
समीक्ष्य वासुदेवं तं शार्ङ्गशङ्खासिधारिणम् ।
तस्थिरे निश्चलाः सर्वे शुभाङ्गं तन्निवासिनः ।।२३
यानि तत्रारुरुक्षूणां मानसानि जनार्दनम् ।
दृष्ट्वा समाहितान्यासन् निष्क्रामन्ति पुरा हरिम् ।।२४
अथावगाह्य गङ्गायां कृत्वा देवादितर्पणम् ।
आदाय पुष्पवर्याणि मुनीन्द्रस्याविशद् गृहम् ।।२५
दृष्ट्वा तं योगिनां श्रेष्ठं भस्मोद्धूलितविग्रहम् ।
जटाचीरधरं शान्तं ननाम शिरसा मुनिम् ।।२६
आलोक्य कृष्णमायान्तं पूजयामास तत्त्ववित् ।

---

१८. –b) ग्र2 °गच्छन्ति (?) (→°गच्छति); का1 दे5.10 सर्वशः, ते1 सर्वदः (दा), द1 सर्वदा (→सर्वगः). –c) का1 ब1 दे4 न1 ते1 द1 ग्र1 म1 °रक्षरोनन्तो (द1 °न्दो), ब3 दे1.5. °रक्षकोनन्तो, दे2 °रजरोऽनन्तो, ग्र2 °राक्षगो मन्त्रो (→°रक्षयोऽनन्तो). –d) दे1**भूतो, दे9 ग्र2 म1 महादेवो (→महाभूतो).

१९. –a) दे1.8-10 न1 मुवें. मुए. मुब. बुद्ध्वा, दे2 शुद्धो, दे4 द1 ग्र1.2 म1 स्मृत्वा, ते1 मुदा (→श्रुत्वा); ब2 ग्र2 म1 वचस्तेषां (→हरिस्तेषां). –b) दे1 वचसा (?) तिगः, ग्र1 म1 वचनादिकं (ग्र1 °कः), ग्र2 वचनानुगः (→वचनातिगः). –c) द1 ग्र1 स तूष्णीं, ग्र2 म1 तूष्णीं स (→स तूर्णं); दे8 गोविन्दं, द1 गोविन्दे, दे10 ग्र1.2 म1 गोविन्द(?) (→गोविन्दः). –d) का1 ब1-3 दे3-6 महामुनेः, ग्र1 महात्मना (→महात्मनः).

२०. –b) दे1 ते1 द1 ग्र1.2 म1 माधवः (→यादवः); दे3.6 तीर्थे तीर्थसमादरः. –c) ग्र2 चचार (→चकार); दे5 * नुर्, ग्र2 सुतो (→सूनुर्). –d) दे1 दशवर्षं, दे5 (देवा)देवार्षि° (→देवर्षि°).

२१. ब1. २१–२३ b ⊙. –a) न1 तीर्थ° (→तीर°); दे10 * स्थानि, म1 मुवें. मुए. °संस्थाने (→°संस्थानि); दे6 नदीनां नीरजैस्थानि. –b) दे1 * पितानि (→स्थापितानि); का1 दे5 सुरेश्वरैः, दे4 मुनीश्वरः (→मुनीश्वरैः).

२२. ब1. ⊙ (द्र. २१ पा. वि.). –b) का1 ब2.3 दे1-6 न1 द1 ग्र1.2 म1 मुब. तत्र, दे10 तत्र यत्र, ते1 तत्र दृष्ट्वा (→यत्र यत्र). –c) ग्र2 देवै [:] (→पुष्पैः); दे3 पूजया(मासे)श्चक्रिरे पुष्पैर्. –d) दे5 स्तोत्रैस्, ग्र2 रजतैस् (→अक्षतैस्); दे8.10 तत्रवासिभिः, ते1 तपस्विनः, मुवें. मुए. मुब. तन्निवासिनः (→तत्र वासिनः).

२३. दे4. ⊙; ब1. ab ⊙ (द्र. २१ पा. वि.). –a) ग्र1.2 म1 सभाज्य (ग्र2 °ज्यं) (→समीक्ष्य); ते1 तु (→तं). –b) दे5 ग्र2 म1 शंखचक्रासि°, ते1 शंखशार्गासि°, द1 ग्र1 शार्ङ्गचक्रासि° (→शार्ङ्गशङ्खासि°). –c) ते1 दधिरे (→तस्थिरे); दे1 निखिला (→निश्चलाः). –d) का1 शुभ्रान्तस्तन्, ब1 शुभ्रांगस्ते, दे2 शुद्धाङ्ग तं, दे3.6 शुभ्राङ्गान्तं, ते1 सिद्धास्तत्र (→शुभाङ्ग तन्); दे5 शुभ्रा तत्तीरवासिनः, दे8 शुभांगायताननाः, दे9 शुभांगावनताननाः, दे10 शुभांगा च नतानवाः, मुवें. मुए. शुभाङ्गायतमानसाः.

२४. –a) ग्र2 तानि (→यानि); का1 तत्र दिदृक्षूणां, ब2 रुद्रा रुरुक्षूणां, दे10 तत्र तरुरुक्षाणां, ग्र1 तत्र मुमुक्षूणां, ग्र2 यत्रारुरुक्षाणां (→तत्रारुरुक्षूणां). –b) ग्र2 म1 मनोनीतं (→मानसानि). –c) ब3 समाहितोन्यासन्, दे8-10 समाहता (दे10 °तां) न्यासन्, म1 समाहित न्यासन् (→समाहितान्यासन्); ग्र2 दृष्ट्वा हितान्तु स न्यासन्. –d) ब2.3 निष्क्रामन्ति चाङ्गतः. दे1 द1 म1 निष्क्रामत (म1 द1 °न्ति) पुरो हरि°, ते1 भक्तिमन्ति पुरा हरिम्, ग्र1 निष्क्रामन्ति न तान्यतः, ग्र2 निष्णातं त्रिपुरो हरिं, मुब. न निष्क्रामन्ति चाङ्गतः.

२५. –a) ते1 अथावतीर्य (→अथावगाह्य). –b) दे8-10 न1 मुवें. मुए. मुब. देवर्षि° (→देवादि°). –c) का1 ब1 दे2.5 मुब. पुष्पवर्षाणि, दे10 पुण्यचार्याषु (?) (→पुष्पवर्याणि). –d) का1 ब1-3 दे1-6 ते1 द1 ग्र1.2 म1 मुनीशस्य (→मुनीन्द्रस्य); का1 [आ]विशद् गुरुं, + अविशद् गृहं, द1 ग्र1 [आ]विशन् गृहं (→[आ]विशद्गृहं).

२६. ब1 दे4.10. ab ⊙ –a) ब2 तद्, ते1 तु (→तं). –b) दे5 भस्माद्धलितविग्रहां. –c) ते1 जटाजिनधरं, ग्र2 म1 जटापीडधरं (→जटाचीरधरं). –d) का1 दे4.10 नमामि (→ननाम); का1 ब1-3 दे3.6 महीं, दे4 -स्महे (→मुनिम्).

आसने चासमायामास योगिनां प्रथमातिथिम् ॥२७
उवाच वचसां योनिं जानीमः परमं पदम् ।
विष्णुमव्यक्तसंस्थानं शिष्यभावेन संस्थितम् ॥२८
स्वागतं ते हृषीकेश सफलानि तपांसि नः ।
यत् साक्षादेव विश्वात्मा मद्गेहं विष्णुरागतः ॥२९
त्वां न पश्यन्ति मुनयो यतन्तोऽपि हि योगिनः ।
तादृशस्याथ भवतः किमागमनकारणम् ॥३०
श्रुत्वोपमन्योस्तद् वाक्यं भगवान् केशिमर्दनः ।
व्याजहार महायोगी वचनं प्रणिपत्य तम् ॥३१

श्रीकृष्ण उवाच ।❀

भगवन् द्रष्टुमिच्छामि गिरीशं कृत्तिवाससम् ।
संप्राप्तो भवतः स्थानं भगवद्दर्शनोत्सुकः ॥३२
कथं स भगवानीशो दृश्यो योगविदां वरः ।
मयाऽचिरेण कुत्राहं द्रक्ष्यामि तमुमापतिम् ॥३३
इत्याह भगवानुक्तो दृश्यते परमेश्वरः ।
भक्त्या चोग्रेण तपसा तत्कुरुष्वेह यत्नतः ॥३४
इहेश्वरं देवदेवं मुनीन्द्रा ब्रह्मवादिनः । वें. १.२५.३५

२७. –b) दे10 तत्वतः (→तत्त्ववित्). –c) का1 ब1.3 दे2-4.6.10 न1 मुवें. मुए. मुब. वासयामास, ब2 ते1 स्थापयामास, दे1 ग्र1 भोजयामास, ग्र2 भोज*मास, म1 भास*मास (→चासयामास). –d) दे8-10 योगिनं, म1 योगानां (→योगिनां); दे3.6 प्रथमां तिथिम्, ग्र2 प्रमथाधिपं (→प्रथमातिथिं).

२८. –a) दे5 द1 ग्र1 म1 वचसा (→वचसां); द1 ग्र1 म1 योगी (→योनिं); ग्र2 उवाच वासयोगी (?). –b) ब1-3 दे3.5.6 जानानः, दे1 जगा*, दे2 जागतः, दे4 तावानः, न1 ज्ञानानां, ते1 भूतानां (→जानीमः); द1 ग्र1 म1 जानन्नपि परं पदम्, ग्र2 ज्ञानन्नपि परं पदम्. –c) ते1 अद्भुत° (→अव्यक्त°).

२९. –a) ब1 आगतन्ते (→स्वागतं ते); दे5 ग्र2 हृषीकेशं (→हृषीकेश). –b) दे2 द1 ग्र1.2 म1 तपांसि (ग्र2 °पसा) सफलानि नः, दे4 सकलानि तपसां सित. –c) न1 यः (→यत्); ब3 दे4.10 न1 ग्र1.2 म1 देव (→एव); ते1 यन्मेचदेवो विश्वात्मा. –d) का1 दे5 मद्वेश्म, ब1-3 दे3.6 मद्देशं, दे2 मद्गेहे, दे4 सद्गेहो (→मद्गेहं); न1 °गतं (→°गतः); ते1 गृहं विष्णुरुपागतः.

३०. –a) दे3.6 त्वां नमस्यन्ति, न1 तं न पश्यन्ति, ते1 यं न पश्यन्ति (→त्वां न पश्यन्ति). –b) दे1.8.9 न1 मुवें. मुए. मुब. [इ]ह (→हि); ग्र1 योगिनाम् (→योगिनः); ते1 यत्नेनापीह योगिनः. –c) ब1 चादृशस्याथ, दे1 न1 मुवें. मुए. मुब. तादृशस्यात्र, दे3 तादृशस्यापि, दे4 तादृश्यापित, दे8.9 मादृशस्यास्य, दे10 मादृश्यभ्या(?)र्चं, ते1 अदृश्यस्याद्य, द1 ग्र1 म1 तादृशस्यापि (→तादृशस्याथ); दे3 [अ]भवतः, दे8-10 भगवन् (→भवतः).

३१. –a) दे4 °मन्युस्तद् (→°मन्योस्तद्). –b) दे1.2.8-10 ते1 मुवें. मुए. मुब. देवकीसुतः (→केशिमर्दनः). –d) दे8-10 मुवें. मुए. मुब. प्रसन्नं, ग्र2 भवन्तं (→वचनं); दे5.6 तां, न1 कं (→तम्).

❀. द1 ग्र1.2 म1. ⊙; ब1.2 दे2.5.6 मुवें. मुए. कृष्ण उवाच; दे3.8.9 कृष्ण उ.; न1 कृष्णः, ते1 श्रीकृष्णः.

३२. –b) का1 गिरिशं, ब1 त्रिशूलं, द1 ग्र1.2 म1 ईश्वरं (→गिरीशं); ब1 कृत्ति°, + कीर्ति° (→कृत्ति°). –c) ग्र1 संप्राप्ते (→संप्राप्तो); ब1 भगवतः, ग्र2 भगवान् (→भवतः); दे4 स्थाने (→स्थानं). –d) दे1.9.10 न1 ग्र1 भगवन् (दे10 °वान्) (→भगवद्); दे3.6 °नोत्सुकं (→°नोत्सुकः).

३३. –a) ते1 च (→स). –b) ग्र2 विश्व- (→दृश्यो); दे2 ब्रह्म° (→योग°); का1 तत् कुरुष्वेह यत्नतः. –c) द1 ग्र1 म1 यथा, ग्र2 यदा (→मया); दे4 कुत्वाहं, दे5 ग्र1 कुत्राह, ते1 कुशलं, ग्र2 म1 तत्राह (म1 °हं) (→कुत्राहं); का1 मायाविरहतं कुत्र. –d) दे10 प्रक्ष्यामि (→द्रक्ष्यामि); दे10 तद् (→तम्).

३४. –a) न1 मुवें. मुए. मुब प्रत्याह (→इत्याह); दे2 युक्तो, दे5 रुद्रो (→उक्तो). –b) दे2 दृश्यते भगवान् हरः. –c) का1 ब1-3 दे3.4.6.8-10 न1 मुवें. मुए. मुब. भक्त्यैवोग्रेण, दे5 तप्त्वा चोग्रेण, ग्र1 भक्त्यानुग्रेण (→भक्त्या चोग्रेण); का1 मनसा, म1 महता (→तपसा). –d) दे1 कुरुष्वैव (→कुरुष्वेह); का1 दे10 संयुतः, दे8.9 मुवें. मुए. मुब. संयता, न1 संततः (→यत्नतः); दे2 तत् कुरुष्व प्रयत्नतः.

३५. –a) दे5.6 ग्र2 म1 महेश्वरं, ते1 इहैश्वरं (→इहेश्वरं); दे4 ईश्वरं देवदेवं तं. –b) दे5 मुनीन्द्रान् (→मुनीन्द्रा). –c) ब1-3 दे5 ध्यायन्तोत्वा(?)सते (दे3 °तो) देवं, दे1 ध्यायन्ते

वे. १.२५.३६ ध्यायन्तोऽत्रासते देवं जापिनस्तापसाश्च ये ।।३५
इह देवः सपत्नीको भगवान् वृषभध्वजः ।
क्रीडते विविधैर्भूतैर्योगिभिः परिवारितः ।।३६
इहाश्रमे पुरा रुद्रात् तपस्तप्त्वा सुदारुणम् ।
लेभे महेश्वराद् योगं वसिष्ठो भगवानृषिः ।।३७
इहैव भगवान् व्यासः कृष्णद्वैपायनः प्रभुः ।
दृष्ट्वा तं परमं ज्ञानं लब्धवानीश्वरेश्वरम् ।।३८
इहाश्रमवरे रम्ये तपस्तप्त्वा कपर्दिनः ।
अविन्दत् पुत्रकान् रुद्रात् सुरभिर्भक्तिसंयुता ।।३९
इहैव देवताः पूर्वं कालाद् भीता महेश्वरम् ।
दृष्टवन्तो हरं श्रीमन्निर्भया निर्वृतिं ययुः ।।४०
इहाराध्य महादेवं सावर्णिस्तपतां वरः ।
लब्धवान् परमं योगं ग्रन्थकारत्वमुत्तमम् ।।४१
प्रवर्तयामास शुभां कृत्वा वै संहितां द्विजः ।
पौराणिकीं सुपुण्यार्थां सच्छिष्येषु द्विजातिषु ।।४२

---

तपसा देवो, दे2 ते1 ध्यायन्ति साधवो देवं, दे4 ध्यायन्त्युशासिते देवं, दे5 ध्यायन्तो ध्यासते देवं, दे8-10 न1 मुवें. मुए. मुब. ध्यायन्त्याराधयन्त्येनं, द1 ग्र1.2 म1 ध्यायन्त्युपासते देवं. –d) दे1.2.8-10 न1 ते1 मुवें. मुए. मुब. योगिनस्, दे4 जापितस् (→जापिनस्); दे2 ते1 द1 ग्र1.2 म1 तपसा स्व(ते1 त्व)यम् (→तापसाश्च ये).

३६. –a) ग्र2 देवं (→देवः); ग्र2 सपत्नीकं (→सपत्नीको). –b) दे3.6 गोवृषध्वजः (→वृषभध्वजः). –c) द1 क्रीडन्ते (→क्रीडते). –d) दे6 पारिवारितैः, ग्र2 परमाद्रितः (→परिवारितः).

३७. –a) ब2 रुद्रास्, दे1 रुद्रो, दे4.5 न1 द1 रुद्रा(?), दे8-10 मुवें. मुए. मुब. रुद्रं, ते1 रौद्रं, ग्र2 म1 रौद्रे (→रुद्रात्). –c) ब1 महेश्वरो, दे4 ग्र1.2 महेश्वरं, द1 म1 माहेश्वरं (→महेश्वराद्); न1 लेभिरे चेश्वराद्योगं.

३८. –a) ग्र2 इहैवं (→इहैव). –b) दे8-10 मुवें. मुए. स्वयम्. (→प्रभुः). –c) दे8-10 तत् (→तं); दे1 मुवें.मुए. मुब. दृष्ट्वा तं परमेशानं, दे2 दृष्ट्वा परम् ईशानं, ते1 दृष्टवान् परमेशानं. –d) दे1.2 ते1 मुवें. मुए. मुब. ज्ञानमैश्वरम्, दे5 ईश्वरेश्वरां, न1 इदमीश्वरात्, ग्र1 ईश्वरेश्वरः (→ईश्वरेश्वरम्); ग्र2 लब्ध्वा वानीश्वरेश्वरः.

३९. ते1. ३९–४१ ⊙; दे1. ३९a–४०b ⊙. –a) दे4 ग्र1 इहाश्रमे, दे5 इहाश्रमं, ग्र2 शुभाश्रम- (→इहाश्रम-); दे8-10 द1 ग्र1.2 म1 मुवें. मुए. मुब. पदे (→-वरे). –b) न1 कपर्दिनं (→कपर्दिनः). –c) दे2.3.6 मुवें. मुए. मुब. अविन्दन् (→अविन्दत्); का1 पुत्रान् रुद्रान्; ब2 तन्मया रुद्रात्, दे2.5.6 द1 ग्र2 पुत्रकान् रुद्रान्, न1 पुत्र***, म1 पुत्रकान् पुत्रान् (→पुत्रकान् रुद्रात्). –d) दे8-10 सुरेश-, मुवें. मुए. मुब. सूरयो (→सुरभिर्); दे8-10 °संयुतान्, न1 मुवें. मुए. मुब. °संयुताः, ग्र2 °संयुतः (→संयुता).

४०. ते1. ⊙. (द्र. ३९ पा. वि.); दे1. ab ⊙. –a) का1 ब1 द1 ग्र1.2 म1 देवता (?) (→देवताः); ब2 मुब. सर्वाः, द1 [अ]नीतं, ग्र1 [अ]नीका, ग्र2 [अ]धीशं, म1 [अ]तीतं (→पूर्वं); दे8-10 इहैव ते महादेवीं, मुवें मुए. इह देवा महादेवीं. –b) ब1 द1 ग्र1.2 म1 कालातीतो (ब1 °ता, ग्र2 म1 °तं), दे8-10 मुवें. मुए. भवानीञ्च, मुब. कालाद्भीत्या (→कालाद्भीता); दे4 महेश्वरः, मुवें. मुए. महेश्वरीम् (→महेश्वरम्). –c) ब2 मुब. दृष्टवंतयो, दे1 दृष्टवंतं, दे8-10 मुवें. मुए. संस्तुतवन्तो, न1 इष्टवन्तो (→दृष्टवन्तो); का1 दे5 हरं श्रीमान्, ब1 दे4 द1 ग्र1.2 म1 हरे श्रीमान्, दे1.2.8-10 न1 मुवें. मुए. महादेवं (→हरं श्रीमन्). –d) दे1 निर्भयः, दे5 मयार्थं, न1 निर्भयां (→निर्भया); ब1.3 निर्वृतं, दे6 निर्वृतिं (→निर्वृतिं).

४१. ते1. ⊙ (द्र. ३९ पा. वि.). –a) दे4 महादेव (→महादेवं). –b) ब3 दे3.8-10 न1 म1 तपसां (→तपतां). –c) म1 अब्रवीत् (→लब्धवान्); दे1 ज्ञानं (→योगं); ग्र2 स लब्धवानीश्वरं योगं. –d) ग्र2 गन्ध° (→ग्रन्थ°); दे8-10 °कारित्वम् (→°कारत्वम्); दे4 द1 ग्र1.2 म1 एव च (→उत्तमम्).

४२. दे8-10 मुए. ४२c–४४d ⊙; मुवें. cd ⊙. –a) दे3.6 °मासु (→°मास); दे8-10 मुवें. मुए. सतां (→शुभां). –b) दे3.6 सहिता (दे3 °तान्) (→संहितां); ब3 दे1.3.5.6 ते1 द1 ग्र1.2 म1 मुब. द्विजाः, दे8-10 मुवें. मुए. शुभाम् (→द्विजः). –c) दे4 ग्र1.2 पौराणिकां (→पौराणिकीं); का1 दे3-6 सुपुण्यात्मा, ब1 दे1 ग्र2 मुब. सुपुण्यार्थं, ब2 सुपुण्यानां, दे2 सुपुण्यार्थी (→सुपुण्यार्थां); ते1 पौराणीस्म पुरान्यासः, मुए. द्विजः पौराणिकीं पुण्यां. –d) का1 दे4 मच्छिष्येषु, ब1 महिष्येषु, दे2 न1 तच्छिष्येषु, दे5 वशिष्ठेषु, ते1 ग्र1.2 स शिष्येषु, ब1 महिष्येषु,(→सच्छिष्येषु); का1 ब1-3 दे3-6 न1 द1 ग्र1 म1 मुब.

इहैव संहितां दृष्ट्वा कापेयः शांशपायनः ।
महादेवं चकारेमां पौराणीं तन्नियोगतः ।
द्वादशैव सहस्राणि श्लोकानां पुरुषोत्तम ॥४३
इह प्रवर्तिता पुण्या द्व्यष्टसाहस्त्रिकोत्तरा ।
वायवीयोत्तरं नाम पुराणं वेदसंमितम् ।
इहैव ख्यापितं शिष्यैः शांशपायनभाषितम् ॥४४
याज्ञवल्क्यो महायोगी दृष्ट्वाऽत्र तपसा हरम् ।
चकार तन्नियोगेन योगशास्त्रमनुत्तमम् ॥४५
इहैव भृगुणा पूर्वं तप्त्वा वै परमं तपः ।
शुक्रो महेश्वरात् पुत्रो लब्धो योगविदां वरः ॥४६
तस्मादिहैव देवेशं तपस्तप्त्वा महेश्वरम् ।
द्रष्टुमर्हसि विश्वेशमुग्रं भीमं कपर्दिनम् ॥४७
एवमुक्त्वा ददौ ज्ञानमुपमन्युर्महामुनिः ।
व्रतं पाशुपतं योगं कृष्णायाक्लिष्टकर्मणे ॥४८
स तेन मुनिवर्येण व्याहृतो मधूसूदनः ।
तत्रैव तपसा देवं रुद्रमाराधयत् प्रभुः ॥४९    वें.१.२५.४८

---

द्विजोत्तमाः, ग्र$_{2}$ द्विजोत्तमात् (→द्विजातिषु); मुए. प्रसादेन द्विजोत्तमैः.

४३. दे$_{1}$. ४३–४४ ⊙; दे$_{8-10}$ मुए. ⊙. –a) ब$_{1}$ सहिता, ब$_{3}$ दे$_{3}$ ग्र$_{1.2}$ सहितान्, दे$_{4.6}$ संस्थिता (दे$_{4}$ °तां), म$_{1}$ सहितं (→संहितां); ब$_{2}$ कृत्वा (→दृष्ट्वा). –b) ब$_{1.3}$ कांपेयः, दे$_{2}$ क (क) वयः, दे$_{4}$ कौपेयं, दे$_{5}$ कार्ये यत्, मुवें. कामो यः (→कापेयः); का$_{1}$ दे$_{3.6}$ सांसपायनः, दे$_{2}$ शासया पुनः, दे$_{5}$ सांख्यतत्परः, न$_{1}$ शिशपायिनः, मुवें. शशिपायिनः (→शांशपायनः); ते$_{1}$ कृष्णद्वैपायनो मुनिः, द$_{1}$ ग्र$_{1.2}$ म$_{1}$ कापे (ग्र$_{1}$ °व्ये)यस्यांशुपायिनः. –c) दे$_{3.4}$ द$_{1}$ ग्र$_{1}$ म$_{1}$ मुवें. महादेवश्, ग्र$_{2}$ महादेवा (→महादेवं); द$_{1}$ ग्र$_{1.2}$ म$_{1}$ चका (ग्र$_{2}$ °कै) रैकां (→चकारेमां). –d) ते$_{1}$ °नियोजितः (→°नियोगतः). –e) का$_{1}$ सहस्राणां (→सहस्राणि). –b) का$_{1}$ ब$_{1.2}$ दे$_{3.4.6}$ ते$_{1}$ न$_{1}$ ग्र$_{2}$ पुरुषोत्तमः (→पुरुषोत्तम).

४४. दे$_{1.8-10}$ मुए. ad ⊙. –a) ब$_{1.2}$ द$_{1}$ ग्र$_{1}$ प्रवर्तिताः (द$_{1}$ ग्र$_{1}$ °तां), दे$_{2}$ संकीर्तिता (→प्रवर्तिता); द$_{1}$ ग्र$_{2}$ पुण्यां, ग्र$_{1}$ पुण्यान् (→पुण्या). –b) ब$_{1}$ द$_{1}$ व्यष्ट-, ब$_{2.3}$ मुब. अष्ट-, दे$_{3}$ ध्यष्ट-, दे$_{4}$ द्वयाष्ट- (→द्व्यष्ट-); ब$_{2.3}$ -कोत्तराः, दे$_{4}$ -कान्तरं, द$_{1}$ ग्र$_{1.2}$ -कोत्तरां (→-कोत्तरा); दे$_{5}$ व्यध्य-साहीस्रकोत्तरः (?), म$_{1}$ द्व्यष्टसाहस्रकोत्तरं. –c) ग्र$_{2}$ नामं (→नाम). –d) ग्र$_{2}$ देव° (→वेद°); मुवें. सम्मतम् (→°सम्मितम्). –e) दे$_{8.9}$ ग्र$_{2}$ इहैवं (→इहैव); ब$_{1}$ ख्यापिता, न$_{1}$ ख्यातितं (→ख्यापितं). –f) का$_{1}$ दे$_{3.5}$ सांसपायन-, दे$_{1.8-10}$ ते$_{1}$ वैशम्पायन-, दे$_{8}$ साप्तपायन-, द$_{1}$ ग्र$_{1.2}$ म$_{1}$ शां (ग्र$_{2}$ ह्यां) तपाय च (→शांशपायन-).

४४ श्लोकस्य d चरणानन्तरं दे$_{8-10}$ मुवें. पुस्तके अधिकम्–
* द्विजः पौराणिकीं पुण्यां प्रसादेन द्विजोत्तमैः.
(=४२ cd).

४५. –a) दे$_{3}$ याज्ञवल्थ्यो, दे$_{5}$ याज्ञवल्क्यां, ग्र$_{2}$ याज्ञवल्को (→याज्ञवल्क्यो). –b) दे$_{1.4}$ दृष्ट्वा च, दे$_{3.6}$ दृष्ट्वा तं (→दृष्ट्वात्र); दे$_{8}$ तपसां, द$_{1}$ तपसो (→तपसा); दे$_{5}$ हरः (→हरं); ते$_{1}$ दृष्टवानत्र भास्करम्. –c) द$_{1}$ स (→तत्).

४६. दे$_{8.9}$ ४५c–४६b ⊙ (द्र. सं.). –a) द$_{1}$ ग्र$_{1.2}$ म$_{1}$ भो (ग्र$_{1}$ भोः) भृगुः (→भृगुणा). –b) दे$_{1}$ मुवें. मुए. मुब. तप्त्वा पूर्वं महातपः, दे$_{2}$ तप्त्वा चैव महत्तपः, दे$_{8-10}$ तपस्तप्त्वा सुदुश्च (दे$_{10}$ °ष्क) रं, न$_{1}$ तप्त्वातीवमहत्तपः, ते$_{1}$ तपस्तप्त्वा महातपः. –c) का$_{1}$ दे$_{4.5}$ द$_{1}$ ग्र$_{1}$ म$_{1}$ शुक्रं (दे$_{5}$ °कं); दे$_{6}$ सुक्रो(?), ग्र$_{2}$ सुखम् (→शुक्रो); का$_{1}$ पूर्वं, दे$_{5}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ पुत्रं (→पुत्रो). –d) का$_{1}$ दे$_{4.5}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ लब्ध्वा (दे$_{5}$ °ब्ध ?) (→लब्धो); का$_{1}$ दे$_{4.5}$ ग्र$_{1}$ वरं (→वरः).

४७. दे$_{8.9}$. ab ⊙. –a) दे$_{1.6}$ मुवें. मुए. मुब. देवेश (→देवेशं). –b) दे$_{5}$ तप्त्वो, दे$_{10}$ तप्ता (→तप्त्वा); का$_{1}$ ब$_{1-3}$ दे$_{3-6}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ कपर्दिनं, मुवें, मुए. मुब. सुदुश्चरम् (→महेश्वरम्). –c) ग्र$_{2}$ दृष्ट्वाम् (→द्रष्टुम्); ते$_{1}$ अर्हति (→अर्हसि); ब$_{2}$ विश्वात्मा, दे$_{2}$ लोकेशं (→विश्वेशम्). –d) का$_{1}$ ब$_{2}$ दे$_{5}$ रुद्रं (→उग्रं); का$_{1}$ दे$_{4.5}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ महेश्वरं, ते$_{1}$ भयङ्करम् (→कपर्दिनम्).

४८. –a) दे$_{3}$ उक्ता (→उक्त्वा); का$_{1}$ ययौ, दे$_{10}$ तु तौ (→ददौ); का$_{1}$ शीघ्रं (→ज्ञानं); न$_{1}$ उपमन्युं (→उपमन्युर्); ब$_{3}$ °मतिः (→°मुनिः). –c) दे$_{4.5}$ पाशुपतिं (दे$_{5}$ °तां) (→पाशुपतं); दे$_{2}$ धीरं, दे$_{4}$ योगीं (→योगं). –d) का$_{1}$ कृष्णाय, दे$_{4}$ कृष्णायां (→कृष्णाया-); दे$_{1}$ -कृष्टकर्मणे, दे$_{4}$ °क्लिष्टकर्मणां (→°क्लिष्टकर्मणे).

४९. –a) ग्र$_{2}$ तन्तेन (→स तेन); ब$_{2.3}$ °वाक्येन, द$_{1}$ °वीर्येण (→°वर्येण). –b) दे$_{8}$ ते$_{1}$ मुवें. व्यहृतो (?) (→व्याहृतो). –c) ग्र$_{1.2}$ म$_{1}$ तथैव (→तत्रैव); दे$_{10}$ द$_{1}$ तपसो (→तपसा), ग्र$_{1.2}$ द$_{1}$ देवो (→देवं). –d) दे$_{8-10}$ आराधयन् (→आराधयत्); का$_{1}$ ब$_{1.2}$ दे$_{2.3.5.6.8-10}$ प्रभु (→प्रभुः).

वें.१.२५.४६ भस्मोद्धूलितसर्वाङ्गो मुण्डो वल्कलसंयुतः ।
जजाप रुद्रमनिशं शिवैकाहितमानसः ॥५०

ततो बहुतिथे काले सोमः सोमार्धभूषणः ।
अदृश्यत महादेवो व्योम्नि देव्या महेश्वरः ॥५१

किरीटिनं गदिनं चित्रमालं
पिनाकिनं शूलिनं देवदेवम् ।
शार्दूलचर्माम्बरसंवृताङ्गं
देव्या महादेवमसौ ददर्श ॥५२

परश्वधासक्तकरं त्रिनेत्रं
नृसिंहचर्मावृतसर्वगात्रम् ।
समुद्गिरन्तं प्रणवं बृहन्तं
सहस्रसूर्यप्रतिमं ददर्श ॥५३

प्रभुं पुराणं पुरुषं पुरस्तात्
सनातनं योगिनमीशितारम् ।
अणोरणीयांसमनन्तशक्तिं
प्राणेश्वरं शंभुमसौ ददर्श ॥५४

न यस्य देवा न पितामहोऽपि
नेन्द्रो न चाग्निर्वरुणो न मृत्युः ।
प्रभावमद्यापि वदन्ति रुद्रं
तमादिदेवं पुरतो ददर्श ॥५५

तदान्वपश्यद् गिरिशस्य वामे
स्वात्मानमव्यक्तमनन्तरूपम् ।
स्तुवन्तमीशं बहुभिर्वचोभिः
शङ्खासिचक्रार्पितहस्तमाद्यम् ॥५६

---

५०. –a) द$_1$ भस्माद्धूलित° (→भस्मोद्धूलित°). –b) दे$_4$ द$_1$ ग्र$_{1.2}$ म$_1$ जटी, ते$_1$ कृष्णो (→मुण्डो); का$_1$ ब$_{1-3}$ दे$_{2-6}$ न$_1$ ते$_1$ द$_1$ ग्र$_{1.2}$ म$_1$ °संवृतः (→°संयुतः). –c) का$_1$ तताप (→जजाप); दे$_1$ ते$_1$ मनसा, द$_1$ ग्र$_{1.2}$ म$_1$ ईशानं (→अनिशं). –d) दे$_6$ शिवोरहित°, ग्र$_1$ शिवेकाहित°, ग्र$_2$ शैविकाहित° (→शिवैकाहित°).

५१. –a) दे$_2$ तथा, ग्र$_2$ गते (→ततो). –b) दे$_{10}$ सौम्यः, द$_1$ साःम, मुब. सोमं (→सोमः). –c) ब$_3$ अदृश्यते (→अदृश्यत). –d) दे$_{3.6}$ देव्यो, दे$_5$ सोम्नि (→व्योम्नि) ; ब$_2$ ग्र$_1$ देव (→देव्या) ; द$_1$ ग्र$_1$ समन्वितः, ग्र$_2$ समाहितः, म$_1$ सहागतः (→महेश्वरः).

५२. –a) ते$_2$ त्रिशूलिनं (→किरीटिनं); दे$_{10}$ (च) गदिनं, ग्र$_1$ म$_1$ जटिनं (→गदिनं) ; का$_1$ शोभमानं, ब$_{2.3}$ चित्रमाल्यं, दे$_4$ द$_1$ ग्र$_{1.2}$ म$_1$ सा (दे$_4$ चा) क्षमालं, दे$_5$ विभ्रमानं (→चित्रमालं). –b) दे$_{10}$ देवदेवेश (→देवदेवम्). –c) ते$_1$ रुद्राक्ष° (→शार्दूल°); का$_1$ द$_1$ ग्र$_{1.2}$ म$_1$ °चर्मावृतसर्वगात्रं, दे$_5$ °चर्मांबरसंकृतांगं (→°चर्माम्बरसंवृताङ्गम्).

५३. दे$_{8-10}$ ग्र$_{1.2}$ म$_1$ मुवें. मुए. मुब. पुस्तकेषु अयं श्लोकः ५४ श्लोकानन्तरं वर्तते. –a) ब$_1$ दे$_{1.2.4.6}$ परस्वधा- (→परश्वधा-) ; का$_1$ दे$_4$ -शक्तकरं (→-सक्तकरं) ; ते$_1$ परश्वथं खिल्लकरं त्रिणेत्रं. –b) दे$_1$ °भस्मगात्रं (→°सर्वगात्रं); ते$_1$ नृसिंहचर्मान्वितसर्वगात्रम्. –c) ते$_1$ समुद्गिरन्तं प्रणवं च हृद्गतम्. –d) ते$_1$ °प्रति संददर्श (→°प्रतिमं ददर्श).

अतः परं दे$_6$ पुस्तके अधिकम्—
न यस्य देवा न पितामहोऽपि नेन्द्रो न चाग्निर्वरुणो न मृत्युः ।
प्रभावमद्यापि विदन्तिरुद्रं तमादिदेवं पुरतो ददर्श ॥
(= ५५)

५४. दे$_3$ ग्र$_{1.2}$ म$_1$. ⊙. –a) ब$_3$ पुरुषः (→पुरुषं). –c) द$_1$ °मूर्ति (→°शक्ति). –d) दे$_4$ °मतो (→°मसौ).

दे$_{8-10}$ मुवें. मुए. मुब. ग्रन्थेषु अधिकम्—
परश्वधासक्तकरं त्रिनेत्रं नृसिंहचर्मावृतभस्मगात्रम् ।
समुद्गिरन्तं प्रणवं बृहन्तं सहस्रसूर्यप्रतिमं ददर्श ॥
(= ५३)

५५. दे$_6$. ⊙ पूर्वमागतम्. –a) ग्र$_2$ म$_1$ तस्य (→यस्य); दे$_{10}$ देवो (→देवा); दे$_4$ पितामहर्षिर्, द$_1$ पिनाकिनश्च, ग्र$_{1.2}$ म$_1$ पितामहश्च (→पितामहोऽपि). –b) ते$_1$ न वा (→न चा-). –c) ब$_{1-3}$ दे$_3$ न$_1$ ते$_1$ द$_1$ ग्र$_1$ म$_1$ विदन्ति (→वदन्ति); न$_1$ रुद्रास् (→रुद्रं); का$_1$ प्रभावमाद्या न विदन्ति रुद्रं, ब$_2$ प्रभावमस्यापि विदन्ति रुद्रं. –d) का$_1$ नमामि (→तमादि-); का$_1$ परतो, दे$_{1.4}$ द$_1$ ग्र$_{1.2}$ म$_1$ पुरुषो (दे$_4$ °षं) (→पुरतो).

अतः परं दे$_3$ पुस्तके अधिकम्—
प्रभुं पुराणं पुरुषं पुरस्तात् सनातनं योगिनमीशितारम् ।
अणोरणीयां समनन्त शक्ति प्राणेश्वरं शम्भुमसौ ददर्श ॥
(= ५४)

५६. द$_1$. cd ⊙. –a) का$_1$ ब$_3$ दे$_{2.3.6}$ तदानु (का$_1$ °न) पश्यद्, दे$_4$ द$_1$ ग्र$_{1.2}$ म$_1$ ततोन्वपश्यद्, ते$_1$ तदा ह्यपश्यद् (→तदान्वपश्यद्) ; दे$_6$ वामा, दे$_{10}$ बासे (→वामे) ; दे$_5$

कृताञ्जलिं दक्षिणतः सुरेशं
हंसाधिरूढं पुरुषं ददर्श ।
स्तुवानमीशस्य परं प्रभावं
पितामहं लोकगुरुं दिविस्थम् ॥५७

गणेश्वरानर्कसहस्रकल्पान्
नन्दीश्वरादीनमितप्रभावान् ।
त्रिलोकभर्त्तुः पुरतोऽन्वपश्यत्
कुमारमग्निप्रतिमं सशाखम् ॥५८

मरीचिमत्रिं पुलहं पुलस्त्यं
प्रचेतसं दक्षमथापि कण्वम् ।
पराशरं तत्परतो वसिष्ठं
स्वायंभुवं चापि मनुं ददर्श ॥५९

तुष्टाव मन्त्रैरमरप्रधानं
बद्धाञ्जलिर्विष्णुरुदारबुद्धिः ।
प्रणम्य देव्या गिरिशं सभक्त्या
स्वात्मन्यथात्मानमसौ विचिन्त्य ॥६०

श्रीकृष्ण उवाच ।❀

नमोऽस्तु ते शाश्वत सर्वयोने
ब्रह्माधिपं त्वामृषयो वदन्ति ।
तपश्च सत्त्वं च रजस्तमश्च
त्वामेव सर्वं प्रवदन्ति सन्तः ॥६१

त्वं ब्रह्मा हरिरथ विश्वयोनिरग्निः
संहर्त्ता दिनकरमण्डलाधिवासः ।
प्राणस्त्वं हुतवहवासवादिभेद-
स्त्वामेकं शरणमुपैमि देवमीशम् ॥६२ वें.१.२५.६१

---

सुवानभीशस्य तदानुपश्यद्. –b) दे$_{5}$ गिरीशं (→स्वात्मानम्) ; दे$_{5}$ °रूपां (→°रूपं). –c) म$_{1}$ बहुशो (→बहुभिर्); दे$_{10}$ विचारिभिः (→वचोभिः). –d) ते$_{1}$ खड्गासि° (→शङ्खासि°); दे$_{1}$ ते$_{1}$ मुवें. मुए. मुब. °चक्रान्वित°, ग्र$_{1.2}$ म$_{1}$ °चक्रांकित° (→°चक्रार्पित°).

५७. द$_{1}$.ab ⊙. –a) ब$_{3}$ दे$_{1}$ कृताञ्जलिः, दे$_{10}$ कृतांजली (→कृताञ्जलिं); का$_{1}$ दे$_{3.5}$ सुवेशं (→सुरेशं). –b) ग्र$_{2}$ सान्द्रं साधि° (→हंसाधि°). –c) का$_{1}$ गृणाणं(?), ब$_{2}$ सर्वार्थम्, दे$_{1}$ द$_{1}$ म$_{1}$ स्तुवन्तं, दे$_{5}$ स्तवाणं, ग्र$_{2}$ पुरन्तं (→स्तुवानम्); ते$_{1}$ [अ]प्यस्य, द$_{1}$ ईशान- (→ईशस्य); ब$_{1}$ प्रधानं, + प्रभावं, दे$_{5}$ प्रभावो (→प्रभावं). –d) का$_{1}$ दे$_{5}$ दिगीशं, ब$_{1-3}$ दे$_{3}$ दिविष्टम्; दे$_{2}$ दिवस्थं, दे$_{6}$ निविष्टं, ते$_{1}$ विविक्ते (→दिविस्थम्).

५८. –a) ब$_{2}$ दे$_{9.10}$ गणेश्वरा(दे$_{10}$ °रो)नेक° (→गणेश्वरानर्क°); ते$_{1}$ °कान्तीन् (→°कल्पान्). –b) दे$_{6}$ तदीश्वरा° (→नन्दीश्वरा°). –c) न$_{1}$ °कर्तुः (→°भर्त्तुः); का$_{1}$ ब$_{1-3}$ दे$_{2.3.5.6}$ ते$_{1}$ ग्र$_{1.2}$ म$_{1}$ ह्यपश्यत् (दे$_{3.6}$ °श्यन्) (→[अ]न्वपश्यत्). –d) दे$_{10}$ ग्र$_{2}$ अग्नि (→अग्नि-); ब$_{1}$ * शाखं, ब$_{2.3}$ दे$_{3.6}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ मुब. विशाखं, दे$_{1.2}$ ते$_{1}$ मुवें. मुए. गणेशम्, दे$_{8-10}$ शशांके, न$_{1}$ शिखिस्थं (→सशाखं).

५९. –b) का$_{1}$ दे$_{2.4}$ ते$_{1}$ द$_{1}$ ग्र$_{1}$ प्राचेतसं (→प्रचेतसं); दे$_{4}$ अथादि (→अथापि). –c) दे$_{8}$ परासरं (→पराशरं); दे$_{4}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ व्यासमथो (ग्र$_{2}$ °समं) (→तत्परतो). –d) ग्र$_{2}$ स्वायंभुवश् (→स्वायम्भुवं); ब$_{3}$ मुनिर् (→मनुं).

६०. –a) दे$_{8-10}$ °प्रधाने (दे$_{10}$ °नै); न$_{1}$ °प्रभावं (→°प्रधानं). –b) ब$_{1}$ बद्धांजलि (→बद्धाञ्जलिर्); का$_{1}$ दे$_{8-10}$ विष्णुम् (→विष्णुर्); दे$_{10}$ °बुद्धि (→°बुद्धिः). –c) का$_{1}$ प्रणनाम (→प्रणम्य); ब$_{1}$ देव्यां, ब$_{2.3}$ देवो (→देव्या); दे$_{8-10}$ मुवें. मुए. मुब. स्वभक्त्या, ते$_{1}$ च तस्मिन् (→सभक्त्या). –d) दे$_{6}$ स्वात्मान्यथा°, ग्र$_{2}$ स्वात्मानमा° (→स्वात्मन्यथा°); ग्र$_{2}$ म$_{1}$ अथो (→असौ); दे$_{5}$ न$_{1}$ ते$_{1}$ विचिन्त्य: (दे$_{5}$ °न्त्याः) (→विचिन्त्य).

❀ ब$_{1.2}$ दे$_{5}$ मुवें. मुए. कृष्ण उवाच; दे$_{8-10}$ कृष्ण उ.; न$_{1}$ कृष्णः; ते$_{1}$ ग्र$_{1.2}$ म$_{1}$ श्रीकृष्णः; द$_{1}$ श्रीविष्णुः.

६१. –a) दे$_{8-10}$ द$_{1}$ मुवें. मुए. सर्वयोग, ते$_{1}$ सर्वसूते (→सर्वयोने). –b) दे$_{8-10}$ ब्रह्मादयो वै, ग्र$_{2}$ म$_{1}$ ब्रह्मा शिर (म$_{1}$ °व) स्तत्वं, मुवें. मुए. ब्रह्मादयस्त्वां (→ब्रह्माधिपं त्वां); द$_{1}$ ग्र$_{1.2}$ म$_{1}$ मुनयो (→ऋषयो). –c) दे$_{1.2.8-10}$ ते$_{1}$ मुवें. मुए. तमश्च, दे$_{3}$ तपं च, द$_{1}$ ग्र$_{1.2}$ म$_{1}$ त्वमेव (→तपश्च); दे$_{8-10}$ रजश्च सत्त्वं, मुवें. मुए. रजस्त्रयञ्च (→रजस्तमश्च); दे$_{1}$ तमश्च सत्वं रजसत्वमेव, दे$_{4}$ ते$_{1}$ तप(ते$_{1}$ °म)श्च सत्त्वं रजसस्तमश्च.

६२. –a) दे$_{3}$ हविरथ, दे$_{4}$ हरि(ह)थ, दे$_{5}$ हरिरव्य-, दे$_{8.9}$ हरिरद्य, दे$_{10}$ हरिरप्य-, द$_{1}$ ग्र$_{1.2}$ हरिरज- (→हरिरथ); दे$_{1}$ विश्वयोनिः संहर्ता, दे$_{4}$ विश्वयोनिरग्रं, दे$_{8}$ विश्वकर्त्ता संहर्ता(?), दे$_{9}$ विश्व ** कर्त्ता, दे$_{10}$ मुए. ** विश्वकर्त्ता, न$_{1}$ विश्वयोनि **, मुवें. रुद्र विश्वकर्त्ता (→विश्वयोनिरग्निः). –b) दे$_{1}$ दि* दिन(व)कर°, दे$_{8}$ दिनदिनकर° (→संहर्त्ता

वं.१.२५.६२

सांख्यास्त्वां विगुणमथाहुरेकरूपं
योगास्त्वां सततमुपासते हृदिस्थम् ।
वेदास्त्वामभिदधतीह रुद्रमग्निं
त्वामेकं शरणमुपैमि देवमीशम् ।।६३

त्वत्पादे कुसुममथापि पत्रमेकं
दत्त्वासौ भवति विमुक्तविश्वबन्धः ।
सर्वाघं प्रणुदति सिद्धयोगिजुष्टं
स्मृत्वा ते पदयुगलं भवत्प्रसादात् ।।६४

यस्याशेषविभागहीनममलं हृद्यन्तरावस्थितं
तत्त्वं ज्योतिरनन्तमेकमचलं सत्यं परं सर्वगम् ।
स्थानं प्राहुरनादिमध्यनिधनं यस्मादिदं जायते
नित्यं त्वामहमुपैमि सत्यविभवं विश्वेश्वरं तं शिवम् ।६५

ॐ नमो नीलकण्ठाय त्रिनेत्राय च रंहसे ।
महादेवाय ते नित्यमीशानाय नमो नमः ।।६६
नमः पिनाकिने तुभ्यं नमो मुण्डाय दण्डिने ।
नमस्ते वज्रहस्ताय दिग्वस्त्राय कपर्दिने ।।६७
नमो भैरवनादाय कालरूपाय दंष्ट्रिणे ।
नागयज्ञोपवीताय नमस्ते वह्निरेतसे ।।६८

---

दिनकर°). –c) ब3 प्राणस्त्वां (→प्राणस्त्वं); ब3 न1 °भेदैः (→°भेदः). –d) दे2 त्वामीशं (→त्वामेकं); दे1.4 न1 उपैति, द1 उपैहि (→उपैमि); ब2 रुद्रं **, दे3 रुद्रमीशम्, दे4 ** मीशम् (→देवमीशम्).

६३. दे3.6 ⊙; ग्र2.६३d-६४b ⊙. –a) ग्र1.2 म1 ख्यातन्त्वाम् (→साङ्ख्यास्त्वां); ब1 -द्विगुणम्, ब2.3 दे1.2 न1 मुब. त्रिगुणम्, दे4.8-10 द1 ग्र1.2 म1 मुवें. मुए. अगुणम् (→विगुणम्); दे1.2 °योनिं (→°रूपं). –b) का1 दे1 द1 योगस्त्वां, दे2.8-10 ते1 मुवें. मुए. योगस्थं (ते1 °स्थाः), दे4 योगात्मा, न1 योगिनस्तां (→योगास्त्वां); दे5 उपासतेन्द्रा देस्यां (→उपासते हृदिस्थं). –c) दे2.5 द1 ग्र1.2 देवास्त्वाम् (→वेदास्त्वाम्); ते1 °वदतीह (→°दधतीह); दे1 रुद्ररूपं, दे8-10 मुवें. मुए. मुब. रुद्रमीड्यं, न1 रूपनेग्निं (→रुद्रमग्निं). –d) ब1 दे10 त्वामेक-, द1 त्वामेवं, ग्र1 शंभोन्त्वां (→त्वामेकं); दे4 उपैति (→उपैमि); द1 ग्र1 म1 रुद्रमीशं (→देवमीशं); न1 त्वामेग्निं त्वामेकं शरणमुपैति देवमीशं.

६४. ग्र2. a ⊙. –a) ब3 -पाद (→-पादे). –b) दे1 विमुक्तसर्वबन्धः, न1 विश्वविमुक्तबन्धः, द1 विमुक्तिविश्वबन्धः. –c) का1 सर्वाव्य (?), ब1 दे3.9.10 सर्वा(दे9.10 °र्वो)यं, ब2.3 दे1.5.8. मुवें. मुए. सर्वाघं, दे4 सर्वार्थं, न1 सर्वासां, द1 ग्र2 म1 सर्वायत्, ग्र1 सर्वापदं (→सर्वाघं); का1 ग्र1 प्रण (?) दति, दे5 प्रदहति, दे8-10 प्रणमति (→प्रणुदति); का1 सिद्धयोनिविष्टं, ब1 दे8-10 न1 सिद्धयोगिजुष्टे, दे1 ** योगजुष्टं, दे2 विश्वयोनिर्युष्टं, दे4 द1 ग्र1.2 म1 सिद्धयोगजुष्टे, ते1 विश्वयोगिजुष्टं (→सिद्धयोगिजुष्टं). –d) ब3 दे3.6 वै (→ते); ब1 दे4.8.9 न1 द1 ग्र1.2 म1 °युगले, दे10 मुवें. °युगल (?) (→°युगलं); दे8-10 °प्रसाद्यमाने (→°प्रसादात्); दे3.6 स्मृत्वा वै तव भगवत प्रसादात्.

६५. –a) न1 तस्या° (→यस्या°); का1 दे5.6 °हीन-, न1 °हीने, ते1 °लीनम् (→°हीनम्); का1 दे5 -विमलं, ते1 अपरं (→अमलं); ब1 दे3.6 कृत्यन्तरा°, दे1 तद्यन्तरा° (→हृद्यन्तरा°). –b) का1 सत्त्वं, ब1 तत्त्व-, ब2 त्वं हि, दे5 तत्त्वां, दे8 मुवें. मुए. ते त्वां, दे9 तं त्वां, दे10 ग्र2 * त्वां (ग्र2 °त्वं) (→तत्त्वं); दे8-10 योनिम्, न1 ज्योतिम् (→ज्योतिर्); दे1 तत्वद्योतं, दे4 तत्त्वं द्यो (?)तिर् (→तत्त्वं ज्योतिर्); दे5 एकमबलं, न1 द1 ग्र1 म1 एकममलं, ते1 अन्तरहितं (→एकमचलं); ते1 सत्त्वं (→सत्यं). –c) ते1 यं च (→स्थानं); दे8-10 प्रागमानादि (→प्राहुरनादि); ब1 °निनदं, दे3 °निधने (→°निधनं). –d) का1 नित्यं त्वां समुपैति सत्यविभवं, ब1 दे1.2.5 ग्र1 मुए. मुब. नित्यं त्वाहमुपैमि (दे5 °ति) स(दे5 मि)त्यविभवं, ब3 नित्यं त्वमुपैमि सत्यविभवं, दे6 द1 नित्यं (दे6 °त्यां) चाहमुपैमि सत्यविभवं, दे8-10 नित्यं हि त्वमुपैमि सत्यविभवं, ते1 नित्यं त्वाहमुपैमि सत्वनिलयं, ग्र2 नित्यन्त्वां मुनयामि सिद्धविभवं, म1 नित्यं त्वामुपयामि सत्यविभवं (→नित्यंत्वामहमुपैमि सत्यविभवं).

६६. –a) दे2 * नमो (→ॐ नमो); दे4 नीलकण्ठायै (→नीलकण्ठाय). –b) दे4 सर्वशाय (→त्रिनेत्राय); दे2 वरायसे, दे6 च देहसे, ते1 च शम्भसे (?) (→च रंहसे). –d) दे6 ईश्वराय (→ईशानाय).

६७. का1. ab ⊙. –a) दे3 पिनाकिनं (→पिनाकिने); द1 ग्र1.2 म1 नित्यं (→तुभ्यं). –b) ब3 ग्र2 दण्डाय, दे1 तुंडाय (→मुण्डाय); ब3 दे2.8.9 ग्र2 मुण्डिने (→दण्डिने). –c) का1 ब1-3 दे3.5 बहुहस्ताय, दे3 चक्षुहस्ताय, दे6 बहुदंष्ट्राय, ते1 भिल्लहस्ताय (→वज्रहस्ताय). –d) ते1 पिंगाक्षाय, ग्र2 विवस्त्राय (→दिग्वस्त्राय).

६८. –a) दे4 द1 ग्र2 म1 °नाथाय (→°नादाय). –b) दे4 हरायाथ भिषंगिने, द1 ग्र2 म1 हराय च निषंगिने, ग्र1 कालाय च निषंगिणे. –d) दे8-10 ब्रह्मरेतसे, न1 वह्निनेत्रिणे. ग्र2 म1 वह्नितेजसे (→वह्निरेतसे).

नमोऽस्तु ते गिरीशाय स्वाहाकाराय ते नमः ।
नमो मुक्ताट्टहासाय भीमाय च नमो नमः ॥६९
नमस्ते कामनाशाय नमः कालप्रमाथिने ।
नमो भैरववेषाय हराय च निषङ्गिणे ॥७०
नमोऽस्तु ते त्र्यम्बकाय नमस्ते कृत्तिवाससे ।
नमोऽम्बिकाधिपतये पशूनां पतये नमः ॥७१
नमस्ते व्योमरूपाय व्योमाधिपतये नमः ।
नरनारीशरीराय सांख्ययोगप्रवर्तिने ॥७२
नमो दैवतनाथाय देवानुगतलिङ्गिने ।
कुमारगुरवे तुभ्यं देवदेवाय ते नमः ॥७३
नमो यज्ञाधिपतये नमस्ते ब्रह्मचारिणे ।
मृगव्याधाय महते ब्रह्माधिपतये नमः ॥७४
नमो हंसाय विश्वाय मोहनाय नमो नमः ।
योगिने योगगम्याय योगमायाय ते नमः ॥७५
नमस्ते प्राणपालाय घण्टानादप्रियाय च ।
कपालिने नमस्तुभ्यं ज्योतिषां पतये नमः ॥७६
नमो नमो नमस्तुभ्यं भूय एव नमो नमः ।
मह्यं सर्वात्मना कामान् प्रयच्छ परमेश्वर ॥७७
एवं हि भक्त्या देवेशमभिष्टूय स माधवः ।
पपात पादयोर्विप्रा देवदेव्योः स दण्डवत् ॥७८
उत्थाप्य भगवान् सोमः कृष्णं केशिनिषूदनम् ।
बभाषे मधुरं वाक्यं मेघगम्भीरनिःस्वनः ॥७९

वें.१.२५.७९

---

६८ श्लोकात्परं ग्र$_{2}$ पुस्तके अधिकम्–
*नमो देवाय ते नित्यं ईशानाय नमो नमः ।
नमः पिनाकिने नित्यं ··· ··· ···।
(= ६६cd–६७a)

६९. दे$_{10}$. cd ⊙. –c) दे$_{5}$ नमो मुक्ताय हासाय, दे$_{6}$ नमुक्ताट्टहासाय, न$_{1}$ नमो मुक्तावभासाय, ते$_{1}$ नमोऽस्तु कामरूपाय.

७०. –a) ग्र$_{1.2}$ कालनाथा(ग्र$_{1}$ °शा)य (→कामनाशाय). –b) ब$_{1.2}$ दे$_{3.4.6.10}$ न$_{1}$ काम- (न$_{1}$ °मः), द$_{1}$ कालं (→काल-). –c) दे$_{1}$ °वेधाय, दे$_{2}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ °रूपाय, दे$_{8-10}$ °नाशाय (→°वेषाय); का$_{1}$ ते$_{1}$ नमोऽस्तु भैरवेशाय. –d) ब$_{2}$ निषादिने, ब$_{3}$ निसङ्गिणे, दे$_{2}$ त्रिदण्डिने, दे$_{5}$ शृंगिणे (→निषङ्गिणे); दे$_{4}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ कालरूपाय दंष्ट्रिणे, ते$_{1}$ हराय च ज्ञानसाक्षिणे.

७१. ब$_{1}$. ७१d–७५b ⊙ (इ. सं.). –a) दे$_{3}$ त्र्यञ्चकाय (→त्र्यम्बकाय).

७२. ब$_{1}$. ⊙ (द्र. ७१ पा. वि.). –c) दे$_{4}$ नमस्तारी° (→नरनारी°).

७३. ब$_{1}$. ⊙ (द्र. ७१ पा. वि.). –a) दे$_{1.8-10}$ ते$_{1}$ मुवें. मुए. मुब. भैरव° (→दैवत°). –b) दे$_{1}$ देवानुगति° (→देवानुगत°); ब$_{2}$ देव निर्गतुलिङ्गिने, द$_{1}$ ग्र$_{1.2}$ म$_{1}$ नमो दैवतलिङ्गिने.

७४. ब$_{1}$. ⊙ (द्र. ७१ पा. वि.); न$_{1}$. ७४a–७५b ⊙ (इ. सं.). –a) दे$_{6}$ यक्षाधिपतये, द$_{1}$ धर्माधिपतये (→यज्ञाधिपतये). –c) ग्र$_{2}$ मृगव्याधाधिपतये नमः, म$_{1}$ मृगव्यायाधिपतये नमः.

७५. ब$_{1}$ न$_{1}$. ab ⊙ (द्र. ७१ पा. वि.); म$_{1}$. ७५a–७६d ⊙ (इ. सं.). –a) का$_{1}$ ते$_{1}$ हराय, ब$_{2.3}$ दे$_{1-3.5.6}$ मोहाय, दे$_{4}$ द$_{1}$ ग्र$_{1.2}$ भवाय (→हंसाय); ते$_{1}$ विद्याय (→विश्वाय).

७६. म$_{1}$. ⊙ (द्र. ७५ पा. वि.); ब$_{1}$. d ⊙. –a) ते$_{1}$ °रूपाय (→°पालाय). –b) दे$_{4}$ मंङ्गता (?) द°, द$_{1}$ ग्र$_{1}$ मन्द्रनाद°, ग्र$_{2}$ मन्त्रदान° (→घण्टानाद°).

७७. दे$_{6}$. ab ⊙; ब$_{1}$. a ⊙. –a) दे$_{1.2}$ नमस्तुभ्यं नमस्तुभ्यं, मुवें. मुए. नमो नमोऽस्तु ते तुभ्यं. –b) म$_{1}$ भूयो भूयो नमो नमः. –c) ग्र$_{2}$ करव्युस् (?) (→मह्यं); का$_{1}$ ब$_{2}$ न$_{1}$ कामं, ते$_{1}$ ज्ञानं (→कामान्); दे$_{3.6}$ मह्यं सर्वार्थकामास्त्वं. –d) दे$_{4}$ पप्रच्छ (→प्रयच्छ); दे$_{9.10}$ न$_{1}$ परमेश्वरः (दे$_{9}$ °रं) (→परमेश्वर).

७७ श्लोकात्परं दे$_{8-10}$ मुवें. मुब. अधिकम्—सूत उवाच
[दे$_{8.9}$ सूत उ.]

७८. –a) का$_{1}$ भक्त्या हि, ब$_{2}$ भक्त्या तु, दे$_{2}$ तु भक्त्या, दे$_{8-10}$ हि भक्तो, ग्र$_{1}$ स भक्त्या (→हि भक्त्या). –b) का$_{1}$ दे$_{5}$ अभिस्तूय, दे$_{8-10}$ अभि (दे$_{10}$ °पि) स्तुत्य (→अभिष्टूय); का$_{1}$ ब$_{1}$ दे$_{3-5}$ द$_{1}$ ग्र$_{1.2}$ च (→स); दे$_{6}$ माधवं (→माधवः). –c) दे$_{4}$ पतयोर् (→पादयोर्). –d) का$_{1}$ दे$_{10}$ °देवो स, ब$_{1}$ दे$_{3.6.9}$ न$_{1}$ °देव्याः स, दे$_{4}$ °देवः स, ते$_{1}$ °देवस्य (→°देव्योः स).

७९. –a) ब$_{1}$ दे$_{4}$ ते$_{1}$ उत्थाय, दे$_{10}$ उथ्थास्य (?) (→उत्थाप्य); दे$_{1}$ शंभुः (→सोमः). –b) ब$_{1}$ कृष्ण– (→कृष्णं). –c) दे$_{5}$ व्यक्तं (→वाक्यं). –d) दे$_{1.6}$ न$_{1}$ ग्र$_{1.2}$ म$_{1}$ °निःस्वनम् (→°निःस्वनः).

वें.१.२५.८०

किमर्थं पुण्डरीकाक्ष तपस्तप्तं त्वयाऽव्यय ।
त्वमेव दाता सर्वेषां कामानां कामिनामिह ॥८०
त्वं हि सा परमा मूर्तिर्मम नारायणाह्वया ।
नानवाप्तं त्वया तात विद्यते पुरुषोत्तम ॥८१
वेत्थ नारायणानन्तमात्मानं परमेश्वरम् ।
महादेवं महायोगं स्वेन योगेन केशव ॥८२
श्रुत्वा तद्वचनं कृष्णः प्रहसन् वै वृषध्वजम् ।
उवाच वीक्ष्य विश्वेशं देवीं च हिमशैलजाम् ॥८३
ज्ञातं हि भवता सर्वं स्वेन योगेन शंकर ।
इच्छाम्यात्मसमं पुत्रं त्वद्भक्तं देहि शंकर ॥८४
तथास्त्वित्याह विश्वात्मा प्रहृष्टमनसा हरः ।
देवीमालोक्य गिरिजां केशवं परिषस्वजे ॥८५
ततः सा जगतां माता शंकरार्द्धशरीरिणी ।
व्याजहार हृषीकेशं देवी हिमगिरीन्द्रजा ॥८६
वत्स जाने तवानन्तां निश्चलां सर्वदाच्युत ।
अनन्यामीश्वरे भक्तिमात्मन्यपि च केशव ॥८७
त्वं हि नारायणः साक्षात् सर्वात्मा पुरुषोत्तमः ।
प्रार्थितो दैवतैः पूर्वं संजातो देवकीसुतः ॥८८
पश्य त्वमात्मनात्मानमात्मीयममलं पदम् ।
नावयोर्विद्यते भेद एकं पश्यन्ति सूरयः ॥८९

---

८०. –a) ब$_1$ पुण्डरीकाक्षं (→पुण्डरीकाक्ष). –b) ब$_3$ दे$_{3.6}$ [अ]व्ययः, दे$_5$ विभो, म$_1$ [अ]नघ (→[अ]व्यय); दे$_{1.2.8-10}$ ते$_1$ मुवें. मुए. मुब. तप्यते भवता तपः. –d) दे$_{8-10}$ मुवें. मुए. कर्मणामिह, ते$_1$ कामिनामसि (→कामिनामिह).

८१. –a) दे$_3$ त्वयि, न$_1$ अहि (→त्वं हि); न$_1$ परमो (→परमा); द$_1$ मूर्ति (→मूर्त्तिर्). –b) द$_1$ इमं (→मम); ते$_1$ मम या प्रणवात्मिका. –c) का$_1$ ननवाप्तं, दे$_{3.6}$ ग्र$_2$ नानावाप्तं (→नानवाप्तं); दे$_5$ नाथ, दे$_6$ ग्र$_1$ तत्र, ग्र$_2$ म$_1$ यत्तद् (→तात); दे$_{8-10}$ मुवें. मुए. मुब. न विना त्वां जगत् सर्वं. –d) दे$_4$ ग्र$_2$ विद्यन्ते (→विद्यते); दे$_4$ न$_1$ पुरुषोत्तमः (→पुरुषोत्तम).

८२. –a) दे$_1$ व्याप्य (→वेत्थ); दे$_5$ नारायणात्मानम्, दे$_{8-10}$ नारायणानन्त, ग्र$_2$ म$_1$ नारायणं देवं (→नारायणानन्तम्). –c) ते$_1$ महात्मानं, म$_1$ महायोगिन् (→महायोगं). –d) ते$_1$ तत्व- (→स्वेन); दे$_5$ केशवं (→केशव).

८३. –b) दे$_{8.9}$ स हसन् वै, न$_1$ प्रणम्याथ (→प्रहसन् वै); ते$_1$ प्रहस्य वृषभध्वजम्. –c) का$_1$ ब$_{1-3}$ दे$_{2.3.8-10}$ न$_1$ मुवें. मुए. मुब. उवाचान्वीक्ष्य, ते$_1$ उवाच विद्यां (→उवाच वीक्ष्य); दे$_5$ विश्वां च, न$_1$ देवेशं (→विश्वेशं).

८४. –a) दे$_3$ द$_1$ जातं, दे$_{10}$ ग्र$_2$ ज्ञानं (→ज्ञातं); दे$_{8-10}$ ग्र$_1$ भवतः (→भवता); ते$_1$ जानासि भगवन् सर्वम्. –b) ते$_1$ ज्ञान- (→स्वेन). –d) ग्र$_1$ -भक्ति (→-भक्तं); न$_1$ देवि (→देहि); ब$_1$ दे$_{10}$ शंकरः (→शंकर).

८५. –a) न$_1$ तथेत्याहाथ विश्वात्मा, ते$_1$ अथस्मित्वाह विश्वात्मा. –b) दे$_5$ प्रदध्य-, ग्र$_2$ म$_1$ प्रसन्न- (→प्रहृष्ट-); दे$_6$ ग्र$_2$ -मनसो (→-मनसा). –c) ते$_1$ देवं, + देवीं (→देवीम्); ग्र$_1$ गिरिजा- (→गिरिजां); न$_1$ केशवः (→केशवं); दे$_9$ परिषष्वजे (→परिषस्वजे).

८६. –a) ते$_1$ तु, ग्र$_2$ स (→सा); का$_1$ जगतो (→जगतां); दे$_1$ ततस्तस्माज्जगन्माता. –b) दे$_6$ शंकरार्हं (→शंकरार्द्ध-). –c) दे$_{3.5}$ व्याजहारा (दे$_3$ °रे) (→व्याजहार). –d) दे$_{4.6}$ देवा (→देवी); ते$_1$ देवदेवं गिरीन्द्रजा.

८७. दे$_4$.८७c–८८d ⊙. –a) दे$_{8-10}$ मुवें. मुए. मुब. अहं (→वत्स); का$_1$ दे$_1$ न$_1$ द$_1$ ग्र$_2$ म$_1$ मुवें. मुए. मुब. तवानन्त, ब$_1$ दे$_{3.9.10}$ भवानन्तां (दे$_9$ °न्तो, दे$_{10}$ °न्तं), दे$_4$ तथानन्ता, दे$_5$ तवातन्वी(?), दे$_8$ तवानन्तो (→तवानन्तां). –b) दे$_{1.6}$ निश्चला, दे$_{8-10}$ निश्चलः (दे$_{10}$ °लो). (→निश्चलां); का$_1$ म$_1$ सर्वदाच्युतं (म$_1$ °तां), दे$_3$ सर्वे सुदा*, दे$_4$ देवकीसुतः, ग्र$_2$ सर्वदात्मज (→सर्वदाच्युत). –c) ग्र$_2$ अनन्याद् (→अनन्यां). –d) दे$_1$ आत्मन्य*, दे$_{10}$ आत्मान्यपि (→आत्मन्यपि); दे$_1$* (→च).

८८. दे$_4$.⊙ (द्र.८७ पा. वि.); दे$_3$.ab ⊙. –b) न$_1$ ते$_1$ पुरुषोत्तम (→पुरुषोत्तमः). –c) दे$_1$ प्रार्थितैर्, दे$_6$ पार्थिवा (→प्रार्थितो); दे$_6$ पूर्वा (→पूर्वं). –d) का$_1$ ब$_2$ दे$_{3.5.6}$ स जातो (→संजातो).

८९. –a) दे$_{3.6}$ पश्यंतम् (→पश्य त्वम्). –b) ब$_{1.2}$ दे$_{1.8-10}$ न$_1$ ते$_1$ मुवें. मुए. मुब. आत्मानं (→आत्मीयम्); दे$_{8-10}$ मम संपदं, मुवें. मुए. मुब. मम संप्रति (→अमलं पदं); दे$_4$ ग्र$_2$ म$_1$ अमलं परमं पदम्, द$_1$ ग्र$_1$ ममत्वं परमं पदम्. –c) ब$_1$ दे$_{8-10}$ द$_1$ ग्र$_2$ म$_1$ भेदं (→भेद [:]). –d) ब$_2$ एवं, द$_1$ ग्र$_{1.2}$ म$_1$ ऐक्यं (→एकं).

इमानिमान् वरानिष्टान् मत्तो गृह्णीष्व केशव ।
सर्वज्ञत्वं तथैश्वर्यं ज्ञानं तत् पारमेश्वरम् ।
ईश्वरे निश्चलां भक्तिमात्मन्यपि परं बलम् ॥९०
एवमुक्तस्तया कृष्णो महादेव्या जनार्दनः ।
आशिषं शिरसा गृह्लाद् देवोऽप्याह महेश्वरः ॥९१

प्रगृह्य कृष्णं भगवानथेशः
करेण देव्या सह देवदेवः ।
संपूज्यमानो मुनिभिः सुरेशै-
र्जगाम कैलासगिरिं गिरीशः ॥९२

इति श्रीकूर्मपुराणे षट्साहस्रयां संहितायां पूर्वविभागे चतुर्विंशोऽध्यायः ॥२४॥

# २५

सूत उवाच ।❀
प्रविश्य मेरुशिखरं कैलासं कनकप्रभम् ।
रराम भगवान् सोमः केशवेन महेश्वरः ॥१
अपश्यंस्तं महात्मानं कैलासगिरिवासिनः ।    वें. १.२६.२

---

९०. ग्र2. c–f ⊙. –a) ब1 इमानि मे, दे1.8-10 न1 मुवें. मुए. मुब. इमानि ह, दे4 इमाहि मे, ते1 इमानपि, द1 ग्र1.2 म1 इमान्हिमे (→इमानिमान्); दे3 इमानिमात्मवानिष्टान्, दे5 इमानि भास्करावष्टान्, दे6 इमानि मात्मनानिष्ठान्. –b) ते1 प्रति, द1 म1 ततो, ग्र1 अतो, ग्र.2 तमो (→मत्तो). –c) म1 तदैश्वर्यं (→तथैश्वर्यं). –d) दे3 ज्ञानं त्वत्, ग्र1 ज्ञानञ्च (→ज्ञानं तत्); का1 ब2 दे1.3.6 द1 म1 प (दे1 पा) रमे (दे1 म1 °मै)श्वरं (→पारमेश्वरम्). –e) दे4 निश्चला- (→निश्चलां). –f) दे4 आत्मानपि (→आत्मन्यपि); दे5 परस्वलं, द1 परं पदं (→परं बलम्).

९१. –a) ते1 तदा, द1 ग्र1.2 म1 तथा (→तया). –b) ब2 देवो, द1 °देव्यो (→°देव्या). –c) दे1.8-10 न1 ते1 मुवें. मुए. आदेशं, दे4.6 आशिषां, द1 ग्र1.2 म1 साशिषं (→आशिषं); दे3.6 गिरिशा, द1 शिरसां (→शिरसा); ब1 दे1 न1 गृह्णन्, ब2 दे4 ते1 मुवें. मुए. गृह्य, दे3.6 दुर्गात्, दे8-10 पूर्वं, द1 कृष्णां (?) (→गृह्लाद्). –d) दे1 देव्या ह्याह (?), न1 देव्या वाह, ते1 देवो ह्याह, द1 ग्र1.2 म1 देवो (द1 °व) देव्या (→देवोऽप्याह); का1 दे1.8-10 न1 मुवें. मुए. तथेश्वरम् (दे1 °रः) (→महेश्वरः).

९२. –a) ब2 संगृह्य (→प्रगृह्य); का1 उमेशः, ब1-3 दे2-6 द1 ग्र1.2 म1 अपीशः (→अथेशः). –b) ग्र2 करेण देव्यास्तु स देवदेवः. –c) दे4.8.9 स पूज्यमानो, द1 ग्र1 म1 सुपूज्यमानो (→संपूज्यमानो); ग्र2 परिभिः (→मुनिभिः); न1 सुरेन्द्रैः (→सुरेशैः).

पुष्पिका—

**पुराणनाम**—का1 दे5 इत्यादिमहापुराणे कौर्मे, ब1-3 दे6 म1 इति कूर्मपुराणे, दे1-4.8-10 ग्र1.2 मुवें. मुए. इति श्रीकूर्मपुराणे, न1 इति श्रीकौर्मे, ते1 इत्यादिमहापुराणे श्रीकौर्मे, द1 इति, मुब. इति श्रीकौर्मे महापुराणे पूर्वभागे. **अध्यायनाम**—ब1-3 दे3.4.6 न1 ते1 द1 म1. ⊙; का1 दे5 यदुवंशानुकीर्तने, दे1.8-10 मुए. यदुवंशानुकीर्तने कृष्णतपश्चरणे, दे2 श्रीकृष्णतपश्चरणे, ग्र1.2 कृष्णवरलाभो नाम, मुवें. यदुवंशानुकीर्तने कृष्णतपश्चरणं नाम, मुब. सोमवंशे यदुवंशानुकीर्तने श्रीकृष्णतपश्चरणं नाम. **अध्यायसंख्या**—दे6 द1. ⊙; का1 ब1.3 दे3.5 न1 ते1 ग्र1 त्रयोविंशोऽध्यायः, ब2 ॥ २३॥, दे1.10 मुवें. मुए. मुब. पंचविंशोऽध्यायः ॥२५॥, दे2.8.9 ग्र2 म1 पंचविंशोऽध्याय.

**२५**

[अध्यायारम्भे अधिकम्—दे10 श्रीगणेशाय नमः; ते1 श्रीशिवः].

❀ द1. ⊙; न1 ग्र1.2 सूतः; ते1 श्रीशिवः,+सूतः; म1 श्रीसूतः.

१. –b) ब1 दे2.6 कैलाशं (→कैलासं); दे6 जनक° (→कनक°). –c) दे2 जगाम, द1 ग्र2 म1 रराज (→रराम).

२. म1. २c-३d ⊙; चतुर्थश्लोकानान्तरं वर्तते. –a) का1 ब1-3 दे1.3-6.8-10 मुवें. मुए. मुब. अपश्यंस्ते, दे2 ग्र2 म1 अपश्यंत, न1 अपस्पृश्य, ते1 तपसोन्ते (→अपश्यंस्तं);

एतस्मिन्नन्तरे विप्रा भृग्वाद्याः कृष्णमीश्वरम् ।
आजग्मुर्द्वारकां द्रष्टुं कृतकार्यं सनातनम् ॥५
स तानुवाच विश्वात्मा प्रणिपत्याभिपूज्य च ।
आसनेषूपविष्टान् वै सह रामेण धीमता ॥६
गमिष्ये तत् परं स्थानं स्वकीयं विष्णुसंज्ञितम् ।
कृतानि सर्वकार्याणि प्रसीदध्वं मुनीश्वराः ॥७
इदं कलियुगं घोरं संप्राप्तमधुनाऽशुभम् ।
भविष्यन्ति जनाः सर्वे ह्यस्मिन् पापानुवर्त्तिनः ॥८
प्रवर्त्तयध्वं मज्ज्ञानं ब्राह्मणानां हितावहम् ।
येनेमे कलिजैः पापैर्मुच्यन्ते हि द्विजोत्तमाः ॥९  वें.१.२७.३

नारायणं, दे1 नारायणे (→नारायणो). –d) ब2.3 स्थान-बुद्धिमनुत्तमाम्, दे3.6 स्थानं बुद्धिमनुत्तमम्.

५. ब1. d⊙. –a) ते1 पूर्वं (→विप्रा). –b) दे3 भृग्वाख्याः (→भृग्वाद्याः). –b) दे4 दृष्ट्वा (→द्रष्टुं).

ब1 पुस्तके ५ श्लोकानन्तरं अधिकम्—

* महायोगी सूर्यकोटिसमप्रभः ।
वक्त्रकोटिसहस्रेण ग्रसमान इवाम्बरम् ।
सहस्रहस्तचरणः सूर्यसोमाग्निलोचनः ।
पिनाकपाणिर्भगवान् कृत्तिवासास्त्रिशूलधृक् । [4]
व्यालयज्ञोपवीतश्च मेघदुन्दुभिनिःस्वनः ।
अथोवाच महादेवः प्रीतोऽहं सुरसत्तमौ ।
पश्यतं मां महायोगं भयं सर्वं प्रमुच्यताम् ।
युवां प्रसूतौ गात्रेभ्यो मम पूर्वं सनातनौ । [8]
अयं मे दक्षिणे पार्श्वे ब्रह्मा लोककरं प्रभुः ।
वामे पार्श्वे चैव विष्णुः पालको हृदये हरः ।
प्रीतोऽहं पुत्रकयोः सम्यक् वरं दद्मि यथेप्सितम् ।
एवमुक्त्वाथ मां देवो महादेवः स्वयं शिवः । [12]
आलिङ्ग्य देवं ब्रह्माणं प्रसादाभिमुखोऽभवत् ।
ततः प्रहृष्टमनसौ प्रणिपत्य महेश्वरम् ।
ऊचतुः प्रेक्ष्य तद्वक्त्रं नारायणपितामहौ ।
यदि प्रीतिः संमुत्पन्ना यदि देयो वरश्च नौ । [16]
भक्तिर्भवतु नौ नित्यं त्वयि देव महेश्वर ।
ततः स भगवानीशः प्रहसन् परमेश्वरः ।
उवाच मां महादेवः प्रतिः प्रीते (?) चेतसा ।

देव उवाच

प्रलयस्थितिसर्गाणां कर्त्ता त्वं धरणीपते । [20]
वत्स वत्स जगत् कृत्स्नं पालयैतच्चराचरम् ।
त्रिभिः (?) स्म्यहं विष्णो ब्रह्मविष्णुहराख्यया ।
सर्गरक्षालयगुणैर्निर्गुणोऽपि निरञ्जनः ।
संमोहं त्यज भो विष्णो पालयैनं पितामहं । [24]
भविष्यत्येष भगवांस्तव पुत्रः सनातनः ।
अहं च भवतो वक्त्रात् कल्पान्ते घोररूपधृक् ।
शूलपाणिर्भविष्यामि क्रोधजस्तव पुत्रकः ।
एवमुक्त्वा महादेवो ब्रह्माणं मुनिसत्तम । [28]
अनुगृह्य च मां देवस्तत्रैवान्तरधीयत ।
ततः प्रभृति लोकेषु लिङ्गार्चा सुप्रतिष्ठिता ।
एतल्लिङ्गस्य माहात्म्यं भाषितं ते मयानघ ।
( = १.२५. ८८d-१०२ab, १०३ab)

६. –a) ब2 विप्रात्मा (→विश्वात्मा). –b) ब2 °त्यभिवाद्य, दे4 °त्य निपूज्य (→°त्याभिपूज्य). –c) °षूपविष्टेषु, दे6 °षू प्रविष्टाच्च (→°षूपविष्टान् वै). –d) दे3 धीमतां (→धीमता).

७. –a) दे1.2.8-10 ते1 मुवें. मुए. मुब. गमिष्यामि, दे4 अशिष्ये तत्, अ2 गमिष्ये च (→गमिष्ये तत्); द1 अ1 म1 वरं, अ2 तरं (?) (→परं). –b) दे10 स्वकार्यं (→स्वकीयं); अ2 म1 °संस्थितम् (→°संज्ञितम्). –c) ब2 °कर्माणि (→°कार्याणि); अ2 कृतानि कर्मकार्याणि, म1 कृतानि कर्मजातानि.

८. –a) ब2 इमं (→इदं). –b) दे4 द1 अ1.2 सह, दे10 [अ]शुभां, म1 असहं (→[अ]शुभम्). –c) ते1 तस्मिन् द्विजा नरास्सर्वे. –d) का1 दे4 द1 अ1.2 म1 यस्मिन् (→ह्यस्मिन्); दे1 ह्यस्मिन् न न्यायवर्तिनः, ते1 न स्युर्न्यायानुवर्तिनः.

८ श्लोकात्परं अ1 पुस्तके अधिकम्—

23\. * पूजयध्वं महादेवं साम्बं संसारमोचकम् ।
पूजनीयो विशेषेण कलौ मुक्तिमभीप्सुभिः ॥

९. –a) ब2.3 तज्ज्ञानं, दे3.6 स्वज्ञानं, दे5 सं ज्ञानं, दे8.9 अ1 म1 मुवें. मुए. मुब. विज्ञानं, दे10 अज्ञानं, द1 मे ज्ञानं (→मज्ज्ञानं). –b) दे8-10 मुवें. मुए. मुब. अज्ञानां (दे9.10 °नं) च (→ब्राह्मणानां). –c) का1 दे5 येनैते, ब2 ये लोक (?), ब3 ये नाम, दे2 ते1 ये नामी, दे4 अ2 ऐन मे, म1 येन ते (→येनेमे); दे5 भूपैर् (→पापैर्). –d) दे5 याच्यन्ते (→मुच्यन्ते); का1 ब1-3 दे1.2.4-6 ते1 वै, अ2 म1 वा (→हि).

वें.१.२७.१० ये मां जनाः संस्मरन्ति कलौ सकृदपि प्रभुम् ।
तेषां नश्यतु तत् पापं भक्तानां पुरुषोत्तमे ॥१०
येऽर्चयिष्यन्ति मां भक्त्या नित्यं कलियुगे द्विजाः ।
विधिना वेददृष्टेन ते गमिष्यन्ति तत् पदम् ॥११
ये ब्राह्मणा वंशजाता युष्माकं वै सहस्रशः ।
तेषां नारायणे भक्तिर्भविष्यति कलौ युगे ॥१२
परात् परतरं यान्ति नारायणपरायणाः ।
न ते तत्र गमिष्यन्ति ये द्विषन्ति महेश्वरम् ॥१३
ध्यानं होमं तपस्तप्तं ज्ञानं यज्ञादिको विधिः ।
तेषां विनश्यति क्षिप्रं ये निन्दन्ति पिनाकिनम् ॥१४
यो मां समाश्रयेन्नित्यमेकान्तं भावमाश्रितः ।
विनिन्द्य देवमीशानं स याति नरकायुतम् ॥१५
तस्मात् सा परिहर्तव्या निन्दा पशुपतौ द्विजाः ।
कर्मणा मनसा वाचा तद्भक्तेष्वपि यत्नतः ॥१६
ये तु दक्षाध्वरे शप्ता दधीचेन द्विजोत्तमाः ।
भविष्यन्ति कलौ भक्तैः परिहार्याः प्रयत्नतः ॥१७
द्विषन्तो देवमीशानं युष्माकं वंशसंभवाः ।
शप्ताश्च गौतमेनोर्व्यां न संभाष्या द्विजोत्तमैः ॥१८
इत्येवमुक्ताः कृष्णेन सर्वे एव महर्षयः ।
ओमित्युक्त्वा ययुस्तूर्णं स्वानि स्थानानि सत्तमाः ॥१९
ततो नारायणः कृष्णो लीलयैव जगन्मयः ।
संहृत्य स्वकुलं सर्वं ययौ तत् परमं पदम् ॥२०
इत्येष वः समासेन राज्ञां वंशोऽनुकीर्त्तितः ।
न शक्यो विस्तराद् वक्तुं किं भूयः श्रोतुमिच्छथ ॥२१

१०. –a) ब2 स्मरिष्यन्ति (→संस्मरन्ति). –b) ते1 कलौ शिवमपि प्रभुं. –c) दे1 न भवति, दे3.8-10 मुवें. मुए. मुब. नश्य(दे10 °श्यं)ति, दे6 नश्यत (→नश्यतु). –d) दे1 द1 पुरुषोत्तम (→पुरुषोत्तमे).

११. –a) दे2 येऽर्चयन्ति हि, ते1 येऽर्चयन्ति*, द1 ग्र1.2 म1 येऽर्चयन्ति च (म1 तु) (→येऽर्चयिष्यन्ति). –b) म1 प्रजाः (→द्विजाः); दे1 नित्यं कलयुगेद्विकाः. –c) ब1 दे4 ग्र1 देव° (→वेद°); दे10 विधिनावेव दृष्टेन. –d) ब2 पुरं, ते1 परं (→पदं).

१२. –b) दे10 च (→वै).

१३. –b) ब1.2 दे1.3.8-10 मुवें. मुए. मुब. °परा जनाः, ब3 °परा जनाः, + °परायणाः (→°परायणाः). –d) दे3 महेश्वरे (→महेश्वरं).

१४. –a) ब1-3 दे4 द1 ग्र1 म1 होमः, दे1 योगम्, दे2.8-10 ते1 मुवें. मुए. मुब. योगः (→होमं); ब1.2 दे2 ते1 जपस् (→तपस्); म1 सत्यं (→तप्तं). –b) ब1.3 ते1 ज्ञान-, दे1 ज्ञा* (→ज्ञानं); दे1 ** धिको, दे4 द1 यज्ञाधिको (→यज्ञादिको). –c) ब1.3 विनिश्यति (→विनश्यति). –d) दे1.2 म1 द्विषन्ति, ग्र2 द्विष्यन्ति (→निन्दन्ति); दे8-10 मुवें. मुए. मुब. म श्वरं (→पिनाकिनम्).

१५. –a) द1 ये (→यो); दे8-10 मुवें. मुए. मुब. समर्चयेत् (→समाश्रयेत्). –c) ब2.3 दे1-3.6.8-10 ते1 विनिन्दन् (→विनिन्द्य); ब1 विनिन्दन्नेवमीशानं, द1 ग्र1 विनिन्दते महेशानं, ग्र2 म1 विनिन्दते (ग्र2 °न्दितो) महादेवं. –d) दे1 ते1 ग्र1 नरकं ध्रुवं (→नरकायुतम्).

१६. –a) दे1 तस्माद-, दे8-10 ते1 मुवें. मुए. मुब. तस्मात्स- (→तस्मात्सा); दे4 तस्मात्सत्यपि कर्त्तव्या. –b) दे1.2.6.8 ते1 द1 ग्र1.2 म1 मुवें. मुए. मुब. पशुपतेर् (→पशुपतौ). –d) दे1.8-10 मुवें. मुए. मुब. मद्° (→तद्°); ते1 वा ततः (→यत्नतः).

१७. द1 ग्र1.2 म1. १७-१८ab ⊙. –a) दे8-10 मुवें. मुए. मुब. च (→तु). –c) दे3.6 भक्ति-, दे4 भक्ताः, दे8 भुक्तैः, दे10 भक्तेः (→भक्तैः).

१८. द1 ग्र1.2 म1. ⊙ (द्र. १७ पा. वि). –b) ते1 सूक्ष्मं वंगतं सदा स. –c) का1 °नार्यां (→°नोर्व्यां); ते1 न प्राप्नुवन्ति मे भक्ति. –d) का1 ब1 दे3-6 ते1 द्विजोत्तमाः (→द्विजोत्तमैः).

१९. द1 ग्र1.2 म1. ab ⊙. –a) ब3 उक्तः (→उक्ताः); दे8-10 मुवें. मुए. मुब. एवमुक्ताश्च (दे10 °थ) कृष्णेन. –b) दे8-10 मुवें. मुए. मुब. सर्वे ते (→सर्व एव). –c) दे10 उक्तास् (→उक्त्वा); द1 ग्र1.2 म1 तूर्णीं (→तूर्णं). –d) दे4 निस्थानानि च सत्तमाः, द1 ग्र1.2 म1 स्थानानि मुनिसत्तमाः.

२०. –a) दे5 ततो नारायणे कृष्णे. –c) दे3 स्वं (→स्व-).

२१. –a) ब2.3 इत्येव च (→इत्येष वः). –b) दे1.3.6 राज्ञा, ते1 राज– (→राज्ञां); दे9 वंशस्तु, दे10 वंशोऽत्र, मुवें. मुए. मुब. वंशः सु– (→वंशोऽनु–); का1 ब1-3 दे3.5.6 ते1 द1 ग्र1.2 –वर्णितः, दे4 –वर्तितः (→-कीर्तितः). –c) दे10 शक्तो (→शक्यो). –d) ग्र2 पुनः (→भूयः).

यः पठेच्छृणुयाद् वापि वंशानां कथनं शुभम् । सर्वपापविनिर्मुक्तः स्वर्गलोके महीयते ॥२२

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायां पूर्वविभागे षड्विंशोऽध्यायः ॥२६॥

# २७

ऋषय ऊचुः ।❀

कृतं त्रेता द्वापरं च कलिश्चेति चतुर्युगम् ।
एषां स्वभावं सूताद्य कथयस्व समासतः ॥१

सूत उवाच ।❀

गते नारायणे कृष्णे स्वमेव परमं पदम् ।
पार्थः परमधर्मात्मा पाण्डवः शत्रुतापनः ॥२

कृत्वा चैवोत्तरविधिं शोकेन महतावृतः ।
अपश्यत् पथि गच्छन्तं कृष्णद्वैपायनं मुनिम् ॥३
शिष्यैः प्रशिष्यैरभितः संवृतं ब्रह्मवादिनम् ।
पपात दण्डवद् भूमौ त्यक्त्वा शोकं तदाऽर्जुनः ॥४
उवाच परमप्रीतः कस्माद् देशान्महामुने ।
इदानीं गच्छसि क्षिप्रं कं वा देशं प्रति प्रभो ॥५　　वें. १.२८.५

२२. –a) दे1 य एषः (→यः पठेत्). –b) दे1.2 ते1 वंशानु– (→वंशानां); दे4 कथितं (→कथनं). –c) का1 ब1.3 दे3-6 द1 ग्र1.2 म1 °विशुद्धात्मा (→°विनिर्मुक्तः); ब2 सर्वं विशुद्धात्मात्मानं. –d) का1 सर्व° (→स्वर्ग°); का1 ब1.3 दे4.5 द1 ग्र1 स मोदते (→महीयते).

पुष्पिका—

**पुराणनाम**—द1. ⊙; का1 दे1.4.5.8-10 ग्र1.2 म1 मुवें. मुए. इति श्रीकूर्मपुराणे, ब1-3 दे2.3.6 इति कूर्मपुराणे, ते1 इत्यादिमहापुराणे श्रीकौर्मे, मुब. इति श्रीकौर्मे महापुराणे पूर्वभागे. **अध्यायनाम**—ब2 दे4 ते1 द1 ग्र1.2 म1. ⊙; का1 ब1 दे1.2.5.6.8-10 मुए. राजवंशानुकीर्त्तने, ब3 दे3 वंशानुकीर्त्तने, मुवें. मुब. राजवंशानुकीर्त्तनं नाम. **अध्यायसंख्या**— दे6. ⊙; का1 ब1.3 दे2.3.5 ते1 ग्र1 पंचविंशोऽध्यायः, ब2 द1 ॥२५॥, दे1.10 मुवें. सप्तविंशोऽध्यायः ॥२७॥, दे4 पंचविंशोऽध्यायः ॥२५॥, दे8.9 ग्र2 म1 मुए. मुब. सप्तविंशोऽध्यायः.

**२७**

[न1 पुस्तके अध्यायोऽयं नास्ति]

❀ ते1 श्री शिवः, + ऋषयः; ग्र1.2 म1 ऋषयः.

१. –a) ग्र2 कृतस् (→कृतं); म1 मुब. द्वापरश्च (→द्वापरं च). –b) दे1 चतुर्थकम् (→चतुर्युगम्). –c) दे2 ते1 तेषां, द1 येषां (→एषां); दे8-10 म1 मुवें. मुए. मुब. प्रभावं, द1 स्वरूपं (→स्वभावं); ब2 सूताग्र (→सूताद्य). –d) ते1 कथयाशु समाहितः.

❀ ग्र2. ⊙; दे8.9 सूत उ.; ते1 ग्र1 म1 सूतः; द1 श्रीसूतः.

२. –a) ब2 कृष्णं (→कृष्णे). –b) ब2 स्वदेवं, + स्वमेव (→स्वमेव); ब3 म1 स्वयमेव परं पदं.

३. –a) दे2 °त्तरां सिद्धिं, + °त्तरविधिं, द1 °त्तरविधिः, ग्र2 °त्तरं विधिं (→°त्तरविधिं). –b) ते1 लोकेन (→शोकेन). –c) ब1 अपश्यत् पार्थ गच्छन्तं, दे1 अपश्यत् पथि गायन्तं, ते1 अपश्यदधिगच्छन्तं, द1 अपश्यत्प्रति गच्छन्तं. –d) द1 ग्र1.2 म1 प्रभुं (→मुनिं).

४. –a) द1 ग्र1.2 म1 शिष्य- (→शिष्यैः); दे5 -रमितः, ते1 ग्र1 सहितं, द1 ग्र1 -रहितं (→-रभितः). –b) ब3 सद्वृत्तं (→संवृतं); ते1 द1 °वादिभिः (→°वादिनम्). –d) ग्र1 कृत्वा (→त्यक्त्वा); ब2 ग्र2 तमर्जुनः, दे4 तथार्जुनं (→तदाऽर्जुनः).

५. –a) दे10 परमं, ग्र2 परमः (→परम-); दे8-10 मुवें. मुए. मुब. प्रीत्या (→प्रीतः). –b) म1 तस्माद्

वें. १.२८.६ संदर्शनाद् वै भवतः शोको मे विपुलो गतः ।
इदानीं मम यत् कार्यं ब्रूहि पद्मदलेक्षण ॥६
तमुवाच महायोगी कृष्णद्वैपायनः स्वयम् ।
उपविश्य नदीतीरे शिष्यैः परिवृतो मुनिः ॥७

व्यास उवाच ।❀

इदं कलियुगं घोरं संप्राप्तं पाण्डुनन्दन ।
ततो गच्छामि देवस्य वाराणसीं महापुरीम् ॥८
अस्मिन् कलियुगे घोरे लोकाः पापानुवर्त्तिनः ।
भविष्यन्ति महापापा वर्णाश्रमविवर्जिताः ॥९
नान्यत् पश्यामि जन्तूनां मुक्त्वा वाराणसीं पुरीम् ।
सर्वपापप्रशमनं प्रायश्चित्तं कलौ युगे ॥१०
कृतं त्रेता द्वापरं च सर्वेष्वेतेषु वै नराः ।
भविष्यन्ति महात्मानो धार्मिकाः सत्यवादिनः ॥११
त्वं हि लोकेषु विख्यातो धृतिमाञ् जनवत्सलः ।
पालयाद्य परं धर्मं स्वकीयं मुच्यसे भयात् ॥१२
एवमुक्तो भगवता पार्थः परपुरंजयः ।
पृष्टवान् प्रणिपत्यासौ युगधर्मान् द्विजोत्तमाः ॥१३
तस्मै प्रोवाच सकलं मुनिः सत्यवतीसुतः ।
प्रणम्य देवमीशानं युगधर्मान् सनातनान् ॥१४

व्यास उवाच ।❀

वक्ष्यामि ते समासेन युगधर्मान् नरेश्वर ।
न शक्यते मया पार्थ विस्तरेणाभिभाषितुम् ॥१५

---

(→कस्माद्); दे8-10 मुवें. मुए. कस्मादेतन् (→कस्माद्देशान्). –d) का1 ब1-3 दे2.3.5.6 मुवें. मुए. मुब. कं वा, दे1 किं वा, दे4 कं सु, दे8-10 गङ्गा- ते1 द1 ग्र1 म1 कं च, ग्र2 कस्य (→कं वा-).

६. –a) दे10 सन्दर्शनार्थं (→सन्दर्शनाद्वै); दे4 भवता (→भवतः). –b) का1 विपुलं (→विपुलो); ग्र2 म1 हतः (→गतः); दे2 शोको यं विगतो यतः. –c) म1 अपि (→मम). –d) दे2.3 °दलेक्षणाः (→°दलेक्षण).

७. –b) ग्र1 म1 द्वैपायन- (→द्वैपायनः); का1 ब1 दे5 प्रभुः (→स्वयं).

७ श्लोकात्परं दे1.8-10 ते1 मुवें. मुए. पुस्तकेषु अध्याय-समाप्तिर्वर्तते —दे1.8.9 इति श्रीकूर्मपुराणे अष्टाविंशोध्यायः (दे1 ॥२८॥), दे10 इति श्रीकूर्मपुराणे अष्टाविंशोध्यायः ॥२८॥ श्रीसीतारामचन्द्रार्पणमस्तु ॥, ते1 इत्यादिमहापुराणे श्रीकौर्मे व्यासदर्शनं नाम षड्विंशोध्यायः, मुवें. मुए. इति श्री कूर्मपुराणे पार्थाय व्यासदर्शनं नामाष्टाविंशोऽध्यायः ॥२८॥.

❀ दे8 व्यास उ.,ते1 श्रीशिवः, + सूतः; द1 ग्र1.2म1 व्यासः.

८. –a) ब1 कथं, दे3 इ(ति)दं, म1 इदानीं (→इदं). –b) दे5.6 °नन्दनः (दे6 °नं). (→°नन्दन). –c) ते1 गच्छाम (→गच्छामि). –d) का1 शुभां वाराणसीमहं; दे1 पुरीं द्वारवतीं शुभां, दे2 ते1 मुवें. मुए. मुब. पुरीं वाराणसीं शुभां, दे6 वाराणस्यां महापुरीं, द1 ग्र1.2 म1 दिव्यां वाराणसीं पुरीं.

९. द1. ८c–११d ⊙ (द. सं.). –a) दे4 आसन् (→अस्मिन्). –b) ग्र2 °वृद्धिनः (→°वर्त्तिनः). –c) दे1.2.8-10 मुवें. मुए. मुब. महाबाहो, ते1 महाचक्रा (→महापापा). –d) दे10 विनिर्जिताः (→विवर्जिताः).

१०. द1. ⊙ (द्र. ९ पा. वि.). –a) ग्र2 पापात्मा, + ज्ञानात्मा (→जन्तूनां). –b) ब2 त्यक्त्वा, दे6.10 मुक्ता (→मुक्त्वा). –c) दे1.2.4.8-10 ते1 मुवें. मुए. मुब. -पापोप° (→-पाप प्र°). –d) दे3 प्रायश्चित्तौ (→प्रायश्चित्तं).

११. द1. ⊙ (द्र. ९ पा. वि.). –a) दे5.10 ग्र2 कृत— (→कृतं); दे10 ग्र2 त्रेतं (ग्र2 °त) (→त्रेता);ब2 मुब. द्वापरश्च (→द्वापरं च). –b) ब1 °ष्वेतेन (→°ष्वेतेषु); ब2 ते1 ये, दे8.9 मुए. ते (→वै); दे5 पुरा, ग्र1 यतः, ग्र2 म1 ततः (→नराः). –d) ते1 न्याय° (→सत्य°).

१२. ब2. cd ⊙. –a) ते1 परिज्ञातो (→-षु विख्यातो). –b) दे1 भक्त°, ते1 धर्म° (→जन°). –c) दे3.6 प्रापयाद्य, दे5 प्रापयस्व (→पालयाद्य); का1 परमं (→परं). –d) का1 ब1 दे3.5.6 स्वकीयान् (→स्वकीयं); का1 ब1.3 दे4.6.10 म1 मुच्यते (→मुच्यसे); दे10 भवान्, ग्र2 म1 भवात् (→भयात्).

अतः परं ते1 अधिकम्–प्रज्ञया पुष्यसे वरान्.

१३. –b) दे10 पार्थं, + पार्थः (→पार्थः). –c) ते1 °त्यास्मै (→°त्यासौ). –d) ते1 पुरा धर्मं, ग्र2 योग धर्म- (→युगधर्मान्).

१४. –b) ब2 पुनः (→मुनिः). –d) का1 ब1-3 दे3.5.6 °धर्मं (→°धर्मान्).

❀ दे6 द1 ग्र2 म1. ⊙; दे8.9 व्यास उ.; ते1 ग्र1 व्यासः.

१५. –a) दे10 तत् (→ते). –b) ब2 महेश्वरः, दे5 नरैश्वर (→नरेश्वर). –c) का1 ब2.3 दे3.5.6 न शक्यास्ते, दे2 न शक्यं ते (→न शक्यते); दे1.8-10 मुवें. मुए. मुब. मया राजन्, दे2 ते1 महाराजा (→मया पार्थ); म1 निशम्यते तु यत्

आद्यं कृतयुगं प्रोक्तं ततस्त्रेतायुगं बुधैः ।
तृतीयं द्वापरं पार्थ चतुर्थं कलिरुच्यते ॥१६
ध्यानं परं कृतयुगे त्रेतायां ज्ञानमुच्यते ।
द्वापरे यज्ञमेवाहुर्दानमेव कलौ युगे ॥१७
ब्रह्मा कृतयुगे देवस्त्रेतायां भगवान् रविः ।
द्वापरे दैवतं विष्णुः कलौ रुद्रो महेश्वरः ॥१८
ब्रह्मा विष्णुस्तथा सूर्यः सर्व एव कलिष्वपि ।
पूज्यते भगवान् रुद्रश्चतुर्ष्वपि पिनाकधृक् ॥१९
आद्ये कृतयुगे धर्मश्चतुष्पादः सनातनः ।
त्रेतायुगे त्रिपादः स्याद् द्विपादो द्वापरे स्थितः ।
त्रिपादहीनस्तिष्ये तु सत्तामात्रेण तिष्ठति ॥२०
कृते तु मिथुनोत्पत्तिर्वृत्तिः साक्षाद् रसोल्लसा ।
प्रजास्तृप्ताः सदा सर्वाः सदानन्दाश्च भोगिनः ॥२१
अधमोत्तमत्वं नास्त्यासां निर्विशेषाः पुरंजय ।
तुल्यमायुः सुखं रूपं तासां तस्मिन् कृते युगे ॥२२
विशोकाः सत्त्वबहुला एकान्तबहुलास्तथा ।
ध्याननिष्ठास्तपोनिष्ठा महादेवपरायणाः ॥२३

वें १.२६.१७

पार्थ. –d) का$_1$ ग्र$_2$ विस्तारेणाभि°, दे$_3$ विस्तरेणानि°, ते$_1$ विस्तरेणानु°, द$_1$ विस्तरेणापि, ग्र$_1$ विस्तरेणाद्य. (→°विस्तरेणाभि°); ब$_1$ दे$_{1.3.6}$ द$_1$ म$_1$ °भाषितं (→°भाषितु`).

१६. –a) ते$_1$ आदौ (→आद्यं). –b) का$_1$ दे$_5$ पुनः (→बुधैः). –c) दे$_{1.2}$ प्रोक्तं (→पार्थ). –d) ब$_{2.3}$ दे$_{3.5.6}$ चतुर्थः (→चतुर्थं); दे$_{10}$ कलिम् (→कलिर्); द$_1$ ग्र$_{1.2}$ म$_1$ युगं च (ते) (→°रुच्यते).

१७. –a) दे$_4$ ग्र$_1$ ज्ञानं, दे$_{10}$ ध्यायन् (→ध्यानं); दे$_{8-10}$ ते$_1$ मुवें. मुए. मुब. तपः, द$_1$ ग्र$_{1.2}$ म$_1$ स्मृतं (→परं). –b) द$_1$ ग्र$_{1.2}$ म$_1$ ध्यानम् (→ज्ञानम्); ब$_{1.3}$ दे$_{3-6}$ द$_1$ ग्र$_1$ म$_1$ अध्वरः (दे$_4$ °राः), ग्र$_2$ ईश्वरः (→उच्यते). –c) ग्र$_2$ बाहौ (→-वाहुः). –d) ब$_2$ दे$_{1.3.4.6.8-10}$ मुवें. मुए. मुब. एकं (→एव).

१८. –b) दे$_4$ ऋषिः, दे$_5$ प्रभुः, दे$_{10}$ विभुः (→रविः); ते$_1$ भग एव च (→भगवान् रविः). –d) दे$_{8-10}$ मुवें. मुए. मुब. देवो, ते$_1$ बुद्धो (→रुद्रो).

१९. दे$_4$.१९ a-२० b ⊙. –a) ब$_1$ दे$_{5.10}$ ते$_1$ ब्रह्म (→ब्रह्मा); ते$_1$ तदा (→तथा); ते$_1$ रुद्रः (→सूर्यः). –b) दे$_1$ शर्वः (→सर्वः); ब$_{2.3}$ दे$_1$ मुवें. मुब. कलावपि (→कलिष्वपि). ते$_1$ सर्व एव चतुर्ष्वपि, द$_1$ ग्र$_{1.2}$ म$_1$ सर्वदै(द$_1$ ग्र$_1$ °दे)व चतुर्ष्वपि. –c) का$_1$ पूजते, ब$_1$ दे$_{8.9}$ म$_1$ मुवें. मुए. मुब. पूज्यन्ते, ते$_1$ पूज्यते, + पूष्यते (→पूज्यते). –d) दे$_5$ चतुर्युग(?); द$_1$ ग्र$_{1.2}$ म$_1$ कलिष्वपि (→चतुर्ष्वपि); ते$_1$ °भृत् (→°धृक्).

२०. दे$_4$. ab ⊙. –a) म$_1$ आदौ, मुब. आद्यो (→आद्ये); दे$_5$ कृते (→कृत-); ग्र$_2$ आद्ये तत् कृतयुगे धर्माः. –b) दे$_{1.2.8-10}$ ते$_1$ मुवें. मुए. मुब. प्रकीर्त्तितः (→सनातनः). –c) दे$_{2.6}$ ग्र$_{1.2}$ म$_1$ त्रिपाद-(→त्रिपादः); दे$_6$ ग्र$_2$ द्विपादे, दे$_{10}$ द्विपादौ (→द्विपादः). –d) दे$_2$ ते$_1$ स्मृतः (→स्थितः). –e) ग्र$_2$ म$_1$ °हीनं (→°हीनस्); का$_1$ तिष्येषु, ब$_{1.3}$ दे$_{4.8}$ मुवें. मुए. मुब. तिष्ठेत्तु, ते$_1$ पादेन, ग्र$_2$ तुष्येन्द्र (→तिष्ये तु). –f) दे$_5$ सत्त्व° (→सत्ता°); दे$_4$ धिष्ठितः, ते$_1$ त्रिष्वपि (→तिष्ठति). द$_1$ ग्र$_{1.2}$ म$_1$ सत्तामात्रमधिष्ठितः.

२१. –a) दे$_{3.6}$ कृतेति-, ग्र$_2$ कृतोऽनु- (→कृते तु); दे$_2$ मधुनो°, + मैथुनी° (→मिथुनो°); ग्र$_2$ °नोत् भक्ति (→°नोत्पत्तिः). –b) दे$_4$ वृत्ति (→वृत्तिः); का$_1$ दे$_{1.2.8-10}$ मुवें. मुए. मुब. °दलोलुपाः, ब$_1$ °दसोर्णसा, दे$_6$ °द्रसोत्तमा, ग्र$_2$ °द्रसेवसाः (→°द्रसोल्लसा); ब$_{2.3}$ वृत्तिः सर्वत्र मानसी, ते$_1$ वृत्तिः साधारणी स्मृता. म$_1$ वृत्तिस्साभद्रसोल्लसा. –c) दे$_2$ तुष्टा, + तृप्ताः, दे$_3$ -सूयः, दे$_5$ सृष्टाः, दे$_6$ स्त्रियः, दे$_{10}$ सुप्ताः, ते$_1$ स्वस्थाः, द$_1$ स्मृत्वा (→तृप्ताः); का$_1$ तथा, दे$_1$ तदा, ग्र$_2$ ततस् (→सदा). –d) ब$_1$ दे$_{8-10}$ मुवें. मुए. सर्वा° (→सदा°); दे$_3$ सु- (→च); दे$_5$ भागिनः, ते$_1$ ग्र$_{1.2}$ म$_1$ योगिनः (→भोगिनः).

२२. –a) ब$_{2.3}$ दे$_1$ मुब °मोत्तमता, दे$_5$ °मोत्तमत्व (→°मोत्तमत्वं); का$_1$ अधमोत्तमा न सन्तीति, दे$_4$ धर्मोत्तमत्वं नास्त्यासां, द$_1$ धर्मोत्तरत्वं नाद्या ये, ग्र$_1$ धर्मोत्तरत्वन्नाप्यासीत्, ग्र$_2$ धर्मोत्तरत्वान्नागेसन्, म$_1$ धर्मोत्तरत्वान्नाकेस्मिन्. –b) द$_1$ ग्र$_{1.2}$ म$_1$ निर्विशेषः (→निर्विशेषाः); ब$_1$ परंतप, ब$_2$ दे$_{3.5}$ परंजय (दे$_3$ °यात्), ते$_1$ परस्परम्, (→पुरंजयः). –c) द$_1$ ग्र$_{1.2}$ म$_1$ °माहुः (→°मायुः); दे$_5$ सुसंधर्मान्, ते$_1$ ग्र$_2$ म$_1$ दुखं (→रूपं). –d) दे$_{1.8-10}$ ते$_1$ मुवें. मुए. तासु (→तासां); म$_1$ युगे युगे (→कृते युगे).

२३. –a) दे$_{1.2}$ सत्य,° दे$_{4.8-10}$ द$_1$ मुवें. मुए. तत्त्व° (→सत्त्व°); म$_1$ °विपुलाः (→°बहुलाः). –b) दे$_1$ स्थिताः (→तथा).

वं.१.२९.१७ ता वै निष्कामचारिण्यो नित्यं मुदितमानसाः ।
पर्वतोदधिवासिन्यो ह्यनिकेताः परंतप ॥२४
रसोल्लासा कालयोगात् त्रेताख्ये नश्यते ततः ।
तस्यां सिद्धौ प्रणष्टायामन्या सिद्धिरवर्त्तत ॥२५
अपां सौक्ष्म्ये प्रतिहते तदा मेघात्मना तु वै ।
मेघेभ्यः स्तनयित्नुभ्यः प्रवृत्तं वृष्टिसर्जनम् ॥२६
सकृदेव तया वृष्ट्या संयुक्ते पृथिवीतले ।
प्रादुरासंस्तदा तासां वृक्षा वै गृहसंज्ञिताः ॥२७
सर्वप्रत्युपयोगस्तु तासां तेभ्यः प्रजायते ।
वर्त्तयन्ति स्म तेभ्यस्तास्त्रेतायुगमुखे प्रजाः ॥२८
ततः कालेन महता तासामेव विपर्ययात् ।
रागलोभात्मको भावस्तदा ह्याकस्मिकोऽभवत् ॥२९
विपर्ययेण तासां तु तेन तत्कालभाविना ।
प्रणश्यन्ति ततः सर्वे वृक्षास्ते गृहसंज्ञिताः ॥३०
ततस्तेषु प्रनष्टेषु विभ्रान्ता मैथुनोद्भवाः ।
अभिध्यायन्ति तां सिद्धिं सत्याभिध्यायिनस्तदा ॥३१
प्रादुर्बभूवुस्तासां तु वृक्षास्ते गृहसंज्ञिताः ।
वस्त्राणि ते प्रसूयन्ते फलान्याभरणानि च ॥३२

---

२४. –a) ब3 ततो, दे1 चेरुर्, दे5 स वै (→ता वै); दे5 °तारिण्यो (→°चारिण्यो); ग्र2 ता वैदिकामाचारिण्यो. –c) दे4 पर्वता-, दे6 सर्वतो° (→पर्वतो°); द1 ग्र1.2 म1 पर्वतो (ग्र2 °ते)द्दे (ग्र2 °द)शवासिन्यो. –d) ग्र2 श्रीनिकेताः (→ह्यनिकेताः); ब1 दे5 परं तपः, दे8-10 परंतपाः (→परन्तप).

२५. –a) का1 दे2 रसोल्लसा, ब1 रसोर्णसा, ब2 दे1 अनालस्याः (दे1 °साः), दे3 मुवें. मुए. मुब. रसोल्लासः, दे5 रसेलिकां, ग्र2 खरसाल्या (→रसोल्लासा); ब2 कालवशात्, दे8-10 कलायोगात् (→कालयोगात्). –b) दे1 त्रेतायां, ते1 द्वितीये (→त्रेताख्ये); ते1 मुवें. मुए. मुब. नश्यति (→नश्यते); दे1 नृप, दे2.8-10 ते1 मुए. मुब. द्विजाः (→ततः); ब1 त्रेताख्ये न च ते च कः. –c) ते1 तासां, ग्र2 तस्य (→तस्यां); दे2 स्थितौ (→सिद्धौ). –d) ब3 दे1.3.6 प्रवर्त्तते (दे1 °त) (→-रवर्त्तत).

२६. –a) ते1 तदा (→अपां); का1 ब2.3 दे2-6 ते1 मुवें. मुए. मुब. सौख्ये, दे1 शौचे; द1 ग्र1.2 सौक्ष्म्यं, म1 सौख्यं (→सौक्ष्म्ये); का1 ब1-3 दे3.5.6 प्रतिगते, द1 ग्र1.2 म1 प्रतिगतं (ग्र2 °ता) (→प्रतिहते). –b) दे4 द1 ग्र1.2 म1 तथा (→तदा); का1 मध्यात्मना तु वै, ब2 मेघातुरा तु वै, दे3.6 मेघात्मनार्णवे, ते1 मेघात्मना बुधैः, ग्र1 मेघात्म्यमाशु वै, ग्र2 म1 मेरवा(म1 °घा)न्तरे शुभैः (→मेघात्मना तु वै). –c) दे4 मध्येभ्यस् (→मेघेभ्यः); दे3 -स्तनपितृभ्यः, दे6 स्वनयितृभ्यः (→स्तनयित्नुभ्यः); ते1 मेघेभ्यस्त्वभवत्ताभ्यः. –d) का1 प्रवर्त्तं, ते1 प्रवृत्तिः, ग्र1.2 म1 प्रवृष्टं(ग्र2 °ष्टि) (→प्रवृत्तं); ते1 सृष्टि-, ग्र2 अथ (→वृष्टि-); द1 ग्र1.2 म1 °गर्जनम् (→°सर्जनम्).

२७. –a) दे1 सकृतेव, दे6 सहदेव (→सकृदेव). –c) दे8-10 द1 ग्र1.2 म1 मुवें. मुए. मुब. तथा (→तदा); म1 तेषां (→तासां). –d) ते1 व्यक्ता (→वृक्षा); दे2 ते1 °संस्थिता (→°संज्ञिताः).

२८. –a) का1 द1 सर्वे प्र°, ब1 सर्वं प°, ब2 सर्वं प्र°, दे2 सर्वे वृ°, दे4 ग्र1 म1 सर्वे(दे4 °र्वं)प्री°, ग्र2 सकृत् प्र° (→सर्वः प्र°); का1 दे2-4 °भोगास्तु, ब1-3 दे6 द1 ग्र1 म1 °भोगस् (ब2 °गं) तु (→°योगस्तु); ते1 सर्वत्र ह्युपभोगस्तु. –b) ग्र2 तस्मात् (→तासां); दे2 मेधा (→तेभ्यः); दे1.4 द1 ग्र1.2 म1 प्रवर्त्तते, दे2 प्रजज्ञिरे (→प्रजायते). –c) दे3.6 सु- (→स्म); दे4 वर्त्तयन्ति द्रुमेभ्यस्ताः, ग्र2 प्रवर्त्तयन्ति स्म तेभ्यः. –d) दे5 °सुखे (→°मुखे).

२९. –a) दे4 तस्य (→ततः). –b) ब3 ताभ्याम् (→तासां). –c) ते1 राज°, + रजो°, द1 रोग° (→राग°); दे2 °लोभादिको (→°लोभात्मको). –d) दे4 द1 ग्र1.2 म1 तथा (→तदा); ब2 वा°, दे1.6-द्या°, दे4 त्वा° (→ह्या°).

३०. –a) ते1 सा तत्र (→तासां तु). –b) दे2 तदा (→तेन); दे1.2.5.8-10 ते1 मुवें. मुए. मुब. °भाविताः (दे1 ते1 मुवें. मुए. °ता) (→°भाविना). –c) ब2 तदा (→ततः). –d) दे3.6 ब्रह्माः (दे6 °ह्म), दे5 वृत्तास् (→वृक्षास्); दे1 वै (→ते); ब3 गुह°, ग्र1 ग्रह° (→गृह°); म1 °वर्तिताः (→°संज्ञिताः).

३१. ब1 दे10 म1. ३१ a-३२ b ⊙; दे5.c ⊙. –a) ब3 दे1.3.5.6 ते1 द1 ग्र1 प्रणष्टेषु, ग्र2 प्रविष्टेषु (→प्रनष्टेषु); दे5 विधातान् (→विभ्रान्ता). –b) ब2 मिथुनो° (→मैथुनो°). –d) का1 दे5 ध्यायितस्, दे8-10 मुवें. मुए. °ध्यानतस् (→°ध्यायिनस्).

३२. ब1 दे10 म1.ab ⊙ (द्र. ३१ पा. वि.). –b) द1 वृक्षाग्रे (→वृक्षास्ते); दे2 °संस्थिताः, ते1 °संहिताः (→°संज्ञिताः). –d) दे8-10 फलेष्वा°, ते1 फलन्त्या° (→फलान्या°).

**तेष्वेव जायते तासां गन्धवर्णरसान्वितम् ।**
**अमाक्षिकं महावीर्यं पुटके पुटके मधु ।।३३**
**तेन ता वर्त्तयन्ति स्म त्रेतायुगमुखे प्रजाः ।**
**हृष्टपुष्टास्तया सिद्धया सर्वा वै विगतज्वराः ।।३४**
**ततः कालान्तरेणैव पुनर्लोभावृतास्तदा ।**
**वृक्षांस्तान् पर्यगृह्णन्त मधु चामाक्षिकं बलात् ।।३५**
**तासां तेनापचारेण पुनर्लोभकृतेन वै ।**
**प्रणष्टा मधुना सार्द्धं कल्पवृक्षाः क्वचित् क्वचित् ।।३६**
**शीतवर्षातपैस्तीव्रैस्ततस्ता दुःखिता भृशम् ।**
**द्वन्द्वैः संपीड्यमानास्तु चक्रुरावरणानि च ।।३७**
**कृत्वा द्वन्द्वप्रतीघातान् वार्त्तोपायमचिन्तयन् ।**
**नष्टेषु मधुना सार्द्धं कल्पवृक्षेषु वै तदा ।।३८**
**ततः प्रादुर्बभौ तासां सिद्धिस्त्रेतायुगे पुनः ।**
**वार्त्तायाः साधिका ह्यन्या वृष्टिस्तासां निकामतः।।३९**
**तासां वृष्ट्यूदकानीह यानि निम्नैर्गतानि तु ।**
**अवहन् वृष्टिसंतत्या स्रोतः स्थानानि निम्नगाः।।४०**
**ये पुनस्तदपां स्तोकाः आपन्नाः पृथिवीतले ।**
**अपां भूमेश्च संयोगादोषध्यस्तास्तदाऽभवन् ।।४१** वं.१.२९.३५

---

ते1 पुस्तके b,c मध्ये अधिकम्—

*सर्वप्राण्युपभोगास्तु तासा तेभ्यः प्रवर्तिताः । ( = २८ab)

**३३.** –a) द1 ग्र1 म1 येष्वेव(म1 °वं), ग्र2 यत्तेषु (→तेष्वेव); दे4 ज्ञायते (→जायते); दे10 वासां, म1 तेषां (→तासां); ते1 तेष्वेव जायतेऽन्नादिर्. –b) दे4.10 °समन्वितम् (→°रसान्वितं). –c) ग्र2 माक्षिकं तं (→अमाक्षिकं).

**३४.** –a) का1 ग्र2 तेन वा-, म1 ते नाम (→तेन ता). –c) दे1 हृष्टा * *, दे2.8-10 ते1 मुवें. मुए. हृष्टास्तुष्टाः, मुब. हृष्टाः पुष्टाः (→हृष्टपुष्टाः); दे1.4 ग्र2 म1 मुब. तथा, ते1 तदा (→तया); दे1.2.5 ते1 ग्र1 म1 मुब. सिद्धाः (→सिद्धया). –d) ग्र2 म1 ता (→वै).

**३५.** –a) दे1.8-10 मुवें. मुए. मुब. पुनः (→ततः). –b) दे8-10 मुवें. मुए. मुब. ततो (→पुनर्); ब1.2 दे6 °वृतस् (→°वृतास्); दे4 द1 ग्र1 म1 तथा (→तदा); दे1 पुनर्लोभा(तु)हतास्तथा, दे2 पुनर्लोभान्वितास्तथा, दे8-10 पुनर्लोभात्तदा वृताः, ते1 प्रजालाभान्वितास्तदा. –c) दे4.5.10 ग्र2 वृक्षास् (→वृक्षान्); का1 [अ]स्मान्, ब2.3 ताः (→तान्); ब3 °गृह्णन्तु, द1 °गृह्णन्ति (→°गृह्णन्त). –d) का1 दे3.5.6 ग्र1 मधुना, दे1.2.4.8-9 द1 ग्र2 मुवें. मुए. मधु बा, दे10 मधुरा (→मधु चा-); दे10 °चाक्षिकं (→°माक्षिकं); दे2 जनाः (→बलात्); ते1 मधुवस्त्रादिकं बलात्.

**३६.** –b) द1 च, ग्र2 म1 वा (→वै). –c) ब2.3 दे2.4.6.9 मुवें. मुए. मुब. प्रनष्टा (→प्रणष्टा). –d) म1 कल्पवृक्षेषु वै तदा.

**३७.** –b) दे1 तीक्षा*, दे8.9 मुवें. मुए. मुब. तास्ततो, दे5 ते तस्ता, दे10 तेस्तास्त (→ततस्ता); ग्र2 तस्माद् दुःखितो भृशं. –c) द1 ग्र1.2 म1 दण्डैस् (→द्वन्द्वैस्); दे4 स (→सं-); दे6.10 °पीड्यमानस् (→पीड्यमानास्). –d) दे5 बहुधा° (→चक्रुरा°); दे10 °चरणानि (→°वरणानि); दे1.2.4 द1 ग्र1.2 म1 तु (→च); ते1 वृक्षाद्यावरणे गते.

**३८.** –a) दे1 ते तान्, दे10 कृता (→कृत्वा); दे3.6 द्वन्द्वा° (→द्वन्द्व°); दे8-10 मुवें. मुए. विनिर्घातान्, द1 ग्र1.2 प्रतीघात-, म1 प्रतीकारम् (→प्रतीघातान्). –c) दे5 नद्येषु, म1 गतेषु (→नष्टेषु); ग्र2 मनसा (→मधुना).

**३९.** दे5. ३८a–४२d ⊙ (द. सं.); द1 ग्र1.2 म1. ३९c–४१b ⊙. –a) दे1-3 मुवें. मुए. मुब. °रभूत्तासां, दे8-10 °बभूवाथ (→°बभौ तासां); ते1 प्रादुर्भूतानस्य सिद्धि-. –b) ते1 मुखे (→सिद्धिस्). –c) दे8-10 मुब. साधका (→साधिका); ब2.3 मुब. तस्या, दे4 चान्या, ते1 ह्युक्ता (→ह्यन्या).

**४०.** दे5 द1 ग्र1.2 म1. ⊙. –b) ब3 निम्ने, दे3.6 मुब. निम्न– (→निम्नैर्); दे1 हृतानि (→गतानि); ते1 यानि सन्ति तु तानि वै. –c) ब2 दे1.4.8-10 मुवें. मुए. मुब. अभवन्, दे6 अवहद्, ते1 आवहन् (→अवहन्). –d) ब1 दे3.6 ते1 स्रोत-, दे1.8.10 श्रोतु (दे8 °तः) (→स्रोतः).

**४१.** दे5. ⊙; द1 ग्र1.2 म1. ab ⊙. –a) का1 लोकाः, दे3.6 स्तोको (→स्तोकाः); दे8-10 मुवें. मुए. यदा आपो बहुतराः. –b) का1 प्रपन्नाः, ब3 अमराः, ते1 आगताः (→आपन्नाः). –c) दे4 आपो (→अपां); ग्र2 भूतेश् (→भूमेश्); दे2 ते1 तु (→च). –d) का1 ब1 दे1.2.4.8-10 मुवें. मुए. औषध्यस् (→ओषध्यस्); का1 दे2 ते1 तु तदा, दे4 द1 तास्तथा, ग्र1 तास्ततो, ग्र2 म1 तत्तथा (→तास्तदा).

वें.१.२९.३५ अफालकृष्टाश्चानुप्ता ग्राम्यारण्याश्चतुर्दश ।
ऋतुपुष्पफलैश्चैव वृक्षगुल्माश्च जज्ञिरे ॥४२
ततः प्रादुरभूत् तासां रागो लोभश्च सर्वशः ।
अवश्यं भाविनाऽर्थेन त्रेतायुगवशेन वै ॥४३
ततस्ताः पर्यगृह्णन्त नदीक्षेत्राणि पर्वतान् ।
वृक्षगुल्मौषधीश्चैव प्रसह्य तु यथाबलम् ॥४४
विपर्ययेण तासां ता ओषध्यो विविशुर्महीम् ।
पितामहनियोगेन दुदोह पृथिवीं पृथुः ॥४५
ततस्ता जगृहुः सर्वा अन्योन्यं क्रोधमूर्च्छिताः ।
वसुदारधनाद्यांस्तु बलात् कालबलेन तु ॥४६
मर्यादायाः प्रतिष्ठार्थं ज्ञात्वैतद् भगवानजः ।
ससर्ज क्षत्रियान् ब्रह्मा ब्राह्मणानां हिताय च ॥४७
वर्णाश्रमव्यवस्थां च त्रेतायां कृतवान् प्रभुः ।
यज्ञप्रवर्त्तनं चैव पशुहिंसाविवर्जितम् ॥४८
द्वापरेष्वथ विद्यन्ते मतिभेदाः सदा नृणाम् ।
रागो लोभस्तथा युद्धं तत्त्वानामविनिश्चयः ॥४९
एको वेदश्चतुष्पादस्त्रेतास्विह विधीयते ।
वेदव्यासैश्चतुर्द्धा तु व्यस्यते द्वापरादिषु ॥५०
ऋषिपुत्रैः पुनर्भेदाद् भिद्यन्ते दृष्टिविभ्रमैः ।
मन्त्रब्राह्मणविन्यासैः स्वरवर्णविपर्ययैः ॥५१

---

४२. दे$_5$. ⊙. –a) ब$_{1-3}$ दे$_{1.2.6}$ अ(दे$_1$ आ) काल°, दे$_{10}$ अफला° (→अफाल°); का$_1$ दे$_{3.6}$ चालुप्ताः (→चानुप्ताः); दे$_4$ हलाकृष्टाश्चानुपात्ता, ते$_1$ अफालकृष्टास्तस्यासन्, द$_1$ हलादष्टाश्चानुप्ता, ग्र$_1$ म$_1$ हलाकृष्टाश्चतुःप्राप्ता, ग्र$_2$ हलातुष्टाश्चतुः प्राप्ता. –b) ब$_3$ °रण्यश् (→°रण्याश्); दे$_1$ °दिशः (→°दश). –c) ब$_1$ फलं चैव, दे$_1$ फलाश्चैव (→फलैश्चैव); द$_1$ ग्र$_{1.2}$ म$_1$ चतुष्पथफलैश्चैव. –d) ब$_1$ वृक्षा (→वृक्ष-).

४३. –a) ते$_1$ आसां (→तासां). –b) दे$_4$ राग- (→रागो); दे$_4$ सर्वतः (→सर्वशः). –c) दे$_1$ अविश्यं, दे$_2$ आवश्यं, ग्र$_2$ अविश्या–, म$_1$ अवश्य– (→अवश्यं); दे$_{2.8.10}$ मुवें. मुए. मुब. भावितार्थेन; दे$_{3.6}$ भाविनात्मेन (→भाविनाऽर्थेन). –d) ब$_{1-3}$ दे$_{3.6}$ द$_1$ ग्र$_{1.2}$ म$_1$ च (→वै).

४४. –a) का$_1$ दे$_5$ पर्यगृह्णन् तु (→पर्यगृह्णन्त). –b) ब$_2$ °तोयानि, ते$_1$ °क्षेत्रादि- (→°क्षेत्राणि). –c) दे$_5$ °ल्मौषधान्, ग्र$_2$ °ल्मोषरश् (→°ल्मौषधीश्). –d) का$_1$ प्रगृह्यतु, दे$_6$ प्रसह्यनु, दे$_{8.9}$ प्रसह्यन्तु, ते$_1$ प्रसज्यन्त (→प्रसह्य तु).

४५. –a) का$_1$ ब$_3$ दे$_6$ विपर्ययेन, दे$_5$ विपर्ययोग– (→विपर्ययेण); दे$_1$ च तासां, दे$_{8-10}$ नाशाच्च, ग्र$_2$ म$_1$ तासां तु, (→तासां ताः). –b) ते$_1$ गुहाम् (→महीम्).

४६. –a) का$_1$ ग्र$_2$ सर्वे (→सर्वाः). –b) का$_1$ दे$_{8-10}$ मुवें. मुए. मुब. ह्यन्योन्यं, ते$_1$ ह्योषध्यः (→अन्योन्यं). –c) का$_1$ ब$_{2.3}$ दे$_{4.5}$ ते$_1$ असुरा दानवाद्यास्तु(ब$_2$ °श्च), ब$_1$ असनदानधनाद्यांस्तु, दे$_{1.2}$ पशुदारधनाद्यांस् (दे$_1$ °ढयांस्) तु, दे$_3$ आशुदाराधनाद्यास्तु, दे$_6$ आसुदाराधनाद्यास्तु, दे$_{8-10}$ मुवें. मुए. सदाचारे विनष्टे तु, मुब. आप्तदारधनाद्यास्तु. –d) ब$_{1.2}$ दे$_{8-10}$ मुवें. मुए. मुब. च (→तु).

४७. –a) दे$_2$ मर्यादा *****. –b) दे$_{8.6}$ प्रतिष्ठानं (→प्रतिष्ठार्थं). –c) ते$_1$ दोभ्याम् (→ब्रह्मा). –d) दे$_4$ हितानि (→हिताय); दे$_{8-10}$ मुवें. मुए. मुब. वै (→च).

४८. –a) दे$_1$ °व्यवस्थानं, दे$_2$ ते$_1$ °व्यवस्थान्तु, मुब. व्यवस्थाश्च (→व्यवस्थां च). –b) का$_1$ ब$_{2.3}$ दे$_{3.5.6}$ विभुः (→प्रभुः). –c) मुब. °नश्चैव (→°नं चैव). –d) द$_1$ ग्र$_{1.2}$ म$_1$ °विवर्जनम (→°विवर्जितम्).

४९. –a) दे$_2$ द$_1$ ग्र$_{1.2}$ स्वथ, दे$_4$ ते$_1$ -ष्वेव, दे$_8$ म$_1$ मुवें. मुए. मुब. -प्यथ, दे$_{10}$ -स्यथ (→-ष्वथ); का$_1$ दे$_{1.4}$ ते$_1$ द$_1$ ग्र$_2$ भिद्यन्ते (→विद्यन्ते). –b) दे$_1$ ग्र$_{1.2}$ म$_1$ गति° (→मति°); दे$_{1.2.4.8-10}$ द$_1$ ग्र$_{1.2}$ म$_1$ मुवें. मुए. तथा (→सदा); ते$_1$ मन्त्राभेदात्मधा नृणां. –c) दे$_6$ तदा (→तथा); दे$_4$ श्रद्धा (→युद्धं). –d) ब$_1$ मत्वा नाम°, दे$_{8-10}$ मुवें. मुए. मत्वा बुद्धि°, ग्र$_2$ सत्त्वानाम° (→तत्त्वानाम°); दे$_{8-10}$ मुवें. मुए. °विनिश्चयं (→°विनिश्चयः); ते$_1$ तत्वानामपि निश्चयम्.

५०. –a) दे$_4$ ग्र$_1$ देवश् (→वेदश्). –b) ब$_2$ त्रेताग्निश्च, दे$_{1.3.8-10}$ मुवें. मुए. मुब. त्रिधा त्विह, ते$_1$ त्रेधा त्विह, ग्र$_1$ त्रेताख्येन (→त्रेतास्विह); दे$_{8-10}$ मुवें. मुए. मुब. विभाव्यते, म$_1$ विशीयेते (→विधीयते). –c) ब$_2$ म$_1$ वेदव्यासश्, दे$_1$ वेदाभ्यासैश्, दे$_3$ वेदाव्यासैश् (→वेदव्यासैश्); दे$_{8-10}$ मुवें. मुए. मुब. च (→तु). –d) दे$_1$ व्यंजते, दे$_{8-10}$ मुवें. मुए. न्यस्यते, ग्र$_2$ व्यास्यते, म$_1$ व्यज्यत (→व्यस्यते).

५१. –a) का$_1$ ब$_1$ दे$_{1.4.5.8-10}$ द$_1$ ग्र$_{1.2}$ भेदाः, दे$_{1.2}$ ते$_1$ मुवें. मुए. मुब. वेदा, म$_1$ वेदा, + वेदं (→भेदाद्). –b) दे$_{8.9}$ विद्यन्ते (→भिद्यन्ते); दे$_5$ पाथि (→दृष्टि-); ब$_2$ मुब. °वित्तमैः (→°विभ्रमैः). –d) म$_1$ °मन्त्र° (→°वर्ण°); दे$_6$ °विपर्ययः (→°विपर्ययैः).

संहिता ऋग्यजुःसाम्नां संहन्यन्ते श्रुतर्षिभिः ।
सामान्याद् वैकृताच्चैव दृष्टिभेदैः क्वचित् क्वचित्॥५२
ब्राह्मणं कल्पसूत्राणि मन्त्रप्रवचनानि च ।
इतिहासपुराणानि धर्मशास्त्राणि सुव्रत ॥५३
अवृष्टिर्मरणं चैव तथैव व्याध्युपद्रवाः ।
वाङ्मनःकायजैर्दुःखैर्निर्वेदो जायते नृणाम् ॥५४
निर्वेदाज्जायते तेषां दुःखमोक्षविचारणा ।
विचारणाच्च वैराग्यं वैराग्याद् दोषदर्शनम् ॥५५
दोषाणां दर्शनाच्चैव द्वापरे ज्ञानसंभवः ।
एषा रजस्तमोयुक्ता वृत्तिर्वै द्वापरे स्मृता ॥५६
आद्ये कृते तु धर्मोऽस्ति स त्रेतायां प्रवर्त्तते ।
द्वापरे व्याकुलीभूत्वा प्रणश्यति कलौ युगे ॥५७ वें.१.२९.५१

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायां पूर्वविभागे सप्तविंशोऽध्यायः ॥२७॥

---

**५२.** दे6. ५२d-५४a ⊙ (द्र. सं.). –a) दे5.6.10 साम्ना (→साम्नां). –b) दे1 संहन्यन्त, दे8-10 ते1 मुवें. मुए. ससंहृत्य, द1 ग्र2 म1 संदिश्यन्ते, ग्र1 संदिह्यन्ते (→संहन्यन्ते); दे1.2 ते1 सुरर्षिभिः, दे3 शुभर्षिभिः, दे4 द1 ग्र1.2 म1 महर्षिभिः (→श्रुतर्षिभिः); दे8-10 मुवें. मुए. प्रोच्यन्ते परमर्षिभिः. –c) ब2.3 द1 ग्र1.2 म1 वैकृताश्चैव, दे6 वैकृतं चैव (→वैकृताच्चैव); दे4 सामान्याश्च कृताश्चैव, दे8-10 मुवें. मुए. मुब. सामान्योद्भावना चैव, ते1 सामान्याद्यैक्यता चैव. –d) ग्र2 वृष्ट°, म1 दृष्ट° (→दृष्टि°); दे1 °भेदो, दे3.4 °भेदा (→°भेदैः).

**५३.** दे6. ⊙ (द्र. ५२ पा. वि). –a) दे2 मन्त्र°, + कल्प° (→कल्प°). –b) दे8-10 मुवें. मुए. मुब. ब्रह्म° (→मन्त्र°); दे4 मन्त्रेण प्रसवानि च. –d) दे5 ग्र1 सुव्रताः, दे10 सुव्रतः (→सुव्रत).

**५४.** दे6. a ⊙ (द्र. ५२ पा. वि.). –a) ब2 अदृष्टिर्, दे2 प्रवृत्तिर्,+अवृष्टिर्, ते1 प्रसूतिं (→अवृष्टिर्); दे2 चैतत् (→चैव). –b) दे2 तथा ते, दे3.6 दुर्भिक्ष्य (दे6 °क्ष) (→तथैव); दे2 उपक्रमाः,+उपद्रवाः (→उपद्रवाः); दे8-10 मुवें. मुए. तथैवान्ये ह्युपद्रवाः. –c) दे1.3.8-10 ते1 मुवें. मुए. दोषैर् (→दुःखैर्).

**५५.** –a) दे4 निर्वेदो (→निर्वेदाज्); दे6 ज्ञायते (→जायते); दे1 तस्माद्, दे3.6 चैषां (→तेषां). –b) ब2 सुख-, ब3 दे5 दुःखं (→दुःख-); ब3 दे1.4 -विचारणाः, ते1 -विचारणे, ग्र2-विचारणं (→-विचारणा). –c) दे3.6 विचारणानु- (→विचारणाच्च).

**५६.** –a) का1 स्पर्शनाच्चैव, ते1 दर्शनादेव, ग्र2 दर्शनं चैव (→दर्शनाच्चैव). –c) दे10 एषो, ग्र2 एष, म1 एषां (→एषा); दे1 राजन् (→रजस्). –d) ब3 वृष्टिर् (→वृत्तिर्); म1 वा (→वै); दे8-10 पारिका (दे9 °क-) (→द्वापरे); दे1.8-10 मुवें. मुए. मुब. द्विजाः, द1 ग्र2 स्थिताः (→स्मृता); ते1 व्यक्तिरेवापद द्विजाः.

**५७.** –a) का1 दे5 च, ब1-3 दे3.6 न (→तु); दे4 द1 ग्र1.2 म1 आद्ये कृतेऽस्ति यो धर्मस्. –b) का1 दे2 प्रवर्द्धते, दे1 संप्रवर्त्तते (→प्रवर्त्तते). –c) दे4.5 व्याकुलो, म1 द्वापरे (→व्याकुली–); दे4 ते1 द1 ग्र1 °भूतः (ते1 °ताः), म1 भूयः (→भूत्वा); ग्र2 द्वापरे विपरीताश्रः. –d) दे4 ग्र2 ते1 प्रण- (दे4 °न) श्यन्ति (→प्रणश्यति).

**पुष्पिका**—[द1 पुस्तके अध्यायसमाप्तिर्नास्ति]

**पुराणनाम**— का1 दे1.4.8-10 ग्र1.2 मुवें. मुए. इति श्रीकूर्मपुराणे, ब1 इति कौर्मे, ब2.3 दे2.3.6 म1 इति कूर्मपुराणे, दे5 इति श्रीकौर्मे महापुराणे, ते1 इत्यादिमहापुराणे श्रीकौर्मे, मुब. इति श्रीकौर्मे महापुराणे पूर्वभागे. **अध्यायनाम**—ब2 दे4 ते1 ग्र1.2 म1. ⊙; का1 युगधर्मकीर्तनं नाम, ब1.3 दे5 युगधर्मसंकीर्त्तनं नाम, दे1 युगधर्मकीर्तने, दे2.8-10 मुब. युगधर्मानुकीर्त्तने, दे3.6 युगधर्मानुकीर्त्तनं (दे3 °नो) नाम, मुवें. मुए. युगवंशानुकीर्त्तनं नाम. **अध्यायसंख्या**— दे6. ⊙; का1 ब1.3 दे3.5 ग्र1 षड्विंशोऽध्यायः, ब2 ॥२६॥, दे1.8.9 मुवें. मुए. एकोनत्रिंशोऽध्यायः, दे2 षड्विंशतितमोऽध्यायः ॥२६॥, दे4 षड्विंशोऽध्यायः ॥२६॥, दे10 एकोनत्रिंशोऽध्यायः ॥२९॥ श्रीकृष्णार्पणमस्तु, ते1 सप्तविंशोऽध्यायः, ग्र2 म1 अष्टाविंशोऽध्यायः, मुब. अष्टाविंशोऽध्यायः ॥२८॥.

# २८

व्यास उवाच ।❀

वें.१.३०.१ तिष्ये मायामसूयां च वधं चैव तपस्विनाम् ।
साधयन्ति नरा नित्यं तमसा व्याकुलीकृताः ।।१
कलौ प्रमारको रोगः सततं क्षुद् भयं तथा ।
अनावृष्टिभयं घोरं देशानां च विपर्ययः ।।२
अधार्मिका अनाचारा महाकोपाल्पचेतसः ।
अनृतं वदन्ति ते लुब्धास्तिष्ये जाताः सुदुःप्रजाः ।।३
दुरिष्टैर्दुरधीतैश्च दुराचारैर्दुरागमैः ।
विप्राणां कर्मदोषैश्च प्रजानां जायते भयम् ।।४
नाधीयते कलौ वेदान् न यजन्ति द्विजातयः ।
यजन्त्यन्यायतो वेदान् पठन्ते चाल्पबुद्धयः ।।५
शूद्राणां मन्त्रयौनैश्च संबन्धो ब्राह्मणैः सह ।
भविष्यति कलौ तस्मिञ् शयनासनभोजनैः ।।६
राजानः शूद्रभूयिष्ठा ब्राह्मणान् बाधयन्ति च ।
भ्रूणहत्या वीरहत्या प्रजायेते नरेश्वर ।।७

---

**२८**

[न$_{1}$ पुस्तके अयमध्यायो नास्ति; दे$_{1}$ पुस्तके २८-३३ अध्यायाः न सन्ति; अध्यायारम्भे दे$_{10}$ अधिकम्-श्रीगणेशाय नमः].

❀ द$_{1}$.⊙; दे$_{3}$ व्यास उ.; दे$_{10}$ व्यास उवाच; ते$_{1}$ श्रीशिवः, + व्यासः; ग्र$_{1.2}$ म$_{1}$ व्यासः.

१. दे$_{3}$. १c-३d⊙. –a) दे$_{5}$ असूया च, ते$_{1}$ ह्यसूयां च (→असूयां च); दे$_{10}$ तिष्ये माता प्रसूयं चेद्, म$_{1}$ तिष्ये मायामवस्थाय. –b) दे$_{8-10}$ द्वयं चैव, दे$_{3}$ ते$_{1}$ भयं चैव, दे$_{6}$ वैरं चैव (→वधं चैव); दे$_{4.10}$ तपस्विनं (→तपस्विनां). –c) ग्र$_{2}$ नित्याः (→नित्यं). –d) दे$_{4}$ व्याकुला (→व्याकुली-).

२. दे$_{3}$.⊙. –a) दे$_{4}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ प्रवर्त्तते, दे$_{10}$ प्रमारकाः (→प्रमारको); दे$_{9}$ रागः, दे$_{10}$ रोगाः (→रोगः). –b) ग्र$_{2}$ कथिता (→सततं). –c) दे$_{2}$ चैव (→घोरं).

३. दे$_{3}$.⊙. –a) ते$_{1}$ अधार्मिकम् (→अधार्मिका[ः]); दे$_{8-10}$ निराधारा, मुवें. मुए. मुब. निराहारा (→अनाचारा). –b) ब$_{1-3}$ दे$_{4.8-10}$ ते$_{1}$ ग्र$_{1.2}$ मुवें. मुए. मुब. °तेजसः, द$_{1}$ °मेधसः (→°चेतसः). –c) दे$_{10}$ अमृतं (→अनृतं); दे$_{8}$ मुवें. मुए. मुब. ब्रुवते, दे$_{9}$ द$_{1}$ ग्र$_{1.2}$ ब्रुवन्ति, दे$_{10}$ ब्रवतां (→वदन्ति); का$_{1}$ ब$_{2.3}$ दे$_{9}$ द$_{1}$ ग्र$_{1}$ म$_{1}$ लुब्धाश्च, दे$_{8-10}$ मुवें. मुए. मुब. लुब्धाः (→ते लुब्धाः); ब$_{1}$ अनृग्वदन्ति लुब्धाश्च, दे$_{4}$ अनृतं वक्ति लुब्धाश्च, दे$_{6}$ वदन्त्यनृतं तं लुब्धाः, ते$_{1}$ अनृता ह्यतिलुब्धाश्च. –d) दे$_{4}$ तिष्ये ताः समजाः प्रजाः, ते$_{1}$ दुर्वृत्ताश्च सुदुर्ग्रहाः, द$_{1}$ ग्र$_{1.2}$ म$_{1}$ तिष्या (ग्र$_{1.2}$ °तिष्य°) जाताश्च दुःखिताः.

४. –a) ब$_{2}$ दुर्नीतैर्, द$_{1}$ अरिष्टैर्, ग्र$_{1}$ अरिष्टैर्, + दुरिष्टैर्, ग्र$_{2}$ अदुष्टैर्, म$_{1}$ अदृष्टैर् (→दुरिष्टैर्); ते$_{1}$ दुरिष्टे महति चेता. –d) द$_{1}$ ग्र$_{1.2}$ म$_{1}$ पालनं (→जायते).

५. –a) का$_{1}$ दे$_{2.4-6}$ द$_{1}$ ग्र$_{1}$ म$_{1}$ नाधीयन्ते, ते$_{1}$ नाधीयन्त (→नाधीयते); का$_{1}$ दे$_{8-10}$ ते$_{1}$ मुवें. मुए. मुब. तदा, दे$_{2}$ द्विजा (→कलौ); ब$_{1}$ वेदान्, + देवान्, दे$_{4.6}$ ते$_{1}$ द$_{1}$ ग्र$_{1}$ वेदाः, ग्र$_{2}$ वेदं, म$_{1}$ देवं (→वेदान्). –c) ब$_{2.3}$ दे$_{2}$ जपन्त्य°, दे$_{3}$ जयन्त्य°, दे$_{4}$ यजन्तो° (→यजन्त्य°); ब$_{1}$ देवान्, + वेदान्, द$_{1}$ ग्र$_{1.2}$ म$_{1}$ देवान् (→वेदान्); दे$_{8-10}$ मुवें. मुए. मुब. यजन्ति यज्ञान् वेदांश्च, ते$_{1}$ सजन्यदोषतो जायं(यां). –d) दे$_{4}$ यजन्ते चा°, द$_{1}$ ग्र$_{1}$ पतन्ते चा°, ग्र$_{2}$ म$_{1}$ पतन्त्ये (म$_{1}$ °त्ये) वा° (→पठन्ते चा°); ते$_{1}$ हरन्ते ह्लासबुद्धयः.

६. –a) का$_{1}$ ब$_{2}$ दे$_{2.8-10}$ ते$_{1}$ मुवें. मुए. मुब. °योगैश्च, द$_{1}$ म$_{1}$ °योनिस्तु, ग्र$_{1}$ °योगस्तु (→°यौनैश्च); ग्र$_{2}$ शूद्राणामल्पयोनिस्तु. –b) दे$_{3.6}$ स संबन्धोऽपि ब्राह्मणैः. –c) ब$_{2}$ दे$_{6.10}$ द$_{1}$ ग्र$_{2}$ भविष्यन्ति, ते$_{1}$ भवन्ति (→भविष्यति). –d) ब$_{3}$ दे$_{4}$ शयनाशन° (→शयनासन°).

७. –b) ब$_{2}$ हारयन्ति, दे$_{4}$ वादयन्ति, दे$_{5}$ द$_{1}$ वधयन्ति, ते$_{1}$ व्यथयन्ति (→बाधयन्ति); ब$_{3}$ ह (→च). –c) दे$_{2}$ ब्रह्म° (→वीर°); ग्र$_{1}$ °हत्याः (→°हत्या). –d) ब$_{2}$ दे$_{2.8-10}$ मुवें. मुए. मुब. प्रजायेत, ब$_{1}$ प्रजायते, ते$_{1}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ प्रजायन्ते (→प्रजायेते); दे$_{2}$ 8 ते$_{1}$ मुवें. मुए. मुब. नरेश्वरे, दे$_{4}$ प्रजामुखैः, दे$_{5.9.10}$ नरेश्वराः, द$_{1}$ ग्र$_{1.2}$ म$_{1}$ प्रजासु च (द$_{1}$ म$_{1}$ वै) (→नरेश्वर).

अतः परं दे$_{4}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ अधिकम्—

*न प्रमाण्यं श्रुतेरस्ति नृणाञ्चाधर्मसेवनात् ।

[–1) दे$_{4}$ द$_{1}$ वाधर्म° (→चाधर्म°).]

स्नानं होमं जपं दानं देवतानां तथाऽर्चनम् ।
अन्यानि चैव कर्माणि न कुर्वन्ति द्विजातयः ॥८
विनिन्दन्ति महादेवं ब्राह्मणान् पुरुषोत्तमम् ।
आम्नायधर्मशास्त्राणि पुराणानि कलौ युगे ॥९
कुर्वन्त्यवेददृष्टानि कर्माणि विविधानि तु ।
स्वधर्मेऽभिरुचिर्नैव ब्राह्मणानां प्रजायते ॥१०
कुशीलचर्याः पाषण्डैर्वृथारूपैः समावृताः ।
बहुयाचनको लोको भविष्यति परस्परम् ॥११
अट्टशूला जनपदाः शिवशूलाश्चतुष्पथाः ।
प्रमदाः केशशूलिन्यो भविष्यन्ति कलौ युगे ॥१२
शुक्लदन्ता जिनाख्याश्च मुण्डाः काषायवाससः ।
शूद्रा धर्मं चरिष्यन्ति युगान्ते समुपस्थिते ॥१३
शस्यचौरा भविष्यन्ति तथा चैलाभिमर्षिणः ।
चौराश्चौरस्य हर्त्तारो हर्त्तुर्हर्त्ता तथाऽपरः ॥१४
दुःखप्रचुरताल्पायुर्देहोत्सादः सरोगता ।
अधर्माभिनिवेशित्वात् तमोवृत्तं कलौ स्मृतम् ॥१५ वें.१.३०.१५

८. –a) दे$_{4}$ जयो (→जपं); दे$_{2}$ स्नानं दानं तथा होमं, द$_{1}$ ग्र$_{1.2}$ म$_{1}$ स्नानं दानं ज(ग्र$_{1}$ त]पो होमो. –b) दे$_{6}$ दैवतानां, ते$_{1}$ देवानां च (→देवतानां); ब$_{1}$ तदा° (→तथा°). –c) दे$_{2}$ ततो न्याचि न कर्माणि°, दे$_{8-10}$ ते$_{1}$ मुवें. मुए. मुब. तथान्यानि च कर्माणि.

९. –b) ब$_{1}$ दे$_{3.6}$ ते$_{1}$ ब्राह्मणाः, द$_{1}$ ग्र$_{1.2}$ म$_{1}$ ब्रह्माणं (→ब्राह्मणान्); म$_{1}$ पुरुषोत्तम (→पुरुषोत्तमम्). –c) का$_{1}$ ब$_{3}$ दे$_{5}$ आम्नायः, ब$_{2}$ ते$_{1}$ द$_{1}$ ग्र$_{1}$ म$_{1}$ आम्नायं (→आम्नाय-); का$_{1}$ ब$_{1-3}$ दे$_{3.5.6}$ -सर्व° (→-धर्म°).

१०. –a) दे$_{5}$ कुर्युर्न वेदाध्या * नि. –b) दे$_{3.6}$ कुर्वाणि (→कर्माणि); का$_{1}$ ब$_{1-3}$ दे$_{3.5.6}$ ग्र$_{2}$ मुब. च, ते$_{1}$ नु, + च (→तु). –c) दे$_{6}$ स्वकर्मे, ग्र$_{2}$ स्वधर्मो (→स्वधर्मे); दे$_{8-10}$ मुवें. मुए. मुब. तु, द$_{1}$ ग्र$_{1.2}$ हि (→[अ]भि-); दे$_{5}$ °शुचिर् (→°रुचिर्); ब$_{2}$ स्वधर्मे व्यभिचीर्णे च, ते$_{1}$ स्वयमेव विरोधं तु. –d) द$_{1}$ ग्र$_{1.2}$ म$_{1}$ कलौ युगे (→प्रजायते).

११. दे$_{4}$. ११d-१३a ⊙. –a) ब$_{2}$ कुशीद° (→कुशील°); दे$_{4.5.6}$ °वर्या (दे$_{4}$ °र्य), ते$_{1}$ °वर्णः, ग्र$_{2}$ °पर्य-, म$_{1}$ °चण्डाः (→°चर्याः); ब$_{1.3}$ पाण्डैः, ते$_{1}$ पाषण्डाः, ग्र$_{2}$ पाखण्डे (→पाषण्डैः). –b) द$_{1}$ वृधा° (→वृथा°); ब$_{1.3}$ दे$_{3.4.6}$ समावृतः (→समावृताः). –c) दे$_{5.6.8-10}$ मुवें. मुए. मुब. °याचनका, द$_{1}$ ग्र$_{1}$ म$_{1}$ °याजनको (→°याचनको); ब$_{1.3}$ दे$_{8-10}$ मुवें. मुए. मुब. लोकाः, ब$_{2}$. द$_{1}$ म$_{1}$ लोके (→लोको); ते$_{1}$ बहुयाचनता लाभे, ग्र$_{2}$ बहुधा याजने लोके. –d) दे$_{8-10}$ मुवें. मुए. मुब. भविष्यन्ति, ते$_{1}$ निषिद्धन्ति (→भविष्यति); ग्र$_{2}$ पुरस्सरं (→परस्परं).

१२. दे$_{4}$. ⊙. –a) दे$_{10}$ जनाख्याश्च (→जनपदाः). –b) ते$_{1}$ शैव° (→शिव°); का$_{1}$ ब$_{1}$ दे$_{10}$ चतुष्पदाः (→चतुष्पथाः). –c) ब$_{3}$ प्रमादाः (→प्रमदाः); का$_{1}$ ब$_{1.3}$ दे$_{3.6.8-10}$ मुवें. मुए. मुब. °शूलाश्च (→°शूलिन्यः).

१३. दे$_{4}$. a ⊙. –a) का$_{1}$ जिनाक्षा च, ब$_{1-3}$ दे$_{2.3.5.6}$ मुब. जिता (ब$_{3}$ दे$_{2}$ °त) क्षाश्च, ते$_{1}$ क्षौरमुखाः, (→जिनाख्याश्च); द$_{1}$ ग्र$_{2}$ म$_{1}$ शुक्लदन्त (द$_{1}$ °ता) मिताक्षाश्च, ग्र$_{1}$ शुक्लदन्ता मिलिताक्षा. –b) दे$_{3}$ अण्डाः, दे$_{4}$ भण्डाः (→मुण्डाः); दे$_{4.6}$ ग्र$_{2}$ °वाससाः, म$_{1}$ °वासिनः (→°वाससः); ते$_{1}$ कषायवदन(स)नाः सदा. –d) ब$_{1}$ समवस्थिते (→समुपस्थिते).

१४. दे$_{5}$. cd ⊙. –a) ब$_{3}$ शस्य, दे$_{5}$ सस्या, दे$_{10}$ यत्र (→शस्य-); दे$_{4}$ सत्सु बाधा भविष्यन्ति, द$_{1}$ ग्र$_{1.2}$ म$_{1}$ सत्सु बाधां (म$_{1}$ °धाः) करिष्यन्ति, ते$_{1}$ सर्वे चारा भविष्यन्ति. –b) का$_{1}$ दे$_{5}$ वेला-, ब$_{2.3}$ दे$_{3.8-10}$ ते$_{1}$ मुवें. मुए. मुब. चेला-, दे$_{4}$ चैवा- (→चैला-); ब$_{3}$ दे$_{3.6}$ -मर्षणः, दे$_{5}$ -लाषिणः, दे$_{8-10}$ मुवें. मुए. -मर्शिनः, ते$_{1}$ -मर्शकाः (→-मर्षिणः); द$_{1}$ तथा वैडालवृत्तिनः, ग्र$_{1}$ तथा वैलालवृत्तिनः, ग्र$_{2}$ म$_{1}$ बकवैलालवृत्तयः (ग्र$_{2}$ °त्तिनः). –c) का$_{1}$ दे$_{8-10}$ मुवें. मुए. मुब. चौराच्चौ (मुब. °चौ) राश्च, दे$_{10}$ चौलाच्चौलाश्च, द$_{1}$ ग्र$_{2}$ चाराश्चोरस्य (→चौराश्चौरस्य); ते$_{1}$ म$_{1}$ चाराश्चोराश्च भर्त्तारो, ग्र$_{1}$ चाराश्चोरस्त्रियो भर्त्ता. –d) ब$_{3}$ दे$_{3.6}$ हन्तुर् (→हर्त्तुर); ब$_{3}$ मुवें. मुए. हन्ता (→हर्त्ता); ते$_{1}$ दन्तहर्त्ता तथा परः, द$_{1}$ वार्त्ताहर्त्ता तथापरः, ग्र$_{1}$ भर्तृहर्त्तुस्तथास्त्रियः, ग्र$_{2}$ भर्त्तुहर्त्ता तथा परः, म$_{1}$ पार्थ भक्तास्तथापरे.

१५. –a) ब$_{1}$ दुःखः, ग्र$_{2}$ दुःखं, म$_{1}$ दुःखे (→दुःख-); दे$_{4}$ प्रहरा*, दे$_{8-10}$ मुवें. मुए. प्रचुरम-, ग्र$_{1}$ प्रचुरिता-, ग्र$_{2}$ म$_{1}$ प्रोचुरथा- (→प्रचुरता-); ते$_{1}$ ह्याप्रः (→[अ]ल्पायुः). –b) का$_{1}$ देहोत्सारः, ब$_{3}$ दोहात्सादः, दे$_{2.9.10}$ देहोत्साहः (→देहोत्सादः); ते$_{1}$ दोषशीलानरा गताः, द$_{1}$ देहात्साह सरोगता, ग्र$_{1}$ देहे चासह्यरोगता, ग्र$_{2}$ म$_{1}$ देहसासाहरोगताः (म$_{1}$ °तः). –c) ब$_{2}$ °निवेशी च, दे$_{8-10}$ मुवें. मुए. °निवेशत्वात्, मुब. निवेशित्वं (→°निवेशित्वात्). –d) दे$_{2}$ तमोवृत्तिः, दे$_{4}$ तमोवृत्तेः, ते$_{1}$ तपोवृत्तिः (→तमोवृत्तं); ब$_{2}$ दे$_{2}$ युगे, ते$_{1}$ स्मृता (→स्मृतम्).

वें. १.३०.१६ काषायिणोऽथ निर्ग्रन्थास्तथा कापालिकाश्च ये ।
वेदविक्रयिणश्चान्ये तीर्थविक्रयिणः परे ॥१६
आसनस्थान् द्विजान् दृष्ट्वा न चलन्त्यल्पबुद्धयः ।
ताडयन्ति द्विजेन्द्रांश्च शूद्रा राजोपजीविनः ॥१७
उच्चासनस्थाः शूद्रास्तु द्विजमध्ये परंतप ।
ज्ञात्वा न हिंसते राजा कलौ कालबलेन तु ॥१८
पुष्पैश्च हसितैश्चैव तथान्यैर्मङ्गलैर्द्विजाः ।
शूद्रानभ्यर्चयन्त्यल्पश्रुतभाग्यबलान्विताः ॥१९
न प्रेक्षन्तेऽर्चितांश्चापि शूद्रा द्विजवरान् नृप ।
सेवावसरमालोक्य द्वारि तिष्ठन्ति च द्विजाः ॥२०
वाहनस्थान् समावृत्य शूद्राञ् शूद्रोपजीविनः ।
सेवन्ते ब्राह्मणास्तत्र स्तुवन्ति स्तुतिभिः कलौ ॥२१
अध्यापयन्ति वै वेदाञ् शूद्राञ् शूद्रोपजीविनः ।
पठन्ति वैदिकान् मन्त्रान् नास्तिक्यं घोरमाश्रिताः ॥२२
तपोयज्ञफलानां च विक्रेतारो द्विजोत्तमाः ।
यतयश्च भविष्यन्ति शतशोऽथ सहस्रशः ॥२३
नाशयन्ति ह्यधीतानि नाधिगच्छन्ति चानघ ।
गायन्ति लौकिकैर्गानैर्दैवतानि नराधिप ॥२४
वामपाशुपताचारास्तथा वै पाञ्चरात्रिकाः ।
भविष्यन्ति कलौ तस्मिन् ब्राह्मणाः क्षत्रियास्तथा॥२५

---

१६. द$_1$ म$_1$. cd ⊙. –a) ब$_2$ स्वाध्यायिनोऽथ, द$_1$ ग्र$_{1.2}$ म$_1$ स्वाध्यायहीनाः (→काषायिणोऽथ); द$_1$ ग्र$_1$ निर्गन्धाः (→निर्ग्रन्थाः); ते$_1$ भिक्षाशिनोऽथ दुर्गन्धाः. –b) ब$_2$ तथा कापालिकानि च, दे$_3$ तथा कालापिकाश्च ये, द$_1$ ग्र$_{1.2}$ म$_1$ तथा काषाय काश् (ग्र$_1$ °जाश्) च ये. –c) ते$_1$ प्रायः (→चान्ये). –d) दे$_2$ ग्र$_{1.2}$ च ये (→परे).

१७. दे$_4$. १७d-२०a ⊙ (द. सं). –a) ते$_1$ असंस्कारान् (→आसनस्थान्). –b) दे$_6$ नमलन्त्य°, दे$_{8-10}$ मुवें. मुए. मुब. चालयन्त्य°, ते$_1$ नर्चयन्त्य°, द$_1$ न चलत्य° (→न चलन्त्य°). –d) दे$_5$ राज्ञो°, ते$_1$ यज्ञो° (→राजो°); ब$_2$ ग्र$_2$ °सेविनः (ग्र$_2$ °व), ग्र$_1$ °सेविताः (→°जीविनः); दे$_4$ शूद्रा द्विजवरा नृप.

१८. दे$_4$. ⊙; द$_1$ ग्र$_{1.2}$ म$_1$. १८a-२०b ⊙. –a) दे$_{8-10}$ ते$_1$ मुवें. मुए. मुब. च (→तु). –c) का$_1$ ज्ञातो (→ज्ञात्वा); दे$_5$ राज्ञा (→राजा); दे$_{8-10}$ मुवें. मुए. मुब. द्विजामानकरो राजा, ते$_1$ दत्त्वा हरन्ति राजानो. –d) ते$_1$ लोकानामहिते रतान्.

१९. दे$_4$ द$_1$ ग्र$_{1.2}$ म$_1$. ⊙; दे$_{10}$. १९c-२० d ⊙; दे$_3$.१९d-२१ a ⊙. –a) दे$_{8-10}$ मुवें. मुए. मुब. भूषणैश् (→हसितैश्). –ab) ते$_1$ पुष्येऽपि फले चापि निर्गन्धश्च कलौ द्विजाः. –c) दे$_{8.9}$ मुवें. मुए. मुब. परिचरन्त्य° (→अभ्यर्चयन्त्य°). –cd) ते$_1$ न श्रेयसि रताश्चापि शूद्राद्या नृचरा नृपाः.

२०. दे$_{3.10}$.⊙; ते$_1$ द$_1$ ग्र$_{1.2}$ म$_1$.ab ⊙; दे$_4$.a ⊙. –a) ब$_1$ प्रैक्ष्यन्ते (→प्रेक्षन्ते); का$_1$ ब$_{1.2}$ दे$_{2.5.5.8.9}$ मुब. अर्चिताश्चापि (→अर्चितांश्चापि). –c) ते$_1$ सदा° (→सेवा°). –d) दे$_{8.9}$ मुवें. मुए. मुब. द्वारे (→द्वारि); का$_1$ ते$_1$ वै (→च);

२१. दे$_{3.4}$ ते$_1$.२१ c-२२ b ⊙ (द. सं.). –a) का$_1$ दे$_5$ समाहृत्य (→समावृत्य). –b) ब$_1$ दे$_6$ शूद्राः, ते$_1$ विप्राः (→शूद्रान्); द$_1$ °सेविनः (→°जीविनः). –c) दे$_{9.10}$ सेवन्ति (→सेवन्ते); दे$_{8-10}$ मुवें. मुए. मुब. तांस्तु (→तत्र). –d) ब$_{1-3}$ दे$_{2.3}$ श्रुतिभिः (→स्तुतिभिः).

२२. दे$_{4.6}$ ते$_1$. ab ⊙. –a) ब$_1$ द$_1$ देवान् (→वेदान्). –b) द$_1$ ग्र$_{1.2}$ म$_1$ शूद्राणां शूद्रसेवकाः. –c) दे$_3$ पचन्त्य-, दे$_4$ त्यजन्ति (→पठन्ति); ब$_2$ मोहात् (→मन्त्रान्); दे$_{8-10}$ मुवें. मुए. मुब. एवं निर्वेद (दे$_{10}$ °दि)कानर्थान्. –d) ते$_1$ द$_1$ ग्र$_{1.2}$ म$_1$ नास्तिका (→नास्तिक्यं); म$_1$ हर्षं (→घोरम्); ब$_2$ आस्थिताः (→आश्रिताः).

२३. –a) दे$_4$ ततो, म$_1$ तथा (→तपो-); दे$_{8-10}$ मुवें. मुए. मुब. कलानां (→फलानां); दे$_{2.8-10}$ ते$_1$ मुवें. मुए. मुब. तु (→च). –c) दे$_2$ तु (→च); ते$_1$ यत्नेनापहरिष्यन्ति. –d) ग्र$_2$ [अ]पि (→[अ]थ).

२४. –a) दे$_{4.8-10}$ मुवें. मुए. मुब. नाशयन्त (→नाशयन्ति); दे$_{8-10}$ मुए. मुब. स्वकं धर्मं, ते$_1$ च वित्तानि मुवें. स्वकान् धर्मान् (→ह्यधीतानि); ब$_2$ नाशयन्त्यप्रतीतानि. –b) दे$_{8-10}$ मुवें. मुए. मुब. तत्पदम्, ते$_1$ तानधाः, द$_1$ म$_1$ वानघ (→चानघ). –c) दे$_6$ ते$_1$ गीतैर् (→गानैर्). –d) ब$_{2.3}$ दे$_{2.4.-6.9}$ द$_1$ मुब. देवतानि (→दैवतानि); ब$_3$ नराधिपः, दे$_{2.5.8-10}$ नराधिपाः (→नराधिप).

२५. दे$_5$. b ⊙. –a) ब$_{2.3}$ दे$_4$ द$_1$ ग्र$_2$ म$_1$ मुब. वामाः, ते$_1$ पापाः (→वाम-). –b) ब$_2$ दे$_4$ पंच° (→पाञ्च°).

ज्ञानकर्मण्युपरते लोके निष्क्रियतां गते ।
कीटमूषकसर्पाश्च धर्षयिष्यन्ति मानवान् ॥२६
कुर्वन्ति चावताराणि ब्राह्मणानां कुलेषु वै ।
दधीचशापनिर्दग्धाः पुरा दक्षाध्वरे द्विजाः ॥२७
निन्दन्ति च महादेवं तमसाविष्टचेतसः ।
वृथा धर्मं चरिष्यन्ति कलौ तस्मिन् युगान्तिके ॥२८
ये चान्ये शापनिर्दग्धा गौतमस्य महात्मनः ।
सर्वे ते च भविष्यन्ति ब्राह्मणाद्याः स्वजातिषु ॥२९
विनिन्दन्ति हृषीकेशं ब्राह्मणान् ब्रह्मवादिनः ।
वेदबाह्यव्रताचारा दुराचारा वृथाश्रमाः ॥३०
मोहयन्ति जनान् सर्वान् दर्शयित्वा फलानि च ।
तमसाविष्टमनसो बैडालवृत्तिकाधमाः ॥३१
कलौ रुद्रो महादेवो लोकानामीश्वरः परः ।
न देवता भवेन्नृणां देवतानां च दैवतम् ॥३२
करिष्यत्यवताराणि शंकरो नीललोहितः ।
श्रौतस्मार्त्तप्रतिष्ठार्थं भक्तानां हितकाम्यया ॥३३
उपदेक्ष्यति तज्ज्ञानं शिष्याणां ब्रह्मसंज्ञितम् ।
सर्ववेदान्तसारं हि धर्मान् वेदनिदर्शितान् ॥३४  वें.१.३०.३५

---

२६. –a) दे$_8$ मुवें. मुए. मुब. ज्ञाने (→ज्ञान-); ब$_{1.2}$ °रतो (ब$_2$ °ता), दे$_4$ ग्र$_{1.2}$ म$_1$ °हते, दे$_{8-10}$ मुवें. मुए. मुब. °गते, द$_1$ °हृते (→°रते). –c) ब$_{1-3}$ दे$_{3.6.8-10}$ ग्र$_{1.2}$ म$_1$ मुवें. मुए. मुब. °मूषिक° (→°मूषक°); दे$_5$ कीटा मुख * सर्पाश्च. –d) दे$_{8-10}$ मुवें. मुए. मुब. मानुषान् (→मानवान्).

२७. –c) दे$_5$ दधीचे, ते$_1$ द$_1$ दधीचि- (→दधीच-); दे$_{8-10}$ मुवें. मुए. देवीशापविनिर्दग्धाः. –d) दे$_3$ दग्धा, दे$_5$ दत्ते (→दक्षा-).

२८. दे$_5$. d ⊙. –a) ब$_1$ निन्दन्ति स, ग्र$_2$ निन्दयन्ति (→निन्दन्ति च). –b) ते$_1$ -तेजसः (→-चेतसः). –c) ग्र$_1$ म$_1$ वृधा (→वृथा); दे$_4$ धर्मे, दे$_6$ धर्मश् (→धर्मं). –d) का$_1$ ब$_{2.3}$ दे$_3$ मुब. युगान्तिमे, दे$_2$ युगेऽन्तिमे, द$_1$ ग्र$_{1.2}$ म$_1$ युगान्तरे (→युगान्तिके); दे$_{8-10}$ तस्मिन् कलौ युगान्तिके.

अतः परं. ब$_3$ दे$_{2.6}$ मुवें. मुए. मुब. अधिकम्—

*सर्वे वीरा भविष्यन्ति ब्राह्मणाद्याः स्वजातिषु. (=२९cd).

[दे$_2$ तेन (→वीरा); दे$_6$ ********, मुए. सर्वे तेऽवतरिष्यन्ति (→सर्वे वीरा भविष्यन्ति)]

२९. दे$_6$. ⊙; ब$_{2.3}$ दे$_2$. cd ⊙; दे$_3$. २९c-३१b ⊙; दे$_{4.8-10}$ द$_1$ ग्र$_1$ मुवें. मुए. मुब. सर्वे ते (दे$_4$ °वा) वतरिष्यन्ति, ग्र$_2$ सर्वे नैव तदिष्यन्ति, म$_1$ सर्वे ह्यविजनिष्यन्ति. –d) ब$_1$ ब्राह्मणान्याऽ स्व-, दे$_4$ ग्र$_1$ ब्राह्मणाद्यासु, द$_1$ ब्राह्मणाद्येषु (→ब्राह्मणाद्याः स्व-); दे$_{8-10}$ मुवें. मुए. मुब. ब्राह्मणास्तासु योनिषु.

३०. दे$_3$. ⊙. –a) ब$_1$ विनन्दन्ति, दे$_4$ निन्दन्ति च, (→विनिन्दन्ति); दे$_5$ महादेवं, दे$_{10}$ ऋषीकेशं (→हृषीकेशं). –b) ते$_1$ शिवं च (→ब्राह्मणान्); दे$_6$ वेद° (→ब्रह्म°). –c) ते$_1$ ग्र$_2$ म$_1$ वेदबाह्या वृथा(ते$_1$ दुरा) चारा. –d) ते$_1$ दुरात्मानो, द$_1$ ग्र$_1$ वृधाचारा, ग्र$_2$ वृथाचारा (→दुराचारा[:]); ते$_1$ वृथाशयाः, द$_1$ ग्र$_1$ वृधाश्रयाः (→वृथाश्रमाः).

ग्र$_2$. b,c मध्ये अधिकम्—

*सर्वेषूक्तं पुराणेषु वेदमर्थं विनिंदति ।
क्वचिदुक्ता प्रीणयन्ति तेन सर्वं त्यजंति वै ॥

३१. दे$_3$. ab ⊙. –a) दे$_6$ मोहयित्वा (→मोहयन्ति); ग्र$_2$ नरान् (→जनान्). –b) का$_1$ ब$_1$ दे$_{4-6}$ ते$_1$ द$_1$ ग्र$_2$ म$_1$ तु, दे$_2$ वै (→च). –d) ब$_3$ वैताल-, ते$_1$ भेताल-, द$_1$ ग्र$_{1.2}$ म$_1$ वैलाल- (ग्र$_2$ °ला°) (→वैडाल-); का$_1$ ब$_{1-3}$ दे$_{2-4.8.9}$ द$_1$ मुवें. मुए. मुब. –व्रतिका-, दे$_{5.6}$ –व्रतका-, ते$_1$ –प्रतिमा-; म$_1$ –प्रतिका- (→-वृत्तिका-); ब$_2$ नराः (→[अ]धमाः).

३२. –b) म$_1$ देवानाम् (→लोकानाम्); दे$_2$ ते$_1$ प्रभुः (→परः). –c) का$_1$ तदेवसाधनो नृणां, दे$_5$ न देवतस्तपो नृणां, दे$_{8-10}$ मुवें. मुए. मुब. तदेव साधये (दे$_{10}$ °ने) न्नृणां. –d) म$_1$ दैवतानां (→देवतानां); ते$_1$ देवतायाश्च देवताः.

३३. –d) ब$_2$ दे$_2$ लोकानां (→भक्तानां).

३४. –a) ब$_1$ दे$_{4.5.6.10}$ द$_1$ म$_1$ मुवें. मुए. मुब. °देक्ष्यन्ति, दे$_3$ °देक्ष्यसि, ग्र$_1$ °देष्यति (→°देक्ष्यति); दे$_{10}$ तं ज्ञानं, ते$_1$ च ज्ञानं, द$_1$ ग्र$_2$ म$_1$ तच्चार्यं, ग्र$_1$ तत् सूत्रं (→तज्ज्ञानं). –c) ते$_1$ ब्रह्म° (→सर्व°); ब$_2$ °सारान् (→°सारं); दे$_6$ च (→हि); दे$_3$ सर्व ******. –d) का$_1$ दे$_{4.5}$ धर्माद् (→धर्मान्); मुब. देव° (→वेद°); दे$_2$ दर्शितात्, दे$_{4.5.8-10}$ द$_1$ ग्र$_{1.2}$ म$_1$ दर्शनात् (दे$_{8.9}$ °नान्) (→दर्शितान्); दे$_3$ स्वधर्माद्विदर्शितात्, ते$_1$ धर्मत्वेन निदर्शिता, ग्र$_{1.2}$ म$_1$ सर्वस्माद्धेतु दर्शनात्.

अतः परं मुवें. पुस्तके अधिकम्—

*सर्ववर्णान् समुद्दिश्य स्वधर्मा ये निदर्शिताः । (=३४cd)

वें.१.३०.३६ ये तं विप्रा निषेवन्ते येन केनोपचारतः ।
विजित्य कलिजान् दोषान् यान्ति ते परमं पदम् ।।३५
अनायासेन सुमहत् पुण्यमाप्नोति मानवः ।
अनेकदोषदुष्टस्य कलेरेष महान् गुणः ।।३६
तस्मात् सर्वप्रयत्नेन प्राप्य माहेश्वरं युगम् ।
विशेषाद् ब्राह्मणो रुद्रमीशानं शरणं व्रजेत् ।।३७
ये नमन्ति विरूपाक्षमीशानं कृत्तिवाससम् ।
प्रसन्नचेतसो रुद्रं ते यान्ति परमं पदम् ।।३८
यथा रुद्रनमस्कारः सर्वकर्मफलो ध्रुवम् ।
अन्यदेवनमस्कारान्न तत्फलमवाप्नुयात् ।।३९
एवंविधे कलियुगे दोषाणामेकशोधनम् ।
महादेवनमस्कारो ध्यानं दानमिति श्रुतिः ।।४०
तस्मादनीश्वरानन्यान् त्यक्त्वा देवं महेश्वरम् ।
समाश्रयेद् विरूपाक्षं यदीच्छेत् परमं पदम् ।।४१
नार्चयन्तीह ये रुद्रं शिवं त्रिदशवन्दितम् ।
तेषां दानं तपो यज्ञो वृथा जीवितमेव च ।।४२
नमो रुद्राय महते देवदेवाय शूलिने ।
त्र्यम्बकाय त्रिनेत्राय योगिनां गुरवे नमः ।।४३
नमोऽस्तु वामदेवाय महादेवाय वेधसे ।
शंभवे स्थाणवे नित्यं शिवाय परमेष्ठिने ।
नमः सोमाय रुद्राय महाग्रासाय हेतवे ।।४४
प्रपद्येऽहं विरूपाक्षं शरण्यं ब्रह्मचारिणम् ।
महादेवं महायोगमीशानं चाम्बिकापतिम् ।।४५
योगिनां योगदातारं योगमायासमावृतम् ।

३५. –a) दे3.6 तान्, ते1 तु, द1 ग्र1 च, ग्र2 म1 न (→तं); दे4 येन विप्रा यजन्ते वै; दे10 ये तं प्रेता निषिञ्चन्ति. –b) ते1 ज्ञानं वेदोपचारतः, ग्र1.2 म1 येन केनाप्युपायतः. –c) द1 ग्र1.2 म1 कर्मजान् (→कलिजान्); ब2 लोकान् (→दोषान्). –d) ब2 ते यान्ति परमं पदम्.

३६. द1.३६a-३८d ⊙ (इ. सं.); म1 ३६a-३७b '°श्वर' यावत् खण्डितम्. –b) दे10 प्राप्नोति (→आप्नोति). –c) ते1 अत्यन्त° (→अनेक°). –d) ब2 एव, ब3 दे8-10 मुवें. मुए. मुब. एको (→एष); ब1.3 दे5 महागुणः (→महान् गुणः); ग्र2 कलावेष महान् गुणः.

३७. द1. ⊙ (द्र.३६ पा. वि.); म1 ab. ⊙. –c) दे5 विश्वेशान्, दे10 विशेषान् (→विशेषाद्); दे8-10 ब्राह्मणान्, ते1 ब्रह्मणो (→ब्राह्मणो). –d) दे8-10 व्रज (→व्रजेत्).

३८. द1. ⊙. –a) ते1 विदन्ति (→नमन्ति). –b) ब1 कीर्त्ति° (→कृत्ति°). –c) दे5 प्रसन्नाः, ते1 अनन्य- (→प्रसन्न-); दे10 °चेतसं (→°चेतसो). –d) का1 ब1.3 दे2-6 ग्र1.2 म1 यान्ति ते (→ते यान्ति).

३९. –a) का1 रुद्र,°+हर° (→रुद्र°). –b) का1 ब2 दे8-10 ग्र1.2 म1 मुवें. मुए. -काम,° मुब. का* (→-कर्म°); का1 ब1 दे8.9 मुवें. मुए. मुब. °फलो ध्रुवः, दे4 फलावृतः, दे5 °फलोद्भवः, ते1 द1 ग्र1.2 म1 फलप्रदः (→°फलो ध्रुवं). –c) ब1 नमस्कारान्, द1 म1 °नमस्कारं, ग्र1 °नमस्कारो (→नमस्कारात्). –d) एतत्, दे5 यत्र तत्, ग्र2 तत्तत् (→न तत्); ते1 पुण्य° (→फल°).

४०. –b) का1 ब3 दे2 एष, ब2 दे5.8-10 मुवें. मुए. मुब. एव (→एक-); दे10 °शोभनं, ते1 °बोधनं, म1 °शोषणः (→°शोधनं). –d) ब2 परा मतिः, ब3 परा गतिः (→इति श्रुतिः).

४१. द1 ग्र1.2 म1. cd ⊙. –a) का1 ब2.3 दे2.3.5-6. मुब. अधीश्वरान्, दे4 अनीश्वराद्, ते1 विश्वेश्वरात् (→अनीश्वरान्); ते1 ग्र2 अन्यं (→अन्यान्). –b) दे3 देव- (→देवं); ग्र2-मनसं (सदा) देवम्महेश्वरम्. –d) दे4.6 ईक्षेत् (→इच्छेत्).

४२. –a) ब2 तु, ते1 च, म1 स्म (→[इ]ह). –b) ते1 शिवं त्रिभुवनेश्वरम्. –c) ब2 दे3.6 जपो (→तपो); ग्र2 म1 यज्ञा (→यज्ञो). –d) दे10 जीवन° (→जीवित°).

४३. –a) द1 ग्र1.2 म1 देवाय (→रुद्राय). –b) दे5 देवाय शूलपाणिने. –c) ते1.2 म1 त्रिणेत्राय (→त्रिनेत्राय). –d) द1 ग्र1.2 म1 पतये (→गुरवे).

४४. –a) ब1.2 वासु°, दे4.8-10 द1 ग्र1.2 म1 मुवें. मुए. मुब. देव° (→वाम°). –b) दे2 धीमते (→वेधसे). –d) दे2 परतराय च, ग्र2 म1 परमात्मने (→परमेष्ठिने). –f) ते1 नीलग्रीवाय (→महाग्रासाय).

४५. ब1. ४५b-४७a. ⊙ –b) दे2.4.8-10 शरणं (→शरण्यं); दे2 °चारिणां, ते1 °वादिनां (→°चारिणं). –d) ग्र2 त्वम्बिका° (→चाम्बिका°). –cd) दे2 महायोगिनमीशानं चाम्बिकापतिमीश्वरं.

४६. ब1. ⊙; दे9. ab ⊙; दे3.6. cd ⊙ (इ. सं). –a) दे4 द1 ग्र1.2 योगिनं (→योगिनां); ग्र2 योगताकारं

योगिनां गुरुमाचार्यं योगिगम्यं पिनाकिनम् ॥४६
संसारतारणं रुद्रं ब्रह्माणं ब्रह्मणोऽधिपम् ।
शाश्वतं सर्वगं शान्तं ब्रह्मण्यं ब्राह्मणप्रियम् ॥४७
कपर्दिनं कालमूर्त्तिममूर्त्तिं परमेश्वरम् ।
एकमूर्त्तिं महामूर्त्तिं वेदवेद्यं दिवस्पतिम् ॥४८
नीलकण्ठं विश्वमूर्त्तिं व्यापिनं विश्वरेतसम् ।
कालाग्निं कालदहनं कामदं कामनाशनम् ॥४९
नमस्ये गिरिशं देवं चन्द्रावयवभूषणम् ।
विलोहितं लेलिहानमादित्यं परमेष्ठिनम् ।
उग्रं पशुपतिं भीमं भास्करं तमसः परम् ॥५०
इत्येतल्लक्षणं प्रोक्तं युगानां वै समासतः ।
अतीतानागतानां वै यावन्मन्वन्तरक्षयः ॥५१
मन्वन्तरेण चैकेन सर्वाण्येवान्तराणि वै ।
व्याख्यातानि न संदेहः कल्पः कल्पेन चैव हि ॥५२
मन्वन्तरेषु सर्वेषु अतीतानागतेषु वै ।
तुल्याभिमानिनः सर्वे नामरूपैर्भवन्त्युत ॥५३
एवमुक्तो भगवता किरीटी श्वेतवाहनः ।
बभार परमां भक्तिमीशानेऽव्यभिचारिणीम् ॥५४
नमश्चकार तमृषिं कृष्णद्वैपायनं प्रभुम् ।
सर्वज्ञं सर्वकर्त्तारं साक्षाद् विष्णुं व्यवस्थितम् ॥५५
तमुवाच पुनर्व्यासः पार्थं परपुरंजयम् ।
कराभ्यां सुशुभाभ्यां च संस्पृश्य प्रणतं मुनिः ॥५६ वें.१.३०.५८

(→योगदातारं). –c) ब2 योगिनां परमाचार्यं, ते1 योगिनां योगसिद्ध्यर्थं. –d) का1 ब2.3 दे3.5.6 ते1 ग्र2 म1 मुब. योग° (→योगि°); द1 ग्र1.2 म1 सनातनं (→पिनाकिनं).

४७. –a) दे2 °तारिणं, ब2 मुब. °नाशकं, दे4 °तारणे (→°तारणं); ब2 घोरं, दे2 नित्यं (→रुद्रं). –c) ब2 शर्वं (→शान्तं). –d) दे4 ग्र1.2 म1 ब्रह्माणं (→ब्रह्मण्यं); ब1-3 दे6 ग्र1.2 ब्रह्मणः, द1 ब्रह्माणं (→ब्राह्मण-); दे2 ब्रह्माणं ब्रह्मवत् प्रियम्.

४८. –a) का1 ब1-3 दे2.4.5 द1 ग्र1 म1 मुब. कला° (दे5 ली°), ते1 कथा° (→काल°). –b) दे6 तारकं, दे8-10 मुवें. अमूर्त्ति-, ते1 अमूर्त्तं (→अमूर्त्ति); का1 ब1-3 दे3.5 मुब. अमरेश्वरं (→परमेश्वरं); दे4 निर्विकारममरेश्वरं, द1 ग्र1.2 म1 मूर्त्तिमन्तं महेश्वरं. –c) दे4-6 एकमूर्त्तिर् (→एकमूर्त्तिं); दे3.6 वेदवेद्यं (→महामूर्त्तिं). –d) दे2 देवदेवं, दे6 महामूर्त्तिं (→वेदवेद्यं);ब2 वनस्पतिं, द1 ग्र1.2 म1 सतां गतिं (→दिवस्पतिं); दे3 त्रिनेत्रं त्रिदिवस्पतिं.

४९. –a) ब1 दे9 विश्वमूर्त्ति- (→विश्वमूर्त्तिं). –b) दे2 व्यापिनां (→व्यापिनं); ब1 दे4 °चेतसं (→°रेतसं). –c) दे2 °हननं, +°दहनं, ते1 °दमनं, ग्र1 °हननं (→°दहनं). –d) द1 ग्र1.2 म1 कामिनं (→कामदं).

५०. –a) दे10 नमस्ते, ते1 नतोऽस्मि, द1 ग्र1.2 म1 नमामि (→नमस्ये); दे2 रुद्रं (→देवं). –b) म1 °भूषितं (→°भूषणं); ते1 चन्द्रार्धकृतभूषणं. –c) ब3 विमोहितं, द1 ग्र1.2 म1 त्रिलोचनं (→विलोहितं). –f) दे8-10 मुवें. मुए. भास्करं परमं तपः.

५१. –a) द1 ग्र1.2 म1 इत्येवं (→इत्येतत्); ग्र2 दक्षिणं (→लक्षणं). –b) दे2 युगान्तां (→युगानां); दे2 ते1 ते (→वै). –c) ते1 अतीतानागतत्राणं वै. –d) दे4 मन्वन्तरं (→मन्वन्तर-); ब2 दे4 द1 ग्र1.2 मुब. °क्षयं (→°क्षयः).

५२. –b) दे2 ते1 च (→वै). –c) ग्र2 व्याप्तानि ना द्र (त्र ?) संदेहात्. –d) ब1 कल्प- (→कल्पः); दे8-10 कल्पे कल्पे तथैव हि.

५३. ब3. ab ⊙. –a) दे8.9 मुवें. मुए. मुब. चैतेषु (→सर्वेषु). –b) दे4 द1 ग्र1.2 म1 ह्यतीता° (→अतीता°); द1 °नागतेन (→°नागतेषु); दे2 च (→वै). –c) म1 तुल्या हि (→तुल्याभि-). –d) का1 दे2.10 भवेत्पुनः; ब1 भवेत्युत, दे3 भवन्त्पुनः, दे5 भवत्युत (→भवन्त्युत); दे4 द1 ग्र1.2 म1 नामरूपादिभिर्नृप.

अतः परं अधिकम्- दे2 सूत उवाच; द1 म1 श्रीसूतः; ग्र1.2 सूतः.

५४. –a) ग्र1 उक्त्वा (→उक्तो). –c) दे6 चकार (→बभार); म1 प्रीतिं (→भक्तिं). –d) दे4 ईशानैर् (→ईशाने); ग्र2 भवेदव्यभिचारिणीम्; म1 भक्तिमव्यभिचारिणीम्.

५५. –a) म1 तदृषिं (→तमृषिं). –b) ब3 शुभं (→प्रभुम्). –d) ग्र2 विष्णु- (→विष्णुं); दे2 सनातनं (→व्यवस्थितम्).

५६. –b) दे6 पार्थ, ग्र2 पार्थः (→पार्थं); ग्र2 °पुरंजयः (→पुरंजयम्). –c) दे2.6 च, दे8 तु, ते1 हि, म1 स्व-, (→सु-) ब2 कराभ्यां वर्तुलाभ्यां च, दे6 कराभ्यां च सुताभ्यां च, ग्र1 कराभ्यां सुभगाभ्यां च. –d) दे10 संस्मृत्य, द1 पस्पर्श (→संस्पृश्य); ब1 दे3 द1 ग्र1.2 मुनि (→मुनिः).

वें. १.३०.२६ धन्योऽस्यनुगृहीतोऽसि त्वादृशोऽन्यो न विद्यते ।
त्रैलोक्ये शंकरे नूनं भक्तः परपुरंजय ।।५७
दृष्टवानसितं देवं विश्वाक्षं विश्वतोमुखम् ।
प्रत्यक्षमेव सर्वेशं रुद्रं सर्वजगद्गुरुम् ।।५८
ज्ञानं तदैश्वरं दिव्यं यथावद् विदितं त्वया ।
स्वयमेव हृषीकेशः प्रीत्योवाच सनातनः ।।५९
गच्छ गच्छ स्वकं स्थानं न शोकं कर्त्तुमर्हसि ।
व्रजस्व परया भक्त्या शरण्यं शरणं शिवम् ।।६०
एवमुक्त्वा स भगवाननुगृह्यार्जुनं प्रभुः ।
जगाम शंकरपुरीं समाराधयितुं भवम् ।।६१
पाण्डवेयोऽपि तद् वाक्यात् संप्राप्य शरणं शिवम् ।
संत्यज्य सर्वकर्माणि तद्भक्तिपरमोऽभवत् ।।६२
नार्जुनेन समः शंभोर्भक्त्या भूतो भविष्यति ।
मुक्त्वा सत्यवतीसूनुं कृष्णं वा देवकीसुतम् ।।६३
तस्मै भगवते नित्यं नमः सत्याय धीमते ।
पाराशर्याय मुनये व्यासायामिततेजसे ।।६४
कृष्णद्वैपायनः साक्षाद् विष्णुरेव सनातनः ।
को ह्यन्यस्तत्त्वतो रुद्रं वेत्ति तं परमेश्वरम् ।।६५
नमः कुरुध्वं तमृषिं कृष्णं सत्यवतीसुतम् ।
पाराशर्यं महात्मानं योगिनं विष्णुमव्ययम् ।।६६

---

५७. –a) का1 ब1.2 दे2.4 ग्र1.2 म1 धन्योऽस्म्य° (→धन्योऽस्य°); का1 ब3 दे2.4 ग्र2 म1 °तोस्मि (→°तोसि); दे5 धन्यो समनुगृहीतो. –c) दे4 ग्र2 त्रैलोक्य- (→त्रैलोक्ये); ब3 ग्र2 शंकरो, दे10 शंकरं (→शंकरे); ते1 देवे (→नूनं). –d) ब1-3 दे2.3.5.8-10 द1 ग्र1.2 म1 मुए. मुब. °पुरंजयः (→°पुरंजय).

५८. –a) दे8-10 दृष्ट्वा वामं सितं देवं. –b) का1 ब2 दे2.3.5.6 विश्वाख्यं, द1 ग्र1.2 म1 विश्वात्मं (ग्र2 °त्मा) (→विश्वाक्षं). –c) दे8-10 मुवें. मुए. मुब. सर्वेषां, ते1 सर्वज्ञं (→सर्वेशं). –d) का1 °जगद् वरं, ब1.3 दे3.5 °जगद्वरं, दे8-10 मुवें. मुए. मुब. °जगन्मयं (→°जगद्गुरुं); ब2 रुद्रं सर्वगतेश्वरं.

५९. –a) ग्र2 म1 नूनं (→ज्ञानं); ब1 तदेश्वरं, ब2.3 दे3.6 तच्चैश्वरं, ते1 तपेश्वरं (→तदैश्वरं). –b) दे4 यथा, ग्र2 तथा (→त्वया). –c) का1 दे5 अयमेव (दे5 °वं), ते1 नियमेन (→स्वयमेव); दे8-10 गुडाकेशं (→हृषीकेशः). –d) ब2 प्रीतस्तव, दे2 प्रत्युवाच, दे4.9.10 प्रीतोवाच, ते1 प्रियः पार्थ (→प्रीत्योवाच); दे4 द1 ग्र1 सनातनं, ग्र2 समागतं (→सनातनः).

६०. –a) ब1 स्वयं (→स्वकं); द1 ज्ञानं, म1 राज्यं (→स्थानं); ते1 गच्छस्व शाश्वतं स्थानं. –b) दे5 यथावद् वेदितं त्वया. –c) दे6 द1 ग्र1.2 म1 भजस्व (→व्रजस्व); दे10 परमा- (→परया).

दे5. b.c मध्ये अधिकम्—

* अयमेव हृषीकेशः प्रीत्योवाच सनातनः । (= ५९cd)

६१. –a) द1.६१ a-६२ b⊙(द्र.सं.). –a) दे10 एकम् (→एवम्); दे5.10 उक्ता (→उक्त्वा). –b) दे8-10 प्रति, ते1 पुनः, ग्र2 विभुं (→प्रभुः). –c) ग्र1.2 म1 °पुरं (→°पुरीं). –d) ब2 तमा° (→समा°); का1 ब2 ग्र1.2 म1 शिव, दे10 भुवं (→भवम्).

६२. द1. ab ⊙; ग्र2 म1.६२c-६३d ⊙. –a) ब2.3 पाण्डवोऽपि च (→पाण्डवेयोऽपि); का1 ब1 दे2-6 ते1 तद् वाक्यं (→तद् वाक्यात्). –d) ब3 भगवत् परमो भवत्, दे8-10 ते1 मुवें. मुए. मुब. ज्ञात्वा तत् परमोऽभवत्.

६३. ग्र2 म1. ⊙. –a) मुवें. नार्चनेन (→नार्जुनेन). –b) ते1 भक्तो (→भक्त्या). –c) दे5 मुनि-, दे6 त्यक्त्वा (→मुक्त्वा).

६४. दे3.6. ६४a-६६b ⊙ (द्र. सं.). –a) ब1 ग्र2 भगवतो (→भगवते). –b) दे8-10 मुवें. मुए. मुब. शान्ताय (→सत्याय). –c) ग्र2 परा° (→पारा°).

६५. दे3.6. ⊙ (द्र. ६४ पा. वि.). –a) ब1 कृष्णः (→कृष्ण-). –b) का1 दे2.5 एष (→एव). –c) दे10 कोह्यन्यस्तुत्यते रुद्रं, ते1 कोन्यस्तु सत्त्वतो (तत्वतो) रुद्रं, द1 ग्र1.2 म1 को ह्यन्यस्तु ततो रुद्रं.

६६. दे3.6. ab ⊙. –a) का1 ब1 दे2.5 नमोऽस्तु रुद्रं, ब2.3 नमामि रुद्रं, दे4 नमस्कुरुष्व (→नमः कुरुध्वं). –d) दे4 योगिनां (→योगिनं).

एवमुक्तास्तु मुनयः सर्वं एव समाहिताः । प्रणेमुस्तं महात्मानं व्यासं सत्यवतीसुतम् ॥६७

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायां पूर्वविभागे अष्टाविंशोऽध्यायः ॥२८॥

# २९

ऋषय ऊचुः । ❀
प्राप्य वाराणसीं दिव्यां कृष्णद्वैपायनो मुनिः ।
किमकार्षीन्महाबुद्धिः श्रोतुं कौतूहलं हि नः ॥१

सूत उवाच ।❀
प्राप्य वाराणसीं दिव्यामुपस्पृश्य महामुनिः ।
पूजयामास जाह्नव्यां देवं विश्वेश्वरं शिवम् ॥२

तमागतं मुनिं दृष्ट्वा तत्र ये निवसन्ति वै ।
पूजयाञ्चक्रिरे व्यासं मुनयो मुनिपुंगवम् ॥३
पप्रच्छुः प्रणताः सर्वे कथाः पापविनाशनीः ।
महादेवाश्रयाः पुण्या मोक्षधर्मान् सनातनान् ॥४
स चापि कथयामास सर्वज्ञो भगवानृषिः ।
माहात्म्यं देवदेवस्य धर्मान् वेदनिर्दशितान् ॥५ वें. १.३१.५

६७. –a) ब1 दे8.9 द1 मुवें. मुए. उक्त्वा (→उक्तास्). –b) का1 ग्र2 एष (→एव); ग्र1 सनातनः, ग्र2 समाहितः (→समाहिताः). –c) ब3 महाकायं (→महात्मानं). –d) दे5 कृष्णं (→व्यासं).

**पुष्पिका**—[द1 पुस्तके अध्यायसमाप्तिर्नास्ति]

**पुराणनाम**—का1 इति श्रीकौर्मे पुराणे, ब1 दे5 इति कौर्मे, ब2.3 दे3.6 इति कूर्मपुराणे, दे2 इति कौर्मे पुराणे, दे4.8-10 ग्र1.2 म1 मुवें. मुए. इति श्रीकूर्मपुराणे, ते1 इत्यादिमहापुराणे श्रीकौर्मे, मुब. इति श्रीकौर्मे महापुराणे पूर्वभागे. **अध्यायनाम**—का1 ब1-3 दे2-6 ते1 ग्र1.2 म1. ⊙; दे8.9 मुए. मुब. व्यासार्जुनसंवादे युगधर्मे, दे10 व्यासार्जुनसंवादे युगधर्मवर्णनो नाम, मुवें. व्यासार्जुनसंवादे युगधर्मनिरूपणं नाम. **अध्यायसंख्या**—दे6. ⊙; का1 ब1.3 दे2.3.5. ग्र1 सप्तविंशोध्यायः, ब2 ॥२७॥, दे4 सप्तविंशोध्यायः ॥२७॥, दे8.9 त्रिंशोध्यायः, दे10 मुवें. मुए. त्रिंशोऽध्यायः ॥३०॥, ते1 अष्टाविंशोऽध्यायः, ग्र2 म1 एकोनत्रिंशोध्यायः, मुब. एकोनत्रिंशोध्याय. ॥२९॥.

**२९**

[दे1 पुस्तके अध्यायोऽयं नास्ति.]

❀ न1 ग्र1. ⊙; ते1 श्रीशिवः, + ऋषयः; द1 ग्र2 म1 ऋषयः.

१. दे5 न1 द1. ⊙. –a) दे4 ग्र1.2 म1 पुण्यां (→दिव्यां). –c) ब2 दे10 ग्र1.2 म1 °बुद्धे (→°बुद्धिः). –d) ग्र1 कौतूहलः (→कौतूहलं); दे3 हि मे, दे10 युधः (→हि नः).

❀ दे5 द1. ⊙; दे8.9 सूत उ.; न1 ते1 ग्र1.2 म1 सूतः.

२. –a) दे4 ग्र2 म1 पुण्यां, ग्र1 दिव्यं (→दिव्यां). –b) दे4 °मतिः (→°मुनिः). –d) दे5 शिवां, ग्र2 म1 हरं (→शिवम्).

दे4. a, b मध्ये अधिकम्—कृष्णद्वैपायनो मुनिः ।

३. –b) दे6 यत्र (→तत्र); ते1 यो, + ये (→ये); दे8-10 च, ग्र2 ते (→वै). –d) दे2.5.8-10 °पुङ्गवाः (→°पुंगवम्).

४. –a) ब3 प्रणतः (→प्रणताः). –b) का1 दे2.5.8-10 मुवें. मुए. मुब. कथां (→कथाः); का1 दे2.5 °विनाशि (दे5 श°) नीं, ब2 दे3 ते1 °प्रणाशि (दे3 °श)नीः, दे8-10 मुवें. मुए. मुब. °प्रणाशि(दे10° श)नीं, दे4 म1 °विनाशिनीः, दे6 °प्रनाशनीं, न1 °प्रणाशिनं (→°विनाशनीः); द1 ग्र1.2 कथास्ताः (ग्र2 °स्थाः) पापनाशिनीः (ग्र2 °नी). –c) का1 दे2.5.8-10 ग्र2 मुवें. मुए. मुब. °श्रयां, द1 °श्रयात्, ग्र1 म1 °श्रयान् (→°श्रयाः); का1 दे2.5.8-10 न1 द1 ग्र1.2 मुवें. मुए. मुब. पुण्यां, ग्र1 म1 पुण्यान् (→पुण्या). –d) ते1 °धर्मास्, द1 °धर्मात् (→धर्मान्); दे3 सनातनीं, दे4.10 द1 सनातनात्, दे5 सनातनं, ते1 सनातनाः (→सनातनान्).

५. –a) म1 चाथ (→चापि). –c) ग्र1 महात्मा (→माहात्म्यं). –d) दे8.10 ते1 मुवें. मुए. मुब. धर्म्यः दे9 धर्मं (→धर्मान्); दे8-10 न1 मुवें. मुए. मुब. °निदर्शनात् (न1 °नान्) (→°निर्दशितान्); द1 ग्र1.2 सर्वान् देव (ग्र2 वेद) विर्दशितान्.

वें.१.३१.६ तेषां मध्ये मुनीन्द्राणां व्यासशिष्यो महामुनिः ।
पृष्टवान् जैमिनिर्व्यासं गूढमर्थं सनातनम् ॥६

जैमिनिरुवाच ।❀

भगवन् संशयं त्वेकं छेत्तुमर्हसि तत्त्वतः ।
न विद्यते ह्यविदितं भवता परमर्षिणा ॥७
केचिद् ध्यानं प्रशंसन्ति धर्ममेवापरे जनाः ।
अन्ये सांख्यं तथा योगं तपस्त्वन्ये महर्षयः ॥८
ब्रह्मचर्यमथो मौनमन्ये प्राहुर्महर्षयः ।
अहिंसां सत्यमप्यन्ये संन्यासमपरे विदुः ॥९
केचिद् दयां प्रशंसन्ति दानमध्ययनं तथा ।
तीर्थयात्रां तथा केचिदन्ये चेन्द्रियनिग्रहम् ॥१०
किमेतेषां भवेज्ज्यायः प्रब्रूहि मुनिपुंगव ।
यदि वा विद्यतेऽप्यन्यद् गुह्यं तद्वक्तुमर्हसि ॥११
श्रुत्वा स जैमिनेर्वाक्यं कृष्णद्वैपायनो मुनिः ।
प्राह गम्भीरया वाचा प्रणम्य वृषकेतनम् ॥१२

भगवानुवाच ।❀

साधु साधु महाभाग यत्पृष्टं भवता मुने ।
वक्ष्ये गुह्यतमाद् गुह्यं शृण्वन्त्वन्ये महर्षयः ॥१३
ईश्वरेण पुरा प्रोक्तं ज्ञानमेतत् सनातनम् ।
गूढमप्राज्ञविद्विष्टं सेवितं सूक्ष्मदर्शिभिः ॥१४
नाश्रद्दधाने दातव्यं नाभक्ते परमेष्ठिनः ।
न वेदविद्विषि शुभं ज्ञानानां ज्ञानमुत्तमम् ॥१५

---

६. –a) दे6 मुनीद्रानां (→मुनीन्द्राणां). –c) दे4 द1 ग्र1 म1 दृष्ट्वा तं (→पृष्टवान्); ग्र2 दृष्ट्वा तज्जैमुनि व्यासं. –d) ब1 दे3.6 अन्नं (→अर्थं).

❀ दे10 जैमिनि उ.; न1 ते1 द1 ग्र1 म1 जैमिनिः; ग्र2 जैमुनिः.

७. –a) न1 ग्र1 भगवान् (→भगवन्); दे8-10 मुवें. मुए. मुब. संशयञ्चैकं, द1 ग्र1.2 म1 संशयोस्माकं (→संशयं त्वेकं). –b) दे8-10 स्थातुं (→छेत्तुं); दे8.9 न1 मुवें. मुए. मुब. सर्ववित्, दे10 सर्वजित्, ते1 सर्वतः (→तत्त्वतः). –c) द1 विद्यतेस्य (→विद्यते ह्य-). –d) दे8-10 न1 मुवें. मुए. भवतः (→भवता); दे8-10 म1 मुवें. मुए. परमर्षिणः (→परमर्षिणा).

८. –a) का1 दे2.5.10 ते1 ज्ञानं (दे10 °तं); दे8.9 पातं (→ध्यानं); दे2.5 प्रशंसन्ते (→प्रशंसन्ति). –b) का1 दे5 धर्ममेव (→धर्ममेवा-); ते1 जनान्,+ जनाः (→जनाः). –c) ग्र2 ततो (→तथा). –d) दे3.6 तथास्त्वन्ये, दे8-10 न1 मुवें. मुए, मुब. तपश्चान्ये, ग्र2 तप अन्ये, म1 तपांस्यन्ये (→तपस्त्वन्ये).

९. द1 ग्र1.2 म1 ab ⊙. –a) दे5 मौनीं, दे8-10 मुवें. मुए. नूनं, ते1 मोक्षं (→मौनं); दे6 ब्रह्मचर्यात्तथा मौनं. –c) ब1.2 दे3.5.6.8-10 द1 अहिंसा- (→अहिंसां). –d) ब1-3 दे3-6.9 द1 सन्यासं, न1 सन्यस्तं (→संन्यासं).

१०. द1 ab ⊙. –a) ब1.3 दे2 गयां, दे3 दद्यां, ग्र1 व्रतं, ग्र2 म1 मंत्रं (→दयां). –b) दे4 परे (→तथा); ग्र1.2 म1 ध्यानमध्यापनं परे. –c) दे6 °यात्रा (→°यात्रां).

११. –a) दे4 तत्किमेषा, दे8-10 न1 मुवें. मुए. मुब. किमेषाञ्च, द1 ग्र1.2 म1 तत्त्वमेषां (→किमेतेषां); ब1-3 दे3.6.8-10 न1 ते1 भवेच्छ्रेयः, (→भवेज्ज्यायः). –b) ग्र2 ब्रूहि मे (→प्रब्रूहि); ब3 दे10 °पुङ्गवं, दे3.5 °पुङ्गवः (→°पुंगव). –c) का1 चान्यत्, दे2 ह्यतत्, दे5 स्वाव्यं, न1 [अ]व्यन्यं, ते1 त्वन्यत् (→[अ]प्यन्यत्); ग्र2 म1 यदिवान्यच्च ते ह्यस्मात् (म1 हि स्यात्).

अतः परम् अधिकम्—द1 श्रीसूतः; ग्र1.2 म1 सूतः.

१२. –a) ते1 च (→स); द1 जैमिनिर्, ग्र2 जैमुनेर् (→जैमिनेर्). –b) दे4.6 °द्वैपायनं (दे6 °णो) (→°द्वैपायनो).

❀ ब3 दे6.8.10 मुवें. मुए. श्रीभगवानुवाच; दे4 व्यास उवाच; न1 भगवान्; ते1 ग्र1.2 म1 व्यासः; द1 श्रीव्यासः.

१३. –c) ब2 °तमं ज्ञाह्यं, दे9 °तमाद्गुह्ये, द1 °तरं गुह्यात्, ग्र1.2 म1 °तमं गुह्यात् (→°तमाद् गुह्यं); ते1 वक्ष्ये पशुपतिं नत्वा. –d) ब3 दे4 द1 ग्र1.2 म1 शृणुष्वान्ये, दे3 शृणु चान्ये, दे6 शृण्ववंत्वे(?) (→शृण्वन्त्वन्ये); न1 [अ]पि चर्षयः (→महर्षयः).

१४. –b) ते1 एव (→एतत्). –c) दे5 °विधिवत् (→°विद्विष्टं); दे4 गूढं मे प्राह विद्विष्ट, न1 गूढमप्राजलिद्रिष्टं, ते1 गूढं प्रोक्तविधिर्दुष्टं, ग्र1 गूढप्राज्ञजनैर्दृष्टं, ग्र2 गूढमत् प्राज्ञविद्विष्टं, म1 गूढं प्राप्तं यद्विशिष्टं. –d) ते1 तत्व° (→सूक्ष्म°).

१५. –a) दे4 धातव्यं, दे9 दातव्ये (→दातव्यं). –b) दे4 °मेष्टिनं, ते1 °मेष्ठिनि (→°मेष्ठिनः). –c) ब2.3 दे8-10 न1 ते1 मुवें. मुए. मुब. नवेद° (→नावेद°); का1 °विद्विषि देयं, ब2 °विदुषे शुद्धं, दे8-10 °विदुषो (दे8 °षे) ज्ञेयं, ते1 °विद्या विदुषे, मुवें. मुए. मुब. °विदुषे देयं (→°विद्विषि शुभं). –d) ते1 दातव्यं (→ज्ञानानां); दे8-10 ज्ञानानामुत्तमोत्तमं.

मेरुशृङ्गे पुरा देवमीशानं त्रिपुरद्विषम् ।
देवासनगता देवी महादेवमपृच्छत ॥१६

देव्युवाच ।❀

देवदेव महादेव भक्तानामार्त्तिनाशन ।
कथं त्वां पुरुषो देवमचिरादेव पश्यति ॥१७
सांख्ययोगस्तथा ध्यानं कर्मयोगोऽथ वैदिकः ।
आयासबहुला लोके यानि चान्यानि शंकर ॥१८
येन विश्रान्तचित्तानां योगिनां कर्मिणामपि ।
दृश्यो हि भगवान् सूक्ष्मः सर्वेषामथ देहिनाम् ॥१९
एतद् गुह्यतमं ज्ञानं गूढं ब्रह्मादिसेवितम् ।
हिताय सर्वभक्तानां ब्रूहि कामाङ्गनाशन ॥२०

ईश्वर उवाच ।❀

अवाच्यमेतद् विज्ञानं ज्ञानमज्ञैर्बहिष्कृतम् ।
वक्ष्ये तव यथा तत्त्वं यदुक्तं परमर्षिभिः ॥२१
परं गुह्यतमं क्षेत्रं मम वाराणसी पुरी ।
सर्वेषामेव भूतानां संसारार्णवतारिणी ॥२२
तत्र भक्ता महादेवि मदीयं व्रतमास्थिताः ।
निवसन्ति महात्मानः परं नियममास्थिताः ॥२३
उत्तमं सर्वतीर्थानां स्थानानामुत्तमं च तत् ।
ज्ञानानामुत्तमं ज्ञानमविमुक्तं परं मम ॥२४ वें.१.३१.२४

---

१६. –a) दे$_{8-10}$ ते$_{1}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ मुवें. मुए. महा- (→पुरा). –b) न$_{1}$ त्रिपुरे (→त्रिपुर–). –c) दे$_{5}$ देवासनं गता, ते$_{1}$ देवैस्समागता (→देवासनगता). –d) दे$_{5}$ अपृच्छता, न$_{1}$ अपृच्छतः, ते$_{1}$ अभाषत (→अपृच्छत).

❀ दे$_{4}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$. ⊙; दे$_{6}$ मुवें. मुए. मुब. श्रीदेव्युवाच; दे$_{10}$ देवी उवाच; ते$_{1}$ देवी.

१७. –b) का$_{1}$ °नाशनं, दे$_{5}$ °नाशनः (→°नाशन). –c) ब$_{2}$ कथं स्त्री-, ते$_{1}$ कृत्वा(र्थं)त्वं (→कथं त्वां); ब$_{1}$ दे$_{10}$ पुरुषं (→पुरुषो); ग्र$_{2}$ देवः (→देवं). –cd) म$_{1}$ कथं त्वामचिरादेव पुरुषः परिपश्यति.

१८. –a) का$_{1}$ ब$_{1.2}$ दे$_{5}$ ते$_{1}$ सांख्यं योगस् (का$_{1}$ ते$_{1}$ °गं), द$_{1}$ ग्र$_{1}$ सांख्ययोगं (→सांख्ययोगस्); दे$_{4}$ सदा ध्यानं, दे$_{8-10}$ न$_{1}$ ते$_{1}$ मुवें. मुए. मुब. तपो ध्यानं, द$_{1}$ ग्र$_{1.2}$ म$_{1}$ सदा ज्ञानं (→तथा ध्यानं). –b) न$_{1}$ मुवें. मुए. मुब. °योगश्च, ग्र$_{1.2}$ म$_{1}$ °योगोपि (→°योगोथ); दे$_{4.6}$ ग्र$_{1}$ वैदिकं, दे$_{8.10}$ वैदिका (→वैदिकः); ते$_{1}$ कर्मयोगो यथाविधि. –c) ग्र$_{1}$ आयासो, ग्र$_{2}$ आयासा (→आयास-); का$_{1}$ दे$_{4}$ °बहुले लोके, दे$_{2}$ °बहुला लोक्ये, दे$_{8-10}$ मुवें. मुए. मुब. °बहुलान्याहुर्, न$_{1}$ °बहुला लोकेर्, द$_{1}$ ग्र$_{1.2}$ °बहुलो लोके (→°बहुला लोके). –d) ब$_{1}$ शंकरः, दे$_{5}$ शंकरी (→शङ्कर).

१९. –a) दे$_{5}$ °चित्ताया (→°चित्तानां). –b) का$_{1}$ ब$_{1}$ दे$_{2.4}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ योगिनां कर्मणामपि, दे$_{8-10}$ स्वकर्मकर्मिणामपि, न$_{1}$ योगिनां कर्मवानपि, मुवें. मुए. मुब. विज्ञानां योगिनामपि. –c) दे$_{3}$ दृश्या हि, दे$_{4.8-10}$ ते$_{1}$ द$_{1}$ ग्र$_{1.2}$ दृश्योपि, म$_{1}$ दृश्योसि (→दृश्यो हि). –d) दे$_{4}$ द$_{1}$ ग्र$_{1}$ मुवें. मुए.मुब. अपि, ते$_{1}$ मर्त्य-, ग्र$_{2}$ एव, म$_{1}$ इह (→अथ).

२०. –b) दे$_{5}$ गृहं ब्रह्मादि°, दे$_{8-10}$ मूढकर्मादि° (→गूढं ब्रह्मादि°); ग्र$_{1.2}$ म$_{1}$ °संज्ञितं (→°सेवितम्); ब$_{1}$ गूढं ब्रह्मनिसेवितम्. –c) का$_{1}$ दे$_{4.5}$ म$_{1}$ °भूतानां, दे$_{2}$ °भूतानि (→°भक्तानां). –d) दे$_{2}$ °नाशनां, न$_{1}$ °नाशनं (→°नाशन).

❀ ब$_{1}$ महेश्वर उवाच; दे$_{3.8.9}$ ईश्वर उ.; न$_{1}$ ते$_{1}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ ईश्वरः; ग्र$_{1}$ ईश्वरौ.

२१. –a) दे$_{10}$ अवामप्येतत् (→अवाच्यमेतत्); दे$_{6.8-10}$ न$_{1}$ मुवें. मुए. मुब. गूढार्थं, ते$_{1}$ गुह्यार्थं (→विज्ञानं). –b) ब$_{3}$ ज्ञानयज्ञैर्, ग्र$_{2}$ म$_{1}$ अज्ञैर्बहु- (→ज्ञानमज्ञैर्); दे$_{5}$ बहिष्कृतां (→बहिष्कृतम्). –c) का$_{1}$ दे$_{3.5}$ तथा तत्वं, दे$_{4}$ तथात्मत्वं (→यथा तत्त्वं); ग्र$_{2}$ वक्ष्येथ वा यथा तत्त्वं. –d) दे$_{9.10}$ तदुक्तं, ग्र$_{2}$ यं भक्तं (→यदुक्तं).

२२. –a) ब$_{2}$ परात् परतमं (→परं गुह्यतमं); ग्र$_{2}$ प्रोक्तं (→क्षेत्रं). –b) ब$_{1.3}$ मम वाराणसीं पुरीं. –d) ब$_{3}$ °तारिणीं, दे$_{4}$ °तारणी, ते$_{1}$ °तारिका (→°तारिणी).

२३. ग्र$_{2}$. cd ⊙. –a) का$_{1}$ दे$_{8-10}$ न$_{1}$ ते$_{1}$ मुवें. मुए. मुब. तस्मिन् (→तत्र); का$_{1}$ दे$_{2.5}$ महादेवे, ग्र$_{1}$ म$_{1}$ महादेवी, ग्र$_{2}$ महोदेवी (→महादेवि). –b) का$_{1}$ ब$_{2}$ दे$_{3-6}$ ते$_{1}$ ग्र$_{1}$ म$_{1}$ आश्रिताः (दे$_{5}$ °तः) (→आस्थिताः). –c) दे$_{2}$ महात्माना, मुब. महात्मानं (→महात्मानः). –d) ब$_{1-3}$ परं निश्चयमास्थिताः, दे$_{2.6}$ परं निश्चयमास्थितः, दे$_{4}$ परं निश्चयसंस्थिताः.

२४. –a) द$_{1}$ ग्र$_{1.2}$ म$_{1}$ सर्वेषामेव° (→उत्तमं सर्व°); दे$_{2}$ °तीर्थानि (→°तीर्थानां). –b) ब$_{1.3}$ दे$_{8-10}$ द$_{1}$ मुवें. मुए. मुब. च यत्, दे$_{4}$ भवेत्, ते$_{1}$ तु यत् (→च तत्). –d) ग्र$_{1.2}$ विमुक्तं परमं मम, म$_{1}$ यदुक्तं परमं मम.

१.३१.२५ स्थानान्तरं पवित्राणि तीर्थान्यायतनानि च ।
श्मशानसंस्थितान्येव दिव्यभूमिगतानि च ।।२५
भूर्लोके नैव संलग्नमन्तरिक्षे ममालयम् ।
अयुक्तास्तन्न पश्यन्ति युक्ताः पश्यन्ति चेतसा ।।२६
श्मशानमेतद् विख्यातमविमुक्तमिति श्रुतम् ।
कालो भूत्वा जगदिदं संहराम्यत्र सुन्दरि ।।२७
देवीदं सर्वगुह्यानां स्थानं प्रियतमं मम ।
मद्भक्तास्तत्र गच्छन्ति मामेव प्रविशन्ति ते ।।२८
दत्तं जप्तं हुतं चेष्टं तपस्तप्तं कृतं च यत् ।
ध्यानमध्ययनं ज्ञानं सर्वं तत्राक्षयं भवेत् ।।२९
जन्मान्तरसहस्रेषु यत्पापं पूर्वसंचितम् ।
अविमुक्तं प्रविष्टस्य तत्सर्वं व्रजति क्षयम् ।।३०
ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा ये वर्णसंकराः ।
स्त्रियो म्लेच्छाश्च ये चान्ये संकीर्णाः पापयोनयः ।।३१
कीटाः पिपीलिकाश्चैव ये चान्ये मृगपक्षिणः ।
कालेन निधनं प्राप्ता अविमुक्ते वरानने ।।३२
चन्द्रार्द्धमौलयस्त्र्यक्षा महावृषभवाहनाः ।
शिवे मम पुरे देवि जायन्ते तत्र मानवाः ।।३३
नाविमुक्ते मृतः कश्चिन्नरकं याति किल्विषी ।
ईश्वरानुगृहीता हि सर्वे यान्ति परां गतिम् ।।३४

२५. –a) दे5 मुवें. मुए. मुब. स्थानान्तरे, दे6 ते1 स्थानान्तर- (→स्थानान्तरं); ते1 -सहस्राणि (→पवित्राणि). –b) ते1 तीर्थानामयुतानि च. –c) ब3 श्मशानं, दे8.9 मुवें. मुए. मुब. श्मशाने, दे10 सा ज्ञाने (→श्मशान-); दे5 °संस्थितानेव (→°संस्थितान्येव); ते1 स्वर्लोकसंस्थिता ये च. –d) दे8-10 न1 ते1 मुवें. मुए. मुब. दिवि भूमि° (दे10 °मिं, ते1 ° मौ) (→दिव्यभूमि°).

२६. –a) ते1 द1 ग्र1 भूलोके (→भूर्लोके); म1 ग्र2 भूमौ लोके नैव (म1 चैव) संलग्नं (ग्र2 °ग्नौ). –b) दे9.10 महालयम् (→ममालयम्). –ab) दे5 श्मशानसंस्थितो नो वा भूर्लोके नैव संस्थिता. –c) का1 दे5 अमुक्तास्तत्र, ब1-3 दे2.3 अमुक्तास्तत्र, दे4 अयुक्तास्ते न, दे6.8-10 मुवें. मुए. मुब. अविमुक्ता न, ते1 अयुक्तास्तु न (→अयुक्तास्तन्न). –d) का1 ब1-3 दे2-4.6.8-10 मुवें. मुए. मुब. मुक्ताः (दे4.10 मुब. °क्ता) (→युक्ताः); दे6 म1 पश्यति (→पश्यन्ति); न1 विषयासक्त-चेतसाः.

२७. –a) न1 ईशानं (→श्मशानं); ग्र2 स्थानमेतं समाख्यातं, म1 स्थानमेतच्च विख्यातं. –b) दे4 इतीश्वरं, दे5 इति श्रुतां, दे8-10 द1 ग्र2 म1 मुवें. मुए. मुब. इति स्मृतम् (→इति श्रुतं). –c) ते1 माला, ग्र2 काले (→कालो). –d) ब3 संहराम्यद्य, दे3 संहराम्यरि-, दे5 साहरम्यत्र(?), ग्र2 संहारमिव, म1 संहरामीह (→संहराम्यत्र); दे5 म1 सुंदरी (→सुन्दरि).

२८. –b) का1 ब1-3 दे2.4.5 °तरं मम, दे10 °तमुत्तमं, (→°तमं मम). –c) ब3 न1 मुवें. मुए. मुब. भक्ता यत्र, ग्र2 भक्तास्तव (→भक्तास्तत्र); ते1 मद्युक्तास्तत्र गच्छन्ति. –d) दे5 मामिव (→मामेव); दे4 द1 ग्र1.2 वै, ते1 च (→ते).

२९. –a) ग्र2 दष्ट (→दत्तं); दे5 हुतं चैव, दे10 हुतश्रेष्टं, द1 हुते चेष्टं (→हुतं चेष्टं). –b) दे2.5 जपस् (→तपस्); दे3 तत् (→यत्). –c) ब2 दानं (→ध्यानं); दे5 म1 अध्यापनं (→अध्ययनं); दे10 दानं (→ज्ञानं). –d) दे4 ते1 म1 सर्वमत्राक्षयं, दे5 सर्वं तत्राक्षयं, दे6 सर्वं तत्रक्षयं, ग्र1 सर्वन्त्वत्राक्षयं (→सर्वं तत्राक्षयं); दे10 महत् (→भवेत्).

३०. –b) दे4 °संचयं (→°संचितम्). –c) दे8-10 मुवें. मुए. मुब. अविमुक्ते (→अविमुक्तं). –d) मुब. पूर्वं (→सर्वं); दे5 व्रजतित्तयां (?), ग्र1 व्रज(य)ति क्षयम् (→व्रजति क्षयम्).

३१. –a) दे5 द1 ग्र1.2 ब्राह्मणा (→ब्राह्मणाः). –b) दे6 शूद्रायै (→शूद्रा ये); द1 ग्र1 च न संस्थिताः, ग्र2 चास्मि संस्थिताः, म1 चात्र संस्थिताः (→वर्णसङ्कराः). –c) ब3 प्रिये, दे10 त्रयो (→स्त्रियो); दे5 ***, ते1 मूर्खाश्च (→म्लेच्छाश्च). –d) ब2.3 दे3.6 संकीर्णे, दे4 शृङ्गिणो, दे5 संकीर्णः (→संकीर्णाः).

३२. –a) ते1 कीटः (→कीटाः). –c) दे10 कलेन (→कालेन); दे4 प्राप्तां, ते1 प्राप्तास् (→प्राप्ता). –d) दे5 ह्यविभक्ते, द1 अविमुक्ता, ग्र2 अविमुक्तो (→अविमुक्ते); ते1 सर्वे मुक्ताश्च बन्धनैः.

३३. –a) दे10 °मौलयस्त्र्यक्षाः, न1 °शेखराः सूक्ष्मा, द1 ग्र1.2 °मौलयः प्रेक्ष्याः (ग्र2 °क्ष्य) (→°मौलयस्त्र्यक्षा); म1 चन्द्रार्धमौलिनः प्रेक्ष्याः. –b) ते1 सर्पहाराः वृषध्वजाः. –c) दे4 द1 ग्र1.2 म1 शैवे, ते1 मृता (→शिवे); ग्र2 पुरं (→पुरे); दे10 म1 देवी (→देवि).

३४. –a) दे5 मा विमुक्ते, न1 नाविमुक्तं, ग्र2 अविमुक्ते (→नाविमुक्ते); ते1 नरः (→मृतः). –b) दे10 यांति (→याति); दे5 न1 ग्र2 किल्विषं (→किल्विषी). –c) ब1

मोक्षं सुदुर्लभं मत्वा संसारं चातिभीषणम् ।
अश्मना चरणौ हत्वा वाराणस्यां वसेन्नरः ।।३५
दुर्लभा तपसा चापि पूतस्य परमेश्वरि ।
यत्र तत्र विपन्नस्य गतिः संसारमोक्षणी ।।३६
प्रसादाज्जायते ह्येतन्मम शैलेन्द्रनन्दिनि ।
अप्रबुद्धा न पश्यन्ति मम मायाविमोहिताः ।।३७
अविमुक्तं न सेवन्ति मूढा ये तमसावृताः ।
विण्मूत्ररेतसां मध्ये ते वसन्ति पुनः पुनः ।।३८
हन्यमानोपि यो विद्वान् वसेद् विघ्नशतैरपि ।
स याति परमं स्थानं यत्र गत्वा न शोचति ।।३९

जन्ममृत्युजरामुक्तं परं याति शिवालयम् ।
अपुनर्मरणानां हि सा गतिर्मोक्षकाङ्क्षिणाम् ।
यां प्राप्य कृतकृत्यः स्यादिति मन्यन्ति पण्डिताः ।।४०
न दानैर्न तपोभिश्च न यज्ञैर्नापि विद्यया ।
प्राप्यते गतिरुत्कृष्टा याऽविमुक्ते तु लभ्यते ।।४१
नानावर्णा विवर्णाश्च चण्डालाद्या जुगुप्सिताः ।
किल्विषैः पूर्णदेहा ये विशिष्टैः पातकैस्तथा ।
भेषजं परमं तेषामविमुक्तं विदुर्बुधाः ।।४२
अविमुक्तं परं ज्ञानमविमुक्तं परं पदम् ।
अविमुक्तं परं तत्त्वमविमुक्तं परं शिवम् ।।४३ वें.१.३१.४४

ईश्वरात्म° (→ईश्वरानु°); ते$_{1}$ °गृहातास्ते, द$_{1}$ °गृहीताभिः (→°गृहीता हि).

**३५.** –a) दे$_{10}$ स (→सु-); का$_{1}$ गत्वा, + ज्ञात्वा, दे$_{8-10}$ मुवें. मुए. मुब. ज्ञात्वा (→मत्वा); ते$_{1}$ मोक्षो दुर्लभमन्यत्र. –b) दे$_{4}$ चातिभू°, ते$_{1}$ अतिभी° (→चातिभी°). –c) दे$_{5}$ अस्तमा, दे$_{6}$ अश्मणा, ग्र$_{1}$ अशना (→अश्मना); ते$_{1}$ हन्यात् (→हत्वा); ग्र$_{2}$ अश्मशाना चरणौ शंभोः. –d) दे$_{3}$ वरेन्नरः, ग्र$_{2}$ नरः परः (→वसेन्नरः).

**३६.** –a) ब$_{1}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ तपसावापि, दे$_{3.6}$ तपसा चैव, दे$_{8.9}$ मुवें. मुए. तपसोऽवाप्तिर्, दे$_{10}$ तपसा व्याप्ति (→तपसा चापि). –b) दे$_{2.8-10}$ मुवें. मुए. भूतस्य (→पूतस्य); दे$_{10}$ म$_{1}$ °मेश्वरी (→°मेश्वरि); ते$_{1}$ या वै विघ्नशतैरपि. –c) दे$_{2.5}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ ते$_{1}$ यत्र यत्र, मुब. तत्र तत्र (→यत्र तत्र). –d) द$_{1}$ ग्र$_{1.2}$ म$_{1}$ मतिस् (→गतिः); ब$_{2}$ द$_{1}$ ग्र$_{1}$ °मोक्षिणी, दे$_{4}$ °मोक्षणं, ते$_{1}$ °मोक्षणे (→°मोक्षणी).

**३७.** –a) द$_{1}$ म$_{1}$ प्रसादो (→प्रसादात्); दे$_{8-10}$ मुवें. मुए. दह्यते (दे$_{10}$ °तो), न$_{1}$ ज्ञायते (→जायते); का$_{1}$ दे$_{2.5}$ सम्यक्, ब$_{2}$ दे$_{8-10}$ मुवें. मुए. मुब. ह्येनो, दे$_{4.6}$ ग्र$_{2}$ ह्येत, ते$_{1}$ ह्यत्र, ग्र$_{1}$ ह्येतत् (→ह्येतन्). –b) द$_{1}$ ज्ञानः, ग्र$_{1}$ ज्ञानं, ग्र$_{2}$ जन-, म$_{1}$ ज्ञाने (→मम); दे$_{2}$ °नंदिनिः, दे$_{3}$ °नन्दिनिं, द$_{1}$ ग्र$_{1}$ °नन्दिनी (→°नन्दिनि). –c) ब$_{1}$ दे$_{3}$ अप्रवृद्धा, ब$_{2}$ अथ बुद्ध्वा, ब$_{3}$ अपिबुद्ध्वा, दे$_{5}$ ग्र$_{2}$ अप्रबुधा, दे$_{8-10}$ न$_{1}$ मुवें. मुए. मुब. अत्राबुधा (→अप्रबुद्धा). –d) दे$_{4}$ मायाति° (→माया वि°).

**३८.** दे$_{4}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$. ३८a–४०b ⊙; ते$_{1}$. ३८a–३९b ⊙. –a) का$_{1}$ दे$_{2.5.8-10}$ मुवें. मुए. मुब. पश्यन्ति, ब$_{2}$ सेवंते (→सेवन्ति). –b) का$_{1}$ दे$_{2.5}$ °हताः (→°वृताः). –d) दे$_{8-10}$ मुवें. मुए. मुब. संविशन्ति, न$_{1}$ ते पतंति (→ते वसंति).

**३९.** दे$_{4}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$. ⊙ (द्र. ३८ पा. वि.); ते$_{1}$. ab ⊙ (द्र. ३८ पा. वि.). –a) मुवें. मुए. मुब. देवि (→विद्वान्); दे$_{8-10}$ हन्यमानः पुमान् देवि. –b) दे$_{8-10}$ विद्वान्, मुवें. मुए. मुब. विशेद् (→वसेद्). –c) दे$_{8-10}$ गत्वा (→याति).

**४०.** दे$_{4}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$. ab ⊙. –a) दे$_{3}$ °मुक्ता, दे$_{5}$ °युक्ता, ते$_{1}$ °युक्तः (→°मुक्तं). –b) ब$_{1}$ दे$_{2.3.10}$ यांति (→याति). –c) ब$_{1}$ मरणा मां, न$_{1}$ वारणानां, ते$_{1}$ मरणान्ता (→मरणानां). –d) न$_{1}$ संगतिर्, ते$_{1}$ नागतिर्, ग्र$_{1}$ म$_{1}$ सा सिद्धिर्, ग्र$_{2}$ साक्षितिर् (→सा गतिर्); दे$_{6}$ °कांक्षिणीं, ग्र$_{2}$ °कारणां (→°कांक्षिणाम्). –e) द$_{1}$ ग्र$_{1.2}$ म$_{1}$ संप्राप्य (→यां प्राप्य); दे$_{5}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ कृतकृत्यास्युर् (→कृतकृत्यः स्यात्). –f) दे$_{10}$ मन्यंति पीडिताः, मुवें. मुए. मुब. मन्येत पण्डितः (→मन्यन्ति पंडिताः).

**४१.** ग्र$_{1.2}$ म$_{1}$.४१c-४२ f ⊙; द$_{1}$.४१c-४३ b ⊙. –b) का$_{1}$ यज्ञेनापि, दे$_{4}$ यज्ञैर्वाथ, द$_{1}$ ग्र$_{1}$ म$_{1}$ यज्ञैर्नाथ, ग्र$_{2}$ यज्ञो नापि (→यज्ञैर्नापि). –c) ब$_{1}$ गति * कृष्णा (→गतिरुत्कृष्टा).

**४२.** द$_{1}$ ग्र$_{1.2}$ म$_{1}$. ⊙ (द्र. ४१ पा. वि.). –a) ब$_{1.3}$ दे$_{5}$ नानावर्ण- (→नानावर्णा). –b) दे$_{2}$ जुगुप्सितः, दे$_{3.10}$ जुगुप्सिता (→जुगुप्सिताः). –c) दे$_{3.5.10}$ न$_{1}$ ते$_{1}$ मुवें मुए. कल्विषैः (→किल्विषैः); ब$_{2}$ दे$_{4}$ पूर्णदेहाश्च, दे$_{5}$ पूर्णदेहो ये, न$_{1}$ पूर्वदेहे ये (→पूर्ण देहा ये). –d) ब$_{2}$ विविधैः, दे$_{8-10}$ न$_{1}$ ते$_{1}$ मुवें. मुए. मुब. प्रकृष्टैस् (→विशिष्टैः); दे$_{4.8-10}$ मुवें. मुए. मुब. तापकैस्, दे$_{6}$ पापकैस् (→पातकैस्).

**४३.** द$_{1}$. ab ⊙ (द्र. ४? पा. वि.); म$_{1}$. ४३c-४४d ⊙. –a) दे$_{6}$ °मुक्त- (→°मुक्तं); दे$_{10}$ अयुक्तं परमं ज्ञानं. –c) ते$_{1}$ क्षेत्रं, ग्र$_{2}$ ज्ञानं (→तत्त्वं). –d) दे$_{5}$ शिवां, ग्र$_{2}$ पदं (→शिवम्).

३१.४५ कृत्वा वै नैष्ठिकीं दीक्षामविमुक्ते वसन्ति ये ।
तेषां तत्परमं ज्ञानं ददाम्यन्ते परं पदम् ।।४४
प्रयागं नैमिषं पुण्यं श्रीशैलोऽथ महालयः ।
केदारं भद्रकर्णं च गया पुष्करमेव च ।।४५
कुरुक्षेत्रं रुद्रकोटिर्नर्मदाम्रातकेश्वरम् ।
शालिग्रामं च कुब्जाम्रं कोकामुखमनुत्तमम् ।
प्रभासं विजयेशानं गोकर्णं भद्रकर्णकम् ।।४६
एतानि पुण्यस्थानानि त्रैलोक्ये विश्रुतानि ह ।
न यास्यन्ति परं मोक्षं वाराणस्यां यथा मृताः ।।४७
वाराणस्यां विशेषेण गङ्गा त्रिपथगामिनी ।
प्रविष्टा नाशयेत् पापं जन्मान्तरशतैः कृतम् ।।४८
अन्यत्र सुलभा गङ्गा श्राद्धं दानं तपो जपः ।
व्रतानि सर्वमेवैतद् वाराणस्यां सुदुर्लभम् ।।४९
यजेत जुहुयान्नित्यं ददात्यर्चयतेऽमरान् ।
वायुभक्षश्च सततं वाराणस्यां स्थितो नरः ।।५०
यदि पापो यदि शठो यदि वाऽधार्मिको नरः ।
वाराणसीं समासाद्य पुनाति सकलं नरः ।।५१
वाराणस्यां महादेवं येऽर्चयन्ति स्तुवन्ति वै ।

४४. म1. ⊙ (द्र. ४३ पा. वि.). –a) ग्र2 कृष्णा (→कृत्वा); दे8.9 वा, द1 ग्र1.2 तु (→वै). –b) दे5 अविमुक्तं, ग्र1 अविमुक्तो (→अविमुक्ते). –c) ग्र2 तु (→तत्). –d) दे5 ददाम्यति, ते1 ददात्यन्ते (→ददाम्यन्ते); ब2 शिवं परं, न1 परं शिवं (→परं पदम्).

४५. –a) द1 ग्र1 म1 प्रयागे, ग्र2 प्रयागो, (→प्रयागं); ग्र1 ते1 नैमिशं, म1 नैमिशः (→नैमिषं); म1 पुण्यः (→पुण्यं). –b) का1 श्रीशैलेपि, दे4 द1 ग्र1.2 म1 श्रीशैलादि, न1 श्रीशैलं तु (→श्रीशैलोथ); का1 ब1 दे2.5.8-10 मुवें. मुए. मुब. हिमालयः, न1 द1 ग्र1.2 म1 महालयाः (न1 °यं) (→महालयः). –c) का1 चैव गोकर्णं, दे5 ** कर्णं च, न1 भद्रकं चैव, ते1 भद्रकुण्डं च (→भद्रकर्णं च). –d) न1 युगा (→गया).

४६. –a) ते1 रुद्रकोपि, द1 ग्र1 म1 चन्द्रकोटिर्, ग्र2 चन्द्रकोटिं (→रुद्रकोटिर्). –b) ब1 दे3 प्रातकेश्वरं, ब3 दे4 द1 ग्र1 म1 मृतकेश्वरं, दे2.5 म्रा(दे5 श्रा)तकेश्वरः, दे8-10 न1 मुवें. मुए. मुब. हाटकेश्वरम्, ते1 पालिकेश्वरं, ग्र2 दातृकेश्वरं (→[म्रा]म्रातकेश्वरं). –c) का1 ब2.3 दे2.3.5.6 ते1 शाल°, दे4 श्याल°, द1 ग्र1.2 साल° (→शालि°); दे4 च कुब्जां नं, दे5 च कु **, दे8-10 न1 मुवें. मुए. च पुष्पाग्रं, ते1 सकुब्जाम्रं, द1 च कुब्जाभूः, ग्र1.2 म1 मुब. च कुब्जाभ्रं (म1 °ग्रं) (→च कुब्जाम्रं). –d) दे3 कोकी°, ग्र2 काको° (→कोका°), दे8-10 न1 मुवें. मुए. वंशं(दे10 °श) कोकामुखं तथा. –e) ब1.3 दे5 प्रभाषं(दे6 °श) (→प्रभासं); ग्र2 विजयेनाश (→विजयेशानं); दे4 प्रभासविषयेशानं. –f) ब2 दे8-10 न1 ते1 मुवें. मुए. मुब. शङ्कुकर्णकम्, दे3.6 चैव भद्रकं, दे4 चन्द्रकर्णकम्, द1 ग्र1 चन्द्रकर्णिकम्, ग्र2 * न्द्रकर्णिकम्, म1 चन्द्रकण्ठितं (→भद्रकर्णकम्).

४७. –a) द1 ग्र1.2 म1 °तीर्थानि (→°स्थानानि). –b) न1 त्रैलोक्यो (→त्रैलोक्ये); का1 हिं, ब1.2 दे8-10 न1 ते1 द1 ग्र1.2 म1 मुवें. मुए. मुब. च, ब3 दे3.4.6 तु, दे5 हा (→ह). –c) दे3.6 न यास्यंति परे, दे4 न यास्यन्ति परमं, दे8.9 मुवें. मुए. मुब. यास्यन्ति परमं, ग्र2 न यास्यन्ति पुरं (→न यास्यन्ति परं); का1 दे2.5 तत्वं (→मोक्षं). –d) दे4 तथा मृताः, दे6 यथावृताः (→यथा मृताः).

४८. –b) ब1 त्रिपथगा नदी (→त्रिपथगामिनी). –c) ब2.3 प्रवेशात्, दे3.6 ते1 म1 प्रविष्टात् (→प्रविष्टा).

४९. दे3. ४९b–५०d ⊙. –b) ते1 स्नानं (→श्राद्धं); दे4 जपं ततः, दे8-10 न1 ते1 मुवें. मुए. मुब. तथा जपः, द1 ग्र1.2 म1 जपस्ततः (→तपो जपः). –d) ब3 सुदुर्लभः (→सुदुर्लभं).

५०. दे3. ⊙ (द्र. ४९ पा. वि.). –a) का1 जपेत, ब1 जपेत्तु, ब2 याजयेत्, दे4 य यजेत्, दे5 जपेतत्, ते1 यजेच्च, मुवें. मुए. मुब. यजेत्तु (→यजेत). –b) ब3 दे5.9.10 मुवें मुए. मुब. [अ]परान्, दे8 [अ]मरान्, +[अ]परान् (→[अ]मरान्); दे4 ददात्पार्वयतेऽमरान्, ते1 तर्पयेच्च सुरान् पितृन्, द1 ग्र1 म1 तथाप्यर्च्चयतेम(ग्र1 °तोन)रान्, ग्र2 तथा चयति तेऽमरान्. –c) ब3 °भक्षस्य (→°भक्षश्च); दे10 सततां (→सततं). –d) ग्र1 जनाः (→नरः).

५१. द1. cd ⊙. –a) दे10 पापा (→पापो); ते1 शरो (→शठो). –b) दे3.8-10 मुवें. मुए. मुब. च (→वा); दे5 नराः (→नरः). –c) दे4.5 वाराणसी, ग्र1 वाराणस्यां (→वाराणसीं). –d) ते1 पुनात्या (→पुनाति); ब2.3 दे6 सकलं कुलं (दे6 °लः), दे4 सकलान्नरान्, दे5 स कुलं नरः, दे8-10 मुवें. मुए. मुब. स कुलत्रयम्, ते1 सप्तमं कुलं, ग्र1 म1 सकलान्नरः, ग्र2 स कुलन्तरः (→सकलं नरः).

५२. –b) ब2.3 दे3.4.6 द1 ग्र1.2 म1 च (→वै); दे8-10 मुवें. मुए. मुब. स्तुवन्त्यर्च्चयन्ति च, ते1 ध्यायन्ति

सर्वपापविनिर्मुक्तास्ते विज्ञेया गणेश्वराः ।।५२
अन्यत्र योगज्ञानाभ्यां संन्यासादथवाऽन्यतः ।
प्राप्यते तत् परं स्थानं सहस्रेणैव जन्मना ।।५३
ये भक्ता देवदेवेशे वाराणस्यां वसन्ति वै ।
ते विन्दन्ति परं मोक्षमेकेनैव तु जन्मना ।।५४
यत्र योगस्तथा ज्ञानं मुक्तिरेकेन जन्मना ।
अविमुक्तं समासाद्य नान्यद् गच्छेत् तपोवनम् ।।५५
यतो मया न मुक्तं तदविमुक्तं ततः स्मृतम् ।
तदेव गुह्यं गुह्यानामेतद् विज्ञाय मुच्यते ।।५६
ज्ञानाज्ञानाभिनिष्ठानां परमानन्दमिच्छताम् ।
या गतिर्विहिता सुभ्रु साविमुक्ते मृतस्य तु ।।५७
यानि चैवाविमुक्तस्य देहे तूक्तानि कृत्स्नशः ।
पुरी वाराणसी तेभ्यः स्थानेभ्यो ह्यधिका शुभा ।।५८
यत्र साक्षान्महादेवो देहान्ते स्वयमीश्वरः ।
व्याचष्टे तारकं ब्रह्म तत्रैव ह्यविमुक्तकम् ।।५९
यत् तत्परतरं तत्त्वमविमुक्तमिति श्रुतम् ।
एकेन जन्मना देवि वाराणस्यां तदाप्नुयात् ।।६० वें.१.३१.६२

---

स्तुवन्ति वै. –d) न$_1$ तेभिज्ञेया, ते$_1$ विज्ञेयास्ते (→ते विज्ञेया); ब$_2$ नरेश्वराः (→गणेश्वराः).

५३. –a) दे$_{8-10}$ योगज्ञानाद्वा, ते$_1$ योगाद्दानाद्वा, मुवें. मुए. मुब. योगाज् ज्ञानाद्वा (→योगज्ञानाभ्यां). –b) दे$_{3.5.9}$ द$_1$ ग्र$_{1.2}$ सन्यासात् (→संन्यासात्). –c) ब$_3$ ते$_1$ परमं, दे$_{10}$ मत्परं (→तत् परं); ग्र$_2$ म$_1$ ज्ञानं (→स्थानं). –d) दे$_6$ सहस्रेनैव (→सहस्रेणैव); ब$_1$ दे$_3$ ते$_1$ द$_1$ ग्र$_{1.2}$ म$_1$ जन्मनां, दे$_2$ जन्मनः (→जन्मना).

५४. का$_1$. ⊙. –a) ब$_3$ भक्त्या (→भक्ता); ब$_1$ दे$_{2.4.6.8-10}$ °देवेशं, दे$_3$ °देवेशि, दे$_5$ मुब. °देवेश, ते$_1$ °देवस्य (→°देवेशे). –b) दे$_4$ द$_1$ ग्र$_{1.2}$ म$_1$ ये (→वै). –d) ब$_2$ हि (→तु); दे$_8$ जन्मनां (→जन्मना).

५५. –a) का$_1$ दे$_{2.5}$ ते$_1$ ग्र$_2$ म$_1$ अत्र (→यत्र); ब$_1$ योगस्तदा, दे$_4$ द$_1$ ग्र$_2$ योगस्ततो, ते$_1$ यागस्तपो, ग्र$_1$ योगस्तितो (→योगस्तथा). –b) म$_1$ मुक्तिर्, + भक्तिर् (→मुक्तिर्); दे$_4$ जन्मनां (→जन्मना). –c) ब$_{1-3}$ दे$_{2.5.6}$ तदासाद्य (→समासाद्य); दे$_4$ द$_1$ ग्र$_{1.2}$ म$_1$ तदासाद्य नरो नान्यत्. –d) ब$_1$ नान्य गच्छेत्, न$_1$ नान्यं गच्छेत् (→नान्यद् गच्छेत्); दे$_4$ गच्छेद्वा तत्तपोवनम्, द$_1$ ग्र$_{1.2}$ म$_1$ गच्छेद्वाथ तपोवनम्.

५६. –a) दे$_4$ द$_1$ ग्र$_{1.2}$ यथा मया (ग्र$_1$ माया) (→यतो मया); का$_1$ दे$_5$ ग्र$_1$ विमुक्तं (→न मुक्तं). –b) ब$_{2.3}$ तु तत्, दे$_{8-10}$ न$_1$ ते$_1$ मुवें. मुए. मुब. इति (→ततः). –c) का$_1$ तदेष गुह्यं, ब$_3$ तदेव गुह्य, दे$_3$ तदेवं गुह्य, दे$_6$ गुह्यं तदेव (→तदेव गुह्यं). –d) का$_1$ ब$_{2.3}$ दे$_5$ द$_1$ ग्र$_{1.2}$ म$_1$ विज्ञान-मुच्यते (→विज्ञाय मुच्यते).

५७. –a) का$_1$ ज्ञानाज्ञानाभिदुष्टानां, ब$_1$ दे$_{8-10}$ ज्ञानाज्ञाननिविष्टानां, ब$_{2.3}$ न$_1$ ज्ञानध्यानाभिविष्टानां, दे$_3$ ज्ञानात् ज्ञानाभिनिष्ठानां, दे$_4$ ज्ञानाच्च ज्ञाननिष्ठानां, ते$_1$ ज्ञानात् ध्यानात् विशिष्टानां, द$_1$ ग्र$_2$ म$_1$ ज्ञानानि ज्ञाननिष्ठानां, ग्र$_1$ ज्ञानविज्ञान-निष्ठानां, मुवें. मुए. मुब. ज्ञानध्याननिविष्टानां. –c) दे$_5$ या गीत-, दे$_{8-10}$ योगांते, ते$_1$ सा गतिर् (→या गतिर्); दे$_{8-10}$ मुक्तिः, ते$_1$ सद्भिर्, द$_1$ ग्र$_{1.2}$ म$_1$ शुभ्रा (→सुभ्रु). –cd) दे$_3$ या गतिर्विहिता सा अविमुक्ते मृतस्य तु.

५८. –a) म$_1$ यानि, + या हि (→यानि); दे$_3$ यानि चैवाविप्रमुक्त, दे$_{8-10}$ यांति चैवापि (दे$_{10}$ वि) मुक्तेन, मुवें. मुए. मुब. यानि कान्यविमुक्तानि. –b) ब$_{1.3}$ न$_1$ द$_1$ देहे भक्तानि कृत्स्नशः, ब$_2$ मम स्थानानि नित्यशः, दे$_{2.3}$ देहे रुक्तानि (?) कृत्स्नशः, दे$_5$ देहे तत्कानि कृत्स्नशा, दे$_{8.9}$ देहे बुद्बुदसंनिभे, दे$_{10}$ देहेषु त्वुधसंन्निभे, ते$_1$ देहे व्यक्तानि यस्य सः, ग्र$_1$ वेदे कृत्तानि कृत्स्नशः, ग्र$_2$ वेदान्तानां निकृत्स्नशः, म$_1$ पुरी वाराणसीति च, मुवें. मुए. मुब. देवैरुक्तानि नित्यशः. –c) दे$_{4.8.9}$ पुरीं (→पुरी); दे$_{8-10}$ वाराणसीम् (→वाराणसी); दे$_{8-10}$ एत्य (→तेभ्यः). –d) दे$_{8-10}$ स्थानान्यभ्यधिकाः शुभाः, न$_1$ द$_1$ मुवें. मुए. मुब. स्थानेभ्योऽप्य (द$_1$ °भ्यश्चा) धिका शुभा, ते$_1$ स्थानेभेस्त्वधिका स्मृता.

५९. –b) दे$_4$ ह्रयमीश्वरः, दे$_{8-10}$ मुवें. मुए. [अ]क्षय्यमीश्वरः, न$_1$ ते$_1$ स्वयमीश्वर (→स्वयमीश्वरः); म$_1$ सार्वकालं व्यवस्थितः. –c) ब$_1$ व्याचष्टं (→व्याचष्टे); दे$_4$ ब्रह्मा (→ब्रह्म). –d) दे$_{8-10}$ मुवें. मुए. मुब. तथैव (→तत्रैव); ब$_1$ °मुक्तके (→°मुक्तकम्); दे$_4$ तदैवमविमुक्तकम्, द$_1$ ग्र$_{1.2}$ म$_1$ तथैवेदं विमुक्तिदं.

६०. –a) दे$_4$ यत्रात् (→यत्तत्); दे$_4$ परवरं, ग्र$_1$ परपदं (→परतरं); ब$_3$ ब्रह्मं (→तत्त्वं). –b) दे$_{2.8-10}$ ते$_1$ मुवें. मुए. मुब. इति स्मृतम्, दे$_4$ विनिश्चितं, म$_1$ इति स्मृतम्, + इति श्रुतम् (→इति श्रुतम्). –c) दे$_5$ जन्मनो (→जन्मना); दे$_{10}$ देवी, ग्र$_2$ देही (→देवि). –d) ब$_1$ तथाप्नुयात्, दे$_5$ ****, दे$_{8-10}$ मुवें. मुए. मुब. तदाप्यते (→तदाप्नुयात्).

३१.६२ भ्रूमध्ये नाभिमध्ये च हृदये चैव मूर्द्धनि ।
यथाऽविमुक्तमादित्ये वाराणस्यां व्यवस्थितम् ।।६१
वरणायास्तथा चास्या मध्ये वाराणसी पुरी ।
तत्रैव संस्थितं तत्त्वं नित्यमेवाविमुक्तकम् ।।६२
वाराणस्याः परं स्थानं न भूतं न भविष्यति ।
यत्र नारायणो देवो महादेवो दिवेश्वरः ।।६३
तत्र देवाः सगन्धर्वाः सयक्षोरगराक्षसाः ।
उपासते मां सततं देवदेवं पितामहम् ।।६४
महापातकिनो ये च ये तेभ्यः पापकृत्तमाः ।
वाराणसीं समासाद्य ते यान्ति परमां गतिम् ।।६५
तस्मान्मुमुक्षुर्नियतो वसेद् वै मरणान्तिकम् ।
वाराणस्यां महादेवाज्ज्ञानं लब्ध्वा विमुच्यते ।।६६
किन्तु विघ्ना भविष्यन्ति पापोपहतचेतसः ।
ततो नैव चरेत् पापं कायेन मनसा गिरा ।।६७
एतद् रहस्यं वेदानां पुराणानां च सुव्रताः ।
अविमुक्ताश्रयं ज्ञानं न कश्चिद् वेत्ति तत्त्वतः ।।६८
देवतानामृषीणां च शृण्वतां परमेष्ठिनाम् ।
देव्यै देवेन कथितं सर्वपापविनाशनम् ।।६९

---

**६१.** दे5. ६१a-६३b. ⊙. –a) न1 नाभिपद्मे (→नाभिमध्ये); ग्र2 वा (→च). –b) ब1 दे3.6.8-10 हृदयेन च, ब2 मुवें. मुए. मुब. हृदयेऽपि च, ब3 हृदये चापि, न1 हृदये नैव (→हृदये चैव). –c) दे10 यदा (→यथा); ते1 आदित्यं (→आदित्ये); दे4 नाभावनुक्तमादिश्य, द1 ग्र1 म1 नाभावमुक्तमाविश्य, ग्र2 न चाविमुक्तमाविश्य. –d) दे4 द1 ग्र1.2 म1 यथा स्थितं (दे4 °ते) (→व्यवस्थितम्).

**६२.** दे5.⊙ (द्र. ६१ पा. वि.). –a) का1 दे10 वरुणायास्, दे8.9 मरणाय, द1 वारणस्योस्, ग्र1 वारणायास्, ग्र2 वाराणस्यां, म1 वाराणायास् (→वरणायास्); दे4 द1 ग्र1 म1 तथैवास्या, दे8-10 मुवें. मुए. तथा ह्यस्या, ग्र2 तथा नस्यां (→तथा चास्या). –b) ब1-3 दे3 मध्यं (→मध्ये). –c) ते1 तत्रैतत् (→तत्रैव); ग्र1 तत्रैव संस्थितं तत्त्वं, + न तथा वर्त्तते तत्त्वं. –d) ब1-3 दे2.3 ते1 मुब. नित्यमेवाविमुक्तकम्, दे6.8-10 नित्यमेव विमुक्त(दे8-10°क्ति)कं, ग्र1 नित्यमेव विमुक्तदम्, ग्र2 म1 नित्यमेवाविमुक्तिदं.

**६३.** दे5.ab ⊙. –a) दे4 वाराणस्यात्, दे8.9 वाराणस्या, न1 ग्र1.2 म1 वाराणस्यां (→वाराणस्याः). –b) द1 भूतो (→भूतं). –c) ब1-3 दे3.6.8-10 म1 मुवें. मुए. मुब. यथा (→यत्र); ब1-3 दे3.6 न1 नारायणाद् (→नारायणो). –d) ब1-3 दे3.5.6.8.9 द1 मुवें. मुए. मुब. महादेवात्, ग्र2 **** (→महादेवो); ब1-3 दे5.6 इवेश्वरः, दे3.8.9 मुवें. मुए. मुब. इवेश्वरात्, दे4 ते1 गिरीश्वरः, द1 इतीश्वरः, ग्र1 दितीश्वरः, ग्र2 तदीश्वरः (→दिवेश्वरः); दे10 महादेवादि चेश्वरात्, म1 महादेवोहमीश्वरः.

**६४.** –c) ग्र2 उपास्यते *** तं. –d) का1 दे8-10 ते1 द1 ग्र1.2 म1 मुवें. मुए. मुब. देवदेवः, ब1.2 दे2.4 देवदेव, दे5 देवि देवा (→देवदेवं); का ब1.2 दे2.4.5.8-10 न1 ते1 द1 ग्र1.2 म1 मुवें. मुए. मुब. पितामहः (→पितामहं).

**६५.** –a) का1 दे2.5 देवि (→ये च). –b) का1 चेभ्यः, दे5 तेभ्यं (→तेभ्यः). –c) ग्र2 वाराणस्यां (→वाराणसीं).

**६६.** –a) दे10 निर्याता (→नियतो). –b) का1 वसेद्वै मरणेन्तिकं, दे4 ते1 द1 ग्र1.2 म1 वसेदामरणान्तिकं, दे8-10 न1 मुवें. मुए. मुब. वसेच्चामरणान्तिकम्. –c) दे3.6 महादेवान्, दे8.9 ते1 मुवें. मुए. मुब. महादेवि (→महादेवाज्).

**६७.** दे3.6. ६७a 'भविष्यंति' इत्यारभ्य ६९c 'देवेन' यावत् ⊙. –a) दे3 विघ्नान्, दे6 विघ्नं (→विघ्ना); ग्र2 भवन्तीह (→भविष्यन्ति). –b) का1 दे5.8-10 मुवें. मुए. मुब. °चेतसाम् (→°चेतसः). –c) ब2 अतो, दे5 गतो (→ततो); का1 ब1.2 दे5 न1 ते1 ग्र1.2 म1 नैवाचरेत्, ब3 नैवारयेत् (→नैव चरेत्); द1 तत्तन्नैवाचरेत् पापं.

**६८.** दे3.6. ⊙ (द्र. ६७ पा. वि.). –a) ते1 द1 ग्र2 देवानां (→वेदानां). –b) ब3 पुरुषाणां (→पुराणानां); दे8-10 ते1 मुवें. मुए. मुब. द्विजोत्तमाः, न1 च सुव्रत (→च सुव्रताः); दे5 पुराणं वर सुव्रताः. –c) का1 दे2.5 अविमुक्ताश्रमं स्थानं, दे10 अविमुक्ता श्रियं ज्ञानं. –d) दे4 न कश्चिद्वेत्ति तत्परः, दे8-10 न किंचिद्वेद्मि तत्वतः, द1 ग्र1 म1 न कश्चिद्वेत्य तत्परः, ग्र2 वेद्यते विद्य तत् पराः, मुवें. मुए. मुब. न किंचिद्वेद्मि तत्परम्.

**६९.** दे3.6. abc 'देवेन' यावत् ⊙. –a) दे6 देवता मानुषाणां च. –b) दे4.10 शृणुतां (→शृण्वतां); न1 द1 ग्र1.2 म1 °मेष्ठिना, ते1 °मेष्ठिनः (→°मेष्ठिनाम्). –c) दे8-10 देव- (→देव्यै); दे3.6 **** विमथितं. –d) ब2.3 °प्रणाशनम्, दे3 °प्रनाशनम् (→°विनाशनम्).

यथा नारायणः श्रेष्ठो देवानां पुरुषोत्तमः ।
यथेश्वराणां गिरिशः स्थानानां चैतदुत्तमम् ॥७०
यैः समाराधितो रुद्रः पूर्वस्मिन्नेव जन्मनि ।
ते विन्दन्ति परं क्षेत्रमविमुक्तं शिवालयम् ॥७१
कलिकल्मषसंभूता येषामुपहता मतिः ।
न तेषां वेदितुं शक्यं स्थानं तत् परमेष्ठिनः ॥७२
ये स्मरन्ति सदा कालं विन्दन्ति च पुरीमिमाम् ।
तेषां विनश्यति क्षिप्रमिहामुत्र च पातकम् ॥७३
यानि चेह प्रकुर्वन्ति पातकानि कृतालयाः ।
नाशयेत् तानि सर्वाणि देवः कालतनुः शिवः ॥७४
आगच्छतामिदं स्थानं सेवितुं मोक्षकाङ्क्षिणाम् ।
मृतानां च पुनर्जन्म न भूयो भवसागरे ॥७५
तस्मात् सर्वप्रयत्नेन वाराणस्यां वसेन्नरः ।
योगी वाप्यथवाऽयोगी पापी वा पुण्यकृत्तमः ॥७६
न वेदवचनात् पित्रोर्न चैव गुरुवादतः ।
मतिरुत्क्रमणीया स्यादविमुक्तगतिं प्रति ॥७७

सूत उवाच ।❀

इत्येवमुक्त्वा भगवान् व्यासो वेदविदां वरः ।
सहैव शिष्यप्रवरैर्वाराणस्यां चचार ह ॥७८ वें १.३१.८०

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायां पूर्वविभागे एकोनत्रिंशोऽध्यायः ॥२९॥

---

**७०.** द1 ग्र1.2 म1. ७०c-७२d ⊙. –a) दे9 ग्र2 म1 नारायण- (→नारायणः). –b) न1 पुरुषोत्तम (→पुरुषोत्तमः). –c) दे4 न1 गिरिश, दे5 गिरिशा, ते1 च शिवः (→गिरिशः). –d) का1 दे2.5 वै° (→चै°).

**७१.** द1 ग्र1.2 म1. ⊙ (द्र. ७० पा. वि.). –a) ब3 यः (→यैः); ते1 समाराध्यते (→समाराधितो). –c) दे4 न1 मुवें. मुए. मुब. तं (→ते); दे4 ते1 विदंति (→विन्दन्ति); दे3.6 मोक्षं, न1 चैनं (→क्षेत्रम्). –d) दे5 शिवालयां (→शिवालयम्).

**७२.** द1 ग्र1.2 म1. ⊙ (द्र. ७० पा. वि.). –a) ते1 °संगत्या (→°सम्भूता). –b) दे5 उपहतो मतिः, दे8-10 उपहतानि वै (→उपहता मतिः). –c) दे8-10 न1 ते1 मुवें. मुए. मुब. वीक्षितुं (→वेदितुं); दे8 शंकां, दे10 वाक्यं (→शक्यं).

**७३.** –a) ते1 महाकालं (→सदा कालं). –b) का1 ब1-3 दे3.5.6 न1 ते1 ग्र1 वदन्ति च, ग्र2 विवदन्त (→विन्दन्ति च). –c) ग्र2 तेषां वैकृतिनः क्षिप्रं. –d) दे10 इहामुत्रं च, ग्र1 इह मुत्र च, ग्र2 म1 इह चामुत्र (→इहामुत्र च); दे4 पालकम् (→पातकम्).

**७४.** –a) दे4 याति (→यानि); ब2 ये च (→चेह). –b) का1 कृ* लयाः, ब1 दे10 कृतालया, द1 ग्र1.2 म1 कृतानि वा (→कृतालयाः). –c) का1 दे5.6.10 नाशयेतानि (→नाशयेत्तानि); ते1 देवेशः (→सर्वाणि). –d) ब1 दे4.8-10 मुवें. मुए. तेन, दे5 देवं (→देवः); दे4 कालतरः (→कालतनुः); ते1 कालकण्ठःसदा शिवः.

**७५.** –a) का1 आगच्छ*दिदं, ब2 आगत्य*मिदं, दे2 आगच्छतादिदं, दे3.6 आगच्छध्वमिदं, दे5 आगच्छतदिदं (→आगच्छतामिदं). –b) का1 ब1-3 दे2.3.5.6 द1 ग्र1.2 म1 सेवितं (→सेवितुं); का1 दे2.5 °कांक्षिभिः, दे3 °कांक्षणां, दे6.8 °कांक्षिणां, न1 °कारणं (→°कांक्षिणाम्). –c) ब2 वृतानां (→मृतानां); का1 दे8-10 न1 ते1 मुवें. मुए. मुब. वै (→च).

**७६.** –b) दे5 वाराणस्यो (→वाराणस्यां); दे10 सवेन्नरः (→वसेन्नरः). –c) न1 योगी वाप्यथ भोगी वा. –d) ग्र1 पापि (→पापी).

**७७.** –a) ब2 लोकवचनात्, + वेदवचनात्, दे3 देयधवनात्, दे6 देववचनात्, दे8-10 न1 ते1 मुवें. मुए. मुब. लोकवचनात् (→वेदवचनात्); दे10 पुत्रो, ते1 भीतो (→पित्रोर्). –b) न1 °शिक्षया (→°वादतः); द1 ग्र1.2 म1 न चैतद्गुरुशासनात्. –c) का1 मतिसत्क्रमणीया, दे3 मतिरुक्तमणीया, दे4 गतिरुत्क्रमणीया, दे5 मतिरुत्क्रमाणा या, दे10 मितिरुत् क्रमणीया, ते1 वातिरुत्क्रमणीया (→मतिरुत्क्रमणीया). –d) दे4 न1 मुवें. मुए. मुब. अविमुक्तागतिं, दे8-10 अविमुक्ताद्गतिं, द1 अविमुक्तकृतं (→अविमुक्तगतिं); म1 अविमुक्तगतं प्रभुं.

❀ द1 ग्र1.2 म1. ⊙; दे8.9 सूत उ.; न1 ते1 सूतः.

**७८.** –a) दे8-10 न1 मुवें. मुए. मुब. एवमुक्त्वाथ, ते1 इत्येवमुक्त्वा, + इत्येवमुक्तो (→इत्येवमुक्त्वा). –b) ब2 देव° (→वेद°). –c) ब1 हे हैव, दे3 स चैव (→सहैव); म1 शिष्यैः (→शिष्य-). –d) ब1 दे3.6 चकार ह, दे5 चचार हा (→चचार ह).

पुष्पिका—

**पुराणनाम**—का1 दे2 इत्यादिमहापुराणे कौर्मे, ब1 इति कौर्मे, ब2.3 दे3.6 इति कूर्मपुराणे, दे4.8-10 द1 ग्र1.2 म1 मुवें. मुए. इति श्रीकूर्मपुराणे, दे5 इत्यादिमहापुराणे, न1 इति

# ३०

सूत उवाच ।❀

वें. १.३२.१ स शिष्यैः संवृतो धीमान् गुरुर्द्वैपायनो मुनिः ।
जगाम विपुलं लिङ्गमोंकारं मुक्तिदायकम् ॥१
तत्राभ्यर्च्य महादेवं शिष्यैः सह महामुनिः ।
प्रोवाच तस्य माहात्म्यं मुनीनां भावितात्मनाम् ॥२
इदं तद् विमलं लिङ्गमोंकारं नाम शोभनम् ।
अस्य स्मरणमात्रेण मुच्यते सर्वपातकैः ॥३
एतत् परतरं ज्ञानं पञ्चायतनमुत्तमम् ।
सेवितं सूरिभिर्नित्यं वाराणस्यां विमोक्षदम् ॥४
अत्र साक्षान्महादेवः पञ्चायतनविग्रहः ।
रमते भगवान् रुद्रो जन्तूनामपवर्गदः ॥५
यत् तत् पाशुपतं ज्ञानं पञ्चार्थमिति शब्दयते ।
तदेतद् विमलं लिङ्गमोङ्कारे समवस्थितम् ॥६
शान्त्यतीता तथा शान्तिर्विद्या चैव परा कला ।
प्रतिष्ठा च निवृत्तिश्च पञ्चार्थं लिङ्गमैश्वरम् ॥७
पञ्चानामपि देवानां ब्रह्मादीनां सदाश्रयम् ।

---

श्रीकौर्मे, ते$_1$ इति श्रीमहापुराणे श्रीकौर्मे, मुब. इति श्रीकौर्मे महापुराणे पूर्वभागे. **अध्यायनाम**—ब$_1$ दे$_4$ न$_1$ ते$_1$ म$_1$. ⊙; का$_1$ ब$_{2.3}$ दे$_{2.3.5.6.8.9}$ द$_1$ ग्र$_{1.2}$ मु . मुब. वाराणसीमाहात्म्ये, दे$_{10}$ काशीमाहात्म्ये, मुवें. वाराणसीमाहात्म्यं नाम. **अध्यायसंख्या**—दे$_6$. ⊙; का$_1$ ब$_{1.3}$ दे$_{3.5}$ न$_1$ द$_1$ ग्र$_1$ अष्टाविंशोऽध्यायः, ब$_2$ ॥२८॥, दे$_2$ अष्टविंशोऽध्यायः, दे$_4$ अष्टाविंशोध्यायः ॥२८॥, दे$_{8.9}$ मुए. एकत्रिंशोऽध्यायः, दे$_{10}$ एकत्रिंशोऽध्यायः ॥ श्रीरामार्पणमस्तु ॥, ते$_1$ एकोनत्रिंशोध्यायः, ग्र$_2$ म$_1$ मुब. त्रिंशोऽध्यायः, मुवें. एकत्रिंशोऽध्यायः ॥३१॥.

## ३०

[अयमध्यायः दे$_1$ पुस्तके नास्ति]

❀ दे$_9$ ग्र$_1$. ⊙; दे$_8$ सूत उ.; न$_1$ ग्र$_2$ म$_1$ सूतः; ते$_1$ श्रीशिवः; द$_1$ श्रीसूतः.

१. ते$_1$ द$_1$. १d –३a ⊙ (द. सं). –a) दे$_3$ सम्भृतो (→संवृतो). –b) दे$_4$ ते$_1$ द$_1$ ग्र$_{1\ 2}$ म$_1$ कृष्णद्वैपा° (→गुरुर्द्वैपा°). –c) का$_1$ ब$_3$ दे$_{2-6}$ न$_1$ ते$_1$ ग्र$_{1.2}$ म$_1$ विमलं (→विपुलं).

२. ते$_1$ द$_1$. ⊙ (द्र. १ पा. वि.). –a) दे$_{10}$ °भ्यर्च्चं (→°भ्यर्च्यं). –b) दे$_5$ शिष्यौ (?) (→शिष्यैः). –d) दे$_5$ मुनीनामाविलात्मनि.

३. ते$_1$ द$_1$. a ⊙ (द्र. १ पा. वि.). –d) ग्र$_2$ म$_1$ °किल्बिषैः (→°पातकैः).

४. –a) ब$_{1.3}$ दे$_{3.6}$ न$_1$ मुब. एतत् तत्परमं, ब$_2$ दे$_{8-10}$ मुवें. मुए. अत्र तत्परमं, दे$_4$ ग्र$_{1.2}$ म$_1$ यदेतत् परमं, ते$_1$ एतस्य परमं, द$_1$ तदेतत् परमं (→एतत् परतरं). –b) दे$_5$ उत्तमां (→उत्तमं); ते$_1$ पंचायनमनुत्तमम्. –c) ब$_2$ दे$_{8-10}$ मुवें. मुए. मुब. अर्च्चितं, ग्र$_2$ सेविभिस् (?) (→सेवितं); ब$_{1-3}$ दे$_{3.6.8-10}$ ते$_1$ मुवें. मुए. मुब. मुनिभिर् (→सूरिभिर्). –d) का$_1$ दे$_{2.5}$ विमोक्षणम् (→विमोक्षदम्); ते$_1$ वाराणस्यापि मोक्षदम्.

५. द$_1$. ab ⊙. –a) ब$_3$ ते$_1$ म$_1$ तत्र, न$_1$ अस्य (→अत्र). –b) ते$_1$ पंचावरणसंयुक्तः. –d) ते$_1$ जनानां (→जन्तूनां); ब$_1$ °परमङ्गदः, ब$_3$ °मपि वर्गदः (→°मपवर्गदः).

६. ब$_1$. cd ⊙. –a) का$_1$ एतत्, ग्र$_2$ तत्तत् (→यत्तत्); दे$_4$ पतत्यागमनं ज्ञानं. –b) ब$_1$ पंचान्न°, दे$_{3.6}$ पंचानु°, ते$_1$ पंचाङ्ग° (→पंचार्थ°); का$_1$ प्रोच्यते, ब$_{1.3}$ शक्यते, ब$_2$ दे$_{8-10}$ मुवें. मुए. मुब. कथ्यते, ते$_1$ शस्यते, (→शब्दयते). –c) ब$_2$ दे$_{6.8-10}$ न$_1$ ते$_1$ मुवें. मुए. तदेव (→तदेतद्). –d) ब$_2$ दे$_{5.8-10}$ मुवें. मुए. ओंकारं (→ओंकारे); द$_1$ ग्र$_2$ समुपस्थितम् (→समवस्थितम्).

७. –a) दे$_4$ शांत्यतीतां, दे$_5$ शांत्यतो ता, दे$_{8.9}$ शांत (दे$_9$ °ता) ता च, दे$_{10}$ शांत्यवीताः, ते$_1$ सत्या नित्या (→शान्त्यतीता); ब$_1$ यथा, ब$_2$ दे$_{8-10}$ ग्र$_2$ म$_1$ मुवें. मुए. मुब. परा (दे$_{10}$ °राः) (→तथा); ब$_{1.3}$ ग्र$_2$ शक्तिर् (→शान्तिर्). –b) ब$_{1.3}$ चैवा (→चैव); ब$_2$ दे$_{8.9}$ मुवें. मुए. मुब. यथाक्रमम्, ब$_3$ तथा कला, दे$_{10}$ पराक्रमं, ग्र$_2$ तथाकरौ (→परा कला). –c) ते$_1$ तु, द$_1$ वा (→च); ग्र$_2$ निवृत्ता च (→निवृत्तिश्च). –d) दे$_3$ पंचात्मं, दे$_6$ पंचापं, ते$_1$ षडङ्गं, म$_1$ पंचार्थी (→पंचार्थं); दे$_{10}$ °मीश्वरं, ग्र$_2$ °केश्वरं (→°मैश्वरं).

८. –a) दे$_2$ लिङ्गानां, + देवानां (→देवानां). –b) ब$_2$ दे$_{8-10}$ मुवें. मुए. मुब. यदाश्रयं, दे$_6$ मदाश्रयं, न$_1$ ते$_1$ समाश्रयं

इत्येते देवगन्धर्वसिद्धसङ्घनिषेविताः ।
सरसो मानसस्येह उत्तरे केसराचलाः ॥३७
एतेषां शैलमुख्यानामन्तरेषु यथाक्रमम् ।
सन्ति चैवान्तरद्रोण्यः सरांसि च वनानि च ॥३८
वसन्ति तत्र मुनयः सिद्धाश्च ब्रह्मभाविताः ।
प्रसन्नाः शान्तरजसः सर्वदुःखविवर्जिताः ॥३९

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायां पूर्वविभागे त्रिचत्वारिंशोऽध्यायः ॥४३॥

# ४४

सूत उवाच ।❀
चतुर्दशसहस्राणि योजनानां महापुरी ।
मेरोरुपरि विख्याता देवदेवस्य वेधसः ॥१
तत्रास्ते भगवान् ब्रह्मा विश्वात्मा विश्वभावनः ।
उपास्यमानो योगीन्द्रैर्मुनीन्द्रोपेन्द्रशंकरैः ॥२
तत्र देवेश्वरेशानं विश्वात्मानं प्रजापतिम् ।
सनत्कुमारो भगवानुपास्ते नित्यमेव हि ॥३
स सिद्धैर्ऋषिगन्धर्वैः पूज्यमानः सुरैरपि ।

वें.१.४६.४

३६ श्लोकस्य b चरणानन्तरं दे9.10 मुवें. मुए. मुब. अधिकम्—

* पारिजातो महाशैलः शैलः कनक एव च. (= ३३cd)

**३७.** ते1. ⊙. –a) दे6 °गन्धर्वा° (→°गन्धर्व°). –b) ग्र2 [ग्र] प्सर- (→-सिद्ध-); म1 -संघैः (→-संघ-); दे7-10 मुवें. मुए. मुब. सिद्धयक्षैश्च सेविताः, न1 सिद्धचारण-सेविताः. –c) ग्र2 सुरसो (→सरसो). –d) न1 चोत्तरे (→उत्तरे); दे6.7.10 द1 ग्र2 मुवें. मुए. केसराचलः (→केसराचलाः).

**३८.** –a) दे1 इत्येषां, दे4 उत्तरे, ते1 * * * (→एतेषां); ते1 * * (→शैल-). –b) ते1 द1 ग्र1.2 म1 उत्तरेषु (→ग्रन्तरेषु); दे10 न1 यथाक्रमः (→यथाक्रमं). –c) दे1 [ग्र]न्तरा, दे3.7.10 ते1 ग्र2 [ग्र]न्तरे (→[ग्र]न्तर-); ते1 पुण्य- (→-द्रोण्यः). –d) ते1 सरांसि भुवनानि च.

**३९.** –a) ते1 वसन्ते (→वसन्ति). –b) दे7-9 न1 मुवें. मुए. मुब. सिद्धा वै (→सिद्धाश्च); ते1 स (→च); ब2 °भासिताः, ते1 °वादिनः (→°भाविताः).

**पुष्पिका**—[द1 पुस्तके ग्रध्यायसमाप्तिर्नास्ति].

**पुराणनाम**—का1 दे2.5 इत्यादिमहापुराणे कौर्मे, ब1 इति कौर्मे, ब2.3 दे3.7 इति कू(ब3 कौ)र्मपुराणे, दे1.4.6.8-10 न1 ग्र1.2 म1 मुवें. मुए. इति श्रीकूर्मपुराणे, ते1 इत्यादिमहा-पुराणे श्रीकौर्मे, मुब. इति श्रीकौर्मे महापुराणे पूर्वभागे.

**अध्यायनाम**—दे4 न1 ग्र1.2 म1. ⊙; का1 ब1-3 दे2.5 भुवनविन्यासे, दे1.10 भुवनकोशे, दे3.6.7 भुवनकोष (दे6 °से) विन्यासे, दे8.9 ते1 मुवें. मुए. भुवनकोशे पर्वतसंख्याने, मुब. भुवनकोषविन्यासे पर्वतसंख्याने. **अध्यायसंख्या**—ब1 दे6. ⊙; का1 ब3 दे2.3.5 न1 ग्र1 द्विचत्वारिंशोऽध्यायः, ब2 ॥४२॥, दे1.10 मुवें. पंचचत्वारिंशोऽध्यायः ॥४५॥, दे4 द्विचत्वारिंशोऽध्यायः ॥४२॥, दे8.9 मुए. पंचचत्वारिंशोऽध्यायः, ते1 षट्, + त्रिचत्वारिंशोऽध्याय, ग्र2 म1 मुब. चतुश्चत्वारिंशोऽध्यायः.

**४५**

[दे4 पुस्तके ग्रयमध्यायो नास्ति]

❀ द1. ⊙; दे8.9 सूत उ.; न1 ग्र1.2 सूतः ; ते1 म1 श्रीसूतः.

**१.** –a) ब2.3 °सहस्राणां (→°सहस्राणि). –d) ग्र2 वेदवेदस्य (→देवदेवस्य); ब1 मेधसः (→वेधसः).

**२.** –a) ते1 ग्रत्रास्ते (→तत्रास्ते); –d) ते1 °संवृतः (→°शंकरैः) न1 मुनीन्द्रैरिन्द्रशंकरैः; म1 इन्द्रोपेन्द्रैस्सशंकरैः.

**३.** म1. ab ⊙. –a) ते1 तथा (→तत्र), न1 तत्र देवेश्वराधीशं. –b) ते1 विश्वात्मा स (→विश्वात्मानं); ब2 ते1 ग्र2 प्रजापतिः (→प्रजापतिं). –d) ग्र2 ग्राशास्ते, म1 ग्रत्रास्ते (→उपास्ते).

**४.** म1. ⊙. –a) दे6 संसिद्धैर् (→स सिद्धैर्); दे1.8-10 ते1 ग्र1 मुवें. मुए. मुब. स सिद्धर्षिगन्धर्वैर्, न1 द1

वें.१.४६.४ समास्ते योगयुक्तात्मा पीत्वा तत्परमामृतम् ॥४
तत्र देवादिदेवस्य शंभोरमिततेजसः ।
दीप्तमायतनं शुभ्रं पुरस्ताद् ब्रह्मणः स्थितम् ॥५
दिव्यकान्तिसमायुक्तं चतुर्द्वारं सुशोभनम् ।
महर्षिगणसंकीर्णं ब्रह्मविद्भिर्निषेवितम् ॥६
देव्या सह महादेवः शशाङ्कार्काग्निलोचनः ।
रमते तत्र विश्वेशः प्रमथैः प्रमथेश्वरः ॥७
तत्र वेदविदः शान्ता मुनयो ब्रह्मचारिणः ।
पूजयन्ति महादेवं तापसाः सत्यवादिनः ॥८
तेषां साक्षान्महादेवो मुनीनां ब्रह्मवादिनाम् ।
गृह्णाति पूजां शिरसा पार्वत्या परमेश्वरः ॥९
तत्रैव पर्वतवरे शक्रस्य परमा पुरी ।
नाम्नाऽमरावती पूर्वे सर्वशोभासमन्विता ॥१०
तमिन्द्रमप्सरःसङ्घा गन्धर्वा गीततत्पराः ।
उपासते सहस्राक्षं देवास्तत्र सहस्रशः ॥११
ये धार्मिका वेदविदो यागहोमपरायणाः ।
तेषां तत् परमं स्थानं देवानामपि दुर्लभम् ॥१२
तस्य दक्षिणदिग्भागे वह्नेरमिततेजसः ।
तेजोवती नाम पुरी दिव्याश्चर्यसमन्विता ॥१३
तत्रास्ते भगवान् वह्निर्भ्राजमानः स्वतेजसा ।
जपिनां होमिनां स्थानं दानवानां दुरासदम् ॥१४
दक्षिणे पर्वतवरे यमस्यापि महापुरी ।
नाम्ना संयमनी दिव्या सिद्धगन्धर्वसेविता ॥१५
तत्र वैवस्वतं देवं देवाद्याः पर्युपासते ।
स्थानं तत् सत्यसंधानां लोके पुण्यकृतां नृणाम् ॥१६

---

सह (द1 हि) सिद्धर्षिगन्धर्वैर्. -b) द1 ग्र1.2 [अ]मरैर् (→सुरैर्). -c) दे6.7 समस्ते, ते1 समास- (→समास्ते); ब1 °विश्वात्मा (→°युक्तात्मा).

५. -a) का1 दे2.5 देवाति°, दे8-10 ते1 मुवें. मुए. मुब. देवाधि° (→देवादि°). -b) न1 शंकरस्यामितौजसः. -c) ते1 दीप्रमा° (→दीप्तमा°); म1 आवसतं (थं?) (→आयतनं). -d) ते1 परस्ताद् (→पुरस्ताद्); दे5 ब्रह्मणा, ग्र1 ब्रह्मणि (→ब्रह्मणः); ब2 ततः, दे1 स्थितः, दे10 सुतं (→स्थितं).

६. -a) म1 °यान° (→°कान्ति°). -b) ग्र2 म1 चतुर्द्वार- (→चतुर्द्वारं); म1 सुशोभितं, + सुशोभनं (→सुशोभनं). -c) द1 °जन° (→°गण°); न1 संकीर्णं सर्वतः शुभ्रं.

७. -b) दे1 शशाङ्काङ्कस्त्रिलोचनः; ते1 सोमसूर्याग्निलोचनः, ग्र2 शशांकार्कविलोचनः.

८. -a) दे10 देव° (→वेद°); का1 °विदं (→°विदः). -b) दे3.6 °चारिणा, म1 °वादिनः (→°चारिणः). -d) का1 दे5.8.9 ते1 ग्र2 मुवें. मुए. मुब. तपसा (→तापसाः).

९. -a) ग्र2 साक्षी (→साक्षात्). -b) दे1.8-10 न1 ते1 मुवें. मुए. मुब. भावितात्मनां (→ब्रह्मवादिनां) -c) न1 गिरिशः (→शिरसा). -d) दे3 परमेश्वरं (→परमेश्वरः).

१०. -b) ते1 तत्रैव पूर्वतः परि-. -b) दे5 पुरं (→पुरी). -c) दे1 पूर्वा, दे7 द1 ग्र2 पूर्वं (→पूर्वे); ते1 नाम्नाऽमरावतिपुरी.

११. -a) दे7 तत्रेन्द्रं (→तमिन्द्रं); दे1.5 अप्सरा-, दे3 अप्सरसः (→अप्सरः); दे8-10 मुवें. मुए. तत्र चाप्सरसः सर्वाः, ते1 इन्द्रमप्सरसैः संघाः. -b) दे5 तत्परं (→तत्पराः); दे8-10 मुवें. मुए. मुब. गन्धर्वाः सिद्धचारणाः. -d) म1 यत्र (→तत्र).

१२. -b) का1 ब2.3 दे5 न1 योग-, म1 ग्र2 ये वा (→याग-); दे1 योगमार्गपरायणाः, ते1 योगायोगपरायणाः. -d) ते1 देवानपि सुदुर्लभम्, + देवैरपि सुदुर्लभम्.

१३. -a) दे8-10 मुवें. मुए. मुब. तस्माद् (→तस्य); दे5 दिग्धागे (→दिग्भागे). -c) का1 दे2.5 तेजोमयी (→तेजोवती). -d) ग्र2 सर्वाश् (→दिव्याश्).

१४. -a) न1 अग्निर् (→वह्निर्). -b) ब1 भ्राजमानश्च, द1 ग्र2 म1 भ्राजमानस्व- (→भ्राजमानः स्व-). -c) का1 ब1.2 दे2.3.5.6 म1 जापिनां (→जपिनां). -cd) ते1 जपिनां होमिनां स्नानदानिनां च दुरासदं.

१५. -a) ब1 °वरं, ब2 °वने (→वरे). -b) ब2.3 दे3.6.7 यमस्य तु, दे5 यमस्याति, ते1 यमस्यादि (→यमस्यापि). -c) न1 द1 ग्र2 संयमिनी (→संयमनी); ब1 दे1 नाम (→दिव्या). -d) दे3 °सेवितः (→°सेविताः); दे1.8-10 न1 ते1 मुवें. मुए. मुब. सर्वशोभासमन्विता.

१६. -b) म1 देव्याद्याः (→देवाद्याः). -c) दे6 न1 °संधानं (→°संधानां); ते1 स्नानं तत्परमं स्थानं. -d) दे6 युक्तकृता-, द1 पुण्यवतां (→पुण्यकृतां).

तस्यास्तु पश्चिमे भागे निर्ऋतेस्तु महात्मनः ।
रक्षोवती नाम पुरी राक्षसैः सर्वतो वृता ॥१७
तत्र तं निर्ऋतिं देवं राक्षसाः पर्युपासते ।
गच्छन्ति तां धर्मरता ये वै तामसवृत्तयः ॥१८
पश्चिमे पर्वतवरे वरुणस्य महापुरी ।
नाम्ना शुद्धवती पुण्या सर्वकामर्द्धिसंयुता ॥१९
तत्राप्सरोगणैः सिद्धैः सेव्यमानोऽमराधिपः ।
आस्ते स वरुणो राजा तत्र गच्छन्ति येऽम्बुदाः ।
तीर्थयात्रापरा नित्यं ये च लोकेऽघमर्षिणः ॥२०
तस्या उत्तरदिग्भागे वायोरपि महापुरी ।
नाम्ना गन्धवती पुण्या तत्रास्तेऽसौ प्रभञ्जनः ॥२१
अप्सरोगणगन्धर्वैः सेव्यमानोऽमरप्रभुः ।
प्राणायामपरा मर्त्या स्थानं तद् यान्ति शाश्वतम् ॥२२
तस्याः पूर्वेण दिग्भागे सोमस्य परमा पुरी ।
नाम्ना कान्तिमती शुभ्रा तत्र सोमो विराजते ॥२३
तत्र ये भोगनिरता स्वधर्मं पर्युपासते ।
तेषां तद् रचितं स्थानं नानाभोगसमन्वितम् ॥२४
तस्याश्च पूर्वदिग्भागे शंकरस्य महापुरी ।
नाम्ना यशोवती पुण्या सर्वेषां सुदुरासदा ॥२५ वें. १.४६.२५

---

१७. –a) दे1 ततस्तु, द1 अस्यास्तु (→तस्यास्तु). –b) दे1 नैर्ऋतस्य, दे10 ग्र2 नैर्ऋतेस्तु (→निर्ऋतेस्तु); द1 ग्र1.2 महापुरी (→महात्मनः). –d) ब1-3 दे3.6.7 सर्वतो युता, दे1 सर्व * युता, दे5 सर्वतेयुता, दे8-10 मुवें. मुए. मुब. संवृ(दे9 °यु)ता तु (दे10 °त्व) या, न1 ग्र1 पर्वतो वृताः, ते1 सर्वतो यथा, + संवृतो यथा (→सर्वतो वृता); ग्र2 राक्षसैः सर्पदेवतैः.

१८. ब1. १८–१९ ⊙ (द्र. सं.). –a) दे1.8-10 मुवें. मुए. मुब. ते (दे1 तं) नैर्ऋतं, दे5 तं निरुतिं (→तं निर्ऋतिं); म1 तत्रापि तन्निजं देवं. –c) ग्र2 तर्जन्ति (→गच्छन्ति); ब1 तद्, ब3 दे2.5 ग्र1.2 तान् (→तां); म1 गच्छन्ति तं धर्मवतो. –d) दे10 ते वै, मुवें. मुए. मुब. ये तु (→ये वै); दे3.7 तापस° (→तामस°); दे5 ये चैतासमवृत्तयः, द1 ग्र1.2 म1 ये वैते मुनिवृत्तयः.

१९. ब1. ⊙ (द्र. १८ पा. वि.); ग्र2. १९d–२३c ⊙. –a) दे1 पश्चिम- (→पश्चिमे). –c) ब2 ग्र1 गन्धवती, ते1 गन्धवती, + शुद्धवती (→शुद्धवती) ग्र2 नाम्ना कीर्तिमती शुभ्रा. –d) ब2 -कर्माङ्ग°, दे10 ते1 -कामार्थ°, द1 -कामादि (→-कामर्द्धि°); ग्र2 तत्र सोमो विराजते.

२०. ग्र2. ⊙. (द्र. १९ पा. वि.); ef केवलं ग्र1 पुस्तके एव अस्ति अन्यत्र नास्ति. –a) ते1 सर्वैस् (→सिद्धैः). –b) का1 ब2 दे1.8-10 नराधिपैः (का1 ब2 °पः), मुवें. मुए. मुब. [अ]मराधिपैः, न1 * राधिपैः, द1 ग्र1 म1 [अ]मरादिभिः (→[अ]मराधिपः). –c) मुब. आस्ते च (→आस्ते स). –d) का1 ब3 दे2.3.5.6 ये मुदा, ब1.2 दे1.7 मुब. येऽन्नदाः, दे10 ये बुधाः, न1 द1 ग्र1 म1 ये नराः, ते1 ये सदा (→येऽम्बुदाः).

२१. ग्र2. ⊙ (द्र. १९ पा. वि.); दे3.6. २१b-२३a ⊙ (द्र. सं.). –a) दे1 ते1 ग्र1 म1 तस्य (→तस्या[ः]); ते1 म1 चोत्तर° (→उत्तर°). –b) दे5 सोमस्य परमा पुरी. –d) ब2.3 यत्रास्ते (→तत्रास्ते).

२२. दे3.6. ⊙ (द्र. २१ पा. वि.); ग्र2. ⊙ (द्र. १९ पा. वि.). –a) दे1.7 °संकीर्णः (→°गन्धर्वैः). –b) ब2.3 दे1.7 [अ]निलप्रभुः (दे1.7 °भः); दे8-10 मुवें. मुए. मुब. महान् प्रभुः (→[अ]मरप्रभुः). –c) दे1.7-10 न1 ते1 °रताः (→°परा[ः]); ब2 मर्त्यो, मुवें. मुए. मुब. विप्राः (→मर्त्या[ः]). –d) ब1-3 दे2.5 ग्र1 शोभनं (दे5 °नां) (→शाश्वतं); का1 स्छा (?) नं तपति शोभनं, द1 स्थानं तत्रातिशोभनं.

२३. ग्र2. abc ⊙. (द्र. १९ पा. वि.) दे3.6. a ⊙ (द्र. १९ पा. वि.); ब1. २३c-२५b ⊙ (द्र. सं.). –a) दे1.7 पूर्वे च, मुवें. मुए. मुब. पूर्वे तु (→पूर्वेण). –c) दे10 कान्तिकृती, न1 कान्तिवती, द1 ग्र1 म1 कीर्तिम (ग्र1 °व)ती (→कान्तिमती); दे1 पुष्पा, दे7 [इ]त्युक्ता (→शुभ्रा). –d) दे1.8-10 ते1 ग्र1 मुवें. मुए. मुब. तस्यां (→तत्र).

२४. ब1. ⊙ (द्र. २३ पा. वि.). –a) म1 ते (→ये); दे8-10 मुवें. मुए. मुब. धर्म°, द1 ग्र1.2 म1 योग° (→भोग°). –c) ब2.3 दे3.6.7-9 द1 ग्र1.2 म1 मुवें. मुए. मुब. तदुचितं, दे10 तदुत्थितं, न1 तमुद्यतं (→तद् रचितं); ते1 सोमभक्ता दिवं स्थानं.

२५. ब1. ab ⊙. –a) दे8-10 मुवें. मुए. मुब. तस्यास्तु (→तस्याश्च). –b) का1 ब2 दे5 म1 मुब. शुभा° (→महा°). –c) ब2 दे1 यशोमती (→यशोवती); ब1 * म्या, ब3 दे3.6.7 रम्या, दे5 मुख्या (→पुण्या). –d) ब2 दे1 सुखदा सदा, दे8-10 द1 ग्र1 मुवें. मुए. मुब. सा दुरासदा (→सुदुरासदा); ते1 सर्वेषां साधुता सदा.

वें.१.४६.२६ तत्रेशानस्य भवनं रुद्रविष्णुतनोः शुभम् ।
गणेश्वरस्य विपुलं तत्रास्ते स गणैर्वृतः ॥२६
तत्र भोगाभिलिप्सूनां भक्तानां परमेष्ठिनः ।
निवासः कल्पितः पूर्वं देवदेवेन शूलिना ॥२७
विष्णुपादाद् विनिष्क्रान्ता प्लावयित्वेन्दुमण्डलम् ।
समन्ताद् ब्रह्मणः पुर्यां गङ्गा पतति वै दिवः ॥२८
सा तत्र पतिता दिक्षु चतुर्धा ह्यभवद् द्विजाः ।
सीता चालकनन्दा च सुचक्षुर्भद्रनामिका ॥२९
पूर्वेण सीता शैलात् तु शैलं यात्यन्तरिक्षतः ।
ततश्च पूर्ववर्षेण भद्राश्वेनैति चार्णवम् ॥३०
तथैवालकनन्दा च दक्षिणादेत्य भारतम् ।
प्रयाति सागरं भित्त्वा सप्तभेदा द्विजोत्तमाः ॥३१
सुचक्षुः पश्चिमगिरीनतीत्य सकलांस्तथा ।
पश्चिमं केतुमालाख्यं वर्षं गत्वैति चार्णवम् ॥३२
भद्रा तथोत्तरगिरीनुत्तरांश्च तथा कुरून् ।
अतीत्य चोत्तराम्भोधिं समभ्येति महर्षयः ॥३३
आनीलनिषधायामौ माल्यवान् गन्धमादनः ।
तयोर्मध्यगतो मेरुः कर्णिकाकारसंस्थितः ॥३४
भारताः केतुमालाश्च भद्राश्वाः कुरवस्तथा ।
पत्राणि लोकपद्मस्य मर्यादाशैलबाह्यतः ॥३५

---

२६. –a) दे1 भुवनं, ग्र2 भद्रं तद् (→भवनं). –b) दे1 रुद्राविष्ट°, द1 रुद्राविन्द्र°, ग्र1 रुद्रास्येश°, म1 रुद्राविद्ध° (→रुद्रविष्णु°); दे8-10 ते1 मुवें. मुए. मुब. रुद्रेणाधिष्ठितं शुभ्रं, ग्र2 रुद्राविद्र तनू शुभं (?). –c) दे5 विपुलो, न विपुला, ते1 विमलं (→विपुलं). –d) दे5 तत्रास्ति (→तत्रास्ते); दे1 न1 [अ]सौ (→स); दे7.9 मुवें. मुए. मुब. गणावृतः, दे10 गणाधृतः, ते1 गणेश्वरः (→गणैर्वृतः).

२७. –a) ब2 भव- (→तत्र); दे1.8-10 द1 ग्र1.2 म1 मुवें. मुए. मुब. भोगादि° (→भोगाभि°); ब2 दे10 °लिप्सानां, दे5 °लाषाणां (→°लिप्सूनां); ते1 तत्रादिभोगलिप्सूनां. –c) ब1 दे5.6 निवासकल्पितः (ब1 °ते), द1 ग्र1.2 निवासः कारितः (द1 °तं), ते1 निवासः कल्रितं (→निवासः कल्पितः). –d) दे1 शूलिनः, ग्र2 शूलिनं (→शूलिना).

२८. –b) ते1 पाययेत् सिन्धुमण्डलम्, + प्लावयिदिन्दुमण्डलम्. –c) का1 ब3 दे3.5.7.10 न1 ग्र1 पुर्याः (→पुर्यां); ते1 समन्त्राः ब्राह्मणाः पूर्वं. –d) दे8-10 मुवें. मुए. मुब. ततः (→दिवः); ते1 गङ्गावर्तेति वै ततः.

२९. –b) ब2 ग्र1 [अ]प्यभवन्, न1 विभजं, ग्र2 प्राह च (→ह्यभवद्). –c) दे10 सीतलाचकनन्दा च. –d) का1 ब2 स्व° (→सु°), ब1 चक्षुर्भद्रा च नामिका, दे3.6.7 चक्षुभर्द्रा च वै क्रमात्, ते1 न चक्षुभद्रनासिका, द1 ग्र1.2 चक्षुभर्द्रा च शाश्वता, म1 चक्षुर्भद्रेति नामिका.

३०. –a) दे8-10 मुवें. मुए. मुब. पूर्वेण शैलाच्छैलं (दे10 °ले) तु. –b) द1 ग्र1.2 पात्यन्तरिक्षगा (→यात्यन्तरिक्षतः); दे8-10 मुवें. मुए. मुब. सीता यात्यन्तरिक्षगा, न1 सा च तत्रान्तरिक्षगा. –c) का1 दे10 पूर्वे, दे7 पूर्वं (→पूर्व-); म1 °मार्गेण (→°वर्षेण). –d) का1 ब2.3 दे2.5 ते1 ग्र1.2 भद्राश्वे याति, दे3.6 तत्राश्वेनैति, दे8-10 न1 म1 मुवें. मुए. मुब. भद्राश्वाद्याति, द1 भद्राश्वो याति (→भद्राश्वेनैति); दे6 वर्णनं (→चार्णवम्).

अतः परं ब1 पुस्तके अधिकम्—

*भद्रास्तथा** गिरीनुत्तरांश्च तथा कुरून्' (=३३ ab)

३१. ग्र2. ⊙. –a) ब2.3 दे3.6 तत्रैवा°, ते1 ततश्चा° (→तथैवा°). –b) दे3.6.7 द1 ग्र1 म1 दक्षिणेनैत्य, ते1 दक्षिणादित्य-, + दक्षिणादेत्य (→दक्षिणादेत्य). –c) न1 प्रयाता (→प्रयाति); ब1 दे3.6-10 भूत्वा (→भित्त्वा); ते1 प्रयातु पर्वतं भित्त्वा.

३२. ग्र2. ⊙; ते1. d ⊙. –a) का1 स्वर्चक्षु; ब1-3 स्ववंक्षुः, दे2 स्वचक्षुः, दे3 सुर्वक्षु, दे6 सुवंक्ष, ते1 न चक्ष (→सुचक्षुः); म1 तथा चक्षुः पश्चिमगिरीन्. –b) दे6 सफलस्तथा, द1 ग्र1 सकला (ग्र1 °लां) स्थिता, म1 सकलान् शुभान् (→सकलांस्तथा). –c) म1 पश्चिमे (→पश्चिमं); ते1 केतुमालांश्च (→केतुमालाख्यं). –d) का1 ब1 दे2.5.6.8.10 गत्वेति द1 ग्र1 म1 भित्वेति (→गत्वैति).

३३. ते1. ⊙. –a) म1 भद्रानथोत्तरगिरीन्. –b) ग्र2 उत्तरानि कुरूनपि. –c) ग्र2 अधीत्य (→अतीत्य).

३४. ते1. ⊙. –a) दे6.10 अनील- (→आनील-); का1 दे5.6 -निषधायामो (→-निषधायामौ). –b) दे8-10 न1 द1 ग्र1.2 म1 मुवें. मुए. मुब. °मादनौ (→°मादनः). –c) का1 ब2 दे3.5.7 द1 ग्र1.2 म1 मध्य-, ब1 दे1 न1 मध्ये (→मध्य°).

३५. ते1. a ⊙. –a) ब3 तारकाः (→भारताः). –c) ते1 तत्रापि (→पत्राणि).

जठरो देवकूटश्च मर्यादापर्वतावुभौ ।
दक्षिणोत्तरमायामावानीलनिषधायतौ ॥३६
गन्धमादनकैलासौ पूर्वपश्चायतावुभौ ।
अशीतियोजनायामावर्णवान्तर्व्यवस्थितौ ॥३७
निषधः पारियात्रश्च मर्यादापर्वताविमौ ।
मेरोः पश्चिमदिग्भागे यथापूर्वौ तथा स्थितौ ॥३८
त्रिशृङ्गो जारुधिस्तद्वदुत्तरे वर्षपर्वतौ ।
पूर्वपश्चायतावेतौ अर्णवान्तर्व्यवस्थितौ ॥३९
मर्यादापर्वताः प्रोक्ता अष्टाविह मया द्विजाः ।
जठराद्याः स्थिता मेरोश्चतुर्दिक्षु महर्षयः ॥४० वें.१.४६.४०

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायां पूर्वविभागे चतुश्चत्वारिंशोऽध्यायः ॥४४॥

३६. ते1. cd ⊙. –a) द1 ग्र1.2 र (द1 रा) जतो, म1 जरडो (→जठरो); ब2 वेदकूटश् (→देवकूटश्). –b) दे7 मर्यादासागरावुभौ. –c) ब1 तौ दक्षिणोत्तरायामौ, द1 ग्र1 दक्षिणोत्तरयो (ग्र1 धा) मानौ, ग्र2 दक्षिणोत्तरदिग्भागे, म1 तद्दक्षिणोत्तरायामौ, मुवें. दक्षिणोत्तरमायातौ. –d) दे1 ग्र1 °निषधावुभौ (→°निषधायतौ); ग्र2 ययौ पूर्वे तथा त्विमौ.

३७. ते1 ग्र2. ⊙. –a) ब3 दे6 °कैलाशौ (→°कैलासौ). –b) का1 °पार्श्वा° (→°पश्चा°); दे5 पूर्वपश्चिमता उभौ, ग्र1 पूर्वपश्चाद्यथा उभौ. –d) दे5.7.9.10 न1 द1 [अ]र्णवान्त- (→[अ]र्णवान्तर्).

३८. ग्र2. ⊙; न1 ते1. ab ⊙. –a) ब1 दे10 ग्र1 परि° (→पारि°); ब2.3 दे5 °पात्रश् (→°यात्रश्). –b) दे1.5 द1 ग्र1 म1 उभौ (→इमौ). –d)) ब3 तथा (→यथा); दे8.9 ते1 द1 म1 मुवें. मुए. °पूर्व, दे10 °पूर्व-, ग्र1 °पूर्वे (→°पूर्वौ); का1 दे8-10 ते1 मुवें. मुए. मुब. व्यवस्थितौ, ब1 तथा स्मृतौ, ब2 यथा स्थितौ, ब3 तथा मितौ द1 ग्र1 म1 तथा त्विमौ (→तथा स्थितौ).

३९. दे10. ab ⊙. –a) दे1 श्रीशृङ्गो (→त्रिशृङ्गो); दे6 जातुधिस्, ते1 जारुतिस् (→जारुधिस्); ब1 च्चैव (→तद्वद्). –c) दे5 पूर्वा, ग्र1 पूर्वं (→पूर्व-); दे8-10 मुवें. मुए. तावदायामविस्तारौ, ते1 पूर्ववच्चायतावेतौ, म1 पूर्वपश्चायतायामौ. –d) पर्णसन्तर्पवस्थितम्.

४०. –a) दे8 मर्या ******. –b) का1 ह्याद्याविन-, ब2.3 दे5 ह्यष्टाविह, दे3.6 ज्येष्ठाविह, ग्र1.2 म1 वर्षाणीह (→अष्टाविह); दे1.9.10 ग्र2 म1 महाद्विजाः (→मया द्विजाः); ते1 *** वलयं * जाः. –c) द1 ग्र1.2 म1 रजताद्या, ते1 जठराद्वा (→जठराद्याः); न1 महा- (→स्थिता).

पुष्पिका—

[द1 पुस्तके अध्यायसमाप्तिर्नास्ति]

**पुराणनाम**—का1 दे2.5 इत्यादिमहापुराणे कौर्मे, ब1-3 दे3 म1 इतिकूर्मपुराणे, दे1.6-10 न1 ग्र1.2 मुवें. मुए. इति श्रीकूर्मपुराणे, ते1 इत्यादिमहापुराणे श्रीकौर्मे, मुब. इति श्रीकौर्मे महापुराणे पूर्वभागे. **अध्यायनाम**—ब3 ग्र1.2 म1. ⊙; का1 ब1 दे2.3.5.8-10 ते1 मुवें. मुए. भुवनविन्यासे, ब2 दे1.6 भुवनकोशे (ब2 °षे), दे7 मुब. भुवनकाश (मुब. °ष) विन्यासे, न1 भुवनविन्यासो नाम. **अध्यायसंख्या**—ब1 दे6. ⊙; का1 ब3 दे2.3.5 ग्र1 त्रिचत्वारिंशोध्यायः, ब2 ॥४३॥, दे1.7 मुवें. षट्चत्वारिंशोऽध्यायः ॥४६॥, दे8.9 मुए. षट् चत्वारिंशोध्यायः, दे10 षट्चत्वारिंशोध्यायः ॥४६॥ श्रीसीतारामचन्द्रार्पणमस्तु ॥, न1 ग्र2 म1 मुब. पञ्चचत्वारिंशोध्यायः, ते1 सप्तचत्वारिंशोध्यायः, + चतुश्चत्वारिंशोध्यायः,

# ४५

सूत उवाच ।❀

वं.१.४७.१ केतुमाले नराः काला: सर्वे पनसभोजनाः ।
स्त्रियश्चोत्पलपत्राभा जीवन्ति च वर्षायुतम् ॥१
भद्राश्वे पुरुषाः शुक्लाः स्त्रियश्चन्द्रांशुसन्निभाः ।
दश वर्षसहस्राणि जीवन्ते आम्रभोजनाः ॥२
रम्यके पुरुषा नार्यो रमन्ते रजतप्रभाः ।
दशवर्षसहस्राणि शतानि दश पंच च ।
जीवन्ति चैव सत्त्वस्था न्यग्रोधफलभोजनाः ॥३
हिरण्मये हिरण्याभाः सर्वे च लकुचाशनाः ।
एकादशसहस्राणि शतानि दश पञ्च च ।
जीवन्ति पुरुषा नार्यो देवलोकस्थिता इव ॥४
त्रयोदशसहस्राणि शतानि दश पञ्च च ।
जीवन्ति कुरुवर्षे तु श्यामाङ्गाः क्षीरभोजनाः ॥५
सर्वे मिथुनजाताश्च नित्यं सुखनिषेविनः ।
चन्द्रद्वीपे महादेवं यजन्ति सततं शिवम् ॥६
तथा किंपुरुषे विप्रा मानवा हेमसन्निभाः ।

---

**४५**

[अध्यायारम्भे दे$_{10}$ अधिकम्—श्रीगणेशाय नमः]

❀ द$_1$. ⊙; दे$_{8.9}$ सूत उ.; न$_1$ ग्र$_{1.2}$ म$_1$ सूतः; ते$_1$ श्रीसूतः.

**१.** ब$_1$ दे$_{3.6}$ द$_1$. १c-२d ⊙ (इ. सं.) –a) ग्र$_1$ °माला (→°माले); ते$_1$ कथा (→नराः); दे$_4$ ककाः (?), दे$_{8-10}$ मुवें. मुए. काकाः, न$_1$ सर्वे, ग्र$_2$ काराः, म$_1$ काकाः, + कालास् (→कालाः). –b) न$_1$ सदा (→सर्वे); का$_1$ पायस°, दे$_1$ पन्नग°, दे$_{2.6}$ पानस°, दे$_4$ फलसु°, दे$_{10}$ पापन° (?), ते$_1$ पावन° (→पनस°). –c) ते$_1$ चोत्तर°, + चोत्पल° (→चोत्पल°); दे$_7$ °वर्णाभा, दे$_{8-10}$ °पत्राक्ष्यः, न$_1$ °पद्माक्ष्यः (→°पत्राभा). –d) दे$_{8-10}$ मुवें. मुए. मुब. ते जीवंति, ते$_1$ ग्र$_2$ म$_1$ * जीवति (→जीवन्ति च); दे$_4$ जीवन्ति वरषायुतम्, न$_1$ जीवंत्ययुतवार्षिकं, ग्र$_1$ सर्वे वर्षायुता युषा.

**२.** ब$_1$ दे$_{3.6}$ द$_1$. ⊙ (द्र. १ पा. वि.); दे$_4$. २c-३b ⊙ (इ. सं.); का$_1$ २d-३c ⊙ (इ. सं.). –b) दे$_1$ चन्द्रांश- (→चन्द्रांशु-); न$_1$ स्त्रियश्चांशुसमप्रभा. –d) ब$_2$ जीवन्ति (→जीवन्ते); ब$_2$ दे$_{7-10}$ मुवें. मुए. चान्न°, ब$_3$ वायु°, दे$_1$ वाम्र°, दे$_2$ आम्र°, + वायु°, दे$_5$ चायु°, ते$_1$ चाम्बु°, मुब. चाम्र° (→आम्र°); न$_1$ ग्र$_{1.2}$ म$_1$ जीवन्त्यमृतभोजनाः,

**३.** का$_1$. abc ⊙ (द्र. २ पा.वि.); दे$_4$. ab⊙ (द्र. २ पा. वि.). –b) ब$_1$ रमन्त्यो, ब$_3$ दे$_{3.6}$ रमन्त्या, दे$_{8-10}$ न$_1$ मुवें. मुए. मुब. रमन्ति, दे$_7$ रमण्यो, ते$_1$ राजन्ते (→रमन्ते); ब$_1$ रजतः, ग्र$_2$ रजनि- (→रजत-); ग्र$_2$ °प्रजाः (→°प्रभाः). –d) न$_1$ दश वर्षशतानि च. –e) दे$_{10}$ सत्यत्व, ते$_1$ सर्वस्था; ग्र$_2$ तत्रस्था (→सत्त्वस्था). –f) का$_1$ दे$_6$ °भोजना, ग्र$_2$ °भोजिनः (→°भोजनाः).

**४.** ब$_1$. ४-७ ⊙ (इ. सं.); ते$_1$. ४-५ ⊙ (इ. सं.); का$_1$ ब$_{2.3}$ दे$_{1-7}$ द$_1$ ग्र$_1$ म$_1$. ४e-५b ⊙; ग्र$_2$. ४c-५b ⊙. –a) न$_1$ हिरण्याभौ (→हिरण्याभाः). –b) ब$_2$ दे$_3$ सर्वे चलदलाशनाः, दे$_4$ सर्वेपि लकुवासनाः (?), दे$_6$ सर्वे चलगदाशनाः, दे$_{8-10}$ मुवें. मुए. मुब. सर्वे श्रीफलभोजनाः, द$_1$ नशलि कुचभोजनाः, ग्र$_1$ म$_1$ जना लिकुचभोजनाः, ग्र$_2$ जनाकुलितभोजनः.

**५.** ब$_1$ ते$_1$. ⊙ (द्र. ४ पा. वि.); का$_1$ ब$_{2.3}$ दे$_{1-7}$ द$_1$ ग्र$_{1.2}$ म$_1$. ab ⊙ (द्र. ४ पा. वि.). –b) न$_1$ दशानि (→शतानि). –c) ग्र$_2$ तत्र (→कुरु-). –d) दे$_5$ शामागाः क्षीर°, न$_1$ श्यामाकाः क्षीण°, ग्र$_2$ श्यामाभाक्षीर° (→श्यामाङ्गाः क्षीर°).

**६.** ब$_1$. ⊙ (द्र. ४ पा. वि.). –a) दे$_{10}$ °जाश्चैव (→°जाताश्च); ते$_1$ सर्वे निमिषमात्राश्च. –b) का$_1$ ब$_2$ दे$_{1.4.5}$ द$_1$ ग्र$_1$ म$_1$ °निषेविणः, दे$_{7-9}$ न$_1$ मुवें. मुए. मुब. °निषेविताः (दे$_{10}$ °तः) (→°निषेविनः); दे$_{10}$ नित्यं सुरविशेषितः, ते$_1$ सत्यं शंखनिषेवणाः. –c) का$_1$ चन्द्रमौलिं, ब$_{2.3}$ ताम्रद्वीपे, दे$_{1.7}$ भद्रद्वीपे, दे$_4$ उपासते, दे$_5$ वजंशेपे(?), दे$_{10}$ चन्द्रद्वीप-, द$_1$ गंधैः पुष्पैर्, ग्र$_{1.2}$ म$_1$ देवदेवं (→चन्द्रद्वीपे); न$_1$ °द्वीपः (→°देवं). –d) दे$_{10}$ जपंति (→यजन्ति); दे$_3$ * * तं (→सततं); म$_1$ पूजयन्ति सदा शिवं.

**७.** ब$_1$. ⊙ (द्र. ४ पा. वि.); दे$_3$. ७c–९b ⊙ –a) द$_1$ यथा (→तथा); दे$_4$ ते$_1$ किंपुरुषं, ग्र$_2$ किंपुरुषा (→किंपुरुषे); दे$_1$ द$_1$ ते$_1$ विप्राः, ग्र$_2$ विप्रो (→विप्रा). –b) दे$_1$ मानवाः,

दशवर्षसहस्राणि जीवन्ति प्लक्षभोजनाः ।।७
यजन्ति सततं देवं चतुर्मूर्तिं चतुर्मुखम् ।
ध्याने मनः समाधाय सादरं भक्तिसंयुताः ।।८
तथा च हरिवर्षे तु महारजतसन्निभाः ।
दशवर्षसहस्राणि जीवन्तीक्षुरसाशिनः ।।९
तत्र नारायणं देवं विश्वयोनिं सनातनम् ।
उपासते सदा विष्णुं मानवा विष्णुभाविताः ।।१०
तत्र चन्द्रप्रभं शुभ्रं शुद्धस्फटिकनिर्मितं ।
विमानं वासुदेवस्य पारिजातवनाश्रितम् ।।११
चतुर्द्वारमनौपम्यं चतुस्तोरणसंयुतम् ।
प्राकारैर्दशभिर्युक्तं दुराधर्षं सुदुर्गमम् ।।१२
स्फाटिकैर्मण्डपैर्युक्तं देवराजगृहोपमम् ।
स्वर्णस्तम्भसहस्रैश्च सर्वतः समलंकृतम् ।।१३
हेमसोपानसंयुक्तं नानारत्नोपशोभितम् ।
दिव्यसिंहासनोपेतं सर्वशोभासमन्वितम् ।।१४
सरोभिः स्वादुपानीयैर्नदीभिश्चोपशोभितम् ।
नारायणपरैः शुद्धैर्वेदाध्ययनतत्परैः ।।१५
योगिभिश्च समाकीर्णं ध्यायद्भिः पुरुषं हरिम् ।
स्तुवद्भिः सततं मन्त्रैर्नमस्यद्भिश्च माधवम् ।।१६
तत्र देवादिदेवस्य विष्णोरमिततेजसः ।
राजानः सर्वकालं तु महिमानं प्रकुर्वते ।।१७
गायन्ति चैव नृत्यन्ति विलासिन्यो मनोरमाः ।
स्त्रियो यौवनशालिन्यः सदा मण्डनतत्पराः ।।१८
इलावृते पद्मवर्णा जम्बूफलरसाशिनः ।
त्रयोदश सहस्राणि वर्षाणां वै स्थिरायुषः ।।१९  वें.१.४७.२०

---

दे10 मानवो (→मानवा); ग्र2 हिम° (→हेम°). –d) ते1 पक्ष° (→प्लक्ष°); ग्र2 °भोजिनः (→°भोजनाः).

८. दे3. ⊙ (द्र. ७ पा. वि.) –a) ब1 जयन्ति, ते1 जीयन्ति, + यजन्ति (→यजन्ति); ग्र2 चतुरं (→सततं). –b) दे5.7 चतुर्मूर्त्ति-, दे8.9 चतुः शीर्षं, दे10 चतुस्तीर्थं (→चतुर्मूर्त्तिं); दे1.7 मुवें. मुए. मुब. चतुर्भुजम् (→चतुर्मुखम्). –c) दे4 धाते, म1 स्थाने (→ध्याने). –d) का1 सदारा, दे5 सादरा, दे10 शारीरं, द1 सदारं (→सादरं); ते1 साधकं भक्तसंयुतः.

९. दे3. ab ⊙ (द्र. ७ पा. वि.). –a) का1 ब1.3 दे2.4.6 द1 ग्र1 म1 °वर्षेपि, दे5 °बधुपि, ग्र2 °वर्षे च (→°वर्षे तु). –d) ते1 जीवन्तिक्षुरशासना.

१०. –a) ते1 मादा यया (→नारायणं); न1 विश्वं (→देवं). –b) द1 ग्र1.2 विश्वमूर्त्तिं, म1 सत्वयोनिं (→विश्वयोनिं). –c) दे4 महा-, द1 तदा (→सदा). –d) दे3 मानवाः, ते1 मानसा, ग्र2 मनसा (→मानवा); दे6 °भाविता, ते1 °भावितम्, ग्र1 °भावनाः (→°भाविताः).

११. द1. ११b–१२c ⊙. –a) का1 दे2.5 °युतं शुभ्रं (दे5 भ्र), द1 °प्रभं युक्तं (→°प्रभं शुभ्रं). –b) दे4 शुभ्र° (→शुद्ध°); ब3 दे1 ते1 °निर्मलं, दे8-10 न1 ग्र1 मुवें. मुए. मुब. °सन्निभम् (→°निर्म्मितम्). –c) दे4 ग्र1 म1 निवासं, ग्र2 निर्म्मितं (→विमानं). –d) ते1 वसु° (→वासु°); ग्र1 °जाता° (→°जात°).

१२. द1. abc ⊙ (द्र. १२ पा. वि.). –b) दे5 °संयुताम् (→°संयुतम्). –c) ग्र1.2 प्रासादैर् (→प्राकारैर्). –d) दे2 सुदुर्गमां (→सुदुर्गमम्).

१३. –a) दे1 स्फटकैर्, ते1 स्थापितैर् (→स्फाटिकैर्); ब1 न1 मण्डलैर् (→मण्डपैर्). –b) दे2 °गृहोपमः (→°गृहोपमम्); दे1 ते1 मुवें. मुए. मुब. सुवर्णस्तम्भसाहस्रैः, दे5 स्वरस्तंकसहस्रैश्च, दे6 स्वर्णस्तत्र सहस्रैश्च, दे8-10 सुवर्णशतसाहस्रैः. –d) दे8-10 पर्वतैः (→सर्वतः).

१४. दे1. १४c–१५b ⊙ (ह. सं.). –a) दे1 होम° (→हेम°); दे1 °संयुक्तां (→°संयुक्तं).

१५. दे1. ab ⊙ (द्र. १४ पा. वि.). –a) दे10 सिरोभिः, ग्र2 रसोभिः (→सरोभिः). –c) दे4 देवैर् (→शुद्धैर्).

१६. –b) दे1 ध्यायिनिः,दे7 ध्यायिभिः (→ध्यायद्भिः); म1 सततं (→पुरुषं); न1 द1 ग्र1.2 परं (→हरिम्). –d) दे4 मानसः क्षिप्र (→नमस्यद्भिश्च); दे5 माधवां (→माधवम्).

१७. –a) दे4.8-10 मुवें.मुए.मुब. देवाधि° (→देवादि°). –c) द1 ग्र1.2 म1 रोचमानास्सर्वकालं.

१८. –a) ग्र2 चोप- (→चैव). –b) का1 विशालिन्यो, ग्र2 निवसन्त्यो (→विलासिन्यो); दे8-10 मुवें. मुए. मुब. मनोहराः (→मनोरमाः). –d) ते1 तथा (→सदा); दे4.5 मण्डल° (→मण्डन°).

१९. –a) दे5 इलावृतो, ग्र2 इलावतो (→इलावृते); दे2 °वर्ण-, दे4 °वर्णं, न1 ते1 द1 °वर्णाः (→°वर्णा). –b) दे1 द1 जम्बूफलरसाशिनाः, दे8-10 मुवें. मुए. मुब. जम्बूरस-

वें.१.४७.२१ भारते तु स्त्रियः पुंसो नानावर्णाः प्रकीर्त्तिताः ।
नानादेवार्च्चने युक्ता नानाकर्माणि कुर्वते ।
परमायुः स्मृतं तेषां शतं वर्षाणि सुव्रताः ।।२०
नानाहाराश्च जीवन्ति पुण्यपापनिमित्ततः ।
नवयोजनसाहस्रं वर्षमेतत् प्रकीर्त्तितम् ।
कर्मभूमिरियं विप्रा नराणामधिकारिणाम् ।।२१
महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्वतः ।
विन्ध्यश्च पारियात्रश्च सप्तात्र कुलपर्वताः ।।२२
इन्द्रद्युम्नः कशेरुमांस्ताम्रवर्णो गभस्तिमान् ।
नागद्वीपस्तथा सौम्यो गन्धर्वस्त्वथ वारुणः ।।२३
अयं तु नवमस्तेषां द्वीपः सागरसंवृतः ।
योजनानां सहस्रं तु द्वीपोऽयं दक्षिणोत्तरः ।।२४
पूर्वे किरातास्तस्यान्ते पश्चिमे यवनास्तथा ।
ब्राह्मणाः क्षत्रिया वैश्या मध्ये शूद्रास्तथैव च ।।२५
इज्यायुद्धवणिज्याभिर्वर्तयन्त्यत्र मानवाः ।
स्रवन्ते पावना नद्यः पर्वतेभ्यो विनिःसृताः ।।२६
शतद्रुश्चन्द्रभागा च सरयूर्यमुना तथा ।
इरावती वितस्ता च विपाशा देविका कुहूः ।।२७
गोमती धूतपापा च बाहुदा च दृषद्वती ।
कौशिकी लोहिता चैव हिमवत्पादनिःसृताः ।।२८

फलाशिनः -d) दे1.8 न1 ते, दे4 मुवें. मुए. मुब. च (→वै); ते1 * * * * स्थिरायुषः, म1 वर्षाणि स्थिरजीविनः.

२०. -a) का1 दे1.8-10 मुवें. मुए. मुब. भारतेषु, द1 भारतेति (→भारते तु); न1 स्त्रियो मर्त्या (→स्त्रियः पुंसो). -c) दे2 °वेदार्चने + °देवार्चने, ते1 °देवार्चनै(?)(→°देवार्चने); म1 नानाविधाशनैर्युक्ता. -d) म1 °वर्णानि (→°कर्माणि). -e) दे4 स्मृतिस्, न1 स्पृतस्, द1 ग्र1.2 म1 शतं (→स्मृतं). -f) दे1 दश, दे7 ते1 द1 ग्र1.2 म1 शत- (→शतं); ब1 शतवर्षा निपन्ति ताः.

२१. ब1-3 दे1.3.6-10 न1 ते1 मुवें. मुए. मुब. ab ⊙. -b) का1 ग्र2 विनिर्मितः (→निमित्ततः). -d) दे1 न1 अवि° (→अधि°).

२२. -a) ब3 द1 सह्यं, न1 शैलः (→सह्यः). -b) दे4.7 द1 ग्र1 मुवें. मुए. मुब. शक्तिमान् (→शुक्तिमान्); दे4 वृक्ष°, ग्र2 रक्ष° (→ऋक्ष°); न1 शुक्तिमान् रिक्षपर्वताः -c) ब1-3 दे5 °पात्रश्च, दे9.10 °यात्राश्च (→°यात्रश्च). -d) ब3 सप्त ते, ते1 सप्तैते (→सप्तात्र); ग्र2 सप्तत्रश्चात्र पर्वताः.

२३. -a) दे1 न1 द1ग्र1.2 म1 मुवें. मुए. मुब. इन्द्रद्वीपः, दे4 इन्द्रद्वीपं, दे5 इंद्रद्युम्नं, ते1 इन्द्रद्वीपे (→इन्द्रद्युम्नः); दे1 कशेतुमान् (?), दे4 म1 कशेरुष्मांस्, दे6 कसेरूं मां, दे8.9 मुवें. मुए. कसेरूक्मान्, न1 कुशेरुश्च, ते1 * * * *, द1 कुशेरूष्मास् ग्र1 कुशोरुष्मां (→कुशेरुमांस्); दे4 °वर्णी, दे6.8-10 ग्र1.2 म1 मुवें. मुए. मुब. °पर्णो, ते1 °वर्णा (→°वर्णो). -c) दे4 नामद्वीपस्, ते1 नागद्वीपे, ग्र2 नागद्वीपास् (→नागद्वीपस्); ते1 द1 ग्र2 सौम्ये, ग्र1 सौम्या (→सौम्यो). -d) ग्र2 गन्धर्वास् (→गन्धर्वस्); दे7 वारुणाः, ग्र1 दारुणौ, ते1 दारुणा, ग्र2 दारुणः (→वारुणः).

२४. -a) ते1 न तदुस्तेषां, ग्र2 तेषान्नवमः (→नवमस्तेषां). -b) ग्र1.2 द्वीपास् (→द्वीपः); दे8-10 मुवें. मुए. °संस्थितः, ग्र1.2 °संवृताः, ते1 °संवृतम् (→°संवृतः) -c) दे6 सहस्रान्तु, द1 ग्र1.2 सहस्रेषु, म1 सहस्रे तु (→सहस्रं तु). -d) ब1-3 दे1.4.6-10 ते1 दक्षिणोत्तरं, न1 दक्षिणोत्तरा, ग्र2 दक्षिणोत्तराः (→दक्षिणोत्तरः).

२५. -a) दे1 तस्यांतः, म1 तत्रास्ते (→तस्यान्ते). -b) ग्र2 * * * (→पश्चिमे). -c) दे1 ब्राह्मणः, न1 ब्रह्मणाः (→ब्राह्मणाः). -d) दे4 द1 ग्र1.2 शूद्रा मध्ये, ते1 पादजाता (→मध्ये शूद्रास्).

२६. -a) ब1 न1 द1 इज्यायुध-, दे1 इत्यापुर्-, दे5 इत्यायुज्य-, दे6 इष्टायुद्ध-, ग्र2 युधायुध- (→इज्यायुद्ध-); दे3 -वणिष्वाद्यैर्, दे5 -वणिज्योभिर्, दे6 -वणिज्याद्यैर्, न1 -वणिज्यादि (→-वणिज्याभिर्); दे7 स्वधर्मनिरता विष्णुं. -b) दे7 अर्चयंत्यात्र, ते1 तत्रयं नेत्र, म1 वर्तयन्तेत्र (→वर्तयन्त्यत्र). -c) ब2 स्रवन्ति, ग्र1 वसन्ते, ग्र2 म1 वहन्ते (→स्रवन्ते); दे1 पावनी नद्यः, दे10 पावमानाद्याः (→पावना नद्यः). -d) दे4 पर्वतेभ्यः (→पर्वतेभ्यो). -cd) ते1 सर्वं ते सावना नाद्य पार्वती वा निलीस्वतः(?),+सर्वा हि पावना नद्यः पर्वतान्तु विनिस्सृताः.

२७. -a) ग्र2 च महाभागा (→चन्द्रभागा च). -c) दे4 ऐरावती (→इरावती); दे1 वितस्था च, द1 विशस्ता च, ग्र2 वितस्या*, म1 विसत्या च (→वितस्ता च). -d) दे5 देविकी (→देविका); दे1 कुरूः (→कुहूः).

२८. दे10. २८d–२९a ⊙. -a) ग्र2 गोमगीताप° (→गोमती धूत°).-b) दे8.9 ग्र2 बहुदा, दे10 बाहुधा, म1 बाहुका

वेदस्मृतिर्वेदवती व्रतघ्नो त्रिदिवा तथा ।
पर्णाशा वन्दना चैव सदानीरा मनोरमा ॥२९
चर्मण्वती तथा दूर्या विदिशा वेत्रवत्यपि ।
शिप्रुः स्वशिल्पापि तथा पारियात्राश्रयाःस्मृताः ॥३०
नर्मदा सुरसा शोणा दशार्णा च महानदी ।
मन्दाकिनी चित्रकूटा तामसी च पिशाचिका ॥३१
चित्रोत्पला विपाशा च मञ्जुला वालुवाहिनी ।
ऋक्षवत्पादजा नद्यः सर्वपापहरा नृणाम् ॥३२
तापी पयोष्णी निर्विन्ध्या शीघ्रोदा च महानदी ।
वेण्या वैतरणी चैव बलाका च कुमुद्वती ॥३३
तोया चैव महागौरी दुर्गा चान्तःशिला तथा ।
विन्ध्यपादप्रसूतास्ता नद्यः पुण्यजलाः शुभाः ॥३४
गोदावरी भीमरथी कृष्णा वर्णा च मत्सरी ।
तुङ्गभद्रा सुप्रयोगा कावेरी च द्विजोत्तमाः ।
दक्षिणापथगा नद्यः सह्यपादविनिःसृताः ॥३५
ऋतुमाला ताम्रपर्णी पुष्पवत्युत्पलावती ।
मलयान्निःसृता नद्यः सर्वाः शीतजलाः स्मृताः ॥३६ वें.१.४७.३८

(→बाहुदा); ब1-3 दे2.3.5 दृशद्वती, ते1 वृषत्वती, द1 ग्र1 पृषद्वती (→दृषद्वती). –c) ब2 दे1.8-10 न1 ते1 मुवें. मुए. मुब. लोहिनी चेति, द1 ग्र1.2 म1 लोहिता चेति (→लोहिता चैव).

२९. न1. ८५. २८c प्रारभ्य ४६. ४b यावत् ⊙; दे10. abc ⊙. –a) म1 वेदश्रुतिर्वेदवृत्तिर्. –b) दे5 व्रतशं, न1 वृतघ्नी, म1 वृत्तिनी (→व्रतघ्नी); ब2.3 त्रिविधा, दे4 द1 ग्र1.2 म1 त्रिपुरा (→त्रिदिवा). –c) ब1-3 दे1.5 पर्णासा, दे2 पार्णाशा, दे3.7 पर्णाशी, दे8.9 ते1 द1 मुवें. मुए. वर्णाशा (→पर्णाशा); का1 दे3.5.7 बंधना, ब1 दे1.2 मुवें. मुए. मुब. चन्दना (→वन्दना); ग्र2 पर्णासा चन्द्रवैरा सा. –d) दे1 मनोमदा, दे4 च शोभना (→मनोरमाः); दे8-10 मुवें. मुए. स चर्मण्यवती सुरा, ते1 तरा चर्मण्वती तथा, द1 ग्र1.2 म1 सा च नीला सुशोभना.

३०. न1. ⊙; दे4 द1 ग्र1.2 म1. cd ⊙; दे8-10 ते1 मुवें. मुए. ३०a,c ⊙. –a) का1 ब2.3 दे2.5 तूर्या, ब1 * पी, दे1 त्रेगीत, दे7 दूष्यी, द1 ग्र1.2 म1 विप्रा (→दूर्या). –b) दे1 रेत° (→वेत्र°); ते1 सन्तापिनी वेत्रवती. –c) का1 दे5 सिग्रुः (→शिप्रुः); दे1 सुशिल्या च, ग्र2 शोप्यवन्त्यपि, मुब. सुशिल्यापि (→स्वशिल्पापि). –d) दे8 पारा°, दे9.10 पार° (→पारि°); ब2 मुब. तु निस्सृताः (→श्रयाः स्मृताः); ते1 पारियात्रा शिरोस्मृता.

३१. न1. ⊙. –a) ब1 सुरथा, दे1 स्ववशा, द1 सुरदा (→सुरसा); ब1 शो*, दे4.8.9 मुवें. मुए. मुब. शोणो, दे10 शैला (→शोणा). –b) दे4 द1 ग्र1 दशार्णा सुवहानदी, म1 दशार्णा विवहा नदी. –ab) ग्र2 नर्मदा सुरशोणा च शान्यासुपर्वेवाहीवहा. –d) द1 ग्र1 विपाशिका, ग्र2 विवासिता (→पिशाचिका).

३२. न1. ⊙. –a) ब2.3 दे1.4 द1 मुवें. मुए. विशाला, ते1 पिशाचा, ग्र1 म1 विपादा, ग्र2 विवादा (→विपाशा). –b) का1 दे2.5 यांजला, दे4 मंडला, द1 ग्र1 म1 मण्डलुर्, ग्र2 मण्डयुर् (→मंजुला); का1 फल्गुवाहिनी, ब1 दे1.10 बालवाहिनी, ब2.3 रत्नवाहिनी, दे6 चारुवाहिणी, ते1 वाक्यवाहिनी (→वालुवाहिनी). –c) का1 ब1.2 दे2-6 द1 ग्र1.2 म1 हिमवत् (→ऋक्षवत्); दे6 ग्र1.2 नद्याः (→नद्यः); ते1 ऋक्षवर्योपजा नद्यः.

३३. न1 ते1. ⊙. –a) द1 तपो (→तापी); ब1 पयोस्तु (→पयोष्णी). –b) का1 शीतोदा च, दे1 शिप्रोदा च, दे4 शीघ्रोद्यान, दे5 शीर्षोदा च, ग्र1 शिप्रोद्या च (→शीघ्रोदा च). –c) ब1 वे*, ब2 मुब. वेण्वा, दे6 वेणा, दे8-10 मुवें. मुए. मुब. विन्ना (→वेण्या); द1 ग्र2 वैष्णवी वैतरणी च, ग्र1 वैष्णवी वैतरी चैव, म1 वैष्णवी चैव वैतरणी. –d) दे4 कुमुद्वतः (→कुमुद्वती); दे1 सुहृदा मंदगामिनी.

३४. दे1 न1 ते1. ⊙; दे8.9. d ⊙. –a) दे7-9 मुवें. मुए. तथा (→तोया); दे3 चैवं (→चैव). –b) दे4 शिलातला, द1 ग्र1 म1 शिलातली, ग्र2 शिलातका (→शिला तथा). –c) ब1 दे4.8-10 द1 ग्र1.2 मुवें. मुए. °प्रसूतास्तु (→°प्रसूतास्ता). –d) दे2 नद्याः (→नद्यः); दे6 पुण्यजनाः (→पुण्यजलाः); द1 शिवाः (→शुभाः); मुवें. मुए. मुब. सद्यः पापहरा नृणाम्.

३५. ब1-3 दे1-7 न1 द1 ग्र1.2 म1. ⊙; दे8.9. a –e ⊙. –a) मुए. मुब. भीमरक्षी (→भीमरथी). –b) ते1 कृष्णा वेणी च पजरा, मुवें. मुए. मुब. कृष्णा वेणा च वश्यता. –e) दे10 दक्षिणा पथनद्यास्तु, ते1 मुवें. मुए. मुब. दक्षिणापथनद्यस्तु. –f) दे10 ते1 मुवें. मुए. मुब. सह्यपादाद् (→सह्यपाद-).

३६. ब1-3 दे1-6. ⊙; दे7. ab ⊙. –a) मुब. कृतमाला (→ऋतुमाला). –b) दे8-10 मुवें. मुए. मुब. पुष्प-

कूर्मपुराणे १.४७.३८ ऋषिकुल्या त्रिसामा च मन्दगा मन्दगामिनी ।
रूपा पालासिनी चैव ऋषिका वंशकारिणी ।
शुक्तिमत्पादसंजाताः सर्वपापहरा नृणाम् ॥३७
आसां नद्युपनद्यश्च शतशो द्विजपुंगवाः ।
सर्वपापहराः पुण्याः स्नानदानादिकर्मसु ॥३८
तास्विमे कुरुपाञ्चाला मध्यदेशादयो जनाः ।
पूर्वदेशादिकाश्चैव कामरूपनिवासिनः ॥३९
पुण्ड्राः कलिङ्गा मगधा दाक्षिणात्याश्च कृत्स्नशः ।
तथा परान्ताः सौराष्ट्राः शूद्रा भीरास्तथाऽर्बुदाः ॥४०
मालका मालवाश्चैव पारियात्रनिवासिनः ।
सौवीराः सैन्धवा हूणा शाल्वाः कल्पनिवासिनः ॥४१
मद्रा रामास्तथाऽम्बष्ठाः पारसीकास्तथैव च ।
आसां पिबन्ति सलिलं वसन्ति सरितां सदा ॥४२

(मुवें. °ष्य)वत्युत्पलावती. –c) दे10 मलया च सुता नद्यः. –d) दे10 शीतलजाः स्मृताः, ते1 शीतजलावहाः (→शीतजलाः स्मृताः).

३७. न1. ⊙; दे1. ab ⊙. –a) दे3.9.10 °कुला, दे8 °कूला (→°कुल्या); दे10 त्रिमासा, ते1 -द्रिमासा (→त्रि-सामा). –b) दे7 * * * मंद°, दे8-10 मुवें. मुए. मुब. गन्ध-मादन°, ते1 नन्दना मन्द° (→मन्दगा मद°). –c) ब2 दे1 ते1 कूपा (ते1 °प), दे7.10 मुवें. मुए. मुब. क्षिप्रा, दे9 क्षिपा (?) (→रूपा); ब1 पालाशिना, ब2 दे3.4.8 पालाशिनी, दे1.6.7.9 ग्र1 म1 मुवें. मुए. मुब. पलाशिनी, दे10 पलानिशी, ते1 पाता-शनी, द1 ग्र1 पलाशनी (→पालासिनी). –d) दे3 ऋषिका, दे4 म1 मुवें. मुए. मुब. ऋषीका, द1 ग्र1 इषिका, ग्र2 ऋषिकं (→ऋषिका); ब3 दे6.7 रसकारिणी, दे3 रशकारिणी, दे1.4.8-10 द1 ग्र1 म1 मुवें. मुए. मुब. वंशधारिणी, ते1 वंशचारिणी, ग्र2 पाथधारिणी (→वंशकारिणी). –e) दे3 मुक्ति°, द1 शक्ति° (→शुक्ति°).

३८. न1. ⊙. –a) दे4 द1 ग्र1 म1 तासां (→आसां); ते1 नद्योप° (→नद्युप°); दे1 आसामन्या ह्युपनद्यः, ग्र2 तासान्न * * * * *. –b) दे1 मुनि°(→द्विज°); म1 शतशोथ सहस्रशः. –c) का1 ब1.3 दे1-3.7 सर्वाः (→सर्व-); ब1 * *, दे3 म1 पुण्या, दे10 पुण्यां, ग्र2 नित्यं (→पुण्याः).

३९. न1. ⊙. –a) दे4 पश्चिमे, ते1 तास्वेमे, ग्र2 तास्तुमे (→तास्विमे). –b) दे7 मद्र° (→मध्य°); ग्र2 मध्यमे दशलोचनाः, म1 मध्यमे दशयोजनाः. –c) दे10 °देकादशाश्(?), ते1 द1 ग्र1 म1 °देवादिकाश्, ग्र2 °देवात्रिका (→°देशादिकाश्). –d) ग्र1 म1 °रूपा (→°रूप-).

४०. न1. ⊙; दे3.6. ४०a–४१b ⊙; ब2. ४०b–४१c ⊙. –a) का1 दे2 ओष्ट्राः, ब2 ओड्राः, ब3 उड्राः, दे1.7 पौंड्राः, दे4 अष्ट्राः, दे5 ओद्भाः, दे8-10 उढ्रा (दे10 द्राः), ते1 जनाः, द1 आंध्रा, ग्र1 ओष्ट्राः, ग्र2 औत्राः, म1 औढ्राः (→पुण्ड्राः); दे5 कालिंग- (→कलिङ्गा). –b) का1 दे2 दक्षिणाद्याश्च, दे1.7 दाक्षिणाशा च, दे10 दाक्षिणाश्वाश्च (→दाक्षिणात्याश्च); दे7 कृत्स्नांशः (→कृत्स्नशः). –c) द1 अथा (→तथा); दे8-10 परात्य (→परान्ताः); दे5 सौराष्ट्रोः, दे8-10 म1 मुवें. मुए. मुब. सौराष्ट्र- (→सौराष्ट्राः). –d) का1 शुद्धा, दे2.5 ते1 शूरा, द1 शूद्रो (→शूद्रा); दे4 जारास्, दे8-10 मुवें. मुए. हीनास्, ते1 भीतास्, ग्र2 वीरास् (→भीरास्); दे4 ग्र2 तथा बुधाः, दे5 तथार्बुदः, ते1 तथा जनाः, म1 तथाबुदाः (→तथाऽर्बुदाः).

४१. न1. ⊙; ब2. abc ⊙ (द्र. ४० पा. वि.); दे3.6. ab ⊙ (द्र. ४० पा. वि.); ब1 दे4. cd ⊙. –a) का1 दे2 मालाका मा(दे2 म)नवाश्, दे1.7 शालका म(दे7 मा)लवाश्, दे4 मालका मलवाश्, दे5 मालका मानवाश्, दे8-10 मालका मलयाश्, ते1 सालका मालवाश्, द1 मलदाः करुशाश्, ग्र2 कालका मालवाश्, म1 मालका मालकाश्, मुवें. मुए. मालका मलपाश् (→मालका मालवाश्). –b) ब1.3 दे5 मुब. पारिपात्र- (ब3 °त्रे), दे8.9 द1 ग्र1.2 मुए. पारियात्रा (→पारियात्र-). –c) ब3 दे2.3.5-7 कूणाः (→हूणा). –d) द1 ग्र1.2 म1 साल्वा (→शाल्वाः); का1 साल्वा कल्पे निवासिनः, ब2.3 दे1 सान्धाः कल्प (दे1 प) निवासिनः, दे5 शाल्वा कल्प-भिवासिना, दे8-10 माल्या (दे10 ल्य) बाल्यां निवासिनः, ते1 सर्वाः कल्पनिवासिनः, मुवें. मुए. माल्या बाल्या निवासिनः, मुब. शाल्वा कान्यनिवासिनः.

४२. न1. ⊙; दे4. c ⊙. –a) का1 दे5 मात्रा वामास्, दे2 मा * वामास्, दे4 म1 मद्रावामास्, दे8.9 मुवें. मुए. मुब. माद्रा रामास्, दे10 माद्रा वांध्रास्, ते1 मद्राकौमास्, द1 ग्र1.2 माद्रा वामास् (→मद्रा रामास्); ब1 तथाम्वष्ठां, ब3 तथांपुष्टा, दे4 तथावगाः, दे8.9 मुवें. मुए. मुब. तथा वांध्रा, दे10 तथा रामा (→तथाम्बष्ठाः). –b) का1 ब2.3 दे2.5 पारशीकास्, दे1 पारशैकास्, ते1 पादशीकास् (→पारसीकास्). –c) ब3 तासां, ग्र2 आंबी (→आसां), दे1 पिवन्ताः, ते1 पिबन्तं (→पिबन्ति). –d) ब1 वदन्ति, दे3.7 वसन्तः (→वसन्ति);

चत्वारि भारते वर्षे युगानि कवयोऽब्रुवन् ।
कृतं त्रेता द्वापरं च कलिश्चान्यत्र न क्वचित् ।।४३
यानि किंपुरुषाद्यानि वर्षाण्यष्टौ महर्षयः ।
न तेषु शोको नायासो नोद्वेगः क्षुद्भयं न च ।।४४
स्वस्थाः प्रजा निरातङ्काः सर्वदुःखविवर्जिताः ।
रमन्ति विविधैर्भावैः सर्वाश्च स्थिरयौवनाः ।।४५

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायां पूर्वविभागे पञ्चचत्वारिंशोऽध्यायः ।।४५।।

# ४६

सूत उवाच ।❀
हेमकूटगिरेः शृङ्गे महाकूटैः सुशोभनम् ।
स्फाटिकं देवदेवस्य विमानं परमेष्ठिनः ।।१
अथ देवादिदेवस्य भूतेशस्य त्रिशूलिनः ।
देवाः सिद्धगणा यक्षाः पूजां नित्यं प्रकुर्वते ।।२
स देवो गिरिशः सार्द्धं महादेव्या महेश्वरः । वें.१.४८.३

---

दे1 सरितां तथा, दे4 सलिला सदा, म1 सरितांस्तदा (→सरितां सदा).

४३. न1. ⊙. –b) दे2 युगाने (→युगानि). –c) दे7 ग्र2 कृत- (→कृतं); का1 ब1-3 दे2.5.7 द1 ग्र1.2 द्वापरश्च (→द्वापरं च). –d) दे1 च (→न); ग्र1 कलिश्चात्र न कुत्रचित्, ग्र2 कलित्रान्यश्च ता क्वचित्, म1 कलिरन्यत्र न क्वचित्.

४४. न1. ⊙. –b) का1 दे1.6 वर्षान्यिष्टौ, दे7 वर्षाण्याष्टौ (→वर्षाण्यष्टौ). –c) दे10 तेन (→तेषु); दे3 शोका, द1 रोगा, ग्र1 योगो, ग्र2 म1 रोगो (→शोको); का1 नायाशो, ब1 नायादो, ब2 नोद्वेगो, ग्र2 नायासः (→नायासो); दे4 न तेषु शोभनायासो, ते1 नायसाधनचातंका. –d) ब2 नायासः, ग्र2 नोद्वेगे (→नोद्वेगः); ब1 क्षुद्भयान्वितः, ग्र2 क्षुद्भयन्नपि (→क्षुद्भयं न च).

४५. न1. ⊙. –a) का1 ब2 दे2 सुस्थाः, दे5 सुस्थां (→स्वस्थाः); का1 मुवें. मुए. मुब. प्रजाः (→प्रजा); दे4 द1 ग्र1.2 म1 स्वस्थाः (द1 °स्थः) प्रमुदितश्चैव. –b) दे4 द1 ग्र1.2 म1 नित्यं (→सर्व-). –c) ब1 दे1.4.8.9 ते1 द1 ग्र1.2 म1 मुवें. मुए. मुब. रमन्ते (→रमन्ति); दे4.10 ते1 ग्र1.2 म1 भोगैः, द1 भागैः (→भावैः). –d) दे5 सर्वाश्व-, दे6 सर्वाश्चा-, ते1 स्वस्थाश्च (→सर्वाश्च).

**पुष्पिका—** [न1 द1 पुस्तकयोरध्यायसमाप्तिर्नास्ति]

**पुराणनाम—**का1 दे1.4.6-10 ग्र2 मुवें. मुए. इति श्रीकू(का1 कौ)र्मपुराणे, ब1-3 दे2.3.5 ग्र1 इति कू(दे2 कौ)र्मपुराणे, ते1 इत्यादिमहापुराणे श्रीकौर्मे, म1 इति श्रीमत्कूर्मपुराणे, मुब. इति श्रीकौर्मे महापुराणे पूर्वभागे. **अध्यायनाम—**का1 ब1.2 दे2-6 ग्र1.2 म1. ⊙; ब3 दे1.7 ते1 भुवनकोशे, दे8-10 मुए. भुवनकोशवर्णने, मुवें. भुवनकोशवर्णनं नाम, मुब. भुवनकोषविन्यासे. **अध्यायसंख्या—**दे6. ⊙; का1 ब1.3 दे2.3.5 ग्र1 चतुश्चत्वारिंशोऽध्यायः, ब2 ।।४४।।, दे1.8.9 मुए. सप्तचत्वारिंशोऽध्यायः, दे4 चतुश्चत्वारिंशोऽध्यायः ।।४४।।, दे7 मुवें. सप्तचत्वारिंशोऽध्यायः ।।४७।।, दे10 सप्तचत्वारिंशोऽध्यायः ।।४७।। शके १८१६ मार्गशीर्ष शुक्ल १२ इंदुवासरे प्रथमप्रहरे लिखितं संवत् विक्रमार्क १९५१, ते1 भ्रष्ट, + पंच चत्वारिंशोऽध्यायः, ग्र2 म1 मुब. षट्चत्वारिंशोऽध्यायः.

**४६**

❀ न1 द1. ⊙; दे8.9 सूत उ.; ते1 ग्र1.2 म1 सूतः.

१. का1 द1 ग्र1.2 म1. bc ⊙. –a) ब2.3 दे6 हेमकूटे (→हेमकूट-); ब1.2 दे2.6 द1 ग्र1 -गिरि- (→-गिरेः). –b) ब1.2 दे1.2.3 -महाकूटे, दे8-10 मुवें. मुए. मुब. महाकूटं (→महाकूटैः). –d) ग्र2 विमानाः (→विमानं); का1 स्फटिकं परमेष्ठिनः.

२. न1. ⊙; दे3.6. ab ⊙. –a) द1 ग्र2 म1 [illegible]स्य (→तत्र); दे4.8-10 मुवें. मुए. मुब. देवाधि° (→देवादि°). –b) दे4 त्रिलोचनः (→त्रिशूलिनः); म1 भवस्यायतनं महत्. –c) ग्र2 देव- (→देवाः); दे8-10 मुवें. मुए. मुब. देवाः सर्षिगणाः सिद्धाः, ते1 देवा ऋषिगणाः सिद्धाः. –d) दे10 द1 ग्र1.2 म1 पूजाः (→पूजां).

३. न1. ⊙. –a) दे8-10 मुवें. मुए. देव्या (→देवो); द1 सदा यो गिरिशः सार्धा. –b) दे8-10 मुवें. मुए. महादेवो

वैं. १.४८.३ भूतैः परिवृतो नित्यं भाति तत्र पिनाकधृक् ॥३
विभक्तचारुशिखरः कैलासो यत्र पर्वतः ।
निवासः कोटियक्षाणां कुबेरस्य च धीमतः ।
तत्रापि देवदेवस्य भवस्यायतनं महत् ॥४
मन्दाकिनी तत्र दिव्या रम्या सुविमलोदका ।
नदी नानाविधैः पद्मैरनेकैः समलङ्कृता ॥५
देवदानवगन्धर्वयक्षराक्षसकिंनरैः ।
उपस्पृष्टजला नित्यं सुपुण्या सुमनोरमा ॥६
अन्याश्च नद्यः शतशः स्वर्णपद्मैरलङ्कृताः ।
तासां कूलेषु देवस्य स्थानानि परमेष्ठिनः ।
देवर्षिगणजुष्टानि तथा नारायणस्य च ॥७
सितान्तशिखरे चापि पारिजातवनं शुभम् ।
तत्र शक्रस्य विपुलं भवनं रत्नमण्डितम् ।
स्फाटिकस्तम्भसंयुक्तं हेमगोपुरसंयुतम् ॥८
तत्राथ देवदेवस्य विष्णोर्विश्वामरेशितुः ।
सुपुण्यं भवनं रम्यं सर्वरत्नोपशोभितम् ॥९
तत्र नारायणः श्रीमान् लक्ष्म्या सह जगत्पतिः ।
आस्ते सर्वामरश्रेष्ठः पूज्यमानः सनातनः ॥१०
तथा च वसुधारे तु वसूनां रत्नमण्डितम् ।
स्थानानामष्टकं पुण्यं दुराधर्षं सुरद्विषाम् ॥११
रत्नधारे गिरिवरे सप्तर्षीणां महात्मनाम् ।
सप्ताश्रमाणि पुण्यानि सिद्धावासयुतानि तु ॥१२

---

(→महादेव्या). –d) द1 पतिर् (→भाति); द1 ग्र2 म1 यत्र (→तत्र).

४. न1. ⊙. –a) ब1 ते1 ग्र2 म1 विभक्तश् (→विभक्त-). –b) ब3 दे1.2.6.9 कैलाशो (→कैलासो). –d) दे1 म1 तु (→च). –f) म1 हरस्या° (→भवस्या°).

५. –a) द1 म1 यत्र (→तत्र); दे1.8-10 ते1 मुवें. मुए. मुब. पुण्या (→दिव्या). –b) का1 स-, दे4 द1 ग्र1.2 म1 तु (→सु-); ब1 न1 ते1 विपुलो° (→विमलो°). –c) ग्र2 °विधः (→°विधैः); न1 पुष्पैः (→पद्मैः). –d) ते1 स्वर्णकैस् (→अनेकैः).

६. दे4.6. ⊙. –b) दे10 °पन्नगैः (→°किनरैः). –c) ब3 दे3.7.10 न1 उपस्पृश्य, ग्र2 उपस्पृष्टा (→उपस्पृष्ट-). –d) दे3 सुमन्या (→सुपुण्या); ब2 दे1 ग्र2 सुमनोहरा (→सुमनोरमा); ते1 सुवर्ण्यः सुमनोरमाः.

७. –a) ग्र2 अन्याश्च विविधा नद्याः. –b) ते1 स्वर्णैः, द1 ग्र1.2 म1 स्थल-(→स्वर्ण-). म1. cd ⊙. –c) का1 दे8-10 मुवें. मुए. मुब. कूले तु, द1 ग्र1.2 म1 पद्मानि (→कूलेषु). –d) दे4 स्थानानि परमाणि च, म1 पूजायोग्यानि शूलिनः. –e) ग्र2 °दुष्टानि (→°जुष्टानि); दे4 देवर्षिनगपुष्टानि. –f) दे4 द1 ग्र1.2 तेषां (→तथा); दे5 वः, दे8-10 मुवें. मुए. मुब. तु (→च).

८. म1. cdef ⊙; ब1. ef ⊙. –a) का1 दे2.5 सीतान्त-, ब1 दे4 शितान्त-, ब2.3 सिताभ्र-, दे6 ग्र2 शीतान्त-, दे8-10 मुवें. मुए. मुब. तस्यापि, ते1 श्वेतान्त- (→सितान्त-); दे4 -शिखरं (→-शिखरे); दे4 वापि, दे8-10 मुवें. मुए. मुब. शुभ्रं, द1 ग्र1.2 म1 भाति (→चापि). –b) द1 ग्र2 वापिकाननवं शुभं, ग्र1 वापिका तु नवा शुभा, म1 विष्णोरमिततेजसः. –c) ब1.3 मुब. शुक्रस्य (→शक्रस्य); द1 भवनं, ग्र1 नगरं, ब2 देवस्य (→विपुलं). –d) ते1 °मन्दिरम् (→°मण्डितम); द1 विपुलं रत्नमण्डितम्, ग्र1 रत्नगोपुरशोभितम्, ग्र2 स्थानं परमशोभनम्. –e) का1 दे3-5.7 द1 स्फटिकः (दे4 °कं), ते1 स्फाटिकं (→स्फाटिक-). –f) का1 °नूपुर° (→°गोपुर°); ब2 दे1.4. 8-10 न1 ते1 ग्र1 मुवें. मुए. मुब. °शोभितम् (→°संयुतम्).

९. ब1 दे10. ⊙; म1. ab ⊙. –a) दे4 द1 ग्र1.2 तत्रैव (→तत्राथ). –b) दे3.6.7 विष्णोर्विश्रामवेशितुः, दे8.9 मुवें. मुए. मुब. विष्णोर्विश्वात्मनः प्रभोः. –c) का1 स्वपुण्यं, दे8.9 मुवें. मुए. मुब. पुण्यं च, ते1 सुवर्णं (→सुपुण्यं); ग्र1 ते1 भुवनं (→भवनं).

१०. ब1. ⊙; ग्र2. bc ⊙. –b) न1 ते1 द1 ग्र2 म1 नारायण- (→नारायणः). –c) दे8-10 मुवें. मुए. मुब. सर्वेश्वरः (→सर्वाम°); दे1 न1 -श्रेष्ठैः (→-श्रेष्ठः).

११. ब1. ab ⊙; द1. cd ⊙. –a) दे3.6.7 तु (→च); दे4 वसुरूपाणां, दे6 वसुधा च तु, ते1 वसुरागे तु (→वसुधारे तु). –c) ब3 दे2.5 मुब. अष्टमं, दे1 अष्टकैः, दे8-10 मुवें. मुए. उत्तमं (→अष्टकं); दे1 पुण्यैः, म1 स्थानं, मुब. पुण्य (→पुण्यं); ग्र2 वनानामसृजं पुण्यं.

१२. द1. ⊙. –a) का1 रत्नचारे, दे5 स्व*धारं, ते1 रत्नधारा, ग्र1 मुब. रत्नाधारे, म1 नानावासे (→रत्नधारे). –c) ग्र1.2 म1 सिद्धा° (→सप्ता°). –d) दे1 देववास-, दे8-10 मुवें. मुए. मुब. सिद्धावासरैः, ग्र1.2 म1 सिद्धावासा- (→सिद्धवास-); का1 दे8-10 मुवें. मुए. मुब. च (→तु).

नं शुभम् हैमं चतुर्द्वारं वज्रनीलादिमण्डितम् ।
मण्डितम् सुमहत् स्थानं ब्रह्मणोऽव्यक्तजन्मनः ॥१३
रसंयुतम् देवर्षयो विप्राः सिद्धा ब्रह्मर्षयोऽपरे ।
मरेशितुः ते सदा देवं पितामहमजं परम् ॥१४
शोभितम् संपूजितो नित्यं देव्या सह चतुर्मुखः ।
जगत्पतिः हिताय लोकानां शान्तानां परमा गतिः ॥१५
सनातनः शृङ्गशिखरे महापद्मैरलङ्कृतम् ।
ण्डितम् अमृतजलं पुण्यं सुगन्धं सुमहत् सरः ॥१६
रद्विषाम् व्याश्रमं तत्र योगीन्द्रैरुपशोभितम् ।
त्मनाम् सौ भगवान् नित्यमास्ते शिष्यैः समावृतः ।
तानि तु तदोषैरक्षुद्रैर्ब्रह्मविद्भिर्महात्मभिः ॥१७

शङ्खो मनोहरश्चैव कौशिकः कृष्ण एव च ।
सुमना वेदनादश्च शिष्यास्तस्य प्रधानतः ॥१८
सर्वे योगरताः शान्ता भस्मोद्धूलितविग्रहाः ।
उपासते महावीर्या ब्रह्मविद्यापरायणाः ॥१९
तेषामनुग्रहार्थाय यतीनां शान्तचेतसाम् ।
सान्निध्यं कुरुते भूयो देव्या सह महेश्वरः ॥२०
अन्यानि चाश्रमाणि स्युस्तस्मिन् गिरिवरोत्तमे ।
मुनीनां युक्तमनसां सरांसि सरितस्तथा ॥२१
तेषु योगरता विप्रा जापकाः संयतेन्द्रियाः ।
ब्रह्मण्यासक्तमनसो रमन्ते ज्ञानतत्पराः ॥२२
आत्मन्यात्मानमाधाय शिखान्तान्तरमास्थितम् । वें.१.४८.२५

---

म1 विष्णो १३. द1. ab ⊙. –a) दे5 दैवं, दे6 न1 ते1 ग्र2 हेमं
य); द1 मं). –b) का1 इन्द्र-, दे1 रत्न-, ते1 तत्र (→वज्र-);
ते1 °म नीलाति°, ग्र1.2 म1 °रत्नादि° (→°नीलादि°);
ग्र1 रत्न मण्डलं (→°मण्डितं). –c) दे4 सुपर्णं, दे7 सुपुण्यां
का1 दे3- पुण्यं); का1 च महत्, ब2 दे4 ग्र1 म1 सुमहा-, दे1
क-). –f) त्, दे8-10 मुवें. मुए. मुब. सदव- (→सुमहत्).

ग्र1 मुवें १४. –b) ग्र2 विप्रर्षयोः (→ब्रह्मर्षयोः). –c) ब1 तदा,
-7 ते1 द1 ग्र1.2 महादेवं, दे8-10 मुवें. मुए. मुब. देवदेवं
a) दे4 द1 दा देवं). –d) न1 पुरं (→परम्).

र्विश्रामवे १५. –a) दे8-10 मुवें. मुए. मुब. सर्वैः, ते1 तत्र
गोः. –c) त तैः); दे1 सुपूजितो, ते1 म1 संपूज्यते (→संपूजितो).
र्णं (→सु ) ते1 आत्मन्याहितलोकानां सांशानां परमा गतिः.

ते1 द1 ग्र १६. –a) ब1-3 दे1-4.6.7 न1 ते1 तथैक° (दे1 न1 °कं)
. मुए. 0 मुवें. मुए. मुब. तस्यैक° (→अथैक°); ग्र2 अहेमं
ः). गरौ. –b) द1 ग्र1.2 म1 महाशृङ्गैर् (→महापद्मैर्); ब3
ङ्कृता, दे10 मुवें. मुए. मुब. अलङ्कृते (→अलङ्कृतं);
-a) दे3.6 महाशृङ्गैरलंकृतम्. –c) ब1.2 दे5.10 स्वस्था°
ते1 वसुर स्वच्छा°); दे4 स्वच्छामृतामलं पुण्यं. –d) दे3.7 परं, दे5
दे1 अ (→सरः).

, म1 स १७. –a) दे4 द1 ग्र1.2 म1 जैमिनेराश्रमं (→जैगीष-
श्रमं); ब2 दे2.3.5-7 तच्च, दे4. 8-10 न1 मुवें. मुए. मुब.
स्व*धार (→तत्र). –b) दे1.8.9 न1 मुवें. मुए. मुब. °सेवितं
→रत्नध °शोभितं). –c) दे4. 8-10 ते1 द1 ग्र1.2 म1 मुवें. मुए.
1 देवव . तत्रास्ते (→तत्रासौ). –d) दे4 अस्ति, दे7.8-10 मुवें.
सिद्धाव . मुब सर्व-, द1 ग्र1 आप्त-, म1 इष्ट- (→आस्ते). –e)
तु). °रोषैर् (→°दोषैर्).

१८. –a) द1 ग्र1 म1 शुक्रो, ग्र2 शुको (→शङ्खो); ते1 मनोरमश् (→मनोहरश्). –b) दे3.6.7 कर्ण, ग्र2 कृत्स्न (→कृष्ण). –c) दे8-10 सुमहान्, न1 समना (→सुमना); ब1.2 दे3.6.10 मुवें. मुए. मुब. वेदवादश्, ब3 देववादश्, दे1 वेद वा*, दे5 चरेदनादश्, दे8.9 वेदविदश्, न1 वेदपादाश्, ते1 वेदपारश्, द1 ग्र1 देवनादश्, ग्र2 देवदानश् (→वेदनादश्). –d) ग्र2 क्षेत्र- (→तस्य); दे1.8-10 ते1 मुवें. मुए. मुब. प्रसादतः (→प्रधानतः).

१९. –a) ब2 दे4.7-10 ते1 द1 ग्र1.2 म1 मुवें. मुए. मुब. सर्व- (→सर्वे); ब1 °गताश्, द1 ग्र1.2 °पराश्, म1 °भराश् (→°रताश्). –c) ब1 ते1 मुवें. मुए. मुब. महाचार्याः, दे8-10 सदाचार्याः, न1 सहाश्चर्या, द1 म1 महाचार्यं, ग्र1 महादेवं, ग्र2 महावीर्यं (→महावीर्या).

२०. ते1. २०c–४५b ⊙. –b) ब2 °रेतसां (→°चेतसां). –c) दे1 कुरुतो (→कुरुते).

२१. ते1. ⊙ (द्र. २० पा. वि.). –a) दे1.8-10 न1 मुवें. मुए. मुब. अनेकान्या° (→अन्यानि चा°). –b) दे5 °वरोत्तमैः (→°वरोत्तमे). –c) द1 ग्र1.2 म1 यतीनां (→मुनीनां); का1 दे2.4.5 मुब. मुक्त-, दे1 युक्तं (→युक्त-); दे5 -मनसि, ग्र2 -चेतसां (→-मनसां).

२२. ते1. ⊙. –a) दे8-10 वैद्या (→विप्रा).

२३. ते1. ⊙; ब1. ab ⊙. –a) का1 दे2-6 स्वात्म° (→आत्म°); का1 दे1 अध्याय, दे4 आदाय (→आधाय); द1 ग्र1.2 म1 स्वात्मन्याध्याय चात्मानं. –b) ब2 दे1.4 मुब. -संस्थितं, न1 -सान्त्वितं (→आस्थितं); दे8-10 ते1 मुवें. मुए.

वें.१.४८.२५

ध्यायन्ति देवमीशानं येन सर्वमिदं ततम् ॥२३
सुमेघे वासवस्थानं सहस्रादित्यसंनिभम् ।
तत्रास्ते भगवानिन्द्रः शच्या सह सुरेश्वरः ॥२४
गजशैले तु दुर्गाया भवनं मणितोरणम् ।
आस्ते भगवती दुर्गा तत्र साक्षान्महेश्वरी ॥२५
उपास्यमाना विविधैः शक्तिभेदैरितस्ततः ।
पीत्वा योगामृतं लब्ध्वा साक्षादानन्दमैश्वरम् ॥२६
सुनीलस्य गिरेः शृङ्गे नानाधातुसमुज्ज्वले ।
राक्षसानां पुराणि स्युः सरांसि शतशो द्विजाः ॥२७
तथा पुरशतं विप्राः शतशृङ्गे महाचले ।
स्फाटिकस्तम्भसंयुक्तं यक्षाणाममितौजसाम् ॥२८
श्वेतोदरगिरेः शृङ्गे सुपर्णस्य महात्मनः ।
प्राकारगोपुरोपेतं मणितोरणमण्डितम् ॥२९
स तत्र गरुडः श्रीमान् साक्षाद् विष्णुरिवापरः ।
ध्यात्वास्ते तत् परं ज्योतिरात्मानं विष्णुमव्ययम् ॥३०
अन्यच्च भवनं पुण्यं श्रीशृङ्गे मुनिपुंगवाः ।
श्रीदेव्याः सर्वरत्नाढ्यं हैमं सुमणितोरणम् ॥३१
तत्र सा परमा शक्तिर्विष्णोरतिमनोरमा ।
अनन्तविभवा लक्ष्मीर्जगत्संमोहनोत्सुका ॥३२
अध्यास्ते देवगन्धर्वसिद्धचारणवन्दिता ।
विचिन्त्य जगतो योनिं स्वशक्तिकिरणोज्ज्वला ॥३३
तत्रैव देवदेवस्य विष्णोरायतनं महत् ।
सरांसि तत्र चत्वारि विचित्रकमलाश्रया ॥३४

---

शिखान्ते पर्यवस्थितम्, द$_1$ शिवं स्वान्तरसंस्थितं, ग्र$_1$ शिखाभ्रमरसंस्थितः, ग्र$_2$ निराशाश्च सुसंयताः, म$_1$ यतयो ब्रह्मसंस्थिताः. –c) दे$_{8-10}$ ध्यायन्ते (→ध्यायन्ति). –d) ग्र$_2$ ततः (→ततम्).

२४. ते$_1$. ⊙. –a) का$_1$ सुमेध्ये, दे$_{1.5}$ सुमेघे, दे$_2$ स्वमेघे, दे$_3$ शुभोघं, दे$_7$ अमेघं, दे$_{8-10}$ ते$_1$ मुवें. मुए. मुब. सुमेघं, न$_1$ सुमेघ-, द$_1$ सुमेधा (→सुमेघे).

२५. ते$_1$. ⊙. –a) दे$_9$ राज°, + गज°, द$_1$ ग्र$_{1.2}$ राज°, म$_1$ हिम° (→गज°). –c) म$_1$ रुद्रा (→दुर्गा). –d) दे$_5$ महेश्वरा, ग्र$_2$ महेश्वरः (→महेश्वरी).

२६. ते$_1$. ⊙. –c) दे$_{10}$ पीत- (→पीत्वा); दे$_{1.5.9.10}$ लब्धा, न$_1$ बुध्वा, द$_1$ ग्र$_{1.2}$ लक्ष्म्यां, मुब. लब्ध- (→लब्ध्वा). –d) दे$_{7-9}$ ते$_1$ मुवें. मुए. मुब. अमृत° (→आनन्द°).

२७. ते$_1$. ⊙. का$_1$ ब$_1$ दे$_{2-6}$ द$_1$ ग्र$_{1.2}$ म$_1$. २७b–२६a ⊙ (द. सं.). –a) दे$_6$ स्वनीलस्य, दे$_{8.9}$ मुए. मुब. सुलीलस्य (→सुनीलस्य). –b) ब$_{2.3}$ दे$_{1.7.10}$ न$_1$ °रत्न- (→°धातु-); ब$_2$ -समाकुले (→-समुज्ज्वले).

२८. का$_1$ ब$_1$ दे$_{2-6}$ ते$_1$ द$_1$ ग्र$_{1.2}$ म$_1$. ⊙. –a) ब$_{2.3}$ शतपुरं, न$_1$ पुरः शतं (→पुरशतं). –d) दे$_{7.10}$ अमितै° (→अमितौ°).

२९. ते$_1$. ⊙; का$_1$ ब$_1$ दे$_{2-6}$ द$_1$ ग्र$_{1.2}$ म$_1$. a ⊙. –b) म$_1$ गरुडस्य (→सुपर्णस्य). –c) न$_1$ °तोरणो° (→°गोपुरो°). –d) दे$_{8-10}$ न$_1$ °मण्डपं (→°मण्डितं).

३०. ते$_1$. ⊙. –a) म$_1$ तत्रास्ते (→स तत्र). –c) ब$_2$ ध्यात्वा च, दे$_4$ ध्यायन् वै, द$_1$ ग्र$_{1.2}$ म$_1$ ध्यायते (→ध्यात्वास्ते); दे$_{8-10}$ मुवें. मुए. ध्यात्वा तत् परमं ज्योतिर्, न$_1$ ध्यात्वा ततः परं ज्योतिर्. –d) दे$_{8-10}$ मुवें. मुए. आत्मन्येवमथाव्ययम्.

३१. ते$_1$. ⊙. –a) दे$_{8.9}$ भवता, दे$_{10}$ भुवनं (→भवनं). –b) ब$_1$ श्रीशृङ्गं, ब$_2$ शृङ्गेऽस्य, दे$_4$ द$_1$ ग्र$_{1.2}$ म$_1$ त्रिशृङ्गे (→श्रीशृङ्गे); दे$_1$ न$_1$ °सत्तमाः, दे$_{8.9}$ °पुङ्गवः (→°पुङ्गवाः). –c) दे$_{3.6}$ °देव्या (→°देव्याः); दे$_{3.6}$ सह, दे$_7$ वर- (→सर्व-). –d) न$_1$ द$_1$ हेमं (→हैमं); दे$_{8.9}$ मुवें. मुए. मुब. स- (→सु-); दे$_{3.6.7}$ हैमं मणिसुतोरणम्.

३२. ते$_1$. ⊙. –a) दे$_{10}$ शक्ति (→°शक्तिर्). –b) दे$_{4.6}$ विष्णोरेव, द$_1$ ग्र$_{1.2}$ म$_1$ विष्णोरपि (→विष्णोरति-). –d) दे$_4$ ग्र$_{1.2}$ म$_1$ जगतां (→जगत्सं-).

३३. ते$_1$. ⊙. –a) न$_1$ अद्यास्ते (→अध्यास्ते); दे$_4$ दैव° (→देव°). –c) दे$_{8-10}$ मुवें. मुए. मुब. विचिन्त्या (→विचिन्त्य); दे$_4$ जगतां (→जगतो); दे$_{5.8-10}$ मुवें. मुए. मुब. योनिः, ग्र$_2$ योऽन्यं (→योनिं); म$_1$ चिन्तयन्ति जगद्योनिं. –d) का$_1$ द$_1$ ग्र$_1$ स्वशक्त्या, दे$_3$ सुशक्ति-, दे$_4$ सशक्ति-, ग्र$_2$ सशक्त्या (→स्वशक्ति-); द$_1$ ग्र$_{1.2}$ -भरणो° (→-किरणो°); म$_1$ पुण्डरीकाक्षमव्ययम्.

३४. ते$_1$. ⊙; दे$_3$. ३४d–३६c ⊙. –c) दे$_7$ रम्याणि (→चत्वारि). –d) ब$_2$ °कमलोश्रयः, दे$_1$ °कमलोज्वला, दे$_{2.8-10}$ मुवें. मुए. मुब. °कमलाशया, द$_1$ ग्र$_1$ °कमलश्रिया, म$_1$ °कमलानि च (→°कमलाश्रया).

तथा सहस्रशिखरे विद्याधरपुराष्टकम् ।
रत्नसोपानसंयुक्तं सरोभिश्चोपशोभितम् ॥३५

नद्यो विमलपानीयाश्चित्रनीलोत्पलाकराः ।
कर्णिकारवनं दिव्यं तत्रास्ते शंकरोमया ॥३६

पारियात्रे महाशैले महालक्ष्म्याः पुरं शुभम् ।
रम्यप्रासादसंयुक्तं घण्टाचामरभूषितम् ॥३७

नृत्यद्भिरप्सरःसंघैरितश्चेतश्च शोभितम् ।
मृदङ्गमुरजोद्घुष्टं वीणावेणुनिनादितम् ॥३८

गन्धर्वकिंनराकीर्णं संवृतं सिद्धपुंगवैः ।
भास्वद्भित्तिसमाकीर्णं महाप्रासादसंकुलम् ॥३९

गणेश्वराङ्गनाजुष्टं धार्मिकाणां सुदर्शनम् ।
तत्र सा वसते देवी नित्यं योगपरायणा ॥४०

महालक्ष्मीर्महादेवी त्रिशूलवरधारिणी ।
त्रिनेत्रा सर्वशक्तीभिः संवृता सदसन्मया ।
पश्यन्ति तत्र मुनयः सिद्धा ये ब्रह्मवादिनः ॥४१

सुपार्श्वस्योत्तरे भागे सरस्वत्याः पुरोत्तमम् ।
सरांसि सिद्धजुष्टानि देवभोग्यानि सत्तमाः ॥४२

पाण्डुरस्य गिरेः शृङ्गे विचित्रद्रुमसंकुले ।
गन्धर्वाणां पुरशतं दिव्यस्त्रीभिः समावृतम् ॥४३

तेषु नित्यं मदोत्सिक्ता वरनार्यस्तथैव च ।　　वें.१.४८.४६

---

३५. दे$_{3}$ ते$_{1}$. ⊙. –a) का$_{1}$ ब$_{2.3}$ दे$_{2}$ °शिखरैर्, दे$_{6}$ °किरणैर् (→°शिखरे).

३६. ते$_{1}$. ⊙; दे$_{4}$.ab ⊙; दे$_{3}$.d ⊙ –b) दे$_{5}$ °मीलो° (→°नीलो°); न$_{1}$ चित्रनीलोत्पलान्तराः. –c) का$_{1}$ ब$_{1-3}$ दे$_{2.4.6}$ द$_{1}$ ग्र$_{1}$ म$_{1}$ तत्र, दे$_{5}$ ** (→दिव्यं); न$_{1}$ यत्र सालवनं दिव्यं, ग्र$_{2}$ कर्णिकारं तत्र हस्तैः. –d) दे$_{4}$ समास्ते, द$_{1}$ ग्र$_{1}$ म$_{1}$ सहास्ते (→तत्रास्ते); का$_{1}$ दे$_{4.5}$ न$_{1}$ शङ्करोऽम्बया, ब$_{2}$ शङ्कराश्रया, दे$_{1.7}$ शङ्करप्रिया, दे$_{3.6}$ शङ्करो यथा, मुवें. मुए. मुब. शङ्करः स्वयम् (→शङ्करोमया); ग्र$_{2}$ शैलमहालक्ष्म्या परं शिवम्.

३७. ते$_{1}$. ⊙; ग्र$_{2}$.ab ⊙. –a) ब$_{1}$ पारिजातो, दे$_{4.8-10}$ न$_{1}$ द$_{1}$ मुवें. मुए. मुब. पारिजाते (दे$_{4}$ °त-) (→पारियात्रे); दे$_{1}$ महालक्ष्मीं, दे$_{8.10}$ न$_{1}$ द$_{1}$ मुवें. मुए. महालक्ष्म्या, दे$_{9}$ महालक्ष्म- (→महाशैले). –b) दे$_{1}$ कृत्वा तु स्वपुरं महत्, दे$_{10}$ **** पुरं शुभं, मुवें. मुए. पर्वते तु पुरं शुभं. –c) ब$_{2}$ दे$_{3.6}$ द$_{1}$ ग्र$_{1.2}$ रम्यं, दे$_{10}$ तस्य (→रम्य-); दे$_{5}$ ग्र$_{2}$ -प्रसाद- (→प्रासाद-); दे$_{5}$ -युक्त- (→-युक्तं). –d) दे$_{4}$ पूर्ण- (→घण्टा-); ब$_{1}$ दे$_{1}$ °संयुतं, ब$_{2}$ °शोभितं (→°भूषितं); द$_{1}$ ग्र$_{1.2}$ म$_{1}$ पुण्यं चामरसेवितम्.

३८. ते$_{1}$. ⊙; ग्र$_{2}$.ab ⊙. –a) दे$_{1}$ अप्सरा-, दे$_{5}$ अप्सरं, द$_{1}$ अप्सरैः (→अप्सरः). –b) दे$_{5}$ शोभिते (→शोभितं); ब$_{2}$ सर्वतश्च सुशोभनं. –c) दे$_{4.8-10}$ मुवें. मुए. मुब. °पणवो (दे$_{10}$ °वा) द्घुष्टं (दे$_{10}$ °घु-), दे$_{5}$ °मुरजो जुष्टं, न$_{1}$ ग्र$_{2}$ °मुरवो घू(ग्र$_{2}$ घु)ष्टं (→°मुरजोद्घुष्टं). –d) दे$_{8-10}$ न$_{1}$ मुवें. मुए. मुब. वेणुवीणा° (→वीणावेणु°); न$_{1}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ °विनादितं (→°निनादितम्).

३९. ते$_{1}$. ⊙; ग्र$_{2}$.a ⊙. –b) दे$_{4}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ सेवितं सिद्धचारणैः, ग्र$_{1}$ सिद्धचारणसेवितं. –c) ब$_{1}$ दे$_{1.4}$ द$_{1}$ भास्वद्भिश्च (दे$_{4}$ °स्तु) समायुक्तं, दे$_{8.9}$ मुवें. मुए. भास्वद्भिर्भृशमायुक्तं, दे$_{10}$ भास्वद्भिर्भृशसंयुक्तैर्, न$_{1}$ भास्वद्युति समायुक्तं, ग्र$_{1}$ भास्वत्तोरण संयुक्तं, ग्र$_{2}$ भासकं गिरिसमायुक्तं, म$_{1}$ भास्वद्गिरिसमायुक्तं.

४०. ते$_{1}$. ⊙. –a) दे$_{1}$ गणेश्वरसमायुक्तं, दे$_{4}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ गणेश्वर (दे$_{4}$ °रं) गणैर्जुष्टं, दे$_{8-10}$ मुवें. मुए. मुब. महागणेश्वरैर्जुष्टं (दे$_{10}$ °ष्टैः). –c) ब$_{2}$ वर्ण्यते, दे$_{3.6.7}$ रमते (→वसते); द$_{1}$ तत्र वासायते देवी. –d) दे$_{5}$ त्रिशूलवरधारिणी.

४१. ते$_{1}$. ⊙. –a) दे$_{1}$ महारात्रिस् (→महादेवी). –c) द$_{1}$ ग्र$_{1.2}$ म$_{1}$ त्रिणेत्रा (→त्रिनेत्रा); दे$_{8-10}$ न$_{1}$ °शक्त्यौघः, मुवें. मुए. °शक्त्यौघ- (→°शक्तीभिः); ब$_{2}$ मुब. त्रिनेत्रा शक्तिभिर्देवी. –d) ब$_{2}$ दे$_{1.7}$ न$_{1}$ सदसन्मयी, दे$_{8.9}$ सा च सन्मयी, मुवें. मुए. सा च तन्मयी (→सदसन्मया). –f) दे$_{6}$ °वादिनाः, दे$_{10}$ °वादिनी (→°वादिनः).

४२. ते$_{1}$. ⊙. –a) ब$_{1}$ देशे, ग्र$_{2}$ म$_{1}$ पार्श्वे (→भागे). –b) दे$_{4}$ सरस्वत्यामरोत्तमम्. –c) दे$_{4}$ द$_{1}$ देव°, ग्र$_{2}$ रस° (→सिद्ध°); म$_{1}$ सरांसि नद्याश्शिष्टानि. –d) दे$_{4}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ सिद्ध° (→देव°); दे$_{3}$ °सत्तम, ग्र$_{2}$ °सत्तमः (→°सत्तमाः).

४३. ते$_{1}$. ⊙. –a) ब$_{2}$ दे$_{2-7}$ पाण्डवस्य, दे$_{1}$ पांडावस्य, न$_{1}$ म$_{1}$ पांडरस्य (→पाण्डुरस्य). –b) दे$_{8-10}$ मुवें. मुए. °संकुलम् (→°संकुले). –c) ग्र$_{2}$ पर°, (→पुर°); दे$_{4}$ °गतं (→°शतं). –d) दे$_{1}$ निषेवितं (→समावृतम्).

४४. ते$_{1}$. ⊙. –a) दे$_{8-10}$ तेन, ग्र$_{1}$ म$_{1}$ मुवें. तत्र (→तेषु); दे$_{3}$ तेन तत्र मदोत्सिक्ता. –b) ब$_{1}$ न$_{1}$ ग्र$_{2}$ नर°,

वें.१.४८.४७ क्रीडन्ति मुदिता नित्यं विलासैर्भोगतत्पराः ।।४४
अञ्जनस्य गिरेः शृङ्गे नारीणां पुरमुत्तमम् ।
वसन्ति तत्राप्सरसो रम्भाद्या रतिलालसाः ।।४५
चित्रसेनादयो यत्र समायान्त्यर्थिनः सदा ।
सा पुरी सर्वरत्नाढ्या नैकप्रस्रवणैर्युता ।।४६
अनेकानि पुराणि स्युः कौमुदे चापि सुव्रताः ।
रुद्राणां शान्तरजसामीश्वरार्पितचेतसाम् ।।४७
तेषु रुद्रा महायोगा महेशान्तरचारिणः ।
समासते परं ज्योतिरारूढाः स्थानमुत्तमम् ।।४८
पिञ्जरस्य गिरेः शृङ्गे गणेशानां पुरत्रयम् ।
नन्दीश्वरस्य कपिले तत्रास्ते सुयशा यतिः ।।४९
तथा च जारुधेः शृङ्गे देवदेवस्य धीमतः ।
दीप्तमायतनं पुण्यं भास्करस्यामितौजसः ।।५०
तस्यैवोत्तरदिग्भागे चन्द्रस्थानमनुत्तमम् ।
रमते तत्र रम्योऽसौ भगवान् शीतदीधितिः ।।५१
अन्यच्च भवनं दिव्यं हंसशैले महर्षयः ।
सहस्रयोजनायामं सुवर्णमणितोरणम् ।।५२
तत्रास्ते भगवान् ब्रह्मा सिद्धसङ्घैरभिष्टुतः ।
सावित्र्या सह विश्वात्मा वासुदेवादिभिर्युतः ।।५३
तस्य दक्षिणदिग्भागे सिद्धानां पुरमुत्तमम् ।
सनन्दनादयो यत्र वसन्ति मुनिपुंगवाः ।।५४

दे1.4.8-10 द1 ग्र1 म1 मुवें. मुए. मुब. नरा° (→वर°). –c) ब3 मुनिना (→मुदिता). –d) दे4 द1 ग्र1.2 म1 विशाला (→विलासैर्); दे5 विनासैर्भगवत्पराः.

४५. ते1. ⊙; ब3 दे3.6.४५a-४६d ⊙ (द्र. सं). –a) ब3 सुतिनस्य, दे10 अञ्जनं च (→अञ्जनस्य). –b) दे1.7 नराणां (→नारीणां); दे5 नारीणां पुरसत्तमं, दे8.9 मुवें. मुए. मुब. नारीपुरमनुत्तमम्.

४६. ब3 दे3.6. ⊙; ग्र2.d ⊙. –b) ते1 सह, + सदा (→सदा).

४७. ग्र2.a ⊙. –a) दे1 अनन्तानि (→अनेकानि). –b) ब1 कामदा, दे4 कामदैर्, दे6 कौमोदे, दे10 कामदे (→कौमुदे); दे4.6.9.10 वापि (→चापि); दे3.7 कामोद्रेकानि सुव्रताः, दे5 -मेको देवापि सुव्रताः. –c) दे3 रुद्राणी (→रुद्राणां); ग्र2 शान्ति° (→शान्त°). –d) दे1.8-10 न1 ते1 मुवें. मुए. मुब. ईश्वरासक्त° (→ईश्वरार्पित°).

४८. –a) ब2 ते च (→तेषु). –b) दे4 महेशव्रतचारिणः, ते1 देशान्तवरचारिणः, द1 ग्र1 म1 महेशेनानु (म1 °त्म) चारिणः. –c) दे1 उपासते (→समासते); दे4.8.9 मुवें. मुए. पुरं (→परं). –d) दे1.4.10 ते1 द1 ग्र1.2 म1 मुवें. मुए. मुब. ऐश्वरं, दे8.9 ईश्वरं, न1 आसितं (→उत्तमम्). –cd) ब1 सर्वे वेद परं ज्योतिरारुणं स्थानमुत्तमम्.

४९. दे3.6. ⊙; ग्र2. ४९ b–५० a ⊙ (द्र. सं.). –a) ते1 शिंजरस्य (→पिञ्जरस्य). –c) ब3 दे2.7-10 न1 मुवें. मुए. नदीश्वरस्य, दे5 नंवदारस्य (→नन्दीश्वरस्य); ब2 रूपेण, दे1 कपिलं, दे8-10 कपिलां, न1 म1 कपिलस्, मुवें. मुए. मुब. कपिला (→कपिले). –d) का1 ब1 दे1.2.7 सुयशा (दे1.7 °शां) पतिः, ब2 स्म प्रजापतिः, दे4 सा गणेश्वरः, दे5 सुयशी यतिः, दे8-10 मुवें. मुए. मुब. स महामतिः, न1 युगणपतिः, ते1 स उमापतिः, द1 ग्र1 म1 स गणेश्वरः (→सुयशा यतिः).

५०. दे3.6. ⊙; ग्र2. a ⊙ (द्र. सं.). –a) ब1 दे10 जारुधि- (→जारुधेः); दे4 शृङ्गैर् (→शृङ्गे); दे2.7 ते1 तथा चारुनिधे (ते1 °ते)शृङ्गे. –c) का1 ब2.3 दे2.5 रम्यं (→पुण्यं).

५१. दे3.6. ab ⊙. –a) दे5 ग्र2 म1 तस्य चो° (→तस्यैवो°). –b) ब2 तत्र (→चन्द्र-). –c) दे8.9 मुवें. मुए. मुब. वसते (→रमते); का1 दे2.3.5.6 रम्योऽस्ति, ब1 रम्यासु, ब2.3 मुब. रम्ये तु, दे1.7-10 न1 मुवें. मुए. रम्यात्मा, दे4 रोहिण्या (→रम्योऽसौ); द1 ग्र1.2 म1 रोहिण्या तत्र रमते. –d) दे8.9 मुवें. मुए. मुब. शान्त° (→शीत°).

५२. –a) न1 द1 ग्र1 मुवें. मुए. अन्यत्र, ते1 अन्यं च, म1 ब्रह्मणो (→अन्यच्च); ब1 विविधं दिव्यं, दे3.6 भगवद् दिव्यं, ग्र2 भवनं पुण्यं (→भवनं दिव्यं). –b) न1 °शीले, द1 ग्र2 °शैल-, (→°शैले). –c) दे10 °योजनं (→°योजना-); दे4 °यामे, ग्र1 °यामः (→°यामं). –d) ब3 स्ववर्ण° (→सुवर्ण°); दे10 मणितोरणमण्डितम्.

५३. –d) ब2.3 दे2-6 न1 द1 ग्र1.2 म1 वाम° (→वासु°).

५४. –b) दे10 पुत्राणां (→सिद्धानां). –d) दे8.9 वसंते (→वसन्ति).

पञ्चशैलस्य शिखरे दानवानां पुरत्रयम् ।
नातिदूरेण तस्याथ दैत्याचार्यस्य धीमतः ॥५५
सुगन्धशैलशिखरे सरिद्भिरुपशोभितम् ।
कर्दमस्याश्रमं पुण्यं तत्रास्ते भगवानृषिः ॥५६
तस्यैव पूर्वदिग्भागे किञ्चिद् वै दक्षिणाश्रिते ।
सनत्कुमारो भगवांस्तत्रास्ते ब्रह्मवित्तमः ॥५७
सर्वेष्वेतेषु शैलेषु तथान्येषु मुनीश्वराः ।
सरांसि विमला नद्यो देवानामालयानि च ॥५८
सिद्धलिङ्गानि पुण्यानि मुनिभिः स्थापितानि तु ।
वन्यान्याश्रमवर्याणि संख्यातुं नैव शक्नुयाम् ॥५९
एष संक्षेपतः प्रोक्तो जम्बूद्वीपस्य विस्तरः ।
न शक्यं विस्तराद् वक्तुं मया वर्षशतैरपि ॥६०

इति श्रीकूर्मपुराणे षट्साहस्त्र्यां संहितायां पूर्वविभागे षट्चत्वारिंशोऽध्यायः ॥४६॥

# ४७

सूत उवाच ।❀

जम्बूद्वीपस्य विस्ताराद् द्विगुणेन समन्ततः ।
संवेष्टयित्वा क्षारोदं प्लक्षद्वीपो व्यवस्थितः ॥१
प्लक्षद्वीपे च विप्रेन्द्राः सप्तासन् कुलपर्वताः ।
ऋज्वायताः सुपर्वाणः सिद्धसङ्घनिषेविताः ॥२
गोमेदः प्रथमस्तेषां द्वितीयश्चन्द्र उच्यते ।

वें१.४९.३

५५. –b) दे$_{5}$ °त्रयाम् (→°त्रयम्). –c) दे$_{8-10}$ मुवें. मुए. मुब. तस्माच्च (→तस्याथ); ब$_{1}$ अन्यच्च भवनं दिव्यं, तें$_{1}$ नातिदूरतयान्यथ.

५६. म$_{1}$. ab ⊙. –b) दे$_{5}$ °शोभितः (→°शोभितं).

५७. –b) दे$_{6}$ °श्रितं (→°श्रिते). –c) दे$_{4}$ ते$_{1}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ सनत्कुमारभवनं. –d) दे$_{5}$ °विक्रमः, न$_{1}$ °वित्तमाः (→°वित्तमः).

५८. –a) दे$_{10}$ सर्वेषु (→शैलेषु). –b) ते$_{1}$ नरेश्वराः, द$_{1}$ महेश्वराः (→मुनीश्वराः).

५९. –b) दे$_{4}$ ऋषिभिः (→मुनिभिः); दे$_{1.8.9}$ ते$_{1}$ मुवें. मुए. मुब. च (→तु). –c) दे$_{4}$ न$_{1}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ वनान्या- (→वन्यान्या-); म$_{1}$ -वर्षाणि (→-वर्याणि); दे$_{5}$ अन्यान्यमरवर्याणि, दे$_{8-10}$ मुवें. मुए. तानि चायतनान्याशु. –d) दे$_{1.8-10}$ ते$_{1}$ ग्र$_{2}$ म$_{1}$ मुवें. मुए. मुब. शक्यते, द$_{1}$ ग्र$_{1}$ शक्नुमः (→शक्नुयाम्).

६०. –a) दे$_{4}$ प्रोक्तं, न$_{1}$ प्राप्तो (→प्रोक्तो). –b) दे$_{5.10}$ न$_{1}$ जंबु° (→जम्बू°). –c) दे$_{8-10}$ मुवें. मुए. मुब. शक्यो (→शक्यं).

**पुष्पिका**—[ द$_{1}$ पुस्तके अध्यायसमाप्तिर्नास्ति]

**पुराणनाम**—का$_{1}$ इति श्रीकूर्मपुराणे, ब$_{1}$ इत्यादिमहापुराणे कौर्मे, ब$_{2.3}$ दे$_{3}$ इति कूर्मपुराणे, दे$_{1.4-10}$ न$_{1}$ ग्र$_{1.2}$ म$_{1}$ मुवें. मुए. इति श्रीकूर्मपुराणे. दे$_{2}$ इति कौर्मे पुराणे, ते$_{1}$ इत्यादिमहापुराणे श्रीकौर्मे, मुब. इति श्रीकौर्मे महापुराणे पूर्वभागे. **अध्यायनाम**—दे$_{4}$ न$_{1}$ ग्र$_{1.2}$ म$_{1}$. ⊙; का$_{1}$ ब$_{1-3}$ दे$_{2.5.6}$ भुवनकोषे (का$_{1}$ दे$_{5.6}$ °शे), दे$_{1.7-10}$ जम्बूद्वीपवर्णने, दे$_{3}$ भुवनको*, ते$_{1}$ मुवें. मुए. जम्बूद्वीपवर्णनं नाम, मुब. भुवनकोषविन्यासे जम्बूद्वीपवर्णनं नाम. **अध्यायसंख्या**—ब$_{1}$ दे$_{6}$. ⊙; का$_{1}$ ब$_{3}$ दे$_{2.3.5}$ ग्र$_{1}$ पञ्चचत्वारिंशोध्यायः, ब$_{2}$ ॥४५॥, दे$_{1.8.9}$ मुए. अष्टचत्वारिंशोऽध्यायः, दे$_{4}$ पंचचत्वारिंशोऽध्यायः ॥४५॥, दे$_{7.10}$ मुवें. अष्टचत्वारिंशोऽध्यायः ॥४८॥, न$_{1}$ चतुश्चत्वारिंशोऽध्यायः, ते$_{1}$ एकोनपञ्चाशोऽध्यायः, ग्र$_{2}$ म$_{1}$ मुब. सप्तचत्वारिंशोऽध्यायः.

## ४७

❀ द$_{1}$. ⊙; दे$_{8.9}$ सूत उ.; न$_{1}$ ते$_{1}$ ग्र$_{1.2}$ म$_{1}$ सूतः.

१. –a) दे$_{5.10}$ न$_{1}$ जम्बु° (→जम्बू°). –b) दे$_{10}$ ग्र$_{2}$ °समन्वितः (→°समन्ततः). –c) दे$_{4}$ स चेष्टयित्वा (→संवेष्टयित्वा); का$_{1}$ क्षारोदः, ब$_{1}$ दे$_{1.2.4-6.7}$ द$_{1}$ क्षीरोदं, दे$_{10}$ क्षारेण, ग्र$_{2}$ क्षीराब्धि (→क्षारोदं). –d) दे$_{4}$ °द्वीपे (→°द्वीपो).

२. –a) का$_{1}$ प्लक्षे (→प्लक्ष-); ग्र$_{2}$ विप्रेन्द्र (→विप्रेन्द्राः). –b) दे$_{1}$ सप्त ते, दे$_{6}$ समासन्, ते$_{1}$ सप्तार्य- (→सप्तासन्). –c) दे$_{8-10}$ मुवें. मुए. सिद्धायुताः, दे$_{4}$ त्रक्षायताः, ते$_{1}$ रुद्रायुत (→ऋज्वायताः). –d) द$_{1}$ °संघैर् (→°संघ-).

३. –a) द$_{1}$ ग्र$_{1.2}$ म$_{1}$ गोमेधः (→गोमेदः); का$_{1}$ ग्र$_{1}$ प्रथमे (→प्रथमस्). –d) ब$_{3}$ ऋतयस्, दे$_{5}$ ऋषयस्

कू. १.४९.३ नारदो दुन्दुभिश्चैव सोमश्च ऋषभस्तथा ।
वैभ्राजः सप्तमः प्रोक्तो ब्रह्मणोऽत्यन्तवल्लभः ॥३
तत्र देवर्षिगन्धर्वैः सिद्धैश्च भगवानजः ।
उपास्यते स विश्वात्मा साक्षी सर्वस्य विश्वसृक् ॥४
तेषु पुण्या जनपदा नाधयो व्याधयो न च ।
न तत्र पापकर्त्तारः पुरुषा वा कथञ्चन ॥५
तेषां नद्यश्च सप्तैव वर्षाणां तु समुद्रगाः ।
तासु ब्रह्मर्षयो नित्यं पितामहमुपासते ॥६
अनुतप्ता शिखी चैव विपापा त्रिदिवा कृता ।
अमृताः सुकृता चैव नामतः परिकीर्त्तिताः ॥७
क्षुद्रनद्यस्त्वसंख्याताः सरांसि सुबहून्यपि ।
न चैतेषु युगावस्था पुरुषा वै चिरायुषः ॥८
आर्यकाः कुरवाश्चैव विदशा भाविनस्तथा ।
ब्रह्मक्षत्रियविट्शूद्रास्तस्मिन् द्वीपे प्रकीर्त्तिताः ॥९
इज्यते भगवान् सोमो वर्णैस्तत्र निवासिभिः ।
तेषां च सोमसायुज्यं सारूप्यं मुनिपुंगवाः ॥१०
सर्वे धर्मपरा नित्यं नित्यं मुदितमानसाः ।
पञ्चवर्षसहस्राणि जीवन्ति च निरामयाः ॥११

---

(→ऋषभस्); दे1 सोमकः सुमनस्तथा, दे8-10 मुवें. मुए. मुब. मणिमान् मेघनिस्वनः, न1 होमकश्च नभस्तथा, ते1 सोमस्तु वृषभस्तथा. –e) ब1 प्रोक्ता, दे1.3.7-10 ते1 मुवें. मुए. मुब. तेषां, द1 ग्र1.2 चोक्तो (→प्रोक्तो). –f) ब1 °नन्त°, (→°त्यन्त°).

४. –a) ते1 तत्रास्ते देवगणैः. –b) का1 सिद्धश्च, न1 सिद्धैः स (→सिद्धैश्च); दे4 °वान्रजः (→°वानजः). –c) का1 दे1.5.10 म1 उपासते (→उपास्यते); ग्र1 च (→स). –d) दे5 साक्षात् (→साक्षी); ग्र2 वासस्य (→सर्वस्य); दे1 सर्वदृक्, ब2.3 दे3.6.7 विश्वधृक्, दे4 द1 ग्र1.2 म1 विश्वकृत्, दे8.9 मुवें. मुए. मुब. विश्वदृक्, दे10 विश्वधृक्, + विश्वदृक्, ते1 विश्वसृट् (→विश्वसृक्).

५. न1. ५b 'व्याधयो' इत्यारभ्य २६b 'द्विगुणेन' यावन्नास्ति. –a) दे1.7-10 ते1 मुवें. मुए. मुब. आधयो (→नाधयो). –c) म1 तत्र पापस्य कर्त्तारः. –d) दे1.8-10 ते1 मुवें. मुए. मुब. वै (→वा); का1 ब2.3 दे2.3.5-7 मुब. कदाचन (दे5 °नः) (→कथञ्चन).

६. न1. ⊙. –a) ब1 तेषां सप्तैव नद्यश्च. –b) द1 च (→तु); दे1 समुद्भवाः, ग्र2 समुद्यताः (→समुद्रगाः).

अतः परं दे3.7 पुस्तके अधिकम्—

* 'ब्रह्म तप्ता विष्णुतप्ता शिवा शिवमतामला' ।

७. न1. ⊙; दे3.7 bc ⊙ (इ. सं.); दे6. ७b-९d ⊙. –a) दे4 द1 ग्र1.2 म1 असंतप्ता (→अनुतप्ता); ब1 दे9 ते1 ग्र1.2 म1 शिखा (ग्र1.2 °खाश्), दे4.8 मुवें. मुए. मुब. शिखे, दे5 शिखो, द1 मुखा (→शिखी). –b) ब1 विदपा, दे1 पिबति, दे5 धिपाया, ते1 विशेषा, द1 त्रिपापा, ग्र1 कृपापा, ग्र2 स्ववाप, म1 त्रिपाणस् (→विपापा); ब1 त्रदिवा कृता, दे1* दिवौकसां, दे4 म1 त्रिदिवा स्मृता, दे8.9 त्रिदिवा क्रमाः, दे10 त्रिविध क्रमाः, द1 ग्र1.2 त्रादिवा स्मृताः (→त्रिदिवा कृता). –c) का1 दे1 सुकृताश्चैव, दे8.9 सकृता चैव (दे9 °ता) (→सुकृता चैव); दे4 द1 ग्र2 अमृता चैव सु(ग्र2 अ)कृता, ते1 अमृता सुकृता चेति, ग्र1 अमृताञ्चैव सुकृता. –d) म1 सप्तैतास्तत्र निम्नगाः.

८. न1. ⊙; दे6. ⊙; दे3.7 ग्र2. ⊙ (इ. सं.); दे5. b ⊙. –a) का1 दे10 °नद्यास् (→°नद्यस्); ब3 दे4 च संख्याताः, दे1 च विख्याताः, दे5 त्वसंख्याकः, दे8-10 मुवें. मुए. मुब. तु विख्याताः, द1 तु संख्याताः (→त्वसंख्याताः). –b) दे4.8-10 द1 ग्र1 म1 मुवें. मुए. मुब. च (→सु-); ब2 सुरसान्यपि, दे1 बहुलान्यपि (→बहून्यपि). –c) का1 दे10 न वैतेषु, ब1 न चैवेषु, दे1 नैवेतेषु, म1 न1 च तेषु (→न चैतेषु). –d) द1 ग्र1 म1 स्थिरायुषः (→चिरायुषः).

९. दे3.6.7 न1 ग्र2. ⊙. –a) ब2 दे1.4 म1 कुरराश्, ब3 दे8.9 मुवें. मुए. मुब. कुरुराश्, दे10 कुरुरा, ते1 कुरुदाश् द1 ग्र1 कुरवश् (→कुरवाश्); ब1 आर्यकाश्च कुरश्चैव. –b) का1 विदासा, दे1 विदंशां, दे4 द1 ग्र1 विदंशा, दे8-10 मुवें. मुए. मुब. विदेहा-, ते1 विदंशो, म1 विदिश्या- (→विदशा); द1 ग्र1 -वापिनस् (→-भाविनस्). –c) ब2 न ब्रह्मक्षत्रविट्शूद्रास्. –d) ब2 तस्मिन्नपि, ग्र1 यस्मिन्देशे (→तस्मिन् द्वीपे).

१०. न1. ⊙. –a) ब1 दे5 ते1 द1 इत्येते (→इज्यते). दे8-10 ते1 मुवें. मुए. ईशो (→सोमो). –b) दे5 वरो दे1.10 वर्णे (→वर्णैस्); ते1 मोदवर्णैस्तत्र वासिभिः. –c) द1 ग्र1.2 म1 तु (→च); दे4 मुवें. मुए. °साम्राज्यं (→°सायुज्यं).

११. न1. ⊙. –a) ते1 धर्म°, + धर्म° (→धर्म°); दे1.8-10 ते1 मुवें. मुए. मुब. °रता, द1 °परो (→°परा). –b) दे1* *, दे8.9 मुवें. मुए. मुब. सर्वे (→नित्यं). –c) ग्र2 दश (→पञ्च). –d) दे10 जीवन्तीति निरामया.

प्लक्षद्वीपप्रमाणं तु द्विगुणेन समन्ततः ।
संवेष्टयेक्षुरसाम्भोधिं शाल्मलिः संव्यवस्थितः ॥१२
सप्त वर्षाणि तत्रापि सप्तैव कुलपर्वताः ।
ऋज्वायताः सुपर्वाणः सप्त नद्यश्च सुव्रताः ॥१३
कुमुदश्चोन्नतश्चैव तृतीयश्च बलाहकः ।
द्रोणः कङ्कस्तु महिषः ककुद्मान् सप्त पर्वताः ॥१४
योनीतोया वितृष्णा च चन्द्रा शुक्ला विमोचनी ।
निवृत्तिश्चेति ता नद्यः स्मृताः पापहरा नृणाम् ॥१५
न तेषु विद्यते लोभः क्रोधो वा द्विजसत्तमाः ।
न चैवास्ति युगावस्था जना जीवन्त्यनामयाः ॥१६
यजन्ति सततं तत्र वर्णा वायुं सनातनम् ।
तेषां तस्याथ सायुज्यं सारूप्यं च सलोकता ॥१७
कपिला ब्राह्मणाः प्रोक्ता राजानश्चारुणास्तथा ।
पीता वैश्याः स्मृताः कृष्णा द्वीपेऽस्मिन् वृषला द्विजाः १८
शाल्मलस्य तु विस्ताराद् द्विगुणेन समन्ततः ।
संवेष्ट्य तु सुरोदाब्धिं कुशद्वीपो व्यवस्थितः ॥१९
विद्रुमश्चैव हेमश्च द्युतिमान् पुष्पवांस्तथा ।
कुशेशयो हरिश्चाथ मन्दरः सप्त पर्वताः ॥२०　वे.१.४९.२१

१२. न१. ⊙. –a) दे3 लक्ष°, दे4 इक्षु° (→प्लक्ष°); का1 दे2.4.7 ग्र1.2 म1 मुब. °प्रमाणात्तु, ब2 °प्रमाणाद्धि, दे3 °प्रमाणस्तु (→°प्रमाणं तु). –b) दे4 द्विगुणेषु (→द्विगुणेन); ग्र2 समावृतः (→समन्ततः). –c) दे5 सवेक्ष्ये°, दे10 संचेष्वे° (→संवेष्ट्ये°); दे4 संवष्टोस्तु रसाम्भोधिं, ग्र2 संवेष्टय-क्षिरसांबोध. –d) ब1.2 दे1.4 द1 ग्र1.2 म1 शाल्मलः (→शाल्मलिः); द1 तु (→सं-); का1 शाल्मलिः सर्वतः स्थितः, दे5 शाल्मलिः सर्ववस्थितः.

१३. न१. ⊙; दे8-10. ab ⊙; ब1. cd ⊙. –a) ते1 ग्र1 म1 तत्रैव, ग्र2 सप्तैव (→तत्रापि). –b) दे1.5 °पर्वतः (→°पर्वताः). –c) दे2.5.6 ग्र2 ऋज्वायतः, दे10 कृत्वायताः (→ऋज्वायताः). –d) ब3 °लक्षश्च, ते1 °नद्यस्तु (→°नद्यश्च); ब2 संमुच्छ्रिताः, दे2 च सुव्रतः (→च सुव्रताः).

१४. न१. ⊙. –a) का1 चोनतश्, ब1 चानदश्, दे3 चौद्धतश्, दे4 चित्रनश्, दे5 ग्र2 चोन्न (ग्र2 °न)दश्; दे7 चोद्वलश्, द1 चोर्न्नति, मुवें. मुए. चान्नदश्, मुब. चान्नतश् (→चोन्नतश्); ते1 मन्दश्चोत्तरश्चैव. –c) का1 दे2.10 द्रोण- (→द्रोणः); ब2 कर्णस्, दे1 कंगस्, दे8.9 ते1 मुवें. मुए. कंसस् (→कंकस्); द1 च (→तु); ग्र1 महार्षेः (→महिषः). –d) का1 ब1.3 दे1.2.4.8-10 म1 मुवें. मुए. मुब. ककुद्मान्, ब2 द1 ग्र1.2 कुमुद्वान् (→ककुद्वान्); दे4 द1 ग्र1 म1 वर्ष-, ग्र2 कुल- (→सप्त-); ब3 पर्वतान्, दे1.8-10 ते1 मुवें. मुए. मुब. सप्तमस्तथा (→सप्त पर्वताः).

१५. न१. ⊙. –a) ब1 दे10 योनितोया, दे4 द्यौवितोया, दे5 योनोतोया, दे7 योनीतीया, द1 ग्र1.2 म1 योनिस्ते (ग्र2 म1 °स्तो) या (→योनीतोया); दे4 ग्र1.2 नितृष्णा, द1 तितृष्णा, म1 च कृष्णा (→वितृष्णा). –b) दे3.5 शुक्रा (→शुक्ला); ब2 विलोचना, दे5 विमोधनी, ग्र2 विमाचनी (→विमोचनी). –c) दे4 सद्यः (→नद्यः); ग्र2 निवृत्तिश्चेकितानाद्यः. –d) दे2 स्मृतः (→स्मृताः); दे3 °हारा, दे4 °करा, दे10 °हरां (→°हरा).

१६. न१. ⊙. –d) ब2 नरा, दे9 जनां (→जना); का1 दे5 जना जीवन्त्यमायया.

१७. न१. ⊙. –a) म1 रुद्रं (→तत्र). –b) म1 तत्र (→वर्णा); दे5.7 वायु-, दे6 द1 वायु- (→वायुं). –c) का1 सत्याथ, दे4 तस्यार्थ-, ते1 तस्यैव (→तस्याथ); दे8-10 मुवें. मुए. तेषां तत् साधनं(दे10 °कं) युक्तं, म1 तेषां तु वायुसायुज्यं. –d) का1 दे2.4.5 सलोकतां (दे4 °ताः). (→सलोकता).

१८. न१. ⊙. –a) ग्र2 ब्रह्मणाः (→ब्राह्मणाः); दे4 प्रोक्ताः (→प्रोक्ता); म1 कपिलाश्चारुणाः पीता. –b) ग्र2 चारुणास् (→चारुणास्); ते1 स्मृताः (→तथा); म1 कृष्णाश्चैव पृथक् पृथक्. –c) का1 स्थिताः, ग्र1 तथा (→स्मृताः); म1 ब्राह्मणाः क्षत्रिया वैश्याः. –d) का1 अखिला, दे1 वृषलो, दे4 वृषले (→वृषला); म1 शूद्राश्चैव यथाक्रमम्.

१९. न१. ⊙. –a) ते1 शाल्मलस्य द्विपधरात्,+ शाल्मलेस्तु द्वीपवरात्. –c) दे1 संवेष्ट्य तं, दे5 संवेष्ट्या तु, दे7 संवेष्ट्येक्षु, ग्र2 सुवेष्ट्य च (→संवेष्ट्य तु) द1 द्विजोरब्धिं, ग्र2 शिरोदाब्धि (→सुरोदाब्धि).

२०. न१. ⊙. –a) ब2.3 दे3.6 वैद्रुमश्, दे1 विमलश्, दे2.5 वैक्रमश्, द1 विद्रुवश् (→विद्रुमश्); ब2 दे3.6 हैमश्, दे8-10 मुवें. मुए. होमश्, ते1 पावश् (→हेमश्). –b) दे1.10 द्यु (दे1 द्वि) तिवान् (→द्युतिमान्); का1 पुष्पमान्, दे10 पुष्पिवान् (→पुष्पवान्); ग्र2 शृङ्गवान् द्युतिमांस्तथा. –c) दे4 हविश्चाथ, दे8-10 मुवें. मुए. मुब. हरिश्चैव (→हरिश्चाथ); ते1 कुलेशं शिखर**.

वें.१.४९.२१ धुतपापा शिवा चैव पवित्रा संमता तथा ।
विद्युदम्भा मही चेति नद्यस्तत्र जलावहाः ॥२१
अन्याश्च शतशो विप्रा नद्यो मणिजलाः शुभाः ।
तासु ब्रह्माणमीशानं देवाद्याः पर्युपासते ॥२२
ब्राह्मणा द्रविणो विप्राः क्षत्रियाः शुष्मिणस्तथा ।
वैश्याः स्नेहास्तु मन्देहाः शूद्रास्तत्र प्रकीर्त्तिताः ॥२३
सर्वे विज्ञानसंपन्ना मैत्रादिगुणसंयुताः ।
यथोक्तकारिणः सर्वे सर्वे भूतहिते रताः ॥२४
यजन्ति विविधैर्यज्ञैर्ब्रह्माणं परमेष्ठिनम् ।
तेषां च ब्रह्मसायुज्यं सारूप्यं च सलोकता ॥२५
कुशद्वीपस्य विस्ताराद् द्विगुणेन समन्ततः ।
क्रौञ्चद्वीपस्ततो विप्रा वेष्टयित्वा घृतोदधिम् ॥२६
क्रौञ्चो वामनकश्चैव तृतीयश्चान्धकारकः ।
देवावृच्च विविन्दश्च पुण्डरीकस्तथैव च ।
नाम्ना च सप्तमः प्रोक्तः पर्वतो दुन्दुभिस्वनः ॥२७

---

२१. न1. ⊙. –a) का1 ब1-3 दे2.4.5.6.9.10 द1 ग्र1 म1 मुवें. मुब. धूत°, ते1 धूत°, + भूत° (→धुत°); ग्र2 धूततापा (→धुतपापा). –b) दे4 समता, दे8-10 मुवें. मुए. मुब. संमिता, ते1 सविता (→संमता); द1 बिन्ना सममतास्तथा. –c) ब2 विदम्भा च, दे4 विद्युदंबा, दे5 विद्युहंभा, दे7 विद्युदर्भा, ते1 विद्युदन्दा (→विद्युदम्भा); दे2.5 मही तेति, ते1 महा चैव (→मही चेति); दे8-10 मुवें. मुए. मुब. तथा विद्युत्प्रभा रामा. –d) ब2 दे1 ते1 मलापहाः, द1 जलोद्वहाः, म1 कलावहाः (→जलावहाः); दे8.9 मुवें. मुए. मुब. महानद्यश्च सप्त वै, दे10 मही च सप्त नद्य वै.

२२. न1.⊙; ब1.२२c 'ब्रह्माण' इत्यारभ्य २३ a 'ब्राह्मणाः' यावन्नास्ति (द. सं). –b) ब1 मुनि-, ब3 मान-, दे4.7 द1 ग्र1 म1 [अ]मल° (→मणि°); ब2 नद्यस्तत्र मलापहाः, ग्र2 नद्यः माला जला शुभाः. –c) दे4.8-10 मुवें. मुए. मुब. तास्तु (→तासु).

दे3.7 पुस्तकयोः b,c मध्ये अधिकम्–

* क्षुद्रनद्यस्त्वसंख्याताः सरांसि सुबहून्यपि ।
न चैतेषु युगावस्था पुरुषा वै चिरायुषः ।
आर्यकाः कुरवाश्चैव रिरंशा भाविनस्तथा ।
ब्रह्मक्षत्रियविट्शूद्रास्तस्मिन् द्वीपे प्रकीर्तिताः ।
(= ८, ९)

२३. न1. ⊙. –a) दे1.4 मुवें. मुए. ब्राह्मणाः, दे2 ब्राह्मण्य, दे3.6.7 ब्राह्मणो, दे5 ब्रह्मण्य, ग्र1 ब्रह्मणा (→ब्राह्मणा); ब2 श्रमिणो, ब3 त्रविना, दे1 दमिनो, दे2 त्रविणो, दे4 द1 ग्र1 म1 द्र (म1 द्रा)विडाः, ते1 द्रविणा (→द्रविणो); का1 ब2.3 दे2.5.6 विद्या, दे4 द1 ग्र1.2 म1 प्रोक्ताः (→विप्राः). –b) दे1 दे6.10 ग्र2 क्षत्रियः (→क्षत्रियः); दे10 शुष्मणस् (→शुष्मिणश्); ब1 दे1 ते1 स्मृताः (→तथा). –c) दे8-10 मुवें. मुए. मुब. स्तो (दे10 स्ते)भा, ते1 स्तेचास्, ग्र2 स्तु वै (→स्नेहास्); ब1 सन्नेहाः, ब2.3 सन्देहाः, दे4 वैदेहाः, द1 ग्र1 विदेहाः (→मंदेहाः). –d) का1 शूद्राः, + पुत्राः, दे2.5 पुत्राः, ते1 शक्रस् (→शूद्राः).

२४. न1. ⊙; ग्र2. २४c-२६b 'गुणे' यावत्⊙. –a) दे4 सर्ववि-, दे8-10 मुए. मुब. मर्त्येऽपि, मुवें. नरोऽपि (→सर्वे वि-). –b) का1 ब3 दे3.5 6.10 मैत्रा द्वि-, दे4.8 मुवें. मुए. मुब. मैत्र्यादि- (→मैत्रादि-). –c) दे1 यथोप° (→यथोक्त°); दे3 तथोक्तकारिणा (→यथोक्तकारिणः); ते1 यथोक्ता चारिणः सर्वे. –d) का1 दे2.5 ग्र1 म1 सर्व- (→सर्वे).

२५. न1. ⊙; ग्र2. ⊙ (द्र. २४ पा. वि.). –a) दे7-10 ते1 मुवें. मुए. मुब. यज्ञैर्विविधैर् (→विविधैर्यज्ञैर्). –b) दे3 ब्रह्माणं, दे6 ब्राह्माणं (→ब्रह्माणं). –c) दे4 तेषां चैव स सायुज्यं. –d) दे10 सारूपां (→सारूप्यं); का1 ब2 दे4-6.10 सलोकतां (→सलोकता); म1 सारूप्यं सहलोकता.

२६. ग्र2. a. ⊙. –b) न1***न (→द्विगुणेन). –c) ब1 दे7-10 ते1 मुवें. मुए. मुब. स्थितः, द1 तथा (→ततो). –d) दे1 °दकम् (→°दधिम्).

२७. –a) ब1 दे6.10 क्रौञ्च- (→क्रौञ्चो); दे3.6 वामनकं, दे5 वासनकश् (→वामनकश्); दे1 क्रौञ्चश्च वामनश्चैव, ते1 क्रौञ्चनामसरश्चैव, ग्र1 क्रौञ्चोऽथ वानकश्चैव, ग्र2 क्रौञ्चैव वमकश्चैव. –b) दे8-10 मुवें. मुए. मुब. चाधिकारिकः (→चान्धकारकः); दे4 तृतीयोधाधिकारिकः, दे5 तृतीयश्चाम्बकारकाः, ते1 तृतीयश्चाचकाशिरैः, द1 ग्र1.2 तृतीयो बोधकारकः, म1 तृतीयश्चलतारकः. –c) ब1 देवावृद्धोविरिन्दश्च, ब3 देवावृत्त विरिन्द्रश्च, दे1 दिवावृदश्च वृंदश्च, दे2 देवाव्दच्च विविदश्च, दे3.6 देवावृच्च विरिन्द्रश्च, दे4 देवाप्रच्छो विविदश्च, दे5 देवावृत्य विविदश्च, दे10 देकाव्ठं च विवेदश्च, न1 दिव्याहृच्च विनिदश्च, ते1 द्विपादश्च ददिन्दश्च, द1 ग्र1.2 दिवाप्रकोव (ग्र1 °वि, ग्र2 °पि) वि (ग्र2 °वं) दश्च, म1 चतुर्थो-

गौरी कुमुद्वती चैव संध्या रात्रिर्मनोजवा ।
ख्यातिश्च पुण्डरीका च नद्यः प्राधान्यतः स्मृताः ॥२८
पुष्करा: पुष्कला धन्यास्तिष्यास्तस्य क्रमेण वै ।
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैव द्विजोत्तमाः ॥२९
अर्चयन्ति महादेवं यज्ञदानसमाधिभिः ।
व्रतोपवासैर्विविधैर्होमैः स्वाध्यायतर्पणैः ॥३०
तेषां वै रुद्रसायुज्यं सारूप्यं चातिदुर्लभम् ।
सलोकता च सामीप्यं जायते तत्प्रसादतः ॥३१
क्रौञ्चद्वीपस्य विस्ताराद् द्विगुणेन समन्ततः ।
शाकद्वीपः स्थितो विप्रा आवेष्ट्य दधिसागरम् ॥३२
उदयो रैवतश्चैव श्यामाकोऽस्तगिरिस्तथा ।
आम्बिकेयस्तथा रम्यः केशरी चेति पर्वताः ॥३३
सुकुमारी कुमारी च नलिनी रेणुका तथा ।
इक्षुका धेनुका चैव गभस्तिश्चेति निम्नगाः ॥३४ वें.१.४६.३५

---

रत्नशैलश्च. –d) म$_{1}$ दिवासृक् पञ्चमस्तथा. –e) दे$_{4}$ द$_{1}$ ग्र$_{1}$ नामतः, दे$_{8\text{-}10}$ न$_{1}$ ते$_{1}$ नाम्नाथ (→नाम्ना च); द$_{1}$ ग्र$_{1.2}$ सप्त ते (→सप्तमः); म$_{1}$ दुन्दुभिः पुण्डरीकश्च. –f) द$_{1}$ ग्र$_{1.2}$ पर्वता (→पर्वतो); ब$_{3}$ दे$_{4.10}$ दुन्दुभिः (→दुन्दुभि-); दे$_{10}$ स्वयं, ग्र$_{2}$ -स्वनाः (→स्वनः); म$_{1}$ श्वेतास्मिन् कुलपर्वताः.

**२८.** –b) का$_{1}$ दे$_{1}$ द$_{1}$ ग्र$_{2}$ रात्रि-, दे$_{4}$ रामा, न$_{1}$ रात्रि (→रात्रिर्). –c) ब$_{2}$ ते$_{1}$ क्षान्तिश्, दे$_{1}$ क्षातिश्, दे$_{8}$ मुवें. मुए. क्रोभिश्, दे$_{9.10}$ -स्को (दे$_{10}$ स्कौ)भिश् (→ख्यातिश्); दे$_{4}$ पुण्डरीकश्, दे$_{8\text{-}10}$ ते$_{1}$ मुवें. मुए. मुब. पुण्डरीकाक्षा, न$_{1}$ पुण्डरीकाख्या (→पुण्डरीका च). –d) दे$_{1}$ क्वचित् (→स्मृताः).

**२९.** –a) दे$_{4}$ पुष्कला, दे$_{8}$ ग्र$_{1}$ म$_{1}$ मुब. पुष्कलाः, दे$_{9.10}$ ते$_{1}$ द$_{1}$ ग्र$_{2}$ मुवें. मुए. पृष्कलाः, न$_{1}$ पुष्करः (→पुष्कराः); दे$_{2.4.5.8\text{-}10}$ ते$_{1}$ ग्र$_{1.2}$ म$_{1}$ मुवें. मुए. मुब. पुष्करा (→पुष्कला); का$_{1}$ दे$_{4}$ ग्र$_{2}$ धान्यास्, दे$_{10}$ म$_{1}$ धन्या (→धन्यास्). –b) दे$_{1.4.7}$ न$_{1}$ ते$_{1}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ तत्र, दे$_{8\text{-}10}$ मुवें. मुए. मुब. वर्णाः (→तस्य); ग्र$_{2}$ म$_{1}$ तु (→वै). –d) दे$_{1}$ द्विजोत्तमः, दे$_{5}$ द्विजस्तथा (→द्विजोत्तमाः).

**३०.** –b) दे$_{10}$ न$_{1}$ ग्र$_{1}$ मुवें. मुए. मुब. °समादिभिः (→°समाधिभिः). –c) न$_{1}$ व्रतोपवास- (→व्रतोपवासैः). –d) दे$_{4}$ होम-, द$_{1}$ ग्र$_{1.2}$ म$_{1}$ यज्ञ- (→होमैः); ब$_{2}$ तत्परैः (→तर्पणैः); दे$_{7.8\text{-}10}$ मुवें. मुए. मुब. होमैश्च पितृतर्पणैः.

**३१.** म$_{1}$. cd ⊙. –b) म$_{1}$ सारूप्यं च सलोकता. –c) दे$_{8\text{-}10}$ सलोकतां (→सलोकता); दे$_{8\text{-}10}$ सामीप्यं च, ते$_{1}$ च सारूप्यं, + च सामीप्यं (→च सामीप्यं). –d) दे$_{4}$ ज्ञायते (→जायते).

**३२.** –c) ब$_{3}$ दे$_{3.6.7}$ ग्र$_{1.2}$ म$_{1}$ ततो, द$_{1}$ तथा (→स्थितो). –d) दे$_{1}$ संवेष्ट्य, दे$_{3}$ आधष्ट्य, दे$_{4}$ * चेष्टा, न$_{1}$ आवृत्या, ते$_{1}$ त्वावेष्ट्य, द$_{1}$ आवेष्ट्ये (→आवेष्ट्य).

ते$_{1}$ पुस्तके ३२ श्लोकानन्तरमधिकम्—

* समन्तात् संस्थितं विप्रा यत्र यान्ति मनीषिणः ।
अनन्तमेकमव्यक्तमनादिनिधनं महत् ।
अतीत्य वर्त्तते सर्वं जगत्प्रकृतिरक्षकम् ।
अनन्तस्य न तस्यान्तः संख्यानं वापि विद्यते ।
अनन्तत्वमनन्तस्य यतस्संख्या न विद्यते ।
(=४८.१८ c–२०b)

भूमौ रसातले चैव आकाशे पर्वते तते ।
अर्थोदेषु च सर्वेषु नैव न संशयः ।
तदा तामसि सत्वे वा एष एव महाद्युतिः ।
अनेकधा विभक्ताङ्गः क्रीडते पुरुषोत्तमः ।
महेश्वरो परोऽव्यक्तादण्डमव्यक्तसम्भवम् ।
अण्डे ब्रह्मा समुत्पन्नः तेन सृष्टमिदं जगत् ।
(=४८ २२c–२४d)

इति श्रीकूर्मपुराणे भुवनकोशे पंचाशोध्यायः ॥

ऋषय ऊचुः—

अतीतानागतानीह यानि मन्वन्तराणि वै ।
(=४९.१ ab)

**३३.** ते$_{1}$. ३३a–६५b ⊙. –a) का$_{1}$ वैरतश्, दे$_{1}$ वैततश्, दे$_{5}$ वै**(→रैवतश्). –b) दे$_{4}$ श्यामाका, न$_{1}$ श्यामको, द$_{1}$ ग्र$_{1}$ श्यामांगो (→श्यामाको); दे$_{1}$ श्यामाकोऽस्तिगिरिस्तथा, दे$_{6}$ श्यामोकस्तगिरिस्तथा, दे$_{8\text{-}10}$ मुवें. मुए. श्यामकाष्ठगिरिस्तथा, ग्र$_{2}$ श्यामागोस्तरिगस्तथा. –c) दे$_{1.2.5}$ न$_{1}$ द$_{1}$ ग्र$_{1.2}$ अम्बि° (→आम्बि°); का$_{1}$ रैभ्यः, दे$_{4}$ द$_{1}$ ग्र$_{1.2}$ काम्यः (→रम्यः); म$_{1}$ अम्बिकेयस्तुताकाम्यः. –d) दे$_{4.8\text{-}10}$ न$_{1}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ मुवें. मुए. मुब. केसरी (→केशरी).

**३४.** –a) ब$_{2}$ स्वमारी (→कुमारी). –b) दे$_{3.6.7}$ मालिनी, द$_{1}$ वर्णिनी, ग्र$_{1.2}$ म$_{1}$ बलिनी (→नलिनी); ब$_{1.3}$ दे$_{1.4.8\text{-}10}$ न$_{1}$ ते$_{1}$ द$_{1}$ ग्र$_{1.2}$ म$_{1}$ मुवें. मुए. वेणुका (द$_{1}$ न$_{1}$ °कास्); दे$_{6}$ देणुकास्, दे$_{6}$ रेणुकास् (→रेणुका). –c) दे$_{3.6.7}$ इक्षुश्च, दे$_{4}$ ऋतुका (→इक्षुका); दे$_{1}$ धेमुका, दे$_{3.6}$ धित्नुका, दे$_{7}$ [अ]धितुका, द$_{1}$ ग्र$_{1.2}$ वेणुका, म$_{1}$ रेणुका (→धेनुका); –d) ग्र$_{2}$ गौसीन चेति ति निम्नगाः(?).

वें.१.४६.३६ आसां पिबन्तः सलिलं जीवन्ते तत्र मानवाः ।
अनामया ह्यशोकाश्च रागद्वेषविवर्जिताः ॥३५
मगाश्च मगधाश्चैव मानवा मन्दगास्तथा ।
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चात्र क्रमेण तु ॥३६
यजन्ति सततं देवं सर्वलोकैकसाक्षिणम् ।
व्रतोपवासैर्विविधैर्देवदेवं दिवाकरम् ॥३७
तेषां सूर्येण सायुज्यं सामीप्यं च सरूपता ।
सलोकता च विप्रेन्द्रा जायते तत्प्रसादतः ॥३८
शाकद्वीपं समावृत्य क्षीरोदः सागरः स्थितः ।
श्वेतद्वीपश्च तन्मध्ये नारायणपरायणाः ॥३९
तत्र पुण्या जनपदा नानाश्चर्यसमन्विताः ।
श्वेतास्तत्र नरा नित्यं जायन्ते विष्णुतत्पराः ॥४०
नाधयो व्याधयस्तत्र जरामृत्युभयं न च ।
क्रोधलोभविनिर्मुक्ता मायामात्सर्यवर्जिताः ॥४१
नित्यपुष्टा निरातङ्का नित्यानन्दाश्च भोगिनः ।
नारायणपराः सर्वे नारायणपरायणाः ॥४२
केचिद् ध्यानपरा नित्यं योगिनः संयतेन्द्रियाः ।
केचिज्जपन्ति तप्यन्ति केचिद् विज्ञानिनोऽपरे ॥४३
अन्ये निर्बीजयोगेन ब्रह्मभावेन भाविताः ।
ध्यायन्ति तत् परं व्योम वासुदेवं परं पदम् ॥४४
एकान्तिनो निरालम्बा महाभागवताः परे ।
पश्यन्ति परमं ब्रह्म विष्णवाख्यं तमसः परं ॥४५

---

३५. ब1. cd ⊙. –a) ब1 दे7 ग्र2 म1 पिबन्ति (→पिबन्तः). –b) ब2 द1 मुवें. मुए. जीवन्ति, म1 जीवन्तस् (→जीवन्ते). –c) का1 अनामयह्य-, दे4 द1 ग्र1 अनामयास्त्व-, न1 अनामयाप्य-, मुवें. मुए. अनामयाश्चा-, मुब. अनामया ह्य- (→अनामया ह्य-); ग्र2 अनयामास्त्वशोकास्ते, म1 पञ्चवर्ष-सहस्राणि.

३६. –a) दे4.10 मुवें. मुए. मृगाश्च, दे6 ममाश्च, द1 वंगाश्च, म1 मायाश्च (→मगाश्च); का1 मगधश्, दे1.8 द1 ग्र2 मुवें. मुए. मागधाश् (→मगधाश्); न1 मगधा सहसा चैव. –b) ब2 दे8-10 न1 म1 मुवें. मुए. मुब. मानसा, दे3.6.7 मालवा (→मानवा); दे10 मंदकास-, दे4 मंगदास-, द1 ग्र1.2 पञ्चवास् (→मन्दगास्); म1 मानसाश्चैव मन्दगाः. –d) ब2 चेति, दे1.4 न1 द1 ग्र1 म1 चानु-, दे8-10 चान्यान्, ग्र2 चैव (→चात्र); ब1 दे1 च (→तु).

३७. –b) दे5 सर्वं (→सर्व-). –c) ब2 व्रतोपवास-, दे5 व्रतोपचारैः (→व्रतोपवासैर्). –d) दे5 देवदेव- (→देवदेवं); दे4 द1 ग्र1.2 म1 देवदेवं कविं रविम्.

३८. म1. cd ⊙. –a) ब2 दे1.8-10 न1 मुवें. मुए. मुब. वै सूर्य- (→सूर्येण). –b) ब2 दे1 द1 ग्र1.2 म1 सारूप्यं (→सामीप्यं); का1 स्वरूपता, दे1.4 ग्र1.2 समीपता (दे4 ग्र2 °तः); दे7-9 सुरूपता, म1 स लोकतां (→सरूपता).

३८ श्लोकात् परं दे8-10 पुस्तकेषु अधिकम्—
दे8- 'इति श्रीकूर्मपुराणे वैकुण्ठलोकः, दे9- इति श्रीकूर्मपुराणे । अथ बैकुण्ठलोकः ॥ सूत उवाच ।; दे10 -इति श्रीकूर्मपुराणे वैकुण्ठलोकवर्णनं नामाध्यायः ॥४९॥

३९. –a) दे10 शाकं (→शाक-). –c) ब2 ग्र2 °द्वीपस्तु, दे3 न1 मुवें. मुए. °द्वीपं च, द1 म1 °द्वीपस्य (→°द्वीपश्च). –d) का1 ब2.3 दे1.2.6.9 °परायणः, न1 °परायणं (→°परायणाः),

४०. ब1 दे8-10. ४०a-४२d ⊙ (द्र. सं.); दे6. ४०c-४१d ⊙. –c) द1 ग्र1.2 म1 श्वेताश्चैव (→श्वेतास्तत्र). –d) दे5 तत् -परः (→-तत्पराः).

४१. ब1 दे6.8-10. ⊙. (द्र. ४० पा. वि.). –a) दे5 ग्र2 आधयो (→नाधयो). –b) ग्र2 जना° (→जरा°); दे4 °भये (→°भयं). –c) दे5 क्रोधलोभा च निर्मुक्ता. –d) ग्र2 म1 मद° (→माया°).

४२. ब1 दे8-10. ⊙ (द्र. ४० पा. वि.). –a) दे4 °जुष्टा, न1 °तुष्टा (→°पुष्टा); दे1 नित्यं चैव निरातङ्काः. –c) ब2.3 दे1 मुवें. मुए. मुब. °समाः (→°पराः). –d) दे2 °यणः (→°यणाः).

४३. न1. ab ⊙ (द्र. सं.). –b) दे10 योगिनः संजितेन्द्रियः. –c) दे1 यजन्ति (→जपन्ति); दे8-10 जाप्यन्ति, ग्र2 जप्यन्ति (→तप्यन्ति). –d) दे1 नराः, ग्र1 पराः (→[अ]परे).

४४. दे3. ४४a–४५b ⊙ (द्र. सं.); म1. ⊙. –a) ब1 अन्ये निर्वाणभावेन, दे4 द1 ग्र1.2 अन्ये (ग्र2 °न्यो) विप्रास्तु योगेन, दे7 अन्ये निष्ठितयोगेन. –c) ब1 तत्परो, ब2 तत्पदं, दे5 तत्पर-, ग्र2 तत् परमं (→तत्परं); दे8-10 मुवें. मुए. मुब. ब्रह्म (→व्योम). –d) ब3 दे6 °देव- (→°देवं); दे1.8.10 मुवें. मुए. मुब. सनातनं (→परं पदं).

४५. ब1. ४५d 'मसः परं' इत्यारभ्य ४८d 'विष्णोरन्त' यावन्नास्ति; दे1. ४५b–५८b 'सुवेषै र्' यावत् ⊙; दे3.

सर्वे चतुर्भुजाकाराः शङ्खचक्रगदाधराः ।
सुपीतवाससः सर्वे श्रीवत्साङ्कितवक्षसः ॥४६
अन्ये महेश्वरपरास्त्रिपुण्ड्राङ्कितमस्तकाः ।
स्वयोगोद्भूतकिरणा महागरुडवाहनाः ॥४७
सर्व शक्तिसमायुक्ता नित्यानन्दाश्च निर्मलाः ।
वसन्ति तत्र पुरुषा विष्णोरन्तरचारिणः ॥४८
तत्र नारायणस्यान्यद् दुर्गमं दुरतिक्रमम् ।
नारायणं नाम पुरं व्यासाद्यैरुपशोभितम् ॥४९
हेमप्राकारसंयुक्त स्फाटिकैर्मण्डपैर्युतम् ।
प्रभासहस्रकलिलं दुराधर्षं सुशोभनम् ।
हर्म्यप्राकारसंयुक्तमट्टालकसमाकुलम् ॥५०
हेमगोपुरसाहस्रैर्नानारत्नोपशोभितैः ।
शुभ्रास्तरणसंयुक्तं विचित्रैः समलंकृतम् ॥५१
नन्दनैर्विविधाकारैः स्रवन्तीभिश्च शोभितम् ।
सरोभिः सर्वतो युक्तं वीणावेणुनिनादितम् ॥५२
पताकाभिर्विचित्राभिरनेकाभिश्च शोभितम् ।
वीथीभिः सर्वतो युक्तं सोपानैः रत्नभूषितैः ॥५३
नारीशतसहस्राढ्यं दिव्यगेयसमन्वितम् ।
हंसकारण्डवाकीर्णं चक्रवाकोपशोभितम् ।
चतुर्द्वारमनौपम्यमगम्यं देवविद्विषाम् ॥५४ वें.१.४६.५६

ab. ⊙ (द्र. ४४ पा. वि.). –a) ब1 एकान्तिको, दे6.7 निरातङ्का (→निरालम्बा). –b) दे4 °भागरताः, दे6 °भागरता: (→°भागवताः). –c) म1 तप्यन्ति (→पश्यन्ति); ब1 दे3.4.6-10 न1 द1 ग्र1.2 म1 मुवें. मुए. मुब. तत्परं (मुवें. मुए. °रे) (→परमं). –d) दे3 विश्वस्य तमसः परं, दे5.7 विश्वाख्यं (दे7 °ख्यां) तमसः परम्.

४६. ब1 दे1. ⊙ (द्र. ४५ पा. वि.); का1. ab ⊙. –c) मुब. स-(→सु-); का1 ब2.3 दे3-5.7 °वसनाः (→°वाससः); द1 ग्र1.2 म1 सुशीलमनसः सर्वे.

४७. ब1 दे1. ⊙ (द्र. ४५ पा. वि.). दे6 अन्यो (→अन्ये); दे6 सहे° (→महे°); दे4 °चरा (→°परा). –c) ब3 दे7-10 मुवें. मुए. मुब. सु- (→स्व-); ब3 दे6 -योगोद्धुत-किरणाः, दे4 -योगोद्भूति किरणैर्, दे7 -योगोद्भूति किरणाः, दे8-10 मुवें. मुए. मुब. -योगाद्भूति (दे10 °त) करणाः, न1 -योगाद् भूरिकिरणाः, द1 ग्र1 -योगीभूतिकरणै, ग्र2 म1 -योगीभूतकरणै (→-योगोद्भूतकिरणा[:]). –d) म1 पूजयन्ति महेश्वरं.

४८. ब1 दे1 म1. ⊙. –a) दे4.5.8-10 न1 ग्र2 मुवें. मुए. मुब. सर्वे (→सर्व-). –d) दे4 विष्णोः सततगामिना, ग्र1.2 विष्णोर्लोके (ग्र2 °क) स मानिनः.

४९. दे1. ⊙. –a) ब2 °स्यान्यै, दे4 द1 ग्र1 °स्याद्यं, दे8-10 मुए. °स्यान्यं, म1 °स्यासीत्, मुब. °स्यान्ये (→°स्यान्यद्). –b) न1 द1 ग्र1.2 दुर्जयं, म1 भवनं (→दुर्गमं); का1 दे5 दुर्गं (दे5 ग) संहरतिक्रमम्. –d) दे4.7-9 न1 द1 ग्र1.2 म1 मुवें. मुए. मुब. प्रासादैः, (→व्यासाद्यैः); दे10 प्रासादैरपि शोभितम्.

५०. दे1. ⊙. –a) दे4 °संयुक्तैः, दे7 °संयुक्तां (→°संयुक्तं). –b) ब1.3 मण्डलैर् (→मण्डपैर्); का1 ब2.3 दे2.3.5.6 द1 वृतं (दे5 °तां), ब3 वृतैः, दे10 युतैः (→युतम्). –c) ग्र2 °साहस्र- (→°सहस्र-); ब2 -खचितं, दे3 -कलितं (→-कलिलं). –d) दे3.7 °शोभितं (→°शोभनं); का1 दुराधर्षसुशोभनं, दे10 दुराधर्षस्य शोभनम्. –e) दे5 हर्म्यं (→हर्म्य-) दे8-10 मुवें. मुए. मुब. °प्रासाद- (→°प्राकार-). –f) का1 महादानसमाकुलं, ब2 चपट्टोलसमाकुलं; ब3 दे5 मुवें. मुए. महाट्टासलमाकुलं, दे3.6.7 महाट्टालकसं (दे6 °मा) कुलं, दे4 महारत्नसमावृतं, द1 ग्र1.2 म1 अट्टालकसमावृतं.

५१. दे1. ते1. ⊙. –b) दे4 ग्र1.2 म1 °शोभितं (→°शोभितैः). –c) ब1 दे3-शुभास्तरण°, ब3 शुभ्रतोरण° (→शुभ्रास्तरण°); दे7 °संयुक्तां, दे8-10 मुवें. मुए. मुब. °संयुक्तैः (→°संयुक्तं) ग्र2 म1 वेदिभिः सर्वतो युक्तं. –d) द1 ग्र1.2 म1 विचित्रैश्च समन्वितं.

५२. दे1. ⊙. –a) दे6 चन्दनैर् (→नन्दनैर्). –b) दे 9.10 श्रवन्तीभिश् (→स्रवन्तीभिश्); ब2 मुब. सरिद्भिरुप-शोभितं, दे4 तथा पुष्पफलोपमैः, द1 ग्र1.2 म1 पुष्पपत्र-समन्वितैः. –c) दे4 संवृतं (→सर्वतो); द1 ग्र1.2 म1 सामभिः सं (ग्र2 म1 सु)वृता नित्यं. –d) दे4 °निनादितैः, द1 ग्र1.2 °र वादिभिः, म1 °विनादिभिः (→°निनादितम्).

५३. दे1. ⊙; ब1 म1. cd ⊙. –a) दे3.6.7 अनेकाभिः (→विचित्राभिः). –b) दे3.6.7 चन्दनैरुपशो-भितम्. –c) ब3 दे5.7 न1 मुवें. वीथिभिः, दे4 द1 ग्र1.2 वेदिभिः (→वीथीभिः). –d) का1 सोद्यानैः, ब2 द1 सा (द1 स) पानैर् (→सोपानैर्); का1 °भूषितं (→°भूषितैः).

५४. ब1 दे1. ⊙; द1 ef. ⊙. –a) दे8-10 न1 मुवें. मुए. मुब. नदी° (→नारी°); दे4 °सहस्राख्यां, दे5 °सहस्राद्यं, दे10 °सहस्राद्यैर्, द1 ग्र1.2 म1 °स(ग्र1 °सा)हस्रस्य (→°सहस्राढ्यं). –b) दे3.7 -पेय-, दे4 -राग-, दे9 -नाद-, +

वें.१.४९.५७ तत्र तत्राप्सरःसंघैर्नृत्यद्भिरुपशोभितम् ।
नानागीतविधानज्ञैर्देवानामपि दुर्लभैः ॥५५
नानाविलाससंपन्नैः कामुकैरतिकोमलैः ।
प्रभूतचन्द्रवदनैर्नूपुरारावसंयुतैः ॥५६
ईषत्स्मितैः सुबिम्बोष्ठैर्बालमुग्धमृगेक्षणैः ।
अशेषविभवोपेतैर्भूषितैस्तनुमध्यमैः ॥५७
सुराजहंसचलनैः सुवेषैर्मधुरस्वनैः ।
संलापालापकुशलैर्दिव्याभरणभूषितैः ॥५८
स्तनभारविनम्रैश्च मदघूर्णितलोचनैः ।
नानावर्णविचित्राङ्गैर्नानाभोगरतिप्रियैः ॥५९
प्रफुल्लकुसुमोद्यानैरितश्चेतश्च शोभितम् ।
असंख्येयगुणं शुद्धमगम्यं त्रिदशैरपि ॥६०
श्रीमत्पवित्रं देवस्य श्रीपतेरमितौजसः ।
तस्य मध्येऽतितेजस्कमुच्चप्राकारतोरणम् ॥६१
स्थानं तद् वैष्णवं दिव्यं योगिनामपि दुर्लभम् ।
तन्मध्ये भगवानेकः पुण्डरीकदलद्युतिः ।
शेतेऽशेषजगत्सूतिः शेषाहिशयने हरिः ॥६२
विचिन्त्यमानो योगीन्द्रैः सनन्दनपुरोगमैः ।
स्वात्मानन्दामृतं पीत्वा परं तत् तमसः परम् ॥६३

---

-गान-, दे10 मुवें. मुए. मुब. -गान-, द1 ग्र1.2 -गेह- (द1 °न), म1 -भोग- (→-गेय-); दे8-10 न1 मुवें. मुए. मुब. -निनादितं (→-समन्वितं). –c) दे4 द1 ग्र1.2 म1 कारण्डवसमाकीर्णं, दे6 हंसकारण्डकाकीर्णं. –d) न1 चक्रवाकादिसेवितं. –e) दे2.10 न1 मुवें. मुए. मुब. चातुर° (→चतुर°). –f) का1 ब2 दे2.3.5-7 वेद° (→देव°).

**५५.** दे1. ⊙. ब1 द1 ab. ⊙. –a) दे4 °सर्वैर् दे5 °सर्वं (→°संघैर्). –c) का1 दे2.4 °गीति° (→°गीत°). –d) का1 ब1-3 दे2-7 द1 ग्र1.2 म1 दुर्लभं, न1 दुर्बलैः (→दुर्लभैः).

**५६.** दे1. ⊙. –a) दे4 द1 ग्र1.2 म1 °विधान° (→°विलास°). –b) दे4 द1 ग्र1.2 म1 कामु(द1 °मुं)कैरुप (ग्र1 °रभि)शोभितं. –c) दे4 प्रसूत° (→प्रभूत°); द1 ग्र1 म1 प्रभूतानन्द° (→प्रभूतचन्द्र°); ग्र2 प्रभूतानन्दनयनैः. –d) ब1 दे3.6.10 द1 ग्र1 म1 °रव° (→°राव°).

**५७.** दे1. ⊙; दे5. cd. ⊙. –a) दे3 °सितैः (→°स्मितैः). –b) ब2 चारुबाल°, दे3.6 बालयुग्म°, दे7 बलद्वल्गु°, दे10 बलिमुग्ध°, ग्र2 बालमुग्य° (→बालमुग्ध°); दे4 बालमुग्धाविलेक्षणैः. –c) मुब. अशेषविभवोपेतस्. –d) का1 भूतैस्तैः, दे5 स्त्रीवृतैस्, दे7 भूषितं, द1ग्र1.2 म1 स्त्रीजनैस् (→भूषितैस्); दे8.9 मुवें. मुए. मुब. तनुमध्यविभूषितैः, दे10 तनुमध्यं विशेषतैः.

**५८.** दे5. ⊙; दे1. a b 'सुवेषैर्' यावत् ⊙. –a) ब2 स्व- (→सु-); ब1 ग्र2 °वलनैः (→चलनैः). –b) दे6 सुवेगैर् (→सुवेषैर्); ब1 दे1.10 °स्वरैः (→°स्वनैः); ग्र2 मधुराराव निस्वनैः. –c) का1 ब3 दे2 न1 संल्लापोल्लाप°, ब2 दे3.6.7 संलापोल्लास°, दे10 ललापालाश° (→संलापालाप°). –d) द1 °भूषणैः (→°भूषितैः).

**५९.** म1 ५९cd ५८ श्लोकस्य b, c मध्ये वर्तते. –a) दे6 स्वर्ण° (→स्तन°); दे6°विनद्धैश् (→°विनम्रैश्). –b) ब1 दे3.6 द1 ग्र1 म1 मदा,° दे1.7-10 न1 मुवें. मुए. मधु° (→मद°). –c) दे6 °विचित्राढ्यैर् (→°विचित्राङ्गैर्). –d) दे4 °पति° (→°रति°); ग्र2 °प्रियः (→°प्रियैः).

**६०.** –a) दे8-10 न1 मुवें. मुए. मुब. उत्फुल्ल° (→प्रफुल्ल°); का1 °कुमुदो° (→°कुसुमो°). –b) दे8-10 मुवें. मुए. मुब. तद्भूतशतशोभितम् (दे10 °तैः). –c) द1 ग्र1.2 अनाख्येय° (→असंख्येय°); म1 °गुणैश् (→°गुणं); दे1 सिद्धम्, न1 शुभ्रं, + शुद्धं (→शुद्धं). –d दे8-10 असंख्यं, मुवें. मुए. असंख्यैस् (→अगम्यं); ग्र2 त्रिदशैरपि वन्दितं.

**६१.** d) दे5 पुर°, दे6 पुत्र°, दे7 शुभ्र°, दे8-10 मुवें. मुए. मुब. उद्यत्°, द1 ग्र1.2 म1 अट्ट° (→उच्च°); दे3 (शु) शुभ्र(च्च)प्राकारतोरणम्.

**६२.** –a) ब1 वैष्णवी, दे5 वैष्णवे (→वैष्णवं). –b) दे4 द1 ग्र1 दुर्गमं (→दुर्लभं); दे8-10 मुवें. मुए. मुब. योगिनां सिद्धिदायकम्. –d) ब2 पुण्डरीकेक्षणद्युतिः, म1 पुण्डरीकदलेक्षणः. –e) ब3 °भूतिः, दे1 °मूर्त्तिः, दे5 °त्रातः (→°सूतिः); ग्र2 शेते तत्र जगत्सूतिः. –f) ग्र1 शेषांगि°, + शेषाहि° (→शेषाहि°).

**६३.** ग्र2. cd ⊙. –a) दे10 °मानैः (→°मानो). –c) दे1 द1 ग्र1 म1 आत्मा°, दे8.9 सोत्मा° (→स्वात्मा°); दे10 सोन्मोदा *मृतं पीत्वा; न1 स स्वानन्दामृतं पीत्वा. –d) दे1.7

सुपीतवसनोऽनन्तो महामायो महाभुजः ।
क्षीरोदकन्यया नित्यं गृहीतचरणद्वयः ॥६४
सा च देवी जगद्वन्द्या पादमूले हरिप्रिया ।
समास्ते तन्मना नित्यं पीत्वा नारायणामृतम् ॥६५
न तत्राधार्मिका यान्ति न च देवान्तराश्रयाः ।
वैकुण्ठं नाम तत् स्थानं त्रिदशैरपि वन्दितम् ॥६६
न मेऽत्र भवति प्रज्ञा कृत्स्नशस्तन्निरूपणे ।
एतावच्छक्यते वक्तुं नारायणपुरं हि तत् ॥६७
स एव परमं ब्रह्म वासुदेवः सनातनः ।
शेते नारायणः श्रीमान् मायया मोहयञ्जगत् ॥६८
नारायणादिदं जातं तस्मिन्नेव व्यवस्थितम् ।
तमेवाभ्येति कल्पान्ते स एव परमा गतिः ॥६९　वें.१.४६.७२

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायां पूर्वविभागे सप्तचत्वारिंशोऽध्यायः ॥४७॥

---

न1 ग्र1 म1 परस्तात् (→परं तत्); ब2 दे2 द1 ग्र1 परः(→परं); दे4 परस्पररसः परः, दे5 शोषाहिशयने हरिः, दे6 परं *द्रसः परम्, दे8-10 मुवें. मुए. मुब. पुरस्तात् तमसः परः (दे10 पुरः).

६४. ब1 दे10. ६४d -६५ c ⊙ (द्र. सं). -a) दे1.8-10 न1 मुवें. मुए. मुब. पीतवासा(दे10 °स) विशालाक्षो. -b) ब3 महामाया, दे3.6.7 महायोगी (→महामायो); दे1 महाप्रभुः (→महाभुजः). -c) ग्र2 समुद्र° (→क्षीरोद०); का1 नीतं, दे10 मुक्तं (→नित्यं); न1 क्षीरोदकन्यकानित्यं. -d) दे4.6. ग्र2 °द्वयं (→°द्वयः).

६५. ब1 दे10. abc ⊙ (द्र. ६४ पा. वि.). -a) ग्र2 न1 साथ (→सा च); ग्र2 °भर्त्तुः, म1 °व्यापी (→°वन्द्या). -b) दे3.6.7 हरेः (→हरि-). -c) ब2 जन्मना (→तन्मना); ग्र2 समास्ते तन्मनामानि (?).

६६. -a) ब1 दे4 ग्र2 तत्र (→तत्रा-). -b) दे5 श्रमाः°, द1 ग्र1 °श्रिताः, ग्र2 °मृताः, मुवें. मुए. मुब. °लयाः (→°श्रयाः); दे5 न च देवीन्तरा श्रमाः. -c) ब2 वैष्णवं (→वैकुण्ठं). -d) दे8.9 त्रिदिशैर् (→त्रिदशैर्); न1 ग्र1.2 °रभि- (→°रपि); दे4 मण्डितं (→वन्दितं).

६७. -a) दे10 न1 प्राज्ञा (→प्रज्ञा); ब2.3 दे7 मुवें. मुए. मुब. न मे प्रभवति प्रज्ञा, द1 न मे भगवतः प्राज्ञाः, ग्र1 न मेऽस्ति भगवतः प्राज्ञा, ग्र2 न मेऽग्ति भवतः प्राज्ञा. -b) दे5 ते (→तत्); दे8.9 कृष्ण-, दे10 कृष्णा-, ग्र2 कृत्स्नं (→कृत्स्न-); दे4 -शस्त्र-, दे7-10 मुवें. मुए. मुब. -शास्त्र- (→-शस्तं); का1 दे10 ग्र2 निरूपणं, दे1 निरूपिणे (→निरूपणे) ब2 कृत्स्नस्यास्य निरूपणे. -c) ते1 न ता°, + एता° (→एता°). -d) ब2 नारायणाश्रयं हि तत्, ग्र2 ब1 नारायणपुरं महत्.

६८. -a) का1 दे2.5 य एवं, दे3.6.7 परं (दे6 °रे) घ (→स एव). -c) न1 दे5 ग्र2 नारायण- (→नारायणः); दे1 न1 मायया मोहितं जगत्, दे5 मायया मोहयते जगत्.

६९. -a) ते1 ज्ञातं, +जातं (→जातं); दे1 °कं जातं, दे10 °तं जातं (→°दं जातं); म1 नारायणेति तं जातं. -b) ते1 सुसंस्थितं (→व्यवस्थितं). -c) ब3 तमेवाख्येति, दे3.7 तं समभ्येति, दे6 तामराभ्येति, न1 ग्र1 म1 तमेव ह्येति, द1 तमेवास्येति, ग्र2 तमेवान्येति (→तमेवाभ्येति); ब2 तत्रास्तु, दे5 कल्पास्ते, दे8-10 कालान्ते (→कल्पान्ते); मुवें. मुए. तमाश्रयति कालान्ते. -d) का1 न1 परमां (→परमा).

**पुष्पिका**—[द1 अध्यायसमाप्तिर्नास्ति]

**पुराणनाम**—का1 दे1-4.6.8-10 न1 ग्र1.2 म1 मुवें. मुए. इति श्रीकू(का1 कौ)र्मपुराणे, ब1 इत्यादिपुराणेकौर्मे, ब2.3 दे5.7 इति कूर्मपुराणे, ते1 इत्यादिमहापुराणे श्रीकौर्मे, मुब. इति श्री कौर्मे महापुराणे पूर्वभागे. **अध्यायनाम**—दे4.8-10 न1 ग्र1.2 म1. ⊙; का1 भुवनविन्दोनासे (?), ब1-3 दे2.3.5.6 मुए. भुवनविन्यासे, दे1 भुवनकोशे श्वेतद्वीपवर्णनं नाम, दे7 भुवनविन्यासे श्वेतद्वीपवर्णनं नामको, ते1 श्वेतद्वीपवर्णनं नाम, मुवें. भुवनविन्यासे, मुब. भुवनकोषविन्यासे प्लक्षद्वीपादिकथनं नाम. **अध्यायसंख्या**—ब1 दे6. ⊙; का1 दे4 षट्चत्वारिंशोध्यायः ॥४६॥, ब2 ॥४६॥, ब3 दे2.3.5 षट्चत्वारिंशोध्यायः, दे1 एकोनपंचाशत्तमोध्यायः ॥४९॥, दे1 पंचारिततमोध्यायः ॥४९॥, दे8.9 एकोनपंचाशोऽध्यायः, दे10 मुवें. एकोनपञ्चाशोध्यायः ॥४९॥, न1 पंचचत्वारिंशोध्यायः, ते1 पंचाशोध्यायः, ग्र1 षट् चत्वारिंशोध्यायः ॥ श्रीरामश्शरणं मम, ग्र2 म1 मुब. अष्ट (ग्र2 °ष्टा) चत्वारिंशोध्यायः.

# ४८

सूत उवाच ।❀

वें.१.५०.१ शाकद्वीपस्य विस्ताराद् द्विगुणेन व्यवस्थितः ।
क्षीरार्णवं समाश्रित्य द्वीपः पुष्करसंवृतः ।।१
एक एवात्र विप्रेन्द्राः पर्वतो मानसोत्तरः ।
योजनानां सहस्राणि सार्द्धं पञ्चाशदुच्छ्रितः ।
तावदेव च विस्तीर्णः सर्वतः परिमण्डलः ।।२
स एव द्वीपः पश्चार्द्धे मानसोत्तरसंज्ञितः ।
एक एव महासानुः संनिवेशाद् द्विधा कृतः ।।३
तस्मिन् द्वीपे स्मृतौ द्वौ तु पुण्यौ जनपदौ शुभौ ।
अपरौ मानसस्याथ पर्वतस्यानुमण्डलौ ।
महावीतं स्मृतं वर्षं धातकीखण्डमेव च ।।४
स्वादूदकेनोदधिना पुष्करः परिवारितः ।
तस्मिन् द्वीपे महावृक्षो न्यग्रोधोऽमरपूजितः ।।५
तस्मिन् निवसति ब्रह्मा विश्वात्मा विश्वभावनः ।
तत्रैव मुनिशार्दूलाः शिवनारायणालयः ।।६
वसत्यत्र महादेवो हरोऽर्द्धहरिरव्ययः ।
संपूज्यमानो ब्रह्माद्यैः कुमाराद्यैश्च योगिभिः ।
गन्धर्वैः किन्नरैर्यक्षैरीश्वरः कृष्णपिङ्गलः ।।७

---

**४८**

[दे4 पुस्तके अयमध्यायो नास्ति]

❀दे8.9 सूत उ.; न1 ते1 ग्र1.2 सूतः; द1 म1 श्रीसूतः.

१. –a) दे10 °द्वीपश्च (→°द्वीपस्य); ग्र1 विस्तारं (→विस्ताराद्). –b) ग्र1 व्यवस्थिता, ग्र2 प्रकीर्त्तितं (→व्यवस्थितः). –c) दे10 क्षीरारवं (→क्षीरार्णवं); का1 ब1-3 दे1.3.6.7 न1 ते1 द1 ग्र1.2 म1 समावृत्य (→समाश्रित्य). –d) ब1-3 दे3.6.7 न1 ते1 द1 ग्र1 म1 मुब. °संज्ञितः, दे1 ग्र2 °संज्ञकः, दे8-10 मुवें. मु. ए. °संज्ञितं (→°संवृतः).

२. –b) दे9 मानसोत्तराः, दे10 नामसोत्तरः (→मानसोत्तरः). –d) ब2.3 दे1.3.6.7-10 न1 ते1 ग्र1 म1 मुवें. मुए. मुब. चोद्ध्वं, दे10 चोर्धं, द1 योद्ध्वं, ग्र2 औद्ध्वं (→सार्द्धं). –e) ब2 हि (→च); दे10 विस्तीर्णं (→विस्तीर्णः). –f) दे1 पर्वतः (→सर्वतः); दे1.2.7.9 न1 मुवें. मुए. मुब. पारि- (→परि-); दे5-मण्डलाः (→-मण्डलः).

३. a) का1 एष (→एव); ब2.3 दे1.10 न1 द्वीप- (→द्वीपः); का1 दे3.6 पश्चार्द्धे (→पश्चार्धे); दे7 शाकद्वीपस्य पश्चार्द्धे, दे8.9 ते1 मुवें. मुए. मुब. स एव द्वीप (मुवें. मुए. मुब. °पश्चार्द्धेन, द1 ग्र1.2 म1 स च(ग्र2 म1 तस्य) द्वीपस्य मध्ये तु. –b) दे3.6-10 मुवें. मुए. मुब. -संस्थितः (→-संज्ञितः). –a) दे1 महासार्थः, दे3.7 महासत्वः, दे6 महासांवः (?), दे8-10 महाभागाः, ते1 मुवें. मुए. मुब. महाभागः (?), ग्र2 महाजानि (→महासानुः). –d) ब1 दे1.8-10 न1 मुवें. मुए. संनिवेशोद्, ग्र1 संनिधत्ते (→संनिवेशाद्); दे1 कृतिः, दे6 कृताः (→कृतः); ग्र2 सन्निधिद्विविधाकृतिः; म1 मध्यतो वलयाकृतिः.

४. दे8-10 म1. cd ⊙. –a) द1 स्मृते (→स्मृतौ); का1 ब3 दे2 तु द्वौ, दे5 रुद्रौ (→द्वौ तु); द1 ग्र1.2 तौ (→द्वौ); म1 पुष्करद्वीपवलयं. –b) दे6 पुण्यजनपदैः शुभैः, म1 मध्येन विभजन्निव. –c) न1 अभितो (→अपरौ); ग्र2 मनस° (→मानस°); दे1 [अ]चं (→[अ]थ). –d) दे1 ग्र2 पर्वतस्याथ, दे5 न1 पर्वतस्थान- (न1 °स्यास्य) (→पर्वतस्यानु-); न1 -मण्डले, ते1 -मण्डलम् (→-मण्डलौ). –e) ब2 °बीजं, दे1 ग्र2 °वीत, दे5 °वातं, द1 °वात, ग्र1 °वीरं (→°वीतं); म1 वहिः, +स्मृतं (→स्मृतं); दे10 वर्षे (→वर्षं); ते1 महारीतस्वतं वर्षं. –f) ग्र2 पुष्पं (→खण्डं); म1 अन्ततः (→एव च).

५. ग्र2. cd ⊙ (द्र. सं.). –a) ब1 स्वादूदको-, दे10 स्वादोदके- (→स्वादूदके-); ब2.3 दे10 -नविधिना, ब2 -न महता (→-नोदधिना). –c) दे5 °शब्दो द1 °वृक्षौ (→°वृक्षो).

६. –a) ब3 निवसते (→निवसति). –b) दे3.7 °भाविता (दे7 °तः) (→°भावनः). –c) द1 ग्र1.2 म1 अत्रैव (→तत्रैव); ब1 मुवें. मुए. °शार्दूल (→°शार्दूलाः). –d) का1 ब3 दे1-3.5-7 शिवं (→शिव-); का1 ब2.3 दे1.3.5-7 न1 °लयं, ते1 द1 ग्र1.2 म1 °लयौ (→°लयः).

७. –a) दे6 न1 वसन्ति (→वसति). –b) ब1 दे8.9 मुवें. मुए. मुब. हरोर्द्धं, ब2 न1 ते1 द1 ग्र1.2 म1 हरोऽथ (→हरोऽर्द्धं-). –c) द1 ग्र1 सुपूज्य- (→संपूज्य-); ग्र1 -मानौ (→-मानो). –d) ग्र2 कामराद्यैः, म1 कौमाराद्यैः

स्वस्थास्तत्र प्रजाः सर्वा ब्रह्मणा सदृशत्विषः ।
निरामया विशोकाश्च रागद्वेषविवर्जिताः ॥८
सत्यानृते न तत्रास्तां नोत्तमाधममध्यमाः ।
न वर्णाश्रमधर्माश्च न नद्यो न च पर्वताः ॥९
परेण पुष्करस्याथ समावृत्य स्थितो महान् ।
स्वादूदकसमुद्रस्तु समन्ताद् द्विजसत्तमाः ॥१०
परेण तस्य महती दृश्यते लोकसंस्थितिः ।
काञ्चनी द्विगुणा भूमिः सर्वा चैव शिलोपमा ॥११
तस्याः परेण शैलस्तु मर्यादात्मात्ममण्डलः ।
प्रकाशश्चाप्रकाशश्च लोकालोकः स उच्यते ॥१२
योजनानां सहस्राणि दश तस्योच्छ्रयः स्मृतः ।
तावानेव च विस्तारो लोकालोको महागिरिः ॥१३
समावृत्य तु तं शैलं सर्वतो वै तमः स्थितम् ।
तमश्चाण्डकटाहेन समन्तात् परिवेष्टितम् ॥१४
एते सप्त महालोकाः पातालाः सप्त कीर्त्तिताः ।
ब्रह्माण्डस्यैष विस्तारः संक्षेपेण मयोदितः ॥१५
अण्डानामीदृशानां तु कोटचो ज्ञेयाः सहस्रशः ।
सर्वगत्वात् प्रधानस्य कारणस्याव्ययात्मनः ॥१६
अण्डेष्वेतेषु सर्वेषु भुवनानि चतुर्दश ।
तत्र तत्र चतुर्वक्त्रा रुद्रा नारायणादयः ॥१७ वें. १.५०.१९

(→कुमाराद्यैः). –f) का1 न1-3 दे2.3.5-7 °पिङ्गलैः (→°पिङ्गलः); द1 ग्र1.2 म1 ईश्वरो विष्णुरेव च.

८. –a) ब2.3 दे1.2.5 सुस्थाः (→स्वस्थाः). –b) ब2 दे1.5.7 ब्राह्मणा, ब3 ते1 ब्रह्मणः, दे8-10 मुवें. मुए. ब्राह्मणाः (→ब्रह्मणा); का1 दे7 द1 ग्र1.2 म1 सदृशाद्विजाः, ब1.3 दे2.3.6 सदृश (दे3 °शो)द्विषः, दे1 सदृशायुषः, दे8-10 मुवें. मुए. शतशस्त्विषः (→सदृशत्विषः). –c) ग्र1 निशोकाः (→विशोकाः); ग्र2 निरामयाग्निहोत्रा च, म1 दशवर्षसहस्राणि. –d) दे2 विवर्जितः (→विवर्जिताः); म1 जना जीवन्त्यनामयाः.

९. ब3. cd ⊙. –a) दे5 सत्यामृते (→सत्यानृते); का1 तत्रास्ति, दे1 तत्रासां, ग्र2 तत्रास्ते, म1 सत्यास्तां (→तत्रास्तां). –b) दे3 °मद्धयमः (→°मध्यमाः). –c) ब1 धर्मा च, दे5 धर्मश्च (→धर्माश्च); दे1 न च वर्णाश्रमास्तत्र. –d) दे6 न नाद्या, ग्र2 न वद्या (→न नद्यो).

१०. ब3 दे3.6.7 ग्र2. ⊙; न1. १०d–१२a ⊙ (द्र. सं.). –a) दे7 पारेण, दे8.9 पुरेण (→परेण); दे8-10 ते1 मुवें. मुए. मुब. पुस्करेणाथ (→पुष्करस्याथ). –b) द1 भवन्(→महान्). –c) का1 ब1.2 दे1.2.5 स्वादू (दे1.2 °दु) दकः (→स्वादूदक-); का1 ते1 च (→तु). –d) का1 °पुंगवाः (→°सत्तमाः).

११. न1. ⊙. –a) ब1 वरेण (→परेण); दे5 महतो (→महती). –b) द1 ग्र1 °संस्थितैः (ग्र1 °ताः) (→°संस्थितिः). –c) द1 काञ्चना, ग्र1 काञ्चिनी (→काञ्चनी); ग्र2 °भूतिः (→°भूमिः). –d) का1 सर्वा चैका, ब1.3 दे1.5 द1 ग्र1.2 सर्वाचैक, दे8-10 मुवें. मुए. मुब. सर्वत्रैक (→सर्वा चैव); ब2 दे10 शिरोपमा, ब3 दे5 शिलोपमाः, ते1 शिलोत्तमाः, द1 ग्र1.2 म1 शिलामया (→शिलोपमा).

१२. न1. a ⊙. –b) ब1.3 न1 मुवें. मुए. मुब. मर्यादा (न1 °दां) भानु-, ब2 मर्यादासानु-, दे1 मर्यादासार्थ-, दे3.6.7 मर्यादास्थाणु-, दे8-10 ते1 मर्यादा (दे10 ते1 °दां) तानु-, द1 ग्र1.2 म1 मर्यादोवातु- (→मर्यादात्मात्म-); म1 -मण्डितः (→-मण्डलः). –c) दे5 च (→चा-).

१३. –a) द1 सहस्रेण (→सहस्राणि). –b) द1 ग्र1.2 म1 शतं (→दश); ब1 तथा, दे3.6.7 म1 ततः, ग्र2 च सः (→स्मृतः). –c) दे10 तावानेन, न1 द1 ग्र1.2 म1 तावदेव (→तावानेव). –d) दे1.8-10 न1 ते1 द1 मुवें. मुए. मुब. °लोक- (→°लोको); दे1.8-10 न1 मुवें. मुए. मुब. महागिरेः (→महागिरिः).

१४. –a) ब1 समावृत्यंत-, दे10 समाश्रित्य तु (→समावृत्य तु). –b) दे6 पर्वतो (→सर्वतो); ब2.3 ते1 समास्थितं, दे5 समोस्थितः, दे8-10 मुवें. मुए. मुब. समस्थितं, न1 द1 ग्र1.2 म1 तमस्थितं (न1 °तः) (→तमः स्थितम्). –d) दे2.5 न1 परिवेष्टितः (दे5 °त्तमः), द1 परिचेष्टितं (→परिवेष्टितं).

१५. –b) म1 मुवें. मुए. मुब. सम्प्रकीर्त्तिताः (→सप्त कीर्त्तिताः). –c) का1 ब्रह्मांडस्ये, ब2.3 दे7 ब्रह्मांडस्यैव, दे8-10 ते1 ग्र2 मुवें. मुए. मुब. ब्रह्माण्डाशेष (ग्र2 °स्येष) (→ब्रह्माण्डस्यैष). –d) न1 मयेरितः (→मयोदितः).

१६. –a) दे5 अंडानामीदशीकोट्यो, दे10 अंडानामिन्द्र-शालां तु. –b) दे5 ज्ञेयान् शत-, म1 कोटि कोटि- (→कोट्यो ज्ञेयाः). –c) ब1 सर्वतत्वात्, द1 ग्र1.2 स (ग्र1 सं) गत्वा तत्, म1 अनन्तत्वात् (→सर्वगत्वात्). –d) ग्र2 कारणस्य यतात्मनः.

१७. –a) दे1 अण्डेषु तेषु सर्वेषु. –b) दे1.5 चतुर्दशः (→चतुर्दश). –c) ते1 तत्रैव च (→तत्र तत्र); न1 म1 चतुर्वक्त्रो (त1 °क्त्र(?)) (→चतुर्वक्त्रा) –d) दे10 रुद्रो, न1 म1 रुद्र- (→रुद्रा).

पश्यन्ति मुनयो युक्ताः स्वात्मानं परमार्थतः ।
विकारहीनं निर्दुःखमानन्दात्मानमव्ययम् ॥१३
अहं कर्त्ता सुखी दुःखी कृशः स्थूलेति या मतिः ।
सा चाहंकारकर्तृत्वादात्मन्यारोप्यते जनैः ॥१४
वदन्ति वेदविद्वांसः साक्षिणं प्रकृतेः परम् ।
भोक्तारमक्षरं शुद्धं सर्वत्र समवस्थितम् ॥१५
तस्मादज्ञानमूलो हि संसारः सर्वदेहिनाम् ।
अज्ञानादन्यथा ज्ञानं तच्च प्रकृतिसंगतम् ॥१६
नित्योदितः स्वयं ज्योतिः सर्वगः पुरुषः परः ।
अहंकाराविवेकेन कर्त्ताहमिति मन्यते ॥१७
पश्यन्ति ऋषयोऽव्यक्तं नित्यं सदसदात्मकम् ।
प्रधानं प्रकृतिं बुद्ध्वा कारणं ब्रह्मवादिनः ॥१८
तेनायं संगतो ह्यात्मा कूटस्थोऽपि निरञ्जनः ।
स्वात्मानमक्षरं ब्रह्म नावबुद्ध्येत तत्त्वतः ॥१९
अनात्मन्यात्मविज्ञानं तस्माद् दुःखं तथेतरम् ।
रागद्वेषादयो दोषाः सर्वे भ्रान्तिनिबन्धनाः ॥२०
कर्मण्यस्य भवेद् दोषः पुण्यापुण्यमिति स्थितिः ।
तद्वशादेव सर्वेषां सर्वदेहसमुद्भवः ॥२१ वें.२.२.२२

१३. दे1.5. ab ⊙ (द्र. १२ पा. वि.). –a) का1 ब1-3 दे3.8 न1 द1 उ1 मुवें. मुए. मुब. मुक्ताः, दे4.6 ते1 म1 मुक्ता, दे9 युक्ताः, + मुक्ताः (→युक्ताः). –b) ते1 परमेश्वरम् (→परमार्थतः). –c) दे5 विहार° (→विकार°); दे6 ग्र2 °हीन (→°हीनं); दे8.9 मुवें. मुए. मुब. निर्द्वन्द्वं (→निर्दुःखं). –d) दे5 स्वानन्दा° (→आनन्दा°).

१४. –b) न1 कृता-, म1 कृश- (→कृशः); ब2 कृशोहमिति, ब3 दे3.6 कृशः (दे9 °श) कालेति, दे4 ते1 ग्र2 कृशः स्थूलीति (→कृशः स्थूलेति); दे1 वा, न1 यो (→या). –c) दे8 स (→सा); दे5 वा°, द1 या° (→चा°); ब2 स चाहं-कार्यकारत्वात्, ब3 दे2.3.6 स चाहंकर्तृकार (ब3 °रि) त्वाद्. –d) दे6 न1 आत्मा° (→आत्म°); दे6 ग्र2 [आ]रोपिते, दे8.9 म1 मुवें. मुए. मुब. [आ]रोपितां (→[आ]रोप्यते).

१५. –a) ब2.3 दे3.6 विदन्ति (→वदन्ति). –b) दे5 प्रकृतेः परां, न1 परमेश्वरम् (→प्रकृतेः परम्). –c) ब1-3 दे2.3 बुद्धाः, दे1 न1 बुद्धा, दे6 बुद्धः, दे8 मुवें. मुए. मुब. बुद्धं, दे9 बुद्धाः, + बुद्धया (→शुद्धं). –d) उ1 सर्वतः (→सर्वत्र).

१६. –a) ब1 अज्ञाय, दे3 अज्ञानं (→अज्ञान-); दे4 -मूलं (→-मूलो); का1 ब1-3 दे2.3.6 यं (→हि). –c) का1 दे8 मुवें. मुए. मुब. ज्ञानात् (→ज्ञानं). –d) दे3 तत्र, दे4.8.9 उ1 तत्व-, द1 तं तु, म1 तद्वत्, मुवें. मुए. मुब. तत्त्वं (→तच्च); ब1.3 दे1-3.5.6 न1 °संगतः, ब2 °सम्भवम्, दे4 द1 ग्र2 उ1 °सम्मतम् (→°सङ्गतम्).

१७. –a) ब2.3 दे3.4.6 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. नित्योदितं (द1 ग्र2 म1 °त) (→नित्योदितः). –b) न1 सर्वं यः (→सर्वगः). –c) का1 ब1-3 दे6 ते1 अहंकार-, ग्र2 अहंकाराद् (→अहंकारा-); म1 अहंकारादिवेशेन. –d) दे8.9 कर्त्तारम् (→कर्त्ताहम्); द1 मन्यसे (→मन्यते).

१८. –a) ब2 सूरयो°, उ1 मुनयो° (→ऋषयो°); दे6 यत्र (→-व्यक्तं); न1 पश्यंति पुरुष(चा)व्यक्तं. –c) न1 प्रधान-, ग्र2 प्राधानं (→प्रधानं); ब3 दे4 प्रकृतिर्, दे8.9 मुवें. मुए. पुरुषं (→प्रकृतिं); का1 शुद्धां, ब1 दे6 बुद्धाः, ब2.3 दे1 मुब. बुद्धेः, द1 बद्ध्वा (→बुद्ध्वा).

१९. –a) का1 ब2.3 दे2.6 तेनात्र (→तेनायं); मुवें. मुए. मुब. सङ्गतः (→सङ्गतो); ब2 भूत्वा, मुवें. मुए. मुब. स्वात्मा (→ह्यात्मा). –b) ग्र2 हि (→[अ]पि); उ1 निरञ्जनं (→निरञ्जनः). –c) दे1.3.6 ग्र2 आत्मानं (→स्वात्मानं). –d) ब3 दे1 °बुद्धेत (→°बुद्ध्येत); द1 ग्र2 म1 उ1 तत्वंवित् (→तत्त्वतः).

२०. –a) उ1 अनात्मा° (→अनात्म°); ब3 आत्मन्यात्मानविज्ञानं. –b) का1 तथेन्तरं, ब1.2 दे3.5.8.9 द1 ग्र2 उ1 मुवें. मुए. तथेतरत्, ब3 दे1 ते1 तथैव तत्, न1 तथेतरान्, म1 तथैतरत्, मुब. तथेरितम् (→तथेतरं). –c) का1 °दोषा° (→°द्वेषा°). –d) दे1 भ्रान्त° (→भ्रान्ति°); का1 °विबर्धनाः (→°निबन्धनाः).

अतः परम् उ1 पुस्तके b,c मध्ये अधिकम्—ईश्वरः.

२१. ब1. ⊙. –a) का1 ब2.3 दे2.3.6 कार्यो ह्यस्य, दे4 कर्म ह्यस्य, दे8.9 मुवें. मुए. मुब. कर्माण्यस्व, न1 कर्मादस्य, न1 कर्मादस्य, ते1 कर्मान्तास्स्युर्, द1 ग्र2 म1 उ1 कर्मण्यत्र (उ1 °ण्यात्तु) (→कर्मण्यस्य); दे8.9 मुवें. मुए. मुब. महात् दोषः, ते1 उ1 भवेद्दोषाः (→भवेद्दोषः). –b) दे5** (→पुण्या); का1 ब2.3 दे2.3.5.6 श्रुतिः, दे9 श्रुतिः, + स्थितिः (→स्थितिः). –c) ग्र2 म1 उ1 सर्वोयं (→सर्वेषां). –d) दे3.6 न1 सर्वे (→सर्व-); ग्र2 म1 -देव° (→-देह°) दे3 °समुद्भवाः (→°समुद्भवः).

वें.२.२.२२ नित्यः सर्वत्रगो ह्यात्मा कूटस्थो दोषवर्जितः ।
एकः स भिद्यते शक्त्या मायया न स्वभावतः ॥२२
तस्मादद्वैतमेवाहुर्मुनयः परमार्थतः ।
भेदो व्यक्तस्वभावेन सा च मायात्मसंश्रया ॥२३
यथा हि धूमसंपर्कान्नाकाशो मलिनो भवेत् ।
अन्तःकरणजैर्भावैरात्मा तद्वन्न लिप्यते ॥२४
यथा स्वप्रभया भाति केवलः स्फटिकोऽमलः ।
उपाधिहीनो विमलस्तथैवात्मा प्रकाशते ॥२५
ज्ञानस्वरूपमेवाहुर्जगदेतद् विचक्षणाः ।
अर्थस्वरूपमेवाज्ञाः पश्यन्त्यन्ये कुदृष्टयः ॥२६
कूटस्थो निर्गुणो व्यापी चैतन्यात्मा स्वभावतः ।
दृश्यते ह्यर्थरूपेण पुरुषैर्भ्रान्तिदृष्टिभिः ॥२७
यथा संलक्ष्यते रक्तः केवलः स्फटिको जनैः ।
रक्तिकाद्युपधानेन तद्वत् परमपूरुषः ॥२८
तस्मादात्माऽक्षरः शुद्धो नित्यः सर्वगतोऽव्ययः ।
उपासितव्यो मन्तव्यः श्रोतव्यश्च मुमुक्षुभिः ॥२९
यदा मनसि चैतन्यं भाति सर्वत्रगं सदा ।
योगिनो व्यवधानेन तदा संपद्यते स्वयम् ॥३०
यदा सर्वाणि भूतानि स्वात्मन्येवाभिपश्यति ।
सर्वभूतेषु चात्मानं ब्रह्म संपद्यते तदा ॥३१

२२. ब1. ⊙. –a) ब2 मुवें. मुए. नित्यं (→नित्यः); दे4 सर्वगतो°, दे5 सर्वानुगो° (→सर्वत्र गो°); उ1 मुवें. मुए. °गुह्यात्मा (→°गो ह्यात्मा). –b) ब2 गूढस्थो (→कूटस्थो). –c) उ1 एकसद् (→एकः स); का1 द1 स विद्यते, दे8.9 मुवें. मुए. मुब. सन्तिष्ठते (→स भिद्यते); ब2 ब्रह्म (→शक्त्या). –d) ते1 मायया सर्वभावतः.

२३. ब1. ⊙; ग्र2 म1 उ1. ab ⊙ (ह. सं.). –a) दे6 तस्मात्व° (→तस्माद°); ब3 इत्याहुर् (→एवाहुर्). –b) दे3.6 परमात्मनः (→परमार्थतः). –c) का1 दे3.4.8 उ1 मुवें. मुए. भेदोऽव्यक्त-, दे1 तदव्य * (→भेदो व्यक्त-). –d) दे1 या, ग्र2 म1 उ1 स (→सा); द1 ग्र2 म1 उ1 -समाश्रयः (→-त्मसंश्रया).

२४. –a) ब3 तथा (→यथा); दे8.9 मुवें. मुए. च, ग्र2 ह (→हि); का1 °संसर्गान् (→°सम्पर्कान्). –b) दे5 द1 म1 भवत् (→भवेत्). –c) ब3 स्वान्तः° (→अन्तः°). –d) ब1.3 दे3.6 ग्र2 तत्वन्न (→तद्वन्न); दे3 आत्मतत्वं न लिप्यते.

२५. ब1. ⊙. –a) दे1.6 सुप्रभया, दे4 स्वप्रलये, न1 स्वभ्रमया (→स्वप्रभया). –b) का1 ब2.3 दे2.3.6 द1 ग्र2 केवलं, न1 म1 केवल- (→केवलः); का1 ब3 दे2.8.9 स्फाटिको-, न1 स्फालिको- (→स्फटिको-); का1 मुवें. मुए. -पलैः, दे3.6 -पलः, दे8 -पमः, दे9 -पल, + -पमः (→-मलः); दे4 ते1 द1 ग्र2 उ1 परमार्थतः (→स्फटिकोऽमलः).

२६. ब1. २६c-५१d ⊙. –b) दे5 विचक्षणः (→विचक्षणाः). –c) का1 अथ, ब2 अन्द्ध-, दे2 कर्म-, दे3 आत्म-, दे6 आत्मा- (→अर्थ-); का1 ब3 दे2.3.6 विज्ञानात्, ब2 अज्ञाताः, दे8 मुवें. मुए. मुब. एवान्ये, दे9 अज्ञानात्,+ एवान्ये, न1 उ1 एवाज्ञः, म1 एवान्यत् (→एवाज्ञाः). –d) का1 ते1 सुदृष्टयः, ग्र2 कुवृत्तयः (→कुदृष्टयः).

२७. ब1. ⊙ –a) द1 कूटस्था (→कूटस्थो); ब2 रूपी (→व्यापी). –c) ब2.3 दे2.3.6 ह्यनुरूपेण, दे1 ह्यस्वरूपेण (→ह्यर्थरूपेण). –d) दे4 दृष्टि-, दे5 न1 द1 ग्र2 म1 उ1 मुब. भ्रान्त-, दे8 मुवें. मुए. ज्ञान-, दे9 भ्रांत-, + ज्ञान- (→भ्रान्ति-); दे4 -भ्रांतिभिः (→-दृष्टिभिः).

२८. ब1. ⊙. –a) दे5 संलक्षते, न1 उ1 मुवें. मुए. मुब. सलक्ष्यते, द1 म1 संरक्ष्यते (→संलक्ष्यते); दे1 चक्षुः, दे9 वक्ताः, + रक्तः, ग्र2 रक्तयः (→रक्तः). –b) ब2 दे1.8.9 ग्र2 मुवें. मुए. मुब. केवलं, दे3 न1 द1 म1 केवल- (→केवलः); दे3 स्फाटिकैर्, दे6 ते1 द1 उ1 स्फटिको (→स्फाटिको); दे2 जलैः (→जनैः). –c) का1 दे6.8 न1 मुवें. मुए. मुब. रत्तिका°, दे9 ते1 रक्तका° (ते1 °ता), म1 रत्तिमा° (→रक्तिका°); दे1 °व्यवधानेन, दे3 °ह्यपधानेन (→°द्युपधानेन); ग्र2 उ1 रक्तता (ग्र2 °क्तिता) मादधानेन, द1 रक्तिमाह्लाद(धे)ध्येतेन.

२९. ब1. ⊙. –a) उ1 °क्षयः, न1 °करः, ग्र2 * रः (→°क्षरः). –b) दे1.4.5.8.9 द1 म1 उ1 मुवें. मुए. मुब. सर्वत्रगो° (→सर्वगतो°). –d) ब3 श्रोतव्यं, दे2 श्रोतव्यः (→श्रोतव्यश्),

३०. ब1. ⊙; दे1.6 cd ⊙. –a) ते1 यथा (→यदा); दे3.6 तमसि (→मनसि). –b) दे1 याति (→भाति); दे8.9 ग्र2 म1 मुवें. मुए. मुब. सर्वदा (→-गं सदा). –c) का1 योगिनोऽप्यवधानेन, दे3.8.9 मुवें. मुए. मुब. योगिनः श्रद्दधानस्य (दे3 °नेन), म1 योगिनो व्यवसायो *. –d) ते1 तथा (→तदा).

३१. ब1 दे1.6. ⊙; दे2. ab ⊙; दे4. cd ⊙. –a) का1 यथा (→यदा). –c) दे4 समाधिस्थो न पश्यति, दे8.9 मुए. स्वात्मन्येवाभिधीयते (दे9 + °तु पश्यति). –d) न1 स्वयम् (→तदा).

यदा सर्वाणि भूतानि समाधिस्थो न पश्यति ।
एकीभूतः परेणासौ तदा भवति केवलः ॥३२
यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः ।
तदाऽसावमृतीभूतः क्षेमं गच्छति पण्डितः ॥३३
यदा भूतपृथग्भावमेकस्थमनुपश्यति ।
तत एव च विस्तारं ब्रह्म संपद्यते तदा ॥३४
यदा पश्यति चात्मानं केवलं परमार्थतः ।
मायामात्रं जगत् कृत्स्नं तदा भवति निर्वृतः ॥३५
यदा जन्मजरादुःखव्याधीनामेकभेषजम् ।
केवलं ब्रह्मविज्ञानं जायतेऽसौ तदा शिवः ॥३६
यथा नदीनदा लोके सागरेणैकतां ययुः ।
तद्वदात्माऽक्षरेणासौ निष्कलेनैकतां व्रजेत् ॥३७
तस्माद् विज्ञानमेवास्ति न प्रपञ्चो न संसृतिः ।
अज्ञानेनावृतं लोको विज्ञानं तेन मुह्यति ॥३८
तज्ज्ञानं निर्मलं सूक्ष्मं निर्विकल्पं यदव्ययम् ।
अज्ञानमितरत् सर्वं विज्ञानमिति मे मतम् ॥३९
एतद् वः परमं सांख्यं भाषितं ज्ञानमुत्तमम् ।
सर्ववेदान्तसारं हि योगस्तत्रैकचित्तता ॥४०
योगात् संजायते ज्ञानं ज्ञानाद् योगः प्रवर्त्तते ।
योगज्ञानाभियुक्तस्य नावाप्यं विद्यते क्वचित् ॥४१
यदेव योगिनो यान्ति सांख्यैस्तदधिगम्यते ।
एकं सांख्यं च योगं च यः पश्यति स तत्त्ववित् ॥४२　वें.२.२.४३

३२. ब$_1$. ⊙; दे$_4$. ab ⊙; ते$_1$. ⊙ (इ. सं.). –a) का$_1$ यथा (→यदा); ब$_3$ पश्यति (→सर्वाणि). –b) दे$_2$ स्वात्मन्येवाभिपश्यति, दे$_8$ द$_1$ समाधिस्थानि पश्यति. –c) ग्र$_2$ एक° (→एकी°). –d) दे$_8$ मुवें. मुए. केवलम् (→केवलः).

३३. ब$_1$. ⊙. –a) म$_1$ यदा भूतैः (→यदा सर्वे); ग्र$_2$ समुच्यन्ते (→प्रमुच्यन्ते). –b) का$_1$ ते$_1$ कामा (ते$_1$ °मो) यस्य, ब$_2$ कामायान्त्ये, दे$_{3.6}$ कामा ये च, द$_1$ कामा ह्यस्य, ग्र$_2$ म$_1$ कामाप्यस्य (म$_1$ तस्य), उ$_1$ कामाद्धि स- (→कामा येऽस्य); न$_1$ हृदि श्रिताः (→हृदि स्थिताः); उ$_1$ स्थितः (→स्थिताः), –c) का$_1$ °वृती°, दे$_1$ °मृतो° दे$_6$ °पृती° (→°मृती°). –d) ब$_3$ क्षेमं गच्छन्ति पण्डिताः.

३४. ब$_1$. ⊙. –a) का$_1$ दे$_6$ ग्र$_2$ म$_1$ यथा, दे$_8$ यदा,+यथा (→यदा). –b) दे$_4$ एकत्वं (→एकस्थं). –c) दे$_6$ एत-, न$_1$ तदा (→तत); द$_1$ विस्तारो (→विस्तारं). –d) का$_1$ मुवें. मुए. मुब. सदा (→तदा).

३५. ब$_1$. ⊙. –a) तदा (→यदा). –c) दे$_{1.4.5}$ न$_1$ ते$_1$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ जगत् सर्वं, दे$_{8.9}$ मुवें. मुए. तदा सर्वं (→जगत् कृत्स्नं). –d) दे$_{8.9}$ मुवें. मुए. जगत् (→तदा); ते$_1$ निर्वृतम् (→निर्वृतः).

३६. ब$_1$. ⊙. –a) ग्र$_2$ यदा जन्मान्तरा दुःख. –b) का$_1$ °व्याधि° (→°व्याधी°). –c) दे$_5$ केवल- (→केवलं). –d) का$_1$ ब$_{2.3}$ दे$_{2.3.5.6}$ न$_1$ ज्ञायते (→जायते); दे$_5$ ते$_1$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ सदा (→तदा).

३७. ब$_1$. ⊙. –a) द$_1$ उ$_1$ यदा, ग्र$_2$ यया (→यथा), –b) ब$_2$ गतः (→ययुः). –d) दे$_8$ ऐकता, + ऐक्यता (→ऐकतां).

३८. ब$_1$. ⊙. –b) ब$_3$ द$_1$ ग्र$_2$ संस्मृतिः, दे$_8$ उ$_1$ मुवें. मुए. मुब. संस्थितिः, दे$_9$ संसृतिः, + संस्थितिः, ते$_1$ संवृतिः (→संसृतिः). –c) का$_1$ दे$_4$ ते$_1$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ °वृतो (→°वृतं); दे$_{4.8.9}$ न$_1$ ग्र$_2$ मुवें. मुए. लोके (→लोको); का$_1$ अज्ञानेन वृतो लोको. –d) ब$_3$ विज्ञानस्तेन, दे$_1$ विज्ञानत्वेन, द$_1$ ग्र$_2$ विहीनं तेन, म$_1$ उ$_1$ विहीनत्वेन (म$_1$ °स्तेन), (→विज्ञानं तेन); द$_1$ ग्र$_2$ म$_1$ उ$_1$ पश्यति (→मुह्यति).

३९. ब$_1$. ⊙; दे$_4$. cd ⊙. –a) दे$_{8.9}$ मुवें. मुए. मुब. विज्ञानं, ग्र$_2$ अज्ञानं (→तज् ज्ञानं); दे$_4$ ते$_1$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ शुद्धं (→सूक्ष्मं).–b) दे$_{4.6-8.9}$ मुवें. मुए. तदव्ययम्, ते$_1$ निरञ्जनम् (→यदव्ययम्). –c) का$_1$ ब$_2$ °तिमिरं, ब$_3$ दे$_{1-3.5}$ °मिति तत् न$_1$ °मिव तत् (→°मितरत्). –d) का$_1$ अज्ञानं (→विज्ञानं); दे$_8$ मुवें. मुए. मुब. तन्मतम्, दे$_9$ मे मतं, + तन्मतं, ग्र$_2$ मे मतः (→मे मतम्).

४०. ब$_1$. ⊙. –a) उ$_1$ एतद्धि (→एतद्वः); दे$_{8.9}$ मुवें. मुए. कथितं (→परमं). –b) ब$_2$ दे$_{3.6}$ भावितं (→भाषितं). –c) दे$_1$ * (→हि). –d) ते$_1$ ग्र$_2$ तत्रैव (→तत्रैक-); का$_1$ ब$_2$ -चितता, दे$_5$ -वित्ततः, दे$_6$ -चिन्त्यतां, न$_1$ -चित्तदा, ते$_1$ चिन्तितः (→-चित्तता).

४१. ब$_1$. ⊙. –a) दे$_{5.6}$ संज्ञायते, द$_1$ उ$_1$ संपत्स्यते, ग्र$_2$ संपश्यते, म$_1$ संपद्यते (→सञ्जायते). –b) दे$_5$ ज्ञानात् सर्वमवाप्यते. –d) ब$_3$ °मुक्तस्य (→°युक्तस्य); दे$_1$ ज्ञानयोगवियुक्तस्य. –d) दे$_4$ न भयं, दे$_9$ नामाद्यं, + नावाप्यं, द$_1$ नावाच्यं, ग्र$_2$ नवाप्यं (→नावाप्यं); ग्र$_2$ विन्दते (→विद्यते).

४२. ब$_1$. ⊙. –b) का$_1$ ब$_2$ दे$_{4.5.8.9}$ न$_1$ द$_1$ तदभि°, ते$_1$ तदव°, उ$_1$ मुवें. मुए. तदति° (→तदधि°). –c) ते$_1$ एवं (→एकं). –d) दे$_1$ स पश्यति, ग्र$_2$ ततः क्वचित् (→स तत्त्ववित्).

वें.२.२.४४ अन्ये च योगिनो विप्रा ऐश्वर्यासक्तचेतसः ।
मज्जन्ति तत्र तत्रैव नत्वात्मैषामिति श्रुतिः ॥४३
यत्तत् सर्वगतं दिव्यमैश्वर्यमचलं महत् ।
ज्ञानयोगाभियुक्तस्तु देहान्ते तदवाप्नुयात् ॥४४
एष आत्माऽहमव्यक्तो मायावी परमेश्वरः ।
कीर्तितः सर्ववेदेषु सर्वात्मा सर्वतोमुखः ॥४५
सर्वकामः सर्वरसः सर्वगन्धोऽजरोऽमरः ।
सर्वतः पाणिपादोऽहमन्तर्यामी सनातनः ॥४६
अपाणिपादो जवनो ग्रहीता हृदि संस्थितः ।
अचक्षुरपि पश्यामि तथाऽकर्णः शृणोम्यहम् ॥४७
वेदाहं सर्वमेवेदं न मां जानाति कश्चन ।
प्राहुर्महान्तं पुरुषं मामेकं तत्त्वदर्शिनः ॥४८
पश्यन्ति ऋषयो हेतुमात्मनः सूक्ष्मदर्शिनः ।
निर्गुणामलरूपस्य यत्तदैश्वर्यमुत्तमम् ॥४९
यन्न देवा विजानन्ति मोहिता मम मायया ।
वक्ष्ये समाहिता यूयं शृणुध्वं ब्रह्मवादिनः ॥५०
नाहं प्रशास्ता सर्वस्य मायातीतः स्वभावतः ।
प्रेरयामि तथापीदं कारणं सूरयो विदुः ॥५१

---

४३. ब$_{1}$. ⊙. –a) दे$_{8.9}$ मुवें. मुए. मुब. हि, ग्र$_{2}$ म$_{1}$ [अ]पि (→च). –b) दे$_{4.5.8.9}$ न$_{1}$ द$_{1}$ ग्र$_{2}$ उ$_{1}$ मुवें. मुए. मुब. ह्यैश्वर्य-, ते$_{1}$ ईश्वरा- (→ऐश्वर्या-); ते$_{1}$ -मानसाः (→-चेतसः). –c) ब$_{2}$ स्तुवन्ति, दे$_{1}$ यजंति, दे$_{5}$ भजंति (→मज्जन्ति); ब$_{2}$ यत्र, दे$_{9}$ यत्र,+तत्र (→तत्र). –d) ब$_{1}$ नत्वात्मैक्यं, ब$_{3}$ नत्वथैष्यं, दे$_{1}$ न चात्मैकां, दे$_{3}$ तत्वार्थैक्य, दे$_{6}$ न त्वार्थैष्य, न$_{1}$ न त्वां न्येषाद्, ते$_{1}$ सत्वं तेषां, ग्र$_{2}$ न त्वात्वैषा, उ$_{1}$ न वा सैष्यं (→न त्वात्मैषां); दे$_{8.9}$ मुवें. मुए. मुब. ये चान्ये कुण्ठबुद्धयः.

४४. ब$_{1}$. ⊙. –a) का$_{1}$ सर्वगं*, दे$_{1.6}$ न$_{1}$ सर्वं गतं, दे$_{8}$ मुवें. मुए. मुब. सर्वमतं, दे$_{9}$ सर्वगतं, + सर्वमतं (→सर्वगतं); का$_{1}$ चैकं, ते$_{1}$ नित्यं (→दिव्यं). –b) का$_{1}$ दे$_{5.6}$ ते$_{1}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ मुवें. मुए. मुब. °ममलं (→°मचलं). –c) का$_{1}$ दे$_{3.6}$ ज्ञानयोगोभि- (दे$_{3.6}$ °गानि-), ते$_{1}$ योग-ज्ञानाभि- (→ज्ञानयोगाभि-); ब$_{3}$ दे$_{3}$ -मुक्तस्तु (→-युक्तस्तु).

४५. ब$_{1}$. ⊙. –a) दे$_{1}$ चात्मा°, दे$_{5}$ वात्मा° (→आत्मा°); ते$_{1}$ एष आत्मा महाव्यक्ता. –b) दे$_{1.4}$ माया* (दे$_{4}$ °वे), ते$_{1}$ मायापि (→मायावी). –c) ब$_{2}$ °वेदैस्तु, दे$_{1}$ द$_{1}$ °देवेषु (→°वेदेषु). –d) का$_{1}$ °वसं (→°मुखं).

अतः परं दे$_{4}$ पुस्तके ४ अध्यायस्य ५-३४ श्लोका दृष्टि-संचारहेतुना ४५-७३ संख्याका वर्त्तन्ते.

४६. ब$_{1}$ दे$_{4}$. ⊙. –a) दे$_{1}$ सर्वगोहं, दे$_{3}$ दीर्घकामः, दे$_{8.9}$ मुवें. मुए. मुब. सर्वरूपः (→सर्वकामः). –b) दे$_{1.3.6}$ ते$_{1}$ द$_{1}$ म$_{1}$ [अ]जरामरः (म$_{1}$ °यः) (→[अ]जरोऽमरः); ग्र$_{2}$ सर्वगन्धरजोऽमरः. –c) न$_{1}$ सर्वत्र (→सर्वतः); दे$_{3.6}$ °पादान्तं, न$_{1}$ °पादोरुः (→°पादोऽहं).

४७. ब$_{1}$. ⊙; दे$_{4}$. ab ⊙. –a) दे$_{2}$ अथवा (→अपाणि-); दे$_{5}$ जवनां, मुवें. मुए. जवगो (→जवनो). –b) का$_{1}$ गृहीत्वा, ब$_{3}$ दे$_{1.5.6}$ न$_{1}$ द$_{1}$ गृहीता (→ग्रहीता); ते$_{1}$ प्राणि (→हृदि); दे$_{8.9}$ संश्रिता (→संस्थिता). –c) का$_{1}$ ब$_{2.3}$ दे$_{2.3}$ विचक्षुः, दे$_{6}$ विवक्षुः (→अचक्षुः).

४८. ब$_{1}$. ⊙. –a) दे$_{4}$ विदाहं (→वेदाहं). –b) दे$_{2}$ कश्चनः (→कश्चन). –c) ब$_{2}$ आहुर् (→प्राहुर्). –d) दे$_{1}$ आत्मनं (→मामेकं); ते$_{1}$ दर्शितम् (→दर्शिनः).

४९. ब$_{1}$. ⊙; दे$_{1}$.४९ c-५० d ⊙ (द्र. सं.). –a) ग्र$_{2}$ पश्यन्तु(?) (→पश्यन्ति); का$_{1}$ ब$_{2.3}$ दे$_{4-6}$ चर्षयो, दे$_{2.3}$ वर्षयो, उ$_{1}$ मुनयो (→ऋषयो); ते$_{1}$ पश्यन्ति पुरुषं ज्येष्ठं. –b) दे$_{1.3.5.6.9}$ न$_{1}$ आत्मानं (दे$_{6}$ *) (→आत्मानः); ते$_{1}$ स्वात्मानं सूक्ष्मदर्शिनम्. –c) उ$_{1}$ निर्गुणो° (→निर्गुणा°). –d) दे$_{5}$ यत्तदैश्वरनुत्तमम्, दे$_{8.9}$ मुवें. मुए. मुब. यदैश्वर्यमनुत्तमम्, ते$_{1}$ ऐश्वर्यममलं महत्.

५०. ब$_{1}$ दे$_{1}$. ⊙. –a) का$_{1}$ तन्न, ब$_{2}$ दे$_{5}$ यत्तु, ते$_{1}$ तत्तु (→यन्न); ग्र$_{2}$ वेदा (→देवा); ब$_{3}$ दे$_{3-6}$ ते$_{1}$ न जानन्ति (→विजानन्ति). –b) ग्र$_{2}$ मोहितां (→मोहिता); ब$_{2}$ मोहिता मायया मया. –c) ते$_{1}$ यायं, + याहं (→यूयं).

५१. ब$_{1}$. ⊙. –a) दे$_{6}$ साहं (→नाहं); ब$_{2}$ दे$_{8}$ मुवें मुए. प्रशस्तः, ब$_{3}$ दे$_{6}$ प्रशान्ता, दे$_{1}$ प्रकाशः, दे$_{9}$ प्रशास्ता, + प्रशस्तः, द$_{1}$ प्रशस्तास्, उ$_{1}$ प्रशक्ता (→प्रशास्ता). –b) दे$_{9}$ मायाभीतः, + मायातीतः, न$_{1}$ म$_{1}$ मायातीत- (→मायातीतः). –c) ते$_{1}$ जगत् कृत्स्नं (→तथापीदं). –d) ग्र$_{2}$ करणं (→कारणं); ब$_{2}$ कवयो, दे$_{5.8}$ शूरयो (→सूरयो).

यन्मे गुह्यतमं देहं सर्वगं तत्त्वदर्शिनः ।
प्रविष्टा मम सायुज्यं लभन्ते योगिनोऽव्ययम् ।।५२
तेषां हि वशमापन्ना माया मे विश्वरूपिणी ।
लभन्ते परमां शुद्धिं निर्वाणं ते मया सह ।।५३

न तेषां पुनरावृत्तिः कल्पकोटिशतैरपि ।
प्रसादान्मम योगीन्द्रा एतद् वेदानुशासनम् ।।५४
नापुत्रशिष्ययोगिभ्यो दातव्यं ब्रह्मवादिभिः ।
मदुक्तमेतद् विज्ञानं सांख्ययोगसमाश्रयम् ।।५५

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायामुपरिविभागे (ईश्वरगीतासु) द्वितीयोऽध्यायः ।।२।।

# ३

**ईश्वर उवाच** ।❀

**अव्यक्तादभवत् कालः प्रधानं पुरुषः परः ।**
**तेभ्यः सर्वमिदं जातं तस्माद् ब्रह्ममयं जगत् ।।१**

**सर्वतः पाणिपादं तत् सर्वतोऽक्षिशिरोमुखम् ।**
**सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ।।२** वे.२.३.२

**५२.** द1 ग्र2 म1 उ1 ab ⊙. –a) ब1 यस्माद्, दे4 अन्ये, दे5 तच्च, दे8 मुवें. मुए. यतो, न1 यन्मां, ते1 एतद् (→यन्मे); दे5 देहे, न1 दैवं, ते1 ज्ञानं (→देहं). –b) दे2 सर्वगस् (→सर्वगं); ते1 सर्वतत्वप्रदर्शनम्. –c) ग्र2 प्रविष्ट (→प्रविष्टा); दे1 पुरस्थमनसायुज्यं. –d) दे4 ते1 द1 ग्र2 उ1 लीयन्ते (→लभन्ते).

**५३.** –a) ब1 एषां (→तेषां); दे1 येषां हि न समापन्ना, दे5 ते येषां हि शमापन्ना, दे8 मुवें. मुए. मुब. ये हि मायामतिक्रान्ता. –b) दे1 माया सा, दे8 मुवें. मुए. मुब. मम या (→माया मे); दे9 °मोहिनी (→°रूपिणी); का1 माया विष्णुस्वरूपिणी, दे4 मायामेतां स्वरूपिणी. –c) दे1.4.5.8 न1 ते1 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. परमं शुद्धं (→परमां शुद्धिं).

**५४.** –a) दे8 मुवें. मुए. परमा°, दे9 पुनरा°, +परमा° (→पुनरा°). –c) दे6 प्रमादान् (→प्रसादान्). –d) दे1 ह्येतद्वेदार्थशासनम्, दे3 एतत्ते देवा (नु) शासनम्, दे6 एतत्ते दातु शासनम् (?).

**५५.** –a) दे1.8.9 मुवें. मुए. मुब. तत्पुत्र°, न1 सुपुत्र° (→नापुत्र°); ब3 -शिष्यो- (→-शिष्य-). –b) ग्र2 उ1 ब्रह्मवादिनः (→ब्रह्मवादिभिः). –c) ब1 मयुक्तं, ब2 दे6 मुब. यदुक्तं, दे3 चदुक्तं, दे9 मुद्भूक्तं,+मदुक्तं, ग्र2 न युक्तं (→मदुक्तं). –d) का1 दे1.2.4.5.8 मुवें. मुए. सांख्यं (→सांख्य-); द1 ग्र2 °समाश्रितं (ग्र2 °तः) (→°समाश्रयम्). –cd) उ1 अन्ये गुह्यतमं देवं सर्वं तत्र प्रलीयते.

अतः परं उ1 पुस्तके अधिकम्—प्रविष्टं मम सायुज्यम्. (= ५२c)

**पुष्पिका**—[द1 पुस्तके अध्यायसमाप्तिर्नास्ति]

**पुराणनाम**—का1 दे2.6 न1 इति श्रीकूर्मपुराणे ईश्वरगीतासूपनिषत्सु, ब1-3 इति कूर्मपुराणे ईश्वरगीतासूपनिषत्सु, दे1 इति श्रीकूर्मपुराणे ईश्वरगीतासूपनिषत्सु उत्तरखण्डे, दे3 इति कौर्मे ईश्वरगीतासूपनिषत्सु, दे4 ईश्वरगीतासूपनिषत्सु, दे5.8.9 मुए. इति श्रीकूर्मपुराणे ईश्वरगीतासु, ते1 इति श्रीकूर्मपुराणे उपरिभागे ईश्वरगीतासूपनिषत्सु वैयासिक्यां संहितायां, ग्र2 उ1 इति श्रीकूर्मपुराणे उत्तरभागे ईश्वरगीतासूपनिषत्सु, म1 इति श्रीकूर्मपुराणे उत्तरखण्डे ईश्वरगीतासूपनिषत्, मुवें. इति श्रीकूर्मपुराणे उत्तरार्द्धे ईश्वरगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे, मुब. इति श्रीकौर्मे महापुराणे उपरिभागे श्रीमद्भगवदीश्वरगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे. **अध्यायनाम**—का1 ब1-3 दे1-6.8.9 न1 ग्र2 म1 उ1 मुए. ⊙; ते1 ईश्वरनारायणमहर्षिसंवादे सांख्ययोगो नाम, मुवें. ऋषिव्याससंवादे, मुब. ज्ञानयोगो नाम. **अध्यायसंख्या**—का1 ब1.3 दे2.3.5.6.8.9 ते1 ग्र1 उ1 मुए. मुब. द्वितीयोऽध्यायः, ब2 द्वितीयोऽध्यायः ।।५२।।, दे1.4 म1 मुवें. द्वियीयोऽध्यायः ।।२।।, न1 एकपंचाशोऽध्यायः.

**३**

❀ द1. ⊙; दे8.9 ईश्वरः उ.; न1 ग्र2 म1 उ1 ईश्वरः.

**१.** –a) दे1 पूर्वं (→कालः). –b) ग्र2 उ1 प्रधानः (→प्रधानं); ते1 पुरुषोऽपि च (→पुरुषः परः). –d) का1 ब2.3 दे2.3.6 सर्वमिदं, दे5 सर्वमयं, ते1 ग्र2 ब्रा (ग्र2 ब्र) ह्ममिदं (→ब्रह्ममयं).

**२.** –a) ब1.3 दे1-3.6.8.9 न1 मुवें. मुए. मुब. °पादान्तं, दे5 °पादं तं (→°पादं तत्). –c) उ1 सर्वत्र (→सर्वतः); ब1 ग्र2 श्रुतिमाल्लोके (→श्रुतिमल्लोके). –d) दे3 आहृत्य, उ1 आघ्राय (→आवृत्य).

वें.२.३.१ सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।
सर्वाधारं सदानन्दमव्यक्तं द्वैतवर्जितम् ॥३
सर्वोपमानरहितं प्रमाणातीतगोचरम् ।
निर्विकल्पं निराभासं सर्वावासं परामृतम् ॥४
अभिन्नं भिन्नसंस्थानं शाश्वतं ध्रुवमव्ययम् ।
निर्गुणं परमं व्योम तज्ज्ञानं सूरयो विदुः ॥५
स आत्मा सर्वभूतानां स बाह्याभ्यन्तरः परः ।
सोऽहं सर्वत्रगः शान्तो ज्ञानात्मा परमेश्वरः ॥६
मया ततमिदं विश्वं जगदव्यक्तमूर्तिना ।
मत्स्थानि सर्वभूतानि यस्तं वेद स वेदवित् ॥७
प्रधानं पुरुषं चैव तत्त्वद्वयमुदाहृतम् ।
तयोरनादिरुद्दिष्टः कालः संयोजकः परः ॥८
त्रयमेतदनाद्यन्तमव्यक्ते समवस्थितम् ।
तदात्मकं तदन्यत् स्यात् तद्रूपं मामकं विदुः ॥९
महदाद्यं विशेषान्तं संप्रसूतेऽखिलं जगत् ।
या सा प्रकृतिरुद्दिष्टा मोहिनी सर्वदेहिनाम् ॥१०
पुरुषः प्रकृतिस्थो हि भुङ्क्ते यः प्राकृतान् गुणान् ।
अहंकारविमुक्तत्वात् प्रोच्यते पञ्चविंशकः ॥११
आद्यो विकारः प्रकृतेर्महानात्मेति कथ्यते ।

---

३. ते$_1$. cd ⊙. –c) ब$_3$ निरानन्दं, दे$_5$ परानन्दं, म$_1$ सदानन्तं (→सदानन्दं). –d) ब$_1$ अव्यक्तं वैभवोजितम्.

४. –c) ब$_1$ उ$_1$ निर्विकल्प- (→निर्विकल्पं); न$_1$ उ$_1$ निराहासं (न$_1$ °धारं) (→निराभासं). –d) का$_1$ सर्ववासं, दे$_5$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ सर्वाभासं, ते$_1$ सर्वावासं, + सर्वाभासं (→सर्वावासं); दे$_4$ परावृतम् (→परामृतम्).

५. ब$_1$. ५c-६d ⊙. –a) ब$_2$ °संस्कारं (→°संस्थानं). –b) उ$_1$ शिवं (→ध्रुवं). –c) दे$_3$ वेगस्, + ज्योतिस्, दे$_{8-10}$ मुवें. मुए. मुब. ज्योतिस् (→व्योम). –d) दे$_1$ विदः (→विदुः).

६. ब$_1$. ⊙ (द्र. ५ पा. वि.); दे$_1$. cd ⊙. –a) दे$_4$ आत्म- (→आत्मा); दे$_1$ °भूतात्मा (→°भूतानां). –b) दे$_2$ बाह्याभ्यंतरा, दे$_4$ बाह्यः भ्यंतरः, दे$_6$ बाह्याभ्यंतरं, ग्र$_2$ बाह्याभ्यंततः (→बाह्याभ्यन्तरः); ते$_1$ परं (→परः); दे$_1$ स बाह्यांभ्यंतरश्चरः. –c) ब$_2$ न$_1$ ग्र$_2$ म$_1$ सर्वगतः (→सर्वत्रगः); उ$_1$ सर्वतगः समं शान्तो.

७. ब$_1$. ⊙ (द्र. ५ पा. वि.). –a) ब$_3$ मया तत्र, ग्र$_2$ मायातीत- (→मयातत-); ते$_1$ कृत्स्नं, द$_1$ म$_1$ सर्वं (→विश्वं); दे$_1$ येन जातमिदं सर्वं. –b) दे$_1$ अव्यय° (→अव्यक्त°); दे$_6$ °मूर्तिनः (→°मूर्तिना); दे$_{8.9}$ मुवें. मुए. मुब. जगत् स्थावरजङ्गमम्. –c) दे$_1$ यत्स्थानि (→मत्स्थानि). –d) का$_1$ यस्त्वं, दे$_1$ ते$_1$ यस्तद् (→यस्तं); दे$_{8.9}$ मुवें. मुए. विदो विदुः (→स वेदवित्).

८. ब$_1$. ⊙ (द्र. ५ पा. वि.). –a) दे$_1$ ग्र$_2$ प्रधान- (→प्रधानं); दे$_3$ पुरुषां चैव, दे$_4$ ते$_1$ पुरुषश्चैव, न$_1$ म$_1$ पुरुषश्चेति, उ$_1$ पुरुषं चेति (→पुरुषं चैव). –b) दे$_1$ ग्र$_2$ तद्वद्वय, दे$_{3.8.9}$ मुवें. मुए. तद्व (दे$_3$ °त्व)स्तु स°, दे$_5$ यत्स द्वय°, ते$_1$ तद्वयं स°, द$_1$ तव द्वंद्व°, म$_1$ यत्तद्वय° (→तत्त्वद्वय°). –c) का$_1$ ब$_{2.3}$ दे$_{2.3.6}$ निर्दिष्टः (→उद्दिष्टः). –d) ब$_3$ म$_1$ काल- (→कालः); दे$_1$ न$_1$ उ$_1$ संयोगकः, दे$_{4.8}$ द$_1$ ग्र$_2$ म$_1$ मुवें. मुए. मुब. संयोगजः, दे$_9$ संयोगजः,+संयोजकः (→संयोजकः); ग्र$_2$ परं (→परः).

९. ब$_1$. ⊙ (द्र. ५ पा. वि.). –b) का$_1$ ब्रह्माणि, + अव्यक्ते, ते$_1$ अव्यक्तं (→अव्यक्ते); दे$_1$ न$_1$ समविस्थितं, द$_1$ म$_1$ [अ]न्यवदस्थितं, ग्र$_2$ उ$_1$ [अ]न्यदवस्थितं (→समवस्थितम्). –c) दे$_6$ तदान्यकं (→तदात्मकं); ब$_2$ तदन्योन्यात्, दे$_4$ ते$_1$ द$_1$ ग्र$_2$ म$_1$ तदेव स्यात्, दे$_6$ तदन्यस्तेस्, उ$_1$ यदेव स्यात् (→तदन्यत् स्यात्). –d) दे$_4$ सदृशं (→तद्रूपं); दे$_6$ नामकं (→मामकं).

१०. –a) ते$_1$ महदादि (→महदाद्यं); दे$_1$ ग्र$_2$ विशेषंतं (→विशेषान्तं). –b) का$_1$ न$_1$ द$_1$ ग्र$_2$ स प्रसूते, उ$_1$ सा प्रसूते (→संप्रसूते). –c) दे$_6$ उद्दिष्टो (→उद्दिष्टा). –d) का$_1$ ब$_2$ दे$_3$ न$_1$ म$_1$ मोहनी (→मोहिनी); दे$_2$ °देहिनी (→°देहिनाम्).

११. –a) दे$_{1.4.5.8.9}$ द$_1$ ग्र$_2$ न$_1$ मुवें. मुए. मुब. वै, दे$_{3.6}$ न$_1$ [अ]पि (→हि). –b) दे$_5$ स, न$_1$ वै (→यः); दे$_2$ प्रकृतान् (→प्राकृतान्); दे$_{3.6}$ भुङ्क्ते प्रकृतिजान् गुणान्. –c) का$_1$ ब$_{1-3}$ दे$_{1.3}$ न$_1$ ते$_1$ ग्र$_2$ म$_1$ अहंकारा° (ब$_2$ ते$_1$ °रो) (→अहंकार°); का$_1$ ब$_{1.3}$ दे$_{1-3.6}$ न$_1$ ते$_1$ °विविक्तत्वात्, ब$_2$ °विविक्तः स, द$_1$ म$_1$ °विषक्तत्वात् (→°विमुक्तत्वात्); दे$_4$ अहंकाराभियुक्तत्वात्. –d) ते$_1$ °विंशतिः (→°विंशकः).

१२. दे$_1$. ⊙. –a) ब$_1$ माद्यो, ग्र$_2$ अथा, म$_1$ यथा (→आद्यो); ते$_1$ प्रकृतिः (→प्रकृतेर्). –b) ब$_3$ महानर्थेति, दे$_{8.9}$ मुवें. मुए. मुब. महानिति च, उ$_1$ महानाम्नेति (→महानात्मेति). –c) दे$_8$ ग्र$_2$ मुवें. मुए. मुब. विज्ञातृ-

विज्ञानशक्तिर्विज्ञाता ह्यहंकारस्तदुत्थितः ।।१२
एक एव महानात्मा सोऽहंकारोऽभिधीयते ।
स जीवः सोऽन्तरात्मेति गीयते तत्त्वचिन्तकैः ।।१३
तेन वेदयते सर्वं सुखं दुःखं च जन्मसु ।
स विज्ञानात्मकस्तस्य मनः स्यादुपकारकम् ।।१४
तेनाविवेकतस्तस्मात् संसारः पुरुषस्य तु ।
स चाविवेकः प्रकृतौ सङ्गात् कालेन सोऽभवत् ।।१५
कालः सृजति भूतानि कालः संहरति प्रजाः ।
सर्वे कालस्य वशगा न कालः कस्यचिद् वशे ।।१६
सोऽन्तरा सर्वमेवेदं नियच्छति सनातनः ।
प्रोच्यते भगवान् प्राणः सर्वज्ञः पुरुषोत्तमः ।।१७
सर्वेन्द्रियेभ्यः परमं मन आहुर्मनीषिणः ।
मनसश्चाप्यहंकारमहंकारान्महान् परः ।।१८
महतः परमव्यक्तमव्यक्तात् पुरुषः परः ।
पुरुषाद् भगवान् प्राणस्तस्य सर्वमिदं जगत् ।।१९
प्राणात् परतरं व्योम व्योमातीतोऽग्निरीश्वरः ।
सोऽहं सर्वत्रगः शान्तो ज्ञानात्मा परमेश्वरः ।
नास्ति मत्तः परं भूतं मां विज्ञाय विमुच्यते ।।२०
नित्यं हि नास्ति जगति भूतं स्थावरजङ्गमम् ।
ऋते मामेकमव्यक्तं व्योमरूपं महेश्वरम् ।।२१ बें.१.३.२२

(ग्र2 °त-), दे9 विज्ञातृ-, + विज्ञान- (→विज्ञान-); का1 विज्ञाना, दे3.6 विख्याता, दे4.8 मुवें. मुए. मुब. विज्ञानात्, दे9 विज्ञाना, + विज्ञानात् (→विज्ञाता); ग्र2 विज्ञातशक्तिषु ज्ञाता. –d) दे4 अहंकारस् (→ह्यहंकारः); का1 तदुस्थितः, उ1 सुदुस्थितः (→तदुत्थितः).

१३. दे1. ab ⊙. –a) ग्र2 महात्मानं (→महानात्मा). –b) द1 योऽहं°, ग्र2 अहं° (→सोऽहं°); का1 ब1 विधियते (→[अ]भिधीयते). –c) द1 सजीवस्थोंतरात्मेति. –d) द1 °चिन्तनैः (→°चिन्तकैः).

१४. –a) दे4 वै गृह्यते (→वेदयते). –b) दे9 जन्म च, + जन्मसु (→जन्मसु); दे4 जरा दुःखे च जन्मसु. –c) दे9 ते1 सविज्ञानात्मनस्तस्य, ग्र2 सविज्ञायात्मकस्तस्य. –d) दे4 दुःखकारकम् (→उपकारकम्).

१५. –a) का1 °विकेरतस्, दे1 ते1 °विवेकयस् (ते1 °कायत्), दे4 द1 ग्र2 °विवेकजस् (→°विवेकतस्); का1 दे4 द1 ग्र2 म1 ते1 तस्य (→तस्मात्); दे8.9 मुवें. मुए. तेनापितन्मयस् (दे8.9 °नस्) तस्मात्. –b) म1 मनःस्यादुपकारकम्. –c) का1 चा (पि) (→चा-); दे1 विवेक-, ते1 द1 ग्र2 म1 उ1 -विविक्तः (→-विवेकः); ते1 प्रकृतिः (→प्रकृतौ). –d) ते1 उ1 सोऽभवेत् (→सोऽभवत्).

१६. –a) ग्र2 उ1 काल- (→कालः); ग्र2 सृजन्ति (→सृजति). –b) दे5 ते1 म1 मुवें. मुए. मुब. संहरते, उ1 संहरतिः (→संहरति). –c) न1 वशया, ते1 वशगाः (→वशगा). –d) न1 विवे (→वशे).

१७. –a) दे6 एवैदं, ते1 एवैतन् (→एवेदं). –b) द1 ग्र2 उ1 समानसः (द1 °सं) (→सनातनः). –c) दे6 भगवन् (→भगवान्). –d) दे4 ते1 द1 ग्र2 म1 उ1 पुरुषः परः (→पुरुषोत्तमः).

१८. द1. १८a-१९d ⊙. (इ. सं). –b) का1 ब2.3 दे1.3 मनः प्राहुर्, दे2.4.6 मन प्राहुर्, ग्र2 मनमाहुर् (→मन आहुर्). –c) दे1 मनसश्च-, ग्र2 मनसा या- (→मनसश्चा-); ब2.3 अहंकारस्, दे4 न1 ते1 ग्र2 म1 उ1 अहंकारो (न1 °रः) (→अहंकारं). –d) ब2 मुब. त्वहं°, दे4 ग्र2 म1 उ1 अहं° (→अहं°); दे6 महत् परः, ते1 परो महान् (→महान् परः).

१९. दे6. १९a-२०b ⊙; द1. ab ⊙ (इ. सं.). –a) ब1 दे1 परमं (→परम-).

२०. दे4. ⊙; दे6. ab ⊙; द1 ग्र2 उ1. cd ⊙. –a) दे1 जगत् (→प्राणात्); ते1 °तरो (→°तरं). –b) ब3 व्योम° (→व्योमा°); दे1 दिगम्बरः, उ1 महेश्वरः (→[अ]ग्निरीश्वरः); दे5 द1 ग्र2 म1 व्योमातीतोहमीश्वरः, ते1 व्योमात्तो(द)पि महेश्वरः. –c) ब2 अहं (→सोऽहं); का1 सर्वगतः, दे1.5.8.9 न1 मुवें. मुए. मुब. ब्रह्माव्ययः, ते1 ब्रह्ममयश् (→सर्वत्रगः); म1 तस्मात् सर्वं मुनिश्रेष्ठ. –d) दे1.5 न1 ते1 म1 मयाततमिदं जगत्, दे8.9 मुवें. मुए. मुब. मायातीतमिदं जगत्. –e) दे6 ग्र2 मन्तः (→मत्तः); ग्र2 वीतं (→भूतं). –f) दे4 विहाय (→विज्ञाय); दे1 तु, दे5 स (→वि-); दे8.9 मुवें. मुए. मुब. मात्र विज्ञाय मुच्यते.

२१. –a) दे4 निहंति, ते1 निहन्ता, द1 म1 नियंता, ग्र2 नियता, उ1 नियतो (→नित्यं हि); दे8 मुवें. मुए. नास्तीति, दे9 नास्तीति, + हि न्यस्ति, मुब. नेहास्ति (→हि नास्ति); दे4 जटिलं (→जगति). –c) ते1 भूतं, ग्र2 ऋतं (→ऋते); का1 दे4.8 मुवें. मुए. मामेवं, दे9 मामेवं, + मामेकं (→मामेकं) –d) द1 ग्र2 म1 उ1 सनातनं (→महेश्वरम्).

वें.२.३.२१ सोऽहं सृजामि सकलं संहरामि सदा जगत् ।
मायी मायामयो देवः कालेन सह सङ्गतः ॥२२

मत्सन्निधावेष कालः करोति सकलं जगत् ।
नियोजयत्यनन्तात्मा ह्येतद् वेदानुशासनम् ॥२३

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायामुपरिविभागे (ईश्वरगीतासु) तृतीयोऽध्यायः ॥३॥

# ४

ईश्वर उवाच ।❀

वक्ष्ये समहिता यूयं श्रृणुध्वं ब्रह्मवादिनः ।
माहात्म्यं देवदेवस्य येनेदं संप्रवर्त्तते ॥१
नाहं तपोभिर्विविधैर्न दानेन न चेज्यया ।
शक्यो हि पुरुषैर्ज्ञातुमृते भक्तिमनुत्तमाम् ॥२
अहं हि सर्वभावानामन्तस्तिष्ठामि सर्वगः ।
मां सर्वसाक्षिणं लोको न जानाति मुनीश्वराः ॥३
यस्यान्तरा सर्वमिदं यो हि सर्वान्तरः परः ।
सोऽहं धाता विधाता च कालोऽग्निर्विश्वतोमुखः ॥४

---

२२. ब1. २२c-२३ d ⊙. –b) दे1 5 मायां (→मायी); दे4 महा, दे8 न1 -मयं (→-मयो); न1 देवं (→देवः); ते1 मायामयो महादेवः. –d) द1 उ1 देवः कालेन सम्मतः, ग्र2 कालेन च समज्जतः.

२३. ब1. ⊙. –a) ब2.3 दे2.3 यत्- (→मत्-); ब3 दे1 -सन्निधानेषु (दे2 °रेषं) (→-सन्निधावेष). –c) न1 नियोजयंति (→नियोजयति). –d) ते1 चैतद् (→ह्येतद्); ब3 दे1 ह्येतद्वेदार्थशासनम्.

**पुष्पिका**—[दे4 द1 पुस्तकयोरध्यायसमाप्तिर्नास्ति].

**पुराणनाम**—का1 दे4.6 न1 इति श्रीकूर्मपुराणे ईश्वरगीतासूपनिषत्सु, ब1-3 दे2.3 इति कू(दे2 कौ)र्मपुराणे ईश्वरगीतासूपनिषत्सु, दे1 इति श्रीकूर्मईश्वरगीतासूपनिषत्सु उत्तरखण्डे, दे5.8.9 मुए. इति श्रीकूर्मपुराणे ईश्वरगीतासु, ते1 इति श्रीकूर्मपुराणे उपरिभागे ईश्वरगीतासु उपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे, ग्र2 उ1 इति श्रीकूर्मपुराणे उत्तरभागे ईश्वरगीतासूपनिषत्सु, म1 इति श्रीकूर्मपुराणे उपरिभागे ईश्वरगीतासूपनिषत्सु, मुवें. इति श्रीकूर्मपुराणे उत्तरार्द्धे ईश्वरगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे, मुब. इति श्रीकौर्मे महापुराणे उपरिभागे श्रीमद्भगवदीश्वरगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे. **अध्यायनाम**—का1 ब1-3 दे1-6.8.9 न1 ग्र2 म1 उ1 मुए. ⊙; ते1 ईश्वरनारायणमहर्षिसंवादे परज्ञाननिरूपणयोगो नाम, मुवें. ऋषिव्याससंवादे, मुब. अव्यक्तादिज्ञानयोगो नाम. **अध्यायसंख्या**—का1 दे1 मुवें. मुब. तृतीयोध्यायः ॥३॥, ब1.3 दे2.3.5.6.8.9 ते1 ग्र2 म1 मुए. तृतीयोध्यायः, ब2 तृतीयोध्यायः ॥५३॥, न1 द्विपंचाशोध्यायः, उ1 तृतीयोध्यायः ॥०॥३॥०॥.

४

❀ द1 ⊙; दे3 ईश्वर उ; न1 ईश्वरौवाच; ग्र1 म1 ईश्वरः

१. –a) ब1 समाहितं, दे9 समाहि (धि)तं (→समाहिता). –b) द1 ग्र2 म1 उ1 वचनं मम (→ब्रह्मवादिनः). –c) न1 उ1 महात्म्यं (→माहात्म्यं). –d) दे1.4.5 ते1 द1 म1 उ1 येन सर्वं (→येनेदं सं-); दे1 प्रवर्त्ततं (→-प्रवर्त्तते).

२. –b) दे4 च (→न). –c) दे1 शक्योहं (→शक्यो हि); का1 पुरुषं ज्ञातुं, दे3.4.6 द1 ग्र2 म1 उ1 पुरुषो ज्ञातुं (→पुरुषैर्ज्ञातुं). –d) न1 उ1 ऋतो (→ऋते).

३. –a) ब2 दे5.8.9 न1 ते1 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. °भूतानां (→°भावानां). –b) दे3.8.9 मुवें. मुए. सर्वतः (→सर्वगः). –c) दे6 मा (?). (→मां); दे4 सर्वं (→सर्व-); ब2 दे4 द1 ग्र2 म1 उ1 लोके, दे1 * के (→लोको). –d) का1 ब2 दे1.4 द1 ग्र2 म1 उ1 जा(का1 ज)नन्ति (→जानाति).

४. दे4. cd ⊙. –a) दे3 यस्यान्तरे, दे8 अस्यान्तरा, द1 यस्यांतरस् (→यस्यान्तरा). –b) दे8 मुवें. सर्वान्तकः (→सर्वान्तरः); ब2 दे1 प्रभुः (→परः). –ab) ते6 यस्यांतरमिदं यो हि सर्वान्तर ततः परः. –d) का1 ब1.3 दे2.3.5.6 लोकेस्मिन्, ब2 ते1 कालाग्निर् (→कालोऽग्निर्); का1 ब1.3 दे2 °मुखं (→°मुखः).

न मां पश्यन्ति मुनयः सर्वेऽपि त्रिदिवौकसः ।
ब्रह्मा च मनवः शक्रो ये चान्ये प्रथितौजसः ।।५
गृणन्ति सततं वेदा मामेकं परमेश्वरम् ।
यजन्ति विविधैरग्निं ब्राह्मणा वैदिकैर्मखैः ।।६
सर्वे लोका नमस्यन्ति ब्रह्मा लोकपितामहः ।
ध्यायन्ति योगिनो देवं भूताधिपतिमीश्वरम् ।।७
अहं हि सर्वहविषां भोक्ता चैव फलप्रदः ।
सर्वदेवतनुर्भूत्वा सर्वात्मा सर्वसंस्थितः ।।८
मां पश्यन्तीह विद्वांसो धार्मिका वेदवादिनः ।
तेषां सन्निहितो नित्यं ये भक्त्या मामुपासते ।।९
ब्राह्मणाः क्षत्रिया वैश्या धार्मिका मामुपासते ।
तेषां ददामि तत् स्थानमानन्दं परमं पदम् ।।१०
अन्येऽपि ये विकर्मस्थाः शूद्राद्या नीचजातयः ।
भक्तिमन्तः प्रमुच्यन्ते कालेन मयि संगताः ।।११
न मद्भक्ता विनश्यन्ति मद्भक्ता वीतकल्मषाः। ।
आदावेतत् प्रतिज्ञातं न मे भक्तः प्रणश्यति ।।१२
यो वै निन्दति तं मूढो देवदेवं स निन्दति ।
यो हि तं पूजयेद् भक्त्या स पूजयति मां सदा ।।१३
पत्रं पुष्पं फलं तोयं मदाराधनकारणात् ।　　वें.२.४.१४

५. [दे$_{4}$. ५-३४ श्लोकाः द्वितीयाध्यायस्य ४४ श्लोकानन्तरं दृष्टिसंचारहेतुना सन्निविष्टाः] दे$_{5}$. ५c-६d ⊙. –a) दे$_{1}$ मां न, ग्र$_{2}$ न तां (→न मां). –b) ब$_{2}$ दे$_{1.6}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ मुवें. मुए. मुब. सर्वे पितृ°, ते$_{1}$ सर्वे ते त्रि° (→सर्वेऽपि त्रि°); दे$_{5}$ सर्वेपि** वौ**. –c) ब$_{1}$ ब्राह्मणा, ब$_{2}$ दे$_{1.2}$ न$_{1}$ ते$_{1}$ ग्र$_{2}$ म$_{1}$ ब्रह्माणो, ब$_{3}$ दे$_{4.6}$ ब्राह्मणो, दे$_{3}$ ब्रह्मातः (→ब्रह्मा च); ब$_{1-3}$ दे$_{1.2.6}$ न$_{1}$ म$_{1}$ उ$_{1}$ शक्रा, ग्र$_{2}$ शुश्रा (?) (→शक्रो). –d) ब$_{3}$ प्रमितौ° (→प्रथितौ°).

६. दे$_{5}$. ⊙. –a) ब$_{3}$ गृण्वंति, दे$_{1}$ शृण्वंति, ग्र$_{2}$ म$_{1}$ गृह्णन्ति (→गृणन्ति); का$_{1}$ देवं, ब$_{3}$ देवा, दे$_{1}$ वेदान्, दे$_{2}$ देव-, ते$_{1}$ वेदा (→वेदा[ः]). –b) का$_{1}$ मामकं, दे$_{1}$ नात्मानं (→मामेकं). –c) ब$_{1}$ जयन्ति (→यजन्ति); दे$_{1}$ अग्नौ, दे$_{8}$ मुवें. मुए. यज्ञैर्, दे$_{9}$ अग्नौ, + मंत्रैर् (→अग्निं). –d) ते$_{1}$ विविधैर् (→वैदिकैर्).

७. –a) का$_{1}$ दे$_{1.2}$ ग्र$_{2}$ सर्व- (→सर्वे); का$_{1}$ दे$_{8.9}$ मुवें. मुए. मुब. न पश्यन्ति (→नमस्यन्ति). –b) ग्र$_{2}$ ब्रह्म- (→ब्रह्मा); दे$_{1}$ °मह, म$_{1}$ °महं (→°महः). –c) दे$_{6}$ ध्यायति (→ध्यायन्ति). –d) का$_{1}$ °रीश्वरम् (→°मीश्वरम्).

८. –a) दे$_{1}$ वै (→हि); दे$_{5}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ °यज्ञानां, दे$_{6}$ °हविषा (→°हविषां). –c) ग्र$_{2}$ म$_{1}$ धाता (→भूत्वा). –d) का$_{1}$ ब$_{3}$ दे$_{2.3.5.9}$ °संस्तुतः, दे$_{1}$ °संस्तुतिः, दे$_{4}$ °संश्रितः, दे$_{6}$ °संस्कृता, मुवें. मुए. °संप्लुतः (→°संस्थितः).

९. –a) द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ भजन्तीह (→पश्यन्तीह). –b) म$_{1}$ °वेदिनः (→°वादिनः). –c) दे$_{1}$ सन्निहतो (→सन्निहितो). –d) दे$_{1}$ भक्त्या ये मामु°, दे$_{8}$ यो मां नित्यमु°, दे$_{10}$ मुवें. मुए. मुब. ये मां नित्यमु°, द$_{1}$ ग्र$_{2}$ उ$_{1}$ ये भक्ता मामु° (→ये भक्त्या मामु°).

१०. ब$_{1}$ ते$_{1}$. ab ⊙. –a) दे$_{6}$ वैश्याः (→वैश्या). –c) का$_{1}$ दातऽस्मि (→ददामि); दे$_{4}$ यत्स्थानं, ते$_{1}$ तद्ज्ञानं, म$_{1}$ मत्स्थानं (→तत्स्थानं). –c) न$_{1}$ शाश्वतं (→आनन्दं); दे$_{1}$ परमेश्वरं (→परमं पदम्).

११. ब$_{1}$. ११a–२३b ⊙. –a) दे$_{1}$ हि कर्मस्था, दे$_{8.9}$ मुवें. मुए. मुब. स्वधर्मस्थाः, न$_{1}$ विधर्मस्थाः (→विकर्मस्थाः). –b) का$_{1}$ शूद्राद्यानां च, दे$_{1}$ शूद्राद्या हीन-, दे$_{2}$ शूद्राद्यानीं च, दे$_{4}$ शूद्राद्यानीव- (→शूद्राद्या नीच-). –c) दे$_{4}$ प्रबुध्यंते, द$_{1}$ ग्र$_{2}$ उ$_{1}$ प्रपद्यन्ते (→प्रमुच्यन्ते). –d) ब$_{1}$ दे$_{1}$ कालेन मुनिपुंगवाः, दे$_{4}$ निष्ठानं मयि सत्तमाः, दे$_{5}$ म$_{1}$ कालेन मुनिसत्तमाः, दे$_{8}$ मुवें. मुए. कालेनापि हि संगताः, दे$_{9}$ कालेन मयि संगताः, + कालेनापि हि संगताः, न$_{1}$ ते$_{1}$ द$_{1}$ ग्र$_{2}$ उ$_{1}$ कालेन मयि सत्तमाः.

१२. ब$_{1}$. ⊙ (द्र. ११ पा. वि.). –a) दे$_{1.4.5.8.9}$ न$_{1}$ ते$_{1}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ मुवें. मुए. मुब. मद्भक्ता न (→न मद्भक्ता). –c) दे$_{1.5.8.9}$ न$_{1}$ ते$_{1}$ उ$_{1}$ मुवें. मुए. मुब. आदावेव (→आदावेतत्); का$_{1}$ प्रतिज्ञाने (→प्रतिज्ञातं). –d) दे$_{6}$ ना मद्भक्ताः (→न मे भक्तः).

१३. ब$_{1}$. ⊙ (द्र. ११ पा. वि.). –a) का$_{1}$ ब$_{2.3}$ दे$_{3.6}$ वा निंदति, दे$_{1}$ विनिंदति, ग्र$_{2}$ वै विन्दति (→वै निन्दति); दे$_{4}$ मां मूढो, द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ तं देवं (→तं मूढो); ते$_{1}$ न (स) निन्दति, द$_{1}$ स विंदति, ग्र$_{2}$ म$_{1}$ जगत्पतिं (→स निन्दति). –c) का$_{1}$ तं पूज्यते, दे$_{1.6}$ तं पूजयद्, दे$_{4}$ द$_{1}$ ग्र$_{2}$ उ$_{1}$ संपूजयेद्, दे$_{8.9}$ मुवें. मुए. मुब. पूजयते (→तं पूजयेद्). –d) दे$_{4.6}$ द$_{1}$ उ$_{1}$ संपू° (→स पू°); दे$_{1}$ स हि पूजतिमं सदा.

१४. ब$_{1}$. ⊙ (द्र. ११ पा. वि). –a) दे$_{5}$ पुष्पं पत्रं (→पत्रं पुष्पं). –b) दे$_{4.6}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ सदा° (→मदा°). –c) दे$_{1.4.5.8.9}$ न$_{1}$ मुवें. मुए. मुब. नियतं, ते$_{1}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$

वें. २.४.१४ यो मे ददाति नियतः स मे भक्तः प्रियो मतः ॥१४
अहं हि जगतामादौ ब्रह्माणं परमेष्ठिनम् ।
विधाय दत्तवान् वेदानशेषानात्मनिःसृतान् ॥१५
अहमेव हि सर्वेषां योगिनां गुरुरव्ययः ।
धार्मिकाणां च गोप्ताऽहं निहन्ता वेदविद्विषाम् ॥१६
अहं वै सर्वसंसारान्मोचको योगिनामिह ।
संसारहेतुरेवाहं सर्वसंसारवर्जितः ॥१७
अहमेव हि संहर्त्ता स्रष्टाहं परिपालकः ।
मायावी मामिका शक्तिर्माया लोकविमोहिनी ॥१८
ममैव च पराशक्तिर्या सा विद्येति गीयते ।
नाशयामि तया मायां योगिनां हृदि संस्थितः ॥१९
अहं हि सर्वशक्तीनां प्रवर्त्तकनिवर्त्तकः ।
आधारभूतः सर्वासां निधानममृतस्य च ॥२०
एका सर्वान्तरा शक्तिः करोति विविधं जगत् ।
आस्थाय ब्रह्मणो रूपं मन्मयी मदधिष्ठिता ॥२१
अन्या च शक्तिर्विपुला संस्थापयति मे जगत् ।
भूत्वा नारायणोऽनन्तो जगन्नाथो जगन्मयः ॥२२
तृतीया महती शक्तिर्निहन्ति सकलं जगत् ।

सततं (→नियतः). –d) ते1 स वै, द1 ग्र2 म1 उ1 सदा (→स मे); न1 भक्तिः (→भक्तः); ब2 3 दे3-6.8 ते1 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. मम, दे1 नरः, दे9 मतः, + मम, न1 मुनिः (→मतः).

१५. ब1. ⊙ (द्र. ११ पा. वि.). –a) द1 ग्र2 म1 उ1 ग्रर्थे (→ग्रादौ). –b) न1 ब्रह्मणे (→ब्रह्माणं); न1 °मेष्ठिने (→°मेष्ठिनम्). –c) का1 निध्याय, ब2.3 दे6 ग्रधीय, दे8 मुवें. मुए. मुब. विदधौ, दे9 विधाय, + विदधौ (→विधाय). –d) ब2 °निस्थितम्, दे4° निस्सृता, ते1 निष्ठितं, द1 ग्र2 म1 उ1 °मायया (→°निः सृतान्); ब3 दे1 शेषानात्मविनिःसृतान्.

१६. ब1. ⊙ (द्र. ११ पा. वि.). –a) ब2 °मेको (→°मेव); दे1 च (→हि). –b) ब2 योगीनां (→योगिनां). –c) दे3-5 °कानां च, ते1 °कानां सु- (→°काणां च). –d) दे2 °विद्विषी (→°विद्विषाम्).

१७. ब1. ⊙ (द्र. ११ पा. वि.). –a) दे4 च, न1 ते1 मुवें. मुए. मुब. हि (→वै); ग्र2 °संसार- (→°संसारान्). –b) दे1 ग्रपि, ते1 ग्रहम् (→इह); दे2 मोचको (योगिनां) गुरुरव्ययः.

१८. ब1. ⊙ (द्र. ११ पा. वि.). –a) दे1 एवाभि- (→एव हि). –b) दे8.9 मुवें. मुए. मुब. संस्रष्टा (→स्रष्टाहं). –c) दे3.8 मुवें. मुए. मुब. माया वै, ते1 माया हि (→मायावी); ते1 भूमिका, उ1 मामकी (→मामिका); दे9 ममैव परमाशक्तिर्, + माया वै मामिका शक्तिर्. –d) ते1 मया (→माया); का1 ब3 दे2.6.9 न1 द1 मुवें. मुए. मुब. °विमोहनी (→°विमोहिनी); ग्र2 उ1 करोति विविधं जगत्.

१९. ब1. ⊙ (द्र. ११ पा. वि.); ते1. cd ⊙; ग्र2 उ1. ⊙. –a) दे4 मामैव (→ममैव); दे9 चापरा (→च परा); दे1 ममैषा परमा शक्तिर्. –c) दे9 शोषयामि, + नाशयामि (→नाशयामि); ब2 दे5.6 द1 म1 मुब. तथा, दे3.8 मुवें. मुए. च तां (→तया); दे4 ज्ञानं (→मायां).

२०. ब1. ⊙ (द्र.११ पा. वि.); ग्र2.२० a-२१ b ⊙. –a) ते1 तयाहं (→ग्रहं हि). –b) ब2 प्रवर्त्तको (→प्रवर्त्तक-); न1 प्रवृत्तकनिवृत्तकः. –c) दे2.6 °भूता, न1 °भूतौ (→°भूतः); दे4 शर्वेषां, दे6 सर्वासो (→सर्वासां). –d) दे3.6 विधान°, दे4 विदान° (→निधान°); दे4 ते1 द1 तु (→च).

२१. ब1. ⊙ (द्र.११ पा. वि); ग्र2. ab ⊙. –a) ब2 एषा (→एका). –b) ते1 सकलं (→विविधं). –c) म1 रूप- (→रूपं). –d) का1 यन्मयी, दे4 ते1 द1 मन्माया (→मन्मयी); न1 मदनुष्ठिता, द1 म1 मयि तिष्ठति (→मदधिष्ठिता); ग्र2 माया मम हि तिष्ठति.

मुवें. b, c मध्ये अधिकम्—

*नाहं प्रेरयिता विप्राः परमं योगमाश्रिताः ।

२२. ब1. ⊙ (द्र. ११ पा. वि.); दे6.२२a-२३b ⊙. –a) दे5 शक्तिस्तु, ग्र2 शक्तिष्व- (→च शक्तिर्); दे1 विपुलां (→विपुला). –b) ग्र2 जयत् (→जगत्). –c) ब2 °यणानन्तो, दे1 °यणो देवो (→°यणोऽनन्तो). –d) ब3 इहमेव (→जगन्नाथो).

२३. ब1. ab ⊙ (द्र. ११ पा. वि.); दे6.ab ⊙ (द्र. २२ पा. वि.). –a) ग्र2 तृतीयं या हि मे शक्तिर्. –b) दे1.4 विहन्ति, ते1 निहन्त्री (→निहन्ति). –c) दे1 सा तामसी (→तामसी मे). –d) दे1 कालाख्या रुद्रपिङ्गला, दे5 द1 ग्र2 म1 कालरुद्राख्यरूपिणी, ते1 कालरुद्रस्वरूपिणी.

२०-२३ श्लोकानाम् उडिया पुस्तके ग्रयं क्रमः—

*ग्रास्थाय ब्रह्मणो रूपं मन्मया मयि तिष्ठति ।
ग्रन्या च शक्तिर्विपुला संस्थापयति मे जगत् ॥

**तामसी मे समाख्याता कालाख्या रुद्ररूपिणी ॥२३**
**ध्यानेन मां प्रपश्यन्ति केचिज्ज्ञानेन चापरे ।**
**अपरे भक्तियोगेन कर्मयोगेन चापरे ॥२४**
**सर्वेषामेव भक्तानामिष्टः प्रियतरो मम ।**
**यो हि ज्ञानेन मां नित्यमाराधयति नान्यथा ॥२५**
**अन्ये च ये त्रयो भक्ता मदाराधनकाङ्क्षिणः ।**
**तेऽपि मां प्राप्नुवन्त्येव नावर्त्तन्ते च वै पुनः ॥२६**
**मया ततमिदं कृत्स्नं प्रधानपुरुषात्मकम् ।**
**मय्येव संस्थितं विश्वं मया संप्रेर्यते जगत् ॥२७**
**नाहं प्रेरयिता विप्राः परमं योगमाश्रितः ।**
**प्रेरयामि जगत्कृत्स्नमेतद्यो वेद सोऽमृतः ॥२८**
**पश्याम्यशेषमेवेदं वर्त्तमानं स्वभावतः ।**
**करोति कालो भगवान् महायोगेश्वरः स्वयम् ॥२९**
**योगः संप्रोच्यते योगी माया शास्त्रेषु सूरिभिः ।**
**योगेश्वरोऽसौ भगवान् महादेवो महान् प्रभुः ॥३०**
**महत्त्वं सर्वतत्त्वानां परत्वात् परमेष्ठिनः ।**
**प्रोच्यते भगवान् ब्रह्मा महान् ब्रह्ममयोऽमलः ॥३१**
**यो मामेवं विजानाति महायोगेश्वरेश्वरम् ।** वें२.४.३२

भूत्वा नारायणोऽनन्तो जगन्नाथो जगन्मय ।
तृतीया महती शक्तिर्निहन्ति सकलं जगत् ॥
अहं हि सर्वशक्तीनां प्रवर्त्तकनिवर्त्तक ।
आधारभूतः सर्वेषां धाम न मृतस्य च ॥
एका सर्वान्तरा शक्तिः करोति विविधं जगत् ।
तामसी मे समाख्याता कालरुद्राख्यरूपिणी ॥
( = २१c-२३b, २०a-२१b, २३cd)

**२४.** –c) म$_1$ (ये) योगेन (→योगेन).

**२५.** –b) न$_1$ इष्टिः (→इष्टः); दे$_{3.5.8.9}$ न$_1$ ते$_1$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ मुवें. मुए. मुब. °तमो (→°तरो). –c) ग्र$_2$ योग- (→यो हि). –d) का$_1$ आधार° (?) (→आराध°).

**२६.** –a) ब$_{2.3}$ दे$_{3.6}$ येत्र मे, दे$_1$ ये त्रये, दे$_2$ येत्र *, दे$_8$ मुवें. ग्र$_2$ येत्र ते, मुए. मुब. ह्रये, दे$_9$ बहवो, + ह्रये, म$_1$ येत्र वै (→ये त्रयो); दे$_{3.8}$ भक्त्या (→भक्ता); का$_1$ अन्ये च येत्र भक्त्या च, ब$_1$ अन्येत्राष त्रयो भक्ता, दे$_5$ अन्येर्त्रे यत्र मे (?), न$_1$ अन्ये तु ये त्रयो भक्ता, ते$_1$ अन्यत्रापि च ये भक्ता. –b) ब$_3$ मदाधार न ( ) (→मदाराधन-); दे$_{1.5.8.9}$ मुवें. मुए. मुब. °कारिणः (→°काक्षिणः). –c) द$_1$ तेहि, ग्र$_2$ अपि (→तेऽपि); दे$_4$ तां (→मां); दे$_1$ प्रविशंत्येव, दे$_6$ प्राप्नुवंत्येवं, ते$_1$ प्राप्नुवन्त्येते (→प्राप्नुवन्त्येव). –d) ब$_2$ दे$_4$ मा, दे$_6$ न (→ना-); ब$_1$ ते$_1$ °वर्त्तते, न$_1$ °वर्तन्त्ये (→°वर्त्तन्ते).

**२७.** –a) का$_1$ माया (→मया); ते$_1$ विश्वं (→कृत्स्नं). –c) दे$_{8.9}$ मुवें. मुए. चित्तं (→विश्वं). –d) म$_1$ माया (→मया); दे$_9$ संपूर्यते, ते$_1$ संप्राप्यते (→संप्रेर्यते); दे$_6$ वि पूर्वमया संतर्य्यते जगत्.

**२८.** –a) दे$_{4.8.9}$ मुवें. मुए. मुब. आस्थितः (→आश्रितः); दे$_1$ परं योगं समाश्रुतः, ग्र$_2$ म$_1$ परा (म$_1$° रं) योगमुपाश्रिताः (म$_1$° तः). –c) दे$_1$ प्रेषयामि (→प्रेरयामि); दे$_1$ म$_1$ जगत् सर्वं, दे$_9$ तथापीदं, + जगत्कृत्स्नं, ते$_1$ तथा चेदं (→जगत्कृत्स्नं). –d) दे$_1$ वेत्ति (→वेद); दे$_8$ सस्मृतः, दे$_9$ सोमृतः, + सस्मृतः, न$_1$ सोस्मृतं (→सोऽमृतः).

**२९.** –a) ग्र$_2$ पश्यात्म° (→पश्याम्य°). –b) ब$_1$ दे$_1$ न$_1$ वर्त्तमान-, ग्र$_2$ वर्त्तमाने (→वर्त्तमानं). –c) द$_1$ करोतु (→करोति); ब$_2$ कामं (→कालो). –d) ते$_1$ महायोगी°, द$_1$ श्रद्धायोगी°, ग्र$_2$ भर्त्ता योगी°, उ$_1$ हर्त्तायोगी° (→महायोगे°); ब$_1$ दे$_1$ °श्वरेश्वरं (दे$_1$ °रः) (→°श्वरः स्वयम्).

**३०.** ब$_1$. ३०a-३२b ⊙ (द्र. सं.). –a) का$_1$ दे$_{4.5}$ योगात्, दे$_2$ योगात्, + योगाहं, दे$_{8.9}$ न$_1$ मुवें. मुए. मुब. योऽहं (→योगः); ते$_1$ स प्राप्यते योगे (→संप्रोच्यते योगी). –b) का$_1$ दे$_4$ न$_1$ ग्र$_2$ म$_1$ मया, ब$_{2.3}$ दे$_{2.3.6}$ मुवें. मुए. मुब. मायी, दे$_5$ मायां, ते$_1$ महा- (→माया); का$_1$ शास्त्रेस्व-, ब$_2$ ब$_2$ शास्त्रे च (→ शास्त्रेषु); ते$_1$ सूचितः, मुब. सूरभिः (→सूरिभिः). –c) का$_1$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ मुवें. मुए. मुब. योगीश्वरोऽसौ, दे$_3$ न$_1$ योगेश्वरेसौ, दे$_6$ विप्रोश्वरोसौ, ते$_1$ योगीश्वरोऽथ (→योगेश्वरोसौ). –d) दे$_{3.4.6.8.9}$ ते$_1$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ महा- (→महान्); मुवें. मुए. मुब. महायोगेश्वरः स्वयम्.

**३१.** ब$_1$. ⊙ (द्र. ३० पा. वि.) –a) का$_1$ दे$_{1.5}$ न$_1$ महत्वात् (→महत्वं); दे$_{1.5}$ °भूतानां, दे$_{6.8.9}$ ते$_1$ ग्र$_2$ म$_1$ मुवें. मुए. °सत्वानां (→°तत्त्वानां). –b) का$_1$ परमत्वात्, ब$_3$ दे$_6$ मुवें. मुए. वरत्वात्, द$_1$ ग्र$_2$ म$_1$ उ$_1$ परत्वं (→परत्वात्); दे$_1$ °मेश्वरः, दे$_5$ °मेष्ठ्यसौ (→°मेष्ठिनः). –c) द$_1$ उ$_1$ ब्रह्म (→ब्रह्मा). –d) दे$_{1.4.5.8.9}$ न$_1$ ते$_1$ द$_1$ ग्र$_2$ उ$_1$ मुवें. मुए. मुब. महा- (→महान्); उ$_1$ ब्राह्म° (→ब्रह्म°); का$_1$ °मयो मतः ब$_2$ दे$_2$ °मयो मतः, दे$_1$ °मयोनलः (→°मयोऽमलः).

**३२.** ब$_1$. ab ⊙ (द्र. ३० पा. वि.). –a) दे$_{2.4}$ यो

वें.२.४.३२ सोऽविकल्पेन योगेन युज्यते नात्र संशयः ॥३२
सोऽहं प्रेरयिता देवः परमानन्दमाश्रितः ।
नृत्यामि योगी सततं यस्तद् वेद स वेदवित् ॥३३
इति गुह्यतमं ज्ञानं सर्ववेदेषु निष्ठितम् ।
प्रसन्नचेतसे देयं धार्मिकायाहिताग्नये ॥३४

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायामुपरिविभागे (ईश्वरगीतासु) चतुर्थोऽध्यायः ॥४॥

# ५

व्यास उवाच ।❀
एतावदुक्त्वा भगवान् योगिनां परमेश्वरः ।
ननर्त्त परमं भावमैश्वरं संप्रदर्शयन् ॥१
तं ते ददृशुरीशानं तेजसां परमं निधिम् ।
नृत्यमानं महादेवं विष्णुना गगनेऽमले ॥२
यं विदुर्योगतत्त्वज्ञा योगिनो यतमानसाः ।
तमीशं सर्वभूतानामाकाशे ददृशुः किल ॥३
यस्य मायामयं सर्वं येनेदं प्रेर्यते जगत् ।

मामेव, म1 यो मे परं (→यो मामेवं). –b) दे3 ते1 महायोगीं°, द1 ग्र2 उ1 सर्वयोगी° (→महायोगे°); दे4 महायोगी महेश्वरः, म1 सर्वयोगीश्वरेश्वरः. –c) ब1 सोधिकं येन, ब3 दे4.5.8.9 न1 सोविकंपेन, द1 ग्र2 म1 उ1 सोविकंपित- (→सोऽविकल्पेन).

३३. –a) ते1 नाहं (→सोऽहं); न1 देवं, उ1 वेदः (→देवः). –b) दे8.9 मुब. °सश्रितः (→°माश्रितः); दे5 परमं पदमाश्रितः. –c) दे4.5 नृत्याभि- (→नृत्यामि); उ1 योगि (→योगी); ब2.3 दे1 प्रेरयामि जगत्सर्वं. –d) दे3.5.6 द1 ग्र2 म1 उ1 यस्तं(→यस्तद्); दे8.9 न1 मुवें. मुए. मुब. योगवित् (→वेदवित्).

३४. –b) ब2 दे1 सर्वं (→सर्व-); ब1 दे1.4.5.8.9 न1 ते1 द1 ग्र2 म1 मुवें. मुए. मुब. निश्चितं, दे2 निष्ट्रिता (→निष्ठितं). –c) दे1 प्रपन्न° (→प्रसन्न°); दे2 °चेतसो (→°चेतसे); ग्र2 उ1 वंधा, दे1 नित्यं (→देयं).

पुष्पिका—[द1 पुस्तके अध्यायसमाप्तिर्नास्ति]

**पुराणनाम**—का1 दे6 न1 इति श्रीकूर्मपुराणे ईश्वरगीतासूपनिषत्सु, ब1.2 दे2 इति कूर्मपुराणे ईश्वरगीतासूपनिषत्सु, ब3 इति कूर्मपुराणे ई*रगीतासूपनिषत्सु, दे1 इति श्रीकूर्मपुराणे ईश्वरगीतासु उत्तरखण्डे, दे3 इति श्रीकूर्मसूपनिषत्सु, दे4.5.8.9 मुए. इतिश्रीकूर्मपुराणे ईश्वरगीतासु, ते1 इति श्रीकूर्मपुराणे उपरिभागे ईश्वरगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे, ग्र2 उ1 इति श्रीकूर्मपुराणे उत्तरभागे ईश्वरगीतासूपनिषत्सु, म1 इति श्रीकूर्मपुराणे उपरिभागे ईश्वरगीतासूपनिषत्सु, मुवें. इति श्रीकूर्मपुराणे उत्तरार्द्धे ईश्वरगीतानिषत्सु ब्रह्मविद्यायां योगशास्त्रे, मुब. इति श्रीकौर्मे महापुराणे उपरिभागे श्रीमद्भगवदीश्वरगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे. **अध्यायनाम**—का1 ब1-3 दे1-6.8.9 न1 ग्र2 म1 उ1 मुए. ⊙; ते1 ईश्वरनारायणमहर्षिसंवादे, मुवें. ऋषिव्याससंवादे, मुब. देवदेवमाहात्म्ये ज्ञानयोगो नाम. **अध्यायसंख्या**—का1 ब1.3 दे2.3.5.6.8.9 ते1 ग्र2 म1 मुए. चतुर्थोध्यायः, ब2 चतुर्थोध्यायः ॥५४॥, दे1 मुवें. मुब. चतुर्थोध्यायः ॥४॥, दे4 द्वितीयोध्यायः ॥२॥, न1 त्रिपंचाशोध्यायः, उ1 चतुर्थोऽध्यायः ॥०॥ श्री ॥०॥

**५**

❀ द1. ⊙; दे8 ईश्वर उवाच; दे9 ईश्वर उ.; ग्र2 म1 उ1 व्यासः; मुए. सूत उवाच.

१. –a) दे1 वचनं (→भगवान्). –d) ते1 ग्र2 ऐश्वर्यं (→ऐश्वरं); ब1 ऐश्वर्यं भावदर्शयन्.

२. –a) ब3 दे1.3.6 उ1 तत्ते, दे4 ते तं, मुब. यं ते (→तं ते). –b) दे1 परमां (→परमं); म1 परमं तेजसां निधि. –c) न1 नित्यं म्लानं (→नृत्यमानं); म1 सहेशानं (→महादेवं). –d) दे5 गमने (→गगने); ग्र2 म1 तले (→[ग्र] मले).

३. –a) दे5.8 मुए. मुब. तं (→यं); ब1 भाव° (→तत्त्व°). –b) दे1 तत्त्वमानसाः, द1 योगचेतसः, ग्र2 म1 उ1 यतचेतसः (→यतमानसाः). –c) दे5 तमेवं (→तमीशं); म1 ब्रह्म° (→सर्व°); ते1 देवानां (→भूतानां).

४. दे6. ४a-५d ⊙. –b) ब1 पूर्यं*, ब3 प्रोच्यते, दे1 पूर्यते, दे8.9 मुए. मुब. ध्रियते (→प्रेर्यते). –c) दे1 नृत्यमानं, द1 म1 नृत्यमाने (म1 °न) (→नृत्यमानः). –d)

नृत्यमानः स्वयं विप्रैर्विश्वेशः खलु दृश्यते ॥४
यत् पादपङ्कजं स्मृत्वा पुरुषोऽज्ञानजं भयम् ।
जहाति नृत्यमानं तं भूतेशं ददृशुः किल ॥५
यं विनिद्रा जितश्वासाः शान्ता भक्तिसमन्विताः ।
ज्योतिर्मयं प्रपश्यन्ति स योगी दृश्यते किल ॥६
योऽज्ञानान्मोचयेत् क्षिप्रं प्रसन्नो भक्तवत्सलः ।
तमेव मोचकं रुद्रमाकाशे ददृशुः परम् ॥७
सहस्रशिरसं देवं सहस्रचरणाकृतिम् ।
सहस्रबाहुं जटिलं चन्द्रार्धकृतशेखरम् ॥८
वसानं चर्म वैयाघ्रं शूलासक्तमहाकरम् ।
दण्डपाणिं त्रयीनेत्रं सूर्यसोमाग्निलोचनम् ॥९
ब्रह्माण्डं तेजसा स्वेन सर्वमावृत्य च स्थितम् ।
दंष्ट्राकरालं दुर्द्धर्षं सूर्यकोटिसमप्रभम् ॥१०
अण्डस्थं चाण्डबाह्यस्थं बाह्यमभ्यन्तरं परम् ।
सृजन्तमनलज्वालं दहन्तमखिलं जगत् ।
नृत्यन्तं ददृशुर्देवं विश्वकर्माणमीश्वरम् ॥११
महादेवं महायोगं देवानामपि दैवतम् ।
पशूनां पतिमीशानं ज्योतिषां ज्योतिरव्ययम् ॥१२
पिनाकिनं विशालाक्षं भेषजं भवरोगिणाम् ।
कालात्मानं कालकालं देवदेवं महेश्वरम् ॥१३ वें.२.५.१३

बा1 उ1 विप्रेशः, ग्र2 सर्वेशः (→विश्वेशः); द1 ग्र2 म1 उ1 संप्रदृश्यते (→खलु दृश्यते).

५. –a) ग्र2 ज्ञात्वा (→स्मृत्वा); दे5 यत्पादपङ्कज-स्मृत्या. –b) दे5 पुरुषोऽज्ञानपञ्जरम्. –c) ब3 तु (→तं).
अतः परं दे4 पुस्तके अधिकम्—
'नृत्यमानः स भगवांस्तानाह जगदीश्वरः ।
यं विनिद्रा जितश्वासा पश्यन्ति ज्ञानचक्षुषः ।
सर्वतः पाणिपादोहमन्तर्यामी सनातनः ।
अपाणिपादो यवनो गृहीता हृदि संस्थितः ।
नास्ति तत्सर्वजगति भूतं जगत्स्थावरजङ्गमम् ।
ऋते मामेकमव्यक्तं कामरूपं महेश्वरम् ।
सोहं सृजामि सकलं संहरामि सदा जगत् ।
वियोजयत्येनं तात्मा ह्येतद्वेदानुशासनमिति ।
इति श्रीकूर्मपुराणे ईश्वरगीतासूपनिषत्सु तृतीयोध्यायः
(=२.५.४;२.३.२०-२३)

६. द1. ⊙ (द्र. सं.); दे4 a ⊙. –a) मुवें. मुए. केचिन्निद्रा° (→यं विनिद्रा°); दे1 °जितक्रोधाः, दे5 °जितश्वासः (→°जितश्वासाः). –d) दे1 जं देवं ददृशुः किल.

७. –a) ब2 योऽज्ञानं मोचयेत्क्षिप्रं, ब3 योऽज्ञानान्मो-च्यते क्षिप्रं, दे4 योजनान्मुच्यते क्षिप्रं, द1 यो ज्ञानमुच्यते क्षिप्रं, म1 यो ज्ञानमाचरेत्क्षिप्रं, उ1 यो ज्ञानमूचिवान् क्षिप्रं. –b) दे4 वसन्तो भक्तिवत्सलः. –c) ब1 दे1 तमेकं (ब1 °क); दे8.9 मुवें. मुए. मुब तमेवं (→तमेव); दे8 मुवें. मुए मोचनं (→मोचकं). –d) ब1 दे3.6 ते1 ग्र2 किल (→परं).

८. दे6.८ c-१० b ⊙; दे2. b ⊙. –a) दे10 °किरणं (→°शिरसं); दे2 सहस्र *****. –b) ब1 सहस्रशिरसाकृतिं. –c) का1 °बाहु-, द1 बाहुर् (→°बाहुं).

९. ब1. ९ a-१५ d ⊙; दे6. ⊙ (द्र.८ पा. वि). –c) दे3.8 मुए. °मात्रं, दे9 °मात्रं, + °पाणिं (→°पाणिं); दे5 त्रिनेत्रं च, ते1 त्रिणयनं (→त्रयीनेत्रं). –d) न1 सोम-सूर्याग्निलोचनम्.
अतः परं म1 पुस्तके अधिकम्—
अण्डस्थं चाण्डबाह्यस्थं बाह्यमाभ्यन्तरं परम । (=११ab)

१०. ब1. ⊙ (द्र. ९ पा. वि.); दे6. ab ⊙ (द्र.८ पा. वि.). –b) दे1.3.8.9 मुवें. मुए. मुब. -धिष्ठितं, न1 निष्ठितं, ते1 संस्थितं, ग्र2 म1 उ1 विष्ठितं (→च स्थितं). –c) ब3 दे2.6 न1 °कराल (→°करालं).

११. ब1. ⊙ (द्र.९ पा. वि.); दे8.9 न1 द1 ग्र1.2 म1 उ1 मुवें. मुए. मुब. ab ⊙. –a) का1 दे4 °भाण्डस्थं (→°बाह्यस्थं); ब3 अण्डस्थं अण्डबाह्यस्थं. –c) का1 ब2.3 दे2.3.5 °ज्वाला, न1 ते1 द1 म1 °ज्वालां (→°ज्वालं); ग्र2 सृजन्तमखिलं जातं. –e) दे4 नित्यं तं (→नृत्यन्तं); ग्र2 देवा (→देवं).

१२. ब1. ⊙ (द्र.९ पा. वि.). –a) म1 महायोगीं (→महायोगं). –b) ते1 अधि° (→अपि). –d) मुवें. आनन्दं (→ज्योतिषां); न1 ज्योतिषां परमं पदम्.

१३. ब1. ⊙ (द्र.९ पा. वि.). –b) दे2.5.6 °रोगिनं (दे5 °णं) (→°रोगिणां). –c) का1 कालातीतं, ब2 कामात्मनां, दे2 कालात्मानां, दे6 कालोत्मानं (→कालात्मानं); का1 काल कांक्षं, ब2 कामकामं, दे1 कलाकारं, दे5 कालकलं, दे9 कलाकारं, + कलाकालं, द1 कलात्मानं, (→कालकालं); उ1 कालात्मनां कलात्मानं. –d) दे4 विश्वदेवं, ग्र2 कालरूपं, द1 उ1 कालकालं (→देवदेवं).

वे.२.५.१४ उमापतिं विरूपाक्षं योगानन्दमयं परम् ।
ज्ञानवैराग्यनिलयं ज्ञानयोगं सनातनम् ॥१४
शाश्वतैश्वर्यविभवं धर्माधारं दुरासदम् ।
महेन्द्रोपेन्द्रनमितं महर्षिगणवन्दितम् ॥१५
आधारं सर्वशक्तीनां महायोगेश्वरेश्वरम् ।
योगिनां परमं ब्रह्म योगिनां योगवन्दितम् ।
योगिनां हृदि तिष्ठन्तं योगमायासमावृतम् ॥१६
क्षणेन जगतो योनिं नारायणमनामयम् ।
ईश्वरेणैकतापन्नमपश्यन् ब्रह्मवादिनः ॥१७
दृष्ट्वा तदैश्वरं रूपं रुद्रनारायणात्मकम् ।
कृतार्थं मेनिरे सन्तः स्वात्मानं ब्रह्मवादिनः ॥१८
सनत्कुमारः सनको भृगुश्च
सनातनश्चैव सनन्दनश्च ।
रुद्रोऽङ्गिरा वामदेवोऽथ शुक्रो
महर्षिरत्रिः कपिलो मरीचिः ॥१९
दृष्ट्वाऽथ रुद्रं जगदीशितारं
तं पद्मनाभाश्रितवामभागम् ।
ध्यात्वा हृदिस्थं प्रणिपत्य मूर्ध्ना
बद्ध्वाञ्जलिं स्वेषु शिरःसु भूयः ॥२०
ओङ्कारमुच्चार्य विलोक्य देव-
मन्तःशरीरे निहितं गुहायाम् ।
समस्तुवन् ब्रह्ममयैर्वचोभि-
रानन्दपूर्णायितमानसास्ते ॥२१

मुनय ऊचुः ।❀

त्वामेकमीशं पुरुषं पुराणं
प्राणेश्वरं रुद्रमनन्तयोगम् ।

---

१४. ब1. ⊙ (द्र.६ पा. वि.). –a) दे8.9 न1 द1 मुवें. मुए. विशालाक्षं (→विरूपाक्षं). –b) दे4 द1 ग्र2 उ1 योगानंदं परं शुभं, ते1 योगानन्दं परं शिवं. –c) न1 °विलयं (→°निलयं).

१५. ब1. ⊙ (द्र.६ पा. वि.). –a) का1 ब2.3 दे2 मुब. °विटपं, दे4 °निलयं (→°विभवं). –b) दे1 धर्माकारं, दे5 धर्माचारं, दे8 धर्माध्यक्षं+धर्माधारं, दे9 धर्माध्यक्षं (→धर्माधारं).

१६. दे1.4.6 ग्र2 मुवें. मुए. abcd ⊙; ब1. cd ⊙. –a) ब1 आराध्यं, दे5 आचार-, द1 उ1 आधेयं, (→आधारं). –b) ते1 महायोगी° (→महायोगे°). –c) ते1 योगानां (→योगिनां); ब2 शरणं (→परमं); दे3.8.9 गुह्यं (→ब्रह्म). –d) का1 दे2.5.8.9 उ1 योगिनं (→योगिनां); ब2 दे2.5.6 योगि° (→योग°).

१७. –a) द1 तं ततो, ग्र2 म1 ततोऽनु-, उ1 अन्ततो (→क्षणेन); न1 ते1 द1 ग्र2 म1 उ1 जगतां (→जगतो); का1 ब3 दे2 योनिर्, ते1 नित्यं (→योनिं). –b) दे4 °मनौपमं (→°मनामयं). –c) दे3.8.9 मुवें. मुए. मुब. °णैक्य मा° (→°णैकता°); दे4 ईश्वरेनैकतां मात्र-. –d) ग्र2 पश्यन्ति (→[अ]पश्यन्).

१८. ते1 द1. ⊙ (द. सं). –a) ग्र2 ईश्वरं (→ऐश्वरं). –b) का1 ब1-3 दे2-4.6 ग्र2 उ1 मुवें. मुए. मुब. रुद्रं (→रुद्र-). –d) दे1 स्वात्मनो (→स्वात्मानं).

१९. –a) दे4 भृगुश्चैव सनन्दनः, द1 ग्र2 उ1 भृगुश्चैव सनातनः. –b) ते1 म1 सनन्दनश्चैव सनातनश्च. –c) का1 दे3.8.9 मुवें. मुए. मुब. रैभ्यो° (→रुद्रो°); न1 वामदेवश्च (→वामदेवोऽथ). –d) का1 (वा) मरीचिः, ब3 मुवें. मुए. मारीचिः (→मरीचिः).

२०. –a) दे4.5 दृष्ट्वा च, द1 सद्वास-, ग्र2 सद्वासु-, उ1 स वास- (→दृष्ट्वाथ); ग्र2 °तान्तरं (→°तारं). –b) दे1 °नाभं श्रुत-, द1 °नांभामित-, ग्र2 °नाभासित-, उ1 °नाभ स्थित-, (→नाभाश्रित-). –d) दे1.4.8 न1 ते1 द1 ग्र2 म1 उ1 मुवें. मुब. कृताञ्जलिः दे5.9 मुए. कृत्वाञ्जलिं (→बद्ध्वाञ्जलिं); दे4 ते स्व- (→स्वेषु); दे1 बिंबेषु (→शिरःसु); ब3 दे4.6 स्वभूयः, दे5 संभूयः (→-सु भूयः).

२१. –a) द1 स देव, ग्र2 उ1 विचार्य (→विलोक्य). –b) मुवें. मुए. मुब. °शरीरं (→°शरीरे); दे4 निहितः, द1 निहतं (→निहितम्). –c) द1 स संस्तुवन्, ग्र2 म1 तमस्तुवन् (→समस्तुवन्); म1 ब्रह्ममयो (→ब्रह्ममयैर्). –d) ब1 दे4.8.9 न1 ते1 द1 म1 उ1 मुवें. मुए. मुब. °हित-, दे1 °हिम-, ग्र2 °भित- (→°यत-); दे5 °पूर्णोत्तर- (→°पूर्णायित-); दे3.8.9 मुवें. मुए. मुब. °मानसा वै, न1 °मानसस्ते, ते1 मानसास्तु, द1 ग्र2 म1 उ1 °लोचनास्ते (→°मानसास्ते).

❀ द1 ग्र2 म1 उ1 ऋषयः; न1 ते1 द1 ऋषय ऊचुः.

२२. –a) °रूपं (→°मीशं). –b) का1 देवम् (→रुद्रम्); द1 ग्र2 म1 उ1 °देवं (→°योगम्). –c) ब3 दे1 न1 द1 ग्र2

नमाम सर्वे हृदि सन्निविष्टं
　　प्रचेतसं ब्रह्ममयं पवित्रम् ॥२२
त्वां पश्यन्ति मुनयो ब्रह्मयोनिं
　　दान्ताः शान्ता विमलं रुक्मवर्णम् ।
ध्यात्वात्मस्थमचलं स्वे शरीरे
　　कविं परेभ्यः परमं तत्परं च ॥२३
त्वत्तः प्रसूता जगतः प्रसूतिः
　　सर्वात्मभूस्त्वं परमाणुभूतः ।
अणोरणीयान् महतो महीयां-
　　स्त्वामेव सर्वं प्रवदन्ति सन्तः ॥२४
हिरण्यगर्भो जगदन्तरात्मा
　　त्वत्तोऽधिजातः पुरुषः पुराणः ।
संजायमानो भवता विसृष्टो
　　यथाविधानं सकलं ससर्ज ॥२५
त्वत्तो वेदाः सकलाः संप्रसूता-
　　स्त्वय्येवान्ते संस्थितिं ते लभन्ते ।
पश्यामस्त्वां जगतो हेतुभूतं
　　नृत्यन्तं स्वे हृदये सन्निविष्टम् ॥२६
त्वयैवेदं भ्राम्यते ब्रह्मचक्रं
　　मायावी त्वं जगतामेकनाथः ।
नमामस्त्वां शरणं संप्रपन्ना
　　योगात्मानं चित्पतिं दिव्यनृत्यम् ॥२७
पश्यामस्त्वां परमाकाशमध्ये
　　नृत्यन्तं ते महिमानं स्मरामः ।

वें.२.५.२७

नमामि (→नमाम); का$_1$ सर्व-, दे$_1$ शर्वं (?) (→सर्वे). –d) दे$_{3.6}$ ते$_1$ °परं (→°मयं).

२३. –a) दे$_1$ त्वां नमस्यन्ति, दे$_{8.9}$ उ$_1$ मुवें. मुए. मुब. पश्यन्ति त्वां (→त्वां पश्यन्ति); दे$_3$ मुनयो विश्वयोनिं, दे$_6$ द$_1$ मुनयोऽतिदान्ताः (→मुनयो ब्रह्मयोनिं). –b) ब$_1$ दान्तः शान्ताः, दे$_4$ दान्तं शान्तं, द$_1$ शान्तात्मना, ग्र$_2$ श्रान्ता शान्त-, उ$_1$ शान्तंशान्ताः (→दान्ताः शान्ता); द$_1$ ग्र$_2$ म$_1$ उ$_1$ हृदये रुक्म (उ$_1$ ग्र$_2$ °प्य) वर्णं (→विमलं रुक्मवर्णं). –c) दे$_1$ ध्वात्वात्मसंस्थप्रचलं, दे$_8$ ध्यात्वात्मस्वमचलं, द$_1$ ध्यात्वा हृदिस्थं, मुवें. मुए. ध्यात्वात्मस्वप्रचलं (→ध्यात्वात्मस्थमचलं); ब$_2$ ते$_1$ स्व, दे$_6$ मे, द$_1$ ग्र$_2$ म$_1$ उ$_1$ ते (→स्वे). –d) दे$_5$ शरण्यं, ग्र$_2$ वरेभ्यः (→परेभ्यः); का$_1$ परमं परं *, ब$_1$ परमं परेभ्यः, ब$_2$ दे$_{5.8.9}$ उ$_1$ मुवें. मुए. मुब. परमं परं च, दे$_2$ परतः परं च (→परमं तत्परं च).

अतः परं दे$_2$ पुस्तके अधिकम्—

*त्वत्तः प्रसूता जगतः शान्तविमलं रुक्मवर्णम् ।
ध्यात्वात्माथभवतं स्वे शरीरेभ्यः परमं तत्परं च ।
(= २४a, २३bcd)

२४. –a) का$_1$ त्वं च (→त्वत्तः); का$_1$ जगतां (→जगतः); दे$_6$ प्रसूप्ता, द$_1$ म$_1$ प्रसूता, ग्र$_2$ प्रदाना (→प्रसूतिः). –b) ब$_3$ सर्वात्मसुस्थं, दे$_1$ सर्वार्थभूस्त्वं, दे$_2$ सर्वात्मसूस्त्वं, दे$_{3.5.8}$ न$_1$ मुवें. मुए. मुब. सर्वानुभूस्त्वं, दे$_9$ सर्वात्मभूस्त्वं, +सर्वानुभूस्त्वं, दे$_6$ सर्वात्मसूक्ष्मं, द$_1$ सर्वात्मभूतं, उ$_1$ सर्वात्मकस्त्वं (→सर्वात्मभूस्त्वं); ब$_{1.2}$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ परमात्मभूतः (द$_1$ °तं), दे$_5$ परमानुभूतिः (→परमाणुभूतः).

२५. –b) ब$_{1.2}$ दे$_{1.4.5}$ म$_1$ त्वत्तोऽभि°, उ$_1$ न$_1$ द$_1$ ग्र$_2$ त्वत्तोहि, दे$_8$ मुवें. मुए. मुब. त्वत्तोऽस्ति, दे$_9$ त्वत्तोहि, + त्वत्तोऽस्ति (→त्वत्तोऽधि-); ग्र$_2$ पुराणं (→पुराणः). –c) का$_1$ दे$_{3.4.5}$ न$_1$ द$_1$ उ$_1$ स (→सं-); ब$_3$ दे$_6$ भवतां, द$_1$ ग्र$_2$ म$_1$ उ$_1$ भगवान् (→भवता); का$_1$ विश्वपोष्टा, ब$_1$ ते$_1$ [अ] ति सृष्टो, दे$_{1.8.9}$ मुवें. मुए. मुब. निसृष्टो, दे$_3$ [आ] दिसृष्टो (→विसृष्टो). –d) दे$_1$ यथाभिधानं (→यथा विधानं). दे$_{1.8}$ मुवें. मुए. मुब. स सद्यः, दे$_1$ ससर्जं, + स सद्यः (→ससर्ज).

२६. –a) द$_1$ उ$_1$ °भूताः (→°सूताः). –b) का$_1$ वै (→ते); दे$_4$ लभते परं पदं (→संस्थितिं ते लभन्ते). –c) दे$_4$ द$_1$ पश्यामि (→पश्यामस्); उ$_1$ नृत्यन्ते (→नृत्यन्तं). –d) उ$_1$ हृदि चित्स्वरूपं (→हृदये सन्निविष्टं).

२७. –a) दे$_4$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ ब्रह्मै° (→त्वयै°); ते$_1$ श्राम्यते (→भ्राम्यते); ब$_2$ विश्व°, दे$_5$ वेद° (→ब्रह्म°); ब$_3$ दे$_4$ चक्र- (→चक्रं). –b) दे$_4$ मायाचक्रं, दे$_5$ द$_1$ मायावी त्वां, दे$_6$ मायावी तां, ग्र$_2$ मायावी तं (→मायावी त्वं); ब$_1$ म$_1$ °नाथ, द$_1$ एव, ते$_1$ मुब. °नाथं (→°नाथः). –c) ग्र$_2$ नमामि (→नमामः). –d) का$_1$ योगात्मनां, दे$_4$ द$_1$ ग्र$_2$ संवित्पतिं, ते$_1$ एकात्मानं, म$_1$ संविपङ्क्तिः, उ$_1$ सर्वपतिं (→योगात्मानं); दे$_1$ चिन्‍यं तं दिव्यवृत्तम्, दे$_4$ दिव्यवृत्ते प्रवृत्तं, दे$_8$ मुवें. मुए. नृत्यन्तं दिव्यनृत्यम्, न$_1$ नृत्यन्तं दिव्यरूपम्, द$_1$ ग्र$_2$ म$_1$ दिव्यतत्त्वे (द$_1$ °त्व) प्रवृत्तिं (द$_1$ °त्तं) (→चित्पतिं दिव्य नृत्यम्).

२८. –a) ब$_3$ दे$_4$ पश्यामि (→पश्यामस्). –b) दे$_{3.5}$ ग्र$_2$ नृत्यंते (→नृत्यन्तं). –d) का$_1$*नुभूय, ब$_1$ अन्वभूयात्म-

वें.२.५.२७

सर्वात्मानं बहुधा सन्निविष्टम्
ब्रह्मानन्दमनुभूयानुभूय ॥२८

ॐकारस्ते वाचको मुक्तिबीजं
त्वमक्षरं प्रकृतौ गूढरूपम् ।
तत्त्वां सत्यं प्रवदन्तीह सन्तः
स्वयंप्रभं भवतो यत्प्रकाशम् ॥२९

स्तुवन्ति त्वां सततं सर्ववेदा
नमन्ति त्वामृषयः क्षीणदोषाः ।
शान्तात्मानः सत्यसंधा वरिष्ठं
विशन्ति त्वां यतयो ब्रह्मनिष्ठाः ॥३०

एको वेदो बहुशाखो ह्यनन्तस्
त्वामेवैकं बोधयत्येकरूपम् ।
वेद्यं त्वां शरणं ये प्रपन्नास्
तेषां शान्तिः शाश्वती नेतरेषाम् ॥३१

भवानीशोऽनादिमांस्तेजोराशि-
र्ब्रह्माविश्वं परमेष्ठी वरिष्ठः ।
स्वात्मानन्दमनुभूयाधिशेते
स्वयं ज्योतिरचलो नित्यमुक्तः ॥३२

एको रुद्रस्त्वं करोषीह विश्वं
त्वं पालयस्यखिलं विश्वरूपः ।
त्वामेवान्ते निलयं विन्दतीदं
नमामस्त्वां शरणं संप्रपन्नाः ॥३३

---

भूयः, ब2 म1 अनुभूयामभूयः (म1° य), ब3 दे1 अन्वभूयान्वभूयः (दे1 °य), दे3 अनुभूयात्मभूयं, दे5 न1 द1 ग्र2 उ1 मुब. अनुभूयानुभूयः, दे9 ते1 मुवें. चानुभूयानुभूय (→अनुभूयानुभूय).

२९. –a) द1 ग्र2 त्वं (→ते). –b) का1 दे2.3.6 त्वाम (→त्वम); ब2 नमस्कारं (→त्वमक्षरं); दे1 °तत्त्वं, द1 °रूढः, उ1 दे4 ते1 °रूपः (→°रूपं); ब2 चाधिरूपं, ग्र2 गुढरूपः (→गूढरूपं). –c) ब1.3 दे2.3.5 तं त्वां, दे1** (→तत् त्वां); ब2 तत्त्वतस्त्वां, ते1 तं त्वां नित्यं, ग्र2 तत्त्वातीतं, म1 तत्वासक्तं (→तत् त्वां सत्यं); न1 संवदन्तीह (→प्रवदन्तीह). –d) का1 ब2 न1 °प्रभुं, दे1 °प्रभो (→°प्रभं); दे1.6 द1 भवता (→भवतो); का1 °व्यप्रकाश्यं, दे1 यः प्रकाशः, दे4.6 यत् स्वरूपं, दे8.9 मुवें. मुए. मुब. यत्प्रभावम्, द1 उ1 विश्वरूपं, ग्र2 पश्य रूपं (→यत्प्रकाशं).

३०. –a) दे4 ते1 द1 म1 सर्वतः, उ1 सर्वदा (→सततं); ब3 दे1 उ1 सर्वदेवाः, दे6 ब्रह्मवेदा (→सर्ववेदा[ः]). –b) ते1 ऋषयः क्षीणपापा, द1 ग्र2 क्षीण (द1 °णि)तः सर्वदोषाः, म1 सर्वतः सर्ववेदाः (→ऋषयः क्षीणदोषाः). –c) दे2 म1 शान्तात्मानं, ग्र2 शान्तानन्तं (→शान्तात्मानः); दे5 सत्यसन्ध्या, दे8.9 मुवें. मुए. मुब. सत्यसन्धं, म1 सन्निधानं (→सत्यसंधा).

३१. दे8.9 मुवें. मुए. मुब. पुस्तकेऽयं श्लोकः ३२ श्लोकानन्तरमागतः. –a) उ1 देवो (→वेदो); ब1-3 दे2.6 न1 बहुशाखा, ग्र2 म1 उ1 ब्रह्मशाखा; दे4 वृद्धशाखो (→बहुशाखो). –c) दे5 उ1 ये शरणं (→शरणं ये); दे2.5 संप्रपन्नाः (→प्रपन्नाः).

३२. –a) दे4 भवान्मयो, दे8 मुवें. मुए. भु(दे8 °भ)वो नाशो, ते1 भवानेको (→भवानीशो); दे4.5 द1 ग्र2 म1 तेजराशिर्, दे8.9 मुवें. मुए. मुब. विश्वरूपः, ते1 चाम्बुराशिर्, उ1 वेदराशिः (→तेजोराशिर्). –b) ब2 ब्रह्म (→ब्रह्मा-); ब1 दे3-5.8.9 ते1 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. विष्णुः, दे1 विश्वः (→विश्वं); दे5 ग्र2 म1 वशिष्ठः (→वरिष्ठः). –c) का1 दे2-4 ते1 आत्मा,° दे6 द1 म1 त्वात्मा° (→स्वात्मा°); का1 ब2.3 दे2 ते1 चानुभूया-, दे1 अन्वभूया-, मुवें. मुए. मुब. अनुभूय (→अनुभूया-); का1 ब2.3 दे2 [अ]नुशेते, ब1 दे2 आविशेते, दे8.9 म1 मुवें. मुए. मुब. [आ]विशन्ते (→[अ]धिशेते); उ1 स्वात्मानन्दानुभूयत्वमास्ते, द1 त्वात्मारुणं नमनुन्यंभूयाविशन्ते, म1 त्वात्मानमनुभूयाविशन्ते; दे6 त्वात्मानं वाचामनुभूयाधिशेते. –d) म1 उ1 अमलो (→अचलो); मुवें. मुए. मुब. अचला नित्यमुक्ताः (→अचलो नित्यमुक्तः).

३३. –a) ग्र2 सं- (→त्वं). –b) ब3 त्वां (→त्वं); ब3 पालयत्य°, दे6 द1 पालयस्व° (द1 °स्त्व°) (→पालयस्य°); का1 दे1.4.5.8 मुवें. मुए. °रूपम् (→°रूपः). –c) ब1 त्वामेवान्तं, न1 त्वामेकं ते, द1 त्वय्येवां ते (→त्वामेवान्ते); का1 ब2 ते1 द1 ग्र2 म1 उ1 मुब. विलयं, दे2 च लयं (→निलयं); ब2 विदन्तीदं, दे1 विंदतीह, ग्र2 विदत्ते *, म1 सर्ववेत्ति (→विन्दतीदं). –d) न1 ग्र2 नमामि (→नमामस्); ब3 त्वां (→सं-).

अतः परं दे3.8.9 मुवें. मुए. मुब. अधिकम्—
*एको वेदो बहुशाखो ह्यनन्तःस्त्वामेवैकं बोधयत्येकरूपम् ।
वन्द्यं त्वां येशरणं संप्रपन्ना मायामेतां ते तरन्तीह विप्राः । (=३१)

त्वामेकमाहुः कविमेकरुद्रं
प्राणं बृहन्तं हरिमग्निमीशम् ।
इन्द्रं मृत्युमनिलं चेकितानं
धातारमादित्यमनेकरूपम् ॥३४
त्वमक्षरं परमं वेदितव्यं
त्वमस्य विश्वस्य परं निधानम् ।
त्वमव्ययः शाश्वतधर्मगोप्ता
सनातनस्त्वं पुरुषोत्तमोऽसि ॥३५
त्वमेव विष्णुश्चतुराननस्त्वं
त्वमेव रुद्रो भगवानधीशः ।
त्वं विश्वनाभिः प्रकृतिः प्रतिष्ठा
सर्वेश्वरस्त्वं परमेश्वरोऽसि ॥३६
त्वामेकमाहुः पुरुषं पुराण-
मादित्यवर्णं तमसः परस्तात् ।
चिन्मात्रमव्यक्तमचिन्त्यरूपं
खं ब्रह्म शून्यं प्रकृतिं निर्गुणं च ॥३७
यदन्तरा सर्वमिदं विभाति
यदव्ययं निर्मलमेकरूपम् ।
किमप्यचिन्त्यं तव रूपमेतत्
तदन्तरा यत्प्रतिभाति तत्त्वम् ॥३८
योगेश्वरं रुद्रमनन्तशक्तिं
परायणं ब्रह्मतनुं पवित्रम् ।
नमाम सर्वे शरणार्थिनस्त्वां
प्रसीद भूताधिपते महेश ॥३९
त्वत्पादपद्मस्मरणादशेष-
संसारबीजं विलयं प्रयाति ।
मनो नियम्य प्रणिधाय कायं
प्रसादयामो वयमेकमीशम् ॥४०
नमो भवायास्तु भवोद्भवाय
कालाय सर्वाय हराय तुभ्यं । वें.२.५.३६

३४. –a) का1 परमं चारुचन्द्रं, ब1 कवयश्च रुद्रं, ब2.3 दे2.3.6 परमं च रुद्रं, दे1 कवयोऽथ रुद्रं (→कविमेकरुद्रं). –b) ब1 प्राणं विभृन्तं, दे6 प्राणं बहन्तं, दे8.9 मुवें. मुए. ब्रह्म (मुवें °ह्मं) गृणन्तं (→प्राणं बृहन्तं); दे1.4 ते1 ग्र2 हर° (→हरि°); का1 ब1-3 दे2.3 हरिमिन्द्रमीशं, न1 हविमिन्दुमीशं, द1 परिमग्रमीशं (→हरिमग्निमीशं). –c) ब1.3 दे2.3.6 °मनलं, ग्र2 म1 उ1 °मखिलं (→°मनिलं); द1 चे शितारं, ग्र2 चेतितारं (→चेकितानं); का1 इन्द्रभृशमनलं चेतितानं, दे4 इन्द्रं मन्युर्मलिनं चेकितानं, दे8.9 मुवें. मुए. रुद्रं नित्यमनिलं चेकितानं. –d) ग्र2 दातारं (→धातारं); ते1 पारावाराद्यादिमं त्वेकरूपम्.

३५. –c) द1 शाश्वतमस्य (→शाश्वतधर्म-). –d) दे9 पुरुषोमतो मे (→पुरुषोत्तमोऽसि).

३६. –a) दे6 पुरातनं च, न1 चतुराननं च (→चतुराननस्त्वं). –b) का भगवान् ईशः, ब1-3 दे2-6.8.9 द1 ग्र2 म1 मुवें. मुए. मुब. °नपीशः (→°नधीशः). –c) का1 विष्णुनाभिः, दे2.3-6.8.9 विश्वनाभः, मुवें. मुए. मुब. विश्वनाथः (→विश्वनाभिः); द1 प्रकृतिं (→प्रकृतिः).

३७. –a) का1 त्वं (→त्वां); ते1 ईशं (→आहुः); दे1 परमं, न1 ग्र2 पुरुषः (→पुरुषं). –b) उ1 तपसः (→तमसः). –c) दे1 तन्मात्र° (→चिन्मात्र°); दे1.8.9 ते1 ग्र2 उ1 मुवें. मुए. अनन्त° (→अचिन्त्य°); दे1 °तत्त्वं, दे2 °रूपस् (→°रूपं). –d) ब3तद्, ब3 दे1-3.6 द1 ग्र2 म1उ1 त्वं, दे4 यं (→खं); ब1 प्रकृतिर्गुणाञ्च, दे3.8 द1 ग्र2 उ1 मुवें. मुए. प्रकृतिर्गुणा (दे3 द1 ग्र2 °ण)श्च, दे1.5 म1 प्रकृतेर्गुणैश्च, दे4 प्रकृतिं पुराणं, दे9 न1 ते1 प्रकृतिं गुणं (दे9 °णां) च (→प्रकृतिं निर्गुणं च).

३८. –c) दे2 भव° (→तव°); द1 एक°, उ1 ईशं (→एतत्). –d) का1 न, दे2*, दे6 या, न1 सं- (→यत्); दे1 तदन्तरा सर्वमिदं विभाति.

३९. –a) ते1 म1 योगी° (→योगे°); का1 ब2.3 दे2.6 रूप°, दे3 रूप°, + भद्र°, दे9 रुद्र°, + भद्र° (→रुद्र°). –b) दे5 नारायणं, ते1 पारायणं (→परायणं); ब2 दे3.6 °तत्वं (→°तनुं); दे1.4.5.8.9 ते1 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. पुराणं (→पवित्रम्). –c) दे1.4 न1 नमामि (→नमाम). –c) ब1 शरणावसन्तः, दे1 शरणागतार्थिन् (→शरणार्थिनस्त्वां). –d) द1 ग्र2 म1 भूतेशपते (→भूताधिपते); दे6 महेश्वरः (→महेश).

४०. –a) ब1-3 दे2.5.6 अशेषं (→अशेष-). –b) ब3 दे5 विमलं, मुवें. मुए. मुब. निलयं (→विलयं). –c) दे1 कार्यं (→कायं). –d) न1 प्रिय° (→वय°).

४१. –a) दे4.5-8 ते1 द1 ग्र2 म1 उ1 मुवें. मुए. भवायाथ, दे9 भवायाथ, + भवायास्तु (→भवायास्तु); का1 नमोद्भवाय, दे2 नमोद्भवाय, + भवोद्भवाय, दे4 भवोभवाय (→भवोद्भवाय). –b) ब2 भवाय तुभ्यं, न1 भवोद्भवाय, द1 ग्र2

वें.२.५.४०

नमोऽस्तु रुद्राय कपर्दिने ते
नमोऽग्नये देव नमः शिवाय ।।४१

ततः स भगवान् देवः कपर्दी वृषवाहनः ।
संहृत्य परमं रूपं प्रकृतिस्थोऽभवद् भवः ।।४२

ते भवं भूतभव्येशं पूर्ववत् समवस्थितम् ।
दृष्ट्वा नारायणं देवं विस्मिता वाक्यमब्रुवन् ।।४३

भगवन् भूतभव्येश गोवृषाङ्कितशासन ।
दृष्ट्वा ते परमं रूपं निर्वृताः स्म सनातन ।।४४

भवत्प्रसादादमले परस्मिन् परमेश्वरे ।
अस्माकं जायते भक्तिस्त्वय्येवाव्यभिचारिणी ।।४५

इदानीं श्रोतुमिच्छामो माहात्म्यं तव शंकर ।
भूयोऽपि तव यन्नित्यं याथात्म्यं परमेष्ठिनः ।।४६

स तेषां वाक्यमाकर्ण्य योगिनां योगसिद्धिदः ।
प्राह गम्भीरया वाचा समालोक्य च माधवम् ।।४७

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायामुपरिविभागे (ईश्वरगीतासु) पञ्चमोऽध्यायः ।।५।।

---

म$_1$ उ$_1$ नमोऽस्तु तुभ्यं (→हराय तुभ्यं). –d) ते$_1$ महादेव, द$_1$ ग्र$_2$ म$_1$ उ$_1$ नमो देव (→नमोऽग्नये).

अतः परम् ग्र$_2$ पुस्तके 'सूत' इत्यधिकम्; म$_1$ पुस्तके व्यास' इत्यधिकम्

४२. –a) द$_1$ ते$_1$ ग्र$_2$ म$_1$ उ$_1$ ईशः, दे$_{4.5.8.9}$ मुवें. मुए. मुब. प्रीतः (→देवः). –d) का$_1$ ब$_3$ दे$_2$ न$_1$ भवोद्भवः, दे$_1$ [अ]भवद्धरः, दे$_{3.6}$ भवोऽभवत्, द$_1$ ग्र$_2$ म$_1$ उ$_1$ महेश्वरः (→[अ]भवद्भवः).

४३. का$_1$ ते$_1$. ४२b-४३a ⊙ (द्र. सं.). –b) उ$_1$ समुप° (→समव°). –d) दे$_8$ न$_1$ ग्र$_2$ मुवें. मुए. मुब. विस्मितं (→विस्मिता).

४४. का$_1$ ते$_1$. a ⊙ (द्र. ४२ पा. वि.). –a) ग्र$_2$ भगवान् (→भगवन्). –b) का$_1$ दे$_3$ °शासनं (→°शासन). –d) का$_1$ दे$_{3.5.8.9}$ ग्र$_2$ मुवें. मुए. मुब. निवृत्ताः (→निर्वृताः); ब$_1$ दे$_{1.3.6}$ सनातनं, दे$_{4.6}$ ते$_1$ द$_1$ ग्र$_2$ उ$_1$ परमेश्वरः (ते$_1$ °राः, म$_1$° र) (→सनातन).

४५. –a) प्रसादादचले, दे$_2$ प्रसादममले, म$_1$ प्रभावादमले (→प्रसादादमले). –b) का$_1$ परमेऽस्मिन्, ब$_3$ दे$_{2.3.6}$ परेऽस्मिन् (→परस्मिन्); दे$_1$ म$_1$ परमेश्वर (→परमेश्वरे). ... लभ्यते (→जायते).

... दे$_3$ भव यत्, दे$_1$ न$_1$ चैव यं, दे$_{4.8.9}$ द$_1$ ... ते वयं, ग्र$_2$ मुवें. मुए. मुब. चैवं यत् म$_1$ वै वयं (→तव यत्); का$_1$ चात्यन्तं (→यन्नित्यं). –d) का$_1$ दे$_2$ ते$_1$ ग्र$_2$ उ$_1$ याथार्थ्यं, ब$_2$ न$_1$ माहात्म्यं, दे$_1$ द$_1$ यथार्थं, म$_1$ ध्यातव्यं (→याथात्म्यं).

४७. –b) ग्र$_2$ योगि- (→योग-); म$_1$ °सिद्ध° (→°सिद्धि°). –d) ते$_1$ मानवं (→माधवं).

**पुष्पिका**—[ब$_{1-3}$ दे$_{1.6}$ द$_1$ पुस्तकेषु अध्यायसमाप्तिर्नास्ति]

**पुराणनाम**—का$_1$ इति श्रीकूर्मपुराणे, दे$_2$ इतिश्री, दे$_3$ इति कूर्मशिवगीतासु, दे$_4$ न$_1$ इति श्रीकूर्मपुराणे ईश्वरगीतासूपनिषत्सु, दे$_{5.8.9}$ मुए. इति श्रीकूर्मपुराणे ईश्वरगीतासु, ते$_1$ इति कूर्मपुराणे उपरिभागे ईश्वरगीतासु उपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे, ग्र$_2$ म$_1$ उ$_1$ इति श्रीकूर्मपुराणे उत्तरभागे ईश्वरगीतासूपनिषत्सु, मुवें. इति श्रीकूर्मपुराणे ईश्वरगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे, मुब. इति श्रीकौर्मे महापुराणे उपरिभागे श्रीमद्भगवदीश्वरगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे. **अध्यायनाम**—का$_1$ दे$_{2-5.8.9}$ न$_1$ ग्र$_2$ म$_1$ उ$_1$ मुए. ⊙; ते$_1$ ईश्वरनारायणमहर्षिसंवादे विश्वरूपसन्दर्शनयोगो नाम, मुवें. ऋषिव्याससंवादे, मुब. देवदेवनृत्यदर्शनभक्तियोगो नाम. **अध्यायसंख्या**—दे$_{2.3.}$⊙; का$_1$ चतुर्थोध्यायः ।।४।।, दे$_4$ मुवें. मुब. पञ्चमोऽध्यायः ।।५।।, दे$_{5.8.9}$ ते$_1$ ग्र$_2$ म$_1$ मुए. पंचमोध्यायः, न$_1$ चतुःपञ्चाशोध्यायः, उ$_1$ पंचमोध्यायः ।।०।। श्री ।।०।।

# ६

ईश्वर उवाच ।❀

श्रृणुध्वमृषयः सर्वे यथावत् परमेष्ठिनः ।
वक्ष्यामीशस्य माहात्म्यं यत्तद्वेदविदो विदुः ॥१
सर्वलोकैकनिर्माता सर्वलोकैकरक्षिता ।
सर्वलोकैकसंहर्त्ता सर्वात्माऽहं सनातनः ॥२
सर्वेषामेव वस्तूनामन्तर्यामी पिता ह्यहम् ।
मध्ये चान्तः स्थितं सर्वं नाहं सर्वत्र संस्थितः ॥३
भवद्भिरद्भुतं दृष्टं यत्स्वरूपं तु मामकम् ।
ममैषा ह्युपमा विप्रा मायया दर्शिता मया ॥४
सर्वेषामेव भावानामन्तरा समवस्थितः ।
प्रेरयामि जगत् कृत्स्नं क्रियाशक्तिरियं मम ॥५
ययेदं चेष्टते विश्वं तत्स्वभावानुवर्त्ति च ।
सोऽहं कालो जगत् कृत्स्नं प्रेरयामि कलात्मकम् ॥६
एकांशेन जगत् कृत्स्नं करोमि मुनिपुंगवाः ।
संहराम्येकरूपेण द्विधाऽवस्था ममैव तु ॥७
आदिमध्यान्तनिर्मुक्तो मायातत्त्वप्रवर्त्तकः ।
क्षोभयामि च सर्गादौ प्रधानपुरुषावुभौ ॥८
ताभ्यां संजायते विश्वं संयुक्ताभ्यां परस्परम् ।
महदादिक्रमेणैव मम तेजो विजृम्भते ॥९

वें. २.६ ९

६

❀ द$_1$.⊙; दे$_{8.9}$ ईश्वर उ.; ग्र$_2$ म$_1$ उ$_1$ ईश्वरः.

१. –b) न$_1$ यथान्यं (→यथावत्); का$_1$ ब$_{1-3}$ दे$_{2.3.6}$ परमात्मनः (→परमेष्ठिनः). –c) ग्र$_2$ ईशस्तु (→ईशस्य); उ$_1$ महात्म्यं (→माहात्म्यं).

अतः परम् न$_1$. b, c मध्ये अधिकम्—

* स तेषां वाक्यमाकर्ण्य योगिनां योगसिद्धिदः ।
प्राहगम्भीरया वाचा.' ( = २.५.४७abc)

२. –b) का$_1$ उ$_1$ °रक्षितां (उ$_1$ °ताः) (→°रक्षिता). –d) दे$_5$ सनातनं, ग्र$_2$ म$_1$ सदाशिवः (→सनातनः).

३. ब$_1$. ३c-१३d ⊙. –a) ते$_1$ अपि (→एव); दे$_{1.5}$ भूतानां, ते$_1$ भावानां (→वस्तूनां). –b) दे$_1$ यतो ह्यहं, दे$_5$ ते$_1$ पितामहं (ते$_1$ °हः), दे$_{8.9}$ मुवें. मुए. मुब. महेश्वरः (→पिता ह्यहम्); द$_1$ अंतर्यामि तथा ह्यहं, ग्र$_2$ अन्तर्याम्यधिताम्यहम्. –c) का$_1$ ब$_{2.3}$ दे$_{4.6}$ न$_1$ ते$_1$ द$_1$ उ$_1$ मध्येवान्तः, दे$_1$ ग्र$_2$ म$_1$ मध्येवाव-(→मध्ये चान्तः); दे$_2$ स्थिता, दे$_6$ स्थितः, दे$_9$ स्थिताः,+स्थितं (→स्थितं); दे$_5$ विश्वं (→सर्वं). –d) दे$_4$ म$_1$ अहं, ते$_1$ सोहं (→नाहं); द$_1$ मनोहं सर्वसंस्थितः.

४. ब$_1$.⊙; ग्र$_2$.४a-५b ⊙ (द्र. सं); म$_1$. ४c-५b ⊙. –b) दे$_{3.8.9}$ द$_1$ म$_1$ उ$_1$ मुवें. मुए. मुब. च (→तु). –c) दे$_5$ मामैषा (→ममैषा); दे$_{1.5}$ ह्यपरा (→ह्युपमा); ते$_1$ मयैषाप्युपमा विप्रा. –d) का$_1$ माया या, दे$_{1.8.9}$ म$_1$ मुवें. मुए. मुब. माया वै (→मायया).

५. ब$_1$. ⊙; ग्र$_2$ म$_1$. ab ⊙; दे$_8$.५d-६c ⊙ (द्र. सं.). –b) दे$_{4.8.9}$ मुवें. मुए. मुब. अन्तरं (→अन्तरा); दे$_1$ समवस्थिता (→समवस्थितः). –c) दे$_5$ सर्वं (→कृत्स्नं). –d) दे$_9$ चेतना चेतनात्मकं, + प्रेरयामि कला मम.

६. ब$_1$. दे$_9$. ⊙; दे$_8$. abc ⊙ (द्र. ५ पा. वि.); ब$_3$. d ⊙. –a) का$_1$ ययैदं, ब$_{2.3}$ दे$_{1.4-6}$ मुवें. मुए. मुब. मयेदं, न$_1$ येनेदं, ते$_1$ मयैव (→ययेदं); दे$_1$ वेष्टितं, दे$_6$ वेष्टते, ग्र$_2$ चेष्टिते (→चेष्टते); म$_1$ यतकालवशमेवेदं. –b) ब$_2$ दे$_1$ ते$_1$ मत्स्व°, दे$_5$ तत् तद्°, न$_1$ यत्स्व°, मुवें. मुए. मुब. तद्भै° (→तत्स्व°); ब$_3$ -तः, मुवें. मुए. मुब. मे (→च). –d) का$_1$ किलात्मिकं, दे$_2$ किलात्मकं, दे$_{4.5}$ न$_1$ ते$_1$ द$_1$ ग्र$_2$ उ$_1$ कलात्मकः (→कलात्मकम्).

अतः परं म$_1$ पुस्तके अधिकम्—

* सर्वेषामेवभूतानामन्तरा समवस्थितः ।
प्रेरयामि जगत् कृत्स्नं क्रिया शक्तिरियं मम । ( = ५)

७. ब$_1$. ⊙; ब$_3$. a ⊙ (द्र. ६ पा. वि.). –c) का$_1$ संसरामि, ग्र$_2$ संहरम् (→संहरामि); दे$_6$ °रूपो हि (→°रूपेण). –d) दे$_{3.6.8}$ मुवें. मुए. स्थिता, दे$_9$ स्थितावस्था, + द्विधावस्था, न$_1$ द्विधोवस्थो (→द्विधाऽवस्था); ब$_3$ ग्र$_2$ ममेव (→ममैव).

८. ब$_1$. ⊙. –b) ग्र$_2$ माया तन्त्रेन्त्रवर्त्तकाः. –c) ब$_2$ सर्वादौ (→सर्गादौ). –d) दे$_5$ -पुरुषा उभौ, ते$_1$ -पुरुषात्मकौ (→-पुरुषावुभौ).

९. ब$_1$ दे$_1$. ⊙. –a) म$_1$ तस्यां (→ताभ्यां); का$_1$ ब$_{2.3}$ दे$_{2.3.6}$ न$_1$ सर्वं (→विश्वं). –c) ब$_2$ सहसा वि-, ब$_3$ सहसादि- (→महदादि-); उ$_1$ -क्रमे चैव (→-क्रमेणैव). –d)

वें.२.६.१० यो हि सर्वजगत्साक्षी कालचक्रप्रवर्त्तकः ।
हिरण्यगर्भो मार्त्तण्डः सोऽपि मद्देहसंभवः ॥१०
तस्मै दिव्यं स्वमैश्वर्यं ज्ञानयोगं सनातनम् ।
दत्तवानात्मजान् वेदान् कल्पादौ चतुरो द्विजाः ॥११
स मन्नियोगतो देवो ब्रह्मा मद्भावभावितः ।
दिव्यं तन्मामकैश्वर्यं सर्वदा वहति स्वयम् ॥१२
स सर्वलोकनिर्माता मन्नियोगेन सर्ववित् ।
भूत्वा चतुर्मुखः सर्गं सृजत्येवात्मसंभवः ॥१३
योऽपि नारायणोऽनन्तो लोकानां प्रभवाव्ययः ।
ममैव परमा मूर्तिः करोति परिपालनम् ॥१४
योऽन्तकः सर्वभूतानां रुद्रः कालात्मकः प्रभुः ।
मदाज्ञयाऽसौ सततं संहरिष्यति मे तनुः ॥१५
हव्यं वहति देवानां कव्यं कव्याशिनामपि ।
पाकं च कुरुते वह्निः सोऽपि मच्छक्तिचोदितः ॥१६
भुक्तमाहारजातं च पचते तदहर्निशम् ।
वैश्वानरोऽग्निर्भगवानीश्वरस्य नियोगतः ॥१७
योऽपि सर्वाम्भसां योनिर्वरुणो देवपुंगवः ।
सोऽपि संजीवयेत् कृत्स्नमीशस्यैव नियोगतः ॥१८
योऽन्तस्तिष्ठति भूतानां बहिर्देवः प्रभञ्जनः ।
मदाज्ञयाऽसौ भूतानां शरीराणि बिभर्ति हि ॥१९
योऽपि संजीवनो नृणां देवानाममृताकरः ।
सोमः स मन्नियोगेन चोदितः किल वर्तते ॥२०

---

द1 उ1 महदादि-(→मम तेजो); का1 ब2.3 दे2.3-6 न1 ते1 द1 म1 उ1 विजृम्भितम्, दे9 ग्र2 विजृंभतं (दे9 + °ते) (→विजृम्भते).

१०. ब1. ⊙; दे1. ab ⊙. –a) ब3 सो हि, ते1 द1 ग्र2 उ1 योगी (→यो हि); ग्र2 सत्वं (→सर्व-); दे5 सर्वगतः (→सर्वजगत्-). –c) न1 मार्कंडः, ते1 द1 म1 मार्त्ताण्डः (→मार्त्तण्डः). –d) ग्र2 मत्तेज- (→मद्देह-).

११. ब1. ⊙; दे4. cd ⊙. –a) दे1 तस्मै समस्तमैश्वर्यं, दे5 तस्मै नित्यं ममैश्वर्यं, ते1 यत्तस्मै दिव्यमैश्वर्यं, द1 तस्मै दिव्यत्वमैश्वर्यं. –b) दे4 ग्र2 उ1 ज्ञानं (→ज्ञान-). –c) ब3 आत्मजानेव, दे8.9 मुवें. मुए. मुब. आत्मवान् (दे9 + °जान्) वेदान् (→आत्मजान् वेदान्). –d) ब2 कर्मादौ, दे1 कलादौ (→कल्पादौ); ते1 भगवान् (→चतुरो).

१२. ब1 दे4. ⊙. –b) उ1 ** व (→मद्भाव-). –c) ब3 तमा°, दे6 भस्मा° (→तन्मा°). –d) का1 च गतिं, ब3 हरति, दे6 वहृति, दे8.9 मुवें. मुए. मुब. [अ]वगतः, ते1 गच्छति (→वहति); दे1 सर्वं वेदमिति स्वयम्, दे5 सर्वं वेदपतिस्वयम्.

१३. ब1. ⊙. –a) उ1 * (→स); दे5 ते1 सर्वलोकस्य (ते1 °कैक) निर्माता. –b) द1 ग्र2 तन्नियो° (→मन्नियो°). –c) ग्र2 भूता (→भूत्वा); ब3 स्वर्गं, दे1 ते1 उ1 सर्वं, दे4 सोहं (→सर्गं). –d) उ1 सृजत्ये*****.

१४. –a) का1 न1 ते1 यो हि, ब1 योगी, दे2.6 सोऽपि (→योऽपि) दे6 नारायणं (→नारायणो); ते1 °मत्तः (→°नन्तो). –b) ब2.3 न1 प्रभवाप्ययः, दे1 प्रभुरव्ययः, दे4.6.8.9 ते1 उ1 मुवें. मुए. मुब. प्रभवोऽव्ययः, द1 मंगलोव्ययः, ग्र2 प्र*योत्ययः, म1 प्रभयाव्ययः (→प्रभवाव्ययः). –c) ते1 ममैषा, ग्र2 मामेव (→ममैव) दे4.5.8.9 न1 द1 म1 उ1 मुवें. मुए. मुब. च परा (→परमा).

१५. –a) दे3.6 योनन्तः (→योऽन्तकः). –c) का1 यदा°, ब3 ममा° (→मदा°). –d) दे4 मनुः (→तनुः).

१६. –d) का1 तद्भक्ति°, ब2 दे1.2 मद्भक्ति° (→मच्छक्ति°); दे8.9 मुवें. मुए. मुब. °नोदितः (→°चोदितः).

१७. का1. ⊙. –a) ब1 भक्तम्, दे5 भक्तिम् (→भुक्तम्); ब1-3 दे2.3.5.6 ते1 द1 ग्र2 म1 यत्, दे1.4 न1 यः (→च). –b) ब1-3 दे1-3 पचत्ये, दे5 पच्यते, दे6 पतत्ये, न1 प्रवत्ये (→पचते); दे5 तरहर् (→तदहर्); दे4 ते1 पच (ते1 पच्य°) तेन्तरहर्निशम्, द1 म1 पचत्यंतरहर्निशम्, ग्र2 वान्छितान्तरहर्निशम्. –ab) उ1 स भुक्तमाहार जातं यत् पचते रहर्निशम्. –d) म1 ईश्वरो यन्नियोगतः.

१८. का1. ⊙; दे3.6. ⊙ (द्र. सं.). –a) दे5 सोऽपि, न1 यो हि, ग्र2 योभि-(→योऽपि). –c) ब1 संपूजयेत्, दे4 संक्षीयते (→संजीवयेत्). –d) दे1.5.8.9 न1 मुवें. मुए. मुब. ईश्वरस्य, दे4 ईश्वरस्यै (व), द1 ईशस्येव (→ईशस्यैव).

१९. का1. ab ⊙. –a) ग्र2 तिष्ठन्ति (→तिष्ठति); दे2 देवानां (→भूतानां). –b) ग्र2 प्रभुर् (→बहिर्); ब3 दे6 निरञ्जनः (→प्रभञ्जनः). –c) ग्र2 मदाज्ञया स भूतानां.

२०. –a) ब1.2 न1 यो हि, द1 सोऽपि (→योऽपि); दे4 संजीवनी (→संजीवनो); ग्र2 योऽपि सञ्जीवनेत्राणां. –b) दे4 अजरामरः, ते1 अमृतात्मकः, ग्र2 अमृतं करः (→अमृताकरः). –c) ब3 सो मद्वि°, दे4 च मन्नि°, ते1 सो मन्नि° ([illegible] मन्नि°).

य: स्वभासा जगत् कृत्स्नं प्रकाशयति सर्वदा ।
सूर्यो वृष्टिं वितनुते शास्त्रेणैव स्वयंभुवः ॥२१
योऽप्यशेषजगच्छास्ता शक्रः सर्वामरेश्वरः ।
यज्वनां फलदो देवो वर्त्ततेऽसौ मदाज्ञया ॥२२
य: प्रशास्ता ह्यसाधूनां वर्त्तते नियमादिह ।
यमो वैवस्वतो देवो देवदेवनियोगतः ॥२३
योऽपि सर्वधनाध्यक्षो धनानां संप्रदायकः ।
सोऽपीश्वरनियोगेन कुबेरो वर्त्तते सदा ॥२४
य: सर्वरक्षसां नाथस्तामसानां फलप्रदः ।
मन्नियोगादसौ देवो वर्त्तते निर्ऋतिः सदा ॥२५
वेतालगणभूतानां स्वामी भोगफलप्रदः ।
ईशानः किल भक्तानां सोऽपि तिष्ठन्ममाज्ञया ॥२६
यो वामदेवोऽङ्गिरसः शिष्यो रुद्रगणाग्रणीः ।
रक्षको योगिनां नित्यं वर्त्ततेऽसौ मदाज्ञया ॥२७
यश्च सर्वजगत्पूज्यो वर्त्तते विघ्नकारकः ।
विनायको धर्मनेता सोऽपि मद्वचनात् किल ॥२८
योऽपि ब्रह्मविदां श्रेष्ठो देवसेनापतिः प्रभुः ।
स्कन्दोऽसौ वर्त्तते नित्यं स्वयंभूर्विधिचोदितः ॥२९　वें.२.६.२६

---

–d) दे$_6$ योदितः, दे$_{8.9}$ ते$_1$ उ$_1$ मुवें. मुए. मुब. नोदितः, बोधितः (→चोदितः); ब$_2$ तथैव मम चोदितः.

२१. –a) का$_1$ ब$_3$ ग्र$_2$ यत्स्वभासा (ग्र$_2$ °वात्), ब$_2$ स्वतेजसा, दे$_{1.4}$ यस्य भासा, न$_1$ यश्च भाषा (→यः स्वभासा); ते$_1$ यस्य भासा सर्वमिदं. –b) दे$_{8.9}$ मुवें. मुए. मुब. प्रभासयति सर्वशः. –c) ते$_1$ द$_1$ ग्र$_2$ दृष्टिर् (→वृष्टि). –d) दे$_{3.8}$ मुवें. मुए. मुब. स्वास्त्रेणैव, म$_1$ शासनेन (→शास्त्रेणैव).

२२. –a) दे$_5$ योह्य° (→योऽप्य°). –b) दे$_3$ शक्रं, द$_1$ सर्वस् (→शक्रः); ब$_2$ शक्रः सर्वमहेश्वरः. –c) का$_1$ दे$_{4.5}$ न$_1$ यज्विनां, ब$_1$ दे$_6$ यज्वानां, ब$_2$ दे$_1$ यज्ञानां, द$_1$ उ$_1$ यतीनां (→यज्वनां); ग्र$_2$ भवतो (→फलदो). –d) म$_1$ यजते (→वर्त्तते); दे$_{8.9}$ मुवें. मुए. स ([अ]सौ); द$_1$ ग्र$_2$ उ$_1$ देवदेवनियोगतः.

२३. द$_1$ ग्र$_2$ म$_1$ उ$_1$ ⊙ (द्र. स.). –a) दे$_4$ हि (→ह्य-). –b) ब$_2$ नियमादिषु (→नियमादिह). –c) ब$_1$ यम (→यमो).

२४. –a) दे$_{3.5.6}$ सोऽपि, न$_1$ योहि (→योऽपि); ब$_1$ सर्वो (→सर्व-) –c) ब$_1$ योऽपी० (→सोऽपी०).

अतः परं म$_1$ पुस्तके अधिकम्—

*यः प्रशास्ति ह्यसाधूनां वर्त्तते नियमादिकृत् ।
यमो वैवस्वतो देवो देवदेवनियोगतः । (= २३)

२५. ब$_1$. ⊙; ब$_2$ दे$_8$. २५ c-२६ b ⊙ (द्र. स.). –a) म$_1$ -यक्षजां (→-रक्षसां); म$_1$ चाथस् (→नाथस्). –b) का$_1$ ब$_{2.3}$ दे$_{1.8.5.6.9}$ तापसानां (→तामसानां); दे$_6$ फलप्रदा (→फलप्रदः). –d) न$_1$ निर्वृतिः (→निर्ऋतिः)

अतः परं का$_1$ पुस्तके अधिकम्—

*भुक्तमाहारजातं यत्पचत्येतद्दिवानिशं ।
वैश्वानरोग्निर्भगवानीश्वरस्य नियोगतः ।
यो पि सर्वाम्भसां योनिर्वरुणो देवपुङ्गवः ।
सोपि संजीव तत्कृष्णमीशस्यैव नियोगतः ।
योन्तस्तिष्ठति भूतानां बहिर्देवः प्रभंजनः ।
(= १७a-१९b)

२६. ब$_1$. ⊙; ब$_2$ दे$_{8.9}$. ab ⊙. –a) दे$_{3.6}$ ते$_1$ सर्व- (→गण-); न$_1$ यश्च वेताल भूतानां. –b) दे$_4$ योसौ, ते$_1$ सर्व- (→स्वामी); का$_1$ -प्रभः, दे$_6$ -प्रदा (→-प्रदः). –c) दे$_{3.6}$ भोक्तानां, दे$_5$ द$_1$ उ$_1$ भूतानां (→भक्तानां). –d) का$_1$ म$_1$ सोप्य- (→सोऽपि); का$_1$ ब$_3$ दे$_{3-6.8.9}$ न$_1$ ते$_1$ द$_1$ मुवें. मुए. मुब. तिष्ठेन् (→तिष्ठन्); दे$_{1.4-6.8.9}$ ते$_1$ म$_1$ मुवें. मुए. मुब. मदाज्ञया (→ममाज्ञया).

bचरणानन्तरं दे$_2$ पुस्तके अधिकम्—

*वैश्वानरोग्निर्भगवानीश्वरस्य नियोगतः ।
योऽपि सर्वाम्भसां योनिर्वरुणो देवपुंगवः ॥
सोऽपि स जीवयेत् कृत्स्नमीशस्यैव नियोगतः ।
योन्नतिष्ठति भूतानां दहिर्द्देवः प्रभंजनः ॥
(= १७c-१९b)

ते$_1$ पुस्तके अधिकम्—

* मन्नियोगादसौ देवो भेतालः परिवर्तते. (= २५c)

२७. ब$_1$. ⊙; दे$_{1.4}$ द$_1$ ग्र$_2$ उ$_1$. ⊙ (द्र.स.). –a) का$_1$ म$_1$ गिरिशः (→[अ]ङ्गिरसः). –b) का$_1$ रुद्रो (→रुद्र-); का$_1$ न$_1$ °ग्रणी (→°ग्रणीः). –d) ब$_2$ वर्द्धते (→वर्त्तते); का$_1$ ममाज्ञया (→मदाज्ञया).

२८. ब$_1$. ⊙. –a) न$_1$ यो हि, ते$_1$ यस्स (→यश्च); दे$_1$ °स्वामी, दे$_4$ °पूर्वो (→°पूज्यो). –b) दे$_1$ पूज्यते (→वर्त्तते); दे$_{8.9}$ मुवें. मुए. मुब. विघ्ननायकः (→विघ्नकारकः). –c) दे$_{1.4.8.9}$ न$_1$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ मुवें. मुए. मुब. धर्मरतः, ते$_1$ धर्मनिष्ठः (→धर्मनेता)

अतः परं उ$_1$ पुस्तके अधिकम्—

* यः प्रशास्ता स्वसाधूनां वर्त्तते नियमादिह ।
यमो वैवस्वतो देवो देवदेवनियोगतः ॥ (= २३)

२९. ब$_1$. ⊙. –a) का$_1$ ब$_2$ सोऽपि, न$_1$ यो हि (→योऽपि). –b) उ$_1$ देवः (→देव-); का$_1$ देव° (→सेना°).

कू.२.६.३०

ये च प्रजानां पतयो मरीच्याद्या महर्षयः ।
सृजन्ति विविधं लोकं परस्यैव नियोगतः ॥३०
या च श्रीः सर्वभूतानां ददाति विपुलां श्रियम् ।
पत्नी नारायणस्यासौ वर्त्तते मदनुग्रहात् ॥३१
वाचं ददाति विपुलां या च देवी सरस्वती ।
सापीश्वरनियोगेन चोदिता संप्रवर्त्तते ॥३२
याऽशेषपुरुषान् घोरान्नरकात् तारयिष्यति ।
सावित्री संस्मृता देवी देवाज्ञाऽनुविधायिनी ॥३३
पार्वती परमा देवी ब्रह्मविद्याप्रदायिनी ।
याऽपि ध्याता विशेषेण सापि मद्वचनानुगा ॥३४

योऽनन्तमहिमानन्तः शेषोऽशेषामरप्रभुः ।
दधाति शिरसा लोकं सोऽपि देवनियोगतः ॥३५
योऽग्निः संवर्त्तको नित्यं वडवारूपसंस्थितः ।
पिबत्यखिलमम्भोधिमीश्वरस्य नियोगतः ॥३६
ये चतुर्दश लोकेऽस्मिन् मनवः प्रथितौजसः ।
पालयन्ति प्रजाः सर्वास्तेऽपि तस्य नियोगतः ॥३७
आदित्या वसवो रुद्रा मरुतश्च तथाऽश्विनौ ।
अन्याश्च देवताः सर्वा मच्छास्त्रेणैव धिष्ठिताः ॥३८
गन्धर्वा गरुडा ऋक्षाः सिद्धाः साध्याश्च चारणाः ।
यक्षरक्षःपिशाचाश्च स्थिताः शास्त्रे स्वयंभुवः ॥३९

---

–c) ते$_1$ स्कन्दोसौ रक्षसां हर्ता. –d) का$_1$ स्वायंभुर्, ब$_{2.3}$ उ$_1$ दे$_{4.6}$ स्वयम्भू (→स्वयंभूर्); दे$_1$ विधिचोदत:, दे$_{8.9}$ ते$_1$ मुवें. मुए. मुब. विधिनोदित: ग्र$_2$ उ$_1$ विनियोगन: (→विधिचोदित:); द$_1$ म$_1$ स्वयंभुवनियोगत:.

३०. ब$_1$. ⊙; ते$_1$. ⊙ (द. स.). –a) दे$_1$ येऽत्र (→ये च). –b) ब$_3$ दे$_{1.8.9}$ मरीचाद्या (→मरीच्याद्या). –c) ग्र$_2$ म$_1$ विश्वं (→लोकं). –d) न$_1$ परस्येव (→परस्यैव); दे$_4$ द$_1$ ग्र$_2$ म$_1$ परस्य नियमान् (ग्र$_2$ °मं) मम, उ$_1$ परस्य नित्यमात्मन:.

३१. ब$_1$. ⊙. –a) दे$_4$ यावत् स्त्री, दे$_{1.9}$ ते$_1$ या च श्री (→या च श्री:). –b) दे$_2$ विपुलो, दे$_6$ ग्र$_2$ विपुलं (→विपुलां). –c) न$_1$ या च (→पत्नी); ब$_3$ दे$_1$ नारायणा° (ब$_3$ *) (→नारायण°); दे$_6$ °स्यादौ (→°स्यासौ). –d) ते$_1$ वर्त्ततेऽसौ मदाज्ञया.

३२. –a) दे$_2$ वाचां (→वाचं); दे$_4$ ददामि (→ददाति); ग्र$_2$ विमलां (→विपुलां). –c) दे$_4$ सोपी° (→सापी°); ग्र$_2$ सा विश्वनरयोगेन. –d) दे$_{5.8}$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ पूजिता (ग्र$_2$ °तास्), दे$_9$ पूजिता, +चोदिता, दे$_4$ योजिता, ते$_1$ मुवें. मुए. मुब. नोदिता (→चोदिता); दे$_1$ संप्रयच्छति (→संप्रवर्त्तते).

३३. ब$_1$. ⊙. –a) दे$_1$ लोकान् (→घोरान्). –b) दे$_1$ नरकाद् भावयिष्यति, दे$_4$ नरांस्तां तारयिष्यति, दे$_5$ नरकान् (सं)तारयिष्यति. –c) दे$_2$ सवित्री, दे$_3$ सावित्रीं (→सावित्री); ब$_3$ संवृता, दे$_5$ या स्मृता (→संस्मृता); दे$_{1.5}$ ते$_1$ द$_1$ ग्र$_2$ उ$_1$ सापि, दे$_4$ सा तु, दे$_{8.9}$ न$_1$ म$_1$ मुवें. मुए. मुब. चापि (→देवी). –d) दे$_4$ एषा, दे$_{8.9}$ म$_1$ मुवें. मुए. मुब. मदाज्ञा° (→देवाज्ञा°).

३४. ब$_1$. ab ⊙. –c) का$_1$ म$_1$ उ$_1$ याहि, ब$_2$ सापि, न$_1$ यो हि, ग्र$_2$ योभि- (→यापि); दे$_4$ ते$_1$ धात्री (→ध्याता). –d) ब$_3$ तद्-(→मद्-); दे$_6$ °नुगा: (→°नुगा).

३५. –a) दे$_6$ सोऽनन्त° (→योऽनन्त°); म$_1$ योऽनन्तमभिज्ञानन्तम्. –b) म$_1$ (अ)शेषो (→शेषो); ते$_1$ [अ]चित: (→°प्रभु:). –c) ग्र$_2$ ददाति (→दधाति); ग्र$_2$ म$_1$ विश्वं (→लोकं). –d) ब$_1$ सोपि देवो°, न$_1$ सोपीश्वर°, ते$_1$ देवदेव° (→सोऽपि देव°).

३६. ब$_1$. ⊙; दे$_4$. ⊙ (द. सं.). –a) ग्र$_2$ योऽग्नि (→योऽग्नि:); ते$_1$ सार्वत्रिको, ग्र$_2$ संवर्त्तते (→संवर्त्तको). –b) का$_1$ ब$_2$ दे$_1$ °रूपमास्थित: (→°रूपसंस्थित:); दे$_1$ मुख, + रूप- (→रूप-); दे$_6$-संस्थिता, ग्र$_2$-सज्ञित: (→-संस्थित:). –c) का$_1$ पिवत्य°, ते$_1$ विभर्त्य° (→पिबत्य°); ब$_2$ दे$_{1.5}$ अम्भोधीन् (→अम्भोधिम्).

३७. ब$_1$. ⊙; ग्र$_2$ म$_1$. cd ⊙. –b) उ$_1$ द$_1$ त्वमितौजस:, ग्र$_2$ तु मितौजस:, म$_1$ चामितौजस: (→प्रथितौजस:). –d) दे$_{1.4}$ न$_1$ सर्व- (→तस्य).

३८. ब$_1$. ⊙. –c) का$_2$ दे$_{1.4.5.8.9}$ न$_1$ ग्र$_2$ मुवें. मुए. मुब. सर्वा: (→सर्वा). –d) ब$_{2.3}$ दे$_1$ ते$_1$ मुब. निष्ठिता:, दे$_6$ द$_1$ उ$_1$ विष्ठिता:, दे$_3$ न$_1$ ग्र$_2$ तिष्ठिता: (→धिष्ठिता:); दे$_{4.8.9}$ मुवें. मुए. शास्त्रेणैव विनिर्मिता: (दे$_4$ °निश्चिता:), दे$_5$ शास्त्रेणैव नियोगत:, म$_1$ मच्छास्त्रेण ह्यधिष्ठिता:.

३९. ब$_1$. ⊙. –a) ब$_2$ मारुता यक्षा:, दे$_1$ ते$_1$ म$_1$ गरुडा (ते$_1$ °डो) यक्षा:, दे$_{3.8.9}$ मुवें. मुए. मुब. गरुडाद्याश्च, न$_1$ गरुडानागा: (→गुरुडा ऋक्षा:). –b) दे$_4$ चान्याश्च (→साध्याश्च). –c) दे$_{1.36}$ °रक्ष (→°रक्ष:). –d) न$_1$ का$_1$ स्थितात् (→स्थिता:); दे$_8$ सृष्ट्वा, दे$_9$ सृष्वा, + शस्त्रि-, मुवें. मुए. मुब. सृष्टा: (→शास्त्रे); का$_1$ न$_1$ प्रजापते:, मुवें. मुए. मुब. स्वयम्भुवा (→स्वयम्भुव:).

कलाकाष्ठानिमेषाश्च मुहूर्त्ता दिवसाः क्षपाः ।
ऋतवः पक्षमासाश्च स्थिताः शास्त्रे प्रजापतेः ॥४०
युगमन्वन्तराण्येव मम तिष्ठन्ति शासने ।
पराश्चैव परार्धाश्च कालभेदास्तथा परे ॥४१
चतुर्विधानि भूतानि स्थावराणि चराणि च ।
नियोगादेव वर्त्तन्ते देवस्य परमात्मनः ॥४२
पातालानि च सर्वाणि भुवनानि च शासनात् ।
ब्रह्माण्डानि च वर्त्तन्ते सर्वाण्येव स्वयंभुवः ॥४३
अतीतान्यप्यसंख्यानि ब्रह्माण्डानि ममाज्ञया ।
प्रवृत्तानि पदार्थौघैः सहितानि समन्ततः ॥४४
ब्रह्माण्डानि भविष्यन्ति सह वस्तुभिरात्मगैः ।
वहिष्यन्ति सदैवाज्ञां परस्य परमात्मनः ॥४५
भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।
भूतादिरादिप्रकृतिर्नियोगे मम वर्त्तते ॥४६
याऽशेषजगतां योनिर्मोहिनी सर्वदेहिनाम् ।
माया विवर्त्तते नित्यं सापीश्वरनियोगतः ॥४७
यो वै देहभृतां देवः पुरुषः पठ्यते परः ।
आत्माऽसौ वर्त्तते नित्यमीश्वरस्य नियोगतः ॥४८
विधूय मोहकलिलं यया पश्यति तत् पदम् ।
साऽपि विद्या महेशस्य नियोगवशवर्त्तिनी ॥४९ वें.२.६.४९

---

४०. ब$_{1}$ दे$_{4.8.9}$ द$_{1}$ ग्र$_{2}$ उ$_{1}$. ⊙. –a) दे$_{5}$ °मुहूर्त्ताश्च (→°निमेषाश्च). –b) दे$_{5}$ निमेषा (→मुहूर्त्ता); न$_{1}$ ते$_{1}$ दिवसा (→दिवसाः); दे$_{1}$ क्षणाः, दे$_{3.6}$ क्षयाः (→क्षपाः). –c) का$_{1}$ क्रत्वर्द.(?), ब$_{2.3}$ दे$_{1-3.5.6}$ न$_{1}$ म$_{1}$ ऋत्वब्द- (→ऋतवः); का$_{1}$ ब$_{2}$ दे$_{2}$ मासपक्षाश्च (→पक्षमासाश्च); ते$_{1}$ पक्षमासाश्च ऋत्पद्म. –d) ते$_{1}$ स्मृतौ (→स्थिताः); दे$_{1.6}$ प्रजापतिः (→प्रजापतेः).

४१. ब$_{1}$. ⊙. –a) दे$_{5.9}$ न$_{1}$ ग्र$_{2}$ [ए] वं (→एव). –b) दे$_{6}$ तिष्ठति (→तिष्ठन्ति); ते$_{1}$ ह्यवतिष्ठति शासने. –c) न$_{1}$ परश्चैव, द$_{1}$ परार्धैव (→पराश्चैव); दे$_{4}$ पराध्याश्च, दे$_{9}$ परार्द्धश्च (→परार्द्धाश्च). –d) द$_{1}$ -भेदस् (→-भेदास्).

४२. ब$_{1}$. ⊙. –b) द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ चराणि स्थावराणि च. –c) ग्र$_{2}$ म$_{1}$ नियोगेन च वर्त्तन्ते. –d) न$_{1}$ ग्र$_{2}$ म$_{1}$ परमेष्ठिनः (→परमात्मनः).

४३. ब$_{1}$. ⊙. –c) दे$_{8}$ मया ढानि, दे$_{9}$ मयो ढानि (→ब्रह्माण्डानि); द$_{1}$ निवर्तन्ते (→च वर्त्तन्ते). –d) का$_{1}$ देवस्य परमात्मनः, दे$_{4}$ सर्वस्यैव स्वयंभुवः.

४४. ब$_{1}$. ⊙. –a) दे$_{6}$ अतीतान्यथ संख्यानि. –b) का$_{1}$ ब$_{3}$ दे$_{2.4-6}$ न$_{1}$ ते$_{1}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ मदाज्ञया (→ममाज्ञया). –c) का$_{1}$ वृत्तानि च, ब$_{2}$ प्रवर्त्तन्ते (→प्रवृत्तानि); दे$_{1}$ पदार्थानि, दे$_{4}$ पदार्थैस्तैः, म$_{1}$ परार्थौघैस् (→पदार्थौघैः); ते$_{1}$ प्रवृत्ता च परार्द्धौघैः. –d) दे$_{3.6.9}$ उ$_{1}$ संहितानि (→सहितानि).

४५. ब$_{1}$. ⊙. –b) दे$_{6}$ सदावस्तुभिर्, दे$_{8}$ मुवें. मुए. सह चात्मभिर्, दे$_{9}$ सह चात्मभिर्, + सह वस्तुभिर्, म$_{1}$ यस्य वस्तुभिर् (→सह वस्तुभिर्); न$_{1}$ ते$_{1}$ आत्मकैः (→आत्मगैः). –c) दे$_{1.5}$ ते$_{1}$ उ$_{1}$ मुवें. मुए. मुव. करिष्यन्ति, दे$_{4.8}$ द$_{1}$ ग्र$_{2}$ भविष्यन्ति, दे$_{6}$ वरिष्यन्ति, दे$_{9}$ वदिष्यंति,+भविष्यन्ति, म$_{1}$ भजिष्यन्ति (→वहिष्यन्ति); का$_{1}$ ब$_{3}$ दे$_{2.3.6}$ सहैव°(→सदैव°). –d) दे$_{1}$ पर(म)स्यं, ग्र$_{2}$ परया (→परस्य); दे$_{6}$ परस्पर-समात्मनः.

अतः परं ब$_{3}$ पुस्तके अधिकम्—'पातालानि च सर्वाणि'. (=४३a)

४६. ब$_{1}$. ⊙. –c) दे$_{5}$ ते$_{1}$ आदिः, ग्र$_{2}$ ** (→आदि-) ब$_{3}$ दे$_{6}$ °प्रकृति- (→°प्रकृतिर्). –d) ब$_{2}$ परि-, दे$_{4.6}$ मनु- (→मम); ग्र$_{2}$ म$_{1}$ मन्नियोगेन वर्त्तते.

४७. ब$_{1}$. ⊙. –a) म$_{1}$ यो (→या); ब$_{2}$ जगती, दे$_{4}$ जगतो (→जगतां). –b) दे$_{4}$ महतां, दे$_{6}$ मोहनी (→मोहिनी). –c) न$_{1}$ द$_{1}$ ग्र$_{2}$ उ$_{1}$ मायापि, ते$_{1}$ माया हि (→माया वि-). –d) दे$_{6}$ माया शूर°, द$_{1}$ साध्वीश्वर° (→सापीश्वर°).

४८. ब$_{1}$. ⊙; दे$_{1}$ द$_{1}$. ⊙ (द. सं.). –a) का$_{1}$ ब$_{3}$ दे$_{2.6}$ योनिर्देह°, दे$_{5}$ ग्र$_{3}$ यो वैं देव° (→यो वै देह°); ब$_{2}$ योपि देहाश्रितो देवः, ग्र$_{2}$ यो वै देवभृगुर्देवः. –b) का$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ पश्यते, न$_{1}$ प्रोच्यते (→पठ्यते). –d) का$_{1}$ ब$_{2.3}$ दे$_{2.3.6}$ महेश्वर° (→ईश्वरस्य).

४९. का$_{1}$. cd ⊙. –a) ते$_{1}$ विहाय (→विधूय). –b) दे$_{4}$ ममा, दे$_{6}$ ग्र$_{2}$ यथा, ते$_{1}$ याज्ञां, म$_{1}$ ययौ (→यया); दे$_{4}$ द$_{1}$ ग्र$_{2}$ उ$_{1}$ पश्यन्ति (→पश्यति); दे$_{4}$ मत्पदम्, न$_{1}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ तत्परं (→तत्पदम्). –c) दे$_{4}$ विद्ययापि, दे$_{5}$ सापि शक्तिर्, दे$_{8}$ मुवें. मुए. सापि बुद्धिर्, दे$_{9}$ सापि विद्या, + सापि बुद्धिर्, उ$_{1}$ द$_{1}$ सा विद्यापि (→सापि विद्या). –d) दे$_{1}$ द$_{1}$ नियोगे (→नियोग-).

वें.२.६.५० बहुनाऽत्र किमुक्तेन मम शक्त्यात्मकं जगत् ।
मयैव प्रेर्यते कृत्स्नं मय्येव प्रलयं व्रजेत् ।।५०
अहं हि भगवानीशः स्वयं ज्योतिः सनातनः ।
परमात्मा परं ब्रह्म मत्तो ह्यन्यन्न विद्यते ।।५१
इत्येतत् परमं ज्ञानं युष्माकं कथितं मया ।
ज्ञात्वा विमुच्यते जन्तुर्जन्मसंसारबन्धनात् ।।५२

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायामुपरिविभागे (ईश्वरगीतासु) षष्ठोऽध्यायः ।।६।।

# ७

ईश्वर उवाच ।❀
शृणुध्वमृषयः सर्वे प्रभावं परमेष्ठिनः ।
यं ज्ञात्वा पुरुषो मुक्तो न संसारे पतेत् पुनः ।।१
परात् परतरं ब्रह्म शाश्वतं निष्कलं ध्रुवं ।
नित्यानन्दं निर्विकल्पं तद्धाम परमं मम ।।२
अहं ब्रह्मविदां ब्रह्मा स्वयंभूर्विश्वतोमुखः ।
मायाविनामहं देवः पुराणो हरिरव्ययः ।।३
योगिनामस्म्यहं शंभुः स्त्रीणां देवी गिरीन्द्रजा ।

**५०.** का1. ab ⊙; दे4 द1 म1 उ1. cd ⊙. –b) दे5 मम शक्तिमयात्मकम्, म1 मम भक्त्यात्मकञ्जगत्. –c) ब3 मय्येव, दे2 मयैवं (→मयैव); ब2 मुब. सृज्यते, ब3 पूज्यते, दे1.6 पूर्यते, ते1 पाल्यते (→प्रेर्यते); ते1 नित्यं (→कृत्स्नं). –d) दे1 मया च, मुवें. मयेव (?) (→मय्येव); ते1 मया संह्रियते जगत्.

**५१.** ते1. ab ⊙. –c) ते1 अहमेव (→परमात्मा); दे6 मुब. पर- (→परं).

**५२.** –a) का1 यदेतत् (→इत्येतत्); दे4 द1 ग्र2 उ1 -कथितं (→-परमं); दे1 एतत् परतरं ज्ञानं, म1 इत्येतत् ब्रह्मविज्ञानं. –b) उ1 प्रथितं (→कथितं). –c) ब2 प्रमुच्यते, उ1 -पि मुच्यते (→विमुच्यते).

पुष्पिका—

**पुराणनाम**—का1 दे6 न1 इति श्रीकूर्मपुराणे ईश्वरगीतासूपनित्सु, ब1-3 दे2 इति कूर्मपुराणे ईश्वरगीतासूपनिषत्सु, दे1 इति श्रीकूर्मपुराणे ईश्वरगीतासूपनिषत्सु उत्तरखंडे, दे3 इति कूर्मपुराणे गीतासूपनिषत्सु, दे4 इति श्रीकूर्मपुराणे उत्तरार्द्धे ईश्वरगीतासूपनिषत्सु, दे5 इति श्रीकूर्मपुराणे ईश्वरगीता, दे8.9 मुए. इति श्रीकूर्मपुराणे ईश्वरगीतासु, ते1 इति श्रीकूर्मपुराणे उपरिभागे ईश्वरगीतासु उपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे, द1 इति श्रीकूर्मपुराणे उत्तरभागे ईश्वरगीतायां, ग्र2 उ1 इति श्रीकूर्मपुराणे उ रभागे ईश्वरगीतासूपनिषत्सु, म1 इति श्रीकूर्मपुराणे उपरिभागे ईश्वरगीतासूपनिषत्सु, मुवें. इति श्रीकूर्मपुराणे उत्तरार्द्धे ईश्वरगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे, मुब. इति श्रीकौर्मे महापुराणे उपरिभागे श्रीमद्भगवदीश्वरगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे. **अध्यायनाम**—का1 ब1-3 दे2-6.8.9 न1 द1 ग्र2 म1 उ1. ⊙, दे1 मुवें. ऋषिव्याससंवादे, ते1 ईश्वरनारायणमहर्षिसंवादे सर्वाधिकारनियोगनिरूपणयोगो नाम, मुब. परमेश्वरनृत्यदर्शनज्ञानयोगो नाम. **अध्यायसंख्या**—का1 दे1 पंचमोऽध्यायः ।।५।।, ब1.3 दे2.3.6 पञ्चमोऽध्यायः, ब2 पञ्चमोऽध्यायः ।।५५।।, दे4.8.9 ते1 द1 ग्र2 म1 उ1 मुए. मुब. षष्ठोऽध्यायः, दे5 मुवें. षष्ठोऽध्यायः ।।६।।, न1 पंचपंचाशोऽध्यायः.

७

❀ दे8.9 ईश्वर उ.; द1 ग्र2 म1 उ1 ईश्वरः.

**१.** –a) ब2 मुनयः (→ऋषयः). –b) दे1 माहात्म्यं (→प्रभावं). –c) ब2.3 दे1 ते1 ग्र2 उ1 यत् (→यं); दे4 मुक्ता, दे6 युक्तो (→मुक्तो). –d) दे4 संसारं, न1 द1 संसार- (→संसारे).

**२.** –a) दे3 परे° (→पर°). –b) दे1.8.9 न1 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. ध्रुवमव्ययम्, दे4 ते1 परमं ध्रुवं (→निष्कलं ध्रुवं); का1 निःकलं शाश्वतं ध्रुवम्. –c) उ1 निर्विकारं (→निर्विकल्पं).

**३.** –a) दे4 न1 म1 ब्रह्म (→ब्रह्मा). –b) न1 स्वायम्भुर् (→स्वयंभुर्); ब2 विश्वभावनः (→विश्वतोऽमुखः). –c) ब1 अयं (→अहं); दे6 मायाविर्नामयीं देवः, न1 द1 उ1 मायावी(द1 °वि)नां महादेवः. –d) का1 दे4 पुराणे (→पुराणो); ते1 पुराणोऽहमिहाव्ययः.

**४.** –a) ब2 दे4.5 ते1 द1 योगिनामप्यहं, दे1 यो योगिनामहं, दे6 योगिना नाम्यहं (→योगिनामस्म्यहं). –b)

आदित्यानामहं विष्णुर्वसूनामस्मि पावकः ।।४
रुद्राणां शंकरश्चाहं गरुडः पततामहम् ।
ऐरावतो गजेन्द्राणां रामः शस्त्रभृतामहम् ।।५
ऋषीणां च वसिष्ठोऽहं देवानां च शतक्रतुः ।
शिल्पिनां विश्वकर्माऽहं प्रह्लादोस्म्यमरद्विषाम् ।।६
मुनीनामप्यहं व्यासो गणानां च विनायकः ।
वीराणां वीरभद्रोऽहं सिद्धानां कपिलो मुनिः ।।७
पर्वतानामहं मेरुर्नक्षत्राणां च चन्द्रमाः ।
वज्रं प्रहरणानां च व्रतानां सत्यमस्म्यहम् ।।८
अनन्तो भोगिनां देवः सेनानीनां च पावकिः ।
आश्रमाणां च गार्हस्थमीश्वराणां महेश्वरः ।।९
महाकल्पश्च कल्पानां युगानां कृतमस्म्यहम् ।
कुबेरः सर्वयक्षाणां गणेशानां च वीरकः ।।१०
प्रजापतीनां दक्षोऽहं निर्ऋतिः सर्वरक्षसाम् ।
वायुर्बलवतामस्मि द्वीपानां पुष्करोऽस्म्यहम् ।।११
मृगेन्द्राणां च सिंहोऽहं यन्त्राणां धनुरेव च ।
वेदानां सामवेदोऽहं यजुषां शतरुद्रियम् ।।१२
सावित्री सर्वजप्यानां गुह्यानां प्रणवोऽस्म्यहम् ।
सूक्तानां पौरुषं सूक्तं ज्येष्ठसाम च सामसु ।।१३
सर्ववेदार्थविदुषां मनुः स्वायंभुवोऽस्म्यहम् ।
ब्रह्मावर्त्तस्तु देशानां क्षेत्राणामविमुक्तकम् ।।१४ वें.२.७.१४

---

दे$_6$ देवा, ते$_1$ देव (→देवी); ब$_1$ दे$_6$ गिरीन्द्रजाः, ते$_1$ गिरिः प्रजाः (→गिरीन्द्रजा).

५. दे$_6$. ५b-६c ⊙. –a) ब$_1$ वीराणां वीरभद्रोहं. –b) का$_1$ गरुडं (→गरुडः); ग्र$_2$ पतगा° (→पतता°). –c) दे$_1$ द$_1$ उ$_1$ ऐरावतं (→ऐरावतो); ब$_3$ जगेन्द्राणां (→गजेन्द्राणां). –d) का$_1$ ब$_1$ दे$_{4.5}$ म$_1$ मुवें. मुए. शस्त्रप्रभृता° (→शस्त्रभृता°).

६. दे$_6$. abc ⊙. –a) दे$_1$ तु (→च). –b) दे$_5$ पुरंदरः (→शतक्रतुः). –c) का$_1$ ब$_1$ शिल्पीनां (→शिल्पिनां). –d) दे$_{1.5.8.9}$ मुवें. मुए. मुब. प्रह्लादः सुरविद्विषाम्, द$_1$ ग्र$_2$ म$_1$ उ$_1$ प्रह्लादश्च(ग्र$_2$ °स्य) सुरद्विषा, दे$_4$ प्रह्लादस्त्वमरद्विषां, दे$_6$ प्रह्लादो सऽमरद्विषां, न$_1$ प्रह्लादोस्मि रत्रिद्विषां, ते$_1$ प्रह्लादस्तु सुरद्विषां.

७. दे$_4$. ७ अध्यायस्य ८ श्लोकादारभ्य ८ अध्यायस्य ४ श्लोकं यावत् ⊙; का$_1$. ७c-८d ⊙. –a) ग्र$_2$ अहो (→अहं). –b) का$_1$ सत्यमस्म्यहं, म$_1$ च विनायकं (→च विनायकः). –c) दे$_4$ °भद्राभ, द$_1$ ग्र$_2$ म$_1$ उ$_1$ °भद्रोस्मि (→°भद्रोऽहं). –d) दे$_4$ मत्तेजा ह्यभवत्पुरा.

अंतः परं ते$_1$ अधिकम्—

29. *उच्चैश्रवाश्चाप्यश्वानां नक्राणां मकरोस्म्यहम्.

८. का$_1$ दे$_4$. ⊙. –a) दे$_{1.2}$ न$_1$ ते$_1$ महा- (→अहं). –c) दे$_6$ प्रहरणोनां (→प्रहरणानां). –d) दे$_5$ सत्यमप्यहं, ते$_1$ सत्वमस्म्यहं (→सत्यमस्म्यहं).

९. दे$_4$.⊙; द$_1$ ग्र$_2$.९a-१३b ⊙; म$_1$. ab⊙; का$_1$ ब$_{1-3}$ दे$_{3.6}$ म$_1$ पुस्तकेषु ९cd, १० ab चरणयोर्व्यत्यासः. –a) उ$_1$ योगिनां (→भोगिनां); दे$_6$ देवा, न$_1$ चाहं, उ$_1$ देव (→देवः). –b) का$_1$ पावकः, उ$_1$ पावकी (→पावकिः). –c) का$_1$ आश्रमानां (→आश्रमाणां); दे$_{1.8.9}$ न$_1$ ते$_1$ म$_1$ उ$_1$ मुवें. मुए. गृहस्थोऽहं, दे$_6$ स्वगार्हस्थां (→च गार्हस्थं).

१०. दे$_4$. ⊙; द$_1$ ग्र$_2$. ⊙ (द्र. ९ पा. वि). –a) मुब. °कल्पश्च (→°कल्पश्च); दे$_6$ कल्याणां, उ$_1$ वृक्षाणां (→कल्पानां). –b) दे$_1$ कृतमेव च, दे$_5$ कृतमप्यहं, न$_1$ कृतमस्यहम्, उ$_1$ अप्यहं कृतम् (→कृतमस्म्यहम्). –c) ब$_1$**णां (→°यक्षाणां); दे$_5$ *** आर्ययक्षाणां. –d) दे$_1$ गणेशानां विनायकः, दे$_{8.9}$ मुवें. मुए. मुब. तृणानाञ्चैव वीरुधः.

१० श्लोकानन्तरं न$_1$ अधिकम्—

30. *इन्द्रियाणां मनश्चाहं स्रोतसांनां च जाह्नवी.

११. दे$_4$. ⊙; द$_1$ ग्र$_2$. ⊙ (द्र. ९ पा. वि.); म$_1$. cd ⊙. –b) न$_1$ निर्वृतिः (→निर्ऋतिः); उ$_1$ ब्रह्म°(→सर्व°). –c) दे$_5$ चास्मि (→अस्मि). –d) ते$_1$ उ$_1$ विमानानां च पुष्पकम्.

१२. दे$_4$. ⊙; द$_1$ ग्र$_2$. ⊙ (द्र. ९ पा. वि.); दे$_1$. १२-१३b ⊙ (द. सं.). –a) दे$_6$ मृगेन्द्रानां (→मृगेन्द्राणां). –b) ब$_1$ म$_1$ अस्त्राणां, ब$_2$ यन्तूनां, उ$_1$ शस्त्राणां (→यन्त्राणाम्). –d) ब$_1$ यजूनां (→यजुषां); दे$_6$ °यज्ञियं, उ$_1$ °रुद्रयकं (→°रुद्रियम्).

१३. दे$_4$. ⊙; दे$_1$ द$_1$ ग्र$_2$. ab ⊙; उ$_1$. १३a-१४d ⊙. –c) दे$_1$ परमं, ग्र$_2$ पुरुषं (→पौरुषं). –d) का$_1$ दे$_{2.5}$ ते$_1$ द$_1$ म$_1$ ज्येष्ठं, न$_1$ ज्येष्ठः (→ज्येष्ठ-).

१४. दे$_4$ उ$_1$. ⊙. –a) ब$_1$ °वेदानु° (→°वेदार्थ°); का$_1$ सर्वार्थविदुषां चैव. –b) दे$_1$ मंत्रः, न$_1$ ग्र$_2$ मनु-, द$_1$

वें.२.७.१५ विद्यानामात्मविद्याऽहं ज्ञानानामैश्वरं परम् ।
भूतानामस्म्यहं व्योम सत्त्वानां मृत्युरेव च ॥१५
पाशानामस्म्यहं माया कालः कलयतामहम् ।
गतीनां मुक्तिरेवाहं परेषां परमेश्वरः ॥१६
यच्चान्यदपि लोकेऽस्मिन् सत्त्वं तेजोबलाधिकम् ।
तत्सर्वं प्रतिजानीध्वं मम तेजोविजृम्भितम् ॥१७
आत्मानः पशवः प्रोक्ताः सर्वे संसारवर्त्तिनः ।
तेषां पतिरहं देवः स्मृतः पशुपतिर्बुधैः ॥१८
मायापाशेन बध्नामि पशूनेतान् स्वलीलया ।
मामेव मोचकं प्राहुः पशूनां वेदवादिनः ॥१९
मायापाशेन बद्धानां मोचकोऽन्यो न विद्यते ।
मामृते परमात्मानं भूताधिपतिमव्ययम् ॥२०

चतुर्विंशतितत्त्वानि माया कर्म गुणा इति ।
एते पाशाः पशुपतेः क्लेशाश्च पशुबन्धनाः ॥२१
मनो बुद्धिरहंकारः खानिलाग्निजलानि भूः ।
एताः प्रकृतयस्त्वष्टौ विकाराश्च तथापरे ॥२२
श्रोत्रं त्वक् चक्षुषी जिह्वा घ्राणं चैव तु पञ्चमम् ।
पायूपस्थं करौ पादौ वाक् चैव दशमी मता ॥२३
शब्दः स्पर्शश्च रूपं च रसो गन्धस्तथैव च ।
त्रयोविंशतिरेतानि तत्त्वानि प्राकृतानि तु ॥२४
चतुर्विंशकमव्यक्तं प्रधानं गुणलक्षणम् ।
अनादिमध्यनिधनं कारणं जगतः परम् ॥२५
सत्त्वं रजस्तमश्चेति गुणत्रयमुदाहृतम् ।
साम्यावस्थितिमेतेषामव्यक्तं प्रकृतिं विदुः ॥२६

---

मुनि- (→मनुः). –c) ब2 ब्रह्मावर्त्तश्च, दे1 ब्रह्मवर्त्तस्तु, दे3 महावर्त्तस्तु, द1 ब्रह्मावर्तास्तु (→ब्रह्मावर्त्तस्तु).

१५. दे4. ⊙. –a) ब1 विद्यानां मानु विद्याहं (?). –b) दे8 ईश्वरः, दे9 ईश्वरः, +ईश्वरं (→ऐश्वरं); का1 ब2 दे1.2 ते1 पदं (→परम्). –c) ब2 दे5 द1 उ1 अप्यहं (→अस्म्यहं). –d) का1 दे2.5 जातानां, ब1-3 दे1.3.6.8 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. तत्त्वानां, दे9 जातानां, +तत्त्वानां (→सत्त्वानां); का1 भूमि°, दे2 मूर्त्ति°, ग्र2 मृदु° (→मृत्यु°).

१६. दे4. ⊙. –a) दे5 पाशानामप्यहं, ते1 पाशानामस्त्वहं, द1 उ1 शास्त्राणा (द1 °ना) मप्यहं (→पाशानामस्म्यहं) –b) न1 कालयता°, द1 कलयिता° (→कलयता°). –c) ब3 दे6 ग्र2 गीतानां, द1 गतानां, म1 गुर्वीनां (→गतीनां).

१७. दे4. ⊙. –b) ते1 सर्वं (→सत्त्वं); न1 °बलाधिकः, ते1 °बलोधिकम् (→°बलाधिकम्). –d) का1 ब1-3 दे6 °बिजृंभणं (का1 ब3 °न), दे3 °विजृंभितं, + °विजृम्भणं, ग्र2 °विनिर्जितं, द1 उ1 °विनिर्मितं (→°विजृम्भितम्).

१८. दे4. ⊙. –a) ब3 आत्माना, न1 आत्मानं, ग्र2 उ1 आत्मना (→आत्मानः); ब2 प्रसवाः, ब3 मसवः (?) (→पशवः). –c) दे5 देवाः (→देवः).

१९. दे4. ⊙. –b) दे1 पशूनेतांश्च, ते1 पशून् तान् स्वेन, द1 पशूनेतान्स (→पशूनेतान् स्व-). –c) ग्र2 मातेव मोचकः ाहुः. –d) ग्र2 ब्रह्म° (→वेद°).

२०. दे4. ⊙; ते1. cd ⊙. –a) द1 *** (→बद्धानां); ते1 पाशेन बद्धजीवानां. –b) दे6 मोचकोन्योन्य- (→मोचकोऽन्यो न). –c) ब3 अमृतं, दे1 मां श्रुते (→मामृते).

२१. दे4. ⊙. –c) ते1 गुणायते (→गुणा इति); दे1 एते पाशः, दे6 एतेषाशा (?), ग्र2 एताः पायाः (→एते पाशाः). –d) ब2 क्लेशाय, दे1 श्लेशाध-, दे6 क्लेशश्चा-, ते1 क्लेशश्च, ग्र2 किलेशा, म1 क्लेशास्तु (→क्लेशाश्च); ब2.3 °बन्धनात्, द1 °बधिनः (→°बन्धनाः).

२२. दे4. ⊙. –a) न1 खानिलानि (→खानिलाग्नि-); ब1 °जलानि च, दे1 °जलादिभूः (→°जलानि भूः); ब2 खानिलौ जलमग्नि भूः. –c) ते1 एते पशुपतेरष्टौ. –d) का1 विकारश्च, दे1 विकाराश्व- (→विकाराश्च).

२३. दे4. ⊙. –a) ब1 न1 द1 ग्र2 उ1 श्रोत्र- (→श्रोत्रं); ब1 चक्षुषां (→चक्षुषी). –b) द1 चेतश्च, ग्र2 उ1 चैतच्च, म1 चैव च (→चैव तु); दे6 पश्चिमं, ग्र2 पञ्चकं, म1 पञ्चमः (→पञ्चमम्). –c) दे1.3.6 न1 ते1 द1 ग्र2 म1 उ1 पायूपस्थौ (→पायूपस्थं). –d) ब1 वाक्यैव, दे6 वाक्कैव (→वाक् चैव); का1 ब2 दे1.2 स्मृता (दे1 °ताः), ब3 मताः, दे3.6 ते1 द1 ग्र2 तथा (→मता).

२४. दे4. ⊙. –a) ब1.3 दे1.3.6 न1 द1 म1 शब्द- (→शब्दः); न1 द1 ग्र2 स्पर्शं च (→स्पर्शश्च); दे6 मुवें. मुए. रूपश्च (→रूपं च). –c) द1 ग्र2 म1 उ1 भेदानि (→एतानि). –d) ब1.3 ग्र2 प्रकृतानि (→प्राकृतानि); दे1.8.9 मुवें. मुए. मुब. च (→तु).

२५. दे4. ⊙; ते1. ab ⊙. –a) का1 ब1-3 दे2.6 चतुर्विंशति (→चतुर्विंशकम्). –b) ब2.3 दे1.3.6 द1 ग्र2 म1 उ1 प्रधान- (→प्रधानं).

२६. ते4 दे1. ⊙, –a) दे5 तमश्चैव, न1 तमं चैव (→तमश्चेति). –c) दे1 साम्यावस्थितमेतेषां, द1 म1 समा-

सत्त्वं ज्ञानं तमोऽज्ञानं रजो मिश्रमुदाहृतम् ।
गुणानां बुद्धिवैषम्याद् वैषम्यं कवयो विदुः ॥२७
धर्माधर्माविति प्रोक्तौ पाशौ द्वौ बन्धसंज्ञितौ ।
मय्यर्पितानि कर्माणि निबन्धाय विमुक्तये ॥२८
अविद्यामस्मितां रागं द्वेषं चाभिनिवेशकम् ।
क्लेशाख्यानचलान् प्राहुः पाशानात्मनिबन्धनान् ॥२९
एतेषामेव पाशानां माया कारणमुच्यते ।
मूलप्रकृतिरव्यक्ता सा शक्तिर्मयि तिष्ठति ॥३०
स एव मूलप्रकृतिः प्रधानं पुरुषोऽपि च ।
विकारा महदादीनि देवदेवः सनातनः ॥३१
स एव बन्धः स च बन्धकर्ता
स एव पाशः पशवः स एव ।
स वेद सर्वं न च तस्य वेत्ता
तमाहुरग्र्यं पुरुषं पुराणम् ॥३२ वें. २.७.३२

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायामुपरिविभागे (ईश्वरगीतासु) सप्तमोऽध्यायः ॥७॥

---

वस्थितमेतेषां, ग्र2 समाधिस्थितमेतेषां, उ1 समावस्थानमेतेषां. –d) ब2 न1 मुवें. मुए. मुब. अव्यक्तां, दे1 प्रधानं, दे8.9 अव्यक्त- (→अव्यक्तं); द1 प्रकृतं (→प्रकृति).

२७. दे4. ⊙. –a) दे2 द1 सत्व- (→सत्त्वं); दे5 तपो (→तमो). –b) ब1 रजो*श्र, दे8 मुवें. मुए. मुब. राजसं स-, दे9 राजामिश्र, + राजसं स-, द1 रजोभिश्च (→रजो मिश्रं). –c) ब1 -वैषम्यं (→-वैषम्याद्). –d) ब1 अद्वैधं, ब3 दे1 वैशम्यं (→वैषम्यं).

२८. दे4. ⊙; ग्र2. २८b-२९c ⊙. –a) द1 °धर्ममिति, ग्र2 °धर्मविधि- (→°धर्माविति); ब1 प्रोक्तं, ब2 ख्यातौ (→प्रोक्तौ). –b) ब1 पासौ, ते1 पाका (→पाशौ); का1 बधन°, ब1 दे1.5.8.9 द1 उ1 मुवें. मुए. मुब. द्वौ कर्म°, दे3.6 द्वौ ब्रह्म°, न1 म1 द्वौ धर्म°, ते1 * कर्म° (→द्वौ बन्ध°).

२९. दे4. ⊙; ग्र2. abc ⊙ (द्र. २८ पा. वि.). –a) ब1.3 दे3.5 अविद्यामस्मितं, ब1 अविद्या सन्द्धितं, दे6 अविद्या संमितं, ते1 अविद्यां चस्मयं, म1 अविद्यामसितां (→अविद्यामस्मितां); न1 द1 राग- (→रागं). –b) का1 उ1 चापि, ब3 न1 चाति-(→चाभि-); ब2 दे3.8 ते1 मुवें. मुए. मुब. °निवेशनम् (→°निवेशकम्). –c) दे6 केशाखा न खलान्प्राहुः, दे8 क्लेशाख्यांस्तां स्वयं प्राहुः, दे9 क्लेशाख्यानचलान्प्राहुः, + क्लेशाख्यस्ता स्वयं प्राह, न1 क्लेशात्मा नात्मकः प्राहुः, ते1 क्लेशाख्या तांश्च तान् प्राहुः, द1 क्लेशाख्यान्यं च यान् प्राहुः, मुवें. मुए. मुब. क्लेशाख्यांस्तान् स्वयं प्राह. –d) ते1 पाशानां त्व (→पाशानात्म-); दे1 °विबन्धात्, दे8.9 ग्र2 म1 उ1 °निबन्धनान् (→°निबन्धनान्).

३०. दे4.⊙. –a) दे1 पा * नां (→पाशानां). –b) ब1 मया (→माया-); उ1 °करण° (→°कारण°). –c) ब1 दे1 अव्यक्तं, ते1 अव्यक्तो (→अव्यक्ता). –d) का1 दे4 शक्तिर्मयि च तिष्ठति.

३१. दे4.⊙; ते1.cd ⊙. –a) न1 °प्रकृति, ग्र2 °प्रकृतिं (→°प्रकृतिः). –b) दे5 प्रधानः, दे6 प्रधान- (→प्रधानं); दे6 पुरुषेपि वा (→पुरुषोऽपि च). –c) दे1 विकारान् (→विकारा).

३२. दे4.⊙. –a) दे6 ब्रह्म° (→बन्ध°); दे5 °कर्त्ता, + °कर्त्तम (→°कर्त्ता). –b) ब1-3 दे2.5.6 ते1 पाशाः (दे6 °शा), ग्र2 पाशं (→पाशः); का1 पुरुषः स एव, दे1 पशवः सवेद, दे2 पशवः स एवं, दे8.9 मुवें. मुए. मुब. पशुभृत्य एव, द1 पशवस्स एव च (→पशवः स एव). –c) न1 ते1 द1 ग्र2 उ1 एव (→वेद); का1 स च सर्ववेत्ता (→न च तस्य वेत्ता). –d) दे8.9 मुवें. मुए. मुब. आर्घ्यं (→अग्र्यं). –cd) म1 स वेद सर्वं न च बन्धकर्त्ता तस्य वेत्ता तमाहुरग्र्यं पुरुषं पुराणं.

**पुष्पिका**— [दे4 द1 पुस्तकयोरध्यायसमाप्तिर्नास्ति]

**पुराणनाम**—का1 दे6 न1 इति श्रीकूर्मपुराणे ईश्वरगीतासूपनिषत्सु, ब1.3 दे2.3 इति कू(दे2 कौ)र्मपुराणे ईश्वरगीतासूपनिषत्सु, ब2 दे5.8.9 मुए. इति श्रीकूर्मपुराणे ईश्वरगीतासु, दे1 इति श्रीकूर्मपुराणे ईश्वरगीतासूपनिषत्सु मु(?)त्तरखण्डे, ते1 इति श्रीकूर्मपुराणे उपरिभागे ईश्वरगीतासु उपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे, ग्र2 म1 उ1 इति श्रीकूर्मपुराणे उत्तरभागे ईश्वरगीतासूपनिषत्सु, मुवें. इति श्रीकूर्मपुराणे उत्तरार्द्धे ईश्वरगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे, मुब. इति श्रीकौर्मे महापुराणे उपरिभागे श्रीमद्भगवदीश्वरगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे. **अध्यायनाम**—का1 ब1-3 दे1-3.5.8.9 न1 ग्र2 म1 उ1 मुए. ⊙; ते1 ईश्वरनारायणमहर्षिसंवादे विभूतियोगो नाम, मुवें. ऋषिव्याससंवादे, मुब. विभूतियोगो

रेचकः पूरकश्चैव प्राणायामोऽथ कुम्भकः ।
प्रोच्यते सर्वशास्त्रेषु योगिभिर्यतमानसैः ॥३६
रेचकोऽजस्रनिश्वासात् पूरकस्तन्निरोधतः ।
साम्येन संस्थितिर्या सा कुम्भकः परिगीयते ॥३७
इन्द्रियाणां विचरतां विषयेषु स्वभावतः ।
निग्रहः प्रोच्यते सद्भिः प्रत्याहारस्तु सत्तमाः ॥३८
हृत्पुण्डरीके नाभ्यां वा मूर्ध्नि पर्वतमस्तके ।
एवमादिषु देशेषु धारणा चित्तबन्धनम् ॥३९
देशावस्थितिमालम्ब्य बुद्धेर्या वृत्तिसंततिः ।
वृत्त्यन्तरैरसंसृष्टा तद्ध्यानं सूरयो विदुः ॥४०
एकाकारः समाधिः स्याद् देशालम्बनवर्जितः ।
प्रत्ययो ह्यर्थमात्रेण योगसाधनमुत्तमम् ॥४१
धारणा द्वादशायामा ध्यानं द्वादश धारणाः ।
ध्यानं द्वादशकं यावत् समाधिरभिधीयते ॥४२
आसनं स्वस्तिकं प्रोक्तं पद्ममर्द्धासनं तथा ।
साधनानां च सर्वेषामेतत्साधनमुत्तमम् ॥४३
ऊर्वोरुपरि विप्रेन्द्राः कृत्वा पादतले उभे ।
समासीतात्मनः पद्ममेतदासनमुत्तमम् ॥४४ वें.२.११.४४

आयते प्राणः, म1 आयनः प्राणः (→आयतप्राणः). –d) दे4 न1 ते1 ग्र2 म1 उ1 प्राणायामोऽथ वा मतः, दे1.8.9 मुवें. मुए. प्राणायामोऽथ नामतः.

३६. दे2. ३६c–३७c ⊙ (द्र. सं.). –a) उ1 रेचकं (→रेचकः). –b) का1 ब1-3 दे2.3.6 प्राणायामस्तु (→प्राणायामोऽथ); दे3 कुंभकाः, न1 कुम्भकं (→कुम्भकः). –c) द1 °शास्त्रे यो (→°शास्त्रेषु).

३७. दे2. abc ⊙ (द्र. ३६ पा. वि.); ते1. ⊙. –a) का1 रेचको यत्र निश्वासात्, ब2 रेचकोजस्रविश्वासः, दे1.3.8.9 मुवें. मुए. मुब. रेचको बाह्य निश्वासः (दे3 मुब. °सात्), दे4 रेचकोजस्त्रविश्वासात्, न1 रेचको ह्रस्वनिश्वासाः, उ1 रेचकोजस्त्रनिश्वाश्यस्यात्. –b) न1 पूरकस्तं, द1 पूरकस्त्व-, ग्र2 पूरकस्तु (→पूरकस्तत्); दे4.5 न1 ग्र2 म1 उ1 निरोधकः, दे6 निबोधत, दे8 मुवें. मुए. निरोधनः, दे9 निरो-(बो)धनः (→निरोधतः). –c) का1 यस्य, ब2 यासौ, ब3 योसौ, दे5 योगात्, ग्र2 या च, उ1 या स (→या सा). –d) न1 कुंभकं (→कुम्भकः).

३८. –a) द1 ग्र2 विसरणं (→विचरतां). –d) ब3 प्रत्याहारास्तु, दे1 प्राज्ञाहारस्तु (→प्रत्याहारस्तु); दे6 सत्तम, न1 सप्तमाः, ते1 धारणा, ग्र2 वित्तमाः (→सत्तमाः).

३९. ते1. ३९a-४१d ⊙; दे4. ३९a-४१b ⊙. –a) दे3.6 °पुण्डरीको (→°पुण्डरीके); दे5 नासां वा, ग्र2 नार्वाभ्यां वा (→नाभ्यां वा). –b) ब2.3 मुवें. मुए. मुब. पर्वसु (→पर्वत-). –c) ब1 देहेषु (→देशेषु). –d) म1 पारणा (→धारणा); दे1 चितवधने (?), दे6 चितबधनं, द1 चित्तबन्धना (→चित्तबन्धनम्).

४०. दे4 ते1. ⊙ (द्र. ३९ पा. वि.). –a) ब2 न1 देशावस्थितं, द1 देवावस्थितिं (→देशावस्थितिं); दे6 देसावस्थिति मां तस्य. –b) का1 बुधेर्या, ब2 द1 बुधैर्या, न1 बुद्धिर्या, मुवें. मुए. उद्ध्वं या (→बुद्धेर्या); ब2 बुद्धि°, द1 वृत्त° (→वृत्ति°). –c) का1 वृत्यन्तरे च संसृष्टा, ब3 वृत्यन्तरैरसंस्पृष्ट्वा, दे1 वृत्यंन्तरैरसृष्टांतस्, दे3 वृत्यन्तरैव संसृष्टा, दे6 वृत्यंतरेव संसृष्ट्वा, दे8 प्रत्यंतरैरसंसृष्टा, दे9 वृ (प्र)त्यतरैरसंसृष्टा, न1 वृत्यंतरेरसंस्पृष्ट्वा, ग्र2 वृत्यन्तरैस्ससन्दृष्टा, म1 वृत्यन्तरेरसम्मृष्टा, मुवें. मुए. प्रत्यन्तरैरसृष्टा या.

४१. ते1. ⊙; दे4. ab ⊙ (द्र. ३९ पा. वि.). –a) दे6 समाधिस्या, ग्र2 समाधीता (→समाधिः स्यात्). –c) ब2 ह्यन्नुमानेन, दे4 ह्यर्थचात्मानं, दे6 ह्यन्नमात्रेण, ग्र2 ह्यथ चात्मानं, उ1 ह्यत्र चात्मानं (→ह्यर्थमात्रेण); द1 प्रत्याहारोऽथ चात्मानं. –d) ब3 योग*धन°, दे1-3.8 मुवें. मुए. मुब. योगशास (दे2.3 °ध) नं (→योगसाधनं).

४२. –a) ब1 ध्यामा (?), ते1 °यामो, उ1 °याम (→°यामा). –b) का1 दे6 ध्यान- (→ध्यानं); का1 ब1 दे1.3.4.8.9 ते1 धारणा, दे2 वारणां-, दे6 धारण, द1 ग्र2 म1 उ1 धारणं (→धारणाः). –c) का1 दे2.5.6 उ1 ध्यान- (→ध्यानं). –d) द1 ग्र2 उ1 इति गीयते, म1 इति धीयते (→अभिधीयते).

४३. –a) दे2 आसने (→आसनं). –b) ब2 पद्ममुद्ध्वा°, द1 ग्र2 उ1 पद्मध्या° (→पद्ममर्द्धा°); ते1 पद्मासनमतः परम. –c) दे1 साधनीनां, दे9 आसनानां,+साधनानां, न1 साधकानां (→साधनानां). –d) ते1 एतदासन° (→एतत्साधन°).

४४. दे4 ते1. ⊙. –a) ब1 दे6 न1 विप्रेन्द्रा (→विप्रेन्द्राः). –b) ब1 दे3.6 म1 शुभे (→उभे); न1 कृत्वोभेपादके शुभे (?). –c) का1 दे1-4.6.8 द1 ग्र2 म1 मुवें. मुए. मुब. समासीनात्मनः, ब1 समासीनात्मने, न1 समासीतात्म वा, उ1 समासितात्मनः, (→समासीतात्मनः).

वें.२.१२.४६ एकं पादमथैकस्मिन् विन्यस्योरुणि सत्तमाः ।
आसीतार्द्धासनमिदं योगसाधनमुत्तमम् ॥४५
उभे कृत्वा पादतले जानूर्वोरन्तरेण हि ।
समासीतात्मनः प्रोक्तमासनं स्वस्तिकं परम् ॥४६
अदेशकाले योगस्य दर्शनं हि न विद्यते ।
अग्न्यभ्यासे जले वाऽपि शुष्कपर्णचये तथा ॥४७
जन्तुव्याप्ते श्मशाने च जीर्णगोष्ठे चतुष्पथे ।
सशब्दे सभये वाऽपि चैत्यवल्मीकसंचये ॥४८
अशुभे दुर्जनाक्रान्ते मशकादिसमन्विते ।
नाचरेद् देहबाधे वा दौर्मनस्यादिसंभवे ॥४९
सुगुप्ते सुशुभे देशे गुहायां पर्वतस्य तु ।
नद्यास्तीरे पुण्यदेशे देवतायतने तथा ॥५०
गृहे वा सुशुभे रम्ये विजने जन्तुवर्जिते ।
युञ्जीत योगी सततमात्मानं मत्परायणः ॥५१
नमस्कृत्य तु योगीन्द्रान् सशिष्यांश्च विनायकम् ।
गुरुं चैवाथ मां योगी युञ्जीत सुसमाहितः ॥५२

४५. दे1.8.9 म1 मुवें. मुए. मुब. पुस्तकेषु ४५-४६ श्लोकयोर्व्यत्यासः; द1 ग्र2 उ1. ⊙. -a) का1 एके (→एकं); ते1 पादं तथै° (→पादमथै°). -b) का1 विन्यस्यौरुणि, दे1.8.9 मुवें. मुए. विष्टभ्योरसि (→विन्यस्योरुणि); दे2 सत्तमः, दे4 सत्तमा (→सत्तमाः); ते1 विन्यस्योरुणि संस्थितः. -c) का1 दे1.4.6.8.9 मुवें. मुए. आसीनार्द्धा°, ते1 आसीतार्धा°, म1 आसतार्द्धचा° (→आसीतार्द्धा°); ब1 इति (→इदं). -d) का1 योगासनमनुत्तमम्.

४६. -a) ब3 दे5.8.9 ग्र2 म1 मुवें. मुए. मुब. पातदले, दे3 ते1 उ1 पदतले, दे4 तु पादेन (→पादतले). -b) ब2 उ1 अन्तरेबहिः (→अन्तरेण हि); दे6 जानुच्चारतरेण हि. -c) ब1 दे1.3.6.8 द1 म1 मुवें. मुए. समासीनात्मनः, ते1 समाहितात्मनः (→समासीतात्मनः).

४७. -a) न1 आदेश-, ग्र2 निदेशे (→अदेश-); उ1 °काल- (→°काले); ते1 योगेऽस्य (→योगस्य); ब3 आदेश-कालो योग्यस्य. -b) दे4.5 ते1 मुवें. मुए. नहि, ग्र2 हि स (→हि न). -c) दे1 अनभ्यासे, दे4 अग्नीभ्यासे, दे6 ग्र2 अग्न्याभ्यासे(ग्र2 °शे), ते1 अस्याभ्यासे, द1 अग्रचाभ्यासे (→अग्न्यभ्यासे); ब1 जले चापि, दे1 जलो वापि, न1 जनाभ्याशे (→जले वापि). -d) का1 ब2.3 दे2.3 शुष्कपत्र-, उ1 शुष्कवर्ण-, दे6 शुक्लपत्रे, दे8 ग्र2 मुवें. मुए. मुब. शुक्लपर्ण-, न1 शुक्लपर्न-, द1 शुष्कपर्णं (→शुष्कपर्ण-); ते1 शुष्कपर्णमयेपि च.

४८. -a) का1 व्याप्त- (→व्याप्ते); द1 म1 उ1 श्मशाने वा, ग्र2 श्मशानान्ते (→श्मशाने च). -b) का1 जीर्णे गोष्ठ-, दे2 ग्र2 जीर्णे गोष्ठे, ते1 जीर्णगोष्ठे, द1 जीर्णगोष्ठ- (→जीर्णगोष्ठे). -c) ब1 दे1.8 मुवें. मुए. संचये, दे2 सतये(?), दे4 न1 समये, दे9 संच(भ) ये, ग्र2 सभयो (→सभये); ब1 दे5 चापि (→वापि). -d) उ1 चैक्य° (→चैत्य°); का1 °संधये, दे3.6 °संजये (→°संचये).

४९. का1 दे1.8.9. ४९c-५०b ⊙. -a) दे6 अशुभं (→अशुभे). -b) का1 दे6 मसकादि° (→मशकादि°); दे4 °समन्विता (→°समन्विते). -c) ते1 नारभेद्, ग्र2 नाचारेद् (→नाचरेद्); न1 देश° (→देह°); ते1 द1 ग्र2 उ1 °संबाधे, दे4 °संबधे (→°बाधे वा).

अतः परम् उ1 अधिकम्—

* एकपादमथैकस्मिन् विन्यस्योरुणसत्तमा ।
आसीतार्द्धासनमिदं योगसाधनमुत्तमम् ॥ (=४५)

५०. दे1.8.9. ab ⊙ (द्र. ४९ पा. वि). -a) का1 दे2 स्वगुप्ते सु-, दे4 सुगुप्तेषु (→सुगुप्ते सु-); दे6 सप्तगुप्तशुभं देशे. -b) ब2 दे2 मुवें. मुए. मुब. च (→तु); दे3.6 गुहाम्पर्वतमस्य तु. -c) दे4 नदीतीरे (→नद्यास्तीरे). -d) ब1 दे4 देवतायतनेथवा.

५१. -a) द1 ग्र2 उ1 शुभे (→गृहे); ब1 दे3.4.8.9 वा शुशुभे, दे6 वासुसुरे, ग्र2 वासं शुभे (→वा सुशुभे); दे1.4.5.8.9 न1 ते1 द1 ग्र2 म1 उ1 देशे (→रम्ये). -b) दे1.8.9 मुवें. मुए. मुब. निर्जने (→विजने); उ1 °र्वजितः (→°र्वजिते). -c) दे1.8.9 ग्र2 मुवें. मुए. योगं, द1 योग- (→योगी). -d) द1 ग्र2 म1 उ1 आसीनो (→आत्मानं); ब1 दे1.3.8.9 न1 मुवें. मुए. यत्- (→मत्-); दे1 -परायणाः,+-परायणं (→-परायणः).

५२. -a) ब1 नमस्कृत्य स, दे1.5.8.9 न1 उ1 मुवें. मुए. नमस्कृत्याथ, दे4 ते1 द1 ग्र2 नमस्कृत्वाथ (→नमस्कृत्य तु). -b) दे1.8 अशिष्यांश्च, दे4 ते1 द1 ग्र2 म1 उ1 तच्छिष्यांश्च, मुवें. मुए. शिष्यांश्चैव (→सशिष्यांश्च); ब3 दे4 म1 विनायकान् (→विनायकम्). -c) ब2 गुरुं चैवानु, दे1 गुरुं चैवेष, दे3 उ1 मुवें. मुए. मुब. गुरुञ्चैव च (→गुरुं चैवाथ); दे5 ग्र2 मां योगं, द1 वा योगी (→मां योगी). -d) ब2 युंजीतस्व, दे2 युंजीतस्तु (→युञ्जीत सु-).

आसनं स्वस्तिकं बद्ध्वा पद्ममर्द्धमथापि वा ।
नासिकाग्रे समां दृष्टिमीषदुन्मीलितेक्षणः ॥५३
कृत्वाऽथ निर्भयः शान्तस्त्यक्त्वा मायामयं जगत् ।
स्वात्मन्यवस्थितं देवं चिन्तयेत् परमेश्वरम् ॥५४
शिखाग्रे द्वादशाङ्गुल्ये कल्पयित्वाऽथ पङ्कजम् ।
धर्मकन्दसमुद्भूतं ज्ञाननालं सुशोभनम् ॥५५
ऐश्वर्याष्टदलं श्वेतं परं वैराग्यकर्णिकम् ।
चिन्तयेत् परमं कोशं कर्णिकायां हिरण्मयम् ॥५६
सर्वशक्तिमयं साक्षाद् यं प्राहुर्दिव्यमव्ययम् ।
ओंकारवाच्यमव्यक्तं रश्मिजालसमाकुलम् ॥५७
चिन्तयेत् तत्र विमलं परं ज्योतिर्यदक्षरम् ।
तस्मिन् ज्योतिषि विन्यस्य स्वात्मानं तदभेदतः ॥५८
ध्यायीताकाशमध्यस्थमीशं परमकारणम् ।
तदात्मा सर्वगो भूत्वा न किंचिदपि चिन्तयेत् ॥५९
एतद् गुह्यतमं ध्यानं ध्यानान्तरमथोच्यते ।
चिन्तयित्वा तु पूर्वोक्तं हृदये पद्ममुत्तमम् ॥६०
आत्मानमथ कर्त्तारं तत्रानलसमत्विषम् ।
मध्ये वह्निशिखाकारं पुरुषं पञ्चविंशकम् ॥६१
चिन्तयेत् परमात्मानं तन्मध्ये गगनं परम् ।
ओंकारबोधितं तत्त्वं शाश्वतं शिवमच्युतम् ॥६२
अव्यक्तं प्रकृतौ लीनं परं ज्योतिरनुत्तमम् ।
तदन्तः परमं तत्त्वमात्माधारं निरञ्जनम् ॥६३   वें. २.११.६३

---

५३. –b) ते$_1$ पद्मंवार्धं°, ग्र$_2$ पद्ममध्य° (→पद्ममर्धं°). –c) का$_1$ ब$_{1.3}$ दे$_{2.3.5}$ ग्र$_2$ उ$_1$ नासिकाग्र-, द$_1$ नासिकाग्रच- (→नासिकाग्रे); द$_1$ ग्र$_2$ उ$_1$ समादृष्टिर्, दे$_4$ समादृष्टि (→समां दृष्टिं). –d) दे$_9$ °क्षणः,+°क्षयः (→°क्षणः).

५४. –a) दे$_4$ त्यक्त्वासी, ते$_1$ द$_1$ म$_1$ त्यक्त्वाशो, ग्र$_2$ उ$_1$ त्यक्ताशो (→कृत्वाथ). –b) का$_1$ त्यक्ता, दे$_4$ तत्तु (→त्यक्त्वा); ग्र$_2$ त्य * मा मयतञ्जगत्. –c) दे$_{3.6}$ आत्मन्य°, दे$_4$ स्वात्मना° (→स्वात्मन्य°); दे$_2$ दैवं (→देवं). –d) ते$_1$ परमेष्ठिनम् (→परमेश्वरम्).

५५. –a) दे$_5$ शिवाग्रे, द$_1$ विश्वतो, उ$_1$ विश्वाग्रे (→शिखाग्रे); ब$_2$ द्वादशाङ्गुले, दे$_6$ द्वादशांगुल्यं (→द्वादशांगुल्ये). –b) दे$_4$ ते$_1$ ग्र$_2$ म$_1$ उ$_1$ कल्पयित्वा तु, द$_1$ कल्पयिश्वानु- (→कल्पयित्वाथ). –d) दे$_1$ ज्ञातनालं, न$_1$ ज्ञानानालं, ते$_1$ ज्ञाननाल-, मुवें. मुए. ज्ञानेनालं (→ज्ञाननालं).

५६. –a) ग्र$_2$ उ$_1$ °दलोपेतं (→°दलं श्वेतं); का$_1$ ऐश्वर्या प्रदलं स्वेतं, दे$_5$ ऐश्वर्या वृषलं श्वेतं. –b) दे$_6$ °धार्मिकं, उ$_1$ °कर्णकं (→°कर्णिकम्). –c) ब$_2$ दे$_{2.3}$ परमं कोषं, न$_1$ ते$_1$ परमाकाशं, दे$_6$ परमं कोपं (?) (→परमं कोशं). –d) ते$_1$ कर्णिकां च (→कर्णिकायां).

५७. –b) द$_1$ तं (→यं); ब$_1$ विदम्, ब$_2$ इदम्, दे$_4$ ते$_1$ ग्र$_2$ उ$_1$ देवम्, दे$_{1.8}$ मुए. दिवम्, दे$_5$ द$_1$ वेदम् (→दिव्यम्). –d) दे$_{1.5.8.9}$ न$_1$ ते$_1$ द$_1$ म$_1$ उ$_1$ मुवें. मुए. रश्मिज्वाला°, दे$_4$ तस्मिन् ज्वाला°, ग्र$_2$ रश्मिमाला° (→रश्मिजाल°).

५८. –a) दे$_2$ चिन्तयेत्वत्र (→चिन्तयेत्तत्र). –b) दे$_2$ यदंतरं, द$_1$ ग्र$_2$ यमक्षयं (→यदक्षरम्). –d) दे$_1$ स्वानंदमप्रभेदतः, दे$_2$ स्वात्मानं तमभेदः, दे$_{3.6}$ स्वात्मानं यदभेदतः, दे$_8$ स्वात्मानन्दमभेदतः, मुवें. मुए. स्वानन्दं मम भेदतः.

५९. –a) ब$_{1.3}$ ग्र$_2$ उ$_1$ ध्यायिताकाश°, ब$_2$ ध्यायेत कोष°, दे$_{1.8}$ मुवें. मुए. मुब. ध्यायीतिकोश°, दे$_3$ ध्यायताकाश°, न$_1$ ध्यायेदाकाश° (→ध्यायीताकाश°). –c) ग्र$_2$ तदा तु, उ$_1$ तदेत्य (→तदात्मा); ते$_1$ सर्वभूतात्मा (→सर्वगो भूत्वा). –d) ब$_2$ इति (→अपि).

६०. –a) का$_1$ दे$_{1.8}$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ मुवें. मुए. मुब. ज्ञानं, दे$_9$ ध्यानं, + ज्ञानं (→ध्यानं). –d) ग्र$_2$ स्वस्तिकं (→हृदये).

६१. ब$_1$. ab ⊙. –a) दे$_{1.8}$ मुवें. मुए. मुब. कांतारं (→कर्त्तारं); दे$_4$ कालानल° (→तत्रानल°); दे$_6$ °समद्विषं, न$_1$ °समद्युतिं, ते$_1$ °समन्वितम्, म$_1$ °समप्रभं (→°समत्विषं); का$_1$ तन्नालातमधिष्ठितं. –d) दे$_5$ सुरुषं (?) (→पुरुषं).

६२. द$_1$ ग्र$_2$ उ$_1$. ab ⊙; दे$_5$. ६२b-६३c ⊙. –b) का$_1$ गहनं, ब$_3$ गगणं (→गगनं). –c) का$_1$ दे$_{1.8}$ न$_1$ °बाधितं (→°बोधितं); का$_1$ चैव (→तत्त्वं); ग्र$_2$ ओङ्कारं बोलिकन्तत्वं. –d) का$_1$ दे$_{1.8}$ मुवें. मुए. उच्यते, न$_1$ ते$_1$ अव्ययं (→अच्युतं).

६३. दे$_5$. abc ⊙ (द्र. ६२ पा. वि.); ते$_1$. cd ⊙. –a) ब$_{1.3}$ दे$_6$ अनन्तं, न$_1$ अव्यक्त (→अव्यक्तं). –b) न$_1$ ज्योति (→ज्योतिर्); ब$_2$ अनन्तरं (→अनुत्तमम्). –c) दे$_4$ सर्वतः (→तदन्तः); न$_1$ ततः परतरं तत्त्वं. –d) दे$_4$ म$_1$ अनाधारं, न$_1$ आत्मारामं (→आत्माधारं).

वें.२.११.६४ ध्यायीत तन्मयो नित्यमेकरूपं महेश्वरम् ।
विशोध्य सर्वतत्त्वानि प्रणवेनाथवा पुनः ॥६४
संस्थाप्य मयि चात्मानं निर्मले परमे पदे ।
प्लावयित्वात्मनो देहं तेनैव ज्ञानवारिणा ॥६५
मदात्मा मन्मयो भस्म गृहीत्वा ह्यग्निहोत्रजम् ।
तेनोद्धृत्य तु सर्वाङ्गमग्निरित्यादिमन्त्रतः ।
चिन्तयेत् स्वात्मनीशानं परं ज्योतिः स्वरूपिणम् ॥६६
एष पाशुपतो योगः पशुपाशविमुक्तये ।
सर्ववेदान्तसारोयमत्याश्रममिति श्रुतिः ॥६७
एतत् परतरं गुह्यं मत्सायुज्योपपादकम् ।
द्विजातीनां तु कथितं भक्तानां ब्रह्मचारिणाम् ॥६८
ब्रह्मचर्यमहिंसा च क्षमा शौचं तपो दमः ।
संतोषः सत्यमास्तिक्यं व्रताङ्गानि विशेषतः ॥६९
एकेनाप्यथ हीनेन व्रतमस्य तु लुप्यते ।
तस्मादात्मगुणोपेतो मद्व्रतं वोढुमर्हति ॥७०
वीतरागभयक्रोधा मन्मया मामुपाश्रिताः ।
बहवोऽनेन योगेन पूता मद्भावमागताः ॥७१

६४. न1. cd ⊙. –a) का1 ध्यायंति, ब2 द1 ध्यायेत, ते1 ध्यायेत्तु (→ध्यायीत); का1 तन्मयं, ब1 दे2 तन्मनो, ब2.3 दे3.6 तन्मना, ते1 तन्मये, ग्र2 तं मयो (→तन्मयो). –b) दे4 एवं (→एक-). –c) ब3 विशोष्य (→विशोध्य). –d) का1 ब1 दे6 प्रणवेणाथवा, ते1 प्रणवेन सहा (?) (→प्रणवेनाथवा).

६५. –a) दे4 संस्थापयित्वा, मुए. संस्थाप्यमपि (→संस्थाप्य मयि); का1 स्वात्मानं (→चात्मानं).–b) का1 न1 निर्मलं, ते1 चिन्मये (→निर्मले); का1 परमं पदं, दे5 परमे पदं (→परमे पदे). –c) का1 पाययित्वात्मनो, ब1 प्लावयित्वात्मना, दे1 पावज्जिवात्मनो, ते1 शोधयित्वात्मनो (→प्लावयित्वात्मनो); दे6 देह (?), ग्र2 देहे (→देहं). –d) का1 तनैवाज्ञान°, दे2 तेनैव** (→तेनैव ज्ञान°).

६६. –a) म1 तदात्मा (→मदात्मा); का1 दे1.3.8.9 मुवें. मुए. मुब. मन्मना (→मन्मयो); ग्र2 भस्मं (→भस्म). –b) का1 दे8.9 ह्यग्निहोत्रकं, दे1 चाग्निहोत्रकं, म1 चाग्निहोत्रजं, मुवें. त्वग्निहोत्रिकम्, मुए. त्वाग्निहोत्रिकम (→ह्यग्निहोत्रजम्). –c) का1 दे1.3.4.8.9 ते1 द1 ग्र2 उ1 मुवें. मुए. मुब. तेनोद्धूलित-, ब1 तेनाधृत्यन्त-, दे2 तेनोद्धृत्यनु-, दे5 म1 तेनोद्धूल्य तु, दे6 तेन्नोद्वर्त्तं तु, न1 तेनाथ्य* तु (→तेनोधृत्य तु). –d) का1 दे1.8 मुवें. मुए. मुब. अग्निरादित्यमन्त्रतः, ब1-3 अग्निरित्यादिमंत्रकैः, दे3.6 अग्निर्विद्यादिमंत्रकैः. –e) का1 ब1 दे2 स्वात्ममीशानं, दे3.6 परमीशानं (→स्वात्मनीशानं). –f) द1 स्वरूपिणे (→स्वरूपिणम्).

६७. –a) द1 एषा (→एष). –b) दे1 पशुपाशरिव, दे6 पशुपाशादि-, न1 पशुपातवि- (→पशुपाशवि-). –c) का1 दे1.8 मुवें. मुए. °मार्गोऽयं (→°सारोयं). –d) ब1-3 दे2.3 ते1 अत्याश्रम-, दे4 मंत्रागामं, दे6 अध्वाश्रम-, उ1 अत्याश्रमं, (→अत्याश्रमं); ब1 दे5.6 ग्र2 म1 श्रुतः, दे3 श्रुतौ, दे9 श्रुतेः, ते1 स्मृतः (→श्रुतिः).

६८. –a) ते1 परतमं (→परतरं). –b). का1 दे1.8.9 मुवें. मुए. मुब. मत्सायुज्यप्रदायकम्, ब2 मत्सायुज्योपदायकं, ब3 मत्सायुज्यो * पादकं, दे5 मत्सायुज्योपपातकं, द1 ग्र2 उ1 मत्सायुज्योपपा द(उ1 °त)नं. –c) ब1.3 दे2.3.6 द्विजादीनां (→द्विजातीनां). –d) दे4 ग्र2 म1 उ1 ब्रह्मवादिनां (→ब्रह्मचारिणाम्).

६९. दे1.8.9. ६९d-७० a ⊙ (द्र. सं.) –b) दे2 क्षमां (→क्षमा); दे4 द1 ग्र2 म1 उ1 शान्तिस् (→शौचं). –c) दे3 आस्तिक्ये (→आस्तिक्यं).

७०. दे1.8.9. a ⊙ (द्र. ६९ पा. वि.). –a) का1 येन केनाथ, ते1 एकेनात्यर्थ-, द1 एतेनाप्यथ, ग्र2 एकेनाप्यधि-, उ1 एतेष्वेकेन (→एकेनाप्यथ); द1 भग्नेन (→हीनेन). –b) का1 व्रतं तस्य (→व्रतमस्य); दे1.8.9 मुवें. मुए. न (→तु); ते1 म1 व्रतमप्यति (म1 °व) लुप्यते. –c) न1 एतद्, ते1 आद्य- (→आत्म-); ग्र2 चेत्, द1 उ1 -पेतं (→-पेतो). –d) ब2 मदुक्तं, ब3 यदुक्तं, ब3 यदुक्तं, दे3-6 मद्वृत्तं, दे4 सद्वृत्तं, द1 ग्र2 उ1 तद्वृतं (→मद्व्रतं); का1 दे2 बोढुमर्हसि, ब1-3 दे2 वोढुमर्हति, ते1 सोढुमर्हति, द1 ग्र2 बोढुमर्हथ, उ1 कमर्त्तुर्हथ (→वोढुमर्हति).

७१. –a) दे1 क्रोध (→क्रोधा). –b) का1 दे4 मुवें. मुए. -मन्यया, ब3 दे1 मन्मयो, दे6 मन्माया (→मन्मया). –c) दे6 बभूवोनेन, ते1 बहवो ज्ञान- (→बहवोऽनेन); द1 ग्र2 म1 उ1 बहवोज्ञानतपसा. –d) दे1.8.9 मुवें. मुए. मुब. °भावयोगतः, दे4 °भावतां गताः, ते1 °भावभाविताः (→°भावमागताः).

ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् ।
ज्ञानयोगेन मां तस्माद् यजेत परमेश्वरम् ॥७२

अथवा भक्तियोगेन वैराग्येण परेण तु ।
चेतसा बोधयुक्तेन पूजयेन्मां सदा शुचिः ॥७३

सर्वकर्माणि संन्यस्य भिक्षाशी निष्परिग्रहः ।
प्राप्नोति मम सायुज्यं गुह्यमेतन्मयोदितम् ॥७४

अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च ।
निर्ममो निरहंकारो यो मद्भक्तः स मे प्रियः ॥७५

संतुष्टः सततं योगी यतात्मा दृढनिश्चयः ।
मय्यर्पितमनो बुद्धिर्यो मद्भक्तः स मे प्रियः ॥७६

यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ।
हर्षामर्षभयोद्वेगैर्मुक्तो यः स हि मे प्रियः ॥७७

अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः ।
सर्वारम्भपरित्यागी भक्तिमान् यः स मे प्रियः ॥७८

तुल्यनिन्दास्तुतिमौनी संतुष्टो येन केनचित् ।
अनिकेतः स्थिरमतिर्मद्भक्तो मामुपैष्यति ॥७९

सर्वकर्माण्यपि सदा कुर्वाणो मत्परायणः ।
मत्प्रसादादवाप्नोति शाश्वतं परमं पदम् ॥८०

चेतसा सर्वकर्माणि मयि संन्यस्य मत्परः ।
निराशीर्निर्ममो भूत्वा मामेकं शरणं व्रजेत् ॥८१

त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः ।
कर्मण्यभिप्रवृत्तोऽपि नैव तेन निबध्यते ॥८२

निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः ।
शारीरं केवलं कर्म कुर्वन्नाप्नोति तत्पदम् ॥८३ वें.२.११.८४

---

७२. –c) का1 ययेत, दे1 यज्येत, दे2 यजेतत्, दे4 यजते, दे3.6 युज्येत, ते1 यजन्ते, उ1 यतेत (→यजेत).

७३. –a) ब2 तथैव (→अथवा). –c) ब1 योग° (→बोध°). –d) का1 पूजयन् (→पूजयेन्).

७४. –b) ते1 निष्पतिग्रहः, ग्र2 निष्प्रतिग्रहः (→निष्परिग्रहः). –c) का1 प्राप्तोपि, न1 मुद्रे. प्राप्नोती (→प्राप्नोति). –d) ब1 गुह्यन्येतन् (→गुह्यमेतन्).

७५. द1 ग्र2. ab ⊙; म1, पुस्तके b,c चरणयोर्व्यत्यासः. –a) ब1 यद्वेष्टा, दे6 अद्वेष्टः (→अद्वेष्टा). –b) ब1 दे1.8.9 उ1 मुद्रे. मुए. मैत्री (→मैत्रः); का1 ब3 दे1.2.8 न1 म1 -करण (→करुण). –d) दे4.5 मे भक्तः (→मद्भक्तः).

७६. द1 ग्र2. ७६–७८ ⊙ (द्र. सं.); म1. cd ⊙. –a) दे6 स तस्यः (→संतुष्टः); उ1 सत्तमो (→सततं); दे2 योगो (→योगी). –d) ब3 दे4.5 उ1 मे भक्तः, न1 मद्भक्तं (→मद्भक्तः).

७७. द1 ग्र2. ⊙ (द्र. ७६ पा. वि.); दे1.8.9 ७७a–८०b ⊙; म1. ab ⊙. –a) न1 यमां नो (→यस्मान्नो); ब1 लोकः, ते1 लोका (→लोको). –c) का1 हर्षशोक° (→हर्षामर्ष°); ते1 हर्षाहिर्षाशयोद्वेगैर्. –d) ब3 दे3 युक्तो यः, न1 युक्तो हि (→मुक्तो यः); दे5 ते1 म1 च (→हि).

७८. दे1.8.9 द1 ग्र2. ⊙. –a) ब1 दे3 दक्षः (→दक्ष), –b) न1 गतव्यथा (→गतव्यथः).

७९. दे1.8.9. ⊙. –c) दे2.4-6 अनिकेत- (→अनिकेतः); न1 °मतिं (→°मतिर्). –d) का1 दे4.6 न1 द1 ग्र2 म1 उ1 उपेष्यति (का1 °ते) (→उपैष्यति).

८०. दे1.8.9. ab ⊙. –b) दे3.6 मध्यापाश्रयः, ते1 तत्परायणः (→मत्परायणः). –c) दे1.8 तत् (→मत्). –d) ब1-3 दे2.3.6 तत्परं पदं, म1 पदमव्ययम् (→परमं पदम्).

८१. –a) दे6 चेतः सार्वेसं (→चेतसा सर्व-); ब3 °कामानि (→°कर्माणि). –b) दे4.6.8.9 द1 म1 सन्यस्य, ग्र2 विन्यस्य (→संन्यस्य); ते1 तत्पर, उ1 मत्परं (→मत्परः). –d) दे3.6 मामेव (→मामेकं); दे5 व्रज (→व्रजेत्).

८२. –a) दे1.6 त्यक्ता (→त्यक्त्वा); का1 दे6 °फलं (→°फला-). –c) का1 ब2.3 दे1.5.6.9 द1 ग्र2 उ1 मुद्रे. मुए. मुब. कर्मण्यपि, ब1 कर्मण्येऽपि, दे4 कर्माण्यभि-, दे9 **** (→कर्मण्यभि-). –d) दे6 विवध्यते, ते1 निरुध्यते द1 ग्र2 उ1 स बध्यते (→निबध्यते); दे1.8 मुद्रे. मुए. कर्मणा तेन बुध्यते, दे1 कर्मणा तेन ***, न1 न च कर्मसु बध्यते.

८३. –a) दे1 ग्र2 निराशीर्यत°, दे8.9 निराशीजित° (→निराशीर्यत°). –b) दे2 त्यक्तं (→त्यक्त-). –c) का1 ग्र2 शरीरं (→शारीरं); दे3 कंवलं (→केवलं). –d) दे1 तस्य हि, दे8 तत्पदं, + किल्विषं, दे9 ते1 किल्विषं, म1 उ1 सत्पदम्, (→तत्पदम्).

वें. २.११.८४ यदृच्छालाभतुष्टस्य द्वन्द्वातीतस्य चैव हि ।
कुर्वतो मत्प्रसादार्थं कर्म संसारनाशनम् ॥८४
मन्मना मन्नमस्कारो मद्याजी मत्परायणः ।
मामुपैष्यति योगीशं ज्ञात्वा मां परमेश्वरम् ॥८५
मद्बुद्धयो मां सततं बोधयन्तः परस्परम् ।
कथयन्तश्च मां नित्यं मम सायुज्यमाप्नुयुः ॥८६
एवं नित्याभियुक्तानां मायेयं कर्मसान्वगम् ।
नाशयामि तमः कृत्स्नं ज्ञानदीपेन भास्वता ॥८७
मद्बुद्धयो मां सततं पूजयन्तीह ये जनाः ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥८८
येऽन्ये च कामभोगार्थं यजन्ते ह्यन्यदेवताः ।
तेषां तदन्तं विज्ञेयं देवतानुगतं फलम् ॥८९
ये चान्यदेवताभक्ताः पूजयन्तीह देवताः ।
मद्भावनासमायुक्ता मुच्यन्ते तेऽपि भावतः ॥९०
तस्मादनीश्वरानन्यांस्त्यक्त्वा देवानशेषतः ।
मामेव संश्रयेदीशं स याति परमं पदम् ॥९१
त्यक्त्वा पुत्रादिषु स्नेहं निःशोको निष्परिग्रहः ।
यजेच्चामरणाल्लिङ्गे विरक्तः परमेश्वरम् ॥९२

---

८४. ब1. ८४a-९४ d ⊙; दे1. ab ⊙. –a) दे4.5.8.9 न1 म1 मुवें. मुए. मुब. °तृप्तस्य, दे6 °दुष्टस्य, ते1 द1 °संतुष्टो (→°तुष्टस्य). –b) ते1 द्वन्द्वातीतस्सदैव हि. –c) दे6 उ1 कुर्वते (→कुर्वतो); मुब. -प्रसादार्थैः (→-प्रसादार्थं).

८५. ब1. ⊙ (द्र. ८४ पा. वि). –a) दे1 मन्माना, ग्र2 मन्मनो (→मन्मना); दे6 मन्नभोक्तोरो (?) (→मन्नमस्कारो). –b) का1 दे8 मय्याजी, ते1 मद्धचायी, उ1 मद्यातो (→मद्याजी); द1 °परायणाः (→°परायणः). –c) का1 दे4-6 न1 द1 ग्र2 म1 उ1 मामुपेष्यति, दे1 मामुपाश्यन्ति, दे8.9 मामुपास्यन्ति, मुवें. मुए. मामुपास्यति (→मामुपैष्यति); का1 ब2.3 दे2.3.5.6 न1 ते1 मुवें. मुए. मुब. योगीशो, दे1 योगीशी, दे8.9 योगीशा (→योगीशं).

८६. ब1. ⊙ (द्र. ८४ पा. वि.); का1 दे6 ८६-८७ ⊙; दे2 द1 ग्र2 उ1. ८६ ab ⊙. –a) दे1.8.9 मुवें. मुए. मुब. मामेवाहुः परं ज्योतिर्, दे4 बुद्धुद्धयो (?)मां सततं. –c) ते1 सत्वं (→नित्यं); न1 अथ यन्तश्च मां नित्यं, ग्र2 मथयञ्च ममन्नित्यं. –d) न1 आप्नुयात् (→आप्नुयुः); ते1 मत्सायुज्यमवाप्नुयुः.

८७. का1 ब1 दे6. ⊙; दे1.8.9.८७b -८८ c ⊙. –a) दे4 एतन् (→एवं). –b) ब2 ममेयं काममानुगं, ब3 मुवें. मुए. मुब. मामेयं, कर्मसात्वगम् दे4 द1 ग्र2 म1 उ1 कुर्वतां धर्ममात्मगं (ग्र2 °कं), दे2 आपर्यकमसात्मगं(?), दे3 मामेवं कर्मसानुगं, दे5 मदीयं कर्मकुर्वतां, न1 भजतां प्रीतिपूर्वकं, ते1 मयि कर्मसमाश्रये.

८८. ब1 दे5. ⊙; दे1.8.9. abc ⊙. –b) दे4 पूजयंतश्च, ग्र2 पूजयन्ति हि (→पूजयन्तीह); दे2 ते जनाः, द1 योस्सदा, ग्र2 उ1 ये सदा (→ये जनाः).

दे4. b, c मध्ये ८६c-८८b अधिकरूपेणावृत्तः —

८९. ब1. ⊙ (द्र. ८४ पा. वि.); दे4. ८९c-९०d ⊙. –a) ब2 °सोमार्थं (→°भोगार्थं); दे4 ते1 द1 ग्र2 म1 उ1 मुब. ये चान्ये कामभोगार्थं, दे1.8.9 मुवें. मुए. ये चान्ये भोगकर्मार्थी. –b) दे2 सर्व-, दे6 तस्य (→ह्यन्य-); दे6 देवता (→-देवताः); का1 जपं ते देवतान्तरं. –c) का1 दे2.5 न1 म1 तदन्तवत् (दे2 °व)ज्ञेयं, ब2.3 तदन्तरं ज्ञेयं, दे3 तदेव विज्ञेयं, दे6 तु तदवज्ञेयं, ते1 तत्तत्प्रज्ञेयं, ग्र2 च तावत् ज्ञेयं, उ1 तदन्नवत्ज्ञेयं (→तदन्तं विज्ञेयं). –d) ग्र2 [अ]नुत्तमं, उ1 [आ]राधने, (→[अ]नुगतं).

९०. ब1 दे4. ⊙. –a) दे5.9 द1 म1 उ1 मुवें. मुब. ये चान्ये, न1 येप्यन्य- (→ये चान्य-); दे1 भक्त्या, दे8.9 भक्ता (→-भक्ताः). –b) न1 भाविताः (→देवताः). –d) दे1.5.8.9 मुवें. मुए. मुब. मानवाः, उ1 संस्मृतेः (→भावतः); ते1 मुच्यते ते स्वभावतः.

९१. ब1. ⊙; दे1.8. ९१c-९३b ⊙. –a) का1 ब3 दे2.3 विश्वेश्वराद (ब3 दे3 °न)न्यांस्, ब2 वि * श्वरान्यांस्, द1 अनीश्वरस्त्वन्यांस् (→अनीश्वरानन्यांस्); दे1.5.6.8.9 ग्र2 मुवें. मुए. मुब. तस्माद्विन (दे1 °ने)श्वरानन्यांस् (ग्र2 °न्यान्), न1 तस्मात्तेनीश्वराननास्. –d) ते1 परमां गतिम् (→परमं पदम्).

९२. ब1 दे1.8. ⊙; दे9. ९२a–९३b ⊙. –a) दे6 त्यक्ता, न1 स्त्यक्त्वा (→त्यक्त्वा); का1 दे2 स्नेहात्, ब3 दे3.5 स्नेह-, दे6 स्नेहा (→स्नेहं). –b) ते1 द1 ग्र2 उ1 विशोको (ग्र2 °के) (→निःशोको). –c) दे4 न1 ते1 द1 ग्र2 म1 उ1 आमरणात् (न1 म1 °णां) (→चामरणात्); ब2.3 दे4.5 ते1 द1 ग्र2 उ1 मुवें. मुए. मुब. लिङ्गं (→लिङ्गे).

येऽर्चयन्ति सदा लिङ्गं त्यक्त्वा भोगानशेषतः ।
एकेन जन्मना तेषां ददामि परमैश्वरम् ।।९३
परानन्दात्मकं लिङ्गं केवलं सन्निरञ्जनम् ।
ज्ञानात्मकं सर्वगतं योगिनां हृदि संस्थितम् ।।९४
ये चान्ये नियता भक्ता भावयित्वा विधानतः ।
यत्र क्वचन तल्लिङ्गमर्चयन्ति महेश्वरम् ।।९५
जले वा वह्निमध्ये वा व्योम्नि सूर्येऽथ वाऽन्यतः ।
रत्नादौ भावयित्वेशमर्चयेल्लिङ्गमैश्वरम् ।।९६
सर्वं लिङ्गमयं ह्येतत् सर्वं लिङ्गे प्रतिष्ठितम् ।
तस्माल्लिङ्गेऽर्चयेदीशं यत्र क्वचन शाश्वतम् ।९७
अग्नौ क्रियावतामप्सु व्योम्नि सूर्ये मनीषिणाम् ।
काष्ठादिष्वेव मूर्खाणां हृदि लिङ्गं तु योगिनाम् ।।९८
यद्यनुत्पन्नविज्ञानो विरक्तः प्रीतिसंयुतः ।
यावज्जीवं जपेद् युक्तः प्रणवं ब्रह्मणो वपुः ।।९९
अथवा शतरुद्रीयं जपेदामरणाद् द्विजः ।
एकाकी यतचित्तात्मा स याति परमं पदम् ।।१००
वसेद् वामरणाद् विप्रो वाराणस्यां समाहितः ।
सोऽपीश्वरप्रसादेन याति तत् परमं पदम् ।।१०१　वें२.११.१०२

---

९३. ब$_1$ दे$_4$. ⊙; दे$_{1.8.9}$. ab ⊙. –a) म$_1$ लिङ्गे (→लिङ्गं). –b) दे$_6$ त्यक्ता (→त्यक्त्वा); न$_1$ भोगान्यशेषतः (→भोगानशेषतः). –c) का$_1$ एतेन, द$_1$ एकोन (→एकेन); ग्र$_2$ म$_1$ मुक्ति (→तेषां). –d) द$_1$ ग्र$_2$ म$_1$ ददाति (→ददामि); का$_1$ न$_1$ ते$_1$ द$_1$ ग्र$_2$ म$_1$ परमेश्वरं (म$_1$ °रः), दे$_{1.8.9}$ मुवें. मुए. मुब. परमं पदम्, उ$_1$ परमां गतिं (→परमैश्वरं).

९४. ब$_1$ दे$_4$ द$_1$ ग्र$_2$. ⊙. –a) दे$_{1.8.9}$ परमात्मा सदा लिंगं, दे$_2$ परनिन्दात्मकं लिंगं, न$_1$ परनंदा सदा लिंगं, म$_1$ परानन्दात्मीकं लिंगं, मुवें. मुए. मुब. परात्मनः सदा लिंगं. –b) का$_1$ दे$_6$ स निरंजनं, दे$_{1.8.9}$ मुवें. मुए. मुब. रजतप्रभम् (→सन्निरञ्जनम्). –d) का$_1$ ब$_{2.3}$ दे$_{3.6}$ ते$_1$ म$_1$ हृदये स्थितम्, दे$_2$ हृदयस्थितम् (→हृदि संस्थितम्).

९५. ब$_1$ दे$_4$ द$_1$ ग्र$_2$. ⊙; दे$_2$. d ⊙. –a) ब$_3$ नियतं (→नियता); दे$_1$ ते$_1$ भक्ताः (→भक्ता). –b) दे$_5$ अर्चयित्वा, उ$_1$ भावयुक्ता (→भावयित्वा). –c) दे$_6$ यत्रं (→यत्र); उ$_1$ यत्र तत्काचनं लिंगं. –d) दे$_6$ सर्व्वयंति (→अर्च्चयन्ति).

९६. दे$_2$ द$_1$ ग्र$_2$. ⊙. –b) ब$_{2.3}$ व्योम्नि सूर्येऽथवा पुनः, दे$_{1.8.9}$ मुवें. मुए. मुब. व्योम्नि सूर्येऽप्यथान्यतः, दे$_6$ न$_1$ व्योम्नि सूर्यो (न$_1$ °र्या°) थवान्यतः, म$_1$ वायौ सूर्येथ वान्यतः, उ$_1$ सूर्ये वा व्योम्नि वाग्यतः. –c) का$_1$ तत्र यो, ब$_1$ रत्नाद्ये, ब$_{2.3}$ दे$_6$ रत्नाद्ये, दे$_5$ म$_1$ उ$_1$ रत्नाद्यैर्, न$_1$ रं नाज्ञे (?), ते$_1$ रत्नाद्वा (→रत्नादौ); ब$_{2.3}$ भा( ब$_3$ भ)वयित्वैनं (→भावयित्वेशं). –d) ब$_2$ न$_1$ अर्चयत् (→अर्चयेत्); दे$_{1.8.9}$ ईश्वरं (→ऐश्वरं).

९७. द$_1$ ग्र$_2$. ⊙. –a) का$_1$ ब$_1$ दे$_{1-6.8}$ न$_1$ म$_1$ उ$_1$ मुवें. मुए. मुब. सर्व- (→सर्वं). –b) ब$_1$ सर्वं लिङ्ग-, ब$_2$ दे$_{1.4.8.9}$ म$_1$ सर्वलिंगे (→सर्वं लिङ्गे). –c) दे$_6$ तस्मिर्लिलगे (→तस्माल्लिंगे). –d) ब$_1$ दृष्टं (→यत्र).

९८. –a) ब$_1$ क्रियामतावप्सु (?), न$_1$ क्रियावता मे स्यु (→क्रियावतामप्सु). –b) द$_1$ सूर्य- (→सूर्ये); दे$_5$ मनीषीभिः (→मनीषिणाम्). –c) ग्र$_2$ कष्ठादिसेव, उ$_1$ काष्ठादिष्वे च (→काष्ठादिष्वेव); का$_1$ दे$_4$ मूर्खानां, दे$_2$ मूर्खाना (→मूर्खाणां). –d) ब$_3$ लिङ्गस्तु, दे$_4$ सं ेषु, ग्र$_2$ लिंगे च, द$_1$ म$_1$ उ$_1$ लिङ्गेषु (→लिङ्गंतु).

९९. दे$_6$. ९९c-१०१b ⊙. –a) ब$_{2.3}$ दे$_{3.6}$ यद्यदुत्पन्न°, ते$_1$ यदनुत्पन्न°, द$_1$ ये ह्यनुत्पन्न° (→यद्यनुत्पन्न°); दे$_1$ °विज्ञाने, ते$_1$ °विज्ञान (→°विज्ञानो). –b) ब$_3$ दे$_5$ विविक्तः (→विरक्तः); द$_1$ प्रति° (→प्रीति°). –c) ब$_1$ जपेदुक्तः, ब$_2$ जपत्युक्तं, दे$_{2.3}$ जपेक्तं, ते$_1$ जपेद्यस्तु, ग्र$_2$ जपेत्युक्तः (→जपेद्युक्तः).

ते$_1$. पुस्तके b, c मध्ये अधिकम्—
वसेदामरणाद्विप्रो वाराणस्यां समं हितः (तत्) (=१०१ab)
उ$_1$ पुस्तके ९९ b, c मध्ये अधिकम्—
एवन्नित्याभियुक्तानां　　　धर्ममात्मगं ।

१००. दे$_6$. ⊙(द्र. ९९ पा. वि.). –b) का$_1$ तमयोद्धारणात्, उ$_1$ न$_1$ द$_1$ ग्र$_2$ जपेदामरणं, दे$_1$ जपेदामरना, ते$_1$ भवेदामरणं (→जपेदामरणाद्); का$_1$ ब$_{2.3}$ द$_1$ उ$_1$ द्विजाः (→द्विजः). –c) दे$_{1.8.9}$ मुब. जितचित्ता (दे$_1$ °त्ता) त्मा (→यतचित्तात्मा). –d) ब$_1$ स जाति (→स याति); ब$_2$ ते$_1$ परमां गतिम् (→परमं पदम्).

१०१. दे$_6$ ते$_1$ द$_1$ ग्र$_2$. ⊙. –a) ब$_{2.3}$ दे$_{4.5}$ न$_1$ म$_1$ वसेद्, दे$_{3.9}$ वसेद्वा, + वसेच्च, दे$_8$ मुवें. मुए. मुब. वसेच्च (→वसेद्वा); ब$_{1-3}$ दे$_{1.3.5.8.9}$ मुवें. मुए. मुब. विप्रा, न$_1$ विप्राद् (→विप्रो); उ$_1$ अथवा निवसेन्नित्यं. –b) उ$_1$

बे२.११.१०२ तत्रोत्क्रमणकाले हि सर्वेषामेव देहिनाम् ।
ददाति तत् परं ज्ञानं येन मुच्येत बन्धनात् ।।१०२
वर्णाश्रमविधिं कृत्स्नं कुर्वाणो मत्परायणः ।
तेनैव जन्मना ज्ञानं लब्ध्वा याति शिवं पदम् ।।१०३
येऽपि तत्र वसन्तीह नीचा वा पापयोनयः ।
सर्वे तरन्ति संसारमीश्वरानुग्रहाद् द्विजाः ।।१०४
किन्तु विघ्ना भविष्यन्ति पापोपहतचेतसाम् ।
धर्मं समाश्रयेत् तस्मान्मुक्तये नियतं द्विजाः ।।१०५
एतद् रहस्यं वेदानां न देयं यस्य कस्य चित् ।
धार्मिकायैव दातव्यं भक्ताय ब्रह्मचारिणे ।।१०६

व्यास उवाच ।❀
इत्येतदुक्त्वा भगवानात्मयोगमनुत्तमम् ।
व्याजहार समासीनं नारायणमनामयम् ।।१०७
मयैतद् भाषितं ज्ञानं हितार्थं ब्रह्मवादिनाम् ।
दातव्यं शान्तचित्तेभ्यः शिष्येभ्यो भवता शिवम् ।।१०८
उक्त्वैवमथ योगीन्द्रानब्रवीद् भगवानजः ।
हिताय सर्वभक्तानां द्विजातीनां द्विजोत्तमाः ।।१०९
भवन्तोऽपि हि मज्ज्ञानं शिष्याणां विधिपूर्वकम् ।
उपदेक्ष्यन्ति भक्तानां सर्वेषां वचनान्मम ।।११०

---

विमुक्तये (→समाहितः). –d) म1 मत् (→तत्); का1 स याति तत्परं पदम्.

**१०२.** –a) द1 तत्रात्क्रमेण (→तत्रोत्क्रमण-); दे6 °काले (न) हि, न1 °कालेपि, ते1 °कालेषु (→°काले हि). –b) ते1 पाप- (→एव). –c) दे4.5 न1 ते1 द1 ग्र2 उ1 ददामि (→ददाति); का1 दे8.9 मुवें. मुए. मुब. परमं, म1 यत्परं (→तत्परं); दे2 ज्ञान- (→ज्ञानं).

**१०३.** –a) न1 ग्र2 °विधं (→°विधिं). –b) दे6 कुर्वाणि (→कुर्वाणो); द1 °परायणाः (→°परायणः). –c) दे1 तेन ये (→तेनैव). –d) ब3 लं*, दे9 लब्धा (→लब्ध्वा); ब2 ते1 उ1 परं (→शिवं).

**१०४.** –b) का1 नीचो, दे1 नीचां (→नीचा); ब2 दे1.4.5.8.9 न1 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. वै (→वा). –c) ते1 तरति (→तरन्ति).

**१०५.** उ1. १०५b-१०६ d ⊙. –a) दे1.2.8.9 किंनु (→किन्तु); का1 विप्र (→विघ्ना). –b) दे6 पापापहत° (→पापोपहत°); का1 दे3-6 म1 °चेतसः (→°चेतसाम्). –c) दे1.8.9 मुवें. मुए. मुब. धर्मान् (→धर्मं); का1 समाश्रयंत्तस्मान्, न1 समाश्रमेत्तस्मान्, ते1 समाश्रयेन्नित्यं, ग्र2 समाश्रयेत्तस्यां (→समाश्रयेत्तस्मान्). –d) दे1.4.5.8.9 न1 ते1 द1 ग्र2 म1 मुवें. मुए. मुब. सततं (→नियतं).

**१०६.** –a) दे3.5.6 देवानां (→वेदानां). –b) ब1 दे3 य * (→यस्य). –d) द1 ग्र2 भक्ताया (→भक्ताय); दे1 ब्रह्मचारिणो, दे5 व्रतचारिणे (→ब्रह्मचारिणे).

१०६ श्लोकात्परं न1 अधिकम्—

इति श्रीकूर्मपुराणे ईश्वरगीतासूपनिषत्सु एकोनषष्टितमोऽध्यायः.

१०६ श्लोकात्परं ते1 अधिकम्—

इति श्रीकूर्मपुराणे उपरिभागे ईश्वरगीतासु उपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे ईश्वरनारायणमहर्षिसंवादे अष्टांगयोगनिरूपणयोगो नाम एकादशोऽध्यायः ।।

❀ न1 उ1. ⊙; दे9 व्यास उ.; द1 ग्र2 श्रीव्यासः; म1 व्यासः.

**१०७.** –a) का1 एते तदुक्त्वा, दे1 इत्येतदुक्ता, दे4.5 एतावदुक्त्वा, न1 ते1 इत्येवमुक्त्वा, ग्र2 तथेतदुक्त्वा, म1 अथैवमुक्त्वा, द1 उ1 तथैतदुक्त्वा (→इत्येतदुक्त्वा). –b) दे1.8.9 मुवें. मुए. शाश्वतो योगमुत्तमम्.

**१०८.** –a) ते1 ममैतद्, द1 मया तद् (→मयैतद्). –b) म1 हिताय (→हितार्थं). –c) का1 शान्तचित्तेभ्यो, दे1 श्यांतयित्वेभ्यः (→शान्तचित्तेभ्यः). –d) न1 भवतां (→भवता); ते1 इशम् (→शिवम्).

**१०९.** द1 ग्र2. १०९d–११०c ⊙. –a) ब2 तदैवं, दे6 उक्तैवं, न1 उक्त्वेवं, म1 उक्त्वैनं (→उक्त्वैवं); दे1.8.9 मुवें. मुए. मुब. अर्थं (→अथ). –b) उ1 हरः (→अजः). –c) का1 ब2.3 दे2.3.6 हितार्थं, दे1 हितायं (→हिताय); उ1 °भूतानां (→°भक्तानां). –d) दे3 द्विजोत्तमां, दे6 द्विजोत्तम (→द्विजोत्तमाः).

**११०.** द1 ग्र2 उ1. abc ⊙. –a) ते1 भवतापि (→भवन्तोऽपि); ब1 हि तज्ज्ञानं, दे4 हिम ज्ञानां (?), दे5 हि यज्ज्ञानं, दे6 हिमज्ञानं, ते1 म1 मम ज्ञानं (→हि मज्ज्ञानं). –b) का1 शिष्यानां (→शिष्याणां). –c) का1 उपदेक्ष्यथ, दे1.4.8 ते1 उपदेश्यन्तु, दे3 उपदेक्षन्तु, दे5 उपदिशंतु, दे9 उपदेशं तु, न1 उपदेष्यं तु, म1 उपादिशन्तु (→उपदेक्ष्यन्ति). –d) का1 द्विजानां (→सर्वेषां); ग्र2 वचनं मम (→वचनान्मम).

अयं नारायणो योऽहमीश्वरो नात्र संशयः ।
नान्तरं ये प्रपश्यन्ति तेषां देयमिदं परम् ॥१११

ममैषा परमा मूर्त्तिर्नारायणसमाह्वया ।
सर्वभूतात्मभूतस्था शान्ता चाक्षरसंज्ञिता ॥११२

ये त्वन्यथा प्रपश्यन्ति लोके भेददृशो जनाः ।
न ते मां संप्रपश्यन्ति जायन्ते च पुनः पुनः ॥११३

ये त्विमं विष्णुमव्यक्तं मां वा देवं महेश्वरम् ।
एकीभावेन पश्यन्ति न तेषां पुनरुद्भवः ॥११४

तस्मादनादिनिधनं विष्णुमात्मानमव्ययम् ।
मामेव संप्रपश्यध्वं पूजयध्वं तथैव हि ॥११५

येऽन्यथा मां प्रपश्यन्ति मत्वेमं देवतान्तरम् ।
ते यान्ति नरकान् घोरान् नाहं तेषु व्यवस्थितः ॥११६

मूर्खं वा पण्डितं वापि ब्राह्मणं वा मदाश्रयम् ।
मोचयामि श्वपाकं वा न नारायणनिन्दकम् ॥११७

तस्मादेष महायोगी मद्भक्तैः पुरुषोत्तमः ।
अर्चनीयो नमस्कार्यो मत्प्रीतिजननाय हि ॥११८

एवमुक्त्वा समालिङ्ग्य वासुदेवं पिनाकधृक् ।
अन्तर्हितोऽभवत् तेषां सर्वेषामेव पश्यताम् ॥११९

नारायणोऽपि भगवांस्तापसं वेषमुत्तमम् ।
जग्राह योगिनः सर्वांस्त्यक्त्वा वै परमं वपुः ॥१२० वें२.११.१२१

---

**१११.** ग्र$_2$. १११d-११६a ⊙ (द्र. सं.). –a) का$_1$ दे$_{2.5}$ अहं, दे$_{3.9}$ स्वयं (→अयं); दे$_{1.8}$ मुवें. मुए. मुब. योऽसौ (→योऽहं). –c) दे$_1$ यं (→ये). –d) उ$_1$ देवं (→देयं).

**११२.** ग्र$_2$. ⊙ (द्र. १११ पा. वि.). –a) उ$_1$ मुक्तिर्- (→मूर्त्तिर्). –b) ब$_1$ °समाश्रिया, न$_1$ °समाश्रया (→°समाह्वया). –c) का$_1$ ब$_{1-3}$ दे$_{2.3.6}$ °भूता सा, दे$_6$ °संस्था सा (→°भूतस्था). –d) दे$_{1.8.9}$ म$_1$ मुवें. मुए. मुब. °संस्थिता (→°संज्ञिता).

**११३.** ग्र$_2$. ⊙ (द्र. १११ पा. वि.); ब$_1$. bc ⊙; दे$_{1.8.9}$. cd ⊙. –a) दे$_{1.8.9}$ मुवें. मुए. मुब. येऽन्यथा मां (→ये त्वन्यथा); म$_1$ प्रविश्यंति (→प्रपश्यन्ति). –c) ब$_3$ म$_1$ तेषां सं-, न$_1$ ते तत्त्वं, मुवें. मुए. मुब. ते मुक्ति (→ते मां सं-); का$_1$ न ते मां प्रपश्यंति न.

**११४.** ग्र$_2$. ⊙ (द्र. १११ पा. वि.). –a) दे$_{1.8.9}$ मुवें. मुए. मुब. त्वेनं, न$_1$ त्वष्टुं (→त्विमं). –b) दे$_4$ न$_1$ म$_1$ उ$_1$ वाम-, दे$_1$ (च) मां च, दे$_{8.9}$ मुवें. मुए. मुब. मां च, ते$_1$ वासु- (→मां वा). –d) उ$_1$ °उद्भवाः (→°उद्भवः).

**११५.** ग्र$_2$. ⊙ (द्र. १११ पा. वि.); दे$_6$. ११५c-११७b ⊙. –a) का$_1$ विष्णुना-, म$_1$ मामेवं (→विष्णुमा-). –c) दे$_{1.8.9}$ ममैवं (→मामेव). –d) दे$_{1.3.9}$ द$_1$ उ$_1$ मुवें. मुए. मुब. च (→हि).

११५ श्लोकात्परं उ$_1$ अधिकम्—

* द्विजातीनां द्विजोत्तमाः ( = १०९d)

भवन्तोवहिता ज्ञानं शिष्याणां विधिपूर्वकम् । ( = ११०ab)

**११६.** ग्र$_2$. a ⊙ (द्र. १११ पा. वि.). –a) दे$_5$ उ$_1$ ये यथा (→येऽन्यथा); ब$_{1.2}$ दे$_{1-5.8.9}$ न$_1$ मुवें. मुए. मुब. सं- (→मां). –b) का$_1$ मत्वेनं, ब$_{1.2}$ दे$_{2.5}$ न$_1$ ग्र$_2$ उ$_1$ मुवें. मुए. मत्त्वैवं, दे$_1$ मन्वेदं, दे$_{3.8.9}$ मत्वेदं, ते$_1$ मत्वैनं (→मत्वेमं); दे$_5$ वेद° (→देव°).

**११७.** –b) ते$_1$ ब्रह्मघ्नं (→ब्राह्मणं); न$_1$ च (→वा). –c) का$_1$ दे$_4$ स्वपाकं वा, दे$_6$ श्वपाकश्च (→श्वपाकं वा). –d) का$_1$ नारायणपरायणम्, ब$_2$ मुब. नारायणविचिन्तकं, दे$_{1.6.8.9}$ म$_1$ मुए. नारायणमनिन्दकं, ग्र$_2$ नारायण न निन्दकं.

**११८.** –a) का$_1$ दे$_{5.6}$ एव, ते$_1$ एवं (→एष). –b) न$_1$ ते$_1$ द$_1$ ग्र$_2$ म$_1$ मद्भक्तः (→मद्भक्तैः); दे$_{4.5}$ पुरुषोत्तमैः, दे$_6$ पुरुषोत्तमं, ते$_1$ पुरुषोत्तम (→पुरुषोत्तमः). –d) दे$_6$ मत्प्रीतिं, ग्र$_2$ मत्प्रीतिर् (→मत्प्रीति-); दे$_{1.8.9}$ ग्र$_2$ म$_1$ मुवें. मुब. वै (→हि).

**११९.** –a) दे$_6$ उक्ता, ग्र$_2$ उक्तो (→उक्त्वा); दे$_{1.4.5.8.9}$ न$_1$ ते$_1$ मुवें. मुए. मुब. वासुदेवं (म$_1$ °वः), द$_1$ ग्र$_2$ उ$_1$ महादेवं (द$_1$ °वः, ग्र$_1$ °वो) (→समालिग्य). –b) दे$_1$ अलिगाय स, दे$_{4.5}$ न$_1$ ते$_1$ समालिग्य, दे$_{8.9}$ मुवें. मुए. मुब. अलिग्य स (→वासुदेवं); द$_1$ ग्र$_2$ उ$_1$ समालिग्य (ग्र$_2$ °ग) पृथक् पृथक्. –c) ब$_3$ [अ]भवत्येषां, दे$_1$ ते$_1$ भवेत्तेषां, ग्र$_2$ [अ] भवन्तेषां (→ [अ] भवत्तेषां).

**१२०.** –b) ब$_3$ तापसां (→तापसं); का$_1$ म$_1$ उ$_1$ व्रतं, ब$_{1-3}$ दे$_{3.6}$ वेशं, द$_1$ ग्र$_2$ वृतं (→वेषं). –c) ग्र$_2$ त्यक्त्वा च, म$_1$ जगृहु (→जग्राह); का$_1$ दे$_2$ योगिनं (→योगिनः); दे$_{4.6}$ द$_1$ ग्र$_2$ म$_1$ सर्वे, न$_1$ सर्वाः (→सर्वान्). –d) दे$_{1.4}$ ते$_1$ द$_1$ म$_1$ त्यक्त्वा च, दे$_5$ त्यक्त्वा यत्, न$_1$ त्वक्त्वा तत्, ग्र$_2$ त्यक्त्वा वा उ$_1$ उवाच (→त्यक्त्वा वै); उ$_1$ वचः (→वपुः).

२.११.१२१ ज्ञातं भवद्भिरमलं प्रसादात् परमेष्ठिनः ।
साक्षादेव महेशस्य ज्ञानं संसारनाशनम् ॥१२१
गच्छध्वं विज्वराः सर्वे विज्ञानं परमेष्ठिनः ।
प्रवर्त्तयध्वं शिष्येभ्यो धार्मिकेभ्यो मुनीश्वराः ॥१२२
इदं भक्ताय शान्ताय धार्मिकायाहिताग्नये ।
विज्ञानमैश्वरं देयं ब्राह्मणाय विशेषतः ॥१२३
एवमुक्त्वा स विश्वात्मा योगिनां योगवित्तमः ।
नारायणो महायोगी जगामादर्शनं स्वयम् ॥१२४
तेऽपि देवादिदेवेशं नमस्कृत्य महेश्वरम् ।
नारायणं च भूतादिं स्वानि स्थानानि भेजिरे ॥१२५
सनत्कुमारो भगवान् संवर्त्ताय महामुनिः ।
दत्तवानैश्वरं ज्ञानं सोऽपि सत्यव्रताय तु ॥१२६
सनन्दनोऽपि योगीन्द्रः पुलहाय महर्षये ।
प्रददौ गौतमायाथ पुलहोऽपि प्रजापतिः ॥१२७
अङ्गिरा वेदविदुषे भरद्वाजाय दत्तवान् ।
जैगीषव्याय कपिलस्तथा पञ्चशिखाय च ॥१२८
पराशरोऽपि सनकात् पिता मे सर्वतत्त्वदृक् ।
लेभे तत्परमं ज्ञानं तस्माद् वाल्मीकिराप्तवान् ॥१२९
ममोवाच पुरा देवः सतीदेहभवाङ्गजः ।
वामदेवो महायोगी रुद्रः किल पिनाकधृक् ॥१३०
नारायणोऽपि भगवान् देवकीतनयो हरिः ।
अर्जुनाय स्वयं साक्षात् दत्तवानिदमुत्तमम् ॥१३१

---

१२१. दे$_{4.5}$. cd ⊙. –a) ब$_{1}$ दे$_{1-3.8.9}$ न$_{1}$ मुवें. मुए. ज्ञानं, दे$_{4}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ लब्धं (म$_{1}$ °धः) (→ज्ञातं); का$_{1}$ भवति, दे$_{2}$ भवंति (→भवद्भिर्); का$_{1}$ दे$_{2}$ परमं, न$_{1}$ अखिलं (→अमलं). –b) म$_{1}$ परमेष्ठिनः, + परमेश्वरः (→परमेष्ठिनः). –c) दे$_{3.6.8}$ ग्र$_{2}$ उ$_{1}$ मुवें. मुए. मुब. देव- (→एव). –d) दे$_{3.6}$ ज्ञानं शासनमासनं.

१२२. दे$_{5}$. ⊙; दे$_{4}$ cd ⊙. –a) ग्र$_{2}$ भजध्वं (→गच्छध्वं); ब$_{1}$ विद्वराः, दे$_{2}$ विक्षण (?), न$_{1}$ विह्लाः, द$_{1}$ ग्र$_{2}$ म$_{1}$ विरजाः, उ$_{1}$ विरताः (→विज्वराः). –b) ते$_{1}$ प्रसादात् (→विज्ञानं).

१२३. दे$_{5}$. ⊙; न$_{1}$. d ⊙. –a) ब$_{2}$ इमं (→इदं); द$_{1}$ ग्र$_{2}$ उ$_{1}$ शिष्याय (→भक्ताय). –b) दे$_{6}$ धार्मिकाय (→धार्मिकाया-); का$_{1}$ धार्मिकाय तपस्विने. –c) दे$_{4}$ द$_{1}$ देवं, न$_{1}$ ज्ञानं (→देयं). –d) ग्र$_{2}$ ब्रह्मणाय (→ब्राह्मणाय).

१२४. न$_{1}$. ⊙; दे$_{5}$. ab ⊙. –a) द$_{1}$ ग्र$_{2}$ उ$_{1}$ तु(→स). –b) का$_{1}$ ब$_{1-3}$ दे$_{2.3.6}$ योगमुत्तमम् (→योगवित्तमः). –d) द$_{1}$ ग्र$_{2}$ उ$_{1}$ जगाम भवनं स्वकं, ते$_{1}$ जगाम सदनं स्वकम्.

१२५. न$_{1}$. ⊙. –a) ब$_{2.3}$ देवाधि° (→देवादि°); दे$_{1.3.8.9}$ मुवें. मुए. मुब. ऋषयस्तेऽपि देवेशं. –b) ते$_{1}$ नमस्कृत्वा (→नमस्कृत्य); दे$_{6}$ महेशवं (→महेश्वरम्). –c) ब$_{3}$ दे$_{6}$ ग्र$_{2}$ भूतादि (→भूतादिं). –d) दे$_{6}$ स्वानि *** (→स्वानि स्थानानि); दे$_{1.8.9}$ मुवें. मुए. लेभिरे, ते$_{1}$ जग्मिरे (→भेजिरे),

१२६. न$_{1}$. abc ⊙. –c) दे$_{1.8.9}$ दत्तवानीश्वरं (→दत्तवानैश्वरं). –d) दे$_{1}$ सत्य*माययौ, दे$_{6}$ सत्यत्वमाय तु, दे$_{9}$ सत्यव्रताय तु, + सत्यत्वमाययौ, मुवें. मुए. मुब. सत्यत्व-माययौ (→सत्यव्रताय तु).

१२७. –a) ग्र$_{2}$ उ$_{1}$ सत्यव्रतोपि (→सनन्दनोऽपि); ब$_{1}$ योगीन्द्र, दे$_{1.2.6}$ ग्र$_{2}$ योगींद्राः (दे$_{2.6}$ °द्रा) (→योगीन्द्रः). –c) दे$_{6}$ प्रदयौ (→प्रददौ).

१२८. –a) दे$_{1}$ अंगिरौ, ग्र$_{2}$ अंगिरो (→अङ्गिरा); ग्र$_{2}$ °विदुषो (→°विदुषे). –b) ब$_{2}$ दे$_{1.8.9}$ द$_{1}$ ग्र$_{2}$ उ$_{1}$ मुवें. मुए. मुब. भारद्वाजाय (→भरद्वाजाय). –c) दे$_{2}$ कपिनस्, न$_{1}$ कपिलास् (→कपिलस्). –d) का$_{1}$ ब$_{1.2}$ दे$_{2.3.6.8.9}$ °शिखाय तु, दे$_{4}$ °शिषाय च, न$_{1}$ °शिखाय सः, ते$_{1}$ °शिखोपि च (→°शिखाय च).

१२९. दे$_{1}$.⊙. –b) ते$_{1}$ वै (→मे); ब$_{2}$ °तत्त्वधृक्, न$_{1}$ ते$_{1}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ °तत्त्ववित्, दे$_{8}$ °सर्वदृक्, दे$_{9}$ °धर्मधृक्, + °सर्वदृक् (→°तत्त्वदृक्). –d) दे$_{4.5}$ ग्र$_{2}$ आत्मवान् (→आप्तवान्).

१३०. का$_{1}$. cd ⊙. –a) न$_{1}$ ते$_{1}$ मामुवाच (→ममोवाच); दे$_{2}$ द$_{1}$ देव (→देवः). –b) दे$_{5}$ सतां देहे, न$_{1}$ सर्वदेह- (→सतीदेह-); दे$_{5}$ भवांशजः, न$_{1}$ -भवोद्भवः, द$_{1}$ -नवांगजः, उ$_{1}$ -भवांगज (→-भवाङ्गजः). –d) दे$_{8}$ मुवें. मुए. काल (→किल); ते$_{1}$ °धृत (→°धृक्).

१३१. –b) द$_{1}$ °नंदनो (→°तनयो). –c) उ$_{1}$ अर्जुनाया (→अर्जुनाय). –d) का$_{1}$ द$_{1}$ उ$_{1}$ उक्तवान् (→दत्तवान्).

यदहं लब्धवाद् रुद्राद् वामदेवादनुत्तमम् ।
विशेषाद् गिरिशे भक्तिस्तस्मादारभ्य मेऽभवत् ॥१३२
शरण्यं शरणं रुद्रं प्रपन्नोऽहं विशेषतः ।
भूतेशं गिरिशं स्थाणुं देवदेवं त्रिशूलिनम् ॥१३३
भवन्तोऽपि हि तं देवं शंभुं गोवृषवाहनम् ।
प्रपद्यध्वं सपत्नीकाः सपुत्राः शरणं शिवम् ॥१३४
वर्त्तध्वं तत्प्रसादेन कर्मयोगेन शंकरम् ।
पूजयध्वं महादेवं गोपतिं भूतिभूषणम् ॥१३५
एवमुक्तेऽथ मुनयः शौनकाद्या महेश्वरम् ।
प्रणेमुः शाश्वतं स्थाणुं व्यासं सत्यवतीसुतम् ॥१३६
अब्रुवन् हृष्टमनसः कृष्णद्वैपायनं प्रभुम् ।
साक्षादेव हृषीकेशं सर्वलोकमहेश्वरम् ॥१३७
भवत्प्रसादादचला शरण्ये गोवृषध्वजे ।
इदानीं जायते भक्तिर्या देवैरपि दुर्लभा ॥१३८
कथयस्व मुनिश्रेष्ठ कर्मयोगमनुत्तमम् ।
येनासौ भगवानीशः समाराध्यो मुमुक्षुभिः ॥१३९
त्वत्संनिधावेष सूतः शृणोतु भगवद्वचः ।
तद्वदाखिललोकानां रक्षणं धर्मसंग्रहम् ॥१४०
यदुक्तं देवदेवेन विष्णुना कूर्मरूपिणा ।
पृष्टेन मुनिभिः पूर्वं शक्रेणामृतमन्थने ॥१४१ वें२.११.१४२

१३२. –a) ब1 दे1-3.5.8.9 न1 म1 मुवें. मुए. मुब. यदाहं, ब2.3 यदा हि, दे6 यदाह (→यदहं); दे4 रुद्रान् (→रुद्रात्). –b) दे4 महादेवाद्, दे6 वामदेवो, द1 वामदेव (→वामदेवाद्); दे5 अनुत्तमां (→अनुत्तमम्). –c) का1 निःशेषादभवद्, ब2 दे3 अ2 विशेषाङ्गिरिशे, दे1.6.8 विशेषांगिरसे, दे4 विशेषाद्गिरिशो (→विशेषाद् गिरिशे). –d) दे1.2.8. द1 अ2 उ1 आरभ्यमेवत तु, दे5 आरभ्य ते तनु, दे6 आरभ्यमेव ते प्रत् (?), ते1 आरभ्य तेभवत् (→आरभ्य मेऽभवत्).

१३३. ब1. cd ⊙; ते1. d ⊙. –a) ब3 शरण्य, दे4 शरण्यः (→शरण्यं); का1 दे1.5.8.9 मुवें. मुए. गिरिशं (दे1 °शीं) (→शरणं). –b) द1 प्रपन्नो हि (→प्रपन्नोऽहं). –c) दे6 गिरिशे (→गिरिशं). –d) का1 त्रिलोचनम् (→त्रिशूलिनम्).

१३४. ब1. ⊙; ते1. a ⊙. –a) दे2 दैवं (→देवं). –b) का1 शम्भुं गोभूतिभूषणम्, म1 शम्भुं वृषभवाहनम्. –c) का1 दे1.8 प्र(दे1 प्रा°)पद्यन्ते, दे9 प्रपद्यंता, न1 प्रपश्यध्वं, मुवें. मुए. मुब. प्रपद्यन्तां (→प्रपद्यध्वं); ब3 सपत्नीकः, दे1 संपत्नीकीः, दे2 सपत्नीका (→सपत्नीकाः).

१३५. ब1. ⊙. –a) ब2 दे2.4 न1 द1 म1 वर्त्तध्वं मत्प्रसादेन, ब3 वर्त्तध्वमप्रसादेन, दे6 ते1 वर्त्तध्वमप्रमादेन, उ1 वर्त्तस्व मत्प्रसादेन. –d) का1 दे1.8.9 मुवें. मुए. मुब. व्याल°, ब2 वृष° (→भूति°).

न1 b, c मध्ये अधिकम्—

वर्तध्वं मत्प्रसादेन सुतः सत्यमितिक्रमैः ।

१३६. द1. १३६c-१३७d ⊙. –a) का1 उक्त्वाथ, दे4.5 न1 उक्ते तु, दे6 उक्तोथ, ते1 अ2 म1 उक्तास्तु, द1 उक्तस्तु, उ1 उक्त्वा तु (→उक्तेऽथ); दे1.8.9 मुवें. मुए. मुब. एवमुक्ते पुनस्ते तु. –c) दे6 स्थाणं (→स्थाणुं). –d) न1 देवदेवं त्रिलोचनम्.

१३७. द1. ⊙ (द्र. १३६ पा. वि.). –a) म1 बभूवुर् (→अब्रुवन्); का1 दे2 कृष्ण°, अ2 नृक्ष° (→हृष्ट°); न1 नत्वाथ मुनयः प्राह. –b) दे6 °द्वैपायणं (→°द्वैपायनं); का1 ब1-3 दे2.3.6 मुनि, न1 मुनिः (→प्रभुम्). –c) दे1.2.6 साक्षादेवं, दे3.8.9 न1 मुवें. मुए. मुब. साक्षाद्देवं, उ1 साक्षाद्देव (→साक्षादेव); ते1 महेशाने (→हृषीकेशं). –d) का1 पुण्यश्लोकं, दे1.8.9 मुवें. मुए. मुब. शिवं लोक- (→सर्वलोक-); ते1 -महेश्वरे (→-महेश्वरम्).

१३८. ते1. ab ⊙. –a) का1 दे2 देवेशे, दे4 अमला, द1 अचल (→अचला). –c) ते1 अस्माकं (→इदानीं); ब1 भार्या, न1 शक्तिर् (→भक्तिर्). –d) न1 देवैरति, द1 देवीरति- (→देवैरपि); ब3 वल्लभा (→दुर्लभा); ब1 ते1 या दे (ते1 दै)वैरपि सुदुर्लभा, दे5 देवैरपि सुदुर्लभा.

१३९. दे1.8.9. १३९c-१४२b ⊙. –a) द1 म1 कथयत्वं, उ1 कथयध्वं (→कथयस्व). –d) द1 समाराध्ये (→समाराध्यो).

१४०. दे1.8.9. ⊙ (द्र. १३९ पा. वि.); का1. १४०-१४२ ⊙. –a) ब3 दे6 मुवें. मुए. एव (→एष); द1 भूयः, म1 सूत (→सूतः). –b) द1 म1 उ1 शृणोति (→शृणोतु). –c) ते1 तद्यदाखिल°, मुवें. तद्वच्चाखिल°, मुए. तद्वदखिल° (→तद्वदाखिल°); दे2.3 °लोकानी (→°लोकानां). –d) दे5 ते1 रक्षकं, न1 लक्षणं (→रक्षणं); ते1 द1 अ2 उ1 कर्म° (→धर्म°); उ1 °संगृहं (→°संग्रहम्).

१४१. का1 दे1.8.9. ⊙; ते1. cd ⊙. –b) दे6 °रूपिणं, द1 °रूपिणे (→°रूपिणा). –c) ब2 पृष्टैश्च, द1

वें२.११.१४२ श्रुत्वा सत्यवतीसूनुः कर्मयोगं सनातनम् ।
मुनीनां भाषितं कृष्णः प्रोवाच सुसमाहितः ।।१४२
य इमं पठते नित्यं संवादं कृत्तिवाससः ।
सनत्कुमारप्रमुखैः सर्वपापैः प्रमुच्यते ।।१४३
श्रावयेद् वा द्विजान् शुद्धान् ब्रह्मचर्यपरायणान् ।
यो वा विचारयेदर्थं स याति परमां गतिम् ।।१४४
यश्चैतच्छृणुयान्नित्यं भक्तियुक्तो दृढव्रतः ।
सर्वपापविनिर्मुक्तो ब्रह्मलोके महीयते ।।१४५
तस्मात् सर्वप्रयत्नेन पठितव्यो मनीषिभिः ।
श्रोतव्यश्चाथ मन्तव्यो विशेषाद् ब्राह्मणैः सदा ।।१४६

इति श्रीकूर्मपुराणे षट्साहस्त्र्यां संहितायामुपरिविभागे (ईश्वरगीतासु) एकादशोऽध्यायः ।।११।।

**(ईश्वरगीता समाप्ता)**

इष्टेन (→पृष्टेन); ब3 मुवें. मुए. मुब. सर्वं (→पूर्वं). –d) न1 चक्रिणामृत° (→शक्रेणामृत°).

**१४२.** का1. ⊙; दे1.8.9. ab ⊙. –a) दे2 स्तवः (→-सूनुः). –b) दे5 न1 द1 ग्र2 म1 उ1 अनुत्तमं(→सनातनम्). –ab) ते1 श्रुत्वा मुनीनां तद्वाक्यं कृष्णद्वैपायनः प्रभुः. –c) ब1 न1 ते1 मुवें. मुए. मुब. कृत्स्नं (→कृष्णः). –d) दे6 ससमाहितः, उ1 सुसमाहिताः (→सुसमाहितः).

**१४३.** दे5. १४३c 'वाससः' इत्यारभ्य उत्तरार्द्धान्तं यावन्नास्ति. –a) का1 ब2 दे2.4 ते1 ग्र2 म1 इदं (→इमं); ते1 भक्त्या (→नित्यं); न1 संवादः (→संवादं). –b) दे5 कृत्ति ** सः, दे6 उ1 कृत्तिवाससं, द1 कृत्तिवाससा (→कृत्तिवाससः). –c) म1 सर्वे कुमार° (→सनत्कुमार°); दे1.8.9 °प्रमुखाः (→°प्रमुखैः). –d) म1 °पापात् (→°पापैः).

**१४४.** दे5. ⊙ (द्र. १४३पा. वि.). –a) दे4 द्विजान् शूद्रान्, दे6 हितान्सुद्धान्, ग्र2 म1 द्विजान् धर्मान् (→द्विजान् शुद्धान्). –c) दे3.6 यो वाचये शृणोदर्थं.

**१४५.** दे5. ⊙ (द्र. १४३ पा. वि.). –a) दे3 ते1 यच्चैतद्, द1 यच्चेतद् (→यश्चैतद्). –c) दे1 सर्वे, ग्र2 स च (→सर्व-). –d) म1 ब्रह्मसायुज्यमाप्नुयात्.

**१४६.** दे5. ⊙ (द्र. १४३ पा. वि.). –a) दे2 सर्वं (→सर्व-). –b) ग्र2 म1 पठितव्यं (→पठितव्यो). –c) दे1.8.9 मुवें. मुए. श्रोतव्यश्चानुमन्तव्यो, दे2.6 श्रोतव्योश्चाथ मंतव्यो, म1 श्रोतव्यञ्चाथ संतव्यो. –d) ब2 दे1.4.8.9 ग्र2 म1 सह (→सदा).

ते1 पुस्तके cd स्थाने अयं पाठः

श्रोतव्यश्चाथ मंतव्यो निदिध्यासोपि यत्नतः ।
कर्तव्यो विधिवाक्येन मुक्त्यर्थं ब्राह्मणैस्सदा ।

**पुष्पिका**—[दे5 द1 पुस्तकयोरध्यायसमाप्तिर्नास्ति]

**पुराणनाम**— का1 इत्यादिमहापुराणे कौर्मे उपरिभागे ईश्वरगीतासूपनिषत्सु, ब1 इति कौर्मे ईश्वरगीता समाप्ता, ब2 इति कूर्मपुराणे ईश्वरगीता समाप्ता, ब3 दे2 इत्यादिमहापुराणे कौर्मे षट्साहस्त्र्यां संहितायां उपरिभागे ईश्वरगीतासूपनिषत्सु, दे1.8.9 इति श्रीकू (दे1 कु)र्मपुराणे षट्साहस्त्र्यां संहितायां उपरिभागे ईश्वरगीतासु, दे2 इत्यादिमहापुराणे कौर्मे षट्साहस्त्रिकायां उपरिभागे ईश्वरगीतासूपनिषत्सु, दे3 इति कूर्मपुराणे कौर्मे षट्साहस्त्र्यां संहितायामुपरिभागे ईश्वरगीतासूपनिषत्सु, दे4 न1 इति श्रीकूर्मपुराणे ईश्वरगीतासूपनिषत्सु, दे6 इत्यादिकूर्मपुराणे महापुराणे षट्साहस्त्र्यां संहितायामुपरिभागे ईश्वरगीतासूपनिषत्सु, ते1 इति श्रीकूर्मपुराणे उपरिभागे ईश्वरगीतासु उपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे, ग्र2 इति श्रीकूर्ममहापुराणे उत्तरभागे ईश्वरगीतासूपनिषत्सु, म1 इतिकूर्मपुराणे षट्साहस्त्रिकायां ब्राह्मयां संहितायां ईश्वरगीतासूपनिषत्सु, मुवें. इति श्रीकूर्मपुराणे उत्तरार्द्धे ईश्वरगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे, मुए. इति श्रीकूर्मपुराणे ईश्वरगीतासु, मुब. इति श्रीकौर्मे महापुराणे उपरिभागे श्रीमद्भगवदीश्वरगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे.

**अध्यायनाम**—का1 ब1-3 दे1-4.6.8.9 न1 ग्र2 म1 उ1 मुए. ⊙; मुवें. ऋषिव्यासंसवादे, ते1 ईश्वरनारायणमहर्षिसंवादे गीतापठनमाहात्म्ययोगो नाम, मुब. योगादिविज्ञानयोगो नाम.

**अध्यायसंख्या**—ब1.2. ⊙; का1 दशमोऽध्यायः ।।१०।।, ब3 दशमोऽध्यायः ।। इतीश्वरगीता समाप्ता ।।०।।, दे1 मुवें. एकादशोऽध्यायः ।।११।।, दे2 दशमोऽध्यायः ईश्वरगीता समाप्ता, दे3.6 दशमोऽध्यायेश्वरी (दे6 °र) गीतासमाप्ता, दे4 ग्र2 मुए. एकादशोऽध्यायः, दे8.9 म1 उ1 एकादशोऽध्यायः ईश्वरगीता समाप्ता, न1 षष्ठितमोऽध्यायः, ते1 द्वादशोऽध्यायः (ईश्वरगीता समाप्ता), मुब. एकादशोऽध्यायः ।।११।। समाप्तोयमीश्वरगीता.

# १२

व्यास उवाच ।❀

श्रृणुध्वमृषयः सर्वे वक्ष्यमाणं सनातनम् ।
कर्मयोगं ब्राह्मणानामात्यन्तिकफलप्रदम् ॥१
आम्नायसिद्धमखिलं ब्रह्मणानुप्रदर्शितम् ।
ऋषीणां श्रृण्वतां पूर्वं मनुराह प्रजापतिः ॥२
सर्वपापहरं पुण्यमृषिसङ्घैर्निषेवितम् ।
समाहितधियो यूयं श्रृणुध्वं गदतो मम ॥३
कृतोपनयनो वेदानधीयीत द्विजोत्तमाः ।
गर्भाष्टमेऽष्टमे वाब्दे स्वसूत्रोक्तविधानतः ॥४
दण्डी च मेखली सूत्री कृष्णाजिनधरो मुनिः ।
भिक्षाहारो गुरुहितो वीक्षमाणो गुरोर्मुखम् ॥५
कार्पासमुपवीतार्थं निर्मितं ब्रह्मणा पुरा ।
ब्राह्मणानां त्रिवित् सूत्रं कौशं वा वस्त्रमेव वा ॥६
सदोपवीती चैव स्यात् सदा बद्धशिखो द्विजः ।
अन्यथा यत् कृतं कर्म तद् भवत्ययथाकृतम् ॥७
वसेदविकृतं वासः कार्पासं वा कषायकम् ।
तदेव परिधानीयं शुक्लमच्छिद्रमुत्तमम् ॥८ वे.२.१२.८

---

**१२**

[दे$_{5}$ पुस्तके अध्यायोऽयं नास्ति]

❀ ग्र$_{2}$.⊙; न$_{1}$ सूतः; म$_{1}$ श्रीव्यासः; उ$_{1}$ व्यासः.

१. –a) ब$_{2}$ मुनयः (→ऋषयः). –b) ब$_{3}$ वक्षमाणं, दे$_{1.8-10}$ ब्रह्मयोगं (→वक्ष्यमाणं). –c) ते$_{1}$ कर्मयोगो (→कर्मयोगं). –d) दे$_{6}$ ग्र$_{2}$ आद्यन्तिक-, ते$_{1}$ अप्यन्तिक-, + आत्यन्तिक- (→आत्यन्तिक-); दे$_{4}$ °प्रद(?) (→°प्रदम्).

२. –a) ब$_{1}$ आस्थाय, दे$_{1}$ आस्नाय (→आम्नाय-); ब$_{1}$ म$_{1}$ सिद्धिम् (→-सिद्धम्); द$_{1}$ म$_{1}$ अखिलां (→अखिलं). –b) का$_{1}$ दे$_{2}$ ब्रह्मणासु-, ब$_{1}$ दे$_{4.10}$ न$_{1}$ द$_{1}$ ग्र$_{2}$ उ$_{1}$ ब्रह्मणा तु ब$_{3}$ ब्राह्मणाः सु-, दे$_{3.6}$ ब्राह्मणानु-, दे$_{8}$ ब्रह्मणानां, दे$_{9}$ मुवें. मुए. ब्राह्मणानां, ते$_{1}$ ब्रह्मणे तु, + ब्रह्मणोथ, म$_{1}$ ब्राह्मणा तु (→ब्रह्मणानु-); दे$_{10}$ द$_{1}$ म$_{1}$ प्रदर्शितां (→-प्रदर्शितम्).

३. –c) ग्र$_{2}$ समाहिता धियो पूर्वं. –d) दे$_{1}$ श्रृणाध्वं, दे$_{3}$ श्रृण्वयं (→श्रृणुध्वं); ग्र$_{2}$ गन्धतो (→गदतो).

४. –a) दे$_{1}$ °पनयं नो, न$_{1}$ °पनयने (→°पनयनो). –b) ब$_{1}$ अधीयत, दे$_{4}$ अधीयेत (→अधीयीत); का$_{1}$ ब$_{1.3}$ दे$_{3.6.10}$ ते$_{1}$ म$_{1}$ द्विजोत्तमः (दे$_{6}$ °मा) (→द्विजोत्तमाः). –c) का$_{1}$ चाब्दे, दे$_{1}$ वत्से, द$_{1}$ म$_{1}$ उ$_{1}$ पञ्च (→वाब्दे); दे$_{4}$ गर्भाष्टमे वाष्टमेऽब्दे, न$_{1}$ गर्भाष्टमे शुभे वाब्दे, ग्र$_{2}$ गर्भाष्टमे पञ्च वास्वा. –d) ब$_{2.3}$ मुब. स्वगृह्योक्त° (→स्वसूत्रोक्त°).

५. –a) दे$_{1.10}$ द$_{1}$ दण्डीव (→दण्डी च); द$_{1}$ मेखला मौंजी, ग्र$_{2}$ उ$_{1}$ मेखली (ग्र$_{2}$ °ला) सूतिः (→मेखली सूत्री). –b) दे$_{4}$ °पुरो मुनिः, ग्र$_{2}$ °धसे मुने (→°धरो मुनिः); दे$_{10}$ कृष्णा जीनोवरो मुनिः. –c) दे$_{1}$ मुवें. मुए. मुब. भिक्षाचारी, दे$_{8.9}$ ते$_{1}$ भिक्षाचारो, दे$_{10}$ यक्षाहारो (→भिक्षाहारो); दे$_{1.8-10}$ मुवें. मुए. मुब. ब्रह्मचारी, द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ गुरोर्भक्तो (द$_{1}$ °क्ता) (→गुरुहितो). –d) ब$_{1}$ दे$_{2.4.6}$ ग्र$_{2}$ उ$_{1}$ वीक्ष्यमाणो (→वीक्षमाणो); ब$_{1}$ गुरुर्मुखं, ब$_{3}$ गुरोर्मखम् (→गुरोर्मुखम्); दे$_{1.8-10}$ न$_{1}$ मुवें. मुए. मुब. स्वाश्रमे निवसत् सुखम्

६. –a) ब$_{1}$ न$_{1}$ म$_{1}$ कार्य्यासं, दे$_{1.9}$ कर्पासं, दे$_{3}$ कार्या *, दे$_{6}$ कार्यार्थं (→कार्पासं); ब$_{2}$ [अ]न्तं (→[अ]र्थं). –d) ते$_{1}$ काशं (→कौशं); दे$_{4}$ ते$_{1}$ वल्कम् (→वस्त्रम्); दे$_{1.3.4.6}$ च (→वा).

७. –a) उ$_{1}$ सहो° (→सदो°); दे$_{3-10}$ °पवीतां (दे$_{10}$ °ति) (→°पवीती); ब$_{1.3}$ ग्र$_{2}$ चैवा (→चैव). –b) दे$_{1.8-10}$ द्विजाः (दे$_{10}$ °जा) (→द्विजः). –c) द$_{1}$ अथान्ये (→अन्यथा); न$_{1}$ यं (→यत्). –d) दे$_{4}$ ते$_{1}$ उ$_{1}$ तद्भवत्यन्यथा कृतम्.

८. –a) का$_{1}$ दे$_{2}$ वसेदधि°, दे$_{1}$ वसेदेवि°, न$_{1}$ वसेव वि°, ते$_{1}$ वनेन वि° (→वसेदवि°); दे$_{10}$ °विकृतिं (→°विकृतं); द$_{1}$ ग्र$_{2}$ उ$_{1}$ वासयेदपि कृत्ति वा. –b) दे$_{1.8-10}$ कर्पासं (→कार्पासं); ब$_{3}$ फलायकं (→कषायकं). –c) दे$_{3}$ त ** (→तदेव); ब$_{1}$ परधानीयं, ते$_{1}$ परिधानीयं, + पतितानीयं (→परिधानीयं). –d) दे$_{3.6}$ उक्तं, दे$_{4}$ व्यक्तं, द$_{1}$ शुष्कं (→शुक्लं).

वें.२.१२.६ उत्तरं तु समाख्यातं वासः कृष्णाजिनं शुभम् ।
अभावे गव्यमजिनं रौरवं वा विधीयते ।।९
उद्धृत्य दक्षिणं बाहुं सव्ये बाहौ समर्पितम् ।
उपवीतं भवेन्नित्यं निवीतं कण्ठसज्जने ।।१०
सव्यं बाहुं समुद्धृत्य दक्षिणे तु धृतं द्विजाः ।
प्राचीनावीतमित्युक्तं पित्र्ये कर्मणि योजयेत् ।।११
अग्न्यगारे गवां गोष्ठे होमे जप्ये तथैव च ।
स्वाध्याये भोजने नित्यं ब्राह्मणानां च सन्निधौ ।।१२
उपासने गुरूणां च संध्ययोः साधुसंगमे ।
उपवीती भवेन्नित्यं विधिरेष सनातनः ।।१३
मौञ्जी त्रिवृत् समा श्लक्ष्णा कार्या विप्रस्य मेखला ।
मुञ्जाभावे कुशेनाहुर्ग्रन्थिनैकेन वा त्रिभिः ।।१४
धारयेद् बैल्वपालाशौ दण्डौ केशान्तकौ द्विजः ।
यज्ञार्हवृक्षजं वाऽथ सौम्यमव्रणमेव च ।।१५
सायं प्रातर्द्विजः संध्यामुपासीत समाहितः ।
कामाल्लोभाद् भयान्मोहात् त्यक्तेन पतितो भवेत् ।।१६
अग्निकार्यं ततः कुर्यात् सायं प्रातः प्रसन्नधीः ।
स्नात्वा संतर्पयेद् देवानृषीन् पितृगणांस्तथा ।।१७

९. –a) ते1 समाख्याता (→समाख्यातं); ते1 दानं (→वासः). –b) ब2 शुक्ला° (→कृष्णा°). –c) दे10 अनवै (?) (→अभावे); दे1.8-10 मुवें. मुए. मुब. दिव्यं (→गव्यं); ते1 ***** मजिनं. –d) दे1 सौरवं, ते1 कार्पासं (→रौरवं); दे3.4 चा (→वा); म1 वापि (→वा वि-); ब1 रौरवं वा प्रशस्यते.

१०. का1 दे2.8.10. cd ⊙; दे4.9. d ⊙. –a) दे10 दक्षिणे (→दक्षिणं); दे6 यतो उद्धृत्य दक्षिणं. –b) का1 ब1-3 दे2 न1 म1 ते1 सव्य-, दे3 सम्-, द1 सख्यं, ग्र2 उ1 सव्यं (→सव्ये); दे3.10 म1 बाहु, दे6 सव्य, ते1 स्कन्धे, द1 ग्र2 उ1 नाभौ (→बाहौ); ते1 समर्पिते (→समर्पितम्). –d) ग्र2 उ1 कर्ण- (→कण्ठ-); ब1 -सर्जनं, न1 -सज्जनं, द1 -सज्जितं, ते1 म1 -लम्बितम्, ग्र2 -सर्जितं, उ1 -सयुतं (→-सज्जने).

११. का1 दे1.2.4.8-10. ⊙. –a) ते1 सव्य- (→सव्यं). –b) ते1 दक्षिणान् (→दक्षिणे); दे6 बुद्धृते (?) (→तु धृतं); दे6 ते1 द्विज (→द्विजाः). –c) द1 ग्र2 म1 उ1 इत्याहुः (→इत्युक्तं); ब1 प्राचीना वीतिमित्युक्तं. –b) ब1 पित्रो, ब2 दे6 द1 ग्र2 पित्रे, ब3 मुवें. मुए. मुब. पैत्रे, न1 पित्र-, ते1 निद्रा, म1 पित्र्य- (→पित्र्ये); ब1 दे6 ते1 कर्माणि (→कर्मणि); ते1 यो ** (→योजयेत्).

१२. दे1.8-10. ⊙; का1 दे2. ab ⊙; दे4. abc ⊙. –a) ब2.3 दे3.6 न1 अग्न्यागारे, ते1 अस्थ्यागारे, ग्र2 अग्न्यगारो (→अग्न्यगारे); ते1 ग्राहे (→गोष्ठे). –b) ग्र2 उ1 होम- (→होमे); ते1 जप्या, +जप्ये, ग्र2 -द्रव्ये (→जप्ये). –c) दे2 न1 स्वाध्याय-, ते1 ग्र2 स्वाध्यायो (ते1 +°य-) (→स्वाध्याये); ग्र2 भोजनो (→भोजने); ते1 सत्यं (→नित्यं).

१३. दे9. abc ⊙; दे1.8.10. ab ⊙. –a) का1 उपासनं, ब1 दे6 उपासते, ग्र2 उपासेव (→उपासने). –b) ब1 सन्ध्ययो(?), ब2 ते1 सन्ध्यायां (→सन्ध्ययोः). –c) ब1 दे1.9 उपवीतं (→उपवीती); दे3.6 नित्य (→नित्यं). –d) ते1 उ1 एषः, ग्र2 एषा (→एष).

१४. –a) ब3 ते1 समाश्लक्ष्ण (ते1 °णा), दे4 समाह्युक्ता, ग्र2 ** श्लक्ष्ण (→समा श्लक्ष्णा). –b) ग्र2 मेखलं (→मेखला). –c) का1 दे3.6 द1 ग्र2 म1 उ1 कुशानाहुर्, ब2 मुब. कुशेनाथ, दे2 न1 कुशेनाहु, दे4 कुशैराहुर् (→कुशेनाहुर्); दे1.8-10 मुवें. मुए. कुशेन निर्मिता विप्रा. –d) दे1 ग्रंथिश्चैकेन, ते1 ग्रन्थिनैत्येन, ग्र2 ग्रन्थ्यनेकेन (→ग्रन्थिनैकेन).

१५. –a) दे6 धारयैद्, ते1 कारयेद्, म1 धारयद् (→धारयेद्); ते1 ग्र2 बिल्व° (→बैल्व°); दे2 °पालाशो, उ1 °पालाशान् (→°पालाशौ). –b) दे6 दंडो, ते1 **, उ1 दंडान्, (→दण्डौ); ब1 कौशान्तकौ, ब2.3 दे3.4.6 न1 ते1 द1 उ1 मुब. केशान्तिकौ (उ1 °के) (→केशान्तकौ); ब2 दे1-3.8-10 ते1 ग्र2 उ1 द्विजाः (→द्विजः). –c) दे6 यज्ञार्हर्, दे1 यज्ञाहं (→यज्ञार्ह-); ब2 ग्र2 वृक्षजो (ग्र2 °कं) (→वृक्षजं). –d) ब3 अव्रण, उ1 अप्रणम् (→अव्रणम्); ते1 वा (→च).

१६. न1.cd ⊙. –a) ग्र2 द्विजास् (→द्विजः). –b) दे3 समाहिताः (→समाहितः). –c) उ1 नामान् (→कामान्). –d) का1 त्यक्तेनं, ब1 त्यक्तेनी(?), ब2.3 मुवें. मुए. मुब. त्यक्त्वैनां, द1 उ1 त्यक्त्वैव, ग्र2 त्यक्त्वैतत्, म1 त्यक्त्वा च (→त्यक्तेन).

१७. –a) का1 कुर्यादहरहः सन्ध्यां. –b) ब2 दे1.4.8-10 ते1 मुवें. मुए. मुब. यथाविधि (दे1.10 °धिः) (→प्रसन्नधीः). –c) दे10 स्पर्शयेद् (→सन्तर्पयेद्); दे4 स्नात्वापि तर्प्पयेद् देवान्. –d) ब2 सिद्धगणांस् (→पितृगणांस्).

देवताभ्यर्चनं कुर्यात् पुष्पैः पत्रेण वाऽम्बुभिः ।
अभिवादनशीलः स्यान्नित्यं वृद्धेषु धर्मतः ।।१८
असावहं भो नामेति सम्यक् प्रणतिपूर्वकम् ।
आयुरारोग्यसिद्धयर्थं तन्द्रादिपरिवर्जितः ।।१९
आयुष्मान् भव सौम्येति वाच्यो विप्रोऽभिवादने ।
अकारश्चास्य नाम्नोऽन्ते वाच्यः पूर्वाक्षरः प्लुतः ।।२०
न कुर्याद् योऽभिवादस्य द्विजः प्रत्यभिवादनम् ।
नाभिवाद्यः स विदुषा यथा शूद्रस्तथैव सः ।।२१

व्यत्यस्तपाणिना कार्यमुपसंग्रहणं गुरोः ।
सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन तु दक्षिणः ।।२२
लौकिकं वैदिकं चापि तथाध्यात्मिकमेव वा ।
आददीत यतो ज्ञानं तं पूर्वमभिवादयेत् ।।२३
नोदकं धारयेद् भैक्षं पुष्पाणि समिधस्तथा ।
एवंविधानि चान्यानि न दैवाद्येषु कर्मसु ।।२४
ब्राह्मणं कुशलं पृच्छेत् क्षत्रबन्धुमनामयम् ।
वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव तु ।।२५ वें.२.१२.२५

---

१८. –a) दे1 ग्र2 देवताभ्यार्चनं कुर्यात्, ते1 देवताभ्यर्चयेन्नित्यं. –b) दे3 पत्रैनं (→पत्रेण); ब1 वा पुनः, दे1.8-10 मुवें. मुए. चाम्बुना, दे2.3.6 चांबुभिः (→वाऽम्बुभिः); ब2.3 दे4 मुब. पुष्पैः पत्रैरथाम्बुभिः (दे4 मुब. °ना), ते1 पुष्पैः पत्रैरथाम्भसा, म1 पुष्पै पत्रैस्तथांबुभिः. –c) दे4 ते1 ग्र2 °शीलस्य, म1 °शीलत्वान् (→शीलः स्यान्). –d) द1 संवृतः, ग्र2 म1 सत्तमः, उ1 संमतः (→धर्मतः).

१९. ग्र2. ⊙; ब2. cd ⊙. –a) ब1 भो(ज), ते1 ते (→भो); द1 नाम्नेति (→नामेति). –b) द1 प्रणव° (→प्रणति°). –c) दे1.8-10 ते1 मुवें. मुए. °सान्निध्यं (→°सिद्धयर्थं); मुब. आयुरारोग्यमन्विच्छन्. –d) दे1.8-10 मुवें. मुए. मुब. -द्रव्यादि, दे2 म1 तंत्रादि-, दे3.4.6 तंत्र्यादि-, ते1 ग्रस्ताधि-, उ1 तज्ज्ञाति- (→तन्द्रादि-); दे3.6 त1 म1 मुवें. मुए. मुब. -परिवर्ज्जितं (→-परिवर्ज्जितः).

२०. ग्र2. ⊙. –a) का1 सौम्ये* (→सौम्येति); दे2 आयुष्मांसौ भवा(क्षै)म्येति. –b) दे10 वाचो (→वाच्यो); ते1 °वादिनः (→°वादने). –c) ब1 दे1.8.9 म1 उ1 मुब. आकारश् (→अकारश्); दे1 नाम्नेति, दे10 नाम्नां ते, द1 नाम्नं ते, उ1 नाम्नो* (→नाम्नोऽन्ते); ते1 अनरध्यास्सनामान्ते. –d) न1 वाच्यं (→वाच्यः); ब2 दे1.4.8.9 न1 द1 म1 उ1 मुवें. मुए. मुब. पूर्वक्षर- (न1 °रं), दे6 पूर्वाक्षरा, ते1 पूर्वाक्षुतः (→पूर्वाक्षरः); न1 प्लुतं, ते1 क्षुपः,+प्लुतः (→प्लुतः).

२१. –a) का1 यो न वेत्यभि°,+न कुर्यात् सोभि°, ब1 दे3.6.10 योन वेद्यभि°, ब2.3 दे4 द1 म1 उ1 योनवेत्यभि°, दे2 यो नेत्य* भि°, न1 योनयात्यभि°, ग्र2 यो न चेद्यभि° (→न कुर्याद्योऽभि°); ते1 ऐतदित्येभिवाद्यश्च. –b) का1 ब2 दे2 म1 विप्रः, न1 पुनः (→द्विजः); दे1 द1 ग्र2 उ1 °वादने (→°वादनम्). –c) दे1 *भि° (→नाभि°); दे10 मृषदुषा(?), ते1 स विदुषां (→स विदुषा). –d) दे3.4.6 ग्र2 उ1 च (→सः).

२२. –a) का1 स्वव्यस्त°, ब1.3 सुव्यस्त°, ब2 न1 मुब. सव्यस्त°, दे1.2.8-10 मुवें. मुए. विन्यस्त°, दे3 वृत्यस्त°, दे4 न्यसस्तथा, द1 व्यत्तस्य-, ग्र2 व्यस्तस्त, म1 व्यत्यस्य (→व्यत्यस्त-). –b) ब2 उपसंहरणं, उ1 उपसंग्रहणे (→उपसंग्रहणं). –c) दे6 न1 ग्र2 म1 उ1 सव्य-, द1 सव्यं (→सव्यः); का1 दे1.6.9.10 न1 द1 म1 स्पृष्टव्यो, ब1.3 प्र(ब3 पृ)ष्टव्यो (→स्प्रष्टव्यो); दे4 सव्योपसव्यः स्प्रष्टव्यो, ते1 सव्येन सव्यं संपद्यो. –d) ब3 च (→तु); न1 ते1 दक्षिणम् (→दक्षिणः).

२३. –a) का1 ब1-3. दे2-4 न1 ते1 द1 ग्र2 म1 उ1 वापि (→चापि). –b) द1 तदा° (→तथा°); म1 ए * (→एव); का1 च, दे2 वाः (→वा); दे4 तथाध्यात्मकमेव च, ते1 तथाध्यात्मानमेव वा. –c) ब3 आदधीत, दे1 आददान, ते1 आवर्तितम्, ग्र2 अददीत (→आददीत); म1 ततो (→यतो). –d) ग्र2 तत् (→तं).

२४. –a) का1 सोदकां, दे3.6 नोदके, दे10 न1 नौदकं, ते1 द1 मोदकं, ग्र2 सो * कं, उ1 सोदकं (→नोदकं); का1 वारयेद्, +धारयेद्, ते1 तारयेत् (→धारयेद्); का1 दे1.3.8-10 मुवें. मुए. मुब. भैक्ष्यं (→भैक्षं). –b) ते1 पुष्णाति (→पुष्पाणि); दे1.4.8-10 मुवें. मुए. समिधं, ते1 समति (→समिधस्); ते1 यथा (→तथा). –c) दे4 नाभिवाद्यानां, ते1 चात्मा *, +वान्या * (→चान्यानि). –d) ब1 न1 द1 ग्र2 उ1 देवा° (→दैवा°); ब3 न दैवा ह्येसु, दे6 न देवाह्येसु, ते1 तथैवाद्येषु, म1 देवताद्येषु (→ न दैवाद्येषु); का1 ब1 द1 मुवें. मुए. मुब. कर्मषु (?) (→कर्मसु).

२५. –a) का1 ब1.3 दे2 ब्राह्मणान् (→ब्राह्मणं); का1 सकलं (→कुशलं). –b) का1 क्षेत्र-, दे4 म1 क्षत्रं (→क्षत्र-); द1 °मयः (→°मयम्). –c) ब3 क्षैमं (→क्षेमं); दे1.8.9 मुवें. मुए. मुब. समागत्य, दे10 समावृत्य (→समागम्य). –d) का1 शूद्रां (→शूद्रं); ब2 दे1.4.8-10 न1 ते1 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. च (→तु).

वें.२.१२.२६ उपाध्यायः पिता ज्येष्ठो भ्राता चैव महीपतिः ।
मातुलः श्वशुरस्त्राता मातामहपितामहौ ।
वर्णज्येष्ठः पितृव्यश्च पुंसोऽत्र गुरवः स्मृताः ॥२६
माता मातामही गुर्वी पितुर्मातुश्च सोदराः ।
श्वश्रूः पितामही ज्येष्ठा धात्री च गुरवः स्त्रियः ॥२७
इत्युक्तो गुरुवर्गोऽयं मातृतः पितृतो द्विजाः ।
अनुवर्त्तनमेतेषां मनोवाक्कायकर्मभिः ॥२८
गुरुं दृष्ट्वा समुत्तिष्ठेदभिवाद्य कृताञ्जलिः ।
नैतैरुपविशेत् सार्द्धं विवदेन्नात्मकारणात् ॥२९
जीवितार्थमपि द्वेषाद् गुरुभिर्नैव भाषणम् ।
उदितोऽपि गुणैरन्यैर्गुरुद्वेषी पतत्यधः ॥३०
गुरूणामपि सर्वेषां पूज्याः पञ्च विशेषतः ।
तेषामाद्यास्त्रयः श्रेष्ठास्तेषां माता सुपूजिता ॥३१
यो भावयति या सूते येन विद्योपदिश्यते ।
ज्येष्ठो भ्राता च भर्त्ता च पञ्चैते गुरवः स्मृताः ॥३२
आत्मनः सर्वयत्नेन प्राणत्यागेन वा पुनः ।
पूजनीया विशेषेण पञ्चैते भूतिमिच्छता ॥३३
यावत् पिता च माता च द्वावेतौ निर्विकारिणौ ।
तावत् सर्वं परित्यज्य पुत्रः स्यात् तत्परायणः ॥३४

---

२६. –a) दे4 उपाध्यायं (→उपाध्यायः); ते1 पितृ, + पिता (→पिता). –b) दे1 वै वा (→चैव). –c) ग्र2 म1 च गुरुस् (→श्वशुरस्); का1 ब2.3 दे2.3.6 मुवें. मुए. मुब. चैव, दे4.8 ते1 भ्राता, दे9.10 सुतो (→त्राता). –e) का1 वर्ग दृष्टः, + गुरु वर्गः, दे1 वर्णे ज्येष्टः, दे2.6 वर्गज्येष्ठं (दे6 °ष्ठ), ते1 वर्णी चैव (→वर्णज्येष्ठः); द1 उ1 पितृभ्यश्च (→पितृव्यश्च). –f) का1 न1 पुंस्वेते, ब1.2 पुंस्येति, दे4 पूज्यास्ते, दे8-10 म1 मुवें. मुब. सर्वे ते, ते1 सर्वे च, द1 ग्र2 उ1 पञ्चैते (→पुंसोऽत्र); ग्र2 म1 गुरव (→गुरवः); दे4.6 स्मृतः (→स्मृताः).

२७. –a) दे2 मातमात°(?) (→माता माता°); ते1 °महो (→°मही). –b) दे8.9 न1 सोदरा (→सोदराः); द1 म1 उ1 पितृर्मा (द1 म1 °मा) तृस्वसादयः, ग्र2 पितुर्मातास्वसादया. –c) का1 ब1-3 दे1.6 मुब. श्वश्रूः, दे4.10 न1 ते1 श्वश्रू-, द1 ग्र2 म1 उ1 स्वसा (→श्वश्रूः); ब2 ज्येष्ठी (→ज्येष्ठा). –d) दे1.8-10 मुवें. मुए. मुब. भ्रातृजायागुरु°, दे6 न1 द1 ग्र2 म1 धात्री च गुरव (→धात्री च गुरवः); ब1.2 दे4 स्मृताः, न1 स्त्रियं, म1 स्त्रयः(?) (→स्त्रियः).

२८. –a) दे1 द1 इत्युक्ता, ग्र2 इत्युक्वा, उ1 इत्युक्ताः (→इत्युक्तो); द1 ग्र2 म1 उ1 गुरुवस्सर्वे (→गुरुवर्गोऽयं); दे4 इत्युक्त गुरुवाणोयत्. –b) दे4 त्वानृतः, न1 मातृतं (→मातृतः); दे1.4.8-10 ते1 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. तथा (→द्विजाः). –c) ग्र2 अनुवर्त्त(मा)नमेतेषां.

२९. –a) ब2.3 दे2.3.6 गुरुन् (→गुरुं). –c) का1 द1 ग्र2 उ1 न तै°, ब1 दे10 नैते°, दे3 नेतै°, दे6 तेनै° (→नैतै°); ते1 नवैरपि विदित्वा तु. –d) ब2 विवदेद्वात्र, ब3 म1 मुब. विवदेन्नात्र-, दे1 मुवें. मुए. विवदेतार्थ-, दे3.6 विवाद नात्म-, दे4.9.10 उ1 विवदेन्नार्थ-, दे8 विवादेन्नार्थ-, न1 विष्वदेनार्थ-, ते1 विधिर्नानार्थ-, द1 विवदेन्नार्थ-, ग्र2 विवेदेनार्थ- (→विवदेन्नात्म-).

३०. –a) म1 पितृ (→अपि); द1 ग्र2 म1 उ1 द्वेषं (→द्वेषाद्). –b) म1 पितृभिर् (→गुरुभिर्); ते1 चैव (→नैव); दे1 भाषणे, द1 ग्र2 म1 उ1 कारयेत् (→भाषणम्). –c) का1 दे2.4 उदितेऽपि, ते1 व्यथितो वै, ग्र2 इति तोपि (→उदितोऽपि). –d) का1 ब1 दे2.3.6 भवति (→पतति); दे4 उ1 [अ] थ (→[अ]धः).

३१. –b) दे10 पूजाः, ते1 पूज्या (→पूज्याः). –c) दे4 तेषामन्येस्, द1 ग्र2 म1 तेषां चाद्यास्, उ1 तेषां त्वाद्यास् (→तेषामाद्यास्); दे2 त्रयस्, + तेषां, दे3 त्रयं, म1 त्रय (→त्रयः); का1 श्रेष्ठस् (→श्रेष्ठास्); ब3 तेषामाद्यः स्त्रियः श्रेष्ठास्, ते1 तेषामन्यत्रयश्श्रेष्ठस्. –d) ब1 मातानुपूजिता, दे10 माता तु पूजिता, द1 माता सुपूजिताः (→माता सुपूजिता).

३२. –a) ते1 बोधयति, ग्र2 वाहयति (→भावयति); दे1.8.9 वः, दे10 यः, ते1 यो, उ1 वा (→या); ब3 सूत्रे, दे1.8.9 सूतो, दे4 सूत, ते1 तूरे (?) (→सूते). –b) न1 तेन (→येन). –c) ते1 ज्येष्ठ (→ज्येष्ठो). –d) दे3 स्मृतां, दे6 स्मृता, द1 ग्र2 म1 उ1 तथा (→स्मृताः).

३३. –a) न1 आत्मना, ते1 आत्मवत् (→आत्मनः); द1 आत्मसर्वप्रयत्नेन, ग्र2 म1 अत (उ1 अथ) सर्वप्रयत्नेन. –b) ते1 प्राणत्यागे तथा पुनः. –c) द1 पूजनीयो (→पूजनीया); न1 इच्छतां (→इच्छता).

३४. –b) दे10 निर्विकारणौ, ग्र2 जनकारणौ, द1 म1 उ1 जमिकारिणौ (→निर्विकारिणौ). –c) ते1 परित्याज्यं (→परित्यज्य). –d) दे4.6 ते1 द1 म1 पुत्र (→पुत्रः).

पिता माता च सुप्रीतौ स्यातां पुत्रगुणैर्यदि ।
स पुत्रः सकलं धर्ममाप्नुयात् तेन कर्मणा ॥३५
नास्ति मातृसमं दैवं नास्ति पितृसमो गुरुः ।
तयोः प्रत्युपकारोऽपि न कथञ्चन विद्यते ॥३६
तयोर्नित्यं प्रियं कुर्यात् कर्मणा मनसा गिरा ।
न ताभ्यामननुज्ञातो धर्ममन्यं समाचरेत् ॥३७
वर्जयित्वा मुक्तिफलं नित्यं नैमित्तिकं तथा ।
धर्मसारः समुद्दिष्टः प्रेत्यानन्तफलप्रदः ॥३८
सम्यगाराध्य वक्तारं विसृष्टस्तदनुज्ञया ।
शिष्यो विद्याफलं भुङ्क्ते प्रेत्य चापद्यते दिवि ॥३९
यो भ्रातरं पितृसमं ज्येष्ठं मूर्खोऽवमन्यते ।
तेन दोषेण स प्रेत्य निरयं घोरमृच्छति ॥४०
पुंसा वर्त्मनिविष्टेन पूज्यो भर्त्ता तु सर्वदा ।
याति दातरि लोकेऽस्मिन् उपकाराद्धि गौरवम् ॥४१
ये नरा भर्त्तृपिण्डार्थं स्वान् प्राणान् संत्यजन्ति हि ।
तेषामथाक्षयाँल्लोकान् प्रोवाच भगवान् मनुः ॥४२
मातुलांश्च पितृव्यांश्च श्वशुरानृत्विजो गुरून् ।
असावहमिति ब्रूयुः प्रत्युत्थाय यवीयसः ॥४३ वें. २.१२.४४

३५. –a) म1 पूजार्हौ (→सुप्रीतौ); ग्र2 पिता च माता सुप्रीतौ. –b) ते1 अपि (→यदि). –c) दे1 सु- (→स); दे4 ते1 द1 म1 उ1 कर्म (→धर्मं); ब1 स पुत्रः सफलं जन्म, ग्र2 स पुत्रस्स स कर्माणि. –d) का1 ब1-3 दे2.3 न1 ते1 द1 ग्र2 म1 प्राप्नुयात् (→आप्नुयात्).

३६. –a) ग्र2 म1 मात्रा, उ1 माता (→मातृ-); का1 मुवें. मुए. °समो देवो, ब1.2 दे1.6 द1 म1 °समं देवं, दे10 समं चैव, ग्र2 °समो देवं, उ1 °समन्देवो (→°समं दैवं). –b) का1 मात्र-, ब1.2 दे2.4.10 न1 मातृ-, उ1 ग्र2 म1 पित्रा, दे1.8.9 मुवें. मुए. मुब. तात- (→पितृ-); दे4 °समं, दे6 °समे (?) (→°समो). –c) दे1.4.8-10 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. हि (→ [अ] पि). –d) द1 ग्र2 उ1 च कश्चन, म1 कुतश्चन (→कथञ्चन).

३७. –a) का1 योहि (→तयोर्); ते1 यस्य (→कुर्यात्). –c) दे6 न ता भास ननु ज्ञतो, न1 न ताभ्यां समानुज्ञातो. –d) का1 ब2.3 दे2 समाश्रयेत् (→समाचरेत्).

३८. –b) ब2 दे1.4.8.9 ते1 म1 नित्य- (→नित्यं). –c) का1 दे2 द1 ग्र2 उ1 °सारं (→°सारः); दे3.6 समुद्दिष्ट-, द1 ग्र2 उ1 समुद्दिष्टं (→समुद्दिष्टः). –d) दे9 ग्र2 म1 प्रेत्यानन्द-, ते1 द1 प्रीत्यानन्द-, उ1 प्रेत्यानन्य- (→प्रेत्यानन्त-); ते1 द1 ग्र2 उ1 -फलप्रदम् (→-फलप्रदः).

३९. –a) ग्र2 सम्यगाचारवक्तारं. –b) का1 दे1 विसृष्ट, दे4 विस्पष्टस्, ते1 विकृष्टस्, ग्र2 म1 विसृष्टं, उ1 विमृष्टस् (→विसृष्टस्); दे10 °ज्ञयो (→°ज्ञया). –c) का1 शिष्ये, दे3 शिष्टो (→शिष्यो); ते1 चैव (→भुङ्क्ते). –d) दे6 प्रेत्या (→प्रेत्य); दे1.8.9 मुवें. मुए. वा पूज्यते, दे6 वापद्यते, दे10 वा पूजितो, द1 ग्र2 उ1 नापद्यते (→चापद्यते); दे3.6 ध्रुवं (→दिवि); ते1 पत्ये संत्यह पद्यते.

४०. –b) का1 ब1.3 दे2.3.6 मूढोव-, ब2 मूढो न, ते1 मूर्खो न, ग्र2 मूर्खो वि- (→मूर्खोऽव-); दे10 ज्येष्ठं मूर्खोऽपि गम्यते. –c) का1 दे6 ते1 द1 ग्र2 उ1 संप्रेत्य (→स प्रेत्य). –d) दे9 अर्च्छति, न1 ग्र2 इच्छति (→ऋच्छति).

४१. –a) ब3 दे6 पुंस, दे1.8-10 मुवें. मुए. मुब. पुंसां, उ1 पुंसो (→पुंसा); ब1 वर्त्मनितिष्ठेन, दे1.8 मुवें. मुए. मुब. वर्त्मनि तिष्ठेत, दे2.10 धर्मनिविष्टेन, द1 ग्र2 म1 उ1 चा मनि विष्टेन (→वर्त्मनिविष्टेन); का1 पुरावर्त्यविष्टेन, दे4 सपुंसा-चरतिष्ठेत, ते1 पुसावर्ता विशिष्टेन. –b) द1 मूर्खो (→पूज्यो); ब2 ग्र2 उ1 भक्त्या (→भर्त्ता); का1 दे1.6.8.10 ते1 द1 ग्र2 म1 उ1 मुवें. मुब. च, दे3 [अ]त्र, दे4 हि (→तु). –c) का1 ब1-3 दे1-3.6.8.10 न1 ते1 मुवें. मुए. मुब. अपि (→याति); का1 ब1-3 दे1-3.6.8-10 न1 मुवें. मुए. मुब. मातरि(?) (→दातरि). –d) दे4 गौरवां (→गौरवम्); दे6 उपकारेद्धि गौरवम्, ते1 उपकाराधिगौरवम्.

४२. –a) ब3 दे2 च वा, दे6 च * (→नरा); का1 भृत्य°, उ1 भक्ति° (→भर्त्तृ°); ग्र2 ने यन्नरा भर्त्तृण्डार्थं (?). –b) दे10 स्वान् भ्रातृणां संत्यजन्ति हि, ते1 स्वान् प्राणान् त्यजतीह च. –c) दे4 एतेषामक्षयाँल्लोकान्, द1 म1 उ1 तेषामयाक्षयं लोकं, ग्र2 तेषामथाक्षरं **. –d) ब1 दे4 न1 मुनिः ते1 पुनः (→मनुः); दे3 प्रोवाच भ ****.

४३. दे3. ४३–४४ ⊙. –b) दे4 स्वशुरान्, दे8.9 स्वसृजान्, उ1 * शुरान् (→श्वशुरान्); ब1 गुरुं, ते1 तथा (→गुरून्). –c) दे10 आसौ (?) (→असौ); का1 ब1-3

वें.२.१२.४४ अवाच्यो दीक्षितो नाम्ना यवीयानपि यो भवेत् ।
भोभवत्पूर्वकं त्वेनमभिभाषेत धर्मवित् ॥४४
अभिवाद्यश्च पूज्यश्च शिरसा वन्द्य एव च ।
ब्राह्मणः क्षत्रियाद्यैश्च श्रीकामैः सादरं सदा ॥४५
नाभिवाद्यास्तु विप्रेण क्षत्रियाद्याः कथञ्चन ।
ज्ञानकर्मगुणोपेता यद्यप्येते बहुश्रुताः ॥४६
ब्राह्मणः सर्ववर्णानां स्वस्ति कुर्यादिति स्थितिः ।
सवर्णेषु सवर्णानां कार्यमेवाभिवादनम् ॥४७
गुरुरग्निर्द्विजातीनां वर्णानां ब्राह्मणो गुरुः ।
पतिरेको गुरुः स्त्रीणां सर्वत्राभ्यागतो गुरुः ॥४८
विद्याकर्मवयो बन्धुर्वित्तं भवति पञ्चमम् ।
मान्यस्थानानि पञ्चाहुः पूर्वं पूर्वं गुरूत्तरात् ॥४९
पञ्चानां त्रिषु वर्णेषु भूयांसि बलवन्ति च ।
यत्र स्युः सोऽत्र मानार्हः शूद्रोऽपि दशमीं गतः ॥५०
पन्था देयो ब्राह्मणाय स्त्रियै राज्ञे ह्यचक्षुषे ।
वृद्धाय भारभुग्नाय रोगिणे दुर्बलाय च ॥५१

दे$_{2.4.6}$ न$_1$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ ब्रूयात्, ते$_1$ ब्रूहि (→ब्रूयुः). –d) ते$_1$ प्रत्यग्दायनीयः पुनः.

४४. दे$_3$. ⊙. –a) दे$_4$ आचार्यो, ते$_1$ आराध्यो (→अवाच्यो); ते$_1$ रक्षितो, ग्र$_2$ दक्षितो (→दीक्षितो). –b) ग्र$_2$ यावीयान् (→यवीयान्); दे$_1$ यवीयान्नापि यो भवेत्, ते$_1$ यो वियान्नवियो भवेत् (?). –c) का$_1$ यो भवेत्, दे$_{10}$ क्षोभवत्, द$_1$ उ$_1$ भो शब्द, म$_1$ भोगवत्, ते$_1$ लोकवत् (→भो भवत्); ब$_1$ दे$_{2.3.6}$ न$_1$ पूर्वकत्वेनं, ब$_3$ मुवें. मुए. पूर्वकत्वेन, दे$_{1.8\text{-}10}$ पूर्वगत्वेन, दे$_4$ द$_1$ ग्र$_2$ उ$_1$ पूर्वकं चैनम्, ते$_1$ पूर्वगन्धीनम्, म$_1$ पूजञ्चैनं *, मुब. पूर्वकन्त्वेन (→पूर्वकंत्वेनं). –d) दे$_{3.6}$ °भाष्येत, ते$_1$ °वादेत, द$_1$ ग्र$_2$ म$_1$ °भाषित, उ$_1$ °भाषत (→°भाषेत).

का$_1$ दे$_2$ पुस्तकयोः c चरणानन्तरमधिकम्—
क्षत्रियाद्यैः कथंचन ज्ञानकर्मगुणोपेतो । (=४६cd)
[दे$_2$ विप्रेण, +क्षत्रियाद्या (→क्षत्रियाद्यैः); दे$_2$ °गुणोपेता (→गुणोपेतो).]

४५. –a) ब$_1$ दे$_2$ पूर्वश्च, दे$_1$ *** (→पूज्यश्च); दे$_4$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ अभिवाद्यः प्रयत्नेन. –b) ब$_1$ एव वन्द्य, दे$_{10}$ वन्द्यतेव (→वन्द्य एव). –c) ब$_3$ दे$_1$ ग्र$_2$ ब्राह्मण, दे$_{2.6}$ ब्राह्मणाः (दे$_6$ °णा), न$_1$ ब्रह्मणः (→ब्राह्मणः); ब$_1$ दे$_{3.4.6}$ द$_1$ म$_1$ उ$_1$ तु (→च); ते$_1$ ब्रह्मक्षत्रियवैश्यैश्च. –d) दे$_6$ तथा (→सदा).

४६. –a) ग्र$_2$ °वाद्यस्तु (→°वाद्यास्तु); द$_1$ ग्र$_2$ म$_1$ उ$_1$ विप्राणां, दे$_{1.8\text{-}10}$ मुए. मुब. विप्रेन्द्रैः (दे$_{10}$ °द्रोः) (→विप्रेण). –b) ब$_1$ दे$_{1.6}$ क्षत्रियाद्या (→क्षत्रियाद्याः). –c) दे$_1$ °पेतो (→°पेता). –d) दे$_1$ यो यजंति, दे$_{8.9}$ मुवें, मुए. ये यजन्ति, दे$_1$ ये यजन्तु, ते$_1$ यद्यप्यति, मुब. यद्यपेतो (→यद्यप्येते).

४७. –a) दे$_{3.4.6}$. ते$_1$ द$_1$ उ$_1$ ब्राह्मणाः (→ब्राह्मणः); ते$_1$ -भूतानां (→-वर्णानां). –b) का$_1$ ब$_3$ दे$_{1.8\text{-}10}$ ते$_1$ म$_1$ मुवें. मुए. मुब. श्रुतिः (→स्थितिः). –c) का$_1$ ब$_{2.3}$ दे$_2$ मुब. सवर्णेन, ते$_1$ सवर्णानां (→सवर्णेषु); ते$_1$ स्ववर्णवलसन्नानां. –d) दे$_{1.8.9}$ मुवें. मुए. काम्यं, ते$_1$ कुरु (→कार्यं); दे$_1$ °वादनं, द$_1$ ग्र$_2$ °वन्दनं (→°वादनम्); दे$_{10}$ स्वस्ति कुर्यादितिः श्रुतिः.

अतः परं दे$_{10}$ पुस्तके अधिकम्—
सवर्णेषु सवर्णानां काम्यमेवाभिवादनां । (=४७cd)

४८. –a) दे$_1$ गुरु * ग्निर्द्विजातीनां. –b) द$_1$ ब्राह्मणानां ** गुरुः. –c) दे$_{1.10}$ न$_1$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ मुवें. मुए. मुब. एव (→एको); ब$_2$ दे$_{1.4.6.10}$ द$_1$ म$_1$ गुरु-, दे$_3$ गुरुं (→गुरुः). –d) ब$_1$ दे$_{1.4.8\text{-}10}$ ते$_1$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ मुवें मुए. मुब. सर्वस्या° (→सर्वत्रा°).

४९. –a) दे$_1$ मुवें. मुए. °तपो, दे$_{10}$ °वतो (→°वयो); का$_1$ ते$_1$ ग्र$_2$ बन्धु-(→बन्धुर्). –b) द$_1$ कश्चन, ग्र$_2$ म$_1$ यस्य हि, उ$_1$ यश्च हि (→पञ्चमम्). –c) दे$_1$ मान्या, दे$_{10}$ मान्यः, ग्र$_2$ मान्यं (→मान्य-); दे$_4$ पंचाहु (→पञ्चाहुः). –d) दे$_6$ पूर्वपूर्वं, ते$_1$ पूर्वंपूर्वं (→पूर्वं पूर्वं); दे$_4$ न$_1$ ते$_1$ गुरूत्तमान्, म$_1$ गुरुर्नयात् (→गुरूत्तरात्).

५०. –a) का$_1$ दे$_{1.8\text{-}10}$ मुवें. मुए. एतानि, दे$_{2.4}$ ते$_1$ पंचापि (→पंचानां); द$_1$ ग्र$_2$ उ$_1$ सर्वेषु (→वर्णेषु). –b) का$_1$ भूयांसो (→भूयांसि); ब$_2$ दे$_{3.6}$ गुणवन्ति (→बलवन्ति). –c) ब$_1$ यत, ब$_3$ श्रुतं (→यत्र); का$_1$ यच्च स्युः सोत्तमा हर्षः, ते$_1$ यत्र ** प्रमाणार्हं, द$_1$ म$_1$ उ$_1$ पञ्चस्युस्सा (द$_1$ °सो) नुमानार्हः, ग्र$_2$ पञ्चास्युस्सोनुमानार्हा. –d) दे$_1$ ग्र$_2$ म$_1$ उ$_1$ शूद्रो वा (→शूद्रोऽपि); म$_1$ गताः (→गतः); का$_1$ शूद्रोपेंद्रसमागतः, ते$_1$ शूद्रोपि दशमो मतः.

५१. –a) द$_1$ दधान्मार्गं, ग्र$_2$ उ$_1$ षण्डादयो (→पन्था देयो); न$_1$ ब्रह्मणाय, ग्र$_2$ ब्रा ***, उ$_1$ ब्राह्मणमा (→ब्राह्मणाय). –b) दे$_2$ मुब. स्त्रिये, दे$_{10}$ स्त्रियो

भिक्षामाहृत्य शिष्टानां गृहेभ्यः प्रयतोऽन्वहम् ।
निवेद्य गुरवेऽश्नीयाद् वाग्यतस्तदनुज्ञया ॥५२
भवत्पूर्वं चरेद् भैक्ष्यमुपनीतो द्विजोत्तमः ।
भवन्मध्यं तु राजन्यो वैश्यस्तु भवदुत्तरम् ॥५३
मातरं वा स्वसारं वा मातुर्वा भगिनीं निजाम् ।
भिक्षेत भिक्षां प्रथमं या चैनं न विमानयेत् ॥५४
सजातीयगृहेष्वेव सार्ववर्णिकमेव वा ।
भैक्ष्यस्य चरणं प्रोक्तं पतितादिषु वर्जितम् ॥५५
वेदयज्ञैरहीनानां प्रशस्तानां स्वकर्मसु ।
ब्रह्मचर्याहरेद् भैक्षं गृहेभ्यः प्रयतोऽन्वहम् ॥५६
गुरोः कुले न भिक्षेत न ज्ञातिकुलबन्धुषु ।
अलाभे त्वन्यगेहानां पूर्वं पूर्वं विवर्जयेत् ॥५७
सर्वं वा विचरेद् ग्रामं पूर्वोक्तानामसंभवे ।
नियम्य प्रयतो वाचं दिशस्त्वनवलोकयन् ॥५८
समाहृत्य तु तद् भैक्षं यावदर्थममायया ।
भुञ्जीत प्रयतो नित्यं वाग्यतोऽनन्यमानसः ॥५९ वें.२.१२.६०

(→स्त्रियै); म1 राज्ञै (→राज्ञे); ते1 चक्षुषान् (→चक्षुषे); ग्र2 ******क्षुषेः. –c) ग्र2 म1 उ1 भाव° (→भार°); का1 दे8-10 न1 द1 °भग्नाय, ब2 °भक्ताय, दे1 ** म, दे4 °भूताय, ग्र2 म1 उ1 °हीनाय (→°भुग्नाय); ते1 व्यधाय बहुभूम्नाय. –d) दे1 रोजिर्णा, दे10 रोगिणो (→रोगिणे); का1 दुर्लभाय (→दुर्बलाय); ते1 रोपितेषुर्बलाय च.

**५२.** –a) न1 शिक्षानां, + शिष्टानां, ते1 शिक्षाणां (→शिष्टानां). –b) द1 [श्न] यं (→[श्न] हम्). –c) का1 दे1 श्रीमान्, ते1 स्नायाद् (→[श्न]श्नीयाद्). –d) ब2.3 दे2.3.6 बाह्यतस्, ते1 वार्यतस्, ग्र2 बाह्य * (→वाग्यतस्).

**५३.** –a) ग्र2 भवं (→भवत्); का1 ब1.2 दे2.9 न1 द1 ग्र2 भैक्षं, म1 भिक्षां (→भैक्ष्यं). –b) दे4.10 ते1 उपवीतं (ते1 °ती) (→उपनीतो); दे6.10 ग्र2 द्विजोत्तमाः (दे6 °म) (→द्विजोत्तमः). –c) दे6 मध्यात्तु (→मध्यं तु); दे10 राजान्यो, ते1 राजा स्याद् (→राजन्यो). –d) का1 द1 वैश्यास् (→वैश्यस्); न1 उत्तरः, म1 उत्तमं (→उत्तरं).

**५४.** –a) दे6 च (→वा); ब1 *सारं (→स्वसारं); ते1 स्यातुः पत्नीं स्वसारं च. –b) म1 भ्रातुर् (→मातुर्); ब1.2 दे4.10 ग्र2 भगिनी (→भगिनीं); ब2 द्विजाः, न1 द्विजां (→निजाम्). –c) दे10 भिक्ष्येत, न1 *** (→भिक्षेत); दे4 भिक्षा-, न1 **, द1 ग्र2 म1 उ1 भैक्षं (→भिक्षां), दे6 प्रथमां (→प्रथमं). –d) दे4 याचतं न, दे10 याचनेन, ते1 याचेत न, ग्र2 यावन्नेवं, म1 वाचा नैव, द1 उ1 यावन्नैनं (→या चैनं न); का1 याश्चैनं नावमानयेत्, न1 यां चैनं नपि मानयेत्, ते1 याचेत न विधूनये.

**५५.** –a) ब2 दे1.4.8-10 ते1 द1 म1 मुवें. मुए. मुए. मुब. स्वजातीय° (→सजातीय°); दे10 °गृहीषु (→°गृहेषु). –b) ब2.3 दे2.6 च (→वा); द1 ग्र2 उ1 सर्ववर्णक्रमेण वा, म1 सर्ववर्णकमेव वा. –c) ब2.3 द1 म1 भैक्षस्या, दे3 भैक्ष्यस्या, दे8 न1 मुए. भैक्षस्य, उ1 भैक्ष्यं स्या (→भैक्ष्यस्य); दे1 नित्यं, मुवें. मुए. मुब. युक्तं (→प्रोक्तं). –d) दे4 द1 ग्र2 म1 उ1 वर्जयेत्, दे10 वर्जिता (→वर्जितं); का1 ब1-3 दे2.3.6 न1 पतितादिविवर्जितम्.

**५६.** –a) ब1 देव° (→वेद°); ते1 वेदयज्ञान्वितानां तु, म1 वेदज्ञैरभिहीनानां, द1 ग्र2 उ1 वेदयज्ञैरभिन्नानां. –b) ब1 समस्तानां, दे1.8-10 मुवें. मुए. प्रपन्नानां, म1 विशिष्टानां (→प्रशस्तानां); दे1.4 न1 सु° (→स्व°). –c) दे1.8-10 मुवें. मुए. ब्रह्मचारी (→ब्रह्मचर्या-); दे1.4.8.9 भवेद्, दे6.10 द1 चरेद् (→-हरेद्); ब3 दे1.3.4.6.10 उ1 मुवें. मुब. भैक्ष्यं (→भैक्षं). –d) दे1 प्रायतोन्वहं, दे6 प्रयतान्वहं, दे10 प्रयतोम्यहं, ते1 प्रीयतेस्वहम् (→प्रयतोऽन्वहम्).

**५७.** –a) दे4 भजेत (?) (→भिक्षेत); दे1 गुरोः कुले न भिक्षेत. –b) दे8 न + म, दे9 म1 न1 य (→न); द1 जाति° (→ज्ञाति°). –c) दे4 अलाभेत्यन्य°; द1 म1 उ1 अभावेत्वन्य° ग्र2 अभावेत्यन्य° (→अलाभे त्वन्य°). –d) का1 पूर्वंपूर्वं, ग्र2 पूर्वंपूर्व (→पूर्वं पूर्वं); ग्र2 म1 विसर्जयेत् (→विवर्जयेत्).

अतः परं ग्र2 पुस्तके ५६b–५८a यावत् श्लोकाः द्विरावृत्ताः.

**५८.** –a) दे3.4.6 न1 द1 वावि°, ग्र2 वा वा°, उ1 पापा° (→वा वि°); दे10 धामं (→ग्रामं). –c) ब3 ते1 निशम्य (→नियम्य). –d) दे4 दिशस्त्वा°, म1 दिशश्च°, ते1 द1 दिशश्चा° (→दिशस्त्व°); ग्र2 दिशाश्च नवलोकयेत्.

**५९.** दे1.8-10. ⊙; ब1. cd ⊙. –a) का1 समाहरेत्, ब1 समाहृष्य, दे2 समादधृत्य, द1 स्वमाहृत्य (→समाहृत्य); ब3 दे3.4.6 ते1 म1 उ1 मुवें. मुए. मुब. तद् भैक्ष्यं (→तद् भैक्षं). –d) ब1 दे3.6 यावदन्नं, ब2.3 मुवें. मुए. मुब. पचेदन्नं, दे4 यावल्लब्धं, ग्र2 याचदर्थं (→यावदर्थं); का1 ब1 दे3 °ममाज्ञया (→अमायया). –c) ते1 भुंजन्ते (→भुञ्जीत). –d) दे4 मानवः (→°मानसः); ते1 भाग्यतो भव्यकानसः, उ1 द1 ग्र2 वाग्यतो नान्यमानसः.

वें२.१२.६० भैक्ष्येण वर्त्तयेन्नित्यं नैकान्नादी भवेद् व्रती ।
भैक्ष्येण व्रतिनो वृत्तिरुपवाससमा स्मृता ॥६०
पूजयेदशनं नित्यमद्याच्चैतदकुत्सयन् ।
दृष्ट्वा हृष्येत् प्रसीदेच्च प्रतिनन्देच्च सर्वशः ॥६१
अनारोग्यमनायुष्यमस्वर्ग्यं चातिभोजनम् ।
अपुण्यं लोकविद्विष्टं तस्मात् तत्परिवर्जयेत् ॥६२
प्राङ्मुखोऽन्नानि भुञ्जीत सूर्याभिमुख एव वा ।
नाद्यादुदङ्मुखो नित्यं विधिरेष सनातनः ॥६३
प्रक्षाल्य पाणिपादौ च भुञ्जानो द्विरुपस्पृशेत् ।
शुचौ देशे समासीनो भुक्त्वा च द्विरुपस्पृशेत् ॥६४

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायामुपरिविभागे द्वादशोऽध्यायः ॥१२॥

---

६०. दे$_{1.8-10}$ ⊙. –a) ब$_1$ भिक्ष्येण, ब$_2$ दे$_4$ न$_1$ द$_1$ भैक्षेण, ते$_1$ तद् भैक्षं (→भैक्ष्येण); दे$_2$ वर्त्तयन् (?), द$_1$ वर्तयन् (→वर्त्तयेन्). –b) दे$_4$ नैकां भोजी, न$_1$ एकान्वेति (?), ते$_1$ नैकां नाश्ती, ग्र$_2$ नैवान्नादो, मुवें. मुए. मुब. एकान्नादी (→नैकान्नादी); ते$_1$ चरेत्, द$_1$ भवद् (→भवेद्); म$_1$ नैकान्नादो भवेद्यती. –c) का$_1$ ब$_{1.2}$ दे$_{2.4}$ न$_1$ द$_1$ भैक्षेण, ते$_1$ भैक्षको (→भैक्ष्येण); का$_1$ दे$_6$ द$_1$ म$_1$ उ$_1$ मुवें. मुए. वृत्तिनो (→व्रतिनो). –d) का$_1$ °समः (→°समा).

६१. दे$_{1.8-10}$. ab ⊙. –b) दे$_2$ अद्याच्चैतमकुत्सयन्, ते$_1$ अद्याच्चैवप्यकुत्सयन्, ग्र$_2$ अन्यदन्नमकुत्सयन्, द$_1$ म$_1$ उ$_1$ अद्यादन्नमकुत्सयन्. –c) दे$_{10}$ द$_1$ प्रसीदे च, ते$_1$ प्रसिद्धे च (→प्रसीदेच्च). –d) ते$_1$ प्रतिनन्दैश्, द$_1$ प्रतिनंदे, ग्र$_2$ प्रतिनन्दैच् (→प्रतिनंदेच्); म$_1$ सर्वदा (→सर्वशः); दे$_{1.8-10}$ मुवें. मुए. मुब. ततो भुञ्जीत वाग्यतः.

६२. –b) का$_1$ ते$_1$ अति-, दे$_6$ द$_1$ ग्र$_2$ उ$_1$ चापि, म$_1$ अपि (→चाति-). –c) दे$_{10}$ अपुण्यं लोकयेद्दिष्टं. –d) दे$_4$ प्रति° (→परि°); दे$_6$ °वर्त्तयेत् (→°वर्ज्जयेत्).

६२. –a) दे$_1$ प्राङ्मुखौ (→प्राङ्मुखो); ब$_2$ दे$_{4.6.10}$ ग्र$_2$ प्राङ्मुखो नाभि (दे$_6$ °ति, दे$_{10}$ °स्ति, ग्र$_2$ °नु) भुञ्जीत, ते$_1$ प्राङ्मुखान्मौनी भुञ्जीत, उ$_1$ प्राङ्मुखोन्नन्तु भुञ्जीत. –b) दे$_{8-10}$ ग्र$_2$ °मुखमेव (→°मुख एव); का$_1$ दे$_{4.6}$ च (→वा).

६४. का$_1$ द$_1$. cd. ⊙. –a) ब$_1$ पाणिना, ब$_{2.3}$ पाणी-, दे$_4$ पाणौ (→पाणि-); द$_1$ ग्र$_2$ उ$_1$ तु (→च). –b) दे$_1$ भुञ्जानौ (→भुंजानो); ते$_1$ भुंजानो द्विरद **. –c) दे$_{10}$ देशो (→देशे). –d) दे$_4$ भुक्तो, दे$_6$ भुक्ता, दे$_{10}$ मुक्ता (→भुक्त्वा); ग्र$_2$ उ$_1$ तु (→च); दे$_1$ भुक्ता चारुद्वपस्पृशेत्.

**पुष्पिका—**

**पुराणनाम**—का$_1$ इत्यादिमहापुराणे कौर्मे, ब$_1$ इति कौर्मे उपरिभागे, ब$_2$ दे$_3$ इति कूर्मपुराणे, ब$_3$ इत्यादिमहापुराणे कौर्मे उपरिभागे, दे$_1$ इति श्रीकूर्मपुराणे उपरिभागे व्यासे (श्रोत्रयोः स्पृष्टा), दे$_2$ इत्यादिमहापुराणे षट्सास्र्यां संहितायां कौर्मे, दे$_4$ इति श्रीकूर्मपुराणे ईश्वरगीतासूपनिषत्सु, दे$_6$ इति श्रीकूर्मपुराणे, दे$_{8-10}$ इति श्रीकूर्मपुराणे उपरिभागे व्यासगीतासु, न$_1$ इत्यादिमहापुराणे श्रीकौर्मे उपरिभागे, ते$_1$ इति श्रीकूर्मपुराणे व्यासगीतायां, द$_1$ इति श्रीकूर्मपुराणे उत्तरभागे, ग्र$_2$ म$_1$ इति श्रीकूर्मपुराणे उत्तरभागे व्यासगीतासूपनिषत्सु, उ$_1$ इति श्रीकूर्मपुराणे उत्तरभागे व्यासगीतासु, मुवें. इति श्रीकूर्मपुराणे उत्तरार्द्धे व्यासगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे, मुए. इति श्रीकूर्मपुराणे व्यासगीतासु, मुब. इति श्रीकौर्मे महापुराणे उपरिभागे. **अध्यायनाम**—का$_1$ ब$_{1-3}$ दे$_{1-4.6.8-10}$ न$_1$ ते$_1$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ मुए. ⊙; मुवें. ऋषिव्याससंवादे, मुब. ब्रह्मविद्यायां ब्रह्मणानामुपनयनादिकर्मयोगो नाम. **अध्यायसंख्या**—ब$_2$ दे$_{1.6}$. ⊙; का$_1$ एकादशोऽध्यायः ॥११॥, ब$_1$ एकादशः, ब$_3$ दे$_{2.3}$ एकादशोऽध्यायः, दे$_{4.8-10}$ द$_1$ ग्र$_2$ म$_1$ मुए. द्वादशोऽध्यायः, न$_1$ एकषष्टितमोऽध्यायः, ते$_1$ त्रयोदशोऽध्यायः, उ$_1$ द्वादशोध्यायः ॥श्री॥, मुवें. मुब. द्वादशोऽध्यायः ॥१२॥.

# १३

व्यास उवाच ।❀

भुक्त्वा पीत्वा च सुप्त्वा च स्नात्वा रथ्योपसर्पणे ।
ओष्ठावलोमकौ स्पृष्ट्वा वासो विपरिधाय च ॥१
रेतोमूत्रपुरीषाणामुत्सर्गेऽयुक्तभाषणे ।
ष्ठीवित्वाऽध्ययनारम्भे कासश्वासागमे तथा ॥२
चत्वरं वा श्मशानं वा समाक्रम्य द्विजोत्तमः ।
संध्ययोरुभयोस्तद्वदाचान्तोऽप्याचमेत् पुनः ॥३
चण्डालम्लेच्छसंभाषे स्त्रीशूद्रोच्छिष्टभाषणे ।
उच्छिष्टं पुरुषं स्पृष्ट्वा भोज्यं चापि तथाविधम् ।
आचामेदश्रुपाते वा लोहितस्य तथैव च ॥४
भोजने संध्ययोः स्नात्वा पीत्वा मूत्रपुरीषयोः ।
आचान्तोऽप्याचमेत् सुप्त्वा सकृत्सकृदथान्यतः ॥५
अग्नेर्गवामथालम्भे स्पृष्ट्वा प्रयतमेव वा ।
स्त्रीणामथात्मनः स्पर्शे नीवीं वा परिधाय च ॥६
उपस्पृशेज्जलं वार्द्रं तृणं वा भूमिमेव वा ।
केशानां चात्मनः स्पर्शे वाससोऽक्षालितस्य च ॥७
अनुष्णाभिरफेनाभिरदुष्टाभिश्च धर्मतः ।
शौचेप्सुः सर्वदाचामेदासीनः प्रागुदङ्मुखः ॥८ वें.२.१३ ९

---

## १३

❀ दे$_{1}$. ⊙; दे$_{8.9}$ व्यास उ.; न$_{1}$ श्रीवेदव्यासः; द$_{1}$ म$_{1}$ श्रीव्यासः; ग्र$_{2}$ उ$_{1}$ व्यासः.

१. –a) ते$_{1}$ सृष्ट्वा,+सुप्त्वा (→सुप्त्वा). –b) ब$_{2.3}$ दे$_{3.6}$ न$_{1}$ रथ्याव° (→रथ्योप°). –c) दे$_{1.4}$ दृष्ट्वावलोमकौ, दे$_{8.9}$ ते$_{1}$ मुवें. मुए. मुब. ओष्ठौ विलोमकौ (→ओष्ठावलोमकौ); दे$_{6}$ ओष्ठस्वलोमकौ स्पृष्ट्वा, दे$_{10}$ उष्ट्रैः सलोकैः स्पृष्ट्वा. –d) ब$_{2}$ न$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ वासोऽपि (→वासो वि-).

२. –a) दे$_{3.6}$ चैव (→-मूत्र-). –b) दे$_{3.4.6}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ [अ]नृत° (→[अ]युक्त°); न$_{1}$ उत्सर्गे शुक्तभक्षणे. –c) दे$_{3.6}$ ष्ठीविका°, ते$_{1}$ अदित्वा°, + आदित्या°, म$_{1}$ ष्ठीवना°, उ$_{1}$ तथा चा° (→ष्ठीवित्वा°); द$_{1}$ षष्ठी विवाध्यनारम्भे, ग्र$_{2}$ विद्याध्यान इमारम्भे. –d) क$_{1}$ दे$_{2}$ काम-, ब$_{2}$ दे$_{6}$ काशः (दे$_{6}$ श-) (→कास-); ग्र$_{2}$ °वासा° (→°श्वासा°).

३. –a) का$_{1}$ दे$_{6}$ न$_{1}$ उ$_{1}$ चत्वारं, ग्र$_{2}$ सत्वरं (→चत्वरं). –b) दे$_{4.8.9.10}$ द$_{1}$ ग्र$_{2}$ उ$_{1}$ मुवें. मुए. समागम्य, म$_{1}$ समागत्य (→समाक्रम्य); ब$_{2}$ दे$_{4.8-10}$ द्विजोत्तमाः, दे$_{3}$ द्विजोत्तमं, दे$_{6}$ द्विजोत्तम, द$_{1}$ द्विजोजसः (→द्विजोत्तमः). –c) दे$_{3}$ चैव (→तद्वत्). –d) दे$_{4}$ आचान्ते° (→आचान्तो°).

४. –a) का$_{1}$ दे$_{6.10}$ ते$_{1}$ चाण्डाल° (→चण्डाल°). –b) दे$_{4}$ °भोजने (→°भाषणे). –c) ब$_{2}$ उच्छिष्टे (→उच्छिष्टं); ब$_{2}$ दे$_{10}$ दृष्ट्वा (→स्पृष्ट्वा). –d) द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ वापि (→चापि); दे$_{2}$ यथा° (→तथा°). –e) द$_{1}$ आचमेद्, ग्र$_{2}$ आचरेद् (→आचामेद्); ते$_{1}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ च (→वा).

५. –a) द$_{1}$ भोजये (→भोजने); ब$_{3}$ भोजने न च सन्ध्यायाः. –b) ब$_{2}$ तथा, ब$_{3}$ स्नात्वा, दे$_{8-10}$ मुवें. मुए. मुब. त्यागे, ते$_{1}$ पीत्वा, + त्यागे, म$_{1}$ कृत्वा (→पीत्वा). –c) ब$_{1}$ आचामे (→आचान्तो); का$_{1}$ ब$_{2.3}$ दे$_{2}$ वा°, ब$_{1}$ दे$_{3.6}$ ह्या° (→[अ]प्या°); का$_{1}$ दे$_{2}$ क्षुत्वा, ब$_{2}$ एषु, दे$_{4}$ स्पृष्ट्वा (→सुप्त्वा). –d) ब$_{1}$ द$_{1}$ अथान्यथा, दे$_{4}$ अथात्मनः, दे$_{8.9}$ मुवें. मुए. अथाव्ययः (→अथान्यतः).

६. –a) ग्र$_{2}$ तथा° (→अथा°). –b) दे$_{2.6.10}$ मुवें. मुए. मुब. च (→वा). –c) का$_{1}$ ब$_{1.3}$ दे$_{2.3.6}$ स्त्रीणामथात्मसंस्पर्शे. –d) ब$_{1.3}$ दे$_{3.6}$ नीलां, ब$_{2}$ दे$_{2}$ नीलीं (→नीवीं); द$_{1}$ ग्र$_{2}$ उ$_{1}$ वि- (→वा); ग्र$_{2}$ उ$_{1}$ परिधाप्य (→परिधाय).

७. –a) ग्र$_{2}$ उपस्पर्शेत् (→उपस्पृशेत्); का$_{1}$ ब$_{1}$ दे$_{3.4}$ म$_{1}$ मुब. चार्द्रं, ब$_{2}$ चात्र, दे$_{8-10}$ मुवें. मुए. चान्तः, न$_{1}$ पादं, ते$_{1}$ वाज्यं, द$_{1}$ धीमान्, ग्र$_{2}$ सार्द्धं, उ$_{1}$ शुद्धं (→वार्द्रं). –b) ब$_{2}$ मुब. भुवम् (→भूमिम्); दे$_{1.6.9}$ मुवें. मुए. च (→वा). –c) दे$_{3.6}$ म$_{1}$ आत्मनः (→चात्मनः); दे$_{8-10}$ ते$_{1}$ द$_{1}$ मुवें. मुए. स्पर्शं (→स्पर्शे); न$_{1}$ केशोनापद्मनः स्पर्शे.

८. –a) ब$_{1}$ अष्णुना° (→अनुष्णा°); न$_{1}$ अनष्टाभिरथेनाभिर्, म$_{1}$ अनुष्णाभिरथाणाभिर्. –b) ब$_{1}$ दे$_{8-10}$ अनुष्णाभिश्, मुवें. मुए. मुब. विशुद्धाद्भिश् (→अदुष्टाभिश्); दे$_{4.9.10}$ ते$_{1}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ सर्वतः, दे$_{8}$ मुवें. मुए. वाग्यतः, उ$_{1}$

२.१३.९ शिरः प्रावृत्य कण्ठ वा मुक्तकच्छशिखोऽपि वा ।
अकृत्वा पादयोः शौचमाचान्तोऽप्यशुचिर्भवेत् ।।९
सोपानत्को जलस्थो वा नोष्णीषी वाचमेद् बुधः ।
न चैव वर्षधाराभिर्न तिष्ठन् नोद्धृतोदकैः ।।१०
नैकहस्तार्पितजलैर्विना सूत्रेण वा पुनः ।
न पादुकासनस्थो वा बहिर्जानुरथापि वा ।।११
न जल्पन् न हसन् प्रेक्षन् शयानः प्रह्व एव च ।
नावीक्षिताभिः फेनाद्यैरुपेताभिरथापि वा ।।१२
शूद्राशुचिकरोन्मुक्तैर्न क्षाराभिस्तथैव च ।
न चैवाङ्गुलिभिः शब्दं न कुर्वन् नान्यमानसः ।।१३
न वर्णरसदुष्टाभिर्न चैव प्रदरोदकैः ।
न पाणिक्षुभिताभिर्वा न बहिष्कक्ष एव वा ।।१४
हृद्गाभिः पूयते विप्रः कण्ठ्याभिः क्षत्रियः शुचिः ।
प्राशिताभिस्तथा वैश्यः स्त्रीशूद्रौ स्पर्शतोऽन्ततः ।।१५
अङ्गुष्ठमूलान्तरतो रेखायां ब्राह्ममुच्यते ।
अन्तराङ्गुष्ठदेशिन्यो पितॄणां तीर्थमुत्तमम् ।।१६
कनिष्ठामूलतः पश्चात् प्राजापत्यं प्रचक्षते ।
अङ्गुल्यग्रे स्मृतं दैवं तदेवार्षं प्रकीर्त्तितम् ।।१७

सम्मतं (→धर्मतः). –c) द$_{1}$ ग्र$_{2}$ म$_{1}$ अद्भिस्तु, उ$_{1}$ आभिस्तु (→शौचेप्सुः).

९. –a) ग्र$_{2}$ आवृत्य (→प्रावृत्य); द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ कर्णं (उ$_{1}$ °र्णौ) (→कण्ठं). –b) दे$_{6}$ शुक्ल- (→मुक्त-); का$_{1}$ ब$_{1\text{-}3}$ दे$_{2.3.6}$ -केश° (→-कच्छ°); दे$_{4}$ च (→वा). –d) का$_{1}$ तु, ब$_{2.3}$ दे$_{2}$ न, दे$_{6}$ [अ]थ (→[अ]प्य-).

१०. –b) का$_{1}$ ब$_{2.3}$ दे$_{2.8.9}$ मुवें. मुए. मुब. चा° (→वा°); दे$_{10}$ अष्णीषोऽचमेद्बुधः, उ$_{1}$ सोष्णीषो नाचमेद् बुधः, –c) दे$_{4}$ वर्त्म° (→वर्ष°). –d) ब$_{1}$ दे$_{3.6}$ न$_{1}$ उ$_{1}$ न तिष्ठन्न धृतोदकैः, दे$_{2}$ ग्र$_{2}$ ते$_{1}$ नतिष्ठंस्तु धृतोदकैः, दे$_{8\text{-}10}$ मुवें. मुए. मुब. हस्तोच्छिष्टे तथा बुधः.

११. –a) ते$_{1}$ उ$_{1}$ °जले (→°जलैर्); का$_{1}$ नैकभूच्छायितजलैर्. –b) ते$_{1}$ मन्त्राणि (→सूत्रेण). –d) का$_{1}$ ब$_{1.2}$ बहिर्जानुरथोपि वा, दे$_{8.9}$ मुवें. मुए. मुब. बहिर्जानुकरोऽपि वा, म$_{1}$ बहिर्जानुरेव च.

१२. दे$_{8.9}$ मुवें. मुए. ⊙. –a) दे$_{1}$ भोक्षन्, दे$_{4}$ नेक्षन्, ते$_{1}$ नृत्यन् (→प्रेक्षन्). –b) दे$_{4}$ ब्रुवाणः (→शयानः); दे$_{3}$ भुक्त, उ$_{1}$ प्राय (→प्रह्व); दे$_{4}$ वा (→च); दे$_{10}$ सयानारूढमेव वा. –c) ब$_{2}$ नावीक्षितश्च, दे$_{4}$ नानीक्षिताभिः, ते$_{1}$ न दूषिताभिः, द$_{1}$ न वीक्षिताभिः, मुब. नावीक्षितश्च (→नावीक्षिताभिः); का$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ फेनाभिः (→फेनाद्यैः). –d) ग्र$_{2}$ म$_{1}$ उ$_{1}$ सफेनाभिरथापि वा.

१३. का$_{1}$. ⊙. –a) ते$_{1}$ शुद्धं शुचि° (→शूद्राशुचि°); दे$_{4}$ द$_{1}$ म$_{1}$ उ$_{1}$ °करैर्मुक्तैर्, ग्र$_{2}$ °करामुक्तैर् (→°करोन्मुक्तैर्); दे$_{8.9}$ मुवें मुए. विट्शूद्रादिकरामुक्तैर्, दे$_{10}$ विटः शूद्रादिकैर्मुक्तैर्. –b) दे$_{8\text{-}10}$ मुवें. मुए. मुब. न चोच्छिष्टैस्तथैव च, ते$_{1}$ अक्षाराभिस्तथैव च. –c) दे$_{3.8\text{-}10}$ मुवें. मुए. मुब. शस्तं, दे$_{4}$ शब्दे (→शब्दं); दे$_{6}$ न चैवञ्जालिभिः सार्द्धं. –d) ब$_{1\text{-}3}$ दे$_{2}$ मुब. न कुर्यात्, दे$_{8\text{-}10}$ मुवें. मुए. प्रकुर्वन् (→न कुर्वन्); दे$_{8\text{-}10}$ मुवें. मुए. अन्यमानसः (→नान्यमानसः).

१४. का$_{1}$. ⊙. –a) दे$_{4}$ °दुष्टानि (→°दुष्टाभिर्). –b) ग्र$_{2}$ प्रतरो°, उ$_{1}$ प्रवरो° (→प्रदरो°); दे$_{4.8\text{-}10}$ मुवें. मुए. मुब. न चैवा प्रच्छ (दे$_{4}$ °व) रोदकैः. –c) ब$_{3}$ °क्षुधिताभिर्, दे$_{6}$ °भक्षिताभिर्, दे$_{8}$ °भुक्तिताभिर् (→°क्षुभिताभिर्); दे$_{10}$ च (→वा). –d) दे$_{3.6}$ ब$_{2}$ बहिः कर्म, ते$_{1}$ बहिः कच्छ, ग्र$_{2}$ बहिकक्ष्य (→बहिःकक्ष); दे$_{3.6}$ रहिताभिरथापि वा.

१५. –a) ब$_{1}$ दे$_{6}$ हृदाभिः, द$_{1}$ हृद्गतैः, ग्र$_{2}$ म$_{1}$ हृद्याभिः (→हृद्गाभिः); न$_{1}$ हृद्गताभिःशुचिर्विप्रः. –b) का$_{1}$ कंठादिद्भः, दे$_{4.6}$ कण्ठाभिः (→कण्ठ्याभिः); न$_{1}$ कण्ठगाभिः शुचिर्नृपः, ते$_{1}$ कण्ठगाभिस्तु क्षत्रियः. –c) दे$_{4}$ पाविताभिः, ते$_{1}$ वक्त्रगाभिः (→प्राशिताभिः). –d) ते$_{1}$ °शूद्रा, द$_{1}$ ग्र$_{2}$ °शूद्रैः, म$_{1}$ °शूद्र- (→°शूद्रौ); दे$_{4}$ ते$_{1}$ म$_{1}$ स्पर्शनात्ततः, दे$_{6}$ द$_{1}$ उ$_{1}$ स्पर्शनं तथा, दे$_{8\text{-}10}$ मुवें. मुए. मुब. स्पर्शतोऽम्भसः, ग्र$_{2}$ स्पर्शनं ततः (→स्पर्शतोऽन्ततः).

१६. –a) का$_{1}$ ग्र$_{2}$ अङ्गुष्ठमूलोत्तरतो, ब$_{1}$ अङ्गुष्ठचतुरोभागे, दे$_{2.8\text{-}10}$ मुवें. मुए. मुब. अङ्गुष्ठमूल(दे$_{10}$ °ले)रेखायां, दे$_{6}$ अङ्गुष्ठातलान्तरतो, ते$_{1}$ अङ्गुष्ठमूलान्तरित-, म$_{1}$ अङ्गुष्ठमूलान्तरगो. –b) ब$_{1}$ दे$_{2.6}$ द$_{1}$ ग्र$_{2}$ ब्रह्म (→ब्राह्मं); दे$_{8\text{-}10}$ मुवें. मुए. मुब. -होच्यते (→उच्यते). –c) दे$_{8\text{-}10}$ मुवें. मुए. प्रदेशिन्याश्च यन्मूलं. –d) द$_{1}$ उत्तमः, म$_{1}$ उच्यते (→उत्तमम्); दे$_{8\text{-}10}$ मुवें. मुए. मुब. पितृतीर्थमनुत्तमम्.

१७. –a) ते$_{1}$ अङ्गुष्ठमूलतश्चाथ. –b) ब$_{1}$ प्रचक्ष्यते (→प्रचक्षते). –c) दे$_{6}$ अङ्गुल्याग्रे, दे$_{10}$ अङ्गुल्यग्र- (→अङ्गुल्यग्रे); ब$_{1.2}$ न$_{1}$ उ$_{1}$ स्मृतं देवं, दे$_{10}$ स्मृतं दिव्यं, द$_{1}$ स्थितं तीर्थं (→स्मृतं दैवं). –d) दे$_{8\text{-}10}$ मुवें. मुए. मुब. तदेवार्थं (दे$_{10}$ °र्थे), द$_{1}$ ग्र$_{2}$ उ$_{1}$ तथैवार्षं (→तदेवार्षं); म$_{1}$ प्रचक्षते (→प्रकीर्त्तितम्); ब$_{1}$ देवर्षिविप्रकीर्त्तितम्.

मूले वा दैवमार्षं स्यादाग्नेयं मध्यतः स्मृतं ।
तदेव सौमिकं तीर्थमेतज्ज्ञात्वा न मुह्यति ॥१८
ब्राह्मेणैव तु तीर्थेन द्विजो नित्यमुपस्पृशेत् ।
कायेन वाऽथ दैवेन न तु पित्र्येण वै द्विजाः ॥१९
त्रिः प्राश्नीयादपः पूर्वं ब्राह्मणः प्रयतस्ततः ।
संमृज्याङ्गुष्ठमूलेन मुखं वै समुपस्पृशेत् ॥२०
अङ्गुष्ठानामिकाभ्यां तु स्पृशेन्नेत्रद्वयं ततः ।
तर्जन्यङ्गुष्ठयोगेन स्पृशेन्नासापुटद्वयम् ॥२१
कनिष्ठाङ्गुष्ठयोगेन श्रवणे समुपस्पृशेत् ।
सर्वासामथयोगेन हृदयं तु तलेन वा ।
संस्पृशेद् वा शिरस्तद्वदङ्गुष्ठेनाथवा द्वयम् ॥२२

त्रिःप्राश्नीयाद् यदम्भस्तु सुप्रीतास्तेन देवताः ।
ब्रह्मा विष्णुर्महेशश्च भवन्तीत्यनुशुश्रुमः ॥२३
गङ्गा च यमुना चैव प्रीयेते परिमार्जनात् ।
संस्पृष्टयोर्लोचनयोः प्रीयेते शशिभास्करौ ॥२४
नासत्यदस्रौ प्रीयेते स्पृष्टे नासापुटद्वये ।
कर्णयोः स्पृष्टयोस्तद्वत् प्रीयेते चानिलानलौ ॥२५
संस्पृष्टे हृदये चास्य प्रीयन्ते सर्वदेवताः ।
मूर्ध्नि संस्पर्शनादेकः प्रीतः स पुरुषो भवेत् ॥२६
नोच्छिष्टं कुर्वते मुख्या विप्रुषोऽङ्गं नयन्ति याः ।
दन्तवद् दन्तलग्नेषु जिह्वास्पर्शेऽशुचिर्भवेत् ॥२७ वें.२.१३.२७

---

१८. –a) दे$_4$ ते$_1$ मूलं, न$_1$ म$_1$ मूल- (→मूले); द$_1$ ग्र$_2$ म$_1$ उ$_1$ स्याद् (→वा); दे$_{8-10}$ मुवें. मुए. आदिष्टं (→आर्षं स्यात्). –b) न$_1$ मध्यमस्थितं (→मध्यतः स्मृतं). –c) का$_1$ तदैव, ग्र$_2$ म$_1$ तदेतत् (→तदेव); दे$_{10}$ सोमिकं (→सौमिकं). –d) दे$_{8-10}$ मुवें मुए. मुब. एवं (→एतद्).

१९. ग्र$_2$. १९c–२०d ⊙. –a) ब$_1$ दे$_4$ ग्र$_2$ उ$_1$ ब्राह्मणेनैव (→ब्राह्मेणैव तु). –c) दे$_{3.4}$ उ$_1$ चाथ, म$_1$ [अ]थ च (→वाथ). –c) म$_1$ उ$_1$ पित्र्येण (→दैवेन). –d) ब$_{2.3}$ दे$_4$ मुब. पै (दे$_4$ पि)त्रेण, द$_1$ उ$_1$ दैवेन (→पित्र्येण); दे$_4$ उ$_1$ वा (→वै); दे$_{8-10}$ मुवें. मुए. चाथाचान्ते शुचिर्भवेत्, ते$_1$ दद्यात् पैत्र्येण वा द्विजाः.

२०. ग्र$_2$. ⊙. –a) दे$_{8-10}$ मुवें. मुए. मुब. त्रिराचामेदपः पूर्वं. –b) ब$_{2.3}$ न$_1$ ते$_1$ म$_1$ ब्राह्मेण (→ब्राह्मणः); दे$_9$ स्वयतः (→प्रयतः); ते$_1$ स्थितः, उ$_1$ स्मृतः (→ततः). –c) ब$_1$ दे$_{4.5.8-10}$ ते$_1$ म$_1$ उ$_1$ मुवें. मुए. मुब. संवृताङ्गुष्ठ°, ब$_2$ न$_1$ संवृत्या (न$_1$ °त्य)ङ्गुष्ठ°, दे$_6$ सपृष्ठाङ्गुष्ठ° (→समृज्यांगुष्ठ°); दे$_3$ संमृज्याङ्गुलिमूलेन. –d) दे$_6$ मुखैः (→मुखं); द$_1$ चैव (→वै स-).

२१. द$_1$. ⊙; दे$_4$. २१d–२२a ⊙ (द्र. सं.). –a) दे$_3$ अङ्गुला° (→अङ्गुष्ठा°). –b) ते$_1$ पुनः (→ततः). –d) न$_1$ म$_1$ स्पृशन् (→स्पृशेत्).

२२. द$_1$. ab ⊙; दे$_4$. a ⊙. –a) उ$_1$ कनिष्ठिकाङ्गुष्ठयोगेन. –c) दे$_{3.4.6}$ सर्वेषां (→सर्वासां); द$_1$ ग्र$_2$ म$_1$ उ$_1$ एव (→अथ); दे$_{8-10}$ मुवें. मुए. मुब. सर्वाङ्गुलीभिर्बाहू च. –d) दे$_{3.4.6}$ ते$_1$ वै (→वा). –e) द$_1$ म$_1$ उ$_1$ वै (→वा); ब$_3$ दे$_{3.6}$ स्पृशेद्वै शिरसस्तद्वद्, दे$_{8-10}$ मुवें. मुए. मुब. नाभिः शिरश्च सर्वाभिर्, न$_1$ स्पृशे द्वैशिरसो तद्वद्, ते$_1$ संस्पृशेद्वै शिरस्तेन, ग्र$_2$ संस्पर्शो द्वे शिरस्तद्वद्. –f) ते$_1$ अङ्गुष्ठानामिकाद्वये.

२३. –a) मुवें. मुए. तदं° (→यदं°); उ$_1$ यदन्तस् (→यदम्भस्); दे$_{3.6}$ त्रिः प्राश्नीयामुदम्भस्तु, ग्र$_2$ त्रिः प्राश्नीयादन्तरस्तु. –b) का$_1$ ब$_{1-3}$ दे$_{2-4.6}$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ प्रीतास्ते नास्य देवताः, ते$_1$ प्रीताः स्युस्तेन देवताः. –c) का$_1$ ब$_1$ दे$_{10}$ न$_1$ ब्रह्मविष्णुमहेशाश्च. –d) का$_1$ ब$_3$ दे$_{6.8-10}$ न$_1$ ते$_1$ मुवें. मुए. मुब. °शुश्रुम (→°शुश्रुमः).

२४. ब$_2$. २४d–४५b ⊙. –ab) ग्र$_2$ गङ्गायमुनयोश्चैव प्रीयते परिमार्जनात्. –c) उ$_1$ संस्पर्शाल्लोचनयोः. –d) म$_1$ चन्द्र° (→शशि°).

२५. दे$_1$. ab ⊙; ब$_2$. ⊙. –a) द$_1$ ग्र$_2$ म$_1$ उ$_1$ °संज्ञौ (→°दस्रौ). –b) का$_1$ ब$_1$ न$_1$ म$_1$ पृष्ठे, ब$_3$ स्पर्शे (→स्पृष्टे). –c) दे$_{8-10}$ मुवें. मुए. मुब. श्रोत्रयोः (→कर्णयोः); दे$_9$ चैव, म$_1$ तावत् (→तद्वत्). –d) ते$_1$ प्रीयेते चानलानिलौ.

अतः परं दे$_2$ अधिकम्—

*संस्पृष्टे हृदये चास्य प्रीयेते वानिलानलौ’ ।

( = २६ab)

२६. ब$_2$. ⊙. –a) दे$_1$ संस्पृष्ठ-(→संस्पृष्टे); का$_1$ दे$_{1.8.9}$ मुवें. मुए. मुब. वास्य (→चास्य). –c) दे$_{1.4.8-10}$ ग्र$_2$ म$_1$ उ$_1$ मुवें. मुए. मुब. एव, ते$_1$ द$_1$ देवः (→एकः). –d) दे$_{1.4.8-10}$ न$_1$ ते$_1$ ग्र$_2$ म$_1$ उ$_1$ मुवें. मुए. मुब. तु (→स); दे$_3$ प्रीतः स पुरुषोत्तमः.

२७. ब$_2$. ⊙. –a) द$_1$ कुर्वतो, ग्र$_2$ कुरुते (→कुर्वते); का$_1$ दे$_{1.8-10}$ मुवें. मुए. नित्यं, ते$_1$ मुखाद्, ग्र$_2$ मुख्य- (→मुख्या). –b) दे$_3$ व्रजन्ति (→नयन्ति); का$_1$ विप्लुषो वै

वं.२.१३.२८ स्पृशन्ति बिन्दवः पादौ य आचामयतः परान् ।
भूमिगैस्ते समा ज्ञेया न तैरप्रयतो भवेत् ॥२८
मधुपर्के च सोमे च ताम्बूलस्य च भक्षणे ।
फलमूले चेक्षुदण्डे न दोषं प्राह वै मनुः ॥२९
प्रचरंश्चान्नपानेषु द्रव्यहस्तो भवेन्नरः ।
भूमौ निक्षिप्य तद् द्रव्यमाचम्याभ्युक्षयेत् तु तत् ॥३०
तैजसं वै समादाय यद्युच्छिष्टो भवेद् द्विजः ।
भूमौ निक्षिप्य तद् द्रव्यमाचम्याभ्युक्षयेत् तु तत् ॥३१
यद्यमत्रं समादाय भवेदुच्छेषणान्वितः ।
अनिधायैव तद् द्रव्यमाचान्तः शुचितामियात् ।
वस्त्रादिषु विकल्पः स्यात् तत्संस्पृष्ट्वाचमेदिह ॥३२
अरण्येऽनुदके रात्रौ चौरव्याघ्राकुले पथि ।
कृत्वा मूत्रं पुरीषं वा द्रव्यहस्तो न दुष्यति ॥३३
निधाय दक्षिणे कर्णे ब्रह्मसूत्रमुदङ्मुखः ।
अह्नि कुर्याच्छकृन्मूत्रं रात्रौ चेद् दक्षिणामुखः ॥३४
अन्तर्धाय महीं काष्ठैः पत्रैर्लोष्ठतृणेन वा ।
प्रावृत्य च शिरः कुर्याद् विण्मूत्रस्य विसर्जनम् ॥३५
छायाकूपनदीगोष्ठचैत्याम्भःपथि भस्मसु ।
अग्नौ चैव श्मशाने च विण्मूत्रे न समाचरेत् ॥३६

पतन्ति याः, ते1 विप्रुषो निपतन्ति याः, द1 विप्रुषोस्तन्निर्गीर्यतः, ग्र2 म1 विप्रुषोङ्ग' न संस्पृशेत्, उ1 विपृष्टो चान्न य व्यथाः. -c) ते1 °लग्ने तु (→°लग्नेषु); का1 दे8-10 मुवें. मुए. दन्तान्तर्दन्तलग्नेषु. -d) का1 दे8-10 मुवें. मुए. जिह्वोष्ठैरशुचिर्भवेत्.

२८. ब2. ⊙. -a) ब1 दे4.6 पापा (→पादौ). -b) म1 आचामयते (→आचामयतः); दे4 परं (→परान्); न1 य आचामे ततः परान्. -c) दे1.8-10 न1 भूमिकैस्, उ1 भूमिजैस्, मुवें. मुए. मुब. भूमिकास् (→भूमिगैस्); ब3 उ1 मुब. तैः, न1 तु (→ते).

२९. ब2.⊙. -c) दे6 न1 द1 मुवें. मुए. मुब. फले (→फल-); न1 उ1 मुवें. मुए. -मूलेक्षुदण्डे च (→-मूले चेक्षुदण्डे); दे1.8-10 फलमूलेक्षुदण्डेन. -d) दे10 मुनिः (→मनुः).

३०. ब2.⊙; दे10. ३०c-३१b⊙. -a) का1 दे2.4.10 उ1 प्रवरंश्चान्न°, दे1.8.9 मुवें. मुए. मुब. प्रचुरान्नोद°, दे3.6 प्रचरन्नन्न, न1 प्रपरंश्चान्न°, ते1 प्रचुरस्यान्न°, द1 म1 प्रवेक्षन्न°, ग्र2 प्रवाचाथान्न° (→प्रचरंश्चान्न°). -b) का1 द्रव्यहस्ते, दे1.4.8-10 न1 ते1 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. यद्युच्छिष्टो (→द्रव्यहस्तो); दे1.4.8-10 ते1 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. द्विजः (→नरः). -d) दे1 ह्रियते तु तत्, दे8 न1 [अ]भ्युक्षयेत्ततः, दे9 मुवें. मुए. [अ]भ्युक्षिपेत्ततः (→अभ्युक्षयेत्तु तत्); द1 ग्र2 उ1 आचम्य प्रोक्षयेत्ततः, ते1 आचम्याभ्युक्षयेत् शुचिः, म1 आचम्य भक्षयेत्ततः.

३१. ब2 दे1.4. ⊙; दे10. ab ⊙; ब1 दे3.6. cd ⊙. -a) दे2.6.8.9 द1 मुवें. मुए. मुब. वा (→वै). -b) म1 ततः (→द्विजः). -c) मुब. निक्षेप्य (→निक्षिप्य). -d) दे8-10 मुवें. मुए. मुब. याचम्याह्रियते तु तत्, द1 ग्र2 उ1 आचम्य प्रोक्षयेत्ततः, म1 आचम्य भक्षयेद् द्विजः.

३२. ब2. ⊙; दे4. c-f ⊙. -a) का1 ब1.3 दे2.3.6 यद्यद्रव्यं, ते1 यदि द्रव्यं (→यद्यमन्त्रं). -b) दे1 पक्वद्दिष्टो भवेद्द्विजः, द1 ग्र2 उ1 भवेदुत्कर्षणान्वितः. -c) का1 दे2 भूमौ निधाय यद् द्रव्यम्, दे6 अभिधाये च यद् द्रव्यं, ते1 सन्निधायैव तद् द्रव्यं, द1 अनिधायैव वक्तव्यं. -d) ते1 आचान्तस्तु शुचिर्मतः. -e) न1 विकल्पस्य, द1 ग्र2 म1 उ1 विकल्पत्वात् (→विकल्पः स्यात्).-f) ब1 दे1.8-10 न1 मुवें. मुए. मुब.न (ब1 तत्)स्पृष्ट्वा चै(न1 वै)व मेव हि, दे2 तत्संस्पृष्ट्वा चैवमेव हि, ते1 तत्स्पर्शादेव मेव हि, द1 ग्र2 म1 उ1 तत् स्पृ(द1 सृ)ष्ट्वा देवमेव हि.

३३. ब2. ⊙. -b) दे9 ते1 ग्र2 म1 चोर° (→चौर°); का1 दे6 °व्याघ्र-, दे3 °व्याघ्रान् (→°व्याघ्रा-). -c) न1 द1 ग्र2 म1 उ1 मूत्रपुरीषे (→मूत्रं पुरीषं). -d) न1 ते1 ग्र1 °हस्ते (→°हस्तो); ते1 शुध्यति, + दुष्यति (→दुष्यति).

३४. ब2. ⊙; दे1.8-10. cd ⊙. -c) का1 बहिः, दे4 अद्भिः, दे6 अस्ति, उ1 अग्नि (→अह्नि). -d) दे4 वै, द1 च (→चेद्); दे2 दक्षिणमुखः (→दक्षिणामुखः).

३५. ब2. ⊙. -a) दे1 कालैः (→काष्ठैः). -b) ब3 पत्र-, दे4 पात्रैर् (→पत्रैर्); दे1.8-10 ते1 म1 उ1 लोष्ठैस् (→लोष्ठ-). -d) दे4 विसर्जने (→विसर्जनम्); द1 ग्र2 म1 शकृन्मूत्रविसर्जनम्.

३६. ब2. ⊙. -a) दे8.6 ते1 म1 गोष्ठे, न1 -श्रेष्ठ-, ग्र2 -कोष्ठ- (→-गोष्ठ-). -b) ब3 दे1.8-10 न1 मुवें. मुए. मुब. -चैत्यान्तः(→-चैत्याम्भः); उ1 भूमिषु (→भस्मसु). -c) दे1.8-10 मुवें. मुए. मुब. वेश्म (→चैव). -d) ब3 दे6 ग्र2 म1 उ1 विण्मूत्रं (→विण्मूत्रे).

न गोमये न कृष्टे वा महावृक्षे न शाड्वले ।
न तिष्ठन् वा न निर्वासा न च पर्वतमस्तके ।।३७
न जीर्णदेवायतने न वल्मीके कदाचन ।
न ससत्त्वेषु गर्तेषु न गच्छन् वा समाचरेत् ।।३८
तुषाङ्गारकपालेषु राजमार्गे तथैव च ।
न क्षेत्रे न विले वाऽपि न तीर्थे न चतुष्पथे ।।३९
नोद्यानोदसमीपे वा नोषरे न पराशुचौ ।
न सोपानत्पादुको वा छत्री वा नान्तरिक्षके ।।४०
न चैवाभिमुखे स्त्रीणां गुरुब्राह्मणयोर्गवाम् ।
न देवदेवालययोरपामपि कदाचन ।।४१
न ज्योतींषि निरीक्षन् वा न संध्याभिमुखोऽपि वा ।
प्रत्यादित्यं प्रत्यनलं प्रतिसोमं तथैव च ।।४२
आहृत्य मृत्तिकां कूलाल्लेपगन्धापकर्षणम् ।
कुर्यादतन्द्रितः शौचं विशुद्धैरुद्धृतोदकैः ।।४३
नाहरेन्मृत्तिकां विप्रः पांशुलान्न च कर्दमात् ।
न मार्गान्नोषराद् देशाच्छौचशिष्टां परस्य च ।।४४
न देवायतनात् कूपाद् ग्रामान्न च जलात् तथा ।
उपस्पृशेत् ततो नित्यं पूर्वोक्तेन विधानतः ।।४५ वें.२.१३.४५

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायामुपरिविभागे त्रयोदशोऽध्यायः ।।१३।।

---

३७. ब2. ⊙; ब1. ३७a–४४d ⊙. –a) दे1.4.8-10 मुवें. मुए. मुब. गोपथे (→गोमये); का1 काष्ठे च, ब3 कुष्ठे वा, न1 कृष्णे वा, ते1 कुड्यादौ, ग्र2 कुष्येव (→कृष्टे वा). –b) का1 ब3 दे1.4.6.8-10 ते1 च (→न); द1 ग्र2 म1 न गोष्ठे नैव, उ1 न गोष्ठे न च (→महावृक्षे न). –c) दे6 नाम (→वा न); का1 न शुद्धे वा निवासे वा, ते1 न तिष्ठन् नाविवासा वा.

३८. ब1.2. ⊙. का1. cd ⊙. –a) दे3.10 जीर्णे, दे6 क्षीण- (→जीर्ण-). –b) का1 वाल्मीके, ग्र2 नव लिङ्गे, उ1 वल्मीके न (→न वल्मीके). –c) दे1.8.9 न ससत्वेषु गच्छन् वा, दे10 नगसर्वेषु गच्छन् वा, न1 न च सर्वेषु गर्त्तेषु, द1 ग्र2 म1 उ1 न च गर्तेषु सर्वेषु. –d) ब3 दे1.3.6.8-10 ना- (→न); दे3 तु (→वा).

३९. ब1.2.⊙. –b) दे4 °मार्गं (→°मार्गे). –c) का1 च (→न); दे8-10 द1 मुवें. मुए. न क्षेत्रे विमले चापि, न1 न क्षेत्रे न विले नापि, ग्र2 न कोष्ठके न विल्वेऽपि. –d) द1 न कीर्त्तन चतुष्पथे.

४०. ब1.2.⊙. –a) ब3 म1 नोद्यानोपसमीपे वा, दे1.8-10 मुवें. मुए. नोद्याने न समीपे वा, ते1 नोद्यानाम्बुसमीपे वा, मुब. नदीनदसमीपे च. –b) दे3.6 नोषघे (→नोषरे); ते1 नाचरेत् पराशुचौ. –c) दे4 त्रोपानत् (→सोपानत्); ग्र2 उ1 न चोपानत्कपादौ वा. –d) ब3 मुब. न छत्री (→छत्री वा); ते1 चान्तरीक्षके, ग्र2 म1 अनन्तमीक्षके (→नान्तरीक्षके); दे1.8-10 न गंत्री या (दे3 वा) नान्तरीक्षगः (दे3 °के); मुवें. मुए. गन्ता यानान्तरिक्षगः.

४१. ब1.2.⊙. –a) दे1 मुवें. मुए. मुब. °मुखं, दे3.4.6.10 न1 ते1 म1 उ1 °मुखः (→°मुखे). –b) मुवें. मुए. न च (→गवां). –c) दे4 वेद°, उ1 दैव° (→देव°). –d) का1 दे1.8.9 द1 ग्र2 म1 नावा (म1 °पा) मपि (→अपामपि); ते1 न नद्यां तु कदाचन.

४२. ब1.2. ⊙. –a) का1 दे2.4 ऋ2 उ1 निरीक्षित्वा, दे6 द1 निरीक्षन् वै, मुब. न वीक्षन् वा (→निरीक्षन् वा); दे8-10 मुवें. मुए. नदीं ज्योतींषि वीक्षत्, ते1 न ज्योतींषि न वीक्षन् वा. –b) का1 दे2.6 वाय्य°, ब3 दे1.8.9 मुवें. मुए. वायँ°, दे10 मुब. चाप्य° (→सन्ध्या°); न1 सन्ध्याभिमुखस्तथा, ते1 नाचार्याभिमुखस्तथा.

४३. ब1.2. ⊙. –a) का1 मूलात्, दे4 कुल्यात्, दे10 कालात्, द1 ग्र2 उ1 मूले (→कूलात्). –b) दे8-10 मुवें. मुए. °कर्षणात् (→°कर्षणं). –c) ते1 अवहितः (→अतन्द्रितः). –d) दे6 विशुद्धेर्, द1 विशुद्धो (→विशुद्धैर्); का1 विशुद्धौ चोदकैस्तथा.

४४. ब1.2. ⊙. –b) का1 दे1.3.4.8-10 न1 ग्र2 म1 मुवें. मुए. मुब. कर्दमान् (→कर्दमात्). –c) दे4 नापराद्देशात्, द1 म1 नोषरोद्देशात् (→नोषराद्देशात्). –d) दे1.8-10 ते1 शौचोच्छिष्टां, दे4 शौचशिष्टे (→शौचशिष्टां); दे1 स्थलस्य च (→परस्य च); मुवें. मुए. मुब. शौचोच्छिष्टां तथैव च.

४५. ब2. ⊙. –a) ब1 कुर्य्यात्, दे4 न1 ते1 कुष्यात्, द1 ग्र2 म1 उ1 कुल्यात् (→कूपाद्). –b) द1 ग्र2 म1 न तु (→न च); दे1.8-10 मुवें. मुए मुब. ग्रामादन्तर्जलात्तथा, दे3.6 ग्रामान्न च जलाशयात्, ते1 ग्रामान्नान्तर्जलात्तथा. –d) द1 ग्र2 उ1 विशेषतः (→विधानतः); ते1 पूर्वोक्तविधिना ततः.

**पुष्पिका**—[ते1 पुस्तके अध्यायसमाप्तिर्नास्ति]

**पुराणनाम**—का1 दे6 इति श्रीकौ(दे6 कू)र्मपुराणे उपरिभागे, ब1 इति कौर्मे उपरिभागे, ब2 इति कूर्मपुराणे, ब3 इति

# १४

व्यास उवाच ।❀

वें२.१४.१ एवं दण्डादिभिर्युक्तः शौचाचारसमन्वितः ।
आहूतोऽध्ययनं कुर्याद् वीक्षमाणो गुरोर्मुखम् ।।१
नित्यमुद्यतपाणिः स्यात् साध्वाचारः सुसंयतः ।
आस्यतामिति चोक्तः सन्नासीताभिमुखं गुरोः ।।२
प्रतिश्रवणसंभाषे शयानो न समाचरेत् ।
नासीनो न च भुञ्जानो न तिष्ठन्न पराङ्मुखः ।।३
नीचं शय्यासनं चास्य सर्वदा गुरुसन्निधौ ।
गुरोस्तु चक्षुर्विषये न यथेष्टासनो भवेत् ।।४
नोदाहरेदस्य नाम परोक्षमपि केवलम् ।
न चैवास्यानुकुर्वीत गतिभाषणचेष्टितम् ।।५
गुरोर्यत्र परीवादो निन्दा चापि प्रवर्त्तते ।
कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः ।।६
दूरस्थो नार्चयेदेनं न क्रुद्धो नान्तिके स्त्रियाः ।
न चैवास्योत्तरं ब्रूयात् स्थितो नासीत सन्निधौ ।।७

---

कूर्मपुराणे उपरिभागे, दे1.8-10 न1 इति श्रीकूर्मपुराणे, दे2.3 इति कौर्मे उपरिभागे, दे4 इति श्रीकूर्मपुराणे ईश्वरगीतासूपनिषत्सु, द1 म1 इति श्रीकूर्मपुराणे उत्तरभागे व्यासगीतासूपनिषत्सु, ग्र2 इति श्रीकूर्मे महापुराणे उपरिभागे व्यासगीतासूपनिषत्सु, उ1 इति श्रीकूर्मपुराणे उत्तरभागे व्यासगीतासु, मुवें. इति श्रीकूर्मपुराणे उत्तरार्द्धे व्यागीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे, मुए. इति श्रीकूर्मपुराणे उत्तरविभागे, मुब. इति श्रीकौर्मे महापुराणे उपरिभागे ब्रह्मविद्यायां. **अध्यायनाम**—का1 ब1-3 दे1-4.6.8-10 न1 द1 ग्र2 म1 उ1 मुए. ⊙; मुवें. ऋषिव्याससंवादे, मुब. आचमनादिकर्मयोगो नाम. **अध्यायसंख्या**—ब2. ⊙; का1 द्वादशोऽध्यायः ।।१२।।, ब1.3 दे2.3 द्वादशोऽध्यायः, दे1 मुवें. त्रयोदशोध्यायः ।।१३।।, दे4.6.8-10 द1 ग्र2 म1 उ1 मुए. मुब. त्रयोदशोऽध्यायः, न1 द्विषष्टितमोऽध्यायः.

**१४**

❀ दे10 ते1. ⊙; दे8.9 व्यास उ.; न1 ग्र2 श्रीवेदव्यासः; द1 म1 श्रीव्यासः; उ1 व्यासः.

**१.** –c) दे4 आहूता,° उ1 आश्रुतो° (→आहूतो°). –d) का1 दे6.8.10 ग्र2 वीक्ष्य° (→वीक्ष°).

**२.** –a) मुवें. मुए. उद्धृत° (→उद्यत°). –b) दे1.4.6.8-10 द1 ग्र2 म1 उ1 मुवें. मुए. मुब, सन्ध्याचार- (→साध्वाचारः); ब1.3 दे3 स्वयं यतः, दे8-10 उ1 मुवें. मुए. मुब. °समन्वितः, दे6 स्वयं ततः (→सुसंयतः); ते1 संध्याचारी सुलोभतः; द1 ग्र2 म1 सन्ध्यासु च संयुतः. –c) उ1 स्यात् (→सन्). –d) दे1 आसीना°, दे10 आसीनो° (→आसीता°); दे4 न1 ते1 द1 ग्र2 म1 °मुखो, उ1 °मुख (→°मुखं).

**३.** दे1. ३b-४c ⊙. –a) दे6 °प्रणव°, ते1 °श्रयण° (→°श्रवण°). –c) दे4.8-10 न1 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. आसीनो (→नासीनो); दे8-10 मुवें. मुए. तिष्ठन् वा (→भुञ्जानो). –d) का1 नो (→न); ब1 नातितिष्ठ, दे8-10 मुवें. मुए. उत्तिष्ठन्वा (→न तिष्ठन् न); ते1 नोतिष्ठेत पराङ्मुखः.

**४.** दे1. abc⊙. –a) का1 ब3 नीच-, न1 नीचैः, दे8-10 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. न च (→नीचं); ते1 वासः (→चास्य). –c) दे8-10 द1 ग्र2 म1 उ1 मुवें. मुए. च (→तु); दे10 गुरोश्च ऊर्ध्वशयने; ते1 गुरोस्तु संनिधौ विप्राः. –d) ते1 यथेच्छा° (→यथेष्टा°); दे4 न च श्रेष्ठा समाचरेत्.

**५.** –a) दे10 गदाहरेद्, ते1 नो व्याहरेद् (→नोदाहरेद्); ब3 अन्य- (→अस्य); दे4 मतो (→नाम). –b) म1 परेषां (→परोक्षं). –d) दे1 गतिर्, दे6 गतिं (→गति-); का1 ब1 दे1.4.8-10 म1 ते1 मुवें. मुए. मुब. -भाषित- (→-भाषण-); दे1 -चेष्टिते, न1 ते1 -चेष्टितैः (→-चेष्टितम्).

**६.** –a) दे1.4.8.9 उ1 मुवें. मुए. मुब. प्रतीवादो (→परीवादो). –b) ब1-3 दे2.3 ते1 द1 ग्र2 म1 उ1 वापि (→चापि). –c) ब1 दे4 तत्रा- (→तत्र); दे6 विधातव्ये (→पिधातव्यौ). –d) ग्र2 गन्तव्यश्च, म1 गन्तव्यं च (→गन्तव्यं वा); दे10 ततोन्यथा (→ततोऽन्यतः).

**७.** –a) द1 दूरस्था, ग्र2 दूरस्ते (स्थे?) (→दूरस्थो); ते1 ना ह्ययेत (→नार्चयेत्); न1 दूरस्थानोच्चयेदेनं. –b) का1

उदकुम्भं कुशान् पुष्पं समिधोऽस्याहरेत् सदा ।
मार्जनं लेपनं नित्यमङ्गानां वै समाचरेत् ॥८
नास्य निर्माल्यशयनं पादुकोपानहावपि ।
आक्रमेदासनं चास्य छायादीन् वा कदाचन ॥९
साधयेद् दन्तकाष्ठादीन् लब्धं चास्मै निवेदयेत् ।
अनापृच्छ्य न गन्तव्यं भवेत् प्रियहिते रतः ॥१०
न पादौ सारयेदस्य संनिधाने कदाचन ।
जृम्भितं हसितं चैव कण्ठप्रावरणं तथा ।
वर्जयेत् संन्निधौ नित्यमवस्फोटनमेव च ॥११
यथाकालमधीयीत यावन्न विमना गुरुः ।
आसीताधो गुरोः कूर्चे फलके वा समाहितः ॥१२
आसने शयने याने नैव तिष्ठेत् कदाचन ।
धावन्तमनुधावेत गच्छन्तमनुगच्छति ॥१३
गोऽश्वोष्ट्रयानप्रासादप्रस्तरेषु कटेषु च ।
आसीत गुरुणा सार्द्धं शिलाफलकनौषु च ॥१४
जितेन्द्रियः स्यात् सततं वश्यात्माऽक्रोधनः शुचिः ।
प्रयुञ्जीत सदा वाचं मधुरां हितभाषिणीम् ॥१५
गन्धमाल्यं रसं कल्यां शुक्तं प्राणिविहिंसनम् ।
अभ्यङ्गं चाञ्जनोपानच्छत्रधारणमेव च ॥१६
कामं लोभं भयं निद्रां गीतवादित्रनर्त्तनम् । वें.२.१४.१७

क्रुद्धे, दे4 क्रुद्धं, ग्र2 क्रोधो (→क्रुद्धो); का1 दे2.6 न1 द1 ग्र2 म1 उ1 स्त्रियः, दे3 स्त्रियां, दे4 स्त्रियं, ते1 स्थितः (→स्त्रियाः). –c) ग्र2 वृद्धात् (→ब्रूयात्); ते1 न चैवास्योन्न ते स्थैर्यं. –d) ब1.3 दे1.2.4.8-10 न1 ते1 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. स्थिते, दे3 स्थिरो (→स्थितो).

८. –a) ब1 उप° (→उद°); दे4 कुशं, दे10 कुशाः, ग्र2 कुशात् (→कुशान्); द1 ग्र2 म1 उ1 पुष्पान् (→पुष्पं). –b) द1 म1 उ1 संनिधोप्या° (→संनिधोऽस्या°); ते1 सांनिध्ये चाहरेत्सदा. –d) दे3 अज्ञानां (→अङ्गानां); दे8-10 मुवें. मुए. मुब. वा (→वै); ते1 अग्न्यगारे समाचरेत्; ग्र2 ज्ञानं चैव समाचरेत्.

९. –a) दे10 द1 तस्य (→नास्य); ते1 तस्यातिमाल्यं-शयनं. –b) न1 पादुकोपानहोऽपि च. –c) ब1 चास्य, दे1.8-10 मुवें, मुए. मुब. छायां, ते1 तस्य (→चास्य). –d) ब1 दे4 न1 द1 ते1 उ1 वै (→वा); दे1.8-10 मुवें. मुए. मुब. आसन्दीं वा, म1 छायां चैव (→क्षायादीन् वा); ग्र2 सर्वदा गुरुसन्निधौ, + छायां चास्य कदाचन.

१०. –a) दे4 °काष्ठानि, उ1 °काष्ठादि (→°काष्ठादीन्). –b) दे1.8-10 मुवें. मुए. मुब. कृत्यं, ते1 अथ (→लब्धं). –c) का1 दे4 अनापृष्ट्वा (→अनापृच्छ्य).

११. दे4. ११b–१३b ⊙. –b) दे6 संनिधानौ, ग्र2 संनिधौ च, उ1 सन्निधौ न (→सन्निधाने). –c) न1 संहृतं, ग्र2 भाषितं (→हसितं); दे1.8-10 मुवें. मुए. जृम्भा (दे1 म्मां) हास्यादिकं चैव. –d) दे6 कर्णात्, दे10 कथाः, ग्र2 म1 उ1 कर्ण- (→कण्ठ-); का1 संवरणं (→-प्रावरणं); ते1 करप्रहरणं तथा. –f) द1 ग्र2 म1 उ1 नख° (→अव°); दे1 अथास्फोट तमेव च; दे8.9 मुवें. मुए. अथास्फोटतमं वचः, दे10 अथास्फोटरवमेवच ते1 अवस्फालनमेव च.

१२. दे4. ⊙ (द्र. ११ पा. वि.); ब1. cd ⊙. –b) दे8.9 मुए. विमनाः, ते1 विमतो (→विमना); दे3.6 भवेत् (→गुरुः). –c) का1 आसीनाधो, दे1.8-10 न1 द1 मुवें. मुए. मुब. आसीता (दे10 °ना) थ (→आसीताधो); ब3 कृच्छ्रे, दे1.8-10 मुवें. मुए. मुब. उक्ते, दे3.6 पूर्वे (→कूर्चे). –cd) ते1 आसनादौ सकृद् वेषं नैव कुर्यात् समाहितः.

१३. ब1 दे4. ab ⊙. –b) दे1.8-10 न1 मुवें. मुए. मुब. नैकस् (→नैव); ब3 न1 द1 ग्र2 म1 उ1 कथञ्चन (→कदाचन). –c) ते1 धावेत°, दे3.6 °धावेत्तु, दे8-10 मुवें.मुए. मुब. °धावेत्तं (→°धावेत). –d) दे1 तं गतं (→गच्छन्तं); दे1.4.8-10 द1 मुवें. मुए. मुब. चानु°, न1 वानु° (→अनु°).

१४. द1. cd ⊙. –a) न1 -प्रसाद° (→-प्रासाद°); दे4 गोश्वोष्ट्रमहिषायान. –b) ब1 अन्तरेषु, न1 त्वन्तरेषु (→प्रस्तरेषु); दे4 प्रासादप्रस्तरेषु च. –c) का1 दे1.2.4.3.9 ते1 म1 उ1 मुवें. मुए. नासीत (→आसीत).

१५. –c) दे10 सदाचारान्, दे10 सदाचारी (→सदा वाचं). –d) का1 ब1-3 दे2.3.6 °कारणीं, न1 °कारणं (→°भाषिणीम्); ते1 मधुरं हितभाषणं.

१६. –a) दे1.4 °माल्या-, दे6.10 द1 म1 उ1 °माल्य- (→°माल्यं); का1 चूर्णं, ब1 दे3.6 उ1 कल्पां, ब2 कल्पं, ब3 दे4 ते1 द1 ग्र2 म1 कन्यां, दे1.8-10 मुवें. मुए. मुब. भव्यं, दे2 कल्पी (→कल्यां); ग्र2 गन्धमाल्यासनं कन्यां. –b) का1 दे4 भुक्तं, ब1 शुक्रं, दे1.3.6.8-10 मुवें. मुए. मुब. शुक्लं, ते1 शुष्कं, ग्र2 शुक्तिं, उ1 सूक्तं (→शुक्तं). –c) का1 ब2.3 दे3.6 अभ्यञ्जना-, दे2 अभ्यञ्जनो- (→अभ्यञ्जनं चा-); ब1 याग- (→[उ]पानत्-); दे4 अभ्यंगं वीजनोपानात्.

१७. –a) ते1 क्रोधं (→कामं); का1 दे2 मोहं, दे6 क्रोधं (→लोभं); दे3.6 तथा (→भयं). –b) ब3 दे3 गीतं

वं. २.१४.१८ आतर्जनं परीवादं स्त्रीप्रेक्षालम्भनं तथा ।
परोपघातं पैशुन्यं प्रयत्नेन विवर्जयेत् ॥१७
उदकुम्भं सुमनसो गोशकृन्मृत्तिकां कुशान् ।
आहरेद् यावदर्थानि भैक्ष्यं चाहरहश्चरेत् ॥१८
कृतं च लवणं सर्वं वर्ज्यं पर्युषितं च यत् ।
अनृत्यदर्शी सततं भवेद् गीतादिनिःस्पृहः ॥१९
नादित्यं वै समीक्षेत न चरेद् दन्तधावनम् ।
एकान्तमशुचिस्त्रीभिः शूद्रान्त्यैरभिभाषणम् ॥२०
गुरूच्छिष्टं भेषजार्थं प्रयुञ्जीत न कामतः ।
मलापकर्षणस्नानं नाचरेद्धि कदाचन ॥२१

न कुर्यान्मानसं विप्रो गुरोस्त्यागे कदाचन ।
मोहाद् वा यदि वा लोभात् त्यक्तेन पतितो भवेत् ॥२२
लौकिकं वैदिकं चापि तथाध्यात्मिकमेव च ।
आददीत यतो ज्ञानं न तं द्रुह्येत् कदाचन ॥२३
गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथप्रतिपन्नस्य मनुस्त्यागं समब्रवीत् ॥२४
गुरोर्गुरौ सन्निहिते गुरुवद् भक्तिमाचरेत् ।
न चातिसृष्टो गुरुणा स्वान् गुरूनभिवादयेत् ॥२५
विद्यागुरुष्वेतदेव नित्या वृत्तिः स्वयोनिषु ।
प्रतिषेधत्सु चाधर्माद्धितं चोपदिशत्स्वपि ॥२६

---

(→गीत-); ब$_2$ -निस्वनं, द$_1$ -नर्त्तकं (→-नर्त्तनं). –c) दे$_{1.4.8-10}$ न$_1$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ मुवें. मुए. मुब. द्यूतं जन- (→आतर्जनं). –d) ब$_1$ दे$_{10}$ ग्र$_2$ °पेक्षा- (→°प्रेक्षा-); ग्र$_2$ उ$_1$ °लम्बनं (उ$_1$ °ने) (→°लम्भनं); ते$_1$ स्त्रीपक्षालम्बनं तथा. –e) दे$_{1.4.8.9}$ न$_1$ परोपघात- द$_1$ ग्र$_2$ म$_1$ उ$_1$ परोपतापं (→परोपघातं).

१८. ब$_1$. ⊙. –a) दे$_4$ सुमनसं (→सुमनसो). –b) का$_1$ ब$_3$ ब$_3$ दे$_{3.4}$ मृत्तिका, दे$_6$ पूत्तिका (→मृत्तिकां). –c) का$_1$ ब$_3$ दे$_{3.4}$ … ते$_1$ आहरेद् अन्नानि, दे$_{3.6}$ अन्तानि (दे$_6$ °भि) (→अर्थानि); ते$_1$ आहरेद् अन्नानि. –d) का$_1$ दे$_{2.3.4.6.9}$ न$_1$ द$_1$ म$_1$ मुए. भैक्षं गुरवेऽन्यानि. (→भैक्ष्यं).

१९. ब$_1$. ⊙. –a) का$_1$ हृतं, दे$_4$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ घृतं, ते$_1$ भृतं (→कृतं); दे$_4$ सर्वे, म$_1$ क्षारं (→सर्वं). –b) दे$_4$ वक्ष्ये, न$_1$ द$_1$ वर्जं (→वर्ज्यं); ते$_1$ भवेत्, द$_1$ ग्र$_2$ उ$_1$ तथा (→च यत्). –c) द$_1$ उ$_1$ अ(द$_1$ आ) नृत्त-, म$_1$ अनुक्त- (→अनृत्य-). –d) म$_1$ भवेद् गीतासु निस्पृहः.

२०. ब$_1$. ⊙. –a) दे$_{3.6}$ आदित्यं वै समी-, दे$_4$ आदर्शो च समी-, ते$_1$ आदृश्यं वै समी-, द$_1$ म$_1$ उ$_1$ आदर्शं चैवमी-, ग्र$_2$ आदर्शनं वैमी-, (→नादित्यं वै समी-). –b) का$_1$ दे$_{2-4.6}$ न$_1$द$_1$ म$_1$ उ$_1$ नाचरे° (→न चरे°). –d) ब$_{2.3}$ दे$_4$ द$_1$ न$_1$ ग्र$_2$ म$_1$ उ$_1$ शूद्राद्यैर् (→शूद्रान्त्यैर्); का$_1$ शूद्रेण परिभाषणम्.

२१. ब$_1$. ⊙; ब$_2$. cd ⊙. –a) दे$_3$ गुरूच्छिष्टे(→गुरूच्छिष्टं); ब$_2$ दे$_{3.6}$ भेषजान्नं, ते$_1$ भैषजार्थं (→भेषजार्थं); दे$_{1.8-10}$ मुवें. मुए. मुब. गुरुप्रियार्थं सर्वं हि. –c) का$_1$ ब$_3$ दे$_{1.2.4.8-10}$ द$_1$ ग्र$_2$ म$_1$ मुवें. मुए. मुब. °कर्षणं (→°कर्षण-). –d) दे$_{1.8-10}$ मुवें. मुए. मुब. आचरेद् (→नाचरेद्); दे$_{1.4.8-10}$ न$_1$ ते$_1$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ मुवें. मुए. मुब. वै (→हि). का$_1$ दे$_{1.8-10}$ मुवें. मुए. मुब. कथंचन (→कदाचन).

२२. ब$_{1.2}$. ⊙. –a) का$_1$ ते$_1$ मानसो (→मानसं); ते$_1$ विप्रा (→विप्रो). –b) ब$_3$ तापं, दे$_4$ ते$_1$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ मुवें. त्यागं (→त्यागे); का$_1$ ब$_3$ दे$_{2-4.6}$ न$_1$ ते$_1$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ कथंचन (→कदाचन). –c) दे$_6$ लोभात्, + लोकं (→लोभात्). –d) ब$_3$ ग्र$_2$ उ$_1$ मुवें. मुए. मुब. त्यक्त्वैनं, दे$_{2.3.6}$ त्यक्ते तु, म$_1$ त्यक्त्वा च (→त्यक्तेन).

२३. ब$_1$.⊙; ब$_2$.cd ⊙ –a) ब$_3$ न$_1$ ते$_1$ वापि (→चापि). –b) द$_1$ धार्मिक° (→[आ]ध्यात्मिक°); ब$_3$ दे$_{3.8.9}$ न$_1$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ वा (→च). –c) ते$_1$ आदद्यान्नियतो ज्ञानं. –d) का$_1$ ब$_2$ दे$_{3.4.6.10}$ ते$_1$ तं न (→न तं); का$_1$ क्रुद्धयेत् (→द्रुह्येत्); द$_1$ ग्र$_2$ म$_1$ कथंचन (→कदाचन).

२४. ब$_1$.⊙. –c) ते$_1$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ मुवें. उत्पथं, दे$_4$ अत्यर्थं (→उत्पथ-). –d) दे$_4$ ते$_1$ परित्यागो विधीयते.

२५. ब$_1$.⊙. –b) का$_1$ ब$_{2.3}$ दे$_{2.6}$ न$_1$ ते$_1$ द$_1$ ग्र$_2$ उ$_1$ वृत्ति° (→भक्ति°); म$_1$ गुरुवृत्ति समाचरेत्. –c) ब$_2$ द$_1$ न चावि-, दे$_{3.6}$ न चापि, दे$_4$ न चान्य-, न$_1$ न च वि-, ग्र$_2$ न चाव-, म$_1$ न वा वि- (→न चाति-); का$_1$ °सृष्टे, दे$_4$ °सृष्टौ (→°सृष्टो).

२६. ब$_1$.⊙. –a) दे$_{1.4.8.9}$ एवं (→एव); उ$_1$ एवमेव (→एतदेव); ते$_1$ गुरुविद्यादेवभक्तिः. –b) का$_1$ दे$_{1-4.8-10}$ द$_1$ ग्र$_2$ म$_1$ °वृत्ति-, ब$_{2.3}$ दे$_6$ °वृत्ति (→°वृत्तिः). –c) ब$_2$ प्रतिषेधेषु, ते$_1$ प्रतिविद्धस्तु उ$_1$ प्रतिषेधस्तु, (→प्रतिषेधत्सु). –c) ब$_{2.3}$ दे$_2$ ते$_1$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ चा (ग्र$_2$ म$_1$ वा) धर्मं, दे$_3$ चाधर्म्यादि, दे$_4$ चाधर्मे (→चाधर्माद्). –d) म$_1$ स्वके (→स्वपि); ते$_1$ हितं चोपदिशेत् क्वचित्, द$_1$ हितं चापि दिशत्स्वपि.

श्रेयस्सु गुरुवद् वृत्तिं नित्यमेव समाचरेत् ।
गुरुपुत्रेषु दारेषु गुरोश्चैव स्वबन्धुषु ॥२७
बालः समानजन्मा वा शिष्यो वा यज्ञकर्मणि ।
अध्यापयन् गुरुसुतो गुरुवन्मानमर्हति ॥२८
उत्सादनं वै गात्राणां स्नापनोच्छिष्टभोजने ।
न कुर्याद् गुरुपुत्रस्य पादयोः शौचमेव च ॥२९
गुरुवत् परिपूज्यास्तु सवर्णा गुरुयोषितः ।
असवर्णास्तु संपूज्याः प्रत्युत्थानाभिवादनैः ॥३०
अभ्यञ्जनं स्नापनं च गात्रोत्सादनमेव च ।
गुरुपत्न्या न कार्याणि केशानां च प्रसाधनम् ॥३१
गुरुपत्नी तु युवती नाभिवाद्येह पादयोः ।
कुर्वीत वन्दनं भूम्यामसावहमिति ब्रुवन् ॥३२
विप्रोष्य पादग्रहणमन्वहं चाभिवादनम् ।
गुरुदारेषु कुर्वीत सतां धर्ममनुस्मरन् ॥३३
मातृष्वसा मातुलानी श्वश्रूश्चाथ पितृष्वसा ।
संपूज्या गुरुपत्नीव समास्ता गुरुभार्यया ॥३४
भ्रातुर्भार्योपसंग्राह्या सवर्णाऽहन्यहन्यपि ।
विप्रोष्य तूपसंग्राह्या ज्ञातिसंबन्धियोषितः ॥३५
पितुर्भगिन्यां मातुश्च ज्यायस्यां च स्वसर्यपि ।
मातृवद् वृत्तिमातिष्ठेन्माता ताभ्यो गरीयसी ॥३६
एवमाचारसंपन्नमात्मवन्तमदाम्भिकम् ।
वेदमध्यापयेद् धर्मं पुराणाङ्गानि नित्यशः ॥३७
संवत्सरोषिते शिष्ये गुरुर्ज्ञानमनिर्दिशन् ।
हरते दुष्कृतं तस्य शिष्यस्य वसतो गुरुः ॥३८ वें.२.१४.३९

२७. ब$_1$. ab ⊙. –a) ब$_{2.3}$ दे$_{6.10}$ श्रेयः स्व-, दे$_{1.3}$ न$_1$ मुवें. मुए. मुब. श्रेयस्तु (→श्रेयस्सु); दे$_{1.8-10}$ द$_1$ उ$_1$ वृत्तिर् (→वृत्तिं); का$_1$ श्रेयःसु गुरुवृत्तिं च, ते$_1$ श्रेयः स्वगुरूपवृत्तिं. –c) दे$_{4.6}$ न$_1$ ते$_1$ द$_1$ ग्र$_2$ म$_1$ पत्नीषु (→दारेषु). –d) दे$_{3.6}$ सुबन्धुषु (→स्वबन्धुषु).

२८. –a) का$_1$ ब$_{2.3}$ मुवें. बालः संमानयनन्यान् (का$_1$ न्यं), दे$_4$ नातः समानजन्मा वा, ते$_1$ बालः सबालजन्मा वा. –b) दे$_6$ न शिष्यो (→शिष्यो वा). –c) का$_1$ दे$_{1.4.8.9}$ °सुतं (→°सुतो); दे$_{3.6}$ अध्यापयन् वै स्वसुतो, ते$_1$ अध्यापन्नाम सुतो.

२९. a) का$_1$ ब$_{2.3}$ दे$_{2.3.6}$ च, दे$_4$ म$_1$ तु (→वै); ते$_1$ पात्राणां, ग्र$_2$ शास्त्राणां (→गात्राणां). –b) ते$_1$ शयानो-, म$_1$ उ$_1$ स्नापनं (→स्नापनो); ग्र$_2$ स्नापनश्चोच्छिष्टभाजनं,

३०. ग्र$_2$. ⊙. –a) ब$_{1-3}$ दे$_{2-4.6}$ न$_1$ ते$_1$ द$_1$ म$_1$ उ$_1$ प्रति° (→परि°); दे$_{1.4.8-10}$ मुवें. मुए. मुब. च, ते$_1$ स्युः (→तु). –d) द$_1$ [अ]भिवादने (→[अ]भिवादनैः).

३१. ग्र$_2$.ab ⊙. –b) दे$_{10}$ गात्रेच्छादन°, न$_1$ गात्रोच्छादन°, ते$_1$ गात्रोद्वर्त्तन° (→गात्रोत्सादन°). –d) ग्र$_2$ म$_1$ उ$_1$ तासां केशप्रसाधनम्.

३२. –a) दे$_{1.8-10}$ °पत्नीति, ते$_1$ °पत्नीह (→°पत्नी तु); उ$_1$ गुरुपत्नी रूपवती. –b) ब$_3$ नाभिवाद्चेत, दे$_4$ द$_1$ नाभिवाद्या हि, ते$_1$ नाभिवाद्चे स-, ग्र$_2$ म$_1$ उ$_1$ नाभिवाद्याभि- (→नाभिवाद्येह); दे$_{10}$ ग्र$_2$ म$_1$ वादयोः (→पादयोः). –c) दे$_4$ कुर्यात्तु (→कुर्वीत); दे$_{1.8-10}$ न$_1$ मुवें. मुए. मुब. भूमौ (→भूम्यां).

३३. ग्र$_2$. ab ⊙. –a) दे$_{1.8.9}$ विप्रोऽथ, दे$_{10}$ विप्राय, ते$_1$ विप्रस्य, न$_1$ विमोच्य (→विप्रोष्य). –c) दे$_{1.8-10}$ मुवें. मुए. सर्वेषु (→कुर्वीत). –d) दे$_4$ ते$_1$ ग्र$_2$ म$_1$ उ$_1$ सदा (→सतां).

३४. –a) ब$_{2.3}$ ते$_1$ मातुः स्वसा (→मातृष्वसा); दे$_6$ न$_1$ मातुलानां (→मातुलानी). –b) ब$_1$ द$_1$ म$_1$ उ$_1$ चापि (→चाथ); ते$_1$ स्वस्य च पितुः स्वसा. –c) दे$_{1.3.4.6.8-10}$ मुवें. मुए. मुब, °पत्नी च, ते$_1$ °पत्न्या *, द$_1$ ग्र$_2$ म$_1$ उ$_1$ °पत्नीवत् (→°पत्नीव). –d) ब$_{1-3}$ दे$_{1.4.8-10}$ न$_1$ ते$_1$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ मुवें. मुए. मुब. समस्ता (→समास्ता).

३५. का$_1$. ⊙; द$_1$. bc ⊙. –a) ब$_{2.3}$ दे$_{1-3.6}$ न$_1$ मुवें. भ्रातृभार्या च, ते$_1$ भ्रातृभार्याश्च, द$_1$ भ्रातृभार्योपि, ग्र$_2$ भ्रातृनार्य्यव-, उ$_1$ भ्रातृनार्युप- (→भ्रातुभार्योप-). –b) ग्र$_2$ सवर्णा वा न वानपि. –c) ब$_{1-3}$ म$_1$ मुवें. मुए. मुब. विप्रस्य, ते$_1$ विप्राः स्यु (→विप्रोष्य). –d) दे$_4$ ते$_1$ °बान्धवाः (→°योषितः).

३६. –a) दे$_{3.6}$ न$_1$ ते$_1$ द$_1$ म$_1$ भगिन्या, ग्र$_2$ उ$_1$ भगिन्यो (→भगिन्यां). –b) दे$_4$ यवीयस्यां, उ$_1$ जयायाश्च (→ज्यायस्यां च); दे$_{3.6.10}$ ग्र$_2$ म$_1$ उ$_1$ स्वसुर्यपि (→स्वसर्यपि) का$_1$ ज्यायस्यां स्वपसर्पति. –c) दे$_1$ वृत्तिमान् (→वृत्तिमा-).

३७. –b) का$_1$ दे$_{3.6}$ ग्र$_2$ अथा (दे$_6$ थो)न्तिकं (→अदा-म्भिकं). –c) का$_1$ विप्रं (→वेदं).

३८. –a) का$_1$ संवत्सरोशितो (→संवत्सरोषिते). –b) ब$_{1.3}$ दे$_{4.10}$ उ$_1$ गुरु- (→गुरुर्); दे$_4$ अनुदिशन्, दे$_{6.8-10}$ उ$_1$

वें.२.१४.४० आचार्यपुत्रः शुश्रूषुर्ज्ञानदो धार्मिकः शुचिः ।
शक्तोऽन्नदोऽर्थी स्वस्साधुरध्याप्या दश धर्मतः ॥३९
कृतज्ञश्च तथाऽद्रोही मेधावी शुभकृन्नरः ।
आप्तः प्रियोऽथ विधिवत् षडध्याप्या द्विजातयः ।
एतेषु ब्रह्मणो दानमन्यत्र तु यथोदितान् ॥४०
आचम्य संयतो नित्यमधीयीत उदङ्मुखः ।
उपसंगृह्य तत्पादौ वीक्षमाणो गुरोर्मुखम् ।
अधीष्व भो इति ब्रूयाद् विरामोऽस्त्विति चारमेत् ॥४१
प्राक्कूलान् पर्युपासीनः पवित्रैश्चैव पावितः ।
प्राणायामैस्त्रिभिः पूतस्तत ओङ्कारमर्हति ॥४२
ब्राह्मणः प्रणवं कुर्यादन्ते च विधिवद् द्विजः ।
कुर्यादध्ययनं नित्यं स ब्रह्माञ्जलिपूर्वतः ॥४३
सर्वेषामेव भूतानां वेदश्चक्षुः सनातनम् ।
अधीयीताप्ययं नित्यं ब्राह्मण्याच्च्यवतेऽन्यथा ॥४४
योऽधीयीत ऋचो नित्यं क्षीराहुत्या स देवताः ।
प्रीणाति तर्पयन्त्येनं कामैस्तृप्ताः सदैव हि ॥४५
यजूंष्यधीते नियतं दध्ना प्रीणाति देवताः ।
सामान्यधीते प्रीणाति घृताहुतिभिरन्वहम् ॥४६
अथर्वाङ्गिरसो नित्यं मध्वा प्रीणाति देवताः ।
धर्माङ्गानि पुराणानि मांसैस्तर्पयते सुरान् ॥४७

---

अनिर्दिशेत् म1 अदर्शयन् (→अनिर्दिशन्). –c) ब1 भजते, न1 आहरेद् (→हरते).

अतः परं द1 अ2 म1 उ1 अधिकम्—

32. * अनुरक्तो हि मेधावी अध्याप्या दशधर्मतः ।

३९. –a) का1 स तु कथादौ रसा साधुः, ब1-3 श (ब1 स) क्तोऽन्नदोऽर्थ (ब1 °न्न) दः (ब1 रः) साधुर्, दे1.8.9 मुवें. मुए. मुब. सूक्तार्थदो रसः साधुः, दे2 शक्तोऽन्नदोऽन्नलुब्धः, दे4 रक्तो गुर्वी ह्यमेधावी, न1 द1 अ2 म1 उ1 शक्तोर्थदोऽर्थी च साधुर्, ते1 शक्तोऽर्थबोधे मेधावी. –d) दे4 चाधाप्या, दे8-10 मुवें. मुए. मुब. स्वाध्याप्या (→अध्याप्या).

४०. –a) का1 कृतज्ञो ज्ञातयोऽद्रोही. –b) दे1.8-10 न1 मुवें. मुए. मुब. तूपकृत् (→शुभकृत्). –c) उ1 प्राप्तः प्रियो-प्यतिथिवत्. –d) दे4 ते1 द1 अ2 म1 उ1 द्विजोत्तमैः (→द्विजातयः). –e) का1 ब3 दे2.3.6.9 ते1 उ1 ब्राह्मणो, म1 ब्रह्मणे (→ब्रह्मणो). –f) दे1.8-10 मुवें. मुए. मुब. च, द1 अ2 म1 उ1 न (→तु); दे10 तथोदिवान्, द1 अ2 म1 उ1 यथोदितं (→यथोदितान्).

४१. –a) ते1 नियतो (→संयतो). –b) दे1.8-10 ते1 मुवें. मुए. मुब. ह्युदङ्° (→उदङ्°); दे4 न1 अधीयीताप्यु-(दे4 °न्यु) दङ्मुखः. –c) ब3 दे6 वीक्ष्यामाणो, दे10 वीक्ष्यमाणं (→वीक्षमाणो). –f) ब1.3 दे8 मुवें. मुए. विरामस्त्विति, दे1.9 विरामस्त्वेति, दे4 विरामेस्त्विति (→विरामोऽस्त्विति); का1 दे1.8-10 मुवें. मुए. नारमेत्, ब1 वारमेत्, दे2 न1 चारभेत्, दे4 च स्मरेत्, दे6 वादमेत्, ते1 वारयेत्, म1 उ1 वा चरेत् (→चारमेत्); ब2 विरामे स्थितिमाचरेत्.

४२. –a) का1 दे1.8-10 मुवें. मुए. मुब. अ(का1 आ) नुकूलं समासीनः, दे4 द1 अ2 म1 उ1 प्राक्कूलेषु समासीनः, प्राङ्मुखश्च समासीनः. –b) दे3 याचितः, उ1 वाचितः (→पावितः). –d) दे4 आचरेत्, ते1 आरभेत् (→अर्हति).

४३. –a) ब2.3 दे3.6 उ1 ब्रह्मणः (→ब्राह्मणः); ते1 प्रथमं (→प्रणवं). –b) ब1-3 दे3.6 अन्तेऽपि, ते1 कुर्यात्तु (→अन्ते च); ब2.3 दे2.3.6 ते1 द्विजाः (→द्विजः). –c) ब2.3 दे2 अध्यापनं (→अध्ययनं). –d) ब1 दे6 न1 ते1 द1 अ2 म1 उ1 ब्रह्मांजलिकृतस्थितः (न1 ते1 °रः), दे1.8-10 मुवें. मुए. मुब. ब्रह्मांजलिकरस्थितः.

४४. ब1. ४४d–४५a ⊙ (द्र. सं.). –b) का1 ब2.3 दे2.3.4.6.10 ते1 अ2 म1 सनातनः (→सनातनं). –c) न1 [अ]व्ययं, अ2 म1 उ1 [आ]मयं (→[अ]प्ययं); ते1 अधीत्याध्यापयेन्नित्यं. –d) दे4.10 म1 ब्राह्मणश् (→ब्राह्मण्यात्); का1 तथा (→[अ]न्यथा); ब2.3 दे3.6 ब्राह्मण्याद्धीयतेऽन्य (ब3 दे6 °त) था.

४५. ब1. a ⊙ (द्र. ४४ पा. वि.). –a) का1 ब2.3 दे2 अधीयीत (→योऽधीयीत); का1 वचो, न1 द्विजो, ते1 द1 अ2 म1 ऋचं (→ऋचो). –b) दे6 देवतं (→देवताः). –c) दे4 तर्पयत्येतं, दे6 तर्पयेत्येनं, ते1 तर्पयित्वैनं (→तर्पयन्त्येनं). –d) ते1 तुष्टाः (→तृप्ताः); का1 ब2.3 दे2.3.6 न1 सदैवताः, द1 तथैव हि (→सदैव हि).

४६. –a) दे4 ते1 द1 म1 उ1 सततं (→नियतं). –b) उ1 तस्मात् प्रीणन्ति देवताः. –c) ते1 [अ]धीत्य (→[अ]धीते). –d) ते1 घृताज्यादिभिरन्वहम्.

४७. –a) ते1 अथर्वाङ्गिरसा (→अथर्वाङ्गिरसो); म1 [अ]धीते (→नित्यं). –b) ब1 अन्याः (→मध्वा). –c) दे1.8-10 मुवें. मुए. मुब. वेदाङ्गानि (→धर्माङ्गानि). –d) का1 प्राप्तैस्तर्पयते सुरान्, दे1.8-10 मुवें. मुए. मुब. मां (दे1 मुवें. मुए. मा) सैश्च तर्पयेत्सुरान्.

अपां समीपे नियतो नैत्यकं विधिमाश्रितः ।
गायत्रीमप्यधीयीत गत्वाऽरण्यं समाहितः ॥४८
सहस्रपरमां देवीं शतमध्यां दशावराम् ।
गायत्रीं वै जपेन्नित्यं जपयज्ञः प्रकीर्त्तितः ॥४९
गायत्रीं चैव वेदांश्च तुलयाऽतोलयत् प्रभुः ।
एकतश्चतुरो वेदान् गायत्रीं च तथैकतः ॥५०
ओंकारमादितः कृत्वा व्याहृतीस्तदनन्तरम् ।
ततोऽधीयीत सावित्रीमेकाग्रः श्रद्धयान्वितः ॥५१
पुराकल्पे समुत्पन्ना भूर्भुवःस्वः सनातनाः ।
महाव्याहृतयस्तिस्रः सर्वाशुभनिबर्हणाः ॥५२
प्रधानं पुरुषः कालो विष्णुर्ब्रह्मा महेश्वरः ।
सत्त्वं रजस्तमस्तिस्रः क्रमाद् व्याहृतयः स्मृताः ॥५३
ओंकारस्तत् परं ब्रह्म सावित्री स्यात् तदक्षरम् ।
एष मन्त्रो महायोगः सारात् सार उदाहृतः ॥५४
योऽधीतेऽहन्यहन्येतां गायत्रीं वेदमातरम् ।
विज्ञायार्थं ब्रह्मचारी स याति परमां गतिम् ॥५५
गायत्री वेदजननी गायत्री लोकपावनी ।
न गायत्र्याः परं जप्यमेतद् विज्ञाय मुच्यते ॥५६
श्रावणस्य तु मासस्य पौर्णमास्यां द्विजोत्तमाः ।
आषाढ्यां प्रोष्ठपद्यां वा वेदोपाकरणं स्मृतम् ॥५७
उत्सृज्य ग्रामनगरं मासान् विप्रोऽर्द्धपञ्चमान् ।
अधीयीत शुचौ देशे ब्रह्मचारी समाहितः ॥५८ कूं.२.१४.६१

---

न1 पुस्तके a चरणानन्तरमधिकम्—
* जपयज्ञः प्रकीर्त्तितः गायत्री चैव वेदाश्च । (=४९d,५०a)

४८. –a) का1 ब1-3 दे2.4 न1 ते1 म1 प्रयतो (→नियतो). –b) ब1 दे3.4 ते1 मुब. नित्यकं, ब2 ग्र2 उ1 मुवें. मुए. मुब. नैत्यिकं (→नैत्यकं) दे10 आश्रुतः (→आश्रितः). –c) न1 गायत्रीं समधीयीत. –d) दे4 ग्र2 समाश्रितः (ग्र2 °ताः) (→समाहितः).

४९. –b) दे10 शतमृध्यां (→शतमध्यां); ब1.3 दे3 ग्र2 म1 दशापरां (→दशावरां).

५०. –a) दे1.8-10 मुवें. मुए. मुब. वेदांस्तु (→वेदांश्च); ते1 गायत्री वै सवेदांश्च. –b) द1 ग्र1 म1 उ1 तुलयातुलयत्प्रभुः. –d) ब1 गायत्रीं चैव एकतः.

५१. –b) ब3 ते1 व्याहृतीन् (→व्याहृतीस्). –c) ब2 गायत्रीं, ग्र2 एकाग्रं (→सावित्रीं). –d) ब3 दे1.4 न1 एकाग्र-, दे10 एकान्त- (→एकाग्रः); का1 एषः धर्मः सनातनः, ग्र2 म1 श्रद्धया परयान्वितः.

५२. –a) म1 °कल्प (→°कल्पे). –b) का1 ब1 दे1.6.10 म1 उ1 सनातनः, ते1 पितामहाः, + सनातनम् (→सनातनाः); ग्र2 भूर्भुवः स्वर्गनामकः. –d) ब1 दे1.6.10 म1 °निवर्हणः (→°निबर्हणाः); दे1 सर्वासुरनिबर्हणाः, मुवें. सर्वाः शुभनिबर्हणाः.

५३. –b) ब2 ग्र2 ब्रह्म(ग्र2 °ह्मा)विष्णुमहेश्वराः, ब3 दे2.6 विष्णुब्रह्ममहेश्वराः. –c) का1 तम इति, ते1 तमश्चैव (→तमस्तिस्रः). –d) न1 महा (→क्रमाद्); ब2 तथा (→स्मृताः).

५४. –a) द1 ओङ्कारं (→ओङ्कारस्). –b) दे4 द1 ग्र2 म1 उ1 गायत्री (→सावित्री); ब1 अनन्तरम्, दे6 तदन्तरं (→तदक्षरं). –c) ब1 महायोगी, दे10 महायोग- (→महायोगः). –d) ब2 सर्व-, द1 ग्र1 म1 उ1 साक्षात्, दे3 सारा- (→सारात्); दे10 सारं (→सार[:]).

५५. –a) ते1 योऽधीते हव्यकव्ये तां. –b) मुवें. मुए. मुब. सावित्रीं (→गायत्रीं). –d) दे2.8 गतिः (→गतिं).

५६. द1 ग्र2 म1 उ1. ab ⊙. –c) का1 दे1.10 न1 मुवें. मुए. जाप्यं (→जप्यं). –d) ब2 द1 ग्र2 म1 उ1 एतद् विज्ञानमुच्यते.

मुब. पुस्तके b, c मध्येऽधिकम्—
33. * 'ॐकारं वक्ष्यते तस्याः शृणुध्वं मुनिपुङ्गवाः ।
दक्षिणाग्राः पञ्चरेखाः पश्चिमाग्राङ्कसंख्यकाः ।
लिखेद् रेखाः प्रयत्नेन द्वात्रिंशत्कोष्ठकं भवेत् ।
गायत्रीं विलिखेत्तेषु द्वात्रिंशद् वर्णरूपिणीम् । [4]
पूरयेत् प्रतिलोमेन वामावर्त्तेन चोच्चरेत् ।
एवं क्रमेण चोद्धृत्य प्रजपेत् पङ्कमोचिनीम् ।
द्विजानां ब्रह्मनिष्ठानां ब्रह्मण्यपदरूपिणीम् ।

५७. –b) दे4.6 न1 ते1 ग्र2 पौर्णमास्या (→पौर्णमास्यां); दे2 उ1 द्विजोत्तमः, दे6 द्विजोत्तमं (→द्विजोत्तमाः). –c) का1 ब1-3 दे2.8.9 ते1 मुब. प्रौष्ठपद्यां, दे3.6 पौर्णमास्यां (→प्रोष्ठपद्यां). –d) ब1.3 दे2.4.10 ग्र2 वेदोप°, द1 वेदापा° (→वेदोपा°).

५८. –b) दे4 विप्रोष्य (→विप्रोर्ध-); द1 विप्रोऽथ पंचमान्.

मं.२.१४.६२ पुष्ये तु छन्दसां कुर्याद् बहिरुत्सर्जनं द्विजः ।
माघशुक्लस्य वा प्राप्ते पूर्वाह्णे प्रथमेऽहनि ॥५९
छन्दांस्यूर्ध्वमथोभ्यस्येच्छुक्लपक्षेषु वै द्विजः ।
वेदाङ्गानि पुराणानि कृष्णपक्षे च मानवम् ॥६०
इमान् नित्यमनध्यायानधीयानो विवर्जयेत् ।
अध्यापनं च कुर्वाणो ह्यभ्यस्यन्नपि यत्नतः ॥६१
कर्णश्रवेऽनिले रात्रौ दिवा पांशुसमूहने ।
विद्युत्स्तनितवर्षेषु महोल्कानां च संप्लवे ।
आकालिकमनध्यायमेतेष्वाह प्रजापतिः ॥६२
एतानभ्युदितान् विद्याद् यदा प्रादुष्कृताग्निषु ।
तदा विद्यादनध्यायमनृतौ चाभ्रदर्शने ॥६३
निर्घाते भूमिचलने ज्योतिषां चोपसर्जने ।
एतानाकालिकान् विद्यादनध्यायानृतावपि ॥६४
प्रादुष्कृतेष्वग्निषु तु विद्युत्स्तनितनिस्वने ।
सज्योतिः स्यादनध्यायः शेषरात्रौ यथा दिवा ॥६५
नित्यानध्याय एव स्याद् ग्रामेषु नगरेषु च ।
धर्मनैपुण्यकामानां पूतिगन्धे च नित्यशः ॥६६
अन्तःशवगते ग्रामे वृषलस्य च सन्निधौ ।
अनध्यायो रुद्यमाने समवाये जनस्य च ॥६७

---

५९. –b) दे10 उत्सर्जने (→उत्सर्जनं); दे4 बुधाः, दे6.10 न1 ते1 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. द्विजाः (→द्विजः). –c) का1 वै (→वा); द1 माघमासे गवां प्राप्ते, ग्र2 उ1 माघे वा मासि संप्राप्ते. –d) द1 पूर्वेह्णि (→पूर्वाह्णे).

६०. –a) ब1 द1 अथोऽभ्यस्य, ग्र2 उ1 अथोधीते, दे3 अथो घुष्यात्, दे4 ते1 अतोऽभ्यस्येत्, दे6 अथोयुष्मा (→अथोभ्यस्येत्);का1 दे1.8-10 मुवें. मुए. छन्दसां प्रीणिनं कुर्यात्. –b) ब1 शुक्लपक्षे च, ब2.3 दे2.3.6 ग्र2 म1 शुक्लपक्षे तु (→शुक्लपक्षेषु); दे1.8-10 ते1 ग्र2 उ1 मुवें. मुए. मुब. द्विजाः (→द्विजः); द1 शुक्लपक्षे द्विजोत्तमाः, उ1 गुरुपक्षेषु वै द्विजाः. –d) ब1.2 दे2-4.6 ते1 द1 म1 मुब. कृष्णपक्षेषु, ग्र2 उ1 कृष्णपक्षे तु (→कृष्णपक्षे च); का1 ब2 दे1.2.4.8.9 ते1 मुवें. मुए. मुब. मानवः, दे3.6 मानसः, दे10 म1 मानवाः (→मानवं); ब3 कृष्णपक्षे स्वमानसः.

६१. –a) न1 पुमान् (→इमान्). –ab) ते1 नित्यं प्रातस्सायमधीयाना उपविवर्जयेत्. –c) दे6 अध्यापनश्च (→अध्यापनं च); दे1.9.10 मुब. अध्यापनं प्रकुर्वाणो. –d) दे1 विसर्जयेत् (→[अ]पि यत्नतः); का1 अभ्यस्यन्नाप्यप्रयत्नतः, ब2 अभ्यस्यन्नपि च यत्नतः, दे2 ह्यस्यन्नपि प्रयत्नतः, दे4 म1 ह्यभ्यस्यन्नापि यत्नतः, दे8-10 मुवें. मुए. मुब. ह्यनध्यायान् विवर्जयेत्, ते1 [अ]प्यभ्यस्यन्नपि यत्नतः.

६२. दे1.8-10. b-f ⊙. –a) दे4 कर्णश्रावे, द1 कर्मस्रवे, ग्र2 उ1 कर्णधारे (→कर्णश्रवे); ब2 कर्णद्रावनिले रात्रौ. –b) का1 °समुद्गमात्, ब2 °समूलके, म1 °संमोहने, उ1 °विमोहने, मुब. °समुद्गमे (→°समूहने); ते1 दिवाकांशुसमुद्गते. –d) ब2 महात्मनां (→महोल्कानां); द1 ग्र2 म1 उ1 पातने (→संप्लवे). –e) म1 अनुवाक°, उ1 अकालिक° (→आकालिक°). –f) ग्र2 एतेष्वेव (→एतेष्वाह); का1 अनृतौ चन्द्रचर्शने.

६३. का1 दे1.8-10 द1 मुवें. मुए. मुब. ⊙. –a) ब2 दे3.6 नित्या (→विद्याद्). –b) ब2 दे3.6 मुदा, ग्र2 दद्या (→यदा); दे6 °सूलताग्निषु, न1 ग्र2 °ष्कृतानि तु, म1 °ष्कृतानिषु (→°ष्कृताग्निषु). –c) दे2 °वनध्यायं, दे6 °दनध्याये (→°दनध्यायं). –d) ब1-3 दे2 अनृतौ चान्द्र (ब2 °अ) दर्शने, दे4 अनृतौ तु प्रदर्शने, दे6 मनसो चाभ्रदर्शनं, ग्र2 अन्यतो चाभ्रदर्शने.

अस्य श्लोकस्य स्थाने ते1 पुस्तके अयंपाठः—

34. * ऐवोनभ्यन्दिता विप्रा वेदान् प्राहुः कृतार्थिषु ।
तं च विद्यादनध्यायमन्यतोद्भुतदर्शने ।

६४. दे1.8-10. ⊙; दे4.cd⊙. –b) ब2 चैव दर्शने, दे6 सोपसर्पणे, ते1 द1 ग्र2 म1 उ1 चोपसर्पणे (→चोपसर्जने). –c) ब2 नित्यान् (→विद्याद्); ते1 एता नानाविधा विद्या. –d) ते1 अनध्यायमृतावपि.

६५. का1. ⊙; दे10. ab ⊙; दे1.8.9. a ⊙. –a) ते1 भू (→तु). –b) दे4.6 °निस्वनं (→°निस्वने). –c) द1 ग्र2 सद्यो हि (→सज्योतिः); ते1 सदादिशेदनध्यायम्. –d) ब3 अनृतौ च प्रदर्शने, दे1.8-10 मुवें. मुए. मुब. अनृतौ चात्र दर्शने, दे2 अनृतौ चान्द्रदर्शने, दे3.6 द1 ग्र2 म1 अनृतौ चाभ्रदर्शने, ते1 अनृतौ राहुदर्शने, उ1 अनृते चाभ्रदर्शने.

अतः परं ब3 दे2.3.6 पुस्तकेषु अधिकम्—
स ज्योतिः स्यादनध्यायः शेषे रात्रौ यथा दिवा (= ६५cd)

६६. का1.⊙. –a) दे1.8-10 नित्याध्ययन एव स्याद्. –c) ब2.3 द1 ते1 उ1 कर्मनैपुण्य-, दे1.8.9 न1 धर्मनैपुण-, दे4 कर्मणो पुण्य-, ग्र2 म1 कर्मनैपुण- (→धर्मनैपुण्य-). –d) दे1.8 न1 मुवें. मुए. °गन्धेन (→°गन्धे च).

६७. का1.⊙. –a) ब2.3 दे2.3.6 °शर°, दे4 °स्तव°, दे8-10 °शिव°, उ1 °जल° (→°शव°); ग्र2 अन्त्यतां संगते ग्रामे. –c) दे1.8-10 मुवें. मुए. भुज्यमाने, दे4 युध्यमाने (→रुद्यमाने); न1 अध्यापनं न कुर्याद् वै.

उदके मध्यरात्रे च विण्मूत्रे च विसर्जने ।
उच्छिष्टः श्राद्धभुक् चैव मनसाऽपि न चिन्तयेत् ।।६८
प्रतिगृह्य द्विजो विद्वानेकोदिष्टस्य केतनम् ।
त्र्यहं न कीर्त्तयेद् ब्रह्म राज्ञो राहोश्च सूतके ।।६९
यावदेकोऽनुदिष्टस्य स्नेहो गन्धश्च तिष्ठति ।
विप्रस्य विदुषो देहे तावद् ब्रह्म न कीर्त्तयेत् ।।७०
शयानः प्रौढपादश्च कृत्वा चैवावसक्थिकाम् ।
नाधीयीतामिषं जग्ध्वा सूतकान्नाद्यमेव च ।।७१
नीहारे बाणशब्दे च संध्ययोरुभयोरपि ।
अमावास्यां चतुर्दश्यां पौर्णमास्यष्टमीषु च ।।७२
उपाकर्मणि चोत्सर्गे त्रिरात्रं क्षपणं स्मृतम् ।
अष्टकासु त्वहोरात्रं ऋत्वन्त्यासु च रात्रिषु ।।७३
मार्गशीर्षे तथा पौषे माघमासे तथैव च ।
तिस्रोऽष्टकाः समाख्याताः कृष्णपक्षे तु सूरिभिः ।।७४
श्लेष्मातकस्य छायायां शाल्मलेर्मधुकस्य च ।
कदाचिदपि नाध्येयं कोविदारकपित्थयोः ।।७५
समानविद्ये च मृते तथा सब्रह्मचारिणि ।
आचार्ये संस्थिते वाऽपि त्रिरात्रं क्षपणं स्मृतम् ।।७६
छिद्राण्येतानि विप्राणां येऽनध्यायाः प्रकीर्तिताः ।
हिंसन्ति राक्षसास्तेषु तस्मादेतान् विवर्जयेत् ।।७७
नैत्यके नास्त्यनध्यायः संध्योपासन एव च ।
उपाकर्मणि कर्मान्ते होममन्त्रेषु चैव हि ।।७८ वें. २.१४.८१

---

६८. का1. ab ⊙. –a) द1 उदयो, ग्र2 म1 उ1 उदये (→उदके); ब2.3 दे2.3.6 चार्द्ध° (→मध्य°); ग्र2 °रात्रौ (→°रात्रे).–b) दे3.6 विण्मूत्रस्य (→विण्मूत्रे च); ब1 न1 दे10 विसर्जयेत्, ब2.3 दे1 ते1 उ1 मुवें. मुए. मुब. विवर्जयेत्, दे8.9 विसर्जयन् (→विसर्जने). –c) ब2 दे1.2.4.6.9.10 न1 °भुक्त्वैव (→°भुक् चैव). –d) उ1 दे4. ग्र2 मनसा न विचिन्तयेत्.

६९. –a) का1 प्रतिगृह्य ततो विप्राद्. –b) ब2 एकोद्दिष्टनिकेतनम्, ग्र2 एकोद्दिष्टसकेतनं. –d) दे6 न1 राज्ञा (→राज्ञो).

७०. का1. ⊙. –a) ब1-3 दे2.3.6 एका(ब1 °वा)न्त-, ते1 एकान्त-, म1 एवानु- (→एकोऽनु-); ब2 दे4 द1 ग्र2 म1 उ1 -लिप्त (ग्र2 °प्य)स्य, ते1 -दुष्टस्य (→-दिष्टस्य); न1 एकोद्दिष्टस्य यावद् वै. –b) दे4 स्नेहे, द1 स्नेह- (→स्नेहो); ब2.3 दे2.3 मुब. लेपश्च, ते1 गन्धस्य, + गन्धश्च, उ1 गन्धस्य (→गन्धश्च). –c) दे1.8-10 मुवें. मुए. मुब. विपुले (→विदुषो).

७१. –a) ब1 शयाने (→शयानः); ते1 प्रोत°, द1 प्रोष्ठ° (→प्रौढ°); का1 °पार्श्वश्च, दे10 °पादस्य, न1 °पातश्च (→°पादश्च). –b) का1 वै चावसंस्थिकां, ब1 चैवावसार्थकं, ब2 दे4.10 चैवावसक्थिकं, ब3 दे1 न1 मुवें. मुए. वै चावसिक्थ-काम्, दे2 चैवावसात्स्थिकां, दे3.6 चैवावसक्थिकीं, दे6 मुब. वै चावसक्थिकां, द1 चैवेषकत्थिकां, ग्र2 चैवावसिद्धिकां, उ1 चैवावसत्तिकां (→चैवावसक्थिकां). –c) दे4 द1 दग्ध्वा (→जग्ध्वा). –d) मुवें. मुए. मुब. सूतकाद्यन्नमेव च.

७२. –a) दे1.8-10 मुए. नीहारपाते शब्दे च, दे6 नाहारे वाप्यशब्दे च, मुवें. नीहारे बाणपाते च. –c) दे4 अमावस्या-, दे6 आमावास्यां (→अमावस्यां); का1 ब1-3 दे2.3 अमावस्याचतुर्द्दश्योः. –d) ब1 दे1.4.6 न1 उ1 पौर्णमास्याष्ट-मीषु च.

७३. –b) दे4.10 त्रिरात्र- (→त्रिरात्रं); म1 क्षेपणं (→क्षपणं); ब1 त्रिरात्रं * * * * *. –c) दे2.3.4.10 मुवें. मुए. त्र्यहो° (→त्वहो°); ग्र2 म1 उ1 अष्टकासु च कुर्वीत. –d) का1 नित्यं तासु, ब2.3 दे2 न1 द1 मुवें. मुए. मुब. ऋत्वन्तासु, दे3.6 ऊर्ध्वन्तासु, ते1 तावन्तीषु (→ऋत्वन्त्यासु); ग्र2 उ1 मतिमान् तासु रात्रिषु, म1 मतिमान्नासु रात्रिषु.

७४. –a) का1 दे1.8-10 च वा (→तथा). –b) का1 माघे, दे1.8-10 मासे (→माघ-); द1 उ1 °मासि (→°मासे). –c) न1 सदा° (→समा°). –d) ब1 ग्र2 °पक्षे च, ब2.3 दे2.3 न1 द1 °पक्षेषु (→°पक्षे तु).

७५. –a) का1 दे1 °श्लेष्मान्तकस्य (→श्लेष्मातकस्य). –b) ग्र2 म1 शल्मलेर् (→शाल्मलेर्).

७६. दे4.bcd ⊙. –a) दे4 °विप्रेथ, दे9 °चर्ये च, द1 ग्र2 म1 उ1 °विद्ये तु (→°विद्ये च). –b) दे6 सु-, ते1 च, + स-, ग्र2 वै (→स-); का1 दे10 म1 -ब्रह्मचारिणी (→-ब्रह्मचारिणि). –c) ब2.3 आचार्य- (→आचार्ये); ब1 ग्र2 म1 उ1 चापि (→वापि); ते1 आचार्ये च मृते वापि.

७७. दे4.⊙. –a) ब1 कर्माणि (→विप्राणां). –b) का1 ब2 येऽना° (→येऽन°). –d) ब1.2 दे1.6 द1 ग्र2 म1 उ1 मुवें. मुए. विसर्जयेत् (→विवर्जयेत्).

७८. दे4.abc ⊙; न1.cd ⊙. –a) ब2 दे1 मुवें. मुए. मुब. नैत्यिके (→नैत्यके). –b) ब3 दे10 °पासनमेव च (→°पासन एव च). –c) का1 ब2.3 दे2

वॆं.२.१४.८१ एकामृचमथैकं वा यजुः सामाथवा पुनः ।
अष्टकाद्यास्वधीयीत मारुते चातिवायति ॥७९
अनध्यायस्तु नाङ्गेषु नेतिहासपुराणयोः ।
न धर्मशास्त्रेष्वन्येषु पर्वण्येतानि वर्जयेत् ॥८०
एष धर्मः समासेन कीर्त्तितो ब्रह्मचारिणाम् ।
ब्रह्मणाऽभिहितः पूर्वमृषीणां भावितात्मनाम् ॥८१
योऽन्यत्र कुरुते यत्नमनधीत्य श्रुतिं द्विजः ।
स संमूढो न संभाष्यो वेदबाह्यो द्विजातिभिः ॥८२
न वेदपाठमात्रेण संतुष्टो वै भवेद् द्विजः ।
पाठमात्रावसन्नस्तु पङ्के गौरिव सीदति ॥८३
योऽधीत्य विधिवद् वेदं वेदार्थं न विचारयेत् ।
ससान्वयः शूद्रकल्पः पात्रतां न प्रपद्यते ॥८४
यदि त्वात्यन्तिकं वासं कर्त्तुमिच्छति वै गुरौ ।
युक्तः परिचरेदेनमाशरीरविमोक्षणात् ॥८५
गत्वा वनं वा विधिवज्जुहुयाज्जातवेदसम् ।
अधीयीत सदा नित्यं ब्रह्मनिष्ठः समाहितः ॥८६
सावित्रीं शतरुद्रीयं वेदान्तांश्च विशेषतः ।
अभ्यसेत् सततं युक्तो भस्मस्नानपरायणः ॥८७
एतद् विधानं परमं पुराणं
वेदागमे सम्यगिहेरितं वः ।
पुरा महर्षिप्रवराभिपृष्टः
स्वायंभुवो यन्मनुराह देवः ॥८८

होमान्ते (→कर्मान्ते). –d) का1 ब2.3 दे2.3 तथैव हि, दे6 तथैव च (→चैव हि).

७९. का1 न1.⊙. –a) ब1.3 दे1.3 ऋतम् (→ऋचम्). –b) ब2.3 दे3.6 सामानि (→सामाथ). –c) ब2 दे2.3 अष्टाकाद्यासु अधीयीत. –d) दे4 ते1 वाति-, म1 चापि, उ1 वापि (→चाति-); दे4 ग्र2 -वायति, ते1 -वाति च (→-वायति).

८०. न1. ⊙. –a) ते1 अनध्यायश्च नान्येषु. –d) ब1-3 दे3.6.8.9 ग्र2 उ1 मुवें. मुए. मुब. पर्वण्ये- (→पर्वण्ये-); द1 एव विवर्जयेत्, ग्र2 म1 उ1 एतान् विसर्जयेत् (→एतानि वर्जयेत्).

८१. –b) ग्र2 म1 उ1 ब्रह्मचारिणः (→ब्रह्मचारिणां). –c) ब1 उ1 [अ]भिहितं, न1 म1 ते1 विहितं (→[अ]-भिहितः).

८२. ब1. cd ⊙. –b) दे1.4.8-10 न1 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. द्विजाः (→द्विजः). –c) दे4 द1 ग्र2 म1 उ1 स (उ1 न) वै, दे2.6 समं, न1 सोऽसौ (→न सं-).

८३. ब1. ab ⊙; दे1. cd ⊙. –a) दे4 पाठमात्रेण संतुष्टो. –b) ब2 संतुष्टो वै द्विजन्मनः, ब3 द1 ग्र2 म1 उ1 मुवें. संतुष्टो वै द्विजोत्तमाः (उ1 द1 °मः), दे1.8-10 मुए. मुब. संतुष्येदेष वै द्विजः, दे4 यदि चैव भवेद् द्विजः, न1 धर्मिष्ठो वा भवेद् द्विजः, ते1 संतुष्टौ वै भवेन्नृप. –c) का1 दे8-10 मुवें. मुए. मुब. एवमाचारहीनस्तु, दे4 न1 ते1 ग्र2 म1 उ1 पाठमात्रावसानस्तु.

८४. दे1. ab ⊙. –c) का1 समाम्नायः शूद्रकल्पः, दे1.8.9 मुवें. मुए. स चान्धः शूद्रकल्पस्तु, दे10 स चान्धः स च शूद्रस्तु, ते1 स मानुषः शूद्रतुल्यः. –d) दे1.8.9 पदार्थं, दे4 पात्रतो, दे10 वेदार्थं (→पात्रतां); ते1 प्रकल्पयेत्, म1 प्रवर्त्तते (→प्रपद्यते).

८५. –a) का1 नात्यन्तिकं, दे1.4.8-10 मुवें मुए. चात्यन्तिकं, ते1 त्वाहान्तिकं, ग्र2 म1 उ1 मुब. वात्यन्तिकं (म1 का) (→त्वात्यन्तिकं). –b) का1 ब1-3 दे2.3.6 उ1 गुरोः (→गुरौ). –c) का1 युक्तं (→युक्तः); का1 दे1 एवं, उ1 दे2 एव (→एनं). –d) का1 ब1-3 दे2 °रविमोक्षणं, दे1.8.9 मुवें. मुए. मुब. °राभिघातनात्, दे4 °रनिपीडनात्, दे10 °राभिपातनात् (→°रविमोक्षणात्).

८६. का1. ⊙. –c) दे1.10 मुवें. मुए. मुब. अभ्यसेत् स तदा नित्यं. –d) दे1.9 °नित्यं, दे4 द1 ग्र2 म1 °विद्या-, उ1 °विद्यां (→°निष्ठः).

८७. –b) ब1 दे10 वेदाङ्गांश्च, दे1.8.9 वेदाङ्गानि, द1 ग्र2 म1 वेदानां च (→वेदान्तांश्च). –c) दे4 युक्तं (→युक्तो). –d) ते1 तं चासनपरायणः.

८८. का1. ⊙. –a) द1 एतद्विधानं परमं वेदितव्यं. –b) ब1 वेदागतो, ब2 वेदागमं, दे1.4.8-10 ते1 म1 उ1 वेदाङ्गतः, द1 ग्र2 वेदाङ्गदं (→वेदागमे); दे1 मुवें. मुए. च ग्र2 (व)चः (→वः). –c) ब3 दे10 न1 महर्षिः, दे6 महर्षे (→महर्षि-), दे1.4.8-10 द1 म1 मुवें. मुए. मुब. -प्रवरानुपृष्टः, न1 -प्रवरानुमृष्टः, ते1 -प्रवराभिजुष्टं, ग्र2 -प्रवरान् प्रविष्टः, उ1 -प्रवरैः स पृष्टः (→-प्रवराभिपृष्टः). –d) दे2.4.6 स्वायभुवोऽयं, द1 स्वायंभुवोऽहं, ग्र2 स्वयंभुवोऽयं, म1 स्वयंभुवो हि (→स्वायंभुवो यन्).

एवमीश्वरसमर्पितान्तरो
योऽनुतिष्ठति विधिं विधानवित् ।
मोहजालमपहाय सोऽमृतो
याति तत् पदमनामयं शिवम् ।।८९

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायामुपरिविभागे चतुर्दशोऽध्यायः ।।१४।।

# १५

व्यास उवाच ।❀

वेदं वेदौ तथा वेदान् वेदान् वा चतुरो द्विजाः ।
अधीत्य चाधिगम्यार्थं ततः स्नायाद् द्विजोत्तमः ।।१
गुरवे तु वरं दत्त्वा स्नायीत तदनुज्ञया ।
चीर्णव्रतोऽथ युक्तात्मा सशक्तः स्नातुमर्हति ।।२
वैणवीं धारयेद् यष्टिमन्तर्वासस्तथोत्तरम् ।
यज्ञोपवीतद्वितयं सोदकं च कमण्डलुम् ।।३
छत्रं चोष्णीषममलं पादुके चाप्युपानहौ ।

वें.२.१५.४

८९. –a) का1 ब2.3 दे2.3.6 न1 द1 ग्र2 म1 उ1 एत- (→एव); का1 ब1.2 दे2.3.6 ते1 समीरितं नरो, द1 समर्पिते नरो, ग्र2 म1 समर्पितं नरो (→समर्पितान्तरो). –b) ब1 योऽनु (पा) तिष्ठिति, द1 उ1 योऽधितिष्ठति (→योऽनुतिष्ठति); दे1.3.9 मुए. विधानवत् (→विधानवित्). –c) ब1 दे1.4.8-10 न1 मुवें. मुए. मुब. सोऽमृतं (→सोऽमृतो). –d) दे4 ग्र2 उ1 तत्परं (→तत्पदं); द1 उ1 परं, ग्र2 म1 पदं (→शिवं).

**पुष्पिका**—[द1 पुस्तके अध्यायसमाप्तिर्नास्ति].

**पुराणनाम**—का1 दे1.6.8-10 ते1 इति श्रीकू(का1 कौ)र्मपुराणे उपरिभागे, ब1 इति कौर्मे उपरिभागे, ब2 इति कूर्मपुराणे, ब3 दे2.3 इति कू(दे2 कौ)र्मपुराणे उपरिभागे, दे4 इति श्रीकूर्मपुराणे ईश्वरगीतासूपनिषत्सु, न1 इति श्रीकूर्मपुराणे, ग्र2 म1 इति (म1 * *) श्रीकूर्मपुराणे उत्तरभागे व्यासगीतासूपनिषत्सु उ1 मुए. इति श्रीकूर्मपुराणे उत्तर (उ1 °रे) भागे, मुवें. इति श्रीकूर्मपुराणे उत्तरार्द्धे व्यासगीतासु, मुब. इति श्रीकौर्मे महापुराणे उपरिभागे. **अध्यायनाम**—का1 ब1-3 दे1-4.6.8-10 न1 ग्र2 म1 उ1 मुए. ⊙; ते1 सदाचारप्रसंगो नाम, मुवें. ब्रह्मचारिधर्मनिरूपणं नाम, मुब. ब्रह्मविद्यायां वेदाध्ययनादिक्रमनियमो नाम. **अध्यायसंख्या**—ब2 दे6. ⊙; का1 मुवें. मुब. चतुर्दशोऽध्यायः ।।१४।।, ब1.3 दे2.3 त्रयोदशोऽध्यायः, दे1.4.8-10 ते1 ग्र2 म1 उ1 मुए. चतुर्दशोऽध्यायः.

**१५**

❀ द1. ⊙; दे3.8.9 व्यास उ.; न1 श्रीवेदव्यासाय नमः; ग्र2 म1 उ1 व्यासः.

१. –a) दे1 वेदे, दे6 उ1 वेद-, द1 वंदे (→वेदं); ब1 वेद(?) (→वेदान्). –b) ब1 दे8-10 उ1 मुवें. मुए. मुब. विन्द्याद्वा, दे1 विवाद्वा (→वेदान्वा); दे1.4.8.9 म1 द्विजः (→द्विजाः); का1 ब2.3 दे2.3.6 वेदाङ्गाश्चतुरोप्यथ, न1 वेदान्वै चतुरोप्यथ, ते1 अथवा चतुरोऽप्यथ. –c) दे10 आधीत्य (→अधीत्य); ब1.2 दे1.4.8-10 मुवें. मुए. मुब. चाभि°, ग्र2 विधि°, उ1 ह्यधि° (→चाधि°); दे6 °गम्यर्थं (→°गम्यार्थं). –d) दे4.8-10 न1 द1 ग्र2 उ1 मुवें. मुए. मुब. द्विजोत्तमाः (→द्विजोत्तमः).

२. –a) दे1 मु(गु?)रवेथ (→गुरवे तु); का1 ब2.3 दे2.3.6 ते1 मुवें. मुए. मुब. धनं (→वरं). –c) दे2 कीर्ण° (→चीर्ण°); ब2 °व्रतोर्थ-, द1 उ1 °व्रतोप-, ग्र2 °व्रतोप्र- (→°व्रतोथ); का1 दे2 मुक्तात्मा (→युक्तात्मा); दे4 चीर्यव्रतोप्ययुक्तात्मा, दे10 चीर्णाव्रतेपि युक्तात्मा, म1 जीर्णव्रतो विमुक्तात्मा. –d) का1 ब2.3 दे2.6 शक्तो वा, दे4 द1 ग्र2 म1 उ1 ह्यशक्तः, ते1 ह्यासक्तः (→सशक्तः); द1 म1 उ1 स्नान°, ग्र2 स्नाह°(?) (→स्नातु°).

३. –a) न1 वैष्णवीं, म1 वैणवं (→वैणवीं); दे10 येषु (→यष्टिं); दे6 वैणवां द्यारयेमुष्टिं. –b) दे4 मुवें. मुए. मुब. °वासं (→°वासस्); दे6 मन्तव्यंस(?), ग्र2 अन्तर्व्यासं (→अन्तर्वासस्). –d) ग्र2 त्रितयं (→द्वितयं); उ1 सोदकुम्भं च (→सोदकञ्च); दे4 कमंडलं, न1 कमण्डलुः (→कमण्डलुम्).

४. –a) दे3.6 चोष्णीष-, दे10 चोष्णी(?) च (→चोष्णीषम्); दे3.6 -चमसं, दे10 अमलां (→अमलं). –c)

वें.२.१५.४ रौक्मे च कुण्डले वेदं कृत्तकेशनखः शुचिः ॥४
स्वाध्याये नित्ययुक्तः स्याद् बहिर्माल्यं न धारयेत् ।
अन्यत्र काञ्चनाद् विप्रो न रक्तां बिभृयात् स्रजम् ॥५
शुक्लाम्बरधरो नित्यं सुगन्धः प्रियदर्शनः ।
न जीर्णमलवद्वासा भवेद् वै विभवे सति ॥६
न रक्तमुल्बणं चान्यधृतं वासो न कुण्डिकाम् ।
नोपानहौ स्रजं चाथ पादुके च प्रयोजयेत् ॥७
उपवीतमलंकारं दर्भान् कृष्णाजिनानि च ।
नापसव्यं परीदध्याद् वासो न विकृतं वसेत् ॥८
आहरेद् विधिवद् दारान् सदृशानात्मनः शुभान् ।
रूपलक्षणसंयुक्तान् योनिदोषविवर्जितान् ॥९
अमातृगोत्रप्रभवामसमानर्षिगोत्रजाम् ।
आहरेद् ब्राह्मणो भार्यां शीलशौचसमन्विताम् ॥१०
ऋतुकालाभिगामी स्याद् यावत् पुत्रोऽभिजायते ।
वर्जयेत् प्रतिषिद्धानि प्रयत्नेन दिनानि तु ॥११
षष्ठ्यष्टमीं पञ्चदशीं द्वादशीं च चतुर्दशीम् ।

---

न1 ग्र2 म1 रौग्मे, ते1 कार्मे, +रौक्मे (→रौक्मे); का1 ब2.3 दे2.3 दे2 ते1 मुब. धार्ये, ब1 दे4 चैव, दे3.6 धौर्ये, ग्र2 द्वैव, म1 द्वे च, उ1 नर्घे (→वेदं). –d) का1 लून°, ब1.2 दे2.3 कृन्त-, दे8.9 कृप्त-, दे10 क्लिप्त-, मुवें. मुए. मुब. व्युप्त- (→कृत्त-); दे1 -नखं (→-नखः); म1 छविः (→शुचिः).

५. –a) द1 उ1 स्वाध्याय- (→स्वाध्याये); दे1.6.10 न1 द1 ग्र2 म1 युक्त (→युक्तः). –b) दे10 न1 स्यद् (?) (→स्याद्); दे1 मोल्यं न, दे6 माल्यां न, द1 म1 माल्यं च (→माल्यं न). –c) ब2 वि *, दे1.8.9 न1 मुवें. मुए. मुब. विप्रः (→विप्रो). –d) ब2 दे6 रक्तं (→रक्तां); दे1 भि(?) भृयात्, न1 द1 विभयात्, ते1 धारयेत्, ग्र2 विभृया (→बिभृयात्).

६. –a) न1 नित्यः (→नित्यं). –b) ब3 स्वगन्धि, द1 उ1 सुगन्ध- (→सुगन्धः); उ1 °दर्शनं (→°दर्शनः). –c) दे1 जीर्णा° (→जीर्ण°); दे6 °मनवद्, ग्र2 °मलमद् (→°मल-वद्); न1 वासो (→वासा). –d) का1 दे1.4 मुवें. मुए. मुब. वैभवे (→विभवे); दे10 सती (→सति).

७. –a) दे3.6 वक्तं (→रक्तम्); दे2 उल्यणं, ग्र2 म1 उत्बणं, उ1 उद्वहं (→उल्बणं); का1 दे1.8-10 चान्यद् (→चान्य-); ब1 न रक्तं *****, ते1 न रक्तलवणं धार्यं. –b) का1 व्रतं, दे1 धृत्तं, दे4 वृतं (→धृतं); दे10 चासौ (→वासो); का1 स (→न); दे1.10 ते1 कुण्डिका, दे6 कुंडिकं, द1 कंठिकां, ग्र2 बन्धिकं, म1 विभ्रयात् (→कुण्डिकाम्). –c) ब1 नपानहौ, दे10 नौपानहौ, न1 नोपानहं (→नोपानहौ); द1 सृजं (→स्रजं); ब1 वापि, दे1.2.4.8 न1 मुवें. मुए. मुब. वाथ, दे3 चाप्य (?) (→चाथ). –d) दे3 पाध्रुके (?) (→पादुके); का1 दे1.8-10 मुवें. मुए. मुब. न (→च).

८. का1. cd ⊙. –a) दे1 मुवें. मुए. मुब. °करान् दर्भान्, दे4.8-10 द1 म1 °मलंकारान्, ते1 °मलंकारः (→°मलं-कारं). –b) ब2.3 दे3.6 ते1 दर्भाः, दे1 मुवें. मुए. मुब. तथा, दे4 दर्भं (→दर्भान्); ब1 °नपि (→°नि च). –c) दे4 °सव्यां (→°सव्यं); द1 तध्याद् (?) (→दध्याद्); दे2 नासव्यं परीदध्याद्व. –d) द1 वासे (→वासो); द1 च कृतं, ग्र2 वकृतं (→विकृतं); दे1.8-10 मुवें. मुए. मुब. चयन्, दे4 भवेत् (→वसेत्).

अतः परं म1 पुस्तके अधिकम्—

*व्रतानि स्नातको नित्यं सर्वभूतानुकंपनः । ( = १३ cd)

९. का1. ab ⊙. –a) ब1 अहरे विधिवद्, दे9 आहार-द्विव* (→आहरेद्विधिवद्); दे1 न1 द्वारान् (→दारान्). –b) दे2 सद्दशा-, दे10 सदसा- (→सदृशा-); दे2 -नात्मना, ब1 -ना*नः, ग्र2 -नामनः (→-नात्मनः); दे1 8-10 द1 ग्र2 म1 उ1 समान्, दे4 समं, ते1 समाः (→शुभान्). –c) ब2 न1 ते1 ग्र2 म1 उ1 °संपन्नान्, दे4 °संयुक्तां (→°संयुक्तान्). –d) दे4 °विवर्जिक्तां, दे6 °विवर्जित, ते1 °विवर्जिताम् (→°विवर्जितान्).

१०. –a) दे1.2 अनतृ-, दे8-10 आमंत्रि-, दे9 अमंत्रि- (→अमातृ-); ब1-3 दे3.6 -जभवा-, दे4 -विभवा-, दे10 -मभवो, उ1 -प्रभवान् (→-प्रभवा-). –b) ब2 दे2 म1 उ1 -नस-, दे4 -मम्ल- (→-मस-); ब2 दे6 द1 ग्र2 उ1 -नार्ष-, दे3 -नार्द्धं, दे4 म1 -नर्ष-, दे6 -नार्थं- (→-नर्षि-). –c) दे6 आदरद्, दे10 आहारे, ग्र2 आहरे (→आहरेद्); दे6 भार्या (→भार्यां). –d) ब1 दे3 शिव-, ब3 दे6 शीवः (→शील-); ब1.2 -समन्वितान्, दे6 -समन्वितः (→-समन्विताम्).

११. –a) ग्र2 °कामी (→°गामी). –b) उ1 पुत्रो हि (→पुत्रोऽभि-). –c) दे2.3.10 °सिद्धानि (→°षिद्धानि); ब3 वर्जयेत्तां प्रयत्नेन. –d) दे1.9.10 मुवें. मुए. मुब. दिनानि तु प्रयत्नतः.

१२. दे1. cd ⊙. –a) ब1 दे1.2.6 षष्ठचष्टमी (→षष्ठ्य-ष्टमीं); ब3 दे1 पञ्चदशी (→पञ्चदशीं). –b) दे1 द्वादशी च, दे6 * * * च, ते1 अमावास्यां (→द्वादशीं च); दे1 चतुर्दशी

ब्रह्मचारी भवेन्नित्यं तद्वज्जन्मत्रयाहनि ॥१२
आदधीतावसथ्याग्निं जुहुयाज्जातवेदसम् ।
व्रतानि स्नातको नित्यं पावनानि च पालयेत् ॥१३
वेदोदितं स्वकं कर्म नित्यं कुर्यादतन्द्रितः ।
अकुर्वाणः पतत्याशु नरकानतिभीषणान् ॥१४
अभ्यसेत् प्रयतो वेदं महायज्ञान् न हापयेत् ।
कुर्याद् गृह्याणि कर्माणि संध्योपासनमेव च ॥१५
सख्यं समाधिकैः कुर्यादुपेयादीश्वरं सदा ।
दैवतान्यपि गच्छेत कुर्याद् भार्याभिपोषणम् ॥१६
न धर्मं ख्यापयेद् विद्वान् न पापं गूहयेदपि ।
कुर्वीतात्महितं नित्यं सर्वभूतानुकम्पकः ॥१७
वयसः कर्मणोऽर्थस्य श्रुतस्याभिजनस्य च ।
वेषवाग्बुद्धिसारूप्यमाचरन् विचरेत् सदा ॥१८
श्रुतिस्मृत्युदितः सम्यक् साधुभिर्यश्च सेवितः । वें.२.१५.१९

(→चतुर्दशीम्). –d) दे3 तद (→तद्वद्); का1 -त्रयानितः, दे2 -त्रयाहनिः, दे4 -त्रहाहनि, ते1 -दिनत्रयम्, म1 -त्रयेहनि-(→त्रयाहनि); दे8-10 मुवें. मुए. मुब. ब्राह्मणः संयतेन्द्रियः, ग्र2 तद्वर्ज्जमात्रयाहनि.

१३. दे1. ab ⊙; उ1. d ⊙. –a) का1 ब2.3 दे2.3.6 आदधीत, दे4 आददीत्या-, दे8.9 द1 आददीता°, दे10 आददीनां, ग्र2 अददीता° (→आदधीता°); का1 ब2 दे2.3.6 विवाहाग्निं, ब3 विहायाग्नि, दे4 वमथ्याग्नि, दे10 वसंयाग्नीं, न1 वसक्थ्याग्निर्, ते1 म1 उ1 वसंक्थ्याग्निं, उ1 वसंथ्यानि (→वसथ्याग्निं). –b) ते1 वेदसि (→वेदसम्). –c) दे6 स्नानको, ते1 स्नातका (→स्नातको); दे2 निच (?) (→नित्यं); दे1 ब्रह्मा ** तको नित्ये. –d) का1 दे2.3.6 पारणानि (→पावनानि); ग्र2 सर्वभूतानुकम्पनः.

अतः परं ग्र2 पुस्तके अधिकम्—

* दयापरसमायुक्तो ह्यपापानि च पालयेत् । ( = १३cd)

म1 पुस्तके अधिकम्—

* श्रुतिस्मृत्युदितं कर्म साधुकार्यञ्च सेवितं ।
तमाचारं निषेवेत नेहेतान्यत्र कर्हिचित् । ( = १९)

उ1 पुस्तके अधिकम्—

34\. * दयापरसमायुक्तो पावनानि पाययेत्
चरौ च पचनाद्यर्थं पचनाद्यर्थ पालयेत् ।

१४. –a) दे10 स्वयं (→स्वकं). –b) दे2 अतंन्त्रितः, दे10 अतंद्रियः (→अतन्द्रितः). –c) ब2 न कुर्वाणः, दे1 उ1 अकुर्वाणाः (→अकुर्वाणः); दे10 परत्वाशु (→पतत्याशु). –d) दे1.8.10 मुवें. मुए. मुब नरकान्याति-, दे4 नीरयानाति-, न1 नरकां नाति-, ते1 द1 म1 उ1 निरयानति-, ग्र2 निरयानिति- (→नरकानति-); दे6 न1 -भीषणाद् (→-भीषणान्).

१५. –a) दे1 प्रयंतो (→प्रयतो); दे3 चेदं, ते1 नित्यं (→वेदं). –b) ब1 न1 महायज्ञं न हापयेत्, दे1.8-10 द1 ग्र2 मुवें. मुए. मुब. महायज्ञांश्च भावयेत्, ते1 पंचयज्ञान्न हापयेत्, उ1 महायज्ञांश्च हापयेत्. –c) ब3 दे3.9 न1 गृह्यानि, दे1 गृस्वानि, दे2.6 ते1 गुह्यानि, दे10 नित्याणि(?), द1 म1 उ1 गार्ह्याणि (→गृह्याणि); का1 ब3 दे2.3.6 कार्याणि, ते1 सर्वाणि (→कर्माणि).

१६. –a) ब2 मन्त्रैः, ब3 पख्यं (?), न1 संख्यं, ते1 सन्ध्यां, द1 शक्त्या, ग्र2 म1 उ1 शक्यं (→सख्यं); का1 दे2.4 समधिकैः, दे10 समाधितैः, ते1 समाहितः, द1 समधिकं, ग्र2 उ1 समाधिकं (→समाधिकैः); म1 शक्यं सायाह्नकं कुर्याद्. –b) दे1 उर्षयाद, मुवें. मुए. मुब. अर्च्चयेद्, उ1 वेदा* (→उपेयाद्). –c) दे1.4.6.8-10 न1 द1 ग्र2 म1 उ1 मुवें. मुए मुब. °न्याधि-, दे3 °न्यभि, ते1 °ह्यभि- (→°न्यपि); दे4 गच्छेच्च, दे10 या गच्छेत्, म1 उ1 गच्छेतु (→गच्छेत). –d) दे1.8-10 मुवें. मुए. मुब. °विभूषणं, दे4 द1 ग्र2 म1 उ1 °दि पोषणं, दे6 °तिपोषणम् (→°भिपोषणं); का1 कुर्यात् भृत्याभिपोषणम्.

१७. –a) ते1 * स्वर्ग्गं (→न धर्मं); ते1 गोपयेद् (→ख्यापयेद्). –b) दे3 गृहयेद्, दे6 पूजयेद्, दे10 गुहयेद्, न1 ग्रहयेद् (→गूहयेद्). –c) ब1 कुर्वतात्म-, दे1 कुर्वीतीत्म- (?); दे3.6 ग्र2 कुर्वीतार्थ-, दे10 कुर्वीतान् स, द1 उ1 कुर्वीताभि- (→कुर्वीतात्म-); द1 ग्र2 उ1 -मतं (→-हितं); ब3 सर्वं (→नित्यं). –d) दे2 °भूतार्थ- (→°भूतानु-); दे1.4.8-10 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. °कम्पनम् (→°कम्पकः).

१८. –a) ग्र2 वायसः (→वयसः); का1 स्वस्य, उ1 [अ]र्थंथ्य (→[अ]र्थस्य). –b) दे1 सुतस्या°, दे10 श्रुतस्यो° (→श्रुतस्या°). –c) का1 ब3 दे2.3.6 देश-, ब1 दे1.8-10 मुवें. मुए. मुब. वेद- (→वेष-); दे6 -साहिष्यम् (→-सारूप्यम्). –d) दे1.4.8.10 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. आचरेद् (→आचरन्); दे1.8 निचरेत्, मुवें. मुए. मुब. विहरेत् (→विचरेत्).

१९. –a) ब1-3 दे1.4.8-10 ते1 द1 ग्र2 म1 उ1 उदितं (→उदितः); ते1 कर्म (→सम्यक्). –b) दे4 साधुभिर्यञ्च, द1 ग्र2 म1 उ1 साधुकार्यञ्च (→साधुभिर्यश्च); दे4 न1 ते1 द1

वें. २.१५.१६ तमाचारं निषेवेत नेहेतान्यत्र कर्हिचित् ॥१९
येनास्य पितरो याता येन याताः पितामहाः ।
तेन यायात् सतां मार्गं तेन गच्छन् न रिष्यति ॥२०
नित्यं स्वाध्यायशीलः स्यान्नित्यं यज्ञोपवीतवान् ।
सत्यवादी जितक्रोधो ब्रह्मभूयाय कल्पते ॥२१
संध्यास्नानपरो नित्यं ब्रह्मयज्ञपरायणः ।
अनसूयी मृदुर्दान्तो गृहस्थः प्रेत्य वर्द्धते ॥२२
वीतरागभयक्रोधो लोभमोहविवर्जितः ।
सावित्रीजाप्यनिरतः श्राद्धकृन्मुच्यते गृही ॥२३
मातापित्रोर्हिते युक्तो गोब्राह्मणहिते रतः ।
दान्तो यज्वा देवभक्तो ब्रह्मलोके महीयते ॥२४
त्रिवर्गसेवी सततं देवतानां च पूजनम् ।
कुर्यादहरहर्नित्यं नमस्येत् प्रयतः सुरान् ॥२५
विभागशीलः सततं क्षमायुक्तो दयालुकः ।
गृहस्थस्तु समाख्यातो न गृहेण गृही भवेत् ॥२६
क्षमा दया च विज्ञानं सत्यं चैव दमः शमः ।
अध्यात्मनिरतं ज्ञानमेतद् ब्राह्मणलक्षणम् ॥२७
एतस्मान्न प्रमाद्येत विशेषेण द्विजोत्तमः ।
यथाशक्ति चरन् कर्म निन्दितानि विवर्जयेत् ॥२८
विधूय मोहकलिलं लब्ध्वा योगमनुत्तमम् ।
गृहस्थो मुच्यते बन्धात् नात्र कार्या विचारणा ॥२९

---

म$_1$ उ$_1$ सेवितं, ग्र$_2$ सेविता (→सेवितः). –c) दे$_{2.6}$ ते$_1$ उ$_1$ तमाचरं, दे$_4$ तमाचारे, दे$_8$ तमोचारं, न$_1$ समाचारं (→तमाचारं); न$_1$ निषेवेतं (→निषेवेत). –d) ब$_2$ नेचोत (?), दे$_{3.6}$ नेह च, न$_1$ न हता, ते$_1$ विहितो, द$_1$ नेह न (→नेहेता-); दे$_{1.8-10}$ मुए. मुब. कुत्रचित् (→कर्हिचित्).

२०. –a) का$_1$ ब$_1$ जाता (→याता). –b) दे$_6$ द$_1$ याता, न$_1$ यात्राः, ग्र$_2$ बाताः (→याताः). –c) ब$_1$ द$_1$ स तं, दे$_3$ सतान् (?) (→सतां). –d) का$_1$ ब$_{2.3}$ दे$_{2.3.6}$ न दुष्यति, दे$_1$ मरिष्यति, दे$_{8-10}$ द$_1$ मुवें. मुए. मुब. तरिष्यति, ते$_1$ तदुष्यति (→न रिष्यति).

२१. –a) दे$_4$ नित्य- (→नित्यं); दे$_1$ स्वोध्याय° (?) (→स्वाध्याय°); दे$_{4.10}$ °शीलस्य, न$_1$ ग्र$_2$ °शीलस्याद् (→°शीलः स्यात्). –b) ते$_1$ °शीलवान् (→°पवीतवान्). –c) ब$_1$ सत्यवाधि (क) (→सत्यवादी). –d) दे$_1$ ब्राह्म° (→ब्रह्म°).

२२. दे$_3$. cd ⊙. –a) का$_1$ ब$_{1-3}$ दे$_{2-4.6}$ ते$_1$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ °रतो (→°परो). –b) उ$_1$ °परायणं °(→परायणः); दे$_3$ नमस्येत्प्रयतः स्वरान्. –c) का$_1$ ब$_{1-3}$ दे$_{2.4.6}$ न$_1$ ते$_1$ द$_1$ उ$_1$ अनसूयुर्, ग्र$_2$ अनसूया, म$_1$ अनसूयो (→अनसूयी); दे$_2$ मृदुर्दंति, ते$_1$ मुदा युक्तो, ग्र$_2$ मृदुद्यन्तो, उ$_1$ मृदुःशान्तो (→मृदुर्दान्तो). –d) दे$_{10}$ म$_1$ वर्त्तते (→वर्द्धते).

२३. दे$_3$. ⊙. –a) दे$_{10}$ -भयः (→-भय-). –c) ब$_{1.3}$ दे$_{2.4.6}$ न$_1$ मुवें. मुए. मुब. जाप°, ब$_2$ ते$_1$ ग्र$_2$ जप्य° (→°जाप्य°). –d) दे$_{1.8-10}$ शुद्ध°, दे$_6$ श्राद्धा° (→श्राद्ध°); दे$_1$ शुद्धं संमु (न) च्यते गृही.

२४. दे$_3$. ⊙. –a) का$_1$ °पित्रे हिते, दे$_1$ °पित्र्येहिते, न$_1$ म$_1$ °पित्रोहिते, ते$_1$ °पितृहिते (→°पित्रोर्हिते); दे$_6$ मुक्तो, दे$_{10}$ युक्ते (→युक्तो). –c) का$_1$ ब$_{1-3}$ दे$_2$ न$_1$ म$_1$ उ$_1$ दाता यज्वा, दे$_6$ दाता यज्ञा, ते$_1$ पंचयज्ञो द$_1$ नाययज्वा, ग्र$_2$ न यज्वानो (→दान्तो यज्वा); का$_1$ भवेद्भक्तो, द$_1$ वेदभक्तो (→देवभक्तो).

२५. दे$_3$. ⊙. –a) दे$_6$ °मेधी, ग्र$_2$ °देवी (→°सेवी). –d) दे$_{10}$ नमस्ते, ग्र$_2$ नमस्यं (→नमस्येत्); दे$_1$ ग्र$_2$ उ$_1$ सततं, म$_1$ अहरहस् (→प्रयतः); दे$_6$ स्वराट् (→सुरान्).

२६. –b) दे$_1$ क्षामा (?), ग्र$_2$ म$_1$ समा- (→क्षमा-); दे$_6$ ते$_1$ -मुक्तो, ते$_1$ -शीलो (→-युक्तो); दे$_{3.6}$ दयात्मकः (→दयालुकः). –c) न$_1$ गृहस्तस् (→गृहस्थस्); ते$_1$ स (→तु). –d) ब$_2$ नो (→न); म$_1$ हीनश्च (→ गृहेण).

२७. दे$_{3.6}$. cd ⊙; द$_1$ ग्र$_2$ उ$_1$. bc ⊙. –a) दे$_3$ वि * नं (→विज्ञानं). –b) ब$_3$ दे$_6$ समः (→शमः). –c) का$_1$ दे$_3$ °नित्यता, ब$_1$ दे$_{1.8-10}$ °निरतो, ब$_{2.3}$ °शीलता, ते$_1$ मुवें. मुए. मुब. °निरत- (→°निरतं); न$_1$ अध्यात्मज्ञाननित्यत्वं.

२८. दे$_{3.6}$. ⊙. –a) का$_1$ दे$_2$ अकस्मात्, ब$_{1-3}$ एकस्मात्, ग्र$_2$ एतस्मिन् (→एतस्मात्); उ$_1$ प्रपद्येत (→प्रमाद्येत). –b) दे$_4$ ते$_1$ मुवें. मुए. द्विजोत्तमाः (→द्विजोत्तमः). –c) ब$_1$ दे$_{1.4}$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ मुवें. मुए. मुब. चरेत् (→चरन्); का$_1$ धर्मं, दे$_2$ चर्मं, दे$_{10}$ कर्मन् (→कर्मं). –d) ग्र$_2$ निद्रितानि (→निंदितानि); दे$_1$ विवर्जयत्, द$_1$ ग्र$_2$ उ$_1$ च वर्जयेत् (→विवर्जयेत्).

२९. दे$_{3.6}$.⊙; दे$_1$.d ⊙. –a) ग्र$_2$ विधूत° (→विधूय°); दे$_{10}$ °कपिलं (→°कलिलं). –c) दे$_1$ वेधत् (→बन्धात्).

विगर्हातिक्रमाक्षेपहिंसाबन्धवधात्मनाम् ।
अन्यमन्युसमुत्थानां दोषाणां मर्षणं क्षमा ॥३०
स्वदुःखेष्विव कारुण्यं परदुःखेषु सौहृदात् ।
दयेति मुनयः प्राहुः साक्षाद् धर्मस्य साधनम् ॥३१
चतुर्दशानां विद्यानां धारणं हि यथार्थतः ।
विज्ञानमिति तद् विद्याद् येन धर्मो विवर्द्धते ॥३२
अधीत्य विधिवद् विद्यामर्थं चैवोपलभ्य तु ।
धर्मकार्यान्निवृत्तश्चेन्न तद् विज्ञानमिष्यते ॥३३
सत्येन लोकाञ्जयति सत्यं तत्परमं पदम् ।
यथाभूतप्रवादं तु सत्यमाहुर्मनीषिणः ॥३४
दमः शरीरोपरमः शमः प्रज्ञाप्रसादजः ।
अध्यात्ममक्षरं विद्याद् यत्र गत्वा न शोचति ॥३५
यया स देवो भगवान् विद्यया वेद्यते परः ।
साक्षाद् देवो महादेवस्तज्ज्ञानमिति कीर्तितम् ॥३६
तन्निष्ठस्तत्परो विद्वान्नित्यमक्रोधनः शुचिः ।
महायज्ञपरो विप्रो लभते तदनुत्तमम् ॥३७
धर्मस्यायतनं यत्नाच्छरीरं परिपालयेत् ।
न हि देहं विना रुद्रः पुरुषैर्विद्यते परः ॥३८ बें.२.१५.३८

---

३०. दे1.⊙; दे3.6.ab⊙. –a) का1 न1 विग्रहाति-, दे10 विगर्हानि, ते1 ग्र2 म1 विगर्हन्ति (→विगर्हाति-); का1 -क्तमाज्ञेया(?), ब2.3 न1 द1 म1 -क्रमक्षेप, ग्र2 -क्रमक्षे च(?) (→-क्रमाक्षेप-); उ1 विगर्हा कृत्रिमं क्षेपं. –b) ब3 -बद्ध-, दे10 -बंधत् (→-बन्ध-); न1 -वदात्मनाम्, द1 -वधात्मनं, उ1 -विसात्मतिम् (→-बधात्मनाम्); ग्र2 हिंसबन्धायथात्मकम्. –c) ब3 दे10 अन्यमन्य, दे4 आत्ममन्यु, द1 अन्यमन्न, ग्र2 अन्यमन्यं (→अन्यमन्यु-); ब2 दे10 -समुत्थानं, दे4 द1 म1 उ1 -समुत्पन्न, ग्र2 -समुत्पन्ना (→-समुत्थानां); ते1 तान्यात्मनि समुत्थानि. –d) द1 रोषेणा, ग्र2 रोषणा, म1 रोषाणा, उ1 दोहा* (→दोषाणां); दे4 मर्षणा, द1 मर्षणं (→मर्षणं); ब1 न1 क्षमाः (→क्षमा).

३१. दे1.a ⊙. –a) का1 स्वदुःखाद्यव-, दे2 स्वदुखेष्वे*, दे6 सुखदुष्येष्वि(व), दे10 स्वादुःखेष्विव, ते1 स्वदुःखेष्वपि (→स्वदुःखेष्विव); दे10 कारुण्यां (→कारुण्यं). –b) दे2.10 °दुःखेसु (→°दुःखेषु); का1 ब1 ते1 सौहृदम्, दे6.10 सौहृदान् (→सौहृदात्). –d) द1 ग्र2 म1 सा स्याद् (→साक्षाद्); दे3.6 साधनः, ग्र2 शासनं (→साधनम्).

३२. –b) का1 ब2.3.6 धारणा (→धारणं); द1 ग्र2 उ1 च (→हि); का1 परार्थजः, ब2.3 दे2.3.6 परार्थतः (→यथार्थतः). –c) ब2 विज्ञातं, दे4 विधानं (→विज्ञानं). –d) दे3.6 स्वेन, मुवें. यत्र (→येन); द1 न वर्द्धते (→विवर्द्धते).

३३. –a) दे1.4.8-10 ते, द1 ग्र2 म1 उ1 मुवें. मुए. मुब. वेदान्, न1 विद्या- (→विद्याम्). –b) का1 दे1.3.6 अनुचैव, न1 धर्मं चैव (→अर्थं चैव); ब2.3 ते1 द1 ग्र2 म1 उ1 च (→तु). –c) ब1 दे3.6 उ1 °कार्यान्निवृत्तिः, दे4 °कार्यनिवृत्ति-, न1 °कार्याणिवृत्तः, ते1 कामनिवृत्तः (→°कार्यान्निवृत्तः). –d) का1 दे4 द1 ग्र2 म1 उ1 एतद्, ब2 न1 न तु, दे1.9 तत्तद्, ते1 सत्वद् (→न तद्); का1 इष्यति, दे10 द1 ग्र2 म1 उच्यते, न1 एष्यते, उ1 उत्तमं (→इष्यते).

३४. –a) दे4 सत्वेन (→सत्येन); का1 ब1.3 दे2.3.6 न1 ग्र2 लोकं (→लोकान्); ब1 यजति (→जयति). –b) दे6 सत्नव (→सत्यं तत्). –c) ब3 दे1.8-10 म1 °प्रवादस्तु (→°प्रवादं तु).

३५. –a) का1 दे2.3.6 न1 °परतिः, ब1-3 °परति (→°परमः). –b) ब1.2 समः, ब3 समाः, दे6 ईशः (→शमः). न1 प्राज्ञे (→प्रज्ञा°); ब3 द1 °प्रसादतः, दे1 °प्रसीदजः, ते1 °प्रसादकः, म1 °प्रसूतजः (→°प्रसादजः). –c) ते1 तत्परं (→अक्षरं); ब1.2 द1 विद्या (→विद्याद्). –d) ते1 स्वरूपस्य न शोचति.

३६. –a) दे1 जया स, दे2 मया स, दे4 द1 ग्र2 म1 उ1 यथा स, ते1 ययादि (→यया स); ग्र2 देशो (→देवो). –b) का1 ब1.2 दे4 विद्यते (→वेद्यते); दे10 परान् (→परः). –c) का1 ब1.3 दे6 न1 देव, ब2 दे1-3 एव (→देवो); ब1 कीर्तितः, दे3.6 कीर्त्तनं (→कीर्तितं); द1 ग्र2 उ1 तत्त्वज्ञानविनिर्मितं, म1 तत्त्वज्ञानमितीरितं.

३७. द1 ग्र2 म1 उ1. cd ⊙. –a) दे4 तं विष्ठस् (→तन्निष्ठस्); दे6 ते1 विद्यात् (→विद्वान्). –b) दे4 पुमान् (→नित्यम्); दे1 श्रुविः (→शुचिः); द1 ग्र2 म1 उ1 लभते, तत्परं पदं. –c) दे1.4.8-10 ते1 मुवें. मुए. मुब. विद्वान् (→विप्रो). –d) ब2.3 लभ्यते, दे1 न भवेत(?), दे4.8-10 मुवें. मुए. मुब. न भवेत् (→लभते); का1 तनुमुत्तमां, ब3 तन्नमुत्तमं, मुब. तत्वमुत्तमम् (→तदनुत्तमम्).

३८. –a) द1 ग्र2 म1 यत्तत् (→यत्नात्). –b) द1 शरीर- (→शरीरं); दे1 मुवें. मुए. मुब. प्रति° (→परि°); न1

वें.२.१५.३६ नित्यधर्मार्थकामेषु युज्येत नियतो द्विजः ।
न धर्मवर्जितं काममर्थं वा मनसा स्मरेत् ।।३९
सीदन्नपि हि धर्मेण न त्वधर्मं समाचरेत् ।
धर्मो हि भगवान् देवो गतिः सर्वेषु जन्तुषु ।।४०
भूतानां प्रियकारी स्यात् न परद्रोहकर्मधीः ।
न वेददेवतानिन्दां कुर्यात् तैश्च न संवसेत् ।।४१
यस्त्विमं नियतं विप्रो धर्माध्यायं पठेच्छुचिः ।
अध्यापयेत् श्रावयेद् वा ब्रह्मलोके महीयते ।।४२

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायामुपरिविभागे पञ्चदशोऽध्यायः ।।१५।।

# १६

व्यास उवाच ।*
न हिंस्यात् सर्वभूतानि नानृतं वा वदेत् क्वचित् ।
नाहितं नाप्रियं वाक्यं न स्तेनः स्यात् कदाचन ।।१
तृणं वा यदि वा शाकं मृदं वा जलमेव वा ।

°पालये(?) (→°पालयेत्). –c) दे1.4.8-10 ते1 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. च (→हि); ब2 न1 देवं (→देहं); ब2 न1 रुद्रं, दे4 भद्रं (→रुद्रः). –d) ब2 ते1 द1 मुब. पुरुषो, दे1 खिद्यते, दे4 पुरुषं, दे8-10 मुवें. मुए. विद्यते (→पुरुषैः); दे1.8-10 मुवें. मुए. मुब. पुरुषैः, द1 ग्र2 म1 उ1 वेद्यते (→विद्यते); द1 परं (→परः).

३९. –a) का1 ब1-3 दे1-4.6.9.10 न1 ते द1 ग्र2 म1 उ1 नित्यं (→नित्य-). –b) ब3 दे10 युज्यते, ते1 युज्यात्तत्, द1 ग्र2 म1 उ1 बुध्येत (→युज्येत); दे3.6 नियते (→नियतो); ब3 दे3.6 द्विजाः (→द्विजः). –c) द1 धर्मे (→धर्म-); ब1 कार्यं (→कामम्). –d) ब1 मम, दे3 अन्नं (→अर्थं); न1 °साक्षरे (→°सा स्मरेत्); दे1 अनर्थं वामन स्मारेत्.

४०. दे1. ⊙; ते1. ab ⊙. –a) दे1 परि (→अपि); दे2 (म)हि (→हि); दे4 धर्माणि (→धर्मेण). –c) न1 द1 धर्मोपि (→धर्मो हि); ते1 एव (→देवो).

४१. दे1. ab ⊙. –a) ते1 कृतो ना (→भूतानां); ब3 न1 प्रियकारि, उ1 उपकारो (→प्रियकारी). –b) दे10 नो (→न); दे3.6 परान्नाह° (→परद्रोह°); न1 °कर्मधि, ते1 °कर्मभिः (→°कर्मधीः). –c) ग्र2 देव (→वेद). –d) ब1 दे1.8-10 मुवें. मुए. मुब. संवदेत्, दे4 संश्रयेत् (→संवसेत्).

४२. –a) का1 ब2 दे2 म1 नियतो, ग्र2 उ1 नियते (→नियतं); दे4 विष्णोर् (→विप्रो). –b) दे3 धर्मोध्यायं, द1 ग्र2 म1 उ1 धर्मपाठं (→धर्माध्यायं); दे1 यद्दछुचिः (?), ते1 पठन्नरः (→पठेच्छुचिः). –d) ते1 धर्मलोके (→ब्रह्मलोके).
**पुष्पिका**—[ते1 द1 पुस्तकयोरध्यायसमाप्तिर्नास्ति]
**पुराणनाम**—का1 दे4.6.8-10 इति श्रीकूर्मपुराणे उपरिभागे, ब1.3 दे2.3 इति कू(दे2 कौ)र्मपुराणे उपरिभागे, ब2 इति कूर्मपुराणे, दे1 इति श्रीकूर्मपुराणे उपरिविभागे, दे3 इति कूर्मपुराणे उपरिविभागे, न1 इति श्रीकौर्मे उपरिभागे, ग्र2 म1 इति श्रीकूर्मपुराणे उत्तरभागे व्यासगीतासूपनिषत्सु, उ1 इति श्रीकूर्मपुराणे उत्तरभागे व्यासगीतासु, मुवें. इति श्रीकूर्मपुराणे उत्तरार्द्धे व्यासगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे, मुब. इति श्रीकौर्मे महापुराणे उपरिभागे. **अध्यायनाम**—का1 ब1-3 दे1-4.6.8-10 न1 ग्र2 म1 उ1 मुए. ⊙; मुवें. ऋषिव्याससंवादे ब्रह्मचारिणां गार्हस्थ्यधर्मनिरूपणं नाम, मुब. ब्रह्मविद्यायां धर्माध्यायो नाम. **अध्यायसंख्या**—ब2 दे6. ⊙; का1 चतुर्दशोऽध्यायः ।।१४।।, ब1.3 दे2.3 चतुर्दशोऽध्यायः, दे1.4.8-10 ग्र2 म1 उ1 मुए. पञ्चदशोऽध्यायः, न1 पंचषष्ठितमोऽध्यायः, मुवें. मुब. पञ्चदशोऽध्यायः ।।१५।।.

## १६

* ते1 द1. ⊙; दे3.9 व्यास उ.; न1 उ1 व्यासः; ग्र2 म1 श्रीव्यासः.

१. ब1. १d–२a ⊙. –a) ब1 हिसात् (?), द1 दुह्येत्, ग्र2 दुष्ये (→हिंस्यात्); दे1 यर्वा (?) भूताति (→सर्वभूतानि). –c) न1 द1 ग्र2 उ1 नानृतं (→नाहितं); द1 ग्र2 उ1 नाहितं, म1 नानृतं (→नाप्रियं); दे1.8-10 मुवें. मुए. मुब. ब्रूयात् (→वाक्यं). –d) दे1.3.6.10 द1 न स्तेन, न1 न स्तेम, ते1 दुष्टो न, ग्र2 म1 न स्तेय (→न स्तेनः); दे1.8-10 मुवें. मुए. मुब. कथंचन (→कदाचन).

२. ब1. a ⊙ (द्र. १ पा. वि.). –a) का1 छागं, दे1 नृणां (→तृणं). –b) दे4 अन्नं, ग्र2 मृतं (→मृदं); दे2 च (→वा); दे3 काष्टमेव, दे4 जलमे * (→जलमेव); दे3.6.8.9

परस्यापहरञ्जन्तुर्नरकं प्रतिपद्यते ॥२
न राज्ञः प्रतिगृह्णीयान्न शूद्रपतितादपि ।
न चान्यस्मादशक्तश्च निन्दितान् वर्जयेद् बुधः ॥३
नित्यं याचनको न स्यात् पुनस्तं नैव याचयेत् ।
प्राणानपहरत्येवं याचकस्तस्य दुर्मतिः ॥४
न देवद्रव्यहारी स्याद् विशेषेण द्विजोत्तमः ।
ब्रह्मस्वं वा नापहरेदापद्यपि कदाचन ॥५
न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते ।
देवस्वं चापि यत्नेन सदा परिहरेत् ततः ॥६
पुष्पे शाकोदके काष्ठे तथा मूले फले तृणे ।
अदत्तादानमस्तेयं मनुः प्राह प्रजापतिः ॥७
गृहीतव्यानि पुष्पाणि देवार्चनविधौ द्विजाः ।
नैकस्मादेव नियतमननुज्ञाय केवलम् ॥८
तृणं काष्ठं फलं पुष्पं प्रकाशं वै हरेद् बुधः ।
धर्मार्थं केवलं विप्रा ह्यन्यथा पतितो भवेत् ॥९
तिलमुद्गयवादीनां मुष्टिर्ग्राह्या पथि स्थितैः ।

वे २.१६.१०

मुवें. मुए. च (→वा). –c) दे1 जेतु, दे3 ज *, दे6 तंतु, न1 जंतु (→जन्तुर्); ते1 परस्वादिहरन् जन्तुः, द1 म1 उ1 परस्या (द1 °स्व) हरणाज्जन्तुः, ग्र2 परस्वाभरणाज्जन्तु. –d) उ1 प्रतिपद्यति (→प्रतिपद्यते).

३. द1 ग्र2 म1. ३c–५d ⊙. –a) का1 दे3 म1 राज्ञां, दे1 राजः, दे2 राज्यं (→राज्ञः). –b) दे1.8-10 ते1 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. शूद्रात्, दे4 छूद्रान् (→शूद्र-); का1 ते1 न च, द1 ग्र2 उ1 च न (→अपि). –c) ब2 दे4 न1 मुब. अशक्तश्चेत् (→अशक्तश्च); दे1.8.9 मुवें. मुए. नान्यस्माद्याचकत्वञ्च, दे10 नान्यस्याद्याचकत्वञ्च, न1 नान्यस्मादशक्तुंचेनिं, ते1 न निन्दस्यादशक्तश्चेत्, उ1 न चान्यस्मादशक्तं चेत्. –d) दे1.4.8.9 उ1 मुवें. मुए. मुब. निन्दिता (→निन्दितान्); दे3 बुधा (→बुधः); दे10 जिनार्ध्वर्जुनयेत् बुधः.

४. द1 ग्र2 म1. ⊙ (द्र. ३ पा. वि.). –a) ब1.3 दे3.6 न1 नित्य (→नित्यं); न1 यानचको, ते1 उ1 च याचको (→याचनको). –b) का1 न1 पुनस्तेनैव, दे1.8.9 उ1 मुवें. मुए. मुब. पुनस्तत्रैव (→पुनस्तं नैव); दे1 योच(त)येत् (?) (→याचयेत्); दे4 द्याचकै नैव याचयेत्, दे10 पुनः रेते (ते) व याचयेत्, ते1 पैशुन्यं नैव चाचरेत्. –c) न1 प्रापान् (→प्राणान्); ब1 दे1.4.8-10 न1 उ1 मुवें. मुए. मुब. एष (→एवं). –d) दे10 दुर्मती (→दुर्मतिः).

५. द1 ग्र2 म1. ⊙ (द्र. ३ पा. वि.); दे4. ५c-६d ⊙. –a) उ1 दैव° (→देव°); ब3 °भून्यहारी, दे10 न1 °द्रव्यहारिः (न1 °रि) (→°द्रव्यहारी). –b) दे1.8-10 उ1 मुए. मुब. द्विजोत्तमाः (→द्विजोत्तमः). –c) दे10 ब्रह्मस्वा * (→ब्रह्मस्वं वा); ते1 ब्रह्मस्वं नैवापहारेत्, उ1 ब्रह्मस्वं नापहारेत. –d) का1 दे2 आपत्स्वपि, दे6 आपत्यपि (→आपद्यपि); ब1 कदाचनः (→कदाचन).

६. दे4. ⊙ (द्र. ५ पा. वि.). –c) ब3 वापि (→चापि). –d) दे6 परिसवे ततः, ते1 परिहरेतु सः, द1 म1 नापहरेत्ततः, ग्र2 नावहरेत्ततः (→परिहरेत्ततः). –cd) ब1 विषमेकाकिनं हन्ति ब्रह्मस्वं पुत्रपौत्रकं.

७. –a) ब2 ते1 द1 ग्र2 म1 उ1 पुष्प-, दे10 पुष्पो (→पुष्पे); दे1 शाकादके (→शाकोदके); दे1.2 काष्ठ- (दे2 °ष्टे), दे10 कोष्ठे (→काष्ठे). –b) दे4.10 न1 ते1 मूल- (→मूले); दे1.8.9 मुवें. मुए. मुब. तृणे फले (→फले तृणे). –c) का1 आदात्ता° (→अदत्ता°); न1 °नंदम्, ते1 दानात् (→°दानम्); न1 द1 अस्तेय (→°अस्तेयं). –d) दे1 मनुः **, द1 ग्र2 म1 उ1 मनुराह (→मनुः प्राह).

८. –a) का1 ब1.3 दे1.2.4.8-10 न1 ते1 द1 ग्र1 म1 उ1 मुवें. मुए. मुब. गृहीतव्यानि, ब2 गृहीतान्यपि, (→ग्रहीतव्यानि); का1 पुष्पानि (→पुष्पाणि). –b) दे10 ग्र2 देवतार्च-, द1 म1 उ1 देवतार्चा- (→देवार्चन-); दे10 * धौ, द1 -विधो (→-विधौ); ब1 दे4.8-10 न1 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. द्विजैः, ते1 द्विजः (→द्विजाः). –c) ब2 नैकस्य देव-, द1 नैकस्मानेक-, ग्र2 नैकस्मादेक- (→नैकस्मादेव); द1 नियत, ग्र2 नियताम् (→नियतम्). –d) का1 अ * नुज्ञाय, दे1 अननुज्ञा(व)य, दे3 अन * ज्ञाय, दे4 अननुज्ञाप्य, न1 अनुज्ञायत, ते1 द1 तमनुज्ञाप्य (द1 °य) (→अननुज्ञाय); ब2 तेवलं, दे1 केवले, दे4 केव * (→केवलम्).

९. –a) दे1 तृणे, दे4.6 ते1 ग्र2 म1 तृण- (→तृणं); दे1 काष्ठं, दे4 ते1 ग्र2 काष्ठ- (म1 °ष्ठे) (→काष्ठं); दे1 पुष्प- (→पुष्पं). –b) दे1 प्रकाशां, ते1 प्रकाशः (म1 °शे) (→प्रकाशं). –c) दे1.10 ग्र2 धर्मार्थ- (→धर्मार्थं); दे10 केवले (→केवलं); का1 ब1-3 दे2.3.6 मुवें. ग्राह्यं (दे6 °ह्यः), ते1 द1 ग्र2 म1 उ1 विप्रो (द1 °प्राः) (→विप्रा); दे4 धर्मार्थसकलं विप्रो. –d) का1 ब1-3 दे2.3 अन्यथा, दे6 मन्यथा, ग्र2 ह्यनाध (→ह्यन्यथा).

१०. –a) दे6 °मुद्गज° (→°मुद्गय°); दे2 °यवादीनी (→°यवादीनां). –b) ब1 दे1 न1 ग्र2 मुष्टि-, दे6 पुष्टि, ते1

वें.२.१६.१०

क्षुधार्तैर्नान्यथा विप्रा धर्मविद्भिरिति स्थितिः ॥१०
न धर्मस्यापदेशेन पापं कृत्वा व्रतं चरेत् ।
व्रतेन पापं प्रच्छाद्य कुर्वन् स्त्रीशूद्रदम्भनम् ॥११
प्रेत्येह चेदृशो विप्रो गर्ह्यते ब्रह्मवादिभिः ।
छद्मनाचरितं यच्च व्रतं रक्षांसि गच्छति ॥१२
अलिङ्गी लिङ्गिवेषेण यो वृत्तिमुपजीवति ।
स लिङ्गिनां हरेदेनस्तिर्यग्योनौ च जायते ॥१३
बैडालव्रतिनः पापा लोके धर्मविनाशकाः ।
सद्यः पतन्ति पापेषु कर्मणस्तस्य तत् फलम् ॥१४
पाषण्डिनो विकर्मस्थान् वामाचारांस्तथैव च ।
पञ्चरात्रान् पाशुपतान् वाङ्मात्रेणापि नार्चयेत् ॥१५
वेदनिन्दारतान् मर्त्यान् देवनिन्दारतांस्तथा ।
द्विजनिन्दारतांश्चैव मनसापि न चिन्तयेत् ॥१६
याजनं योनिसंबन्धं सहवासं च भाषणम् ।
कुर्वाणः पतते जन्तुस्तस्माद् यत्नेन वर्जयेत् ॥१७

---

मुष्टिः (षि) (→मुष्टिर्); का1 ग्राह्यं, दे8.9 ग्राह्यः (→ग्राह्या); न1 ग्र2 पति स्थितैः, ते1 परिग्रहे (→पथि स्थितैः). –c) दे3 न1 ग्र2 क्षुधार्थैर् (ग्र2 °र्त्तैर्) (→क्षुधार्तैर्); दे4 न1 द1 ग्र2 म1 उ1 विप्रैः (ग्र2 °प्रै) (→विप्रा); दे1 क्षुधार्थैनाक्षान्यथा विप्रा, दे6 जुधार्वेनान्यथाविप्रा, ते1 शुध्यते नान्यथाविप्रो. –d) ब2 श्रुतिः, दे1.4 स्थितीः (दे4 °तेः) (→स्थितिः).

११. –a) ब1 न धर्मस्यपदेशेन, दे3.6 न धर्मस्यापदेशेन, दे10 न धर्मस्योपदेशेन, ते1 न धर्मस्यातिदेशेन, द1 ग्र2 न धनस्या(ग्र2 °स्य)पदेशेन, उ1 नयनस्यापदेशेन. –c) दे1 व्रतेना (?) (→व्रतेन); ब2.3 दे9 प्रछाद्य, दे1 प्रक्षाल्य, दे2.3.6 प्रणुदेत् (दे2 °द्यात्), द1 पृच्छाद्य (→प्रच्छाद्य). –d) दे4 कुर्यात्, ग्र2 म1 कुर्वं (→कुर्वन्); दे6 °सूद्र° (→°शूद्र°); ब2.3 दे4 द1 ग्र2 म1 उ1 मुए. मुब. °लम्भनं, दे2.3.6 °उत्तरः (दे6 °द), न1 °डंभनं, ते1 °बन्धनं, मुवें. °लम्बनम् (→°दंभनं). –cd) का1 व्रतेन पापं प्रच्छाद्या गूद्यान्निजं नरः **.

१२. ब1. ⊙; दे1.8-10. १२ c–१३d ⊙. –a) दे3.6.10 प्रत्येह (दे3 प्रि°), ते1 द1 प्रत्यहं (द1 °हा) (→प्रेत्येह); ब2 च कृशो, दे4 उ1 तादृशो, दे10 च दृशो, न1 ग्र2 °नदृशो (→चेदृशो). –b) दे4 गर्भिते, दे6.10 गृह्यते, ते1 द1 ग्र2 म1 उ1 गर्हितो (द1 °ते) (→गर्ह्यते). –c) ते1 चर्मणे°, द1 ग्र2 म1 ब्राह्मणा° (→छद्मना°); दे4 तद्व्र (?), न1 तच्च, ते1 यत्तत् (→यच्च). –d) ते1 वृत्तं (→व्रतं); ते1 रक्षासि, ग्र1 उ1 रक्षोधि (→रक्षांसि).

१३. दे1.8-10. ⊙ (द्र. १२ पा. वि.). –a) ग्र2 म1 अलिगो (→अलिंगी); का1 न1 द1 ग्र2 म1 लिग- (→लिंगि-); का1 ब1-3 दे2.3.6 मुवें. मुए. मुब. -वेशेन, न1 ग्र2 -वेशेण, उ1 -रूपेण (→-वेषेण). –b) दे3 वृत्तिनुपजीवति, दे6 वृत्तिर्मुपजीवति, द1 वृत्तिमुपजायति (→वृत्तिमुपजीवति). –c) ब1 न1 अलिङ्गानां (न1 °ङ्गी°) (→सलिंगिनां); दे3.6 न1 ग्र2 म1 हरत्येन (म1 °नं), दे4 हरंत्येनं, ते1 द1 उ1 हरत्येनः (→हरेदेनस्). –d) दे4 तिर्यग्योग्नौ, ते1 तिर्यग्योन्यां (→तिर्यग्योनौ); दे4 द1 ग्र2 म1 उ1 प्रजायते (→च जायते).

१४. –a) दे1.8-10 चंडाल-, दे3 वैडालकं, न1 वैलाड- (→वैडाल-); दे4 -वर्तिनः, न1 -प्रतिनः, द1 -वृत्तिनः, उ1 -वृत्तयः (→-व्रतिनः); दे3 पापाः (→पापा); ग्र2 म1 वैलालवृत्तिः पापात्मा. –b) दे2.6.10 -विनाशका (दे6 °कः), दे4 ग्र2 म1 -विनाशनः (दे4 °नाः), न1 -पिनाशकाः (→-विनाशकाः). –c) का1 पापेषु, दे1.8 पातेषु, मुवें. पापेन (→पापेषु). –d) दे1 तस्या (→तस्य).

१५. –a) दे6 म1 उ1 विकर्मस्थात् (उ1 °स्थां), दे10 द1 विकर्मस्था (द1 °स्थाः), न1 विकर्णास्थान् (→विकर्मस्थान्). –b) का1 ननाचारान्, ब1.2 वामाचारं, दे2 रामाचारास्, दे4.10 ते1 वामाचर्यां (ते1 °म), दे6 वामाचारस्, न1 विमर्यादां, द1 ग्र2 म1 उ1 धर्माचार्या (ग्र2 °र्यं) (→वामाचारांस्). –c) ब3 दे10 उ1 पांच° (→पञ्च°); दे4 पञ्चरात्रां नाकुलिकांश्च, ते1 पांचरात्रां कोकिलांश्च. –d) दे1 मात्रैण, न1 मात्रेणो (→मात्रेणा).

१६. –a) ते1 देव° (→वेद°); द1 म1 उ1 °परान्, ग्र2 °परो (→°रतान्). –b) दे1 वेदे°, न1 ते1 वेद° (→देव°); दे2 °रतास्, ग्र2 °परांस् (→°रतांस्). –c) ब1 द्विजा° (→द्विज°); म1° रतांस्तद्वन् (→°रतांश्चैव). –d) दे2 मनसां * (→मनसापि); म1 चार्चयेत् (→चिन्तयेत्); का मनसा न विचिन्तयेत्.

१७. –a) का1 दे10 योजनं, ते1 भोजनं (→याजनं); दे10 यौन° (→योनि°); ते1 °सन्बन्धस् (→°संबन्धं). –b) का1 सभोज्यं च, दे2 सहमासं च, न1 सहवासेश्च (→सहवासं च). –c) ब1 कुर्वंण, दे1 कुर्वाथाः, दे3 कुर्व्वंणः (→कुर्वाणः).

देवद्रोहाद् गुरुद्रोहः कोटिकोटिगुणाधिकः ।
ज्ञानापवादो नास्तिक्यं तस्मात् कोटिगुणाधिकम् ॥१८
गोभिश्च दैवतैर्विप्रैः कृष्या राजोपसेवया ।
कुलान्यकुलतां यान्ति यानि हीनानि धर्मतः ॥१९
कुविवाहैः क्रियालोपैर्वेदानध्ययनेन च ।
कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च ॥२०
अनृतात् पारदार्याच्च तथाऽभक्ष्यस्य भक्षणात् ।
अश्रौतधर्माचरणात् क्षिप्रं नश्यति वै कुलम् ॥२१
अश्रोत्रियेषु वै दानाद् वृषलेषु तथैव च ।
विहिताचारहीनेषु क्षिप्रं नश्यति वै कुलम् ॥२२
नाधार्मिकैर्वृते ग्रामे न व्याधिबहुले भृशम् ।
न शूद्रराज्ये निवसेन्न पाषण्डजनैर्वृते ॥२३
हिमवद्विन्ध्ययोर्मध्ये पूर्वपश्चिमयोः शुभम् ।
मुक्त्वा समुद्रयोर्देशं नान्यत्र निवसेद् द्विजः ॥२४
कृष्णो वा यत्र चरति मृगो नित्यं स्वभावतः ।
पुण्याश्च विश्रुता नद्यस्तत्र वा निवसेद् द्विजः ॥२५
अर्द्धक्रोशान्नदीकूलं वर्जयित्वा द्विजोत्तमः ।
नान्यत्र निवसेत् पुण्यं नान्त्यजग्रामसन्निधौ ॥२६ वें.२.१६.२६

१८. द1. cd ⊙. –a) ब2 ते1 द1 म1 वेद° (→देव°); ब1 गुरुद्रोहि, ब2 दे2.3 गुरो द्रोहः, दे6 गुरो द्रोहा, दे10 न1 म1 गुरुद्रोहात् (न1 °हान्), ग्र2 गुरुद्रोहो (→गुरुद्रोहः). –b) दे2 °गुणधिकः, दे3 °गुणाधिका, न1 द1 म1 °गुणाधिकं (न1 °कान्) (→°गुणाधिकः). –c) दे1 ज्ञानापवादे, दे4 ते1 नानापवादैर् (ते1 °दो), म1 ज्ञानापवादान्, उ1 जनापवादो (→ज्ञानापवादो); न1 नास्तिक्यः (→नास्तिक्यं). –d) दे3 मुब. गुणाधिकाम् (मुब. °कः), ग्र2 गुणान्वितं (→गुणाधिकम्).

१९. –a) दे1 दैवतैर्विप्रोः, दे10 देवताविप्रै, न1 देवतैर्विप्रैः (→दैवतैर्विप्रैः). –b) दे6 कृष्य, ते1 कृत्वा, उ1 कृषि (→कृष्या); दे1 °संवया (?) (→°सेवया). –c) दे10 कुलात्य°, न1 कलान्य°, ते1 कुलान्या° (→कुलान्य°). –d) दे3 योनि, दे6 ते1 यानी (→यानि); ते1 हा*नि (→हीनानि); ब1 सन्ततः, दे1.8-10 मुए. मुब. वृत्ततः (दे10 °यः), दे4 न1 द1 ग्र2 म1 उ1 मंत्रतः, ते1 सत्यतः (→धर्मतः).

२०. –a) दे4 द1 कुविवाहः (द1 °हे), दे6 कुविहाहैः, दे10 अविवाहैः, न1 कुपिवाहैः (→कुविवाहैः). –c) दे1.4.10 कुलान्या° (दे10 °त्य) (→कुलान्य°); दे1 °कुललां (→°कुलतां); दे6 याति (→यान्ति). –d) दे3 ब्राह्मणि क्रमेण च, ग्र2 ब्राह्मणानिति क्रमेण च.

२१. का1. २१b-२२a ⊙. –a) दे3 अभूतान्, दे1 न1 अनृतान् (→अनृतात्); ब2 म1 परदाराच्च, दे2 पारदारार्याच्च(?), दे6 ग्र2 परदार्याच्च, दे10 परदार्यश्च (→पारदार्याच्च). –b) ब2 वृथा, द1 म1 तदा (→तथा); दे1.3 न1 अभक्षस्य, दे10 अभक्षण- (→अभक्ष्यस्य); ते1 अभक्ष्या भक्षणान्ततः. –c) ते1 अश्रेत° (?) (→अश्रौत°); न1 °चरणां (→°चरणात्). –d) दे10 विप्रं (→क्षिप्रं).

२२. का1. a ⊙ (द्र. २१ पा. वि.); ब1.3 दे4. ⊙. –a) दे2 अश्रोत्रिये वै, दे3 अश्रोत्रिये*, दे10 आश्रोत्रियेषु, (→अश्रोत्रियेषु); ब2 दे2 दानाच्च, दे1 वैदानीन्, दे3.6 (वै)दानाच्च, दे10 वेदानाद्, न1 वै दानं, ते1 ग्र2 वेदानां, ते1 म1 वै दानां (→वै दानाद्). –c) उ1 संहिता° (→विहिता°). –d) ते1 विप्रो (→क्षिप्रं); ते1 कुलात् (→कुलम्).

२३. –a) ब3 दे6 नाधर्म्मिकैर्, दे4 उ1 नाधार्मिकं (उ1 °क), ते1 द1 म1 नाधार्मिका (द1 °न) (→नाधार्मिकैर्); दे4 मृते, दे6 वृतै, न1 वृतैर् (→वृते); का1 प्राप्ते, न1 ग्रामैर् (→ग्रामे). –b) दे1 °वहले (?) (→°बहुले); द1 दशं (→भृशम्). –c) दे3 शू * राज्ये, दे10 द1 शूद्रराज्य, न1 रुद्रराज्ये, ते1 शूद्ररक्ष्य (→शूद्रराज्ये); का1 निवासेन्, द1 म1 निवसेत् (→निवसेन्). –d) दे10 न1 ते1 उ1 मुवें. मुए. पाखण्ड° (→पाषण्ड°); दे3 °जलैर्, दे4 ते1 °जना- (→°जनैर्); दे6 वृतै, द1 व्रते (→वृते).

२४. –a) ब1-3 दे2.3 न1 म1 मध्यं (→मध्ये). –c) का1 दे4 भुक्त्वा (दे4 °क्ता), ब3 दे10 मुक्ता (→मुक्त्वा); का1 समुद्रमुद्देशं, ब2.3 दे2.3.6 समुद्रनिर्देशं (→समुद्रयोर्देशं). –d) ब1 दे10 दिवसेद् द्विजः, ब3 दे4 निवसेद्द्विजाः (दे4 °जं), दे2 निवसोद् द्विजः (→निवसेद् द्विजः).

२५. दे1.10 ग्र2. ⊙. –a) दे2 यदि (→यत्र); ते1 कृष्णसारस्तु चरति. –b) द1 उ1 यत्र (→नित्यं). –c) ब2.3 दे2.3.6 पुण्यावा, न1 म1 पुण्यश्च, ते1 अन्याश्च (→पुण्याश्च); दे4 विसृताः (→विश्रुता[:]). –d) दे4 तत्रैव (→तत्र वा).

२६. –a) ब1.2 दे2.3 ते1 द1 ग्र2 म1 उ1 अर्द्धक्रोशं, दे6 अर्द्धक्रोशे, न1 अर्द्धकोशं, मुवें. अर्द्धकोशान् (→अर्द्धक्रोशान्); द1 ग्र2 उ1 नदीतीरं (→नदीकूलं). –b) ब2 द्विजोत्तमाः (→द्विजोत्तमः). –c) दे4 नान्यत्रै (→नान्यत्र); ब1 दे1.8-10 द1 ग्र2 मुवें. मुए. पुण्यां (→पुण्यं). –d) दे1 नात्यज,

वें.२.१६.२७ न संवसेच्च पतितैर्न चण्डालैर्न पुक्कसैः ।
न मूर्खैर्नावलिप्तैश्च नान्त्यैर्नान्त्यावसायिभिः ॥२७
एकशय्यासनं पङ्क्तिर्भाण्डपक्वान्नमिश्रणम् ।
याजनाध्यापने योनिस्तथैव सहभोजनम् ॥२८
सहाध्यायस्तु दशमः सहयाजनमेव च ।
एकादश समुद्दिष्टा दोषाः साङ्कर्यसंज्ञिताः ॥२९
समीपे वा व्यवस्थानात् पापं संक्रमते नृणाम् ।
तस्मात् सर्वप्रयत्नेन साङ्कर्यं परिवर्जयेत् ॥३०
एकपङ्क्त्युपविष्टा ये न स्पृशन्ति परस्परम् ।
भस्मना कृतमर्यादा न तेषां संकरो भवेत् ॥३१
अग्निना भस्मना चैव सलिलेनावसेकतः ।
द्वारेण स्तम्भमार्गेण षड्भिः पङ्क्तिर्विभिद्यते ॥३२
न कुर्याच्छुष्कवैराणि विवादं न च पैशुनम् ।
परक्षेत्रे गां धयन्तीं न चाचक्षीत कस्यचित् ।
न संवदेत् सूतके च न कश्चिन्मर्मणि स्पृशेत् ॥३३

दे4.10 नात्यजं (दे10 °ज्य-), न1 नान्यज-, ग्र2 म1 उ1 नान्यत्र (→नान्त्यज-).

२७. ते1. ⊙. -a) दे2 संवसच्च, म1 स वसेन्ना, उ1 संवसेद्व (→संवसेच्च). -b) का1 ब2.3 दे3.4.6.10 चाण्डालैर्न, दे1.8.9 ग्र2 उ1 चण्डालैश्च, दे4 चांडालैश्श, दे10 चाण्डालौश्च, ते1 विडालैर्न (→चण्डालैर्न); का1 दे1.4.6.8.9 न1 ते1 ग्र2 म1 उ1 पुल्कसैः, ब2 मुए. पुक्कशैः, दे10 निष्कसे, द1 पुष्कलैः (→पुक्कसैः). -c) द1 ना (→न); दे4 मूर्खैरव, ग्र2 उ1 मूर्खैर्नोप- (→मूर्खैर्नाव-); ब1 °लिप्तश्च, (→°लिप्तैश्च). -d) का1 दे10 नान्यैनान्त्यावसायिभिः, ब1 ** नन्त्यावसायिभिः, ब2 दे6 नान्त्यैर्नान्तावसायिभिः, ते1 नान्येनान्त्यावसायिभिः, द1 नांध्रैर्नोत्यावसायिभिः, ग्र2 नान्ध्योर्नाकावसादिभिः.

२८. -a) ब1 एकशय्याशनं (→एकशय्यासनं). -b) दे1.8 भंडं, दे2 प्रेडि, दे9 भाण्डु-, ते1 भुक्तिः (→भाण्ड-); का1 °पाकार्थ-, दे2 °पक्वार्थ-, द1 °पक्वानि (→°पक्वान्न-); न1 °मिश्रितां, ग्र2 °म * णा, म1 °मिश्रतं (→°मिश्रणम्). -c) का1 न1 ते1 याजनाध्ययने (न1 °नं), ब1 दे4.8-10 मुवें. मुए. याजनाध्यापनं (दे10 °नां); दे2 ग्र2 उ1 याजनाध्यापनो (→याजनाध्यापने); दे10 योनिं (→योनिस्).

२९. -a) दे2 सहाध्यायायस्तु, न1 सहाद्यायस्तु, ते1 गुह्याध्यायस्तु (→सहाध्यायस्तु); ब1.3 दशमं (→दशमः). -b) ब1 सहायाजनम्, दे6 ग्र2 सहायजनम्, न1 सः * याजनम्, ते1 सह भोजनम् (→सह याजनम्). -c) दे1 एकादशैले निर्दिष्टाः, दे4.8-10 द1 उ1 मुवें. मुए. मुब. एकादशैते निर्दिष्टा, ते1 एकादशेति निधि वा, ग्र2 एकादशते निर्दिष्टा, म1 एकादशैस्तै र्निष्टि. -d) दे8 दोषाः, +शेषाः, ते1 वर्ण- (→दोषाः); दे1.3.4.8.9 द1 ग्र2 म1 उ1 मुए. मुब. संकर° (दे1 °शं) (→साङ्कर्य°); दे4 °संज्ञितः (→°संज्ञिताः); दे10 *** दोषाः संज्ञिताः.

३०. -a) का1 शततं, ग्र2 समीप्ये (→समीपे); ब2.3 दे2.3.6 न1 ते1 द1 ग्र2 म1 उ1 चाप्यवस्थानात् (न1 °नां), दे4.10 चाव्यवस्थानात् (दे10 °य), मुब. मुए. वाप्यवस्थानात्, (→वा व्यवस्थानात्). -b) दे6 शंक्रमते (→संक्रमते). -d) दे1.4.8-10 ते1 द1 ग्र2 उ1 मुवें. मुए. मुब. संकरं वर्ज्जयेद् बुधः, म1 संकरं परिवर्ज्जयेत्.

३१. ब1. ⊙. -a) दे6 एकपंक्त्याप°, ते1 एकपंक्त्योप° (→एकपंक्त्युप°); ग्र2 म1 उ1 [उ]पविष्टानां (→[उ]पविष्टा ये). -b) द1 ग्र2 म1 उ1 संस्पृशन्ति, मुब. न स्पृश्यन्ति (→न स्पृशन्ति). -c) न1 भस्मनां, ते1 तस्माद- (→भस्मना).

३२. -b) ब1 दे4.8.10 न1 ते1 द1 ग्र2 उ1 मुवें. मुए. मुब. सलिलेन विशेषतः, ब2 सविले * वसेकतः, दे1 सिलिलैः(?) न विशेषतः, दे6 सलिले न वसैकतः, दे1 °सलिलं च विशेषतः, म1 जलेन च विशेषतः. -c) द1 ग्र2 म1 उ1 °यन्त्रेण (→°मार्गेण); ते1 द्वारे प्रारम्भमार्गेण. -d) का1 प्रार्लिर्विभिद्यते, ते1 पंक्ति न विद्यते, द1 ग्र2 म1 उ1 पंक्तिर्विभज्यते (→पंक्तिर्विभिद्यते).

३३. ब1. ३३a-३६ d ⊙. -a) दे1.8-10 मुवें. मुए. मुब. दुःख° (→शुष्क°); दे2 न कुर्याघुछुवेरेणि (?). -b) दे10 विवादे (→विवादं); दे1-10 मुवें. मुए. मुब. चैव (→न च). -c) का1 गां पतंतीं, ब2 दे1. 8-10 मुवें. मुए. मुब. गां चरन्तीं (दे1 °ती), ब3 गाञ्चर(य)न्तीं, दे2 शांत्वयतीं, ते1 दर्यलिगां (?), द1 म1 धयन्ती गां, ग्र2 चरन्तीं गान्, उ1 सन्ति गां न (→गां धयन्तीं). -d) का1 न चा*क्षीत, दे1 न1 न वा चक्षीत, दे2.10 मुवें. न चाचक्षति, ते1 नाचचक्षेच्च, म1 न च चसीत, उ1 न चाचक्षेत (→न चाचक्षीत). -e) ब2 दे1.8.9 न1 ते1 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. संवसेत्, दे4 संविशेत्, दे10 संवासत् (→संवदेत्); ब2 दे1.8-10 मुवें. मुए. मुब. सूतकिना, दे4 सूतकिभिर्, ते1 शूद्रकेन, न1 सूतकेन, द1 [अ]द्भुतनामानां, ग्र2 भूतरुजैर्, म1 गवां मध्ये, उ1 भूतगृहं (→सूतके च). -f) का1 ब3 नरं वै, दे2.4.10 न1 द1 न

न सूर्यपरिवेषं वा नेन्द्रचापं शवाग्निकम् ।
परस्मै कथयेद् विद्वान् शशिनं वा कदाचन ॥३४
न कुर्याद् बहुभिः सार्द्धं विरोधं बन्धुभिस्तथा ।
आत्मनः प्रतिकूलानि परेषां न समाचरेत् ॥३५
तिथिं पक्षस्य न ब्रूयात् न नक्षत्राणि निर्दिशेत् ।
नोदक्यामभिभाषेत नाशुचिं वा द्विजोत्तमः ॥३६
न देवगुरुविप्राणां दीयमानं तु वारयेत् ।
न चात्मानं प्रशंसेद् वा परनिन्दां च वर्जयेत् ।
वेदनिन्दां देवनिन्दां प्रयत्नेन विवर्जयेत् ॥३७

यस्तु देवानृषीन् विप्रान् वेदान् वा निन्दति द्विजः ।
न तस्य निष्कृतिर्दृष्टा शास्त्रेष्विह मुनीश्वराः ॥३८
निन्दयेद् वै गुरुं देवं वेदं वा सोपबृंहणम् ।
कल्पकोटिशतं साग्रं रौरवे पच्यते नरः ॥३९
तूष्णीमासीत निन्दायां न ब्रूयात् किंचिदुत्तरम् ।
कर्णौ पिधाय गन्तव्यं न चैतानवलोकयेत् ॥४०
वर्जयेद् वै रहस्यानि परेषां गूहयेद् बुधः ।
विवादं स्वजनैः सार्द्धं न कुर्याद् वै कदाचन ॥४१    वें.२.१६.४२

किंचिन्, दे3.6 ग्र2 न कश्चित् (→न कश्चिन्); दे3 कर्मणि (→मर्मणि).

३४. ब1. ⊙ (द्र. ३३ पा. वि.). –a) ब2.3 दे2 मुए. मुब. सूर्यपरिवेशं वा, दे3 सूद्रपरिवेशस्य, दे6 सूर्ये परिवेषं वा, दे10 सूर्यपरिवेषे वा (→सूर्यपरिवेषं वा). –b) ग्र2 °पापं (→°चापं); का1 सदग्निकम्, ब3 शवग्निकं, दे2 शराग्निकं, दे4.8.10 सचाग्निकं (→शवाग्निकम्). –d) दे4 ग्र2 म1 उ1 शंसनं (?), न1 जायवा (→शशिनं); का1 ब3 दे2.3.6 कथंचन (→कदाचन).

३५. ब1. ⊙ (द्र. ३३ पा. वि.). –a) का1 साधुभिर् (→बहुभिः); का1 वैरं (→सार्द्धं). –b) ब2 मुब. विवादं, दे1 विरोधां (→विरोधं); दे1.8-10 मुवें. मुए. मुब. वा कदाचन, दे3.4.6 द1 बहुभिस्तथा (→बन्धुभिस्तथा). –c) ते1 नात्मसं (→आत्मनः). –d) दे1 स ** रेत् (→समाचरेत्).

३६. ब1. ⊙ (द्र. ३३ पा. वि.). –a) दे4 विधिं, न1 तिथं, ते1 निन्दा, द1 म1 उ1 तिथि- (→तिथिं); दे1 पक्षास्य, दे4 ते1 परस्य, द1 ग्र2 म1 उ1 पक्षांश्च (→पक्षस्य). –b) का1 दे4.8-10 मुवें. मुए. नक्षत्राणि विनिर्दिशेत्, ते1 नक्षत्राणि न दर्शयेत्, द1 न नक्षत्रा न निर्दिशेत्. –c) दे1 नोदक्यामाभिमाषेत, दे10 नोदक्यामभिलासेत, म1 नोदक्या ह्यभिभाषेत. –d) दे3.6 नाशुचिष्ठा, ते1 द1 ना शुचिर्वा, ग्र2 ना * रुर्वा, उ1 ना * तिर्वा (→नाशुचिं वा).

३७. दे3. ३७a-३८b ⊙; का1 दे4.6 न1 द1 ग्र2 म1 उ1. ef ⊙. –a) दे1 दे* गुरु°, ग्र2 वेदगुरु° (→देवगुरु°). –b) द1 ग्र2 नियमानं (ग्र2 °ना), म1 उ1 नीयमानं (→दीयमानं); दे6 तु धारयेत्, उ1 न वारयेत् (→तु वारयेत्). –c) दे4 न त्वात्मानं, दे6 नैवात्मानं, दे10 नाचात्मानं (→न चात्मानं); दे10 प्रशासेद्वा, ते1 प्रशंसेञ्च, द1 ग्र2 म1 उ1 प्रशंसेत (→प्रशंसेद्वा). –d) ब3 प * निन्दाञ्च, दे1 परनिन्दो च, दे4.6 द1 ग्र2 म1 उ1 परनिंदां वि-, न1 परिनिंदां च (→परनिन्दां च). –e) ब2 देवनिन्दां, दे6 वेदनिंदा (→वेदनिन्दां); ब2 वेदनिन्दां (→देवनिन्दां). –ef) ब1 वेदनिन्दां प्रयत्नेन देवनिन्दाम्विवर्ज्जयेत्.

३८. दे3. ab ⊙ (द्र. ३७ पा. वि.); ते1. ३८c–३९b ⊙. –a) न1 यं तु (→यस्तु); का1 ब1-3 दे2 न1 चैव (→विप्रान्). –b) ब1 दे4 ते1 ग्र2 द्विजा:, दे2 न1 द्विज (→द्विजः). –d) ब3 शास्त्रे त्विह, द1 ग्र2 उ1 शास्त्रेषु च (→शास्त्रेष्विह); दे4 मुनीश्वरः (→मुनीश्वराः).

३९. ते1. ab ⊙ (द्र. ३८ पा. वि.). –a) दे3.6 निन्दयेद्वा, दे4 निंदयेच्चा, द1 ग्र2 म1 निन्दयेद्यो (→निन्दयेद् वै); दे1.4.8-10 द1 म1 उ1 मुवें. मुए. मुब. गुरून्देवान्, न1 गुरुर्देवं, ग्र2 गुरून्दैवान् (→गुरुं देवं). –b) ब2.3 वेदव्यासोप°, न1 देवं वासोप°, द1 न देवं चोप°, ग्र2 उ1 न वेदं वोप° (→वेदं वा सोप°); ब2 °रंहरं, दे10 °बृंहणाम्, द1 ग्र2 उ1 °बृहयेत् (→°बृंहणम्). –c) दे6 शाग्रं, दे10 सार्यं, द1 सांगं (→साग्रं). –d) ते1 (का) रौरवे (→रौरवे).

४०. –a) दे1 नूष्मीमासीत (?), न1 तूर्णिमासीत्, ग्र2 तक्ष्णाणामासीत् (→तूष्णीमासीत); ते1 नाद्यान, द1 निन्दायाः (→निन्दायां). –c) दे1.6.10 कर्णो (→कर्णौ); न1 विधाय (→पिधाय). –d) ब1 चैनान°, दे1 वैलोन°, दे2.3.6 चैवान°, दे10 चैतमे° (→चैतान°).

४१. –a) न1 वर्णयेद्वै, म1 वर्ज्जयेत् स्व-, उ1 वर्तयेद्वै (→वर्ज्जयेद्वै); का1 ब1 दे2.3.6 परेषां तु (ब1 च), दे1.9.10 रहस्यं च, दे8 * हस्यं च, म1 रह्यस्यानि (→रहस्यानि); दे4, वर्जयेदरहस्यानि. –b) दे1 गूडयेद्, दे8.9 गूढयेद्, दे10 गुह्येत् (→गूहयेद्); द1 ग्र2 म1 उ1 द्विजः (→बुधः); का1 दे2.3.6 गृहेषु गर्हण (दे3 °णा)म्बुधः, ब1 गूहयेत् कुसितं बुधः, ते1 परेषां

वें.२.१६.४१ न पापं पापिनां ब्रूयादपापं वा द्विजोत्तमाः ।
स तेन तुल्यदोषः स्यान्मिथ्या द्विर्दोषवान् भवेत् ।।४२
यानि मिथ्याभिशस्तानां पतन्त्यश्रूणि रोदनात् ।
तानि पुत्रान् पशून् घ्नन्ति तेषां मिथ्याभिशंसिनाम् ।।४३
ब्रह्महत्यासुरापाने स्तेयगुर्वङ्गनागमे ।
दृष्टं विशोधनं वृद्धैर्नास्ति मिथ्याभिशंसने ।।४४
नेक्षेतोद्यन्तमादित्यं शशिनं चानिमित्ततः ।
नास्तं यान्तं न वारिस्थं नोपसृष्टं न मध्यगम् ।
तिरोहितं वाससा वा नादर्शान्तरगामिनम् ।।४५
न नग्नां स्त्रियमीक्षेत पुरुषं वा कदाचन ।
न च मूत्रं पुरीषं वा न च संस्पृष्टमैथुनम् ।
नाशुचिः सूर्यसोमादीन् ग्रहानालोकयेद् बुधः ।।४६
पतितव्यङ्गचण्डालानुच्छिष्टान् नावलोकयेत् ।
नाभिभाषेत च परमुच्छिष्टो वाऽवगुण्ठितः ।।४७

---

वैहाये द्विजः. –c) दे10 विवादो (→विवादं); दे2 सुजनैः, न1 स जनैः (→स्वजनैः); ग्र2 विवादं स्व च सामार्थन्. –d) ब1 कथञ्चन, दे1 कदाचनः (→कदाचन).

४२. –a) ते1 नेक्षितं (→न पापं); ब1.3 दे1.8-10 न1 ते1 द1 ग्र2 उ1 मुवें. मुए. मुब. पापिनं (→पापिनां). –b) का1 ब1 दे3 ग्र2 उ1 द्विजोत्तमः, दे1.8-10 मुए. मुब. द्विजोत्तमं, दे4 द्विजोत्तमान्, न1 द1 द्विजोत्तम, म1 कदाचन (→द्विजोत्तमाः); ते1 पापं वा न द्विजोत्तमाः. –c) ब1-3 दे2.3.6 न1 द1 ग्र2 मुब. सत्ये न, दे4 सत्यं त- (→स तेन); दे3 द1 म1 तुल्यदोष-, ग्र2 तुल्यद्वेष- (→तुल्यदोषः). –d) का1 °वद्दौषवान्, ब3 दे3.6 ग्र2 °निर्दोषवान्, दे2 °* र्दोषवान्, दे4 °दिदोषभाग्, ते1 वै दोषभाग्, म1 °भिद्दोषभाक् (→°द्विर्दोषवान्).

४३. –a) का1 मिथ्याभिशस्तानां, ब1 मिथ्या * शस्तानां, दे10 मिथ्याभिशक्तानां, न1 मिथ्याद्भृशस्थानात्, ते1 मिथ्याभिशस्ता (क्ता)नां (→मिथ्याभिशस्तानां). –b) दे6 पतन्त्यभ्रूणि, दे10 पतन्त्यश्रोणि (→पतन्त्यश्रूणि); ब1 वेदनात् (→रोदनात्). –d) का1 दे1 °संसि(दे1 शि) नां, दे4 °शंसिनः, दे6 °शंसिनं, दे10 °शंसनां, द1 उ1 °शंसनात्, ग्र2 °शासनात् (→°शंसिनाम्).

४४. –a) न1 ब्रह्महत्यां (→ब्रह्महत्या-); ब1 दे1.2.4 न1 म1 -सुरापान-, ब2.3 दे3.6 ते1 -सुरापानं (ते1 °ना) (→-सुरापाने). –b) ब2.3 दे2-4.6.10 स्तेयं, ग्र2 उ1 स्तेये (→स्तेय-); का1 ब3 -नागमं, ब1.2 दे3.6 -नागमः, दे2 -नासमं (→-नागमे). –c) ग्र2 पृष्टं (→दृष्टं); ब1 वाशोधनं(?), ब2.3 दे6 वै साधनं, दे2 विसोधनं, दे3 वै साधनैर्, दे10 विशोभनं (→विशोधनं); का1 बुद्धेर्, दे1.8-10 मुवें. मुए. मुब. सद्भिर्, दे2.4.6 बुद्धैर्, न1 बुधैर्, ते1 वृद्धिर् (→वृद्धैर्). –d) का1 ब1.2 दे2.3.4.6 न1 °शंसिनि, ब3 °संशिनीं, ते1 म1 °शंसिनां, द1 °शंसिनो, ग्र2 °शंसनी (→°शंसने).

४५. का1.ef⊙. –a) ब1 नेक्षेतोत्यन्तं, ब3 द1 नेक्षतोद्यन्तं, दे2 नेक्षितोत्यंन्तं, दे10 नेक्ष्येतोद्यंतं, न1 नेक्षेदुद्यंतं (→नेक्षेतोद्यन्तं). –b) का1 ब1-3 दे2.3 न1 ते1 शशिनं वा निमित्ततः, दे4 शीसनं चानिमित्ततः, दे10 शशिनं चानिमित्ततः. –c) दे4 न्यस्तं, दे10 स्थानं, म1 नास्ति, (→नास्तं); दे1.10 ग्र2 मुवें. मुए. मुब. यातं, न1 यत्तं, ते1 द1 यन्तं (→यान्तं); द1 च (→न); ब1 वारि*, दे4 वादिस्थं (→वारिस्थं). –d) का1 °रक्तं, दे2 °सृष्टं, द1 °स्पृस्थं, ग्र2 °स्पृष्टं (→°सृष्टं). –e) दे6 तिरोहितां, दे10 निरोहितं(?) (→तिरोहितं); दे6 * ससा (→वाससा). –f) ब2.3 दे2.3.4.6 न1 द1 ग्र2 म1 उ1 नादर्शाद्यनु-, दे1 नादर्शे यन्त्र- (→नादर्शान्तर-); ब3 दे6 -गामिनां, दे2 न1 -गामिनीं, द1 * मिनं (→-गामिनम्).

४६. –a) दे2 न लग्नां, ग्र2 नाश्नन्तीं (→न नग्नां); दे4 °मिच्छेत, दे10 °मिक्ष्येत, ग्र2 °मेक्षेत (→°मीक्षेत). –b) दे4 पुरुषो (→पुरुषं). –c) दे3 नन्तु (?), ते1 नहि (→न च); दे1 उ1 मूत्र- (→मूत्रं); द1 ग्र2 उ1 पुरीषां तां (→पुरीषं वा). –d) ब2 दे4.9 द1 ग्र2 उ1 मुवें. मुए. संसृष्ट-, ब3 संस्पृष्य-, दे1 संसृ *, दे8 संसृ (स्पृ) ष्ट-, न1 संपृष्ट-, ते1 सुहृष्ट- (?) (→संस्पृष्ट-); दे1.9.10 द1 म1 -मैथुनाम् (दे10 °नः), ते1 -मैथनम् (?), उ1 -मैथुनान् (→-मैथुनम्). –e) ब2 दे3.6 न1 सोमसूर्यादीन्, दे1 सूर्यसोसादीन्, ते1 सूर्यसोमादिन् (→सूर्यसोमादीन्). –f) दे10 ग्रहाणां, न1 गृहीनां (→ग्रहाना–); दे1 वेधः (→बुधः).

४७. ब1. दे2.3.6. ab ⊙. –a) का1 पतितानथ, दे4 पततिव्यंग, न1 पतितव्यंशु-, ते1 पति * त्यंग-, उ1 पतितस्य * (→पतितव्यङ्ग-); का1 ब2.3 -चाण्डालान् (→-चण्डालान्). –b) का1 उच्छिष्टं, ते1 उच्छिष्टो, म1 उच्छिष्ट- (→उच्छिष्टान्); ब2.3 उच्छिष्टान्न विलोकयेत्, न1 उच्छिष्टाश्च वलीनयेत्. –c) दे4 नावभाषेत (→नाभिभाषेत); का1 पर*, दे3.6 परमं, दे4 न1 द1 म1 उ1 चपलं, ग्र2 पचनं

न पश्येत् प्रेतसंस्पर्शं न क्रुद्धस्य गुरोर्मुखम् ।
न तैलोदकयोश्छायां न पत्नीं भोजने सति ।
नामुक्तबन्धनाङ्गां वा नोन्मत्तं मत्तमेव वा ॥४८
नाश्नीयात् भार्यया सार्द्धं नैनामीक्षेत चाश्नतीम् ।
क्षुवन्तीं जृम्भमाणां वा नासनस्थां यथासुखम् ॥४९
नोदके चात्मनो रूपं न कूलं श्वभ्रमेव वा ।
न लङ्घयेच्च मूत्रं वा नाधितिष्ठेत् कदाचन ॥५०
न शूद्राय मतिं दद्यात् कृशरं पायसं दधि ।
नोच्छिष्टं वा मधु घृतं न च कृष्णाजिनं हविः ॥५१
न चैवास्मै व्रतं दद्यान्न च धर्मं वदेद् बुधः ।
न च क्रोधवशं गच्छेद् द्वेषं रागं च वर्जयेत् ॥५२
लोभं दम्भं तथा यत्नादसूयां ज्ञानकुत्सनम् ।
ईर्ष्यां मदं तथा शोकं मोहं च परिवर्जयेत् ॥५३ वें.२ १६ ५५

(→च परम्). –d) दे3.6 उच्छिष्टैर्, न1 ते1 ग्र2 उच्छिष्टा (→उच्छिष्टो); ब2.3 दे4 नावगुंठितः, दे1 वावगुंविताः, दे3.6 ग्रवगुण्ठितः, दे10 वा* गुंठिनः, न1 पापकुंठितः, ते1 नापकुण्ठितः, द1 ग्र2 उ1 नावकुंठितः, मुवें. मुए. वावगर्वितः (→वावगुंठितः); म1 शिष्टानामवगुर्वतः.

४८. –a) ब1 दे1.8-10 मुवें. मुए. मुब. स्पृशेत् (→पश्येत्); ते1 पत्रि° (→प्रेत°); का1 °संस्पर्शान्, दे3.6 °संस्पर्शे (→°संस्पर्शं). –b) दे1 क्रुद्धस्या (?) (→क्रुद्धस्य); ब3 ** मुखं (→गुरोर्मुखम्). –c) दे4 तैलोद*योश्, दे6 तैलोदकं योश्, दे10 तिलोदकयोश्, द1 तेलोकादयोश् (→तैलोदकयोश्); दे1 शयां, दे6 स्थानं (→छायां). –d) दे10 पात्रीं (→पत्नीं); ग्र2 उ1 सतीं (→सति); दे6 यो न पत्नी भोजये नेसति. –e) ब1 न युक्त°, ब2 दे4 न1 ते1 द1 म1 उ1 न मुक्त°, दे1.8-10 मुवें. मुए. नियुक्त°, ग्र2 स मुक्त° (→नामुक्त°); का1 दे2 बन्धनाङ्गां वै, ब1 बन्धनां नीवीं, ब2 दे3.6 वन्धना गावो, दे4 गंधना गर्हा, ते1 बन्धौनागाश्वा (→बन्धनाङ्गां वा). –f) दे4 मक्रमेव, ते1 पीतमेव (→मत्तमेव); का1 ब1-3 दे3.6 च (→वा).

४९. –a) दे6.9 नाश्नायाद्, न1 नाग्नीयाद्, ते1 नाश्नीत (→नाश्नीयात्). –b) का1 नैवामीक्षेत, दे1 नैनीमीक्षेत, न1 न तामीक्षेत, द1 नैनीमीक्षेन्न, ग्र2 नो निरीक्षेत (→नैनामीक्षेत); का1 चास्नतीं, + मेहनं, ब1.2 न1 ते1 मेहतीं (न1 °ती), दे1.8-10 मुवें. मुए. मुब. मेहनीम् (दे4 °ना), द1 म1 मेहनं, ग्र2 मोहनं (→चाश्नतीम्). –c) दे4 द1 म1 कुर्वतीं, दे6 जुवंतीं, दे10 जवंती, न1 क्षुभर्ती, ते1 रुदन्तीं, ग्र2 उ1 क्षुतन्तीं (→क्षुवन्तीं); का1 दे2.4.6 जृम्भमानां वा, दे10 जृभमाणानां, न1 जंभमाणां वा (→जृम्भमाणां वा). –d) दे1 ग्र2 नासनस्थं, दे3.4 नासनस्था, न1 नासमर्थं (→नासनस्थां); दे10 यथामुखं (→यथासुखम्).

५०. ब1. cd ⊙. –a) का1 नात्मनो, दे10 चात्मनं, न1 वात्मनो, म1 चा(ना)त्मनो (→चात्मनो); दे1 रूपां (→रूपं). –b) का1 ब2.3 दे2.3 मुब. शुभं वा, दे4 न1 ग्र2 न कुलं (ग्र2 °ले), दे6 सुभं वा, द1 न कूले, म1 न रूपे, उ1 न कूपे (→न कूलं); का1 ब1-3 दे2.3.6 मुब. शुभमेव (दे6 °सु), दे4 स्वभ्रमेव, न1 शुभ्रमेव, ग्र2 शुभ्र एव, म1 उ1 श्वभ्रन एव (→श्वभ्रमेव); दे1.6 च (→वा). –ab) ते1 नोदकं चा ******* शुभमेव वा. –c) दे4 ते1 लंघयेत, द1 ग्र2 लंघयीत, म1 लंघनीय, उ1 लंघयात (→लङ्घयेच्च); का1 ब1.2 दे2-4.6 ते1 द1 ग्र2 म1 उ1 मतिमान् (→मूत्रं वा). –d) का1 नोधि * ष्ठेत्, ब2.3 नातितिष्ठेत्, दे10 नाधिस्तिष्ठेत्, उ1 न1 * तिष्ठेत् (→नाधितिष्ठेत्); द1 ग्र2 म1 उ1 कथंचन (→कदाचन).

५१. –a) ते1 घृतं (→मतिं). –b) ब3 दे3 कृषरं, दे2 ते1 द1 म1 कृसरं (→कृशरं); दे1 ददि, न1 ग्र2 दधिः (ग्र2 °धि) (→दधि). –c) द1 नोच्छिष्टा (→नोच्छिष्टं); ब2 दधिघृतं, ब3 दधियुतं, दे1.8.9 मुवें. मुए. मुब. घृतमधु, दे4 मधुकृतं, उ1 मसुकृतं (→मधु घृतं). –d) दे1 ना चा (?) (→न च); न1 हरिं (→हविः).

५२. दे3.6. ५२c–५६b ⊙. –a) दे1 चैवास्मि, न1 चैवास्मे, म1 चैवात्म-(→चैवास्मै); दे1.8-10 द1 ग्र2 उ1 घृतं, न1 मति- (→व्रतं); का1 ब1-3 दे2.3.6 ते1 ब्रूयात् (→दद्यात्). –b) दे1.8.9 चा (→च); दे4 वहेद् बुधः (→वदेद् बुधः). –c) दे1.10 न स, दे9 न (च) स (→न च); द1 ग्र2 उ1 क्रोधवतां (→क्रोधवशं). –d) दे10 धुर्षं (→द्वेषं); का1 शाकं च, ब2.3 दे2 न1 रोषं च, ते1 कांक्ष्यं च (→रागं च).

५३. का1. ⊙; दे3.6, ⊙ (द्र. ५२ पा. वि.); ग्र2. ५३a-५४ d ⊙. –a) दे1 दं* (→दम्भं); दे1.8-10 मुवें. मुए. वर्ज्यं, दे2 सूत्राद् (→यत्नाद्). –b) दे1.8-10 मुवें. मुए. यात्राविज्ञान° (→असूयां ज्ञान°); द1 म1 उ1 दद्यादन्नमकुत्सनं (म1 °यन्, उ1 °यत्). –c) ब1-3 कुर्यामदं, दे1.8-10 मुवें. मुए. मुब. मानं मोहं, दे4 ते1 मानं मदं, न1 मदं मानं, द1 म1 मानं दंभं, उ1 मानदण्डं (→ईर्ष्यां मदं); दे1.8-10 मुवें. मुए. मुब.

वें.२ १६.५६ न कुर्यात् कस्यचित् पीडां सुतं शिष्यं च ताडयेत् ।
न हीनानुपसेवेत न च तीक्ष्णमतीन् क्वचित् ॥५४
नात्मानं चावमन्येत दैन्यं यत्नेन वर्जयेत् ।
न विशिष्टानसत्कुर्य्यात् नात्मानं वा शपेद् बुधः ॥५५
न नखैर्विलिखेद् भूमिं गां च संवेशयेन्न हि ।
न नदीषु नदीं ब्रूयात् पर्वतेषु च पर्वतान् ॥५६
आवासे भोजने वाऽपि न त्यजेत् सहयायिनम् ।
नावगाहेदपो नग्नो वह्निं नातिव्रजेत् पदा ॥५७
शिरोऽभ्यङ्गावशिष्टेन तैलेनाङ्गं न लेपयेत् ।
न सर्पशस्त्रैः क्रीडेत स्वानि खानि न संस्पृशेत् ।
रोमाणि च रहस्यानि नाशिष्टेन सह व्रजेत् ॥५८
न पाणिपादवाङ्नेत्रचापल्यं समुपाश्रयेत् ।

---

क्रोधं (→शोकं). –d) दे$_{1.4.8-10}$ उ$_{1}$ मुवें. मुए. मुब. द्वेषञ्च, द$_{1}$ म$_{1}$ हर्षं च (→मोहं च); ते$_{1}$ विद्वेषं च विवर्जयेत्.

५४. दे$_{3.6}$. ग्र$_{2}$. ⊙; दे$_{4}$. ५४a-५५b ⊙. –b) का$_{1}$ स तं (→सुतं). –c) दे$_{1}$ मानं, दे$_{10}$ हीनाम्, ते$_{1}$ हीनम् (→हीनान्); ब$_{1}$ उपवेसेत (→उपसेवेत). –d) ब$_{3}$ तीक्षां मतिं, ते$_{1}$ स्यादुर्मतिः, द$_{1}$ म$_{1}$ तीक्ष्णमतिर् (→तीक्ष्णमतीन्); द$_{1}$ उ$_{1}$ भवेत् (→क्वचित्); म$_{1}$ न च तीक्ष्णमतीक्षणवत्.

५५. दे$_{3.6}$. ⊙ (द्र. ५२ पा. वि.); का$_{1}$. cd ⊙; दे$_{4}$. ab ⊙ (द्र. ५४ पा. वि.). –a) दे$_{2}$ नात्मनं, न$_{1}$ नामातं (→नात्मानं); दे$_{10}$ नांन्यद्वै (?) (→-मन्येत). –c) ब$_{1}$ दे$_{8.9}$ विशिष्टान् न, दे$_{1.10}$ मुवें. मुए. चा (दे$_{10}$ च) शिष्यं न, दे$_{9}$ चाशिष्टान् न (→विशिष्टा न); दे$_{4}$ अविशिष्टाशनं कुर्यान्, द$_{1}$ म$_{1}$ उ$_{1}$ नावशिष्टास (द$_{1}$ °श°) नं कुर्यान्, ग्र$_{2}$ नावष्टांसगं * कुर्यान्. –d) दे$_{1.8-10}$ मुवें. मुए. शंसयेद्, द$_{1}$ ग्र$_{2}$ उ$_{1}$ वा (दे$_{1}$ बो°) धयेद्, म$_{1}$ वाहयेद् (→वा शपेद्). –cd) ते$_{1}$ न विद्विष्टमतिं कुर्यात् विद्विषं वासयेत्पुरः.

५६. ते$_{1}$. १६ अध्यायस्य ५६ c इत्यारभ्य १८ अध्यायस्य ६३ श्लोकं यावत् ⊙; दे$_{3.6}$. ab ⊙ (द्र. ५२ पा. वि.). –a) का$_{1}$ न$_{1}$ ब$_{2.3}$ नखेनन, ब$_{1}$ न नखं वि-, दे$_{1}$ ते$_{1}$ नखैर्नवि-, दे$_{4}$ द$_{1}$ न नक्तं वि- (→न नखैर्वि-). –b) दे$_{4}$ शवेशयेन, न$_{1}$ संभावयेन् (→संवेशयेन्); ग्र$_{2}$ म$_{1}$ बुधः (→न हि); ते$_{1}$ वत्सं व (वा) ग (ह) रेत् बुधः. –c) ब$_{1}$ न नदीं कु-, दे$_{3}$ नानदीत्व-, दे$_{6}$ ना नंदीत्व-, म$_{1}$ न नदेषु (→न नदीषु); द$_{1}$ सूर्यात्, ग्र$_{2}$ उ$_{1}$ कुर्य्यात् (→ब्रूयात्). –d) ब$_{2}$ न पर्वतेषु, दे$_{1.8-10}$ मुवें. मुए. मुब. पर्वतेन च (→पर्वतेषु च); ब$_{2}$ पर्वतं (→पर्वतात्). –cd) दे$_{8}$ न नखेन सुनदी ब्रूयात्पर्वतेसु च पर्वतान्.

दे$_{2}$. b, c मध्ये अधिकम्—

न नदीष्टासनत्कुर्यात् नात्मानं वासयेद्बुधा । (= ५५cd)

५७. –a) का$_{1}$ आचयेद्, ब$_{3}$ आवासो, दे$_{2}$ आवसे, दे$_{3.6}$ आराध्यं, ग्र$_{2}$ म$_{1}$ उ$_{1}$ आया (ग्र$_{2}$ य)से (→आवासे); द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ चापि (→वापि); दे$_{1.8-10}$ न$_{1}$ आव (न$_{1}$ वा) सेत्तेन नै (दे$_{9}$ चै)वापि. –b) का$_{1}$ त्वजेत्, दे$_{1}$ त्यज्येत् (→त्यजेत्); का$_{1}$ सहायायिनम्, ब$_{3}$ दे$_{2}$ सहपापिनं (दे$_{3}$ °नां), दे$_{4}$ सहयाजिनं, दे$_{6}$ सहयार्यिनां, न$_{1}$ सहयायिनः, द$_{1}$ सहयाधिनं (→सहयायिनम्). –c) ब$_{1}$ नवगादेहपो, ब$_{2}$ नावगाहेदपुं, दे$_{1}$ नावगाहेदथो, दे$_{3.6}$ नापगाहेदयो (दे$_{6}$ °पो), दे$_{4}$ भावगाहेदयो, ग्र$_{2}$ नावगाहेदवो (→नावगाहेदपो); दे$_{6.10}$ नग्नौ, न$_{1}$ नक्तं (→नग्नो). –d) ब$_{2}$ बहिर् (→वह्निन); का$_{1}$ नाधि, ब$_{2.3}$ दे$_{3}$ नापि, दे$_{1}$ त्वापि, दे$_{2}$ नासि, दे$_{8.10}$ मुवें. मुए. मुब. चापि, दे$_{9}$ चाति, +चापि (→नाति); का$_{1}$ ब$_{1-3}$ दे$_{2.4}$ तदा, दे$_{3}$ तथा, मुवें. सदा (→पदा); दे$_{6}$ वह्निश्चापि व्रजेत्तथा द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ वह्निना ती(ग्र$_{2}$ ति) व्रतेजसा (ग्र$_{2}$ °सि).

५८. द$_{1}$.५८d-७६b ⊙. –b) का$_{1}$ तैलान्यंगे-, दे$_{4}$ तैलोभोगं, न$_{1}$ तैनांगेङ्गं, ग्र$_{2}$ तैलेनान्नन् (→तैलेनाङ्गं); दे$_{4}$ लोपयेत् (→लेपयेत्). –c) दे$_{1.8-10}$ मुवें. मुए. मुब. न शस्त्रसर्पैः, न$_{1}$ सर्वशस्त्रैश्च, म$_{1}$ न सप्पतन्त्रैः (→न सर्पशस्त्रैः); दे$_{1}$ क्रीडेन(?), दे$_{9}$ क्रीडात् (→क्रीडेत). –d) का$_{1}$ स्वानिखानि न स्पृशेत्, ब$_{1-3}$ स्वानि स्वानि न संस्पृशेत्, दे$_{1}$ स्वानिश्यानिवनस्पृशेत्, दे$_{3.6}$ स्वालिखनि न संस्पृशेत्, दे$_{4.8.9}$ ग्र$_{2}$ म$_{1}$ स्वानि खानि च न स्पृशेत्. –e) ब$_{3}$ रोमनिः*, दे$_{1}$ रामणि च (?), दे$_{3}$ रोमणि च(?) (→रोमाणि च); दे$_{6}$ ग्र$_{2}$ उ$_{1}$ रहस्याणि (→रहस्यानि). –f) ग्र$_{2}$ द्रामेन सह न व्रजेत्, म$_{1}$ द्विष्टेन सह न व्रजेत्, उ$_{1}$ धृष्टेन सह न व्रजेत्.

दे$_{3.6}$. b, c मध्ये अधिकम्—

*न च क्रोधवशं गच्छेद् देशं रोषं च वर्जयेत् ।
लोभं दम्भं तथा यत्नादसूयां ज्ञानकुत्सनम् ।
न कुर्यात् कस्यचित् पीडां सुतं शिष्यं च ताडयेत् ।
न हीनानुपसेवेत दैन्यं यत्नेन वर्जयेत् । [4]
न विशिष्टा न सत्कुर्यान्नात्मानं वा शपेद् बुधा ।
न नखेन लिखेद्भूमिं गां च संवेशयेन्न हि ।
(= ५२c-५५b)

५९. द$_{1}$. ⊙. –a) दे$_{4}$ न पाणिपादनेत्रैर्वा, दे$_{6}$ न पाणिपादवाग्नेत्रैः, न$_{1}$ न पाणिपादावाङ्नेत्रश्, ग्र$_{2}$ न

बें.२ १६.५६

न कुर्यात् कस्यचित् पीडां सुतं शिष्यं च ताडयेत् ।
न हीनानुपसेवेत न च तीक्ष्णमतीन् क्वचित् ॥५४
नात्मानं चावमन्येत दैन्यं यत्नेन वर्जयेत् ।
न विशिष्टानसत्कुर्य्यात् नात्मानं वा शपेद् बुधः ॥५५
न नखैर्विलिखेद् भूमिं गां च संवेशयेन्न हि ।
न नदीषु नदीं ब्रूयात् पर्वतेषु च पर्वतान् ॥५६
आवासे भोजने वाऽपि न त्यजेत् सहयायिनम् ।
नावगाहेदपो नग्नो वह्निं नातिव्रजेत् पदा ॥५७
शिरोऽभ्यङ्गावशिष्टेन तैलेनाङ्गं न लेपयेत् ।
न सर्पशस्त्रैः क्रीडेत स्वानि खानि न संस्पृशेत् ।
रोमाणि च रहस्यानि नाशिष्टेन सह व्रजेत् ॥५८
न पाणिपादवाङ्नेत्रचापल्यं समुपाश्रयेत् ।

---

क्रोधं (→शोकं). –d) दे$_{1.4.8-10}$ उ$_{1}$ मुवें. मुए. मुब. द्वेषञ्च, द$_{1}$ म$_{1}$ हर्षं च (→मोहं च); ते$_{1}$ विद्वेषं च विवर्जयेत्.

**५४.** दे$_{3.6}$. ग्र$_{2}$. ⊙; दे$_{4}$. ५४a-५५b ⊙. –b) का$_{1}$ स तं (→सुतं). –c) दे$_{1}$ मानं, दे$_{10}$ हीनाम्, ते$_{1}$ हीनम् (→हीनान्); ब$_{1}$ उपवेसेत (→उपसेवेत). –d) ब$_{3}$ तीक्षां मतिं, ते$_{1}$ स्यादुर्मतिः, द$_{1}$ म$_{1}$ तीक्ष्णमतिर् (→तीक्षणमतीन्); द$_{1}$ उ$_{1}$ भवेत् (→क्वचित्); म$_{1}$ न च तीक्षणमतीक्षणवत्.

**५५.** दे$_{3.6}$. ⊙ (द्र. ५२ पा. वि.); का$_{1}$. cd ⊙; दे$_{4}$. ab ⊙ (द्र. ५४ पा. वि.). –a) दे$_{2}$ नात्मनं, न$_{1}$ नामातं (→नात्मानं); दे$_{10}$ नांन्यद्वै (?) (→-मन्येत). –c) ब$_{1}$ दे$_{8.9}$ विशिष्टान् न, दे$_{1.10}$ मुवें. मुए. चा (दे$_{10}$ च) शिष्यं न, दे$_{9}$ चाशिष्टान् न (→विशिष्टा न); दे$_{4}$ अविशिष्टाशनं कुर्यान्, द$_{1}$ म$_{1}$ उ$_{1}$ नावशिष्टास (द$_{1}$ °श°) नं कुर्यान्, ग्र$_{2}$ नावष्टांसगं * कुर्यान्. –d) दे$_{1.8-10}$ मुवें. मुए. शंसयेद्, द$_{1}$ ग्र$_{2}$ उ$_{1}$ वा (दे$_{1}$ बो°) धयेद्, म$_{1}$ वाहयेद् (→वा शपेद्). –cd) ते$_{1}$ न विद्विष्टमतिं कुर्यात् विद्विषं वासयेत्पुरः.

**५६.** ते$_{1}$. १६ अध्यायस्य ५६ c इत्यारभ्य १८ अध्यायस्य ६३ श्लोकं यावत् ⊙; दे$_{3.6}$. ab ⊙ (द्र. ५२ पा. वि.). –a) का$_{1}$ न$_{1}$ ब$_{2.3}$ नखेनन, ब$_{1}$ न नखं वि-, दे$_{1}$ ते$_{1}$ नखैर्नवि-, दे$_{4}$ द$_{1}$ न नक्तं वि- (→न नखैर्वि-). –b) दे$_{4}$ शवेशयेन, न$_{1}$ संभावयेन् (→संवेशयेन्); ग्र$_{2}$ म$_{1}$ बुधः (→न हि); ते$_{1}$ वत्सं व (वा) ग (ह) रेत् बुधः. –c) ब$_{1}$ न नदीं कु-, दे$_{3}$ नानदीत्व-, दे$_{6}$ ना नंदी‹व-, म$_{1}$ न नदेषु (→न नदीषु); द$_{1}$ सूर्यात्, ग्र$_{2}$ उ$_{1}$ कुर्य्यात् (→ब्रूयात्). –d) ब$_{2}$ न पर्वतेषु, दे$_{1.8-10}$ मुवें. मुए. मुब. पर्वतेन च (→पर्वतेषु च); ब$_{2}$ पर्वतं (→पर्वतात्). –cd) दे$_{8}$ न नखेन सुनदी ब्रूयात्पर्वतेसु च पर्वतान्.

दे$_{2}$. b, c मध्ये अधिकम्—

न नदीष्टासनत्कुर्यात् नात्मानं वासयेद्बुधा । (=५५cd)

**५७.** –a) का$_{1}$ आचयेद्, ब$_{3}$ आवासो, दे$_{2}$ आवसे, दे$_{3.6}$ आराध्यं, ग्र$_{2}$ म$_{1}$ उ$_{1}$ आया (ग्र$_{2}$ य)से (→आवासे); द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ चापि (→वापि); दे$_{1.8-10}$ न$_{1}$ आव (न$_{1}$ वा) सेत्तेन नै (दे$_{9}$ चै)वापि. –b) का$_{1}$ त्वजेत्, दे$_{1}$ त्यज्येत् (→त्यजेत्); का$_{1}$ सहायायिनम्, ब$_{3}$ दे$_{2}$ सहपापिनं (दे$_{3}$ °नां), दे$_{4}$ सहयाजिनं, दे$_{6}$ सहयार्यिनां, न$_{1}$ सहयायिनः, द$_{1}$ सहयाधिनं (→सहयायिनम्). –c) ब$_{1}$ नवगादेहपो, ब$_{2}$ नावगाहेदपुं, दे$_{1}$ नावगाहेदथो, दे$_{3.6}$ नापगाहेदयो (दे$_{6}$ °पो), दे$_{4}$ भावगाहेदयो, ग्र$_{2}$ नावगाहेदवो (→नावगाहेदपो); दे$_{6.10}$ नग्नौ, न$_{1}$ नक्तं (→नग्नो). –d) ब$_{2}$ बहिर् (→वह्निं); का$_{1}$ नाधि, ब$_{2.3}$ दे$_{3}$ नापि, दे$_{1}$ त्वापि, दे$_{2}$ नासि, दे$_{8.10}$ मुवें. मुए. मुब. चापि, दे$_{9}$ चाति, +चापि (→नाति); का$_{1}$ ब$_{1-3}$ दे$_{2.4}$ तदा, दे$_{3}$ तथा, मुवें. सदा (→पदा); दे$_{6}$ वह्निन्नापि व्रजेत्तथा द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ वह्निना ती(ग्र$_{2}$ ति) व्रतेजसा (ग्र$_{2}$ °सि).

**५८.** द$_{1}$.५८d-७९b ⊙. –b) का$_{1}$ तैलान्यंगे-, दे$_{4}$ तैलोभोगं, न$_{1}$ तैनांगेङ्गं, ग्र$_{2}$ तैलेनान्नन् (→तैलेनाङ्गं); दे$_{4}$ लोपयेत् (→लेपयेत्). –c) दे$_{1.8-10}$ मुवें. मुए. मुब. न शस्त्रसर्पैः, न$_{1}$ सर्वशस्त्रैश्च, म$_{1}$ न सप्पतन्त्रैः (→न सर्पशस्त्रैः); दे$_{1}$ क्रीडेन(?), दे$_{9}$ क्रीडात् (→क्रीडेत). –d) का$_{1}$ स्वानिखानि न स्पृशेत्, ब$_{1-3}$ स्वानि स्वानि न संस्पृशेत्, दे$_{1}$ स्वानिश्यानिवनस्पृशेत्, दे$_{3.6}$ स्वालिखनि न संस्पृशेत्, दे$_{4.8.9}$ ग्र$_{2}$ म$_{1}$ स्वानि खानि च न स्पृशेत्. –e) ब$_{3}$ रोमनिः*, दे$_{1}$ रामणि च (?), दे$_{3}$ रोमणि च(?) (→रोमाणि च); दे$_{6}$ ग्र$_{2}$ उ$_{1}$ रहस्याणि (→रहस्यानि). –f) ग्र$_{2}$ द्वामेन सह न व्रजेत्, म$_{1}$ द्विष्टेन सह न व्रजेत्, उ$_{1}$ धृष्टेन सह न व्रजेत्.

दे$_{3.6}$. b, c मध्ये अधिकम्—

*न च क्रोधवशं गच्छेद् देशं रोषं च वर्जयेत् ।
लोभं दम्भं तथा यत्नादसूयां ज्ञानकुत्सनम् ।
न कुर्यात् कस्यचित् पीडां सुतं शिष्यं च ताडयेत् ।
न हीनानुपसेवेत दैन्यं यत्नेन वर्जयेत् । [4]
न विशिष्टा न सत्कुर्यान्नात्मानं वा शपेद् बुधा ।
न नखेन लिखेद्भूमिं गां च संवेशयेन्न हि ।
(=५२c-५५b)

**५९.** द$_{1}$. ⊙. –a) दे$_{4}$ न पाणिपादनेत्रैर्वा, दे$_{6}$ न पाणिपादवाग्नेत्रैः, न$_{1}$ न पाणिपादावाङ्नेत्रश्, ग्र$_{2}$ न

न शिश्नोदरचापल्यं न च श्रवणयोः क्वचित् ।।५९
न चाङ्गनखवादं वै कुर्यान्नाञ्जलिना पिबेत् ।
नाभिहन्याज्जलं पद्भ्यां पाणिना वा कदाचन ।।६०
न शातयेदिष्टकाभिः फलानि न फलेन च ।
न म्लेच्छभाषां शिक्षेत नाकर्षेच्च पदासनम् ।।६१
न भेदनमवस्फोटं छेदनं वा विलेखनम् ।
कुर्याद् विमर्दनं धीमान् नाकस्मादेव निष्फलम् ।।६२
नोत्सङ्गे भक्षयेद् भक्ष्यं वृथा चेष्टां च नाचरेत् ।
न नृत्येदथवा गायेन्न वादित्राणि वादयेत् ।।६३
न संहताभ्यां पाणिभ्यां कण्डूयेदात्मनः शिरः ।
न लौकिकैः स्तवैर्देवांस्तोषयेद् बाह्यजैरपि ।।६४
नाक्षैः क्रीडेन्न धावेत नाप्सु विण्मूत्रमाचरेत् ।
नोच्छिष्टः संविशेन्नित्यं न नग्नः स्नानमाचरेत् ।।६५
न गच्छेन्न पठेद् वाऽपि न चैव स्वशिरः स्पृशेत् ।
न दन्तैर्नखरोमाणि छिन्द्यात् सुप्तं न बोधयेत् ।।६६
न बालातपमासेवेत् प्रेतधूमं विवर्जयेत् ।

वें. २.१६.६६

---

पाणपाणिवाङ्मात्रः, म1 न पाणिपदवाङ्नात्र, उ1 न पादपाणिवाक्नेत्र, मुए. मुब. न पाणिपादावग्नौ च. –b) दे1.8.9 मुवें. मुए. चापलानि समाश्रयेत्, दे4 चापलं समुपाश्रयेत्, दे10 चापलानि च समाश्रयेत्. –c) दे4 शिष्यो- (→शिश्नो-); दे1.4.8-10 ग्र2 म1 उ1 मुवें. मुए. -योनित्यं, दे6 -चायाल्पं (→-चापल्यं); ब1 न शिश्नो *** पल्यं.

६०. द1. ⊙. –a) का1 दे2 चांगनापवादं, ब1.2 मुब. चाङ्गनखवाद्यं, दे3.6 चांगनथवादे (दे3°दं), दे4 न1 नाचांगनखपदं (न1 °पादं), दे10 चांग न च खानं, ग्र2 चांगनापिवानं, म1 चांगनाभिः पानं, उ1 चांगेनापि पानं (→चाङ्गनखवादं); ब1 वा (→वै). –b) दे4 नां जलिन (?), ग्र2 नादज्जना(?), म1 नांजलिभिः (→नाञ्जलिना). –c) दे1 नालिभिहन्याज्जलं पद्भ्यां, ग्र2 नाभिह(ब)न्यायाज्जलं पद्भ्यां. –d) ब1 दे3.6 पाणिनां (→पाणिना); का1 च (→वा); का1 ब1 कथञ्चन, ब2 कदाच* (→कदाचन).

६१. –a) का1 शातयेद्दि° (?), दे10 शांतयेदि°, न1 श्यांतयेदि° (→शातयेदि°). –b) का1 दे2 फलेन (→फलानि); का1 दे2.3.6 न फलानि, मुवें. सफलानि (→न फलेन). –c) का1 ब3 दे1.2.8-10 मुवें. मुए. भाषणं शिक्षेत्, दे4 भाषांशिष्येत (→भाषां शिक्षेत). –d) ब1 नाकर्षेत् स्य-, दे4 न कर्षेच्च (→नाकर्षेच्च).

६२. –a) का1 नखभेदेन स्फोटं च, ब1.2 न स्वभेदनमास्फोटं, द1 मुवें. मुए. न भेदनमधिस्फोटं, दे2 नखभेदनस्फोटं, दे3.6 न भेदनमास्फोटकं, दे8-10 न भेदनमविस्फोटं, ग्र2 म1 उ1 नच्छेदनमवस्फोटं. –b) ग्र2 म1 उ1 भेदनञ्च (→छेदनं वा); दे1.8-10 विले (दे1 °लो°) पनं, दे3 चिलेखनं (?) (→विलेखनं). –c) दे3.6 विलेखनं, उ1 *मर्दनं (→विमर्दनं). –d) का1 दे1.8.9 निःफलं (→निष्फलम्).

६३. ग्र2. ६३c-६६b ⊙. –a) ग्र2 नोत्सहेत (→नोत्सङ्गे); का1 दे2 भक्षयेद्भक्षं, ब1 दे4.8.10 मुवें. मुए. मुब. भक्षयेद्भक्ष्यान्, दे1 भक्षयेद्भक्तान्, दे9 न1 भक्षयेद्भक्षान् (→भक्षयेद् भक्ष्यं). –b) दे1 वेष्टां च (?), दे4 चेष्टं च, ग्र2 म1 चेष्टान्तु (→चेष्टां च); दे3.6 वर्जयेत् (→नाचरेत्). –c) दे4 उपरा (→अथवा); न1 गीयें (→गायेन्).

६४. ग्र2. ⊙ (द्र. ६३ पा. वि). –a) ब3 संघताभ्यां, दे1.8-10 सं (दे1 सां) हिताभ्यां (→संहताभ्यां). –b) दे4 शिरं (→शिरः). –c) उ1 लैकिकैर्वैदिकैर्देवांस्. –d) ब3 दे3.6 वाक्यजैरपि, दे1.8-10 मुवें. मुए. मुब. भे (दे10 भौ)षजै (दे1 °जो) रपि (→बाह्यजैरपि).

६५. ग्र2. ⊙ (द्र. ६३ पा. वि.); म1. cd ⊙. –a) दे1 नाक्षौः, दे10 नक्षैः (→नाक्षैः); दे10 क्रीडेत, न1 क्रीडं न, म1 कीलेन्न (?), उ1 *** (→क्रीडेन्न); दे10 धवित (?), उ1 धातेन (→धावेत). –b) का1 नाशु, दे1 नाभु, उ1 * प्सु (→नाप्सु); का1 विण्मात्र° (→विण्मूत्र°). –c) दे4 संवसेन्निष्टं, उ1 संवसेन्नित्यं (→संविशेन्नित्यं). –d) दे1 नग्नो, दे4.10 न1 नग्नं (→नग्नः).

६६. ग्र2. ab ⊙ (द्र. ६३ पा. वि); दे10. ६६c–७७d ⊙. –a) दे1.8-10 उ1 मुवें. मुए. गच्छन्न, दे4 गच्छेन्वै (→गच्छेन्न); ब1 पठेच्चापि, दे1 पाठेद्वापि, म1 पतन्वापि (→पठेद्वापि). –b) ब3 चैवं (→चैव); उ1 च शिरः (→स्वाशिरः); दे8 स्पृशेत्,+क्षिपेत् (→स्पृशेत्). –c) ग्र2 दन्ते (→दन्तैर्); दे2 मुख° (नख°). –d) दे3 सुप्तानु-, दे6 सुप्तःनु- (→सुप्तं न).

६७. ब1. ab ⊙; दे10. ⊙ (प्र. ६६ पा. वि.) –a) दे3.6 बालाउप° (→बालातप°); दे1 °संसेवेत् (→°मासेवेत्). –b) दे1 विवार्ज्जपेत्, ग्र2 विसर्ज्जयेत् (→विवर्ज्जयेत्). –c) दे4 ग्र2 म1 नैक, न1 नैत (?) (→नैकः); दे3 उ1 स्वप्यात्, दे4 स्वस्त्वा (?), दे6 शय्यात्

वि. २.१६.७०

नैकः सुप्याच्छून्यगृहे स्वयं नोपानहौ हरेत् ।।६७
नाकारणाद् वा निष्ठीवेन्न बाहुभ्यां नदीं तरेत् ।
न पादक्षालनं कुर्यात् पादेनैव कदाचन ।।६८
नाग्नौ प्रतापयेत् पादौ न कांस्ये धावयेद् बुधः ।
नाभिप्रसारयेद् देवं ब्राह्मणान् गामथापि वा ।
वाय्वग्निगुरुविप्रान् वा सूर्यं वा शशिनं प्रति ।।६९
अशुद्धः शयनं यानं स्वाध्यायं स्नानवाहनम् ।
बहिर्निष्क्रमणं चैव न कुर्वीत कथञ्चन ।।७०
स्वप्नमध्ययनं स्नानमुद्वर्त्तं भोजनं गतिम् ।
उभयोः संध्ययोर्नित्यं मध्याह्ने चैव वर्जयेत् ।।७१
न स्पृशेत् पाणिनोच्छिष्टो विप्रो गोब्राह्मणानलान् ।
न चासनं पदा वाऽपि न देवप्रतिमां स्पृशेत् ।।७२
नाशुद्धोऽग्निं परिचरेन्न देवान् कीर्त्तयेदृषीन् ।
नावगाहेदगाधाम्बु धारयेन्नानिमित्ततः ।।७३
न वामहस्तेनोद्धृत्य पिबेद् वक्त्रेण वा जलम् ।
नोत्तरेदनुपस्पृश्य नाप्सु रेतः समुत्सृजेत् ।।७४
अमेध्यलिप्तमन्यद् वा लोहितं वा विषाणि वा ।
व्यतिक्रमेन्न स्रवन्तीं नाप्सु मैथुनमाचरेत् ।

न$_1$ स्व (छ्व) प्या, ग्र$_2$ स्वप्स्यात् (→सुप्यात्); का$_1$ ब$_2$ दे$_{2.6}$ ग्र$_2$ उ$_1$ °गेहे (→°गृहे); दे$_1$ नैकः सुप्यात् पृशून्य गृहे (?). –d) न$_1$ नौपानहौ (→नोपानहौ); ब$_1$ भवेत् (→हरेत्).

६८. –a) दे$_{10}$ नाकर्णा * द्वा (→नाकारणाद्वा). –c) का$_1$ °तालनं, ब$_1$ °क्षालिनं, दे$_6$ °छादनं (→°क्षालनं); दे$_3$ न न पादक्षालनं कुर्यात्. –d) दे$_{3.6}$ °न वा (→°नैव).

६९. –a) ब$_1$ प्रेर * येत् (→प्रतापयेत्); दे$_1$ नाग्नौ प्रतप्याद्वौ पादौ. –b) ब$_3$ ना (→न); दे$_1$ कांस्ते, दे$_{3.6}$ कांश्ये (→कांस्ये); दे$_2$ धाघयेद् (?), उ$_1$ चाधमे (→धावयेद्); न$_1$ पुनः (→बुधः); दे$_{3.6}$ न कांस्येद्धारयेद्बुधः, दे$_4$ नास्ये नाग्नि धमेद् बुधः, म$_1$ न कांस्येथावपेत् बुधः. –c) ब$_{2.3}$ ग्र$_2$ मुवें. नाति° (→नाभि°); का$_1$ दे$_{1.8.10}$ °प्र (दे$_1$ प्रा) तारयेद्, ब$_3$ °प्रशारयेद्, दे$_2$ °प्रसारयैद् (→°प्रसारयेद्). –d) दे$_2$ ब्राह्मणं, दे$_4$ ग्र$_2$ म$_1$ उ$_1$ ब्राह्मणा (→ब्राह्मणान्); दे$_2$ नामथापि, दे$_3$ सामथापि, दे$_6$ यामथापि (→गामथापि); का$_1$ ब$_1$ दे$_2$ न$_1$ च (→वा); दे$_1$ ब्राह्मणान् (ण)थामथापि वा. –e) दे$_1$ वाछ्नि°(?), दे$_2$ वाद्यग्नि-, दे$_{10}$ न स्वग्नि-, दे$_6$ वाय्वाग्नि-, (→वाय्वग्नि-); का$_1$ ब$_{2.3}$ दे$_{2.3.6}$ -नृप-, दे$_8$ गुरु, उ$_1$ -रुद्र-(→-गुरु-); ग्र$_2$ म (→वा). –f) स्तूर्यं (→सूर्यं).

७०. –a) ब$_3$ दे$_{8\text{-}10}$ न$_1$ ग्र$_2$ उ$_1$ मुवें. अशुद्ध-, दे$_4$ अशुद्ध (→अशुद्धः); ब$_1$ पापं (→यानं). –b) ब$_2$ म$_1$ उ$_1$ स्वाध्याय-(→स्वाध्यायं); ग्र$_2$ स्थान° (→स्नान°); दे$_{1.4.8\text{-}10}$ ग्र$_2$ म$_1$ उ$_1$ मुवें. मुए. मुब. °भोजनम् (→°वाहनं). –c) दे$_3$ वार्हेविष्क्रमणं, दे$_4$ बहिर्निष्कारणं, दे$_6$ बहिर्विक्रमणं (→बहिर्निष्क्रमणं); ब$_1$ चै * (→चैव). –d) ब$_1$ * (→न); ग्र$_2$ कदाच * (→कथञ्चन्).

७१. –a) दे$_4$ सोपि, ग्र$_2$ उ$_1$ सुप्ति (→स्वप्नम्); दे$_4$ मध्यमयं (→अध्ययनं); ब$_1$ दे$_{1.8.9}$ न$_1$ उ$_1$ मुवें. मुए. मुब. यानम्, ग्र$_2$ स्थानं (→स्नानम्). –b) का$_1$ उद्व्रतं, ब$_{1.2}$ दे$_{1.8\text{-}10}$ न$_1$ म$_1$ मुवें. मुए. मुब. उच्चारं, दे$_{3.6}$ उद्धृत्तुं, ग्र$_2$ जृंभणं, उ$_1$ विहारं (→उद्वर्त्तं); का$_1$ भाजनं, दे$_2$भोजनी (→भोजनं); दे$_4$ गतं (→गतिम्). –c) ग्र$_2$*** (→सन्ध्ययोर्). –d) ब$_{1.3}$ दे$_4$ न$_1$ ग्र$_2$ म$_1$ उ$_1$ च व-, दे$_{1.8\text{-}10}$ मुवें. मुए. मुब. तु वि- (→चैव).

७२. –a) दे$_2$ °नोक्षिष्टे (→°नोच्छिष्टो). –b) का$_1$ दे$_4$ विप्र, दे$_{1.10}$ विप्रा, दे$_{8.9}$ विप्राः (→विप्रो); का$_1$ गौ, दे$_4$ गां (→गो-); दे$_1$ °ब्राह्मणो° (→°ब्राह्मणा°); का$_1$ -नलाः, ब$_3$ ग्र$_2$ -नलात्, दे$_6$ -निलात् (→-नलान्); दे$_2$ गोब्राह्मण ** नलान्. –c) का$_1$ वैवान्नं, ब$_3$ चात्मानं, दे$_{1.8\text{-}10}$ मुवें. मुए. मुब. चैवान्नं, दे$_2$ चालनं, दे$_4$ न$_1$ ग्र$_2$ म$_1$ उ$_1$ चान्नं न (→चासनं); ग्र$_2$ पदं (→पदा); दे$_3$ चापि (→वापि).

अतः परं उ$_1$ पुस्तके अधिकम्—'वेद्यस्त्रैण वा जलं'.

७३. ब$_1$. ⊙. –b) ग्र$_2$ म$_1$ न देवांस्तर्प्यं (ग्र$_2$ °यं) येदृषीन्, उ$_1$ न वादुस्तपयेदृषीन्. –c) ग्र$_2$ °गन्धांबु (→°गाधाम्बु). –d) दे$_4$ त्वां च येन्, ग्र$_2$ म$_1$ वा(म$_1$ पा°)रयेन (→धारयेन्); ब$_2$ दे$_{1.8\text{-}10}$ न$_1$ मुवें. मुए. मुब. नाग्निमे (न$_1$ °नै°) कतः, दे$_6$ नानिमित्रतः, ग्र$_2$ ना * मेकतः, म$_1$ नावमेकतः, उ$_1$ -अग्निमेकतः (→नानिमित्ततः).

७४. –a) दे$_6$ पि*वेद् (→पिबेद्); दे$_1$ वक्त्रोणा, दे$_9$ क्रमेण, ग्र$_2$ उ$_1$ वस्त्रेण (→वक्त्रेण). –c) ब$_2$ नोत्तरे समुपस्पृश्यं, ग्र$_2$ नोत्तरेदपवस्पृश्य. –d) का$_1$ नदीं (→नाप्सु); दे$_1$ नाप्सु रे (र)तः समुत्सजतेत्(?).

७५. ब$_1$. ⊙. –a) का$_1$ ग्र$_2$ उ$_1$ अमेध्या° (→अमेध्य°); ब$_{2.3}$ °महं वा (ब$_3$ °द्वा); दे$_{3.6}$ °मेध्यम्वा (→°मन्यद्वा). –b) म$_1$ रोहितं (→लोहितं); ग्र$_2$ म$_1$ उ$_1$ चा- (→वा); का$_1$ विषाणि च, ब$_2$ विधानिकां, ग्र$_2$ म$_1$ उ$_1$ -विपाणिना

ध्यात्वाऽर्कमण्डलगतां सावित्रीं वै जपन् बुधः ।
प्राङ्मुखः सततं विप्रः संध्योपासनमाचरेत् ॥२७
संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु ।
यदन्यत् कुरुते किञ्चिन्न तस्य फलमाप्नुयात् ॥२८
अनन्यचेतसः शान्ता ब्राह्मणा वेदपारगाः ।
उपास्य विधिवत् संध्यां प्राप्ताः पूर्वं परां गतिम् ॥२९
योऽन्यत्र कुरुते यत्नं धर्मकार्ये द्विजोत्तमः ।
विहाय संध्याप्रणतिं स याति नरकायुतम् ॥३०
तस्मात् सर्वप्रयत्नेन संध्योपासनमाचरेत् ।
उपासितो भवेत् तेन देवो योगतनुः परः ॥३१

सहस्रपरमां नित्यं शतमध्यां दशावराम् ।
सावित्रीं वै जपेद् विद्वान् प्राङ्मुखः प्रयतः स्थितः ॥३२
अथोपतिष्ठेदादित्यमुदयन्तं समाहितः ।
मन्त्रैस्तु विविधैः सौरैर्ऋग्यजुःसामसंभवैः ॥३३
उपस्थाय महायोगं देवदेवं दिवाकरम् ।
कुर्वीत प्रणतिं भूमौ मूर्ध्ना तेनैव मन्त्रतः ॥३४
ओं खखोल्काय शान्ताय कारणत्रयहेतवे ।
निवेदयामि चात्मानं नमस्ते ज्ञानरूपिणे ।
नमस्ते घृणिने तुभ्यं सूर्याय ब्रह्मरूपिणे ॥३५
त्वमेव ब्रह्म परममापोज्योतीरसोऽमृतम् । वें.२.१८.३६

---

ग्र$_2$ म$_1$ उ$_1$ तु (→हि); ब$_1$ दे$_2$ निष्फला, द$_1$ उ$_1$ निष्कलौ (उ$_1$ °लं) (→निष्कला). –c) द$_1$ ग्र$_2$ ऐश्वरा (→ऐश्वरी); ब$_2$ सा परा शक्तिम्, दे$_{1.6.8-10}$ न$_1$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ मुवें. मुए. मुब. केवला'शक्तिस्, दे$_4$ सकला शक्तिस् (→तु परा शक्तिस्). –d) दे$_2$ तत्वात्तय (?), दे$_4$ त्त्व तत्र (→तत्त्वत्रय-).

२७. –a) ब$_1$ सोमार्क° (→ध्यात्वार्क°); न$_1$ °मंडलु- (→°मण्डल-); ब$_1$- छायां, न$_1$- गता (→-गतां). –b) दे$_{1.8}$ वा (→वै); दे$_{1.4.6.8-10}$ द$_1$ मुवें. मुए. मुब. जपेद्बुधः, ग्र$_2$ उ$_1$ पठेद्बुधः, म$_1$ पठेद्बुधः, + पठेद्द्विजः (→जपन् बुधः). –c) दे$_4$ प्राङ्मुखं (→प्राङ्मुखः); दे$_4$ न$_1$ विप्राः (→विप्रः).

२८. –c) उ$_1$ कर्म (→किञ्चिन्). –d) दे$_6$ फल-भाग्भवेत् (→फलमाप्नुयात्).

२९. –a) न$_1$ °चेतसं (→°चेतसः). –b) द$_1$ ब्राह्मणो (→ब्राह्मणा). –c) दे$_{2.10}$ न$_1$ संध्या (→सन्ध्यां). –d) ब$_1$ प्राप्तः, दे$_{10}$ प्रातः (→प्राप्ताः); का$_1$ दे$_{1.6.8-10}$ मुवें. मुए. मुब. पूर्वेऽपरां (दे$_{10}$ °दां) गतिं, ब$_{1-3}$ पूर्वपराङ्गतिं (→पूर्वं परां गतिम्).

३०. –a) न$_1$ यत्र, द$_1$ ग्र$_2$ उ$_1$ नित्यं (→यत्नं). –b) ब$_2$ °कर्मा(ण्य), दे$_4$ °कार्यं, ग्र$_2$ °कार्यो (→°कार्ये); ब$_2$ दे$_4$ द्विजोत्तमाः (→द्विजोत्तमः). –c) का$_1$ विहाव(?), न$_1$ विज्ञाय (→विहाय); का$_1$ ब$_1$ दे$_{1.2}$ संध्यां (→सन्ध्या-); का$_1$ प्रणवं (→-प्रणतिं). –d) दे$_3$ सायाति, दे$_8$ संयाति (→स याति); दे$_3$ नरकासुतं, उ$_1$ निरथयुतम् (→नरकायुतम्).

३१. –c) म$_1$ भवत् (→भवेत्). –d) दे$_{1.6}$ देव° (→देवो°); द$_1$ माग° (→योग°); ब$_1$ परं (→परः).

३२. –a) दे$_{1.4}$ °परमा, द$_1$ °परमं (→°परमां). –b) दे$_3$ °सद्यां (→°मध्यां); उ$_1$ दशां (→दशा-); ब$_1$ दे$_{2.3}$ न$_1$ द$_1$ ग्र$_2$ -परां, दे$_{10}$ -वरम् (→-वराम्). –c) न$_1$ सावित्री (→सावित्रीं); द$_1$ ग्र$_2$ उ$_1$ यो (→वै); मुए. तपेद् (→जपेद्); दे$_6$ धीमान् (→विद्वान्). –d) द$_1$ ग्र$_2$ म$_1$ उ$_1$ शुचिः (→स्थितः).

३३. –b) मुवें. मुए. उद्यंतं वै (→उदयन्तं). –c) ब$_{1.3}$ दे$_{2-4}$ न$_1$ ग्र$_2$ उ$_1$ मुवें. मुए. सोरैः, दे$_6$ शोचैः, दे$_{8.10}$ सारैः, द$_1$ स्तोत्रैः (→सौरैर्).

३४. –a) द$_1$ ग्र$_2$ म$_1$ उ$_1$ महादेवं (→महायोगं). –b) ग्र$_2$ °देव (→°देवं); दे$_{10}$ दिवाक्षरं (→दिवाकरं). –c) का$_1$ ब$_1$ प्रणतं, दे$_6$ प्रणाति (→प्रणतिं). –d) ब$_{2.3}$ मूद्र्ध्नौ, दे$_{1.2}$ द$_1$ मूर्द्धा, ग्र$_2$ मूर्ध्न्या (→मूर्ध्ना); का$_1$ ब$_{2.3}$ दे$_{2.3}$ नित्यं च, न$_1$ द$_1$ ग्र$_2$ उ$_1$ तेनेव (→तेनैव); ग्र$_2$ मंत्रितः (→मन्त्रतः).

३५. दे$_{1.8-10}$ ग्र$_2$ म$_1$. ef ⊙. –a) का$_1$ ॐ खं खषोलहाय, ब$_1$ ॐ खशोल्काय, ब$_2$ खंखसोल्काय, ब$_3$ ओं खष्कोक्षाय, दे$_1$ खः खोल्काय, दे$_2$ ओं खं खषोल्काय, दे$_3$ ॐ खसोल्काय, दे$_4$ ॐ खवोल्काय, दे$_6$ ओंखद्योताय, दे$_{10}$ मुख स्वोल्काय, न$_1$ ॐ महल्काय, द$_1$ उ$_1$ ॐ घषोल्काय, ग्र$_2$ ओं खषोल्काय, म$_1$ ओंघर्षोल्काय, मुवें. ओ ह्लद्योताय च (→ओं खखोल्काय). –b) दे$_2$ कारणा° (→कारण°). –c) दे$_1$ वात्मानं (→चात्मानं). –d) दे$_{1.8-10}$ मुवें. मुए. मुब. विश्वरूपिणे (→ज्ञानरूपिणे). –e) का$_1$ घ्राणिने, दे$_3$ दक्षिणे (→घृणिने).

३६. दे$_4$ ग्र$_2$. ⊙. –a) ब$_1$ दे$_{1.8}$ न$_1$ त्वामेव (→त्वमेव); दे$_1$ परमा (→परमं). –b) ब$_3$ दे$_6$ द$_1$ °ज्योति° (→°ज्योती°); दे$_2$ रसोद्भवं (→°रसोऽमृतम्). –d) ब$_2$ दे$_2$ शर्वे, दे$_{1.6.8-10}$ मुवें. मुए. मुब. शर्वो, न$_1$ द$_1$ उ$_1$ सर्वो, म$_1$ सर्व- (→सर्वे); दे$_{1.6.8-10}$ न$_1$ द$_1$ म$_1$ उ$_1$ मुवें. मुए. मुब. रुद्रः

वें.२.१८.३६ भूर्भुवः स्वस्त्वमोङ्कारः सर्वे रुद्राः सनातनाः ।
पुरुषः सन्महोऽतस्त्वां प्रणमामि कपर्दिनम् ॥३६
त्वमेव विश्वं बहुधा सदसत् सूयते च यत् ।
नमो रुद्राय सूर्याय त्वामहं शरणं गतः ॥३७
प्रचेतसे नमस्तुभ्यं नमो मीढुष्टमाय ते ।
नमो नमस्ते रुद्राय त्वामहं शरणं गतः ॥३८
हिरण्यबाहवे तुभ्यं हिरण्यपतये नमः ।
अम्बिकापतये तुभ्यमुमायाः पतये नमः ॥३९
नमोऽस्तु नीलग्रीवाय नमस्तुभ्यं पिनाकिने ।
विलोहिताय भर्गाय सहस्राक्षाय ते नमः ॥४०
नमो हंसाय ते नित्यमादित्याय नमोऽस्तु ते ।
नमस्ते वज्रहस्ताय त्र्यम्बकाय नमोऽस्तु ते ॥४१
प्रपद्ये त्वां विरूपाक्षं महान्तं परमेश्वरम् ।
हिरण्मयं गृहे गुप्तमात्मानं सर्वदेहिनाम् ॥४२
नमस्यामि परं ज्योतिर्ब्रह्माणं त्वां परां गतिम् ।
विश्वं पशुपतिं भीमं नरनारीशरीरिणम् ॥४३
नमः सूर्याय रुद्राय भास्वते परमेष्ठिने ।
उग्राय सर्वभक्ताय त्वां प्रपद्ये सदैव हि ॥४४
एतद् वै सूर्यहृदयं जप्त्वा स्तवमनुत्तमम् ।
प्रातः कालेऽथ मध्याह्ने नमस्कुर्याद् दिवाकरम् ॥४५
इदं पुत्राय शिष्याय धार्मिकाय द्विजातये ।
प्रदेयं सूर्यहृदयं ब्रह्मणा तु प्रदर्शितम् ॥४६

---

(→रुद्राः); ब$_1$ दे$_{1.6.8-10}$ न$_1$ द$_1$ म$_1$ उ$_1$ मुवें. मुए. मुब. सनातनः (→सनातनाः). –e) दे$_6$ पुरुषं (→पुरुषः); ब$_1$ सम्मोहतस्त्वां, ब$_3$ सन्महोद्रुस्त्वां, दे$_{1.8-10}$ मुवें. मुए. मुब. सन्महो (दे$_{10}$ °हां) तस्थं, दे$_6$ मन्महेतत्वं, द$_1$ म$_1$ उ$_1$ त्व (उ$_1$ त्वं) महो (म$_1$ °हो) जा (म$_1$ °ज) स्त्वं (द$_1$ °स्त्वां) (→सन्महोतस्त्वां). –f) दे$_3$ कपर्दिनीं (→कपर्दिनम).

३७. –a) दे$_1$ त्वामेव, दे$_4$ प्रणम्य (→त्वमेव). –b) का$_1$ सदसत्सूयते च तत्, ब$_1$ जातश्च जायते च यत्, दे$_{1.6.8.9}$ न$_1$ द$_1$ ग्र$_2$ उ$_1$ मुवें. मुए. जातं (मुवें. °त) यज्जायते च यत्, दे$_4$ ज्ञानं यज्जायते च यत्, म$_1$ जातस्सञ्जायते जगत्. –c) द$_1$ नित्याय (→सूर्याय); म$_1$ नमो नित्याय रुद्राय.

३८. दे$_1$. ⊙; ग्र$_2$ उ$_1$. cd ⊙. –b) दे$_{8.9}$ ग्र$_2$ म$_1$ मुवें. मुए. मुब. च (→ते); दे$_4$ नमोनल समायते, दे$_{10}$ त्वंन्नोमिसृष्टमानसे(?).

३९. ब$_3$ द$_1$. cd ⊙. –a) दे$_2$ हिरण्या° (→हिरण्य°); दे$_{10}$ नित्यं (→तुभ्यम्). –b) द$_1$ उमायाः (→हिरण्य-). –c) म$_1$ नित्यं (→तुभ्यम्); ग्र$_2$ अम्बिकाय नमस्तुभ्यं. –d) ब$_2$ -मम्बायाः, दे$_2$ स्वमाया, न$_1$ मुमाय (→उमायाः).

४०. दे$_1$. ⊙; दे$_6$. cd ⊙. –a) दे$_4$ °कंठाय (→°ग्रीवाय); का$_1$ नमो गणानां पतये. –c) दे$_3$ तिलोहिताय, न$_1$ विलोकिताय, म$_1$ विरोहिताय (→विलोहिताय); ब$_2$ भर्ग्याय, दे$_2$ भर्ज्नीय, दे$_3$ भक्ताय, द$_1$ म$_1$ गर्भाय (→भर्गाय). –d) ग्र$_2$ सहस्रायात्तये (→सहस्राक्षाय ते).

४० श्लोकात् परम् उ$_1$ पुस्तके b,c मध्ये अधिकम्—
35 * महादेवाय शान्ताय शान्त्यतीताय ते नमः । शम्भवे ।

४१. म$_1$. cd ⊙. –a) द$_1$ ग्र$_2$ उ$_1$ तुभ्यम् (→नित्यम्); का$_1$ ब$_2$ नम उमापतये तुभ्यं, ब$_3$ दे$_{2.3}$ नम उमापतये नित्यम्, दे$_{1.8-10}$ मुवें. मुए. मुब. तमोपहाय ते नित्यम्, दे$_6$ नमो हिंस्राय ते नित्यं, न$_1$ नमोमहामिने नित्यं. –b) ग्र$_2$ उ$_1$ नमो नमः (→नमोऽस्तु ते). –c) का$_1$ ब$_{2.3}$ बहु°, द$_1$ ग्र$_2$ उ$_1$ वर° (→वज्र°). –d) दे$_{1.8-10}$ ग्र$_2$ मुवें. मुए. मुब. नमो नमः (→नमोस्तु ते).

४२. ब$_1$. cd ⊙. –a) ब$_1$ त्वं (→त्वां); ब$_{2.3}$ दे$_3$ विरूपाक्ष (→विरूपाक्षं). –b) ब$_{1.3}$ दे$_3$ दहन्तं, ब$_2$ सहान्तं, दे$_2$ महन्तं (→महान्तं). –c) दे$_4$ म$_1$ हिरण्मय, ग्र$_2$ हिरण्मयै (→हिरण्मये); का$_1$ दे$_{2.6}$ द$_1$ उ$_1$ सुप्तम् (→गुप्तम्); म$_1$ हिरण्मय सुप्रभाग्र. –d) म$_1$ नमस्तुभ्यं पिनाकिने.

४३. ब$_1$. ab ⊙. –d) दे$_{10}$ द$_1$ ज्योतिं (→ज्योतिर्). –b) ब$_2$ दे$_{10}$ ग्र$_2$ ब्राह्मणं (→ब्रह्माणं); दे$_{1.4.6.8-10}$ न$_1$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ मुवें. मुए. मुब. परामृतम् (→परां गतिम्). –c) दे$_6$ पाशु-, ग्र$_2$ विश्व (→पशु-); दे$_6$ -पतिर् (→-पतिं). –d) दे$_{1.4}$ शरीरिणाम् (→शरीरिणम्).

४४. –c) न$_1$ रुद्राय (→उग्राय); ब$_1$ दे$_{1.4.8.9}$ मुवें. मुए. °तक्षाय, ब$_{2.3}$ दे$_{3.6}$ न$_1$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ मुब. °भक्षाय, दे$_{10}$ °तत्त्वाय (→°भक्ताय).

४५. –b) दे$_2$ जप्त्वा, दे$_3$ जाचा(?) (→जप्त्वा); न$_1$ जप्त्वास्तेन ममुत्तमम्. –c) ब$_1$ उ$_1$ काले तु, ब$_2$ न$_1$ द$_1$ ग्र$_2$ काले च (→कालेऽथ). –d) दे$_{1.4}$ दिवाकरे (→दिवाकरम्); द$_1$ नमः सूर्यदिवाकरम्.

४६. –a) का$_1$ इदं शिष्याय पुत्राय. –b) दे$_{10}$ द्विजातयः (→द्विजातये). –c) दे$_{2.3}$ प्रयेदं (दे$_2$ °यं) (→प्रदेयं).

सर्वपापप्रशमनं वेदसारसमुद्भवम् ।
ब्राह्मणानां हितं पुण्यमृषिसंङ्घैर्निषेवितम् ॥४७
अथागम्य गृहं विप्रः समाचम्य यथाविधि ।
प्रज्वाल्य वह्निं विधिवज्जुहुयाज्जातवेदसम् ॥४८
ऋत्विक्पुत्रोऽथ पत्नी वा शिष्यो वाऽपि सहोदरः ।
प्राप्यानुज्ञां विशेषेण जुहुयुर्वा यथाविधि ॥४९
पवित्रपाणिः पूतात्मा शुक्लाम्बरधरोत्तरः ।
अनन्यमानसो वह्निं जुहुयात् संयतेन्द्रियः ॥५०

विना दर्भेण यत्कर्म विना सूत्रेण वा पुनः ।
राक्षसं तद्भवेत् सर्वं नामुत्रेह फलप्रदम् ॥५१
दैवतानि नमस्कुर्याद् देयसारान्निवेदयेत् ।
दद्यात् पुष्पादिकं तेषां वृद्धांश्चैवाभिवादयेत् ॥५२
गुरुं चैवाप्युपासीत हितं चास्य समाचरेत् ।
वेदाभ्यासं ततः कुर्यात् प्रयत्नाच्छक्तितो द्विजः ॥५३
जपेदध्यापयेच्छिष्यान् धारयेच्च विचारयेत् ।
अवेक्षेत च शास्त्राणि धर्मादीनि द्विजोत्तमः । वें.२.१८.५३

–d) ब1 ब्राह्मणा तु, दे1.4.8 म1 ब्रह्मणानु, दे6 ब्राह्मणर्थ- (→ब्रह्मणा तु).

४७. दे1.8.10. ⊙. –a) दे3 °पापं (→°पाप-). –b) का1 दे2.4.6 ग्र2 वेदसारं, उ1 वेदसारः (→वेदसार-); ब1 दे2.4.6 न1 द1 ग्र2 म1 उ1 -समुद्धृ(दे3द्ध)तं (→-समुद्भ-वम्). –c) म1 हितत् (→हितं).

अतः परम् द1 ग्र2 म1 उ1 अधिकम्—

36 * यस्तु नित्यं जपेद्विद्वान् प्रेक्षन्नादित्यमण्डलं ।
महापातकयुक्तोऽपि पूयते नात्र संशयः ॥
क्षयास्मारकुष्ठाद्यै व्याधिभिः पीडितो भृशं ।
जप्त्वा शतगुणं स्तोत्रं मुक्ताद्यो भवति ध्रुवं ॥ [4]
भूतग्रहपिशाचादिराजव्यसनकर्षितः ।
स्तवं वध्या रविर्विप्रो मुच्यते महतो भयात् ॥

[–1) उ1 यस्तु नित्यं जपेद्विद्वान *** नित्यमण्डल. –4) उ1 स्तोत्र- (→स्तोत्रं); द1 म1 मुल्लाद्यो, ग्र2 मुल्लासो (→मुक्ताद्यो). –5) उ1 °र्कषितः (→°र्कशितः). –6) म1 उ1 ध्यात्वा रविं (→वध्यारविर्); उ1 सर्वतो (→महतो)].

४८. ब1 दे4. cd ⊙. –a) का1 ब1-3 दे2.3.6.10 न1 अथागत्य, म1 अथाचम्य (→अथागम्य); दे2 विप्राः (→विप्रः); ग्र2 अथागम्यागमं विप्रः. –b) का1 ब1.2 दे2.3 म1 समागम्य, ब3 समागत्य (→समाचम्य); दे1.10 द1 यथा-विधिः (→यथाविधि).

४९. ब1 दे4. ⊙. –a) द1 ग्र2 उ1 पुरोध (उ1 °धा) (→पुत्रोऽथ); दे3 शिष्यो वा, द1 ग्र2 म1 उ1 वा पत्नी (→पत्नी वा). –b) दे3 पत्नी, ग्र2 शिष्ये (→शिष्यो); दे6 वाग्व, न1 द1 ग्र2 म1 उ1 वाथ (→वापि); द1 ग्र2 उ1 द्विजोत्तमः (→सहोदरः). –c) दे10 प्राप्यानुज्ञा, न1 प्राप्यानुज्ञान्, द1 प्राप्तानुज्ञो (→प्राप्यानुज्ञां). –d) का द1 ग्र2 म1 उ1 जुहुयाद्वा, दे1.8-10 मुवें. मुए. ह्यध्वर्युर्वा, दे6 जुहुर्वा * (→जुहुयुर्वा); ब3 दे1.10 यथाविधिः (→यथाविधि).

५०. –a) ब2 पवित्राणि च (→पवित्रपाणिः). –b) ब1 °धरो द्विजः, ब2.3 °धरो तु वः, दे1.8-10 मुवें. मुए. मुब. °धरः शुचिः, दे3.6 °धरोन्तरः, दे4 म1 °धरो वरः, द1 ग्र2 उ1 °धरो नरः, म1 °धरोत्परः (→°धरोत्तरः). –c) ब1 दे3 द1 ग्र2 म1 °मनसो, दे1.8-10 मुवें. मुए. मुब. °मनसा (→°मानसो); दे1.8-10 मुवें. मुए. मुब. नित्यं, न1 वह्निर् (→वह्निं). –d) दे4 जुहुयांश्च, दे10 जुहुया स (→जुहुयात्सं-).

५१. –b) ब2.3 मन्त्रेण यत्, दे3 सूत्रेण यत् (→सूत्रेण वा). –c) दे4 तत्र, उ1 कर्म (→सर्वं). –d) द1 नापुत्रेह, ग्र2 नामुत्रेव (→नामुत्रेह).

५२. –a) दे10 देवतानि, न1 देवताय (→दैवतानि); दे6 देवतापूजनं कुर्याद्. –b) का1 दे1.4 6.8-10 न1 उ1 मुवें. मुए. मुब. उपहारान्, ब2 दे3 देव (दे3 °वे) सारान्, दे4 द1 ग्र2 म1 उपहारं (→देयसारान्).

५३. –a) ब2.3 दे2.6 म1 उ1 गुरूंश्चैव (→गुरुञ्चैव); का1 ब2 दे2.3 अभि-, ग्र2 अहि-(?) (→अपि); दे10 गुरुं चैवोपा * सितं. –b) दे3 हितंश्वास्य, दे6 ग्र2 उ1 हितं चैव, दे10 हितं वाच्यैः (→हितं चास्य). –d) ब1 ग्र2 म1 भक्तितो (→शक्तितो); दे1.8-10 उ1 मुए. द्विजाः (→द्विजः).

५४. दे10. ५४e-५५b ⊙. –b) ब2.3 श्रावयेत्, दे3 वारयेत् (→धारयेत्); दे1 द्वैं, दे4 वा, दे6.8.9 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. वैं (→च); ब2.3 दे1.8-10 वि (दे9 व) धारयेत्, न1 विचारयन् (→विचारयेत्); का1 वेदवेदांगमेव वा. –c) ब2 अवेक्षेत् सर्व-, ब3 अवेक्ष्यते च, दे1.8.9 अवेक्षिताथ, दे3 अवेक्षोत च, द1 म1 अवेक्षते च, उ1 अपेक्षेते च, मुए. मुब. अवेक्षेताथ, मुवें. अवेक्ष्य तच्च (→अवेक्षेत च); दे1.8-10 मुवें. मुब. शास्त्रेण (→शास्त्राणि). –d) दे4 धर्मांश्चैव (→धर्मादीनि); का1 ब2.3 दे1.4.6.8.9 द1 म1 उ1 मुवें. मुए. मुब. द्विजोत्तमाः (→द्विजोत्तमः). –cd) दे10 अवेक्षितं

वें. २.१८.५४ वैदिकांश्चैव निगमान् वेदाङ्गानि विशेषतः ॥५४
उपेयादीश्वरं चाथ योगक्षेमप्रसिद्धये ।
साधयेद् विविधानर्थान् कुटुम्बार्थे ततो द्विजः ॥५५
ततो मध्याह्नसमये स्नानार्थं मृदमाहरेत् ।
पुष्पाक्षतान् कुशतिलान् गोमयं शुद्धमेव च ॥५६
नदीषु देवखातेषु तडागेषु सरस्सु च ।
स्नानं समाचरेन्नित्यं गर्तप्रस्रवणेषु च ॥५७
परकीयनिपानेषु न स्नायाद् वै कदाचन ।
पञ्चपिण्डान् समुद्धृत्य स्नायाद् वाऽसंभवे पुनः ॥५८
मृदैकया शिरः क्षाल्यं द्वाभ्यां नाभेस्तथोपरि ।
अधश्च तिसृभिः कार्यं पादौ षड्भिस्तथैव च ॥५९
मृत्तिका च समुद्दिष्टा त्वार्द्रामलकमात्रिका ।
गोमयस्य प्रमाणं तत् तेनाङ्गं लेपयेत् ततः ॥६०
लेपयित्वा तु तीरस्थस्तल्लिङ्गैरेव मन्त्रतः ।
प्रक्षाल्याचम्य विधिवत् ततः स्नायात् समाहितः॥६१
अभिमन्त्र्य जलं मन्त्रैस्तल्लिङ्गैर्वारुणैः शुभैः ।
भावपूतस्तदव्यक्तं ध्यायन् वै विष्णुमव्ययम् ॥६२

---

योगक्षेमप्रसिद्धार्थे च वै द्विजाः. –e) न$_1$ वेदिकाश्चैव, द$_1$ ग्र$_2$ म$_1$ उ$_1$ वैदिकांश्चापि (→वैदिकांश्चैव); म$_1$ नियमान् (→निगमान्). –f) दे$_2$ वेदांगानि, दे$_4$ वेदांतानि (→वेदांगानि); दे$_{1.4.6.8.9}$ द$_1$ ग्र$_2$ म$_1$ मुवें. मुए. मुब. च सर्वशः, उ$_1$ च सर्वतः (→विशेषतः).

५५. दे$_{10}$. ab ⊙. –a) का$_1$ उपायाद् (→उपेयाद्); दे$_{4.6}$ न$_1$ मुवें. मुए. मुब. वाथ (→चाथ). –b) दे$_{3.4}$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ योगक्षेमार्थसिद्धये. –c) दे$_{3.6}$ साधयेद् विधिना ह्यर्थान्. –d) का$_1$ कुंठं वार्थे, द$_1$ म$_1$ कुटुंबार्थं, ग्र$_2$ कुटुम्बार्था, उ$_1$ कुटुम्बार्थान् (→कुटुम्बार्थे); का$_1$ दे$_{1.6.8-10}$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ मुए. मुब. द्विजोत्तमः (दे$_{1.10}$ उ$_1$ °माः); ब$_1$ द्विजातये, + ततो द्विजः, ब$_3$ ततो द्विजाः (→ततो द्विजः).

५६. –b) दे$_{10}$ मृदयाहरेत्, ग्र$_2$ मृतमाहरेत् (→मृदमाहरेत्). –c) का$_1$ ब$_{1-3}$ दे$_{2.3}$ न$_1$ पुष्पाक्षतं (ब$_3$ °त) (→पुष्पाक्षतान्). –d) ब$_1$ गोमयं सिद्धम्, दे$_{1.8-10}$ मुवें. मुए. मुब. गोशकृच्छुद्धम् (→गोमयं शुद्धम्); दे$_{1.4.8-10}$ मुवें. मुए. मुब. वा (→च).

५७. –a) द$_1$ ग्र$_2$ म$_1$ °घातेषु (→°खातेषु). –b) न$_1$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ तटाकेषु (→तडागेषु); दे$_1$ सरत्सु, द$_1$ ग्र$_2$ उ$_1$ सरित्सु (→सरस्सु). –d) ब$_1$ गर्भ° (→गर्त°); का$_1$ दे$_{1.10}$ °प्रश्रवणेषु (→°प्रस्रवणेषु).

५८. –a) दे$_{10}$ म$_1$ परिकीय- (म$_1$ °यं) (→परकीय-); ब$_1$ -निकातेषु, दे$_{10}$ -निपातेषु, न$_1$ -निदानेषु (→-निपानेषु). –b) ग्र$_2$ ना (→न). –d) दे$_4$ द$_1$ म$_1$ उ$_1$ [अ]सम्भवेत् (→[अ]सम्भवे).

५९. –a) दे$_{4.10}$ उ$_1$ मृदेकया, द$_1$ मृदकेया, मुब. मृत्तिकया (→मृदैकया);का$_1$ ब$_3$ दे$_{2.3}$ न$_1$ द$_1$ ग्र$_2$ उ$_1$ क्षाल्य (→क्षाल्यं). –b) दे$_{10}$ नाभौस्तदोपरि (→नाभेस्तथोपरि). –c) दे$_{1.4.8.9}$ न$_1$ मुवें. मुए. मुब. अधस्तु, दे$_{10}$ अधः स (→अधश्च); ब$_1$ दे$_4$ द$_1$ म$_1$ उ$_1$ कार्यं, दे$_{1.2.9}$ मुब. कायः, दे$_{10}$ मुवें. मुए. कार्यः, ग्र$_2$ कुर्यात् (→कार्यं). –d) का$_1$ दे$_2$ तु (→च).

६०. –a) उ$_1$ तु (→च); दे$_{10}$ समुत्तिष्टा (→समुद्दिष्टा). –b) का$_1$ त्वर्द्रा-, ब$_2$ म$_1$ धात्रा-, दे$_{1.8.9}$ स्वार्द्रा-, दे$_6$ ग्र$_2$ उ$_1$ आर्द्रा-, न$_1$ द$_1$ त्वा(द$_1$ त्व)दा- (?), दे$_{10}$ मुवें. मुए. मुब. सार्द्रा- (→त्वार्द्रा-); न$_1$ -मृत्तिका, द$_1$ उ$_1$ -मात्रतः, ग्र$_2$ म$_1$ °मात्रकः (म$_1$°का) (→-मात्रिका). –c) दे$_4$ प्रमाणे (→प्रमाणं); ब$_2$ दे$_{1.3.6.8-10}$ उ$_1$ मुवें. मुए. तु, दे$_4$ च (→तत्). –d) दे$_{1.8-10}$ मुवें. मुए. मुब. पुनः, दे$_4$ तपः (→ततः).

६१. –a) दे$_{10}$ लिपयित्वा (→लेपयित्वा); ब$_{1.3}$ न$_1$ [अ]थ तीरस्थस्, दे$_{1.8-10}$ मुवें. मुए. मुब. तीरसंस्थं, दे$_3$ [अ]प्यतीरस्थस्, दे$_4$ म$_1$ तु तीरस्थास् (म$_1$ °स्थां), ग्र$_2$ त्वरीरस्थास् (?) (→तु तीरस्थस्). –b) का$_1$ तद्वलिगे च, ब$_{1-3}$ दे$_3$ न$_1$ तल्लिङ्गे नैव, दे$_6$ शालिलैश्चैव (→तल्लिङ्गैरेव).

६२ –a) दे$_4$ °मंत्रि (→°मन्त्र्य); द$_1$ जलैर् (→जलं). –b) दे$_4$ च लिगैर्, दे$_6$ वेदांगैर्, ग्र$_2$ म$_1$ अलिगैर्, उ$_1$ तरंगैर् (?) (→तल्लिङ्गैर्); द$_1$ स्मृतः, ग्र$_2$ म$_1$ उ$_1$ ततः (→शुभैः). –c) ब$_2$ भावपूत, दे$_6$ भागपूत-, दे$_{10}$ भवपुतस्, ग्र$_2$ भावभूतस्- (→भावपूतस्); दे$_6$ -तरव्यक्तं (?), न$_1$ ग्र$_2$ तदाव्य (ग्र$_2$ व) क्तं (→तदव्यक्तं). –d) ब$_2$ मुब. ध्यायेद्वै, दे$_{1.8-10}$ मुवें. मुए. धारयेद्, दे$_{4.6}$ द$_1$ धारयन् (दे$_6$ °यान्), ग्र$_2$ उ$_1$ धारयं, म$_1$ भावयन् (→ध्यायन्वै); दे$_3$ ध्यायन्वै विष्णुकेवलं.

आपो नारायणोद्भूतास्ता एवास्यायनं पुनः ।
तस्मान्नारायणं देवं स्नानकाले स्मरेद् बुधः ॥६३
प्रोच्य सोंकारमादित्यं त्रिर्निमज्जेज्जलाशये ।
आचान्तः पुनराचामेन्मन्त्रेणानेन मन्त्रवित् ॥६४
अन्तश्चरसि भूतेषु गुहायां विश्वतो मुखः ।
त्वं यज्ञस्त्वं वषट्कार आपो ज्योती रसोऽमृतम् ॥६५
द्रुपदां वा त्रिरभ्यस्येद् व्याहृतिप्रणवान्विताम् ।
सावित्रीं वा जपेद् विद्वान् तथा चैवाघमर्षणम् ॥६६
ततः संमार्जनं कुर्यादापो हि ष्ठा मयोभुवः ।
इदमापः प्रवहत व्याहृतिभिस्तथैव च ॥६७
ततोऽभिमन्त्र्य तत् तीर्थमापो हि ष्ठादिमन्त्रकैः ।
अन्तर्जलगतो मग्नो जपेत् त्रिरघमर्षणम् ॥६८
त्रिपदां वाऽथ सावित्रीं तद्विष्णोः परमं पदम् ।
आवर्त्तयेद् वा प्रणवं देवं वा संस्मरेद्धरिम् ॥६९
द्रुपदादिवयो मन्त्रो यजुर्वेदे प्रतिष्ठितः ।
अन्तर्जले त्रिरावर्त्य सर्वपापैः प्रमुच्यते ॥७०
अपः पाणौ समादाय जप्त्वा वै मार्जने कृते ।
विन्यस्य मूर्ध्नि तत् तोयं मुच्यते सर्वपातकैः ॥७१
यथाऽश्वमेधः क्रतुराट् सर्वपापापनोदनः ।
तथाऽघमर्षणं सूक्तं सर्वपापापनोदनम् ॥७२ वें.२.१८.७२

६३. –a) का1 अपो (→आपो). –b) दे10 ययुः, द1 ग्र2 ततः (→पुनः); का1 तावस्यायतनं पुनः, दे2 तावास्यालयनं पुनः, दे3 उ1 ता एवास्यायतनं पुनः (उ1 ततः).

६४. –a) ब1 दे1.4.6.8.9 न1 द1 म1 मुवें. मुए. मुब. प्रेक्ष्य, ग्र2 प्रेक्ष-, उ1 प्रेक्ष्यं (→प्रोच्य); दे3 मोङ्कारम्, दे6 ॐ कारम्, द1 नोंकारम्, ग्र2 म1 मण्डलम् (→सोङ्कारम्); दे3.6.10 न1 आदित्य (→आदित्यं). –b) दे1.8 त्रिर्निमज्जे, दे3 *र्न्निमज्ज, दे4 त्रिर्विमज्ज, न1 त्रीणिमजे, द1 त्रिर्निमज्ज, ग्र2 त्रीन्निमज्यय, म1 त्रिर्निमज्य (→त्रिर्निमज्जेत्); का1 दे1.8.9 जलाश्रये, ग्र2 जलाजयेत् (→जलाशये). –c) न1 आचान्तुः (→आचान्तः); का1 पुनः पुनरथोत्थाय, ब2.3 दे2.3 पुनः पुनरथाचामेन्.

६५. –a) ते1 चरन्तं (→चरसि). –b) दे4.10 ते1 मुखं (→मुखः). –d) दे3 अपो (→आपो); ब3 दे6 न1 ते1 द1 ज्योति (→ज्योती); ते1 रसोऽच्युतं (→रसोऽमृतम्).

६६. –a) दे2 क्रुपदीवा, न1 द्विपदां वा, ते1 ग्र2 म1 द्रुपदां च, द1 द्रुपदीं च (→द्रुपदां वा); का1 त्रिपदीं त्रिरभ्यस्ये*, उ1 द्रुपदां चामरभ्यस्येद्. –b) ब1-3 दे1-3.6.10 म1 मुवें. मुए. मुब. व्याहृतिं (→व्याहृति-); दे3 प्रणवात्मिकां, दे6 उ1 प्रणवान्वितं (उ1 °तान्) (→प्रणवान्विताम्). –c) द1 ग्र2 म1 उ1 च (→वा). –d) दे4 तथैव च, ग्र2 यथा वैव (→तथा चैव); न1 तथौच्चैवापकर्षणम्.

६७. द1. ⊙. –a) दे1.6.9 सन्मार्जनं (→सम्मार्ज्जनं); दे1.8-10 मुए. मुब. कार्यं (→कुर्याद्). –c) का1 प्रवक्तव्या, ब2 दे1.8-10 मुवें. मुए. प्रवहतो, दे4 प्रवहंत, दे6 ते1 प्रवहता (→प्रवहत). –d) का1 व्याहृतीभ्यस्, दे2.3.6.8 व्याहृतीभिस् (→व्याहृतिभिस्).

६८. द1. ⊙. –a) दे1.4.8-10 न1 मुवें. मुए. मुब. तथाभिमन्त्र्य (→ततोभिमंत्र्य); दे1.4.6.8-10 ग्र2 म1 उ1 मुवें. मुए. मुब. तत्तीयम् (→तत्तीर्थम्); ते1 ततोभिमन्त्रितं तोयं. –b) ब1 न1 आपो हि ष्ठाभि (ब1 य) मंत्रकैः, दे1.8-10 मुवें. मुए. मुब. आपो हि ष्ठादिभिस्त्रिकैः, ते1 आपो हि ष्ठेतिमंत्रकैः, ग्र2 म1 आपो हि ष्ठादिमन्त्रतः, उ1 आपो हि ष्ठाभिमंत्रितः. –c) न1 °गतजले, ते1 °जले ततो (→°जलगतो); दे3 विप्रो, दे4 मम्लास्, दे6 मग्नौ, ते1 मग्नस् (→मग्नो). –d) ब1 जपेच्चैव, दे4 ते1 त्रिर्जपेद् (→जपेत् त्रिर्).

६९. –a) ब3 दे1.4.8-10 म1 मुवें. मुए. मुब. द्रुपदां (→त्रिपदां); दे10 वाच (→वाऽथ); ते1 उपवीतीति सावित्री. –c) दे1.4.8-10 मुवें. मुए. मुब. च (→वा). –d) ते1 तं देवं, द1 ग्र2 वेदं च (→देवं वा); द1 ग्र2 म1 उ1 [अ]नुस्मरेद्धरिम् (→संस्मरेद्धरिम्).

७०. –a) द1 ग्र2 म1 उ1 द्रुपदादिश्च (→द्रुपदादिव-). –b) दे4.6 ग्र2 यजु (दे6 यु) र्वेद- (→यजुर्वेदे); दे3 प्रतिष्ठि*ः, ते1 प्रतिष्ठितम् (→प्रतिष्ठितः). –c) ब2.3 म1 त्रिरावृत्य, ग्र2 त्रिरावर्त्या (→त्रिरावर्त्य).

७१. –a) दे3.6 न1 ते1 ग्र2 उ1 आपः, दे4 वतः (→अपः); दे8 ग्र2 उ1 प्राणौ (उ1 °णो) (→पाणौ).

७२. ग्र2 म1. cd ⊙. –a) दे10 पयः स्वमेधः (→यथाश्वमेधः); का1 ब1 दे4.6.9.10 मुवें. मुए. ऋतुराट् (→क्रतुराट्). –b) का1 दे4 सर्वपापप्रणो (दे4 °तो) नदः, ब2 ते1 द1 ग्र2 म1 उ1 सर्वपापापनोदकः. –c) ब3 अथ (→तथा); दे1.8-10 न1 मुवें. मुए. प्रोक्तं (→सूक्तं). –d) द1 उ1 सर्वपापाप्रणोदकं (उ1 °नं).

वें२.१८.७३ अथोपतिष्ठेदादित्यं मूर्ध्नि पुष्पान्विताञ्जलिम् ।
प्रक्षिप्यालोकयेद् देवमुद्वयं तमसस्परि ॥७३
उदुत्यं चित्रमित्येते तच्चक्षुरिति मन्त्रतः ।
हंसः शुचिषदेतेन सावित्र्या च विशेषतः ॥७४
अन्यैश्च वैदिकैर्मन्त्रैः सौरैः पापप्रणाशनैः ।
सावित्रीं वै जपेत् पश्चाज्जपयज्ञः स वै स्मृतः ॥७५
विविधानि पवित्राणि गुह्यविद्यास्तथैव च ।
शतरुद्रीयमथर्वशिरः सौरांश्च शक्तितः ॥७६
प्राक्कूलेषु समासीनः कुशेषु प्राङ्मुखः शुचिः ।
तिष्ठंश्चेदीक्षमाणोऽर्कं जप्यं कुर्यात् समाहितः ॥७७
स्फाटिकेन्द्राक्षरुद्राक्षैः पुत्रजीवसमुद्भवैः ।
कर्तव्या त्वक्षमाला स्यादुत्तरादुत्तमा स्मृता ॥७८
जपकाले न भाषेत नान्यानि प्रेक्षयेद् बुधः ।
न कम्पयेच्छिरोग्रीवां दन्तान्नैव प्रकाशयेत् ॥७९
गुह्यका राक्षसा सिद्धा हरन्ति प्रसभं यतः ।
एकान्ते सुशुभे देशे तस्माज्जप्यं समाचरेत् ॥८०

---

**७३.** ब1. ⊙. –a) दे1 म1 अथोपदिष्ठेद्, ग्र2 अथो *** (→अथोपतिष्ठेद्). –d) दे1.8-10 मुवें. मुए. मुब. पुष्पाक्षतान्वितं, दे4.6 न1 द1 म1 उ1 पुष्पान्वितं जलं, ते1 प्रह्वान्वितांजलिः (→पुष्पान्विताञ्जलिम्). –ab) दे1.4.6.8-10 न1 ते1 द1 ग्र2 मुवें. मुए. मुब. आदित्य (दे6 त्यं)मूर्ध्वं (दे1.6 °ध्नं) (→आदित्यं मूर्ध्नि). –c) दे10 प्रतित्य (?) (→प्रक्षिप्य); ब2.3 दे3 न1 आलोकयन् देवम्, दे1.2 आलोकय देवं, दे6.8.9 ग्र2 म1 आलोकयेदेवं, ते1 अम्भः पठेदेवं (→आलोकयेद्देवम्). –c) का1 मूर्ध्नेयं, ब2.3 उ1 मुवें. मुए. मुब. उर्ध्वं यस्, दे1 युद्वयं, दे2.3 उर्द्धं यं, दे6 दुद्वमं, ग्र2 उद्यन्तं (→उद्वयं); ब2 तपसः परं, ब3 दे4 ते1 उ1 मुवें. मुए. मुब. तमसः परः (ब3 दे4 ते1 उ1 °रं) (→तमसस्परि).

**७४.** ब1. ⊙. –a) ब3 उद्धृत्य, दे3 उद्वत्यं, दे4.10 ग्र2 उदित्यं (दे4 °त्य),ते1 आदित्यं, म1 यदुक्तं (→उदुत्यं); का1 चित्तम् (→चित्रम्); ब3 दे2.6 न1 ते1 द1 म1 मुब. इत्येतत्, दे3 एतत्तं, ग्र2 उ1 इत्यंतं (→इत्येते). –b) दे10 मंत्रितः (→मंत्रतः). –c) का1 ब3 हंसशुचिप (ब3 °र्ये)देतेन, द1 ग्र2 म1 उ1 हंसः शुचिषदि (म1 °मि) त्येतत्, मुवें. मुए. हंसः शुचिषदन्तेन. –d) दे1.8-10 मुवें. मुए. सावित्र्या स, दे4 उपस्थाप्य (→सावित्र्या च).

**७५.** ब1. ⊙. –a) ग्र2 विविधैर् (→वैदिकैर्). –b) ते1 घोरैः, द1 सारैः (→सौरैः); दे6 पापं (→पाप-); ब2 °प्रणोदकैः, दे4 °प्रणापनैः, म1 °प्रणासनः (→°प्रणाशनैः) –c) दे6 वा, उ1 च (→वै). –d) मुब. परमाञ्च चतुष्पदाम्.

**७६.** ब1. ⊙. –a) ब2 च मित्राणि, ब3 दे2.3 च चित्राणि (→पवित्राणि). –b) का1 ग्र2 गुह्यां (ग्र2 °ह्या), दे4 गृह्य- (→गुह्य); का1 ब3 दे4 विद्यां, दे3 विद्यात् (→विद्यास्). –c) का1 ब3 दे3 मुब. °रुद्रियम् (→°रुद्रीयम्); का1 ब2.3 दे3 न1 मुब. आथर्व-, दे1.8-10 मुवें. मुए. शिरसं, द1 इत्यर्थं, ग्र2 म1 उ1 अत्यर्थं (→अथर्व-). –d) दे1.8.9 मुवें. मुए. सौरान्मंत्राश्च सर्वतः, दे4 शिरसो मंत्राश्च शक्तितः, दे6 म1 सौरान्मंत्रांश्च शक्तितः, दे10 सौरान् मन्त्राश्च भक्तितः, दे1 सौरात्सूत्रांश्च शक्तितः, द1 ग्र2 उ1 सौरान्मंत्रान्समाहितः.

**७७.** –a) दे1 मुए. प्राकृतेषु (→प्राक्कूलेषु). –b) ब2 प्रयतः (→प्राङ्मुखः). –c) दे6 अर्घं (→अर्कं); दे1.6.8-10 ते1 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. तिष्ठंश्च वीक्षमाणोऽर्कं, दे4 तिष्ठस्यवीक्षमाणोऽर्कं. –d) ब2 दे4.6 ते1 म1 जपं, दे10 °जाप्यं, द1 ग्र2 उ1 नमस् (→जप्यं).

**७८.** –a) का1 ते1 स्फटिकद्राक्ष , दे4.6 ग्र2 म1 स्फ- (ग्र2 म1 स्फा)टिकाब्जाक्ष-, न1 स्फाटिकैद्राक्ष-, द1 स्फाटिकाज्वाल-, उ1 स्फटिकांवाक्ष- (→स्फाटिकेन्द्राक्ष); का1 ब1-3 दे2.3 न1 -रुद्राक्ष-, दे1 -रुद्राक्षौः(?) (→-रुद्राक्षैः). –b) दे1.6 पुत्रं, दे8.9 पत्र (→पुत्र-); ग्र2 °दीप° (→°जीव°). –c) ब2 चाक्ष° (→त्वक्ष°); दे4 °मालाख्याः (→°मालास्याद्). –d) ब1 उत्तरादुत्तरा स्मृताः, दे1 उत्तरोतदुत्तमाऽ*, दे3 उत्तमास्मृता च ये*, दे4 उत्तरादुत्तरी मृतः, दे8-10 उत्तरादुत्तरोत्तराः, न1 द1 म1 उत्तरातूत्तमा स्मृता.

**७९.** –a) दे1 °कालो न (→°कालेन); ते1 यथाकालं चाभ्यसेत. –b) दे1 व्यंगं न, दे4 न1 द1 ग्र2 म1 उ1 नांगानि, दे8.9 व्यंगां न, दे10 मुवें. मुए. व्यंगान (→नान्यानि); ब2 प्रेक्षते, न1 प्रेषयेद्, म1 उ1 मुवें. मुए. प्रक्षयेद् (→प्रेक्षयेद्). –c) ब1-3 दे3 ते1 म1 उ1 मुब. ग्रीवं, दे6 वाथ, ग्र2 ग्रीवा- (→ग्रीवां). –d) दे6 दशन्, उ1 मन्त्रान् (→दन्तान्).

**८०.** –b) न1 प्रभवं (→प्रसभं); ब1 यत्, ब3 दे3 भयात् (→यतः). –c) का1 दे3.6 एकान्ते शुशुभे देशे, ब1.3 न1 ग्र2 एकान्तेषु शुभे देशे, दे1.8-10 एकांते सुशुचौ देशे, मुवें. मुए. मुब. एकान्तेषु शुचौ देशे. –d) दे10 तत्र जाप्यं (→तस्माज्जप्यं).

चण्डालाशौचपतितान् दृष्ट्वाचम्य पुनर्जपेत् ।
तैरेव भाषणं कृत्वा स्नात्वा चैव जपेत् पुनः ॥८१
आचम्य प्रयतो नित्यं जपेदशुचिदर्शने ।
सौरान् मन्त्रान् शक्तितो वै पावमानीस्तु कामतः ॥८२
यदि स्यात् क्लिन्नवासा वै वारिमध्यगतो जपेत् ।
अन्यथा तु शुचौ भूम्यां दर्भेषु सुसमाहितः ॥८३
प्रदक्षिणं समावृत्य नमस्कृत्वा ततः क्षितौ ।
आचम्य च यथाशास्त्रं शक्त्या स्वाध्यायमाचरेत् ॥८४
ततः संतर्पयेद् देवानृषीन् पितृगणांस्तथा ।
आदावोङ्कारमुच्चार्य नमोऽन्ते तर्पयामि वः ॥८५
देवान् ब्रह्मऋषींश्चैव तर्पयेदक्षतोदकैः ।
तिलोदकैः पितॄन् भक्त्या स्वसूत्रोक्तविधानतः ॥८६
अन्वारब्धेन सव्येन पाणिना दक्षिणेन तु ।
देवर्षींस्तर्पयेद् धीमानुदकाञ्जलिभिः पितॄन् ॥८७
यज्ञोपवीती देवानां निवीती ऋषितर्पणे ।
प्राचीनावीती पित्र्ये तु स्वेन तीर्थेन भावतः ॥८८
निष्पीड्य स्नानवस्त्रं तु समाचम्य च वाग्यतः ।
स्वैर्मन्त्रैरर्चयेद् देवान् पुष्पैः पत्रैरथाम्बुभिः ॥८९ बं.२.१८.८८

८१. ग्र2. bcd ⊙; दे4 द1 म1 उ1. ab ⊙. –a) ब3 मुब. चाण्डाला-, दे1.4.8-10 उ1 चंडालान्, दे6 चांडाली, ते1 चण्डालं (→चण्डाला-); ब2 दे1.8 मुए. -शौचि-, दे4 ते1 चैव (→-शौच-); ब1 चण्डालासौ निपतितान्, ग्र2 चण्डालाद्यै ****. –b) दे1.8-10 ते1 मुवें. मुए. दृष्ट्वा चैव (→दृष्ट्वाचम्य). –d) दे1.8-10 ते1 मुवें. मुए. मुब. पुनर्जपेत्, न1 जले पुनः (→जपेत्पुनः); दे6 स्नात्वाचम्य जपेत्पुनः.

८२. द1 ग्र2. ab ⊙. –c) म1 सौर- (→सौरान्). –d) का1 दे6 पावमानांस्तु, दे10 पावमानैस्तु, द1 उ1 पावनीयास्तु, ग्र2 वाचनीयांश्च, म1 पावमानीश्च (→पावमानीस्तु); दे4 ते1 सर्वतः, द1 ग्र2 म1 उ1 वाग्यतः (→कामतः).

८३. –a) ब3 यदि स्यात् स्विन्न-, ते1 यदि स्याच्छुष्क-, म1 स्पन्दितात् क्लिव- (→यदि स्यात् क्लिन्न-); न1 द1 उ1 -वासो, म1 -पोसा (→-वासा). –b) दे4 न1 मुवें. मुए. °मध्यं, द1 ग्र2 °मध्ये (→°मध्य-); दे1 -गतोपि वा, दे4.8-10 ते1 मुवें. मुए. -गतोपि वा (→-गतो जपेत्). –c) दे6 च, दे10 न1 द1 ग्र2 म1 उ1 वा (→तु); दे4 शुभौ (→शुचौ); दे4 भूमौ, ते1 ग्र2 भूम्यां, मुब. देशे (→भूम्यां). –d) दे3 दर्भे स्व स्व समाहितः, दे6 देर्भ्येषु व समाहितः, दे4 दर्भेष्वतुं समाहितः, दे10 दर्भेषस्तु समाहितः, ते1 उपविष्टः समाहितः, म1 दर्भेषु तु समाहितः.

८४. –a) दे1 प्रादक्षिणं, न1 प्रदक्षिणां, द1 प्रदक्षिणे (→प्रदक्षिणं); दे1 समावृत्या (→समावृत्य). –b) का1 ब2.3 दे2-4.6 मुवें. मुए. मुब. नमस्कृत्य, ते1 नमस्कुर्यात् (→नमस्कृत्वा). –c) द1 ग्र2 आचम्याथ (→आचम्य च); दे1 -शास्त्रां (→-शास्त्रं). –d) ब1.3 दे8.10 मुवें मुए. भक्त्या, म1 शक्त- (→शक्त्या).

८५. –b) का1 ब1-3 दे3 न1 °गणान् क्रमात् (→°गणांस्तथा); दे2 पीतृगणानिक्रमात्. –c) का1 आवृत्य (→उच्चार्य). –d) ब1 दे8-10 न1 ते1 ग्र2 उ1 मुवें. मुए. मुब. नामान्ते, दे1 नामतो, दे6 नमौ ने(?), म1 यामान्ते(?) (→नमोऽन्ते); द1 पर्ययामि (→तर्पयामि); का1 ब1-3 दे3.4 न1 ते1 द1 ग्र2 म1 उ1 च, दे1 वा (→वः).

८६. –a) का1 दे2.8.9 ते1 ब्रह्म र्षींश्चैव, दे1 ब्राह्मर्षींश्चैव (→ब्रह्म ऋषींश्चैव). –b) ब1 निर्वपेद्, दे2 दर्पयेद् (→तर्पयेद्); न1 अक्षयोदकैः, ग्र2 दक्षिणोदकैः (→अक्षतोदकैः). –d) ब2.3 °गृह्योक्त°, दे6 °सूक्तेक्त° (?) (→°सूत्रोक्त°).

८७. दे10. ८७a –९४ b ⊙; दे1.8.9 मुए. मुब. ab ⊙. –a) ब1 अन्वारर्धेन, ब3 दे3 अन्नारब्धेन, ते1 अन्वारभेत, द1 उ1 अन्वारब्धोथ, ग्र2 अन्वारब्धाथ (→अन्वारब्धेन); ब1 वासेन, उ1 सर्वेभ्यः (→सव्येन). –c) दे6 उ1 विद्वान्, म1 देवान् (→धीमान्).

८८. दे10. ⊙. –a) का1 यज्ञोपवीतवान् देवान्नि. –b) म1 निवीतीम् (→निवीती); दे4 ते1 °तर्पणं, दे6 °तर्पणैः, म1 °तर्पयेत् (→°तर्पणे). –c) दे2.6 म1 उ1 प्राचीनावीति (→प्राचीनावीती); ब2 दे1.8.9 मुए. पैत्र्येण, दे3 पुत्रे तु, न1 तृप्ये तु (→पित्र्ये तु). –d) दे1 स्तेव, दे3 स्तेन (→स्वेन); ब1-3 दे2.3 भारत, दे1.8-10 उ1 मुवें. मुए. मुब. भावितः, न1 भामतः (→भावतः).

८९. दे10. ⊙; ब1.3 दे3. ab ⊙. –a) दे2 निष्पीड्या, ते1 त्रिःप्राश्य, द1 ग्र2 म1 उ1 निपीड्य (→निष्पीड्य); ब2 दे4.6 द1 ग्र2 म1 उ1 वै (→तु). –b) ते1 समापीड्य (→समाचम्य); का1 ते1 तु (→च). –c) ब3 यैर्मन्त्रैर्, दे4 स्वमंत्रैर् (→स्वैर्मन्त्रैर्). –d) ते1 द1 पत्रैः, ग्र2 पुष्प-(→पुष्पैः); ते1 द1 पुष्पैर् (→पत्रैर्); ब1 अपि वाभिः, द1 ग्र2 म1 तथांबुभिः (→अथाम्बुभिः).

वें.२.१८.८६ ब्रह्माणं शंकरं सूर्यं तथैव मधुसूदनम् ।
अन्यांश्चाभिमतान् देवान् भक्त्या चाक्रोधनोऽत्वरः ॥९०
प्रदद्याद् वाऽथ पुष्पाणि सूक्तेन पौरुषेण तु ।
आपो वा देवताः सर्वास्तेन सम्यक् समर्चिताः ॥९१
ध्यात्वा प्रणवपूर्वं वै दैवतानि समाहितः ।
नमस्कारेण पुष्पाणि विन्यसेद् वै पृथक् पृथक् ॥९२
न विष्ण्वाराधनात् पुण्यं विद्यते कर्म वैदिकम् ।
तस्मादनादिमध्यान्तं नित्यमाराधयेद्धरिम् ॥९३
तद्विष्णोरिति मन्त्रेण सूक्तेन पुरुषेण तु ।
नैताभ्यां सदृशो मन्त्रो वेदेषूक्तश्चतुर्ष्वपि ॥९४
निवेदयेत स्वात्मानं विष्णावमलतेजसि ।
तदात्मा तन्मनाः शान्तस्तद्विष्णोरिति मन्त्रतः ॥९५
अथवा देवमीशानं भगवन्तं सनातनम् ।
आराधयेन्महादेवं भावपूतो महेश्वरम् ॥९६
मन्त्रेण रुद्रगायत्र्या प्रणवेनाथ वा पुनः ।
ईशानेनाथ वा रुद्रैस्त्र्यम्बकेन समाहितः ॥९७
पुष्पैः पत्रैरथाद्भिर्वा चन्दनाद्यैर्महेश्वरम् ।
उक्त्वा नमः शिवायेति मन्त्रेणानेन योजयेत् ॥९८
नमस्कुर्यान्महादेवं ऋतं सत्यमितीश्वरम् ।
निवेदयीत स्वात्मानं यो ब्रह्माणमितीश्वरम् ॥९९

९०. दे10. ⊙. –a) ब1 ब्राह्माणं, दे1 ब्रह्माणां, दे2 ब्रह्मणं (→ब्रह्माणं). –c) द1 उ1 स्वाभि° (→चाभि°); ग्र2 अन्यां स्वभक्त्या देवांश्च. –d) का1 मुब. भक्त्या वा (मुब. चा) क्रोधनो नरः, ब2.3 दे2.6 भक्त्या चाक्रोधनोत्तरं (ब3 तु वः), दे1.8.9 मुवें. मुए. भक्त्याचारो नरोत्तमः, दे3 भक्त्या चाक्रोधनोद्धरः, दे4 भक्त्यावान् क्रोधनोत्वरः, द1 ग्र2 म1 उ1 भक्त्या चाराधयेन्नरः (म1 °त्ततः).

९१. दे10. ⊙. –a) म1 चाथ (→वाथ); का1 पत्राणि (→पुष्पाणि). –b) का1 ब1.3 दे2.6 न1 ते1 द1 ग्र2 म1 उ1 पुरुषेण (→पौरुषेण); न1 च (→तु). –c) दे3 अपो(→आपो); ते1 द1 ग्र2 म1 उ1 मुवें. मुए. वै (→वा). –d) दे6 पूज्या एव (→तेन सम्यक्); दे1 असमर्चितः, दे4.6 न1 मुब. समर्च्चितः, ते1 समर्चयेत्, द1 ग्र2 म1 उ1 समर्पिताः (→समर्चिताः).

९२. दे10 न1. ⊙. –a) दे4 वाचा (→ध्यात्वा); ते1 प्रणति (→प्रणव-); ग्र2 °पूर्वा (→°पूर्वं); ब1 च, दे3 स्वै (→वै). –b) ब1 दे6.9 ग्र2 मुवें. देवतानि, दे3 देवेतानि (→दैवतानि); म1 समाहि* (→समाहितः). –d) दे4 ते1 हि (→वै).

९३. दे10 न1. ⊙. –a) ब1 दे1.8.9 मुवें. मुए. विष्णोराराधनात् (ब1 दे1 °नं) पुण्यं, दे2.3 न विष्णुरा (दे3°वो) धनत्पुण्यं, ते1 न विष्णोरर्चनात् पुण्यं.

९४. दे10. ab ⊙. –b) दे1.8.9 मुवें.मुए. सुसमाहितः, दे3 ग्र2 उ1 पुरुषेण च, न1 पुरुषेण वा (→पुरुषेण तु). –c) ब2 दे1.8.9 न1 मुवें. मुए. मुब. न ता (न1 वा)भ्यां, दे6 नैवाभ्यां, दे10 जलाभ्यां (→नैताभ्यां). –d) ते1 वेदेषु क्तसृष्वपि.

९५. दे1.4.8-10 मुवें. मुए. ab ⊙. –a) ब1 निवेदयिते, दे6 न1 द1 ग्र2 म1 उ1 निवेदयीत (→निवेदयेत); ब1-3 चात्मानं (→स्वात्मानं). –b) ब2.3 विष्णवेऽमल-, ते1 द1 ग्र2 म1 उ1 विष्णवा (द1 °वे) मित- (→विष्णावमल-); ब1 -चेतसि, द1 मुब. -तेजसे (→-तेजसि). –c) न1 नात्मानं, द1 ग्र2 तु ततः (→तन्मनाः); ब1 शान्ताः (→शान्तः); ते1 तदात्मनात्मसात्स्यात्तु. –d) दे1 इति मंत्रतेः, दे4 परमं ततः, ग्र2 इति मंत्रितः (→इति मन्त्रतः).

९६. –c) का1 आराधयन्, ते1 आवाहयेन् (→आराधयेन्); म1 -पूतो (→देवं). –d) का1 भावपूतं, न1 भवभूतो, ग्र2 भावभूतो, म1 भावयेन्वै (→भावपूतो); ब2 महेश्वरः (→महेश्वरम्).

९७. –b) ब2.3 दे3 प्रणमेदथ (→प्रणवेनाथ). –c) दे4.10 ईशानेवाथ, द1 ग्र2 म1 उ1 ईशानमथ (→ईशानेनाथ); का1 रुद्रं, ब2 दे1.4.8.9 रुद्रे (→रुद्रैस्).

९८. –b) दे6 चन्दनानु विलेपनैः. –c) का1 ब1-3 दे2.3.6 न1 ते1 द1 ग्र2 म1 उ1 अथों नमः (→उक्त्वा नमः). –d) का1 यो जपेत्, ब2 दे3 पूजयेत्, दे1.4.6.8-10 द1 मुवें. मुए. मुब. वा जपेत्, न1 ग्र2 म1 उ1 वा यजेत् (→योजयेत्).

९९. ब1. cd ⊙. –a) ग्र2 नमस्कृत्वा (→नमस्कुर्यान्). –b) दे1.8-10 मुवें. मुए. मुब. तं मृत्युञ्जयमीश्वरम्, दे4 अमृतं सत्यमीश्वरम्, ते1 ऋतं सत्यमहेश्वरम्, द1 ग्र2 उ1 ऋतं तत्सत्यमीश्वरम्. –c) का1 ब3 ते1 निवेदयेत (ते1 °च्च) (→निवेदयीत); ब2 आत्मानं, द1 ग्र2 म1 उ1 चात्मानं (→स्वात्मानं). –d) का1 ब्रह्ममणम्, ब2.3 दे1-4 द1 मुब. ब्राह्मणम्, दे6 ब्रह्माणाम् (→ब्रह्माणम्); ग्र2 धिया ब्राह्मणमीश्वरम्.

प्रदक्षिणं द्विजः कुर्यात् पञ्च ब्रह्माणि वै जपन् ।
ध्यायीत देवमीशानं व्योममध्यगतं शिवम् ॥१००
अथावलोकयेदर्कं हंसः शुचिषदित्यृचा ।
कुर्यात् पञ्च महायज्ञान् गृहं गत्वा समाहितः ॥१०१
देवयज्ञं पितृयज्ञं भूतयज्ञं तथैव च ।
मानुष्यं ब्रह्मयज्ञं च पञ्च यज्ञान् प्रचक्षते ॥१०२
यदि स्यात् तर्पणादर्वाक् ब्रह्मयज्ञः कृतो न हि ।
कृत्वा मनुष्ययज्ञं वै ततः स्वाध्यायमाचरेत् ॥१ ३
अग्नेः पश्चिमतो देशे भूतयज्ञान्त एव वा ।
कुशपुञ्जे समासीनः कुशपाणिः समाहितः ॥१०४
शालाग्नौ लौकिके वाऽग्नौ जले भूम्यामथापि वा ।
वैश्वदेवं ततः कुर्याद् देवयज्ञः स वै स्मृतः ॥१०५
यदि स्याल्लौकिके पक्वं ततोऽन्नं तत्र हूयते ।
शालाग्नौ तत्र देवान्नं विधिरेष सनातनः ॥१०६
देवेभ्यस्तु हुतादन्नाच्छेषाद् भूतबलिं हरेत् ।
भूतयज्ञः स वै ज्ञेयो भूतिदः सर्वदेहिनाम् ॥१०७
श्वभ्यश्च श्वपचेभ्यश्च पतितादिभ्य एव च ।
दद्याद् भूमौ बलिं त्वन्नं पक्षिभ्योऽथ द्विजोत्तमः॥१०८ वें२.१८.१०६

१००. दे10. ⊙. –a) दे1 प्रदक्षिणा, दे6 प्रदाक्षिणं (→प्रदक्षिणं); ब2.3 दे3 द्विजं, म1 उ1 ततः (→द्विजः). –b) का1 दे1.8.9 मुवें. मुए. मुब. वर्षाणि, ब2 दे4 ब्रह्माणि (→ब्रह्माणि); दे6 द1 ग्र2 म1 उ1 वा (→वै); ब1 दे6 न1 द1 ग्र2 म1 उ1 जपेत्, दे1.8.9 मुवें. मुए. बुधः, दे4 स्वयं (→जपन्). –c) का1 ध्यायेत् *, ब1 ध्यायंस्तु, ब2.3 दे2.3.6 ध्यायेत, ते1 ध्यात्वा तु (→ध्यायीत).

१०१. –a) ब1.3 दे2.3 अथवालोकयेदर्कम्. –b) का1 हंसः शुचिपदि ऋचा, + हंषः शुचिपदिवृचा, ब1 हंसः शुचिषदिव्य च, + हंसः शुचिषदि त्यृचा, दे4 हंस शुचिष * त्यृचोः, ग्र2 हंसश्शुचषदित्रिच. –c) दे1.8-10 मुवें. मुए. मुब. कुर्वन् (→कुर्यात्); का1 °यज्ञं (→°यज्ञान्); दे6 कुर्यान्य च विधान्यज्ञान्. –d) न1 समागतः (→समाहितः).

१०२. –a) दे1 दैव° (→देव°); दे4.10 न1 ते1 द1 ग्र2 म1 उ1 भूत° (→पितृ°). –b) ब3 दे3 ऋषि°, दे4.10 न1 ते1 द1 ग्र2 म1 उ1 पितृ° (→भूत°). –c) दे1.6.8-10 द1 ग्र2 उ1 मुए. मुब. मानुषं, ते1 मनुष्यं (→मानुष्यं). –d) दे1 पंचयज्ञान्प्रवक्षते, दे2 पंच गृहं गत्वा समाहितः.

१०३. –a) का1 अर्पणाद् (→तर्पणाद्); दे3 तत्र स्यात्तर्पणादर्वाक्, ग्र2 यदि संतर्पणादर्वाक्. –b) का1 °यज्ञे, ब2 °यज्ञं, दे3 °यज्ञ-, ते1 °यज्ञो, द1 ** (→°यज्ञः); का1 ब1-3 दे2.3 कुशेन (→कृतो न); द1 ग्र2 म1 उ1 वा (→हि); ते1 वहिः (→न हि). –c) दे6 °यज्ञो (→°यज्ञं). –d) ग्र2 म1 आरभेत् (→आचरेत्).

१०४. –a) दे1 अग्नो, न1 ग्र2 अग्ने (→अग्नेः); ब1 देवो (→देशे). –b) ब1 ग्र2 म1 उ1 °यज्ञान्तं, ब2 °यज्ञानु, दे6 °यज्ञान्न, ते1 °यज्ञेन (→°यज्ञान्त); दे6.8-10 मुवें. मुए. मुब. च, ते1 हि (→वा). –c) का1 दे2.3 °पिंजे (→°पुञ्जे). –d) द1 ग्र2 म1 उ1 तथैव च (→समाहितः).

१०५. –a) ब1 दे3 लौकिके चाग्नौ(दे3 °ग्नौ), ब2 लौकिकाग्नौ वा, दे1.4.6.8-10 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. लौकिके वाथ, ते1 लौकिके चाथ (→लौकिके वाग्नौ). –b) दे3 जपे (→जले); ब2 तस्यां, न1 भूम्यं (→भूम्यां). –c) ब2.3 दे3 वैश्वदेवनिमित्तं वैं, दे1.4.8-10 मुवें. मुए. मुब. वैश्वदेवश्च कर्त्तव्यो, दे6 न1 ते1 द1 ग्र2 म1 उ1 वैश्वदेवस्तु कर्त्तव्यो.

१०६. –a) ब2 लौकिकं (→लौकिके); ब1 दे1.8.9 मुवें. मुए. पक्षे, दे10 पक्षं, ते1 यज्ञे (→पक्वं). –b) दे6 ततोऽयं, ते1 ततोऽहं (→ततोऽन्नं); उ1 भूयते (→हूयते). –c) ब1 न1 द1 ग्र2 म1 उ1 तत्र चेदन्नं (न1 द1 °न्नं), ब1 दे1.8-10 मुवें. मुए. तत्पचेदन्नं, दे4 वेदनं तत्र, दे6 तु तदेवान्नं, ते1 तद्भवेदन्नं (→तत्र देवान्नं). –d) का1 ब3 दे4 ते1 विधिरेषः, ग्र2 विधिशेषः (→विधिरेष).

१०७. –a) दे1.8-10 मुवें. मुए. मुब. देवेभ्यश्च, दे4 देवेभ्यस्तद्, ते1 देवेभ्यश्चा- (→देवेभ्यस्तु); ब3 हुतान्दत्वा, ते1 हुताशेषं, द1 हुतादग्नौ (→हुतादन्नात्). –b) ब1 शेषं भूत°, दे2.4 देयाद्भूत°, दे6 शेवभूत°, ते1 ततोभूत° (→शेषाद् भूत°). –c) ब2 दे1.6.8-10 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. स विज्ञेयो, दे4 न1 स वै यज्ञो (→स वै ज्ञेयो). –d) दे3 भूमिदः (→भूतिदः); का1 दे4 न1 मुवें. मुए. मुब. भूतिदः स सर्वदेहिनाम्.

१०८. –a) दे6 श्वह्यश्च (→श्वभ्यश्च); न1 स्वपितृभ्यश्च, ते1 म1 उ1 श्वपतिभ्यश्च (→श्वपचेभ्यश्च). –b) का1 दे3 वयो(का1 °ये)भ्यो नित्यम्, ब1 पतेभ्यस्तथा, दे2 पापरोगिभ्य, ते1 तथा पक्षिभ्य (→पतितादिभ्य). –c) का1 बलिं त्वन्यं, ब2 बहिर्भूत्वा, दे1 बहिश्चान्यं, दे6 बहिर्गत्वा, दे8.10 मुवें. मुए. मुब. बहिश्चान्नं, दे9 बलिश्चान्नं, न1 ग्र2 म1 उ1 बहिस्त्वन्नं, द1 बलिस्त्वन्नं (→बलिं त्वन्नं). –d)

वें२.१८.१०७ सायं चान्नस्य सिद्धस्य पत्न्यमन्त्रं बलिं हरेत् ।
भूतयज्ञस्त्वयं नित्यं सायं प्रातर्विधीयते ॥१०९
एकं तु भोजयेद् विप्रं पितॄनुद्दिश्य सत्तमम् ।
नित्यश्राद्धं तदुच्छिष्टं पितृयज्ञो गतिप्रदः ॥११०
उद्धृत्य वा यथाशक्ति किञ्चिदन्नं समाहितः ।
वेदतत्त्वार्थविदुषे द्विजायैवोपपादयेत् ॥१११
पूजयेदतिथिं नित्यं नमस्येदर्च्चयेद् द्विजम् ।
मनोवाक्कर्मभिः शान्तमागतं स्वगृहं ततः ॥११२
हन्तकारमथाग्रं वा भिक्षां वा शक्तितो द्विजः ।
दद्यादतिथये नित्यं बुध्येत परमेश्वरम् ॥११३
भिक्षामाहुर्ग्रासमात्रमग्रं तस्याश्चतुर्गुणम् ।
पुष्कलं हन्तकारं तु तच्चतुर्गुणमुच्यते ॥११४
गोदोहमात्रं कालं वै प्रतीक्ष्यो ह्यतिथिः स्वयम् ।
अभ्यागतान् यथाशक्ति पूजयेदतिथिं यथा ॥११५
भिक्षां वै भिक्षवे दद्याद् विधिवद् ब्रह्मचारिणे ।
दद्यादन्नं यथाशक्ति त्वर्थिभ्यो लोभवर्जितः ॥११६
सर्वेषामप्यलाभे तु अन्नं गोभ्यो निवेदयेत् ।
भुञ्जीत बन्धुभिः सार्द्धं वाग्यतोऽन्नमकुत्सयन् ॥११७

---

दे4.6 द1 म1 उ1 द्विजोत्तमाः (→द्विजोत्तमः); ब1 पतितेऽथ द्विजोत्तमः, दे1.8-10 मुवें. मुए. मुब. पक्षिभ्यो द्विजसत्तमाः, दे3 विधिरेव सनातनः, ते1 यक्षेभ्योथ द्विजोत्तमाः.

१०९. –a) दे6 सा यथान्नस्य, न1 सायं वान्नस्य (→सायं चान्नस्य). –b) ब3 पक्वमन्त्रं, दे6 पत्न्यामन्त्र्यन्, दे10 पत्न्मन्त्र्यं, न1 पत्न्यमंन्नं, ग्र2 पक्वमन्नं (→पत्न्यमन्त्रं). –c) का1 दे6.10 °यज्ञस्वयं, द1 ग्र2 °यज्ञस्तु यं (→°यज्ञस्त्वयं); ब1 भूतयज्ञ स्वमित्यं च. –d) दे1.4.6.8-10 ते1 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. यथाविधि (→विधीयते).

११०. –a) दे4.6 ते1 एवं (→एकं); न1 भोक्षयेद् (→भोजयेद्). –b) दे1.8-10 मुवें. मुए. सन्ततम्, दे4 यं ततः, दे6 न1 सत्तमः, ते1 यत्नतः, द1 ग्र2 उ1 सत्वरम् (→सत्तमम्). –c) न1 द1 ग्र2 उ1 समुद्दिष्टं (→तदुच्छिष्टं). –d) ब1 ते1 °यज्ञ (→°यज्ञो); दे10 °प्रदा (→°प्रदः).

१११. –a) दे6 वाथवा (→वा यथा-); ब3 दे6 न1 -शक्तिः, दे10 -पंक्ति (→-शक्ति). –b) उ1 समाहितं (→समाहितः). –c) दे4 °तंत्रार्थ° (→°तत्त्वार्थ°); दे1.10 द1 °विदुषो (→°विदुषे). –d) न1 द्विजायैवेपपातयेत्, द1 ग्र2 उ1 द्विजायैव प्रदापयेत्.

११२. –a) ते1 अतिथीन्, द1 अतिथिर्, ग्र2 अधिकं (→अतिथिं); दे6 विप्रं, ते1 यज्ञैः (→नित्यं). –b) दे1.4.8-10 न1 उ1 मुए. मुब. अर्च्चयेद् द्विजः, मुवें. अर्च्चयेद्विभुम् (→अर्च्चयेद् द्विजं). –c) दे4 नमो° (→मनो°); का1 एनम्, दे1.4.6.8-10 न1 ते1 म1 उ1 मुवें. मुए. शान्तः (→शान्तम्). –d) दे1.4.6.8-10 न1 ते1 द1 ग्र2 म1 उ1 मुवें. मुए. स्वागतं (→आगतं); दे1.4.8-10 ग्र2 मुवें. मुए. गतः, ते1 द्विजम्, द1 म1 उ1 गतम् (→ततः).

अतः परं दे1.6.8-10 मुवें. मुए. मुब. पुस्तकेषु अधिकम्—
* अन्वारब्धेन सव्येन पाणिना दक्षिणेन तु ( = ८७ab)

११३. ब2. ab ⊙. –a) दे10 अहंकारं (→हंतकारं); का1 अथाग्रे (→अथाग्रं); दे6 हन्तकारंग्नवाभित्वां. –b) दे3 भिक्षास्वा, दे4 भिक्षं वा (→भिक्षां वा); ते1 द्विजाः (→द्विजः). –c) ब2 नित्य (→नित्यं). –d) का1 बुधेन, ब2 बुद्ध्वा तं, ते1 यजेत, द1 म1 उ1 बुध्येत्तं, ग्र2 बुध्येत्तत् (→बुध्येत).

११४. ब1. ⊙. –a) का1 दे1.8-10 ते1 म1 उ1 मुवें. मुए. मुब. -मात्राम्, दे3 -मात्र, न1 -मात्रीम् (→-मात्रम्). –b) दे3 दद्यात् (→अग्रं); ब2.3 दे3 म1 तस्मात्, दे1.4.8-10 उ1 मुवें. मुए. मुब. तत्स्यात्, न1 ग्र2 तस्य (→तस्याश्). –c) ते1 युक्तं तद् (→पुष्कलं); ब2.3 हन्त (ब3 °स्त)कारान्तं, दे3 हंतकारार्थं, दे4 हन्तकालं तु, न1 हन्तकारतत् (→हन्तकारं तु). –d) दे1.8-10 मुए. मुब. इष्यते (→उच्यते); दे6 चतुर्गुणित-मुच्यते.

११५. –a) दे1.4 ते1 द1 ग्र2 उ1 -मात्रकालं, मुवें. मुए. मुब. -कालमात्रं (→-मात्रं कालं); दे6 वा, ग्र2 तु (→वै). –b) ब2 प्रतीक्षेत, ब3 प्रतिक्षोपि, दे2 प्रतीक्ष्ये हि, दे3 प्रती(ह्या)क्ष्यो हि, दे4 प्रतीक्षा हि, दे6 प्रतीक्ष्येत, न1 प्रणीक्ष्या हि, ते1 प्रतीक्षन्, द1 ग्र2 प्रतीक्ष्येद (→प्रतीक्ष्यो हि); ब2 दे6 ते1 द1 अतिथिं (→अतिथिः). –c) दे5 अभ्यागतं (→अभ्यागतान्); ब1 °शक्तिः, दे6 द1 °शक्ति (→°शक्ति). –d) ते1 ह्यर्चयेद् (→पूजयेद्); दे1.3.8-10 ते1 मुवें. मुए. मुब. अतिथीन्, दे4 अतिथिर् (→अतिथिं); दे1.8-10 उ1 मुवें. मुए. मुब. सदा, दे3.6 तथा, ते1 द्विजाः (→यथा).

११६. –b) दे10 °चारिणा (→°चारिणे). –d) का1 त्व(ति)थिभ्यो, ब2 तन्निष्टो, दे1.4.8-10 ते1 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. ह्यर्थिभ्यो (→त्वर्थिभ्यो); ब1 त्वन्निलोकविवर्जितः, दे6 पूजयेदतिथिं तथा.

११७. –a) दे6 अथलाभे, दे10 अस्य लोभो, द1 ग्र2 म1 उ1 अप्यभावे (→अप्यलाभे); ब1 दे4.6 तद्, दे1.8-10

अकृत्वा तु द्विजः पञ्च महायज्ञान् द्विजोत्तमाः ।
भुञ्जीत चेत् स मूढात्मा तिर्यग्योनिं स गच्छति ।।११८
वेदाभ्यासोऽन्वहं शक्त्या महायज्ञक्रिया क्षमा ।
नाशयत्याशु पापानि देवानामर्चनं तथा ।।११९

यो मोहादथवालस्यादकृत्वा देवतार्चनम् ।
भुङ्क्ते स याति नरकान् शूकरेष्वभिजायते ।।१२०
तस्मात् सर्वप्रयत्नेन कृत्वा कर्माणि वै द्विजाः ।
भुञ्जीत स्वजनैः सार्द्धं स याति परमां गतिम् ।।१२१ वें२.१८.११९

इति श्रीकूर्मपुराणे षट्साहस्त्र्यां संहितायामुपरिविभागे अष्टादशोऽध्यायः ।।१८।।

---

मुवें. मुए. मुब. हि (→तु). –b) दे1 त्वान्नं, दे8-10 मुवें. मुए. मुब. त्वन्नं, द1 ग्र2 म1 उ1 दत्तं (→अन्नं). –c) ग्र2 भुञ्जते (→भुञ्जीत); का1 ब1 दे1.8.9 द1 ग्र2 म1 मुवें. मुए. मुब. बहुभिः (→बन्धुभिः); दे10 भुञ्जीतश्चेत् स मूढात्मा –d) दे6 न1 उ1 अकुत्सयत् (→अकुत्सयन्); का1 वृत्तिनीमा कुले स्थिता, दे1 वाग्यातोनामत्मयायन् (?), दे10 तिर्यग्योनिं स गच्छति.

११८. –a) दे4 ते1 अकृत्वान्नं (→अकृत्वा तु); दे3 पूर्वं (→पञ्च-). –b) दे3 -पञ्च° (→-महा°); का1 °यज्ञं, दे6 न1 °यज्ञा, ते1 °यज्ञो (→°यज्ञान्); दे4.6 न1 द्विजोत्तमः (→द्विजोत्तमाः). –c) दे1 अकृत्वा तु (वे), ते1 भुञ्जीत वै (→भुञ्जीत चेत्); का1 दे2.3 सुमूढात्मा (→स मूढात्मा). –d) ब1 दे3 न1 उ1 निगच्छति, ब2 दे6 नियच्छति (→स गच्छति).

११९. –a) दे1 वेदाभ्यासे° (→वेदाभ्यासो°); न1 -स्वहं (→[अ]न्वहं). –b) न1 मुवें. °यज्ञः (→°यज्ञ-); ब1 दे6.10 द1 मुवें. -क्रियाक्षया, ब3 म1 उ1 -क्रियाक्षमः, दे4 न1 मुए. मुब. -क्रियाक्षमाः, ग्र2 -कृताक्षमाः (→-क्रिया क्षमा). –c) ब1 दे1.4.6.8-10 न1 मुवें. मुए. मुब. नाशयन्त्याशु°, ते1 हावयन्त्याशु° (→नाशयत्याशु°). –d) का1 ग्र2 यथा (→तथा); दे1.8-10 मुवें. मुए. मुब. देवताभ्यर्च्चनं तथा, न1 देवानानर्चयंतिथा (?), ग्र2 देवनामर्च्चनं यथा.

१२०. –a) का1 मदाद् (→मोहाद्); दे1.8-10 मुवें. मुए. मुब. अज्ञानाद्, दे6 आलस्यः (→आलस्याद्). –c) ब3 भुक्त्वा, दे6.10 भुक्ते (→भुंक्ते); दे1.8-10 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. नरकं (→नरकान्). –d) ब1 सूकरस्याभिजायते, ब2.3 न1 द1 ग्र2 म1 उ1 सूकरेष्वभि (ब2 °पि, उ1 °थ) जायते, दे1.8-10 मुवें. मुए. मुब. सूकरं नात्र संशयः, दे6 शूकरेष्विह जायते, ते1 तेभ्यो मुक्तः श्वा चेह जायते.

१२१. –b) दे6 यो (→वै); का1 ब1.2 दे2 न1 ते1 द1 ग्र2 म1 उ1 मुब. द्विजः, दे6 द्विजं (→द्विजाः).

**पुष्पिका**—[द1 पुस्तके अध्यायसमाप्तिर्नास्ति]

**पुराणनाम**—का1 इति श्रीकौर्मपुराणे उपरिभागे, ब1 इति कौर्मे उपरिभागे, ब2 इति कूर्मपुराणे, ब3 इति कूर्मपुराणे उपरिभागे, दे1.6.8-10 मुए. इति श्रीकूर्मपुराणे व्यासगीतासु, दे2.3 इति कौर्म (दे3 °र्मे) पुराणे उपरिभागे, दे4 इति श्रीकूर्मपुराणे, न1 इति श्रीकौर्मे, ते1 इत्यादिमहापुराणे कूर्मपुराणे उपरिभागे व्यासगीतासु, ग्र2 म1 इति श्रीकूर्मपुराणे उत्तरभागे व्यासगीतासूपनिषत्सु, उ1 इति श्रीकूर्मपुराणे उत्तरभागे व्यासगीतासु, मुवें. इति श्रीकूर्मपुराणे उत्तरार्द्धे व्यासगीतासु, मुब. इति श्रीकौर्मे महापुराणे उपरिभागे. **अध्यायनाम**—का1 ब1-3 दे1-4.6.8-10 न1 ते1 ग्र2 म1 उ1 मुए. ⊙; मुवें. ब्राह्मणानां नित्यकर्तव्यकर्मनिरूपणं नाम, मुब. ब्रह्मविद्यायां ब्राह्मणानां नित्यक्रिया विधिः. **अध्यायसंख्या**— ब2 दे6. ⊙; का1 सप्तदशोऽध्यायः ।।१७।।, ब1.3 दे2.3 ते1 सप्तदशोऽध्यायः, दे1 मुवें. मुब. अष्टादशोऽध्यायः ।।१८।।, दे4.8-10 ग्र2 म1 उ1 मुए. अष्टादशोऽध्यायः, न1 अष्टषष्टितमोऽध्यायः.

# १९

व्यास उवाच ।❀

बें.२.१९.१ प्राङ्मुखोऽन्नानि भुञ्जीत सूर्याभिमुख एव वा ।
आसीनस्त्वासने शुद्धे भूम्यां पादौ निधाय तु ॥१
आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुखः ।
श्रियं प्रत्यङ्मुखो भुङ्क्ते ऋतं भुङ्क्ते उदङ्मुखः ॥२
पञ्चार्द्रो भोजनं कुर्याद् भूमौ पात्रं निधाय तु ।
उपवासेन तत्तुल्यं मनुराह प्रजापतिः ॥३
उपलिप्ते शुचौ देशे पादौ प्रक्षाल्य वै करौ ।
आचम्यार्द्राननोऽक्रोधः पञ्चार्द्रो भोजनं चरेत् ॥४
महाव्याहृतिभिस्त्वन्नं परिधायोदकेन तु ।
अमृतोपस्तरणमसीत्यापोशानक्रियां चरेत् ॥५
स्वाहाप्रणवसंयुक्तां प्राणायाद्याहुतिं ततः ।
अपानाय ततो हुत्वा व्यानाय तदनन्तरम् ॥६
उदानाय ततः कुर्यात् समानायेति पञ्चमीम् ।
विज्ञाय तत्त्वमेतेषां जुहुयादात्मनि द्विजः ॥७
शेषमन्नं यथाकामं भुञ्जीतव्यं जनैर्युतम् ।
ध्यात्वा तन्मनसा देवमात्मानं वै प्रजापतिम् ॥८

---

## १८

[अध्यायारम्भे दे$_{10}$ पुस्तके अधिकम्—श्रीसीतारामचन्द्रचरणौ निवेदितं श्रीरस्तु]

❀ न$_1$ द$_1$. ⊙; ते$_1$ ग्र$_2$ म$_1$ उ$_1$ व्यासः.

१. न$_1$. ab ⊙. –b) दे$_3$ सूर्यौभि° (→सूर्याभि°); का$_1$ दे$_3$ एव च, दे$_{1.8-10}$ ग्र$_2$ -मेव वा (→एव वा). –c) दे$_{1.4.6.8-10}$ द$_1$ म$_1$ उ$_1$ मुवें. मुए. मुब. स्वासने (→त्वासने). –d) ब$_2$ भूमौ (→भूम्यां); दे$_{1.4.8-10}$ ते$_1$ मुवें. मुए. मुब. निधाय च, दे$_6$ नियम्य तु, द$_1$ उ$_1$ निपातयेत्, ग्र$_2$ निधापयेत् (→निधाय तु).

२. ब$_1$. २a-३b ⊙ (द्र. सं.). –a) दे$_4$ आयुष्य- (→आयुष्यं); दे$_{3.10}$ प्राङ्मुखे, दे$_4$ प्राङ्मुखं (→प्राङ्मुखो). –b) दे$_{10}$ यशस्कं, न$_1$ अशश्यं, मुवें. यशस्य(?) (→यशस्यं); दे$_{10}$ °मुखेः (→°मुखः). –c) ग्र$_2$ श्रियः (→श्रियं); का$_1$ दे$_{4.10}$ प्रत्यङ्मुखं (→प्रत्यङ्मुखो). –d) ब$_2$ मुब. ह्युदङ्मुखं (मुब. °खः) (→उदङ्मुखः); म$_1$ न कदाचिदुदङ्मुखः.

३. ब$_1$. ab ⊙ (द्र. २ पा. वि). –a) ब$_2$ पञ्चार्द्र- (→पञ्चार्द्रो). –b) ते$_1$ पादौ, ग्र$_2$ पत्रं (→पात्रं); दे$_{1.8-10}$ ते$_1$ द$_1$ मुवें. मुए. मुब. निधाय च, दे$_6$ निधायेत (→निधाय तु).

४. –a) दे$_3$ उपलिप्त-, दे$_{10}$ उपलिब्धौ, द$_1$ उपलिप्तो (→उपलिप्ते). –c) ब$_3$ दे$_6$ म$_1$ [आ]र्द्राननो क्रोधः, दे$_{10}$ [आ]र्द्रानना क्रोधः, ते$_1$ [आ]र्द्रासनो क्रोधः, द$_1$ [आ]र्द्रानन-क्रोधो (→[आ]र्द्राननोऽक्रोधः). –d) दे$_{1.3.6}$ न$_1$ पंचाद्रो (→पञ्चार्द्रोर्); ग्र$_2$ भाजनं (→भोजनं).

५. ब$_1$. cd ⊙. –a) ते$_1$ चान्नं (→त्वन्नं). –b) ब$_1$ परिवार्यो°, ते$_1$ परिवीयो° (→परिधायो°); ब$_2$ च (→तु). –cd) दे$_1$ °पस्तरमासीदपोशान, दे$_{3.6.8.9}$ °पस्तरणमसीत्यपोशान, दे$_{10}$ °पस्तरणोपासीमुपोशान, न$_1$ °पस्तरणमसीदपोशान, ते$_1$ द$_1$ ग्र$_2$ म$_1$ °पस्तरणमसीत्यापोशन (→°पस्तरणमसीत्यापोशान).

६. –a) ब$_1$ न$_1$ °संयुक्तं, ते$_1$ म$_1$ °संयुक्ता (→°संयुक्तां). –b) ब$_1$ प्राणायान्नाहुतिं, ब$_2$ प्राणाहुत्यां हुतिं, दे$_{1.4.6.8.9}$ प्राणायामाहुतिं, दे$_{10}$ प्राणायामं हुतं, न$_1$ प्राणायं नाहुतिं, ते$_1$ द$_1$ ग्र$_2$ म$_1$ प्राणायेत्याहुतिं, उ$_1$ प्राणायात्याहुतिं (→प्राणायाद्याहुतिं). –c) द$_1$ ग्र$_2$ उ$_1$ अपानाया (उ$_1$ °य) हुतिं (→अपानाय ततो); ब$_1$ दे$_{1.4.8-10}$ मुवें. मुए. मुब. भुक्त्वा, दे$_6$ छु्त्वा (?), द$_1$ कृत्वा (→हुत्वा). –d) ग्र$_2$ व्यानायात् (→व्यानाय).

७. –b) दे$_4$ समानीयेति (→समानायेति); का$_1$ ब$_1$ दे$_{2.4.6}$ द$_1$ पञ्चमी, दे$_{1.3.8.9}$ ते$_1$ ग्र$_2$ म$_1$ मुवें. पञ्चमम्, दे$_{10}$ पञ्चमः (→पञ्चमीं). –c) ब$_3$ तत्तुमेत्रेषां (→तत्त्वमेतेषां). –d) ते$_1$ द्विजाः (→द्विजः); दे$_{10}$ जुहुयानात्वमिद्विजः, ग्र$_2$ जुहुयादात्मनद्द्विजः.

८. –a) का$_1$ ब$_3$ दे$_2$ यथोक्तं तु, ब$_1$ यथोक्तेन, ब$_2$ यथोक्तं च, दे$_3$ यथोक्तस्तु (→यथाकामं). –b) दे$_4$ ते$_1$ जनान्वितम् (→जनैर्युतम्). –c) ते$_1$ ध्यात्वात्तमनसा, द$_1$ ध्यात्वा तु मनसा, ग्र$_2$ ध्यात्वा तं मानसो, उ$_1$ ध्यात्वा तन्मानसो

अमृतापिधानमसीत्युपरिष्टादपः पिबेत् ।
आचान्तः पुनराचामेदायं गौरिति मन्त्रतः ॥९
द्रुपदां वा त्रिरावर्त्य सर्वपापप्रणाशनीम् ।
प्राणानां ग्रन्थिरसीत्यालभेद् हृदयं ततः ॥१०
आचम्याङ्गुष्ठमात्रेति पादाङ्गुष्ठेऽथ दक्षिणे ।
निस्रावयेद् हस्तजलमूर्द्ध्वहस्तः समाहितः ॥११
हुतानुमन्त्रणं कुर्यात् श्रद्धायामिति मन्त्रतः ।
अथाक्षरेण स्वात्मानं योजयेद् ब्रह्मणेति हि ॥१२
सर्वेषामेव यागानामात्मयागः परः स्मृतः ।
योऽनेन विधिना कुर्यात् स याति ब्रह्मणः क्षयम् ॥१३
यज्ञोपवीती भुञ्जीत स्रग्गन्धालंकृतः शुचिः ।
सायंप्रातर्नान्तरा वै संध्यायां तु विशेषतः ॥१४
नाद्यात् सूर्यग्रहात् पूर्वमह्नि सायं शशिग्रहात् ।
ग्रहकाले च नाश्नीयात् स्नात्वाऽश्नीयात् तु मुक्तयोः ॥१५ वें.२.१९.१५

(→ध्यात्वा तन्मनसा); दे$_{1.8-10}$ मुवें. मुए. मुब. देवान् (→देवं) –d) दे$_4$ ते$_1$ वा (→वै); दे$_{4.10}$ प्रजापतिः (→प्रजापतिम्).

९. दे$_6$. ६d–२३c ⊙. –a) दे$_{3.10}$ अमृतो (→अमृता-). –b) दे$_6$ उपविष्टाद् (→उपरिष्टाद्). –c) दे$_4$ सा चान्तः (→आचान्तः); ग्र$_2$ पुरता° (→पुनरा°). –d) का$_1$ दे$_{1.2}$ ते$_1$ मुवें. मुए. मुब. अयं गौरिति, दे$_3$ अयज्ञैरिति (→आयं गौरिति).

१०. दे$_6$. ⊙; ब$_1$. १०c–१३b ⊙. –a) ते$_1$ त्रिपदावत्, उ$_1$ द्रुपदां च (→द्रुपदां वा); का$_1$ ब$_2$ ते$_1$ ग्र$_2$ म$_1$ त्रिरावृत्य, न$_1$ त्रिरावर्त्यं (→त्रिरावर्त्य). –b) का$_1$ ब$_1$ दे$_{1.4.10}$ ग्र$_2$ °प्रणाशिनीं, ब$_2$ °विनाशिनीं, ते$_1$ °प्रणाशनम् (→°प्रणाशनीम्). –c) न$_1$ ब्राह्मानां (→प्राणानां). –d) ब$_3$ [इ]त्यानाभेद्, दे$_3$ [इ]त्यानयेद् (→[इ]त्यालभेद्); ब$_2$ दे$_9$ मुवें. मुब. उदरं, ब$_3$ हृदयस्, दे$_1$ उदरयं, दे$_8$ उदरयं, +उद्धरस् (→हृदयं).

११. ब$_1$ दे$_6$. ⊙. –a) का$_1$ दे$_{2.8-10}$ मुवें. मुए. मुब. °मात्रेण, दे$_1$ °मार्गेण, दे$_4$ °मात्रे तु, द$_1$ ग्र$_2$ म$_1$ उ$_1$ °मानीय (→°मात्रेति). –b) दे$_{1.4.8-10}$ द$_1$ ग्र$_2$ उ$_1$ मुवें. मुए. पादांगुष्ठेन, न$_1$ ते$_1$ म$_1$ पादांगुष्ठेति (म$_1$ तु) (→पादाङ्गुष्ठेऽथ). –c) दे$_4$ वस्त्रजलं, म$_1$ हस्तमन्यं (→हस्तजलं). –d) उ$_1$ -मूर्द्घ्न हस्ताः, दे$_1$ उर्धं हस्तः, दे$_4$ उर्द्धिहस्ताः, दे$_{10}$ उर्ध्वं हंसः, न$_1$ रेत्वहस्तः, ते$_1$ उर्जहस्तस् (→ऊर्ध्वहस्तः).

१२. का$_1$ ब$_1$ दे$_6$. ⊙; दे$_3$. १२c-१४d ⊙. –a) ब$_2$ हुत्वा त्वामंत्रणं, ब$_3$ दे$_{1.8-10}$ मुवें. मुए. मुब. कृतानुमंत्रणं, दे$_2$ हुतार्थं मंत्रणं, दे$_3$ हुत्वान्नमंत्रणं, दे$_4$ हुतातमंत्रणं, ते$_1$ भूतानुमन्त्रणं, द$_1$ ग्र$_2$ उ$_1$ भुक्त्वानुमन्त्र (ग्र$_2$ °न्त्रि)णं (→हुतानुमंत्रणं). –b) ब$_{2.3}$ दे$_{2.3}$ मुवें. मुए. मुब. सन्ध्यायां, दे$_1$ अर्चायाम्, दे$_{8-10}$ ** यां, ते$_1$ उत्थायां, द$_1$ श्राद्धायं, ग्र$_2$ श्रद्धयां (→श्रद्धायां); ब$_2$ ते$_1$ मन्त्रितः (→मन्त्रतः). –c) दे$_{1.8.9}$ अथ क्रमेण, दे$_4$ अक्षाक्षरेण, दे$_{10}$ अथाक्रमेण, ते$_1$ अथापरेण, मुए. मुब. अथ मन्त्रेण (→अथाक्षरेण); उ$_1$ चात्मानं (→स्वात्मानं). –d) दे$_{1.8-10}$ मुवें. मुए. मुब. ब्राह्मणेति हि, दे$_4$ ब्रह्मणोति हि, न$_1$ ब्राह्मणीति हि, ते$_1$ ब्रह्मणः पतिम्, द$_1$ उ$_1$ ब्राह्मणेति च, ग्र$_2$ ब्रह्मणेति च (→ब्रह्मणेति हि).

१३. दे$_{3.6}$. ⊙; ब$_1$. ab ⊙. –a) का$_1$ ब$_{2.3}$ दे$_{1.2.4.8-10}$ ते$_1$ द$_1$ ग्र$_2$ म$_1$ मुवें. मुए. मुब. योगानां (→यागानां). –b) का$_1$ ब$_{2.3}$ दे$_{1.2.4.8-10}$ न$_1$ ते$_1$ म$_1$ मुवें. मुए. मुब. °योगः (→°यागः); दे$_{1.8-10}$ मुवें. मुए. मुब. स्मृतः परः, दे$_2$ पुरस्मृतः (→परः स्मृतः). –c) दे$_4$ न$_1$ योगेन, द$_1$ यो येन (→योऽनेन). –d) ब$_1$ दे$_{8-10}$ मुवें. मुए. कविर् दे$_1$ कविं (→याति); ब$_1$ दे$_{8-10}$ मुवें. मुए. मुब. ब्रा (मुब. ब्र)ह्मणः स्वयम्, दे$_4$ ब्रह्मणोक्षयं, न$_1$ ब्रह्मणः जयं, ते$_1$ परमां गतिम्, + ब्रह्मणः क्षयम् (→ब्रह्मणः क्षयम्).

१४. दे$_{3.6}$. ⊙. –a) न$_1$ भुंजीतु (?) (→भुंजीत). –b) का$_1$ दे$_2$ स्रग्गन्धालंकृतोऽत्वरः, ब$_{1-3}$ स्रग्गन्धालङ्कृतोत्तरः, दे$_1$ गंधाढ्यालंकृतः शुचिः, दे$_4$ मृगयालंकृतः शुचिः, दे$_{10}$ सृग्रांधालंकृतः शुचिः, न$_1$ सगंधालंकृतोत्तरः, ते$_1$ सृग्दामालंकृताः शुचिः, द$_1$ ग्र$_2$ स (ग्र$_2$ सु) गंधालंकृतः शुचिः. –c) का$_1$ नराणां वै, न$_1$ नोंतरा वै, ते$_1$ सान्तरा वै (→नान्तरा वै). –d) ते$_1$ सन्ध्यायां च, म$_1$ सन्ध्याकाले (→सन्ध्यायां तु).

१५. दे$_6$. ⊙. –a) ब$_1$ कुर्यात् (→नाद्यात्). –b) दे$_{1.8-10}$ मुवें. मुए. मुब. प्रतिसायं, उ$_1$ प्र * सा * (→अह्नि सायं); का$_1$ ब$_2$ दे$_2$ शशिग्रहे, ब$_3$ प्रचक्षते (→शशिग्रहात्). –c) दे$_{1.8-10}$ मुवें. मुए. मुब. न चाश्नीयात्, म$_1$ उ$_1$ तु नाश्नीयात् (→च नाश्नीयात्). –d) ब$_1$ दे$_3$ स्नात्वाऽश्नीयात्वमुक्तयोः, दे$_{1.8.9}$ मुवें. मुए. मुब. स्नात्वाऽश्नीयाद्विमुक्तये (मुब. °योः), दे$_4$ स्नात्वा स्नायाच्चमुक्तयोः, दे$_{10}$ यदि यस्यां महानिशा, ते$_1$ असित्वा पापमश्नुते, द$_1$ म$_1$ उ$_1$ स्नात्वाश्नीयाच्च मुक्तयोः, ग्र$_2$ स्नात्वाश्नीयाच्च मत्तये.

वृद्धश्रावकनिर्ग्रन्थाः पञ्चरात्रविदो जनाः ।
कापालिकाः पाशुपताः पाषण्डा ये च तद्विधाः ॥३४
यस्याश्नन्ति हवींष्येते दुरात्मानस्तु तामसाः ।
न तस्य तद् भवेच्छ्राद्धं प्रेत्य चेह फलप्रदम् ॥३५
अनाश्रमी यो द्विजः स्यादाश्रमी वा निरर्थकः ।
मिथ्याश्रमी च ते विप्रा विज्ञेयाः पङ्क्तिदूषकाः ॥३६
दुश्चर्मा कुनखी कुष्ठी श्वित्री च श्यावदन्तकः ।
विद्धप्रजननश्चैव स्तेनः क्लीबोऽथ नास्तिकः ॥३७
मद्यपो वृषलीसक्तो वीरहा दिधिषूपतिः ।
आगारदाही कुण्डाशी सोमविक्रयिणो द्विजाः ॥३८
परिवेत्ता तथा हिंस्रः परिवित्तिर्निराकृतिः ।
पौनर्भवः कुसीदी च तथा नक्षत्रदर्शकः ॥३९
गीतवादित्रनिरतो व्याधितः काण एव च ।
हीनाङ्गश्चातिरिक्ताङ्गो ह्यवकीर्णिस्तथैव च ॥४०
कन्यादूषी कुण्डगोलौ अभिशस्तोऽथ देवलः ।
मित्रध्रुक् पिशुनश्चैव नित्यं भार्यानुवर्त्तकः ॥४१ वं.२.२१.३६

---

**३४.** दे3. ab ⊙. –a) का1 ब2 दे2 द1 म1 बुद्ध, ग्र2 बुद्धा (→वृद्ध-); दे4 द1 °निर्गंधाः, दे10 °निग्रन्थान्, न1 °निर्ग्रंथान्, ते1 °निग्रन्थास्, ग्र2 °निर्वन्धाः (→°निर्ग्रन्थाः); दे6 बद्धश्राद्धं कलि ग्रंथा. –b) दे10 पांचरात्र-, ते1 तथा पंच, ग्र2 पञ्च-रात्रा (→पञ्चरात्र-); दे2 उ1 °विदो जनः, दे4 °विधो जनाः (→°विदो जनाः). –c) दे10 कापिलिकाः, न1 कापालिपाः, उ1 कापाविकाः (→कापालिकाः); दे3 कपालिका व्रतं भ्रष्टा. –d) न1 तद्वितोः, ते1 तद्विदाः, म1 तान्त्रिकाः (→तद्विधाः); ग्र2 पाष्ण्या ये पतिता द्विजाः.

**३५.** –a) दे3 तथाश्नंति, दे4 यस्यास्नांत, दे10 तस्या संति (→यस्याश्नंति); ते1 तस्य श्राद्धे भविष्यन्ति. –b) ग्र2 ते समाः (→तामसाः). –c) ते1 तत्तस्य न भवेत्, द1 ग्र2 न तत्सत्तद्भवेत् (→न तस्य तद्भवेत्). –d) दे3 प्रेत्य नेह, दे6 चेत्य चेह, द1 ग्र2 उ1 प्रेत्येह च (→प्रेत्य चेह); म1 प्रेत्येह च न तत् फलम्.

**३६.** –a) न1 द1 ग्र2 म1 यो द्विज, मुवें. द्विजो यः (→यो द्विजः); ग्र2 स (→स्याद्); ते1 अनाश्रमा ये द्विजाः स्युः. –b) द1 म1 उ1 स्यात् (→वा); ते1 आश्रमस्था निर-र्गिकाः, ग्र2 (दा) साश्रमी स्यानिरर्थकः. –c) दे6 मिथ्या अमी, न1 नित्याश्रमी (→मिथ्याश्रमी); दे4 च विप्रेंदा, दे1 च ये विप्राः, द1 ग्र2 उ1 च यो विप्रो, मुब. च ते विप्राः, म1 त्रयो विप्रो (→च ते विप्रा); ते1 मिथ्याश्रमाश्च विप्रास्ते.

**३७.** दे1.8-10. cd ⊙. –a) ब1 कुष्ठां, दे3 * *, दे4 कुंभी (→कुष्ठी). –b) का1 श्वित्री तु, ब1 श्वित्रां च, दे1 श्वित्रीव, दे3 श्वित्री तथा, म1 श्वित्री वा (→श्वित्री च); का1 दे6 स्यावदन्तकः, दे10 श्यावदंतिकाः, न1 श्यावदंतकाः (→श्याव-दंतकः). –c) दे6 विद्धे, न1 द1 म1 विद्धः, ते1 नष्ट-, ग्र2 विद्धि-, मुव विद्धं (→विद्ध-); मुवें. मुए. विद्धश्च जननश्चैव. –d) दे3 निंदिकः (→नास्तिकः).

**३८.** –a) दे4 मद्यापो (→मद्यपो); ब1 दे10 °शक्तो, ब2 * क्तो, दे3 °रक्तो (→°सक्तो). –b) ब3 नीरहा, न1 द1 विरहा (→वीरहा); दे3 दिधिष्ठितः (?), दे4.10 दधिषूपतिः (→दिधिषूपतिः). –c) ब1.2 दे1-4.8.9 न1 ते1 द1 मुवें. मुए. मुब. अगार°, दे6 युगाव°, दे10 ग्र2 म1 अंगार°, उ1 आंगार° (→आगार°); न1 कुंडाशा (→कुण्डाशी). –d) ब2 °विक्रयिणस्तथा (→°विक्रयिणो द्विजाः).

**३९.** दे10. ⊙. –a) ग्र2 परिच्छेत्ता (→परिवेत्ता); दे1 हिंश्रकश्चैव, दे8.9 हिंस्रश्चैव, ग्र2 तथा हिंसीः, मुवें. मुए. मुब. च हिंस्रश्च. –b) का1 परवृत्तिर्, ब1 परवीरा, द1 परिवृत्ति, ग्र2 परिवृत्ति (→परिवित्तिर्); दे4 निराकृतः (→निराकृतिः). –c) न1 पौनर्भा (→पौनर्भवः); दे1.4 कुशीदश्च, दे3.8.9 ते1 द1 ग्र2 म1 उ1 मुवें. कुसीदश्च, न1 कुसीदा च (→कुसीदी च). –d) ते1 सदा (→तथा); दे3 न **, दे6 नक्षत्रे (→नक्षत्र-); दे1.8.9 मुए. मुब. °सूचकः, द1 ग्र2 °दर्शनः (→°दर्शकः).

**४०.** द1. ⊙. –a) दे1.3.4.8-10 न1 ते1 ग्र2 म1 उ1 मुवें. मुए. मुब. °शीलश्च (→°निरतो). –b) दे10 कण, न1 काल, ते1 काण्ड (→काण); उ1 ** च (→एव च). –c) दे6.10 °रक्तांगो (→°रिक्ताङ्गो). –d) का1 ब1-3 दे4.6 न1 ते1 ग्र2 उ1 मुवें. मुए. मुब. ह्यवकीर्णी, म1 ह्यपकीर्णस् (→ह्यवकीर्णिस्).

**४१.** का1. ⊙; दे10. cd ⊙; द1. ab ⊙. –a) दे3 अन्त्यत्स्वामी, दे4.8-10 मुवें. मुए. मुब. अन्नदूषी, ग्र2 अन्यादिषु (→कन्यादूषी); दे10 ते1 °गोलो (→°गोलौ). –b) ब1.2 दे6 ते1 ह्यभि°, ब3 दे2 ह्यवि° (→अभि°); ते1 केवलः (→देवलः). –c) दे4 ते1 मित्रघ्न (ते1 °घ्नः), न1 ग्र2 मित्रद्रुक् (→मित्रध्रुक्); ब1 कपिलश्चैव, दे9 ह्यसनेश्चैव (→पिशुनश्चैव). –d) ब2 निन्द्यो (→नित्यं); ब1 न1 म1 ग्र2 °वर्त्तिनः, दे1.4.8.9 मुवें. मुए. °वर्त्तितः, दे2 °वर्त्ततः, दे3 °कीर्त्तितः, ते1 °वर्तनः (→°वर्त्तकः).

वें.२.२१.४० मातापित्रोर्गुरोस्त्यागी दारत्यागी तथैव च ।
गोत्रभिद् भ्रष्टशौचश्च काण्डस्पृष्टस्तथैव च ।।४२
अनपत्यः कूटसाक्षी याचको रङ्गजीवकः ।
समुद्रयायी कृतहा तथा समयभेदकः ।।४३
देवनिन्दापरश्चैव वेदनिन्दारतस्तथा ।
द्विजनिन्दारतश्चैते वर्ज्याः श्राद्धादिकर्मसु ।।४४
कृतघ्नः पिशुनः क्रूरो नास्तिको वेदनिन्दकः ।
मित्रध्रुक् कुहकश्चैव विशेषात् पङ्क्तिदूषकाः ।।४५
सर्वे पुनरभोज्यान्नास्त्वदानार्हाश्च कर्मसु ।
ब्रह्मभावनिरस्ताश्च वर्जनीयाः प्रयत्नतः ।।४६
शूद्रान्नरसपुष्टाङ्गः संध्योपासनवर्जितः ।
महायज्ञविहीनश्च ब्राह्मणः पङ्क्तिदूषकः ।।४७

अतः परम् दे2 पुनरावृत्तम्—
मात्रापित्र्योर्गुरोस्त्यागी
श्रुतिविक्रयिणो ये तु परपूर्वासमुद्भवा ।
समानये या जपंति पतितास्ते प्रकीर्त्तिताः ।
* द्धश्रावकनिर्ग्रन्थाः पंचरात्रविदो जनाः ।। [4]
कापालिकाः पाशुपताः पार्षंडा ये च तद्विधाः ।
यस्याश्नंति हविष्येते दुरात्मानस्तु तामसाः ।
न तस्य तां द्भवेछ्रा प्रेत्य चेह फलप्रदां ।
अनाश्रमी यो द्विजः स्यादाश्रमी वा निरर्थकः ।। [8]
मिथ्याश्रमी च ये विप्रा विज्ञेयाः पंक्तिदूषकः ।
दुश्चर्मा कुनाखी कुष्ठी श्वित्री च श्यावदन्तकः ।
विद्धप्रजननश्चैव स्तेन क्लीबोऽथ नास्तिकः ।
मद्यपो वृषली सक्तो वीरहा दिधिषूपतिः ।। [12]
आगारदाही कुण्डाशी सोमविक्रयिणो द्विजाः ।
परिवित्तिनिराकृतिः
पौनर्भवः कुशीदी च तथा नक्षत्रदर्शकाः ।
गीतवादित्रनिरतो व्याधितः काण एव च ।। [16]
हीनाङ्गश्चातिरिक्ताङ्गो ह्यवकीर्णा तथैव च ।
कन्यादूषी कुण्डगोलौ ह्यविशस्तोऽथ देवलः ।
मित्रध्रुक् पिशुनश्चैव नित्यं भार्यानुवर्त्ततः । ( = ३२–४१)

**४२.** का1 दे10. ab ⊙; दे4 द1 ग्र2 म1 उ1. cd ⊙. –a) दे4 मातापित्रोर्गुरुत्यागी, ते1 द1 ग्र2 म1 उ1 माता (ग्र2 °त्रा) पितृगुरुत्यागी. –b) दे1.3.6 दारा° (→दार°). –c) दे1.8.9 मुवें. मुए. मुब. गोत्रस्पृक्, दे3 ते1 गोत्रघ्नो, न1 गोत्र* (→गोत्रभिद्); का1 गोत्रभिक्षुरशौचश्च. –d) दे3 काणपृष्ट्स्, दे9.10 काण्डस्यपृष्ट्स्, न1 काष्ठपृष्ठस्, ते1 काण्डपृष्ठस् (→काण्डस्पृष्टस्).

**४३.** –a) दे6 अनपत्यं (→अनपत्यः). –b) का1 ग्र2 मुब. पाचको, ब2.3 पाठको, दे3 जीवको, ते1 वाचको (→याचको); का1 ब3 दे2.6 रत्नजीवकः, ब1 दे3 न1 ते1 रंगजीवि(ते1°व°)नः, दे4 रंगयाचनः (→रङ्गजीवकः). –c) दे3 °मा*, दे4 °याजी, दे6 °जायी, दे10 °यानी (→°यायी). –d) ग्र2 म1 रथ्यास् (→तथा); ग्र2 °तोदकः (→°भेदकः).

**४४.** दे1. ab ⊙. –a) दे3.4.8-10 ते1 ग्र2 म1 मुवें. मुए. मुब. वेदनिन्दा(दे4 °ति)रतश्चैव, न1 वेदनिन्दापरतश्चैव, द1 देवनिन्दारतश्चैव, उ1 रेतनिन्दा रतश्चैव. –b) दे3.4 ते1 ग्र2 उ1 देवनिन्दारत(दे4 °ति)स्तथा, दे6 वेदनिंदास्तथैव च, दे8.9 न1 मुवें. मुए. मुब. देवनिन्दापरस्तथा, दे10 परनिंदारतस्तथा. –c) का1 °निन्दा ततश्, दे4 °निन्दारताश्, न1 °निन्दापरश् (→°निन्दारतश्); ब1-3 दे1.3.4.6.8-10 ते1 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. चैव (→चैते). –d) दे1.8-10 मुवें. मुए. °कर्मणि (→°कर्मसु); द1 वर्ज्याः श्राद्धानि कर्मसु.

अतः परम् का1 अधिकम्—
* ब्रह्मभावा निरस्ताश्च वर्जनीयाः प्रयत्नतः । (=४६cd).

**४५.** –a) का1 कृतघ्नाः (→कृतघ्नः); ब2 क्रुद्धो (→क्रूरो). –b) का1 वेदनिंदकाः, दे3.10 न1 देवनिंदकः (→वेदनिन्दकः). –c) दे4 मृत्युध्रुक्, न1 ग्र2 मित्रदृक् (→मित्रध्रुक्); ब1 कुहकाश्चेते, ब3 दे2.6 कुहकाश्चेति, द1 ग्र2 म1 उ1 प(द1 उ1 पा)रदार्यश्च (→कुहकश्चैव). –d) ब1 विज्ञेयाः (→विशेषात्); दे2.6 न1 ग्र2 उ1 मुवें. मुए. °दूषकः (→°दूषकाः).

**४६.** दे6. ४६-४८ ⊙; का1. cd ⊙. –a) मुवें. सर्वैः (→सर्वे); दे1 अभोज्यान्न, दे4.8-10 द1 ग्र2 म1 मुवें. मुए. मुब. अभोज्यान्ना, न1 अभोज्यांनस् (→अभोज्यान्नास्); का1 ते सर्वे पुनर्भोज्या, उ1 सर्वे पित्रे न भोज्यान्ना. –b) का1 अनर्हाः सर्वे-, ब1 त्वनादार्हश्च, दे1.8-10 ग्र2 मुवें. मुए. मुब. न दानार्हाः स्व-, दे3 तदानार्हास्य, दे4 द1 म1 उ1 न दानार्हाश्च, न1 त्वदानर्हश्च, ते1 ह्यनर्हाः सर्व- (→त्वदानार्हाश्च). –c) ब1.3 ते1 ब्रह्मभावान्निरस्ता (ब3 °स्त°)श्च, ब2 ब्रह्महा चाग्निदश्चैव, दे1.8-10 मुवें. मुए. मुब. ब्रह्महा चाभिशस्ताश्च, दे3 ब्रह्महा चानिरस्ताश्च, दे4 ब्रह्महा च निरस्तश्च, न1 ब्रह्मभावां निरस्तांश्च, द1 म1 ब्रह्महा वाक्ति(म1 °ति)रश्चैव, ग्र2 ब्रह्मभावन् युक्तिरश्चैव, उ1 ब्रह्महा वाभिशस्तश्च.

**४७.** दे6. ⊙ (द्र. ४६ पा.वि.); द1 ग्र2 म1 उ1. ४७-४९ ⊙; दे10. ४७c-४८b ⊙. –a) दे3 °रत° (→°रस°);

अधीतनाशनश्चैव स्नानहोमविवर्जितः ।
तामसो राजसश्चैव ब्राह्मणः पङ्क्तिदूषकः ॥४८

बहुनाऽत्र किमुक्तेन विहितान् ये न कुर्वते ।
निन्दितानाचरन्त्येते वर्जनीयाः प्रयत्नतः ॥४९

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायामुपरिविभागे एकविंशोऽध्याय ॥२१॥

# २२

व्यास उवाच ।❀

गोमयेनोदकैर्भूमिं शोधयित्वा समाहितः ।
संनिपात्य द्विजान् सर्वान् साधुभिः संनिमन्त्रयेत् ॥१
श्वो भविष्यति मे श्राद्धं पूर्वेद्युरभिपूज्य च ।
असंभवे परेद्युर्वा यथोक्तैर्लक्षणैर्युतान् ॥२
तस्य ते पितरः श्रुत्वा श्राद्धकालमुपस्थितम् ।
अन्योन्यं मनसा ध्यात्वा संपतन्ति मनोजवाः ॥३
ब्राह्मणैस्ते सहाश्नन्ति पितरो ह्यन्तरिक्षगाः ।

वें.२.२२.४

का1 दे3 °पुष्टांगाः (→पुष्टांगः). –c) का1 ब3 दे3.4 °विहीनाश्च (→विहीनश्च). –d) का1 दे4 ते1 ब्राह्मणाः (→ब्राह्मणः); का1 दे3.4 ते1 °दूषकाः (→°दूषकः).

४८. दे6. ⊙ (द्र. ४६ पा. वि.); द1 ग्र2 म1 उ1. ⊙ (द्र. ४७ पा. वि.); दे10. ab ⊙ (द्र. ४७ पा. वि.); ब1. bc ⊙ (द्र. सं.). –a) ब1 अधश्चानाशनश्, दे1.8.9 अधीतनाशनं, ते1 अधीतनाशकश् (→अधीतनाशनश्). –b) दे1 न1 मुवें. मुए. मुब. °दान°, दे8.9 °मौन° (→°होम°); दे3 °विवर्जिताः (→°विवर्जितः). –c) का1 रजसश् (→राजसश्); दे3 तामसा राजसाश्चैव. –d) का1 दे4 ते1 ब्राह्मणाः (→ब्राह्मणः); का1 दे4 ते1 °दूषकाः, दे3 °दूषगा (→°दूषकः).

४९. द1 ग्र2 म1 उ1. ⊙ (द्र. ४७ पा. वि.). –b) ब1 विहितेन न, दे1 विहितानपि, दे10 विहितान्नेन, ते1 ये विनिन्द्यांश्च (→विहितान् ये न). –c) न1 निंदितानां च भित्येतद्, ते1 विहितान् न त (च) रन्त्येवं. –d) दे1.3.8-10 ते1 मुवें. मुए. मुब. वर्ज्याः श्राद्धे, दे4 वर्ज्यश्राद्ध- (→वर्जनीयाः).

**पुष्पिका—**

**पुराणनाम—**का1 दे6 इति श्रीकूर्मपुराणे उपरिभागे, ब1 इति कौर्मे उपरिभागे, ब2 इति कूर्मपुराणे, ब3 दे2 इति कू(दे2 कौ)र्मपुराणे उपरिभागे, दे1 इति श्रीकूर्मपुराणे उपरिविभागे व्यासगीतासु, दे3 इति श्रीकूर्मपुराणे व्यासगीतासु, दे4 इति श्रीकूर्मपुराणे, दे8.9 इति श्रीकूर्मपुराणे उपरिभागे व्यासगीतासु, दे10 इति कूर्मपुराणे उपरिभागे व्यासगीतासु, न1 इति श्रीकौर्मे, ते1 इत्यादिमहापुराणे श्रीकूर्मपुराणे उपरिभागे, द1 उ1 इति श्रीकूर्मपुराणे उत्तरभागे व्यासगीतासु, ग्र2 म1 इति श्रीकूर्मपुराणे उत्तर(म1 उपरि)भागे व्यासगीतासूपनिषत्सु, मुवें. इति श्रीकूर्मपुराणे उत्तरार्द्धे व्यासगीतासु, मुए. इति श्रीकूर्मपुराणे उपभागे व्यासगीतासु, मुब. इति श्रीकौर्मे महापुराणे उपरिभागे ब्रह्मविद्यायां. **अध्यायनाम—**का1 ब1-3 दे2.4.6 न1 ते1 द1 ग्र2 म1 उ1. ⊙; दे1.3.8-10 मुवें. मुए. **मुब.** श्राद्धकल्पे. **अध्यायसंख्या—**ब2 दे6.⊙; का1 विंशोऽध्यायः ॥२०॥, ब1.3 दे2 ते1 विंशोऽध्यायः, दे1 एकोनविंशोऽध्यायः ॥१९॥, दे3.4.9 द1 ग्र2 म1 उ1 मुए. एकविंशोऽध्यायः, दे8 एकोनविंशोऽध्यायः, दे10 एकविंशतितमोऽध्यायः, न1 एकसप्ततितमोऽध्यायः, मुवें. मुब. एकविंशोऽध्यायः ॥२१॥.

**२२**

❀ दे9 व्यास उ.; न1 श्रीव्यासः; ते1 ग्र2 म1 उ1 व्यासः.

१. –a) द1 पूर्वे, ग्र2 म1 उ1 पूर्वं (→भूमिं). –c) दे1.8-10 मुवें. मुए. मुब. सन्निमन्त्र्य, दे4 ते1 संनिपत्य (→संनिपात्य). –d) ब3 साधुभिः संनिवर्त्तयेत्, ते1 साधुभिश्च निमन्त्रयेत्.

२. –b) दे2 अति°, ग्र2 अपि° (→अभि°); ब2 ते, दे3.4 द1 ग्र2 म1 तान्, न1 तु (→च); ते1 पूर्वेद्युरभिपूजितान्. –c) दे1-4.8-10 मुए. वै (→वा); ते1 असंभवे परे पूर्वे.

३. –a) ग्र2 मे (→ते); मुब. श्राद्धाः (→श्रुत्वा). –b) दे3 °कल्प-, द1 ग्र2 म1 उ1 °काल- (→°कालम्); ब2 °उपस्थिताः, द1 ग्र2 म1 उ1 उपस्थिते (→उपस्थितम्). –c) ब1 दे2 अन्योन्य-, ते1 अनन्य- (→अन्योन्यं); ते1 ध्याताः (→ध्यात्वा). –d) का1 संयताक्ष- (→संपतन्ति).

४. –a) का1 ते1 ब्राह्मणैः, दे1.8.10 मुवें. मुए. मुब. तैर्ब्राह्मणैः, ब3 दे4 द1 ग्र2 म1 उ1 ब्राह्मणैस्तैः (→ब्राह्मणैस्ते);

-बें.२.२२.४

वायुभूतास्तु तिष्ठन्ति भुक्त्वा यान्ति परां गतिम् ॥४
आमन्त्रिताश्च ते विप्राः श्राद्धकाल उपस्थिते ।
वसेयुर्नियताः सर्वे ब्रह्मचर्यपरायणाः ॥५
अक्रोधनोऽत्वरोऽमत्तः सत्यवादी समाहितः ।
भारं मैथुनमध्वानं श्राद्धकृद् वर्जयेज्जपम् ॥६
आमन्त्रितो ब्राह्मणो वा योऽन्यस्मै कुरुते क्षणम् ।
स याति नरकं घोरं सूकरत्वं प्रयाति च ॥७
आमन्त्रयित्वा यो मोहादन्यं चामन्त्रयेद् द्विजम् ।
स तस्मादधिकः पापी विष्ठाकीटोऽभिजायते ॥८
श्राद्धे निमन्त्रितो विप्रो मैथुनं योऽधिगच्छति ।
ब्रह्महत्यामवाप्नोति तिर्यग्योनौ च जायते ॥९
निमन्त्रितस्तु यो विप्रो ह्यध्वानं याति दुर्मतिः ।
भवन्ति पितरस्तस्य तं मासं पांशुभोजनाः ॥१०
निमन्त्रितस्तु यः श्राद्धे प्रकुर्यात् कलहं द्विजः ।
भवन्ति तस्य तन्मासं पितरो मलभोजनाः ॥११
तस्मान्निमन्त्रितः श्राद्धे नियतात्मा भवेद् द्विजः ।
अक्रोधनः शौचपरः कर्ता चैव जितेन्द्रियः ॥१२
श्वोभूते दक्षिणां गत्वा दिशं दर्भान् समाहितः ।
समूलानाहरेद् वारि दक्षिणाग्रान् सुनिर्मलान् ॥१३
दक्षिणाप्रवणं स्निग्धं विभक्तं शुभलक्षणम् ।

---

दे6 सह स्नान्ति, न1 म1 समाश्नन्ति, ते1 सदाश्नन्ति (→सहाश्नन्ति). –b) न1 वान्त° (→ह्यन्त°). –c) दे4.6 ते1 म1 उ1 च (→तु); ग्र2 वायुभूताश्चरिष्यन्ति.

५. –a) का1 ग्र2 अमन्त्रिताश्च (→आमन्त्रिताश्च); दे3 ते1 द1 उ1 ये (→ते). –b) ब1 उपस्थिताः, दे6 उपस्थितिः (→उपस्थिते). –c) द1 ग्र2 म1 उ1 वसेरन् (→वसेयुर्).

६. –a) दे3 अक्रोधनोऽत्वरश्चैव, ते1 अक्रोधनो ह्यरोषस्तु, ग्र2 अक्रोधनोऽत्वरो यत्तः, उ1 अक्रोधनोऽत्वरो युक्ताः. –c) ब1 दे1.8-10 ग्र2 उ1 भार-, दे3.4 ते1 द1 ग्र1 म1 भवेत्, दे6 भाव- (→भारं); ब1 यानं च (→अध्वानं). –d) द1 ग्र2 म1 उ1 श्राद्धभुक् (→श्राद्धकृद्); का1 त्रयं, ब1 द्वयं, दे1.8-10 मुवें. मुए. मुब. ध्रुवं, दे2 तपः, दे3.4 ते1 बुधः (→जपं).

७. –a) ग्र2 अमंत्रितो (→आमन्त्रितो); ब1 दे1.3.4.8.9 न1 ते1 द1 ग्र2 म1 मुवें. मुए. मुब. वै, ब2 दे10 यो (→वा); उ1 आमन्त्रितो ब्राह्मणस्य. –b) ग्र2 योऽन्यस्मिन्, उ1 योऽन्यत्र (→योऽन्यस्मै). –c) का1 ब1-3 दे2.3 न1 रौरवं (→नरकं). –d) दे10 सूकरित्वं (→सूकरत्वं); दे1 प्रजापति, ग्र2 प्रयान्ति च (→प्रयाति च).

८. –a) दे6 अमन्त्रयित्वा (→आमन्त्रयित्वा). –b) का1 ब2.3 दे2.6 अपरं, न1 ग्र2 म1 अन्यं वा- (→अन्यं चा-); ब1.2 दे1.8-10 न1 मुवें. मुए. मुब. द्विजः (→द्विजम्). –c) न1 ग्र2 वाऽपि (→पापी). –d) द1 ग्र2 म1 उ1 विष्ठायां जायते कृमिः.

९. न1. –b) दे4 मुवें योऽभि° (→योऽधि°). –d) दे1.8.9 मुवें. मुए. विधीयते, द1 उ1 प्रजायते (→च जायते); दे10 तिर्यग् योनिं प्रजायते, ग्र2 म1 तिर्यग्योनिषु जायते.

१०. ब1 दे6. ab ⊙. –a) ब2 द1 ग्र2 म1 उ1 च (→तु). –b) दे4 ह्यध्वानि, द1 [अ]ध्यध्वानं (→ह्यध्वानं); ब2.3 ह्यध्वानमधिगच्छति, न1 ह्यध्वानं योतिगच्छति. –d) दे6 मुवें तन्मासं पापभोजनाः (दे6 °नः), दे10 रक्तमांसं पांशुभोजनाः.

११. दे3. ⊙. –b) ब1 दे1.8.10 मुवें. मुब. कुर्याद् वै, दे9 करोति (→प्रकुर्याद्); ब2 द्विजाः, न1 द्विज (→द्विजः). –c) दे1-3.8-10 म1 मुवें. मुए. मुब. भवन्ति पितरस्तस्य. –d) दे1.3.8-10 म1 मुवें. मुए. मुब. तं मासं मलभोजनाः.

१२. दे3. ⊙. –b) का1 समाहितः (→भवेद् द्विजः). –c) दे4 श्राद्धपरः (→शौचपरः).

१३. दे3.10. ⊙. –a) ब1 न1 दक्षिणं (→दक्षिणां). –b) न1 दश- (→दिशं). –c) न1 आहवेद् (→आहरेद्); का1 ब2 ते1 वापि (→वारि). –d) ब2 दक्षिणाशाश् (→दक्षिणाग्रान्); द1 ग्र2 म1 तु (→सु-); ब1-3 न1 -निर्मलं, म1 निक्षिपेत् (→-निर्मलान्)

दे3 पुस्तके ११-१३ श्लोकाः अधोनिर्दिष्टप्रकारेणागताः—
निमन्त्रितस्तु यः श्राद्धे न नियतात्मा भवेद् द्विजः ।
अक्रोधनः शौचपरः कर्त्ता चैव जितेन्द्रियः ।
श्वो भूते दक्षिणां गत्वा दिशं दर्भान् समाहितः ।
समूलानाहरेद्वारि अकुर्यात्कलहं द्विजः ।
भवन्ति तस्य वै मासं पितरो मलभोजनाः ।
तस्मान्निमन्त्रितः श्राद्धे दक्षिणाग्रान् सुनिर्मलान् ।
(=११-१३)

१४. –a) का1 म1 °प्रणवं, ब2.3 °प्लवनं, दे4 °श्रवणं (→°प्रवणं); द1 ग्र2 उ1 शुद्धं, ते1 तैश्च (→स्निग्धं); दे3 दक्षिणप्रवणास्तिष्ठन्. –b) का1 ब1-3 दे2.6 विविक्तं (→विभक्तं);

शुचिं देशं विविक्तं च गोमयेनोपलेपयेत् ।।१४
नदीतीरेषु तीर्थेषु स्वभूमौ चैव सानुषु ।
विविक्तेषु च तुष्यन्ति दत्तेन पितरः सदा ।।१५
पारक्ये भूमिभागे तु पितॄणां नैव निर्वपेत् ।
स्वामिभिस्तद् विहन्येत मोहाद् यत् क्रियते नरैः ।।१६
अटव्यः पर्वताः पुण्यास्तीर्थान्यायतनानि च ।
सर्वाण्यस्वामिकान्याहुर्न हि तेषु परिग्रहः ।।१७
तिलान् प्रविकिरेत् तत्र सर्वतो बन्धयेदजान् ।
असुरोपहतं सर्वं तिलैः शुद्धयत्यजेन वा ।।१८

ततोऽन्नं बहुसंस्कारं नैकव्यञ्जनमच्युतम् ।
चोष्यपेयसमृद्धं च यथाशक्त्या प्रकल्पयेत् ।।१९
ततो निवृत्ते मध्याह्ने लुप्तलोमनखान् द्विजान् ।
अभिगम्य यथामार्गं प्रयच्छेद् दन्तधावनम् ।।२०
तैलमभ्यञ्जनं स्नानं स्नानीयं च पृथग्विधम् ।
पात्रैरौदुम्बरैर्दद्याद् वैश्वदैवत्यपूर्वकम् ।।२१
ततः स्नात्वा निवृत्तेभ्यः प्रत्युत्थाय कृताञ्जलिः ।
पाद्यमाचमनीयं च संप्रयच्छेद् यथाक्रमम् ।।२२
ये चात्र विश्वेदेवानां विप्राः पूर्वं निमन्त्रिताः । वें.२.२२.२३

दे3 सुविलक्षणं, द1 ग्र2 शुभदक्षिणं (→शुभलक्षणं). –c) ब1 दे4.6.10 म1 शुचि- (→शुचिं); म1 विभक्तं (→विविक्तं); ते1 शुचिर्देशे शुचौ विप्रो, उ1 शुचिदेशे विभक्तं च. –d) दे10 गोमयेन च लेपयेत्.

१५. –b) दे3 ते1 सुभूमौ, दे4 ग्र2 सभूमौ (→स्वभूमौ); दे1.8.9 मुवें. मुए. मुब. नाम्बुषु (→सानुषु); का1 भूमौ चैवादिसानुषु, दे2 भूमौ वै वध सानुषु, उ1 स्वभूमौ गिरिसानुषु. –c) का1 दे2 विविक्तेष्वनुतुष्यन्ति. –d) दे6 दैत्येन (→दत्तेन); ग्र2 उ1 तथा (→सदा).

१६. का1 ते1. cd ⊙. –a) दे10 पारिक्ये, न1 पवत्ये (→पारक्ये). –b) ग्र2 उ1 वैन (→नैव); का1 कारयेत्, ते1 दापयेत् (→निर्वपेत्). –d) दे3 मौल्यविक्रमयेत नरैः.

१७. का1. ab ⊙. –a) दे3 अदुष्टः, ग्र2 अटव्यं (→अटव्यः); दे6 पर्वतान् (→पर्वताः); दे1.8-10 पर्वतारण्याः (→पर्वताः पुण्याः). –c) ग्र2 सर्वाण्यपि स्वकान्याहुर्. –d) दे1.8.9 मुवें. मुए. मुब. न ह्येतेषु, दे10 निन्द्यं तेषु (→न हि तेषु); दे4 प्रतिग्रहः (→परिग्रहः).

१८. –a) ब2 दे4 तिलांश्च, दे3 तिलांस्तान् (→तिलान् प्र-); का1 ब1.3 दे6 न1 ते1 द1 ग्र2 म1 उ1 तिलानवकिरेत्तत्र, दे10 तिला न चक्रिरे तस्य. –b) दे6 सर्वज्ञो, ग्र2 सर्वगो (→सर्वतो); का1 दे6 द्विजान्, दे1.3.8.9 मुवें. मुए. अजं (→अजान्); ते1 सर्वत्रानुनयेत्तिलान्. –c) दे3 उ1 असुरापहतं (दे3 °ता), दे6 न1 असुरौपह (न1 °हि) तं (→असुरोपहतं); मुवें. श्राद्धं (→सर्वं), ते1 असुरोपहतं चापि. –d) न1 द1 ग्र2 म1 उ1 च (→वा); ब1 तिलैः शुद्धव्यभोजनः, दे3 तिलैः शुद्धा जलेन वा, दे4 तिलैः शुद्धयत्यजेन च, ते1 तिलैः शुद्धयति तेन च.

१९. –a) का1 दे2 ततोऽर्थं, दे4 ततोऽग्नि (→ततोऽन्नं); दे3 ते1 अतोऽन्नं च सुसंस्कारं. –b) ब1 नैकव्यञ्जनगव्यं तत्, न1 द1 ग्र2 म1 उ1 नैकव्यञ्जनमव्ययं, दे1.8-10 मुवें. मुए. मुब. नैकव्यञ्जनमध्यगं (दे10 °मं), दे4 नैकव्यञ्जनसंभवं, ते1 नैकव्यंजनमुण्णवत्. –c) दे3.4.8-10 मुवें. मुए. मुब. चोष्यं, द1 ग्र2 उ1 शोष्य- (→चोष्य-); दे1.3.4.8-10 मुवें. मुए. मुब. पेयं (→-पेय-); का1 दे2 द1 -समृद्धि, दे1.8-10 मुवें. मुए. मुब. -संसृतं, दे6 -समृद्धैः (→-समृद्धं). –d) ब1 दे3 द1 ग्र2 म1 उ1 यथाशक्त्युपकल्पयेत्, दे1.8-10 मुवें. मुए. मुब. यथाशक्ति प्रकल्पयेत्, दे4 यथा शक्त्युपबृंहयेत्.

२०. –b) दे3 कृत्त- (→लुप्त-); दे1.3.4.8-10 न1 ते1 मुवें. मुए. मुब. -रोम° (→-लोम°). –c) ब2 अभिमान्य, दे1.8-10 न1 मुवें. मुए. मुब. अवगम्य, ते1 अधिगम्य (→अभिगम्य); ते1 प्रयजेत यथाबलं.

अतः परं मुवें. अधिकम् :—

38. * आसध्वमिति संजल्पन्नासीरन्ते पृथक् पृथक् ।

२१. ते1. cd ⊙. –a) का1 ब2.3 दे2.6 तैलेनाभ्यञ्जनं (→तैलमभ्जयञ्नं). –b) ते1 पानीयं (→स्नानीयं); उ1 पृथक् पृथक् (→पृथग्विधं). –c) दे3 पात्रमौदुम्बरं, दे6 पात्रै रौदुम्बरेर् (→पात्रैरौदुम्बरैर्). –d) दे6 विश्व° (→वैश्व°); ब1 °देवाद्य-, ब2.3 मुवें. मुए. मुब. °देवत्य-, दे1.3.8-10 °देवस्य, दे4 °देवश्च, द1 ग्र2 उ1 °देवत्व- (→°दैवत्य-).

२२. –a) दे1 स्नानं, दे8-10 मुवें. मुए. मुब. स्नानात् (→स्नात्वा). –d) ते1 प्रयच्छेत्, + प्रयजेत् (→प्रयच्छेत्); ते1 यथाविधि (→यथाक्रमम्).

२३. दे4. ⊙. –a) ब1-3 दे1.3.6.8-10 न1 द1 ग्र2 उ1 मुवें. मुए. मुब. विश्व- (→विश्वे-); ब2 -देवार्थं (→-देवानां). –b) ब1-3 दे2.6 मुवें. मुए. मुब. द्विजाः (→विप्राः). –c) दे3 एवं (→एषां). –d) ब1 द्विदर्भोपिहितानि च, दे1.8-10

वें.२.२२.२३ प्राङ्मुखान्यासनान्येषां त्रिदर्भोपहितानि च ॥२३
दक्षिणामुखयुक्तानि पितॄणामासनानि च ।
दक्षिणाग्रैकदर्भाणि प्रोक्षितानि तिलोदकैः ॥२४
तेषूपवेशयेदेतानासनं स्पृश्य स द्विजम् ।
आसध्वमिति संजल्पन् आसनास्ते पृथक् पृथक् ॥२५
द्वौ दैवे प्राङ्मुखौ पित्र्ये त्रयश्चोदङ्मुखास्तथा ।
एकैकं वा भवेत् तत्र देवमातामहेष्वपि ॥२६
सत्क्रियां देशकालौ च शौचं ब्राह्मणसंपदम् ।
पञ्चैतान् विस्तरो हन्ति तस्मान्नेहेत विस्तरम् ॥२७
अपि वा भोजयेदेकं ब्राह्मणं वेदपारगम् ।
श्रुतशीलादिसंपन्नमलक्षणविवर्जितम् ॥२८
उद्धृत्य पात्रे चान्नं तत् सर्वस्मात् प्रकृतात् पुनः ।
देवतायतने चास्मै निवेद्यान्यत्प्रवर्त्तयेत् ॥२९
प्रास्येदेग्नौ तदन्नं तु दद्याद् वा ब्रह्मचारिणे ।
तस्मादेकमपि श्रेष्ठं विद्वांसं भोजयेद् द्विजम् ॥३०
भिक्षुको ब्रह्मचारी वा भोजनार्थमुपस्थितः ।
उपविष्टेषु यः श्राद्धे कामं तमपि भोजयेत् ॥३१
अतिथिर्यस्य नाश्नाति न तच्छ्राद्धं प्रशस्यते ।
तस्मात् प्रयत्नाच्छ्राद्धेषु पूज्या ह्यतिथयो द्विजैः॥३२
आतिथ्यरहिते श्राद्धे भुञ्जते ये द्विजातयः ।
काकयोनिं व्रजन्त्येते दाता चैव न संशयः ॥३३

---

त्रिदर्भोपहतानि च, ते1 त्रिदर्भोपरिकृतानि च, द1 ग्र2 म1 द्विदर्भा (म1 °र्भ-) वि (द1 पि) हितानि च, उ1 द्विजन्मपि-हितानि च, मुवें. मुए. मुब. त्रिदर्भोपहतानि च.

२४. दे1.3.4.8-10 द1 ग्र2 म1 उ1. ab ⊙. –a) ब2 उत्तरा° (→दक्षिणा°); ब1.3 मुवें. मुए. मुब. °मुक्तानि (→°युक्तानि). –c) दे3 °दर्भाश्च (→°दर्भाणि); दे1.8-10 मुवें. मुए. मुब. दक्षिणाग्रेषु दर्भेषु, ते1 दक्षिणाग्राणि दर्भाणि, द1 दक्षिणाग्रैस्तु दर्भाणि. –d) दे3 प्रक्षिप्याणि (→प्रोक्षितानि).

२५. –a) ग्र2 °वेशनात् (→°वेशयेद्); दे6 विप्रान् (→एतान्). –b) ब1 संस्पृशन् द्विजाः, ब2 स्पृश्य स द्विजः, दे1.8-10 म1 मुवें. मुए. मुब. संस्पृशन्नपि, दे3 संस्पृशेत्तत, न1 संस्पृशन् द्विजान्, ते1 उ1 संस्पृशेदपि, द1 ग्र2 संश्रयन्नपि (→स्पृश्य स द्विजं). –c) ते1 संजल्पेत्, द1 ग्र2 म1 उ1 संकल्प्य (द1 °ल्प) (→संजल्पन्). –d) ब1 स्वासीरन्, ब2.3 स्वासनास्, दे1.4.8.9 मुवें. मुए. मुब. आसीरन्, दे6 स्वासीनास्, ग्र2 म1 आसनं (→आसनास्); न1 * सीनेषु पृथक् पृथक्.

२६. द1 ग्र2. २६d–४६d ⊙. –a) दे2.6.10 द1 ग्र2 म1 देवे, न1 उ1 देवौ (→दैवे); दे1.6 न1 प्राङ्मुखे (→प्राङ्मुखौ); दे4 ते1 मुवें. पित्रे, न1 विप्रौ (→पित्र्ये). –c) दे1.8.9 मुवें. मुए. मुब. तत्र देवं तु, दे10 दैवतंत्र तु, न1 भावयेत्तत्र, द1 ग्र2 वा **** (→वा भवेत्तत्र). –d) ब1 दे2 न1 देवं, ब3 दैव-, दे1.8-10 मुवें. मुए मुब. पितृ-, दे4 एवं, दे6 ते1 दैवं, म1 पंच-, उ1 भवं (→देव-).

२७. द1 ग्र2. ⊙; ब1. bcd ⊙. –a) ब2 दे3.6 उ1 सत्क्रिया (→सत्क्रियां); ब1 सत्क्रियादेश ***. –b) म1 द्रव्यं (→शौचं); दे3.6 °संपदः (→°संपदं). –c) ते1 पञ्चैता (→पंचैतान्). –d) न1 विस्तरे (→विस्तरं).

२८. ब1 द1 ग्र2. ⊙. –a) दे1.4 ते1 उ1 अथवा (→अपि वा); का1 ब3 दे2 यो जयेद् (→भोजयेद्); दे1 एवं (→एकं). –c) दे4 श्रुतं (→श्रुत-).

२९. द1 ग्र2. ⊙. –a) दे4 उ1 तु, ते1 च (→तत्). –b) ब3 दे2.6 प्राकृतात्पुनः, दे1.8.9 मुवें. मुए. मुब. प्रकृता-ततः, दे4 प्रकृतात्मतः, दे10 प्रकृतादतः, ते1 प्रकृतात्मनः, उ1 प्रयतात्मनः (→प्रकृतात्पुनः). –c) दे4 देवतायतनं (→देवता-यतने); दे1.4.8-10 म1 मुवें. मुए. मुब. वासौ, ते1 तस्मै (→चास्मै). –d) दे3 ते1 निवेद्यान्नं (→निवेद्यान्यत्); ते1 प्रकल्पयेत् (→प्रवर्त्तयेत्).

३०. द1 ग्र2. ⊙; दे1.3.4.8-10 ते1 म1 उ1. cd ⊙. –a) दे1.8-10 मुवें. मुए. मुब. प्राश्येदन्नं, ते1 प्रादादग्नौ (→प्रास्येदेग्नौ); का1 दे6 तदर्थं, दे1.8-10 मुवें. मुए. मुब. तदग्नौ (→तदन्नं); म1 प्रागग्नौ च तदन्नं वा. –b) ब1 दे1.8-10 मुवें. मुए. मुब. वै (→वा); ब2 प्रदद्याद् ब्रह्मचारिणे, ते1 दद्याद् ब्राह्मणसंपदम्, म1 दद्याच्च ब्रह्मचारिणे.

३१. द1 ग्र2. ⊙. –a) दे6 च (→वा). –b) दे6 उपस्थितं (→उपस्थितः). –c) दे1.8-10 मुवें. मुए. मुब. °विष्टस्तु, दे2 °विष्टे तु, दे3 °विष्टं तु (→°विष्टेषु); ते1 उपविष्टेष्वपि श्राद्धे.

३२. द1 ग्र2. ⊙. –a) दे4 उ1 यत्र (→यस्य). –b) ब2 न च, दे3 न सत्, न1 न तु (→न तत्); ते1 तस्य श्राद्धं प्रणश्यति. –c) ते1 तस्मात्प्रयत्नतः श्राद्धे. –d) दे6 ते1 द्विजाः (→द्विजैः).

३३. द1 ग्र2. ⊙. –a) उ1 आतिथ्ये (→आतिथ्य-); न1 °वर्जिते (→°रहिते); ते1 आतिथ्यहीने श्राद्धे तु. –b) ब2 वै (→ये). –c) न1 कामयोनिं (→काकयोनिं).

हीनाङ्गः पतितः कुष्ठी व्रणी पुक्कसनास्तिकौ ।
कुक्कुटाः शूकराः श्वानो वर्ज्याः श्राद्धेषु दूरतः ॥३४
बीभत्सुमशुचिं नग्नं मत्तं धूर्तं रजस्वलाम् ।
नीलकाषायवसनं पाषण्डांश्च विवर्जयेत् ॥३५
यत् तत्र क्रियते कर्म पैतृकं ब्राह्मणान् प्रति ।
तत्सर्वमेव कर्त्तव्यं वैश्वदैवत्यपूर्वकम् ॥३६
यथोपविष्टान् सर्वांस्तानलंकुर्याद् विभूषणैः ।
स्रग्दामभिः शिरोवेष्टैर्धूपवासोऽनुलेपनैः ॥३७
ततस्त्वावाहयेद् देवान् ब्राह्मणानामनुज्ञया ।
उदङ्मुखो यथान्यायं विश्वे देवास इत्यृचा ॥३८
द्वे पवित्रे गृहीत्वाऽथ भाजने क्षालिते पुनः ।
शं नो देव्या जलं क्षिप्त्वा यवोऽसीति यवांस्तथा ॥३९
या दिव्या इति मन्त्रेण हस्ते त्वर्घं विनिक्षिपेत् ।
प्रदद्याद् गन्धमाल्यानि धूपादीनि च शक्तितः ॥४०
अपसव्यं ततः कृत्वा पितॄणां दक्षिणामुखः ।
आवाहनं ततः कुर्यादुशन्तस्त्वेत्यृचा बुधः ॥४१
आवाह्य तदनुज्ञातो जपेदायं तु नस्ततः ।
शं नो देव्योदकं पात्रे तिलोऽसीति तिलांस्तथा ॥४२
क्षिप्त्वा चार्घं यथापूर्वं दत्त्वा हस्तेषु वै पुनः ।
संस्रवांश्च ततः सर्वान् पात्रे कुर्यात् समाहितः ।
पितृभ्यः स्थानमेतेन न्युब्जं पात्रं निधापयेत् ॥४३
अग्नौ करिष्येत्यादाय पृच्छत्यन्नं घृतप्लुतम् ।　　बं.२.२२.४४

३४. द1 ग्र2. ⊙. –b) दे1.8-10 मुवें. मुए. मुब. व्रणयुक्तस्तु नास्तिकः, उ1 वणिक्पुक्कसनास्तिकाः. –c) दे1.3.4.8-10 न1 म1 उ1 मुवें. मुए. मुब. कुक्कुटः (दे10 कुर्कुरः) शूकरः श्वानो, ते1 सूकरः कुक्कुटः श्वानो. –d) ब2 यत्नतः (→दूरतः).

३५. द1 ग्र2. ⊙; [ब1.२२ अध्यायस्य ३५ श्लोकतः २३ अध्यायस्य १८ श्लोकं यावत् ⊙ ]. –a) ब2.3 दे2.6 ते1 वीभत्सम्, न1 विभ्रत्सम् (→बीभत्सुम्). –b) ते1 दुष्टं (→धूर्तं); दे2.3.6 रजस्वलं (→रजस्वलां). –c) का1 नीलंकषाय-, दे2 नीलकषाय-, न1 नावकाषीय-, ते1 नीलकौशेय- (→नीलकाषाय-); दे1.8.10 मुवें. मुए. मुब. -वसन-, न1 -वसमान्, म1 -वसनां (→-वसनं). –d) दे2 पार्षंजांश्च, दे10 पाखंडिश्च (→पाषण्डांश्च).

३६. ब1 द1 ग्र2. ⊙. –a) का1 यत्र यत्, ब2 अत्र तु (→यत् तत्र). –b) का1 ब3 दे1.2.8.9 न1 म1 मुब. पैतृके, दे6 पैत्र्यकं (→पैतृकं); ब2 पैतृक ब्राह्मणान् प्रति. –d) का1 दे1.8-10 उ1 °देवस्य, ते1 °दैविक, द1 म1 °देवत्य- (→°दैवत्य-); दे3 ब्राह्मणानामनुज्ञया.

३७. ब1 द1 ग्र2. ⊙. –a) दे3 दर्भो°, ते1 अथो° (→यथो°); ब2.3 दे2.6 उ1 °दिष्टान् (→°विष्टान्); म1 यथोपरिष्टान्स्तान् सर्वान्. –c) दे4 म1 स्रग्धामभिः (→°स्रग्दामभिः); दे1.8-10 °विष्टैः (→°वेष्टैः). –d) ब2 दे3 धूपैर् (→धूप-); दे3 वासोप,° दे10 -वासादि° (→-वासोऽनु°); ते1 धूपदीपानुलेपनैः, म1 धौतवासोविनिक्षिपेत्.

३८. ब1 द1 ग्र2. ⊙. –d) दे3.4 न1 स ऋत्विजाः (दे4 °जः), दे10 स वा द्विजाः (→स इत्यृचा).

३९. ब1 द1 ग्र2 म1 उ1. ⊙. –a) दे1.4.8-10 न1 ते1 मुवें. मुए. मुब. गृहीत्वाऽस्य (→गृहीत्वाऽथ). –b) दे10 भोजने (→भाजने); ते1 भोजने क्षालयेत्पुनः. –c) दे1-4.8-10 मुवें. मुए. मुब. देवी (→देव्या).

४०. ब1 द1 ग्र2. ⊙; म1. ab ⊙. –a) दे10 ये (→या); दे6 दिव्य (→दिव्या). –b) ब2 हस्ते चार्घ्यं, ब2 दे2.4.6 हस्तेष्वर्घ्यं (→हस्ते त्वर्घं); ते1 तेष्वर्घं विनिदापयेत्. –c) दे3.10 °माल्यादि (→°माल्यानि); ते1 प्रदद्यादथ माल्यानि. –d) का1 धूपानि च स्वशक्तितः, दे10 धूपदीपानि शक्तितः.

४१. ब1 द1 ग्र2. ⊙. –c) दे3 आवाहयेत् (→आवाहनं); दे3.4.10 ते1 तथा, दे8.9 तदा (→ततः). –d) ब2 पुनः (→बुधः); म1 उशन्तश्चेत्यृचा बुधः.

४२. ब1 द1 ग्र2. ⊙. –a) ब2 इत्यावाह्य तदा ज्ञातो. –b) दे10 उ1 तथा (→ततः). –c) उ1 देव्यु° (→देव्यो°); दे3 पात्रं (→पात्रे).

४३. ब1 द1 ग्र2. ⊙. –a) ब2.3 दे3.6.10 न1 ते1 म1 चार्घ्यं (→चार्घं); दे2 ते1 तथा° (→यथा°). –b) दे1.8-10 मुवें. मुए. मुब. वा (→वै). –d) दे6 पात्रे कृत्वा, ते1 कुर्यात् पात्रे (→पात्रे कुर्यात्). –e) दे1.8-10 म1 मुए. मुब. पितृभ्यः स्थानमसीति, मुवें. पितृभ्यः स्थानमेतच्च. –f) का1 ब2 दे1 न1 मुवें. मुए. मुब. न्युब्ज-, ते1 ह्यर्घं-, उ1 ह्यर्घ्यं (→न्युब्जं); दे10 फलं पात्रे, म1 न्युप्तपात्रं (→न्युब्जं पात्रं); दे4 ते1 उ1 निधाय च, न1 म1 निधाय तु (→निधापयेत्).

४४. ब1 द1 ग्र2. ⊙. –a) दे1.8.9 मुवें. मुए. अग्नौ करिष्यान्नादाय. –b) ब2 प्रहुतयर्थं, दे1.4.8.9 न1 ते1 मुवें. मुए.

वें.२.२२.४४ कुरुष्वेत्यभ्यनुज्ञातो जुहुयादुपवीतवान् ॥४४

यज्ञोपवीतिना होमः कर्त्तव्यः कुशपाणिना ।
प्राचीनावीतिना पित्र्यं वैश्वदेवं तु होमवत् ॥४५

दक्षिणं पातयेज्जानुं देवान् परिचरन् पुमान् ।
पितृणां परिचर्यासु पातयेदितरं तथा ॥४६

सोमाय वै पितृमते स्वधा नम इति ब्रुवन् ।
अग्नये कव्यवाहनाय स्वधेति जुहुयात् ततः ॥४७

अग्न्यभावे तु विप्रस्य पाणावेवोपपादयेत् ।
महादेवान्तिके वाऽथ गोष्ठे वा सुसमाहितः ॥४८

ततस्तैरभ्यनुज्ञातो गत्वा वै दक्षिणां दिशम् ।
गोमयेनोपलिप्योर्वीं स्थानं कृत्वा तु सैकतम् ॥४९

मण्डलं चतुरस्रं वा दक्षिणावनतं शुभम् ।
त्रिरुल्लिखेत् तस्य मध्यं दर्भेणैकेन चैव हि ॥५०

ततः संस्तीर्य तत्स्थाने दर्भान् वै दक्षिणाग्रकान् ।
त्रीन् पिण्डान् निर्वपेत् तत्र हविःशेषात्समाहितः॥५१

न्युप्य पिण्डांस्तु तं हस्तं निमृज्याल्लेपभागिनाम् ।
तेषु दर्भेष्वथाचम्य त्रिरायम्य शनैरसून् ।
तदन्नं तु नमस्कुर्यात् पितॄनेव च मन्त्रवित् ॥५२

उदकं निनयेच्छेषं शनैः पिण्डान्तिके पुनः ।
अवजिघ्रेच्च तान् पिण्डान् यथान्युप्तान् समाहितः॥५३

अथ पिण्डावशिष्टान्नं विधिना भोजयेद् द्विजान् ।
मांसान्यपूपान् विविधान् दद्यात् कृसरपायसम् ॥५४

---

मुब. पृच्छेदन्नं (→पृच्छत्यन्नं); का$_1$ ध्रुवं (→घृत-). –c) का$_1$ ब$_{2.3}$ दे$_{3.4.6}$ कुरुष्वेति ह्य (दे$_{3.4}$ °त्य) नुज्ञातो, ते$_1$ कुरुष्वेति तदनुज्ञातं. –d) दे$_{1.2.4}$ मुवें. मुए. उपवीतवित् (दे$_{2.4}$ °वत्) (→उपवीतवान्); ते$_1$ जुहुयाद्धूपदीपवत्.

४५. ब$_1$ द$_1$ ग्र$_2$. ⊙. –a) न$_1$ होमं (→होमः). –c) दे$_3$ पित्रे, म$_1$ पित्र्ये (→पित्र्यं). –d) ब$_2$ दक्षिणां, दे$_{1.8\text{-}10}$ म$_1$ मुए. मुब. होमयेत्, दे$_6$ मुवें. होमवित्, ते$_1$ होमकम् (→होमवत्).

४६. ब$_1$ द$_1$ ग्र$_2$. ⊙. –a) ब$_{2.3}$ दे$_{6.8.9}$ जानु- (→जानुं). –b) ब$_2$ दे$_{1.8.9}$ म$_1$ मुवें. मुए. मुब. सदा, दे$_3$ उ$_1$ तदा, न$_1$ ततः (→पुमान्); ते$_1$ देवानामर्चने तथा. –d) उ$_1$ पातयोदितरस्तथा.

४७. ब$_1$ द$_1$ ग्र$_2$. ⊙. –c) का$_1$ ब$_{2.3}$ दे$_2$ अग्नये कव्यवाहाय. –d) दे$_3$ स्वाहेति (→स्वधेति).

४८. ब$_1$ द$_1$ ग्र$_2$. ⊙. –a) दे$_{1.3}$ अ(दे$_3$ आ)ग्न्या° (→अग्न्य°). –c) दे$_3$ ते$_1$ चाऽथ (→वाऽथ). –d) उ$_1$ वाऽथ (→वा सु-).

४९. ब$_1$ द$_1$ ग्र$_2$. ⊙. –b) उ$_1$ गत्वा देवप्रदक्षिणं. –c) दे$_{1.3.8\text{-}10}$ मुवें. मुए. मुब. °लिप्याथ, म$_1$ °लिप्तं वा (→°लिप्योर्वीं). –d) दे$_{1.8\text{-}10}$ मुवें. मुए. मुब. कुर्यात् स-, दे$_{3.4}$ न$_1$ म$_1$ कुर्यात्तु (→कृत्वा तु-); ते$_1$ स्थानं कुर्यात्समे ततः.

५०. ब$_1$. ⊙; द$_1$ ग्र$_2$. a ⊙. –b) दे$_{1.8.9}$ मुवें. मुए. मुब. [अ]प्रवणं, दे$_{10}$ [अ]प्लवनं, ग्र$_2$ [अ]वचनं (→[अ]वनतं); दे$_3$ ते$_1$ दक्षिणं चोत्तरं शुभं, उ$_1$ दक्षिणां चोन्नतं शुभं. –c) दे$_4$ ऋतु° (→त्रिरु°); म$_1$ तत्र (→तस्य); का$_1$ दे$_4$ मध्ये (→मध्यं).

५१. ब$_1$. ⊙. –a) उ$_1$ तत्र (→ततः); म$_1$ स्थानं (→स्थाने). –b) दे$_{1.8\text{-}10}$ मुवें. मुए. दक्षिणाग्रगान् (→दक्षिणाग्रकान्). –d) दे$_3$ °शेषं, दे$_9$ °शेषान् (→°शेषात्).

५२. ब$_1$. ⊙. –a) दे$_1$ स्थाप्य, दे$_{3.8\text{-}10}$ ते$_1$ द$_1$ मुवें. मुए. मुब. उप्य, दे$_6$ सुप्य, ग्र$_2$ तप्य, म$_1$ उ$_1$ उप- (→न्युप्य); का$_1$ तत्स्थाने, दे$_{1.3.8\text{-}10}$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ मुवें. मुए. मुब. तद्धस्तं ते$_1$, तद् वस्त्रं (→तं हस्तं). –b) दे$_4$ निगृह्यात्, ते$_1$ निमृज्यात् (→निमृंज्यात्); का$_1$ °भाजनं, दे$_{1.8.9}$ द$_1$ ग्र$_2$ मुए. मुब. °भोजिनां, दे$_2$ °भोजनं, दे$_3$ °भागिनं, दे$_6$ °भागिनः, उ$_1$ °भोजना (→°भागिनां). –c) दे$_3$ आमृज्य (→आचम्य); दे$_6$ तेषु सर्वेष्वथावस्य, ते$_1$ तेषु बद्धेषु चाचम्य. –d) का$_1$ त्रिरारम्य, ब$_3$ ते$_1$ द$_1$ म$_1$ उ$_1$ मुवें. मुए. मुब. त्रिराचम्य, दे$_3$ तथाचम्य (→त्रिरायम्य). –e) का$_1$ ब$_{2.3}$ दे$_2$ न$_1$ षडप्यृतून्, दे$_3$ यदुद्धृतं, दे$_4$ षडप्येतान्, दे$_6$ षडस्यहन्, दे$_{10}$ यद् दत्तं तु, द$_1$ म$_1$ षड्भिः पितॄन्, मुब. षड्ऋतुंश्च (→तदन्नं तु); ते$_1$ मण्डलस्याग्रमुत्कुर्यात्. –f) दे$_4$ ऋतून्, म$_1$ मन्त्रैर् (→पितॄन्); द$_1$ ग्र$_2$ म$_1$ उ$_1$ पितॄन् देवांश्च धर्मवित्, दे$_2$ पितॄनेव च मन्त्रवत्.

५३. ब$_1$. ⊙. –c) दे$_4$ अवक्षिपेच्च, ते$_1$ उपजिघ्रेत (→अवजिघ्रेच्च). –d) दे$_1$ यथानुब्जा(?), दे$_3$ यथाभ्युष्टा, दे$_{4.8\text{-}10}$ मुवें. मुए. यथान्युप्त्वा, दे$_6$ यथा पुंसान्, ते$_1$ बद्धान् युक्ता (→यथान्युप्तान्).

५४. ब$_1$. ⊙. –a) ते$_1$ तथा (→अथ); का$_1$ °शिष्टचर्थं (→°शिष्टान्नं); दे$_{1.8\text{-}10}$ न$_1$ मुवें. मुए. मुब. अथ पिण्डाच्चशिष्टान्नं. –b) दे$_{1.8.9}$ मुवें. मुए. मुब. विधिवद्, द$_1$ विधानाद् (→विधिना). –c) ब$_3$ मांसान्य-

सूपशाकफलानीक्षून् पयो दधि घृतं मधु ।
अन्नं चैव यथाकामं विविधं भक्ष्यपेयकम् ॥५५
यद् यदिष्टं द्विजेन्द्राणां तत्सर्वं विनिवेदयेत् ।
धान्यांस्तिलांश्च विविधान् शर्करा विविधास्तथा ॥५६
उष्णमन्नं द्विजातिभ्यो दातव्यं श्रेय इच्छता ।
अन्यत्र फलमूलेभ्यः पानकेभ्यस्तथैव च ॥५७
नाश्रूणि पातयेज्जातु न कुप्येन्नानृतं वदेत् ।
न पादेन स्पृशेदन्नं न चैतदवधूनयेत् ॥५८

पूपांश्च, दे1.8.9 मुवें. मुए. मांसान्पूपांश्च, दे6 ते1 मांसानपूपान्, दे10 मांसान्पिण्डांश्च, द1 म1 उ1 माषान्नपूपान् (→मांसान्यपूपान्). –d) दे6 दत्त्वा (→दद्यात्); दे1.8-10 मुवें. मुए. श्राद्धकल्पांस्तु भोजनात्.

अतः परं दे1.8-10 मुवें. मुए. पुस्तकेषु ७०-७७ab श्लोका वर्त्तन्ते—

* 'ततोऽन्नमुत्सृजेद् भुक्तेष्वग्रतो विकिरन् भुवि ।
पृष्ट्वा तदन्नमित्येव तृप्तानाचामयेत्ततः ।
आचान्ताननुजानीयादभितो रम्यतामिति ।
स्वधास्त्विति च ते ब्रूयुर्ब्राह्मणास्तदनन्तरम् । [4]
ततो भुक्तवतां तेषामन्नशेषं निवेदयेत् ।
यथा ब्रूयुस्तथा कुर्यादनुज्ञातस्तु तैर्द्विजैः ।
पित्रे स्वदितमित्येव वाच्यं गोष्ठेषु सुश्रितम् ।
संपन्नमित्यभ्युदये देवे रोचितमित्यपि । [8]
विसृज्य ब्राह्मणान्तान् वै पितृपूर्वं तु वाग्यतः ।
दक्षिणां दिशमाकांक्षन्याचेतेमान् वरान्पितॄन् ।
दातारो नोभिवर्द्धन्तां वेदाः संततिरेव च ।
श्रद्धा च नो मा विगमद् बहु देयं च नोऽस्त्विति । [12]
पिण्डांस्तु गोऽजविप्रेभ्यो दद्यादग्नौ जलेऽपि वा ।
मध्यमं तु ततः पिण्डमद्यात्पत्नी सुतार्थिनी ।
प्रक्षाल्य हस्तावाचम्य ज्ञातिं शेषेण तोषयेत् ।
(= ७०-७६)

[-1) दे10 विकरं (→विकिरन्). –4) दे10 तत् (→ते) –7) दे1.8.9 पित्र्ये (→पित्रे). –8) मुवें. मुए. सेवित- (→रोचित-). –11) दे1.8.9 वेदः (→वेदा); दे10 व्यगमद् (→विगमद्)].

**५५.** ब1. ⊙. –a) ब2 पुष्प-, ब3 पूपः, दे4 सोप-, न1 सूपं, ते1 पूप- (→सूप-). –b) ते1 आपः (→पयो). –d) दे1.2.8-10 मुवें. मुए. मुब. भोज्य°, दे6 भक्ष° (→भक्ष्य°).

क्रोधेन चैव यद् दत्तं यद् भुक्तं त्वरया पुनः ।
यातुधाना विलुम्पन्ति जल्पता चोपपादितम् ॥५९
स्विन्नगात्रो न तिष्ठेत सन्निधौ तु द्विजन्मनाम् ।
न चात्र श्येनकाकादीन् पक्षिणः प्रतिषेधयेत् ।
तद्रूपाः पितरस्तत्र समायान्ति बुभुक्षवः ॥६०
न दद्यात् तत्र हस्तेन प्रत्यक्षलवणं तथा ।
न चायसेन पात्रेण न चैवाश्रद्धया पुनः ॥६१　वें.२.२२.६८

**५६.** ब1. ⊙. –a) ब2 समुच्छिष्टं, दे6 दद्यादिष्टं (→यद् यदिष्टं). –c) का1 ब2.3 दे2.3.4 ते1 द1 ग्र2 म1 धानास-, दे10 धान्यंस्, न1 पलांस् (→धान्यास्); ब2.3 दे3.4 न1 ते1 तिलाश्च (→तिलांश्च); ब2.3 त्रिविधाः, दे2.3 न1 ते1 विधिना (→विविधान्). –d) दे6 विविधान् (→विविधास्).

**५७.** ब1. ⊙. –a) ते1 उत्तमं यद् द्विजातिभ्यो. –b) का1 इच्छताम्, दे3 इच्छया, दे6 इच्छत, दे10 इच्छिता, उ1 इच्छतः (→इच्छता). –d) म1 ग्र2 उ1 पाकेभ्यश्च तथैव हि (उ1 च), द1 पक्वेभ्यश्च तथैव हि.

**५८.** ब1. ⊙. –a) दे1.8-10 मुवें. मुए. मुब. न भूमौ, न1 नाश्रुमा- (→नाश्रूणि); दे1.8-10 मुवें. मुए. मुब. जानु (→जातु). –b) ग्र2 कुप्यात् (→कुप्येत्). –b) दे3.8-10 मुवें. मुए. न चैवमवधूनयेत्.

**५९.** ब1. ⊙. –a) मुब. क्रोधेनैव च (→क्रोधेन चैव); न1 यद्भुक्तं (→यद् दत्तं); दे1 क्रोधेनैव यदुक्तं च, दे4.8-10 मुवें. मुए. क्रोधेनैव च यद् भुक्तं. –b) ब2 द1 ग्र2 म1 यद् दत्तं, दे1 उ1 *** (→यद् भुक्तं); दे1.8-10 मुवें. मुए. त्वयथाविधि (दे10 °धिः) (→त्वरया पुनः). –c) दे6 विलुप्यन्ति (→विलुम्पन्ति). –d) का1 जल्पतां चो°, दे1 जल्पतो चो° (?), द1 जल्पवाचो°, ग्र2 जल्पया चो°, उ1 जल्पन्या चो° (→जल्पता चो°); ते1 जल्पन्नाच्चैव वादतः.

**६०.** ब1. ⊙. –a) ब2 शून्य°, दे1.3 खिन्न°, ते1 वृत° (→स्विन्न°). –b) दे8-10 मुवें. मुए. मुब. च (→तु); दे1.8-10 द्विजोत्तमान्, मुब. द्विजोत्तमाः (→द्विजन्मनाम्). –c) दे1.3.4.8-10 ते1 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. न च वश्येत काकादीन्. –d) दे1.8-10 मुवें. मुए. प्रतिलोमगान् (→प्रतिषेधयेत्). –f) ते1 आज्यपाः पितरस्तद्वत्.

**६१.** ब1. ⊙. –a) ते1 दद्यादन्नं न हस्तेन. –b) दे1.4.8-10 म1 उ1 मुवें. मुए. मुब. प्रत्यक्षं (→प्रत्यक्ष-). –c) दे6 पात्राणि (→पात्रेण).

वें.२.२२.६१ काञ्चनेन तु पात्रेण राजतौदुम्बरेण वा ।
दत्तमक्षयतां याति खड्गेन च विशेषतः ।।६२
पात्रे तु मृण्मये यो वै श्राद्धे भोजयते पितॄन् ।
स याति नरकं घोरं भोक्ता चैव पुरोधसः ।।६३
न पङ्क्त्यां विषमं दद्यान्न याचेन्न च दापयेत् ।
याचिता दापिता दाता नरकान् यान्ति दारुणान् ।।६४
भुञ्जीरन् वाग्यताः शिष्टा न ब्रूयुः प्राकृतान् गुणान् ।
तावद्धि पितरोऽश्नन्ति यावन्नोक्ता हविर्गुणाः ।।६५
नाग्रासनोपविष्टस्तु भुञ्जीत प्रथमं द्विजः ।
बहूनां पश्यतां सोऽज्ञः पङ्क्त्या हरति किल्बिषम् ।।६६
न किञ्चिद् वर्जयेच्छ्राद्धे नियुक्तस्तु द्विजोत्तमः ।
न मांसं प्रतिषेधेत न चान्यस्यान्नमीक्षयेत् ।।६७
यो नाश्नाति द्विजो मांसं नियुक्तः पितृकर्मणि ।
स प्रेत्य पशुतां याति संभवानेकविंशतिम् ।।६८
स्वाध्यायं श्रावयेदेषां धर्मशास्त्राणि चैव हि ।
इतिहासपुराणानि श्राद्धकल्पांश्च शोभनान् ।।६९
ततोऽन्नमुत्सृजेद् भुक्ते अग्रतो विकिरन् भुवि ।
पृष्ट्वा तृप्ताः स्थ इत्येवं तृप्ता नाचामयेत् ततः ।।७०
आचान्ताननुजानीयादभितो रम्यतामिति ।
स्वधाऽस्त्विति च तं ब्रूयुर्ब्राह्मणास्तदनन्तरम् ।।७१

---

६२. ब1. ⊙. –a) दे3 कीचकेन च पात्रेण. –b) उ1 तथा चौ°, दे3.8-10 म1 मुवें. मुए. राजतो°, द1 ग्र2 तथा त्वौ° (→राजतौ°); का1 ब2.3 दे2.6 च, ते1 च, +वा (→वा). –c) द1 ग्र2 उ1 उप्त° (→दत्त°); ब1 दत्तमक्षयतामेति. –d) ते1 स्वर्णेन (→खड्गेन).

६३. ब1. ⊙; दे1. cd ⊙. –a) ब2 च (→तु); ते1 पाययेत्, +पात्रे तु (→पात्रे तु); ब3 दे1.3 न1 द1 मृन्मये (→मृण्मये); न1 चैव (→यो वै). –b) ग्र2 पात्रे (→श्राद्धे); दे1.8.9 वै भोजयेत्पितॄन्, मुवें. मुए. मुब. वै भोजयेद् द्विजान् (→भोजयते पितॄन्); ते श्राद्धे वा भोजयेत्पितॄन्. –d) का1 ब2.3 दे4 ते1 ग्र2 पुरोधसा, म1 पुरोदितं (→पुरोधसः).

६४. ब1. ⊙; दे1. ab ⊙. –a) दे6 अपङ्क्त्यां, ते1 न चैषां (→न पङ्क्त्यां). –b) दे4.8-10 ते1 द1 म1 मुवें. मुए. मुब. न याचेत न दापयेत्. –c) ब2 दे1 याचितो (→याचिता); ब2 दापितो (→दापिता); दे3 चैव (→दाता); उ1 याचिता दापिता चाथ, ते1 दाता दापयिता चैव, ग्र2 याचितादपि चात्मानं. –d) दे3 नरके, द1 ग्र2 म1 उ1 नरकं (→नरकान्); ब2 प्रतिपद्यते, ब3 दे6 न1 याति दारुणान्, दे1.3.4.8-10 मुवें. याति भीषणान्, द1 ग्र2 म1 उ1 याति भीषणं (→यान्ति दारुणान्).

६५. ब1. ⊙. –a) दे4 मृष्टं, न1 स्विष्टं, ते1 स्पष्टं (→शिष्टाः); दे1.8-10 मुवें. मुए. भुञ्जीरन्नग्रतः श्रेष्ठं, दे3 भुञ्जाना वाग्यता सृष्टं, द1 ग्र2 म1 उ1 भुञ्जीत वाग्यतो दृष्टं (म1 मृष्टं). –b) द1 ग्र2 उ1 ब्रूयात् (→ब्रूयुः); दे3 न ब्रूयुः प्रत्यक्षतां गुणान्, ते1 न ब्रूयुः प्राश्य तद् गुणान्. –c) म1 तस्यापि (→तावद्धि). –d) ग्र2 हविर्गुणान् (→हविर्गुणाः).

६६. ब1. ⊙. –a) का1 नाग्रसन्नो°, दे4 नासायनो°, ते1 अग्रासनो°, ग्र2 नास्त्रासनो° (→नाग्रासनो°). –c) का1 पश्यतो, +पश्यतां, ते1 प्रेक्षतां (→पश्यतां); का1 सोऽयं, दे1.8-10 मुवें. मुए. सोन्यः, दे2 सोऽग्रः (→सोऽज्ञः). –d) दे6 पङ्क्तेर् (→पङ्क्त्या).

६७. ब1. ⊙. –a) ब3 उर्जयेत्, दे10 अर्चयेत् (→वर्जयेत्). –b) ब2 नियोगं तु (→नियुक्तस्तु); ते1 द1 द्विजोत्तमाः (→द्विजोत्तमः). –c) दे1.8-10 म1 मुवें. मुए. मुब. न मांसस्य निषेधेन, ते1 न मांसप्रतिषेधेन. –d) दे4 न चान्यस्थान्नमीक्षयेत्.

६८. ब1. ⊙. –c) ग्र2 नरकं, म1 पश्यतां (→पशुतां). –d) दे10 °विंशतिः (→°विंशतिम्); का1 संभवादेकविंशतिं, न1 संभवानैकविंशतिम्.

६९. ब1. ⊙; दे1.4.8-10 मुए. cd ⊙. –a) ग्र2 स्वाध्याय-, मुवें. स्वाध्यायान् (→स्वाध्यायं); ब2 वेदान्, दे6 देवान्, द1 ग्र2 म1 उ1 तेषां (→एषां). –d) दे3 तु (→च); द1 भोजनान् (→शोभनान्).

७०. [ ब1 दे1.4.8-10 मुए. ⊙; दे1.8-10 मुवें. मुए. पुस्तकेषु ७०–७७ab श्लोकाः ५४ श्लोकात् परतः आगताः ]; दे6. d ⊙. –a) न1 ततोऽग्निम् (→ततोऽन्नम्); दे3 विसृजेत् (→उत्सृजेद्); ब3 ग्र2 म1 उ1 भुङ्क्ते, दे3 चैव, दे6 भक्तैः, मुब. भोक्ता (→भुक्ते). –b) का1 ब3 द1 ग्र2 म1 उ1 -मुब. -त्वग्रतो, ते1 ह्यग्रतो, मुवें. साग्रतो (→अग्रतो); ग्र2 विकरान् (→विकिरन्). –c) ते पृच्छेत् (→पृष्ट्वा); ब2.3 दे.6 मुवें. स्वदितं, दे6 [अ]भ्युदितं, ग्र2 स्वादितं, मुब. तदन्नं (→तृप्ताः स्थ); दे3 मुब. इत्येव (→इत्येवं); न1 स्पृष्टोच्छिष्टमित्येवं.

७१. ब1 दे1.4.6.8-10 मुए. ⊙ (द्र. ७० पा. वि.) –a) ब3 शेषं (→तेषां). –b) दे3 अनु (→इति). –c)

ततो भुक्तवतां तेषामन्नशेषं निवेदयेत् ।
यथा ब्रूयुस्तथा कुर्यादनुज्ञातस्तु वै द्विजैः ॥७२
पित्र्ये स्वदित इत्येव वाक्यं गोष्ठेषु सून्नृतम् ।
संपन्नमित्यभ्युदये दैवे रोचत इत्यपि ॥७३
विसृज्य ब्राह्मणांस्तान् वै दैवपूर्वं तु वाग्यतः ।
दक्षिणां दिशमाकाङ्क्षन् याचेतेमान् वरान् पितॄन् ॥७४
दातारो नोऽभिवर्द्धन्तां वेदाः संततिरेव च ।
श्रद्धा च नो मा व्यगमद् बहुदेयं च नोऽस्त्विति ॥७५
पिण्डांस्तु गोऽजविप्रेभ्यो दद्यादग्नौ जलेऽपि वा ।
मध्यमं तु ततः पिण्डमद्यात् पत्नी सुतार्थिनी ॥७६
प्रक्षाल्य हस्तावाचम्य ज्ञातीन् शेषेण तोषयेत् ।
ज्ञातिष्वपि च तुष्टेषु स्वान् भृत्यान् भोजयेत् ततः ।
पश्चात् स्वयं च पत्नीभिः शेषमन्नं समाचरेत् ॥७७
नोद्वासयेत् तदुच्छिष्टं यावन्नास्तंगतो रविः ।
ब्रह्मचारी भवेतां तु दम्पती रजनीं तु ताम् ॥७८
दत्त्वा श्राद्धं तथा भुक्त्वा सेवते यस्तु मैथुनम् ।
महारौरवमासाद्य कीटयोनिं व्रजेत् पुनः ॥७९
शुचिरक्रोधनः शान्तः सत्यवादी समाहितः ।
स्वाध्यायं च तथाऽध्वानं कर्त्ता भोक्ता च वर्जयेत् ॥८०
श्राद्धं भुक्त्वा परश्राद्धे भुञ्जते ये द्विजातयः ।
महापातकिभिस्तुल्या यान्ति ते नरकान् बहून् ॥८१ वें.२.२२.८६

दे$_3$ मुब. ते (→तं); का$_1$ दे$_2$ ब्रूयाद् (→ब्रूयुर्); ते$_1$ सुस्वधाऽस्त्ववितं ब्रूयुः.

७२. ब$_1$ दे$_{1.4.6.8-10}$ मुए. ⊙ (द्र. ७० पा. वि.) –a) ब$_3$ शेषं (→तेषां). –b) दे$_3$ निधापयेत् (→निवेदयेत्). –c) ग्र$_2$ तथा (→यथा); दे$_3$ कुर्युस् (→ब्रूयुस्). –d) ब$_3$ दे$_3$ न$_1$ ते$_1$ मुवें. मुए. मुब. तैर् (→वै).

७३. ब$_1$ दे$_{1.4.8-10}$ मुए. ⊙ (द्र. ७० पा. वि.); दे$_6$.a ⊙. –a) का$_1$ ब$_{2.3}$ दे$_2$ द$_1$ ग्र$_2$ उ$_1$ स्वधितमित्येवं (का$_2$ ग्र$_2$ उ$_1$ °व), ते$_1$ स्वधितमित्येवं, म$_1$ स्वदित इत्येवं (→स्वदित इत्येव); दे$_3$ पृष्ट्वा तृप्तास्थ इत्येवं. –b) ब$_{2.3}$ न$_1$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ मुब. वाच्यं (ब$_2$ °च्ये) (→वाक्यं); ब$_2$ मुवें. सूत्रितं, ब$_3$ दे$_6$ सुश्रूतं, मुब. सुश्रितं (→सून्नृतं); द$_1$ ग्र$_2$ म$_1$ उ$_1$ वाच्यं गोष्ठेष्वनुश्रुतं (उ$_1$ °तः). –d) दे$_3$ न$_1$ देवे (→दैवे); ब$_3$ दे$_6$ मुब. रुचितमित्यपि, ते$_1$ रोचेत इत्यपि, द$_1$ रोचिष्णु इत्यपि, ग्र$_2$ उ$_1$ रोचनमि (उ$_1$ इ) त्यपि (→रोचत इत्यपि).

७४. ब$_1$ दे$_{1.8-10}$ मुए. ⊙ (द्र. ७० पा. वि.). –b) ब$_{2.3}$ दे$_6$ न$_1$ द$_1$ ग्र$_2$ म$_1$ देव°, दे$_{3.4}$ ते$_1$ मुवें. मुब. पितृ° (→दैव°). –c) द$_1$ ग्र$_2$ म$_1$ उ$_1$ आकाङ्क्ष्यन् (→आकाङ्क्षन्). –d) न$_1$ इष्टान् (→इमान्); दे$_3$ बहून् (→पितॄन्).

७५. ब$_1$ दे$_{1.8-10}$ मुए. ⊙ (द्र. ७० पा. वि.). –a) का$_1$ दे$_3$ [अ]पि°, ब$_{2.3}$ [अ]वि° (→[अ]भि°). –b) उ$_1$ नः (→च). –c) ते$_1$ माऽव्यमत्, ग्र$_2$ म$_1$ व्यपगात् (→व्यगमद्). –d) ग्र$_2$ बहुधेयं (→बहुदेयं).

अतः परं ब$_{2.3}$ पुस्तकयोरधिकम्—
39. *अन्नं च नो बहुभवेदतिथींश्च लभेमहि ।
याचितारश्च नः सन्तु मा च याचिष्म कञ्चन' ।

७६. ब$_1$ दे$_{1.8-10}$ मुए. ⊙ (द्र. ७० पा. वि.). –d) ग्र$_2$ म$_1$ दद्यात् (→अद्यात्); ते$_1$ अद्यातापत्सुतार्थिनी.

द$_1$ ग्र$_2$ म$_1$ उ$_1$. b, c मध्ये अधिकम्—
40. *प्रक्षिपेत्सत्सु विप्रेसु द्विजोच्छिष्टं न मार्जयेत् ।

७७. ब$_1$. ⊙; दे$_{1.8-10}$ मुए. ab ⊙ (द्र. ७० पा. वि.). –b) ब$_3$ दे$_3$ ते$_1$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ मुवें. भोजयेत् (→तोषयेत्); ब$_2$ ज्ञातीन् शेषान् प्रतोषयेत्. –c) दे$_{1.8-10}$ मुवें. मुए. मुब. चतुर्थेषु, ते$_1$ च भुक्तेषु (→च तुष्टेषु). –e) ग्र$_2$ म$_1$ उ$_1$ सपत्नीकः (→च पत्नीभिः). –f) का$_1$ ब$_{2.3}$ दे$_{2.6}$ न$_1$ समाहरेत्, दे$_3$ च भोजयेत् (→समाचरेत्).

७८ ब$_1$. ⊙. –c) का$_1$°तौ तु (→°तां तु); ते$_1$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ ब्रह्मचर्यं चरैनां (म$_1$ °त्तौ) तु. –d) दे$_{1.3.4.8-10}$ न$_1$ दम्पत्योर् (→दम्पती); ग्र$_2$ रजनीं ब्राह्मणैः सह.

७९. –a) द$_1$ ग्र$_2$ म$_1$ उ$_1$ ततो (→तथा). –b) द$_1$ ग्र$_2$ म$_1$ उ$_1$ सेवयेद् यस्तु मैथुनं. –c) न$_1$ °मासीद्य (→°मासाद्य).

८०. –b) दे$_6$ दृढव्रतः (→समाहितः). –d) म$_1$ विवर्जयेत् (→च वर्जयेत्); का$_1$ कर्त्ता च परिवर्जयेत्.

८१. –a) दे$_{1.4.8-10}$ मुए. मुब. कृत्वा, द$_1$ ग्र$_2$ उ$_1$ दत्त्वा (→भुक्त्वा). –b) ब$_1$ द$_1$ ग्र$_2$ उ$_1$ परश्राद्धं (→परश्राद्धे). –c) द$_1$ ग्र$_2$ म$_1$ उ$_1$ °पातकिनस् (→°पातकिभिस्).

वे.२.२२.९० एष वो विहितः सम्यक् श्राद्धकल्पः सनातनः ।
आमेन वर्त्तयेन्नित्यमुदासीनोऽथ तत्त्ववित् ।।८२
अनग्निरध्वगो वाऽपि तथैव व्यसनान्वितः ।
आमश्राद्धं द्विजः कुर्याद् विधिज्ञः श्रद्धयान्वितः ।
तेनाग्नौ करणं कुर्यात् पिण्डांस्तेनैव निर्वपेत् ।।८३
योऽनेन विधिना श्राद्धं कुर्यात् संयतमानसः ।
व्यपेतकल्मषो नित्यं योगिनां वर्त्तते पदम् ।।८४
तस्मात् सर्वप्रयत्नेन श्राद्धं कुर्याद् द्विजोत्तमः ।
आराधितो भवेदीशस्तेन सम्यक् सनातनः ।।८५
अपि मूलैर्फलैर्वाऽपि प्रकुर्यान्निर्धनो द्विजः ।
तिलोदकैस्तर्पयेद् वा पितॄन् स्नात्वा समाहितः ।।८६
न जीवत्पितृको दद्याद्धोमान्तं चाभिधीयते ।
येषां वापि पिता दद्यात् तेषां चैके प्रचक्षते ।।८७
पिता पितामहश्चैव तथैव प्रपितामहः ।
यो यस्य म्रियते तस्मै देयं नान्यस्य तेन तु ।।८८
भोजयेद् वापि जीवन्तं यथाकामं तु भक्तितः ।
न जीवन्तमतिक्रम्य ददाति श्रूयते श्रुतिः ।।८९
द्व्यामुष्यायणिको दद्याद् बीजिक्षेत्रिकयोः समम् ।
ऋक्थादर्द्धं समादद्यान्नियोगोत्पादितो यदि ।।९०

८२. –a) म$_1$ एवं (→एष); का$_1$ ब$_{2.3}$ दे$_{2.3.6}$ ते$_1$ द$_1$ म$_1$ मुब. वोऽभिहितः, उ$_1$ तेऽभिहितः (→वो विहितः); न$_1$ सौम्यः (→सम्यक्). –b) द$_1$ ग्र$_2$ °कालस् (→°कल्पः); दे$_{1.8.9}$ ते$_1$ म$_1$ मुवें. मुए. मुब. समासतः, दे$_{10}$ समाहितः, + समासतः, द$_1$ ग्र$_2$ समाहितः (→सनातनः). –c) ब$_{2.3}$ मुवें. मुए. मुब. अनेन, दे$_6$ व्रतेन, ते$_1$ तमेव (→आमेन); मुवें. वर्द्धयेत् (→वर्त्तयेत्). –d) ते$_1$ हि (→[अ]थ); दे$_{1.8-10}$ मुवें. मुए. ब्राह्मणो व्यसनान्वितः, द$_1$ ग्र$_2$ उ$_1$ उदासीनो न तत्त्वतः.

८३. ब$_1$. ⊙; दे$_{1.8-10}$ मुए. मुब. ab ⊙. –c) ब$_2$ दे$_{10}$ मुब. यथा, दे$_{1.4.8.9}$ मुए. मुब. यदा, न$_1$ ग्र$_2$ उ$_1$ ततः, म$_1$ सतः (→द्विजः). –d) न$_1$ वृषलस्तु सदैव हि.

८४. ब$_1$. ⊙. –a) दे$_3$ न$_1$ अनेन, ते$_1$ एतेन (→योऽनेन); द$_1$ ग्र$_2$ उ$_1$ कुर्यात् (→श्राद्धं). –b) द$_1$ ग्र$_2$ उ$_1$ श्राद्धं (→कुर्यात्); दे$_{1.8-10}$ मुवें. मुए. मुब. कुर्याद्वै शान्तमानसः, ते$_1$ कुर्यात्संतुष्टमानसः. –c) ब$_2$ °कर्मको, ते$_1$ °पातको, द$_1$ °कलुषो (→°कल्मषो). –d) ब$_1$ परं (→पदं); दे$_{1.8-10}$ न$_1$ ते$_1$ उ$_1$ मुब. याति नावर्तते पदं, दे$_3$ यातिना वर्तते यदा, दे$_4$ यतो नावर्तते पदं, मुवें. मुए. यतीनां वर्तयेत्पदं.

८५. ब$_1$. ⊙. –d) का$_1$ समाहितः, ते$_1$ समन्ततः (→सनातनः).

८६. ब$_1$. ⊙. –a) म$_1$ मूल- (→मूलैः). –b) दे$_4$ कुर्यान्निर्धनिको द्विजः, ते$_1$ श्राद्धं निर्वर्त्तयेद्द्विजः. –c) दे$_{1.8-10}$ ग्र$_2$ मुवें. मुए. मुब. तर्पयित्वा (→तर्पयेद्वा). –d) ते$_1$ सर्वान् (→स्नात्वा); द$_1$ ग्र$_2$ उ$_1$ द्विजोत्तमः (→समाहितः).

८७. ब$_1$. ⊙; का$_1$.bc ⊙. –b) ब$_{2.3}$ होमाद्यं चाभि°, दे$_{1.3.8.9}$ न$_1$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ मुवें. मुए. मुब. होमान्तं वा वि°, दे$_{10}$ होमान्ते वा वि°, ते$_1$ आमान्नं वा वि° (→होमान्तं चाभि°). –c) दे$_{1.4}$ न$_1$ ग्र$_2$ उ$_1$ तेषां, म$_1$ एषां (→येषां); ब$_{2.3}$ दे$_6$ द$_1$ ग्र$_2$ म$_1$ चापि, उ$_1$ चैव (→वापि); द$_1$ ग्र$_2$ उ$_1$ सदा (→पिता). –d) न$_1$ चैते, म$_1$ चैकं (→चैके); दे$_3$ प्रवक्ष्यते (→प्रचक्षते).

८८. ब$_1$. ⊙. –a) दे$_{1.8-10}$ पितुः (→पिता). –b) का$_1$ दे$_{3.6}$ ते$_1$ प्रपितामहाः (→प्रपितामहः). –c) न$_1$ यस्यां (→यस्य); उ$_1$ म्रियते, + क्रियते, दे$_{1.8-10}$ मुवें. मुए. प्रीयते, दे$_3$ नृपते (→म्रियते); दे$_{1.6}$ यस्मै (→तस्मै). –d) ते$_1$ तु, उ$_1$ च (→तु); न$_1$ तदयं न्यस्यते न तु, म$_1$ देयस्ता नास्यते न तु.

८९. ब$_1$. ⊙. –a) का$_1$ ब$_3$ दे$_2$ भोजयित्वापि (का$_1$ तु), म$_1$ भोजयेत्वपि (→भोजयेद्वापि). –c) ते$_1$ न जीवन् समतिक्रम्य, ग्र$_2$ न$_1$ जीवनमतिक्रम्य. –d) का$_1$ दे$_2$ मुब. किञ्चिद् दद्यादिति श्रुतिः, ब$_2$ किञ्चित् कुर्यादिति श्रुतिः, ब$_3$ ददाति प्रयतः श्रुतिः, मुवें. ददाति प्रयतः शुचिः.

९०. ब$_1$. ⊙. –a) ब$_2$ ते$_1$ व्यामुष्यायणि (ते$_1$ °ण) को, दे$_6$ आमुष्यायणिको, न$_1$ यदमुष्याणिको (→द्व्यामुष्यायणिको). –b) दे$_{1.8.9}$ ते$_1$ द$_1$ म$_1$ बीज-, दे$_3$ वीजी- (→वीजि-); का$_1$ दे$_{1.3.10}$ ते$_1$ क्षेत्र° (दे$_{3.10}$ °त्री°) (→क्षेत्रि°); ग्र$_2$ उ$_1$ विना हेतुः तयोः समं. –c) का$_1$ न$_1$ द$_1$ रिक्तादर्थान् (का$_1$ °र्थं), ब$_3$ ऋक्थदर्भं, दे$_3$ कृत्वादर्धां, दे$_6$ कृत्वादर्ध्वं, ते$_1$ वीजादर्धं (→ऋक्थादर्द्धं); दे$_{1.8.10}$ मुवें. मुए. मुब. अधिकारी भवेत्सोऽथ, ग्र$_2$ ऋचा तद्धांशमादर्द्धां. –d) दे$_3$ नियोगो न्यायतो यदि, दे$_4$ न$_1$ नियोगोत्पादिता यदि.

अतः परम् उ$_1$ अधिकम्—

41. * न चार्द्धार्द्धांशमादद्यात् नित्योपात्यादिताद्यदि ।

अनियुक्तः सुतो यश्च शुल्कतो जायते त्विह ।
प्रदद्याद् बीजिने पिण्डं क्षेत्रिणे तु ततोऽन्यथा ।।९१
द्वौ पिण्डौ निर्वपेत् ताभ्यां क्षेत्रिणे बीजिने तथा ।
कीर्त्तयेदथ चैकस्मिन् बीजिनं क्षेत्रिणं ततः ।।९२
मृताहनि तु कर्त्तव्यमेकोदिष्टं विधानतः ।
अशौचे स्वे परिक्षीणे काम्यं वै कामतः पुनः ।।९३
पूर्वाह्णे चैव कर्त्तव्यं श्राद्धमभ्युदयार्थिना ।
देववत्सर्वमेव स्याद् यवैः कार्या तिलक्रिया ।।९४
दर्भाश्च ऋजवः कार्या युग्मान् वै भोजयेद् द्विजान् ।
नान्दीमुखास्तु पितरः प्रीयन्तामिति वाचयेत् ।।९५
मातृश्राद्धं तु पूर्वं स्यात् पितॄणां स्यादनन्तरम् ।
ततो मातामहानां तु वृद्धौ श्राद्धत्रयं स्मृतम् ।।९६
दैवपूर्वं प्रदद्याद् वै न कुर्यादप्रदक्षिणम् ।
प्राङ्मुखो निर्वपेत् पिण्डान् उपवीती समाहितः ।।९७
पूर्वं तु मातरः पूज्या भक्त्या वै सगणेश्वराः ।
स्थण्डिलेषु विचित्रेषु प्रतिमासु द्विजातिषु ।।९८
पुष्पैर्धूपैश्च नैवेद्यैर्गन्धाद्यैर्भूषणैरपि ।
पूजयित्वा मातृगणं कुर्याच्छ्राद्धत्रयं बुधः ।।९९
अकृत्वा मातृयागं तु यः श्राद्धं परिवेषयेत् ।
तस्य क्रोधसमाविष्टा हिंसामिच्छन्ति मातरः ।।१०० वें२.२२.१०७

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायामुपरिविभागे द्वाविंशोऽध्यायः ।।२२।।

९१. ब1. ⊙. –a) ब2.3 मुवें. मुए. मुब. अनियुक्तात्, दे2 अनियुक्त- (→अनियुक्तः); का1 ब2.3 दे2.6 न1 ते1 द1 ग्र2 म1 उ1 यस्तु, दे10 यस्य (→यश्च). –b) का1 ब2 दे1.8.10 उ1 मुवें. मुए. मुब. शुक्रतो, ब3 शुष्कको, ते1 शूद्रतो (→शुल्कतो); न1 द्विजात्, उ1 इह (→त्विह). –d) न1 जरिणे, म1 प्रेक्षिणे (→क्षेत्रिणे); ते1 च (→तु); दे9 क्षेत्रिणे बीजिने तथा.

९२. ब1. ⊙; उ1. ab ⊙. –c) का1 नैकस्मिन्, ब2.3 दे6 न1 ते1 म1 उ1 वैकस्मिन् (→चैकस्मिन्). –d) दे10 ततः,+तथा (→ततः).

९३. ब1. ⊙. –a) का1 दे3 द1 ग्र2 म1 उ1 मृतेहनि (→मृताहनि). –c) का1 न1 द1 म1 उ1 अशौच-, ग्र2 आशौचस् (→अशौचे); द1 म1 उ1 स्व-, ग्र2 स (→स्वे); ग्र2 म1 उ1 परिक्षीणः (→परिक्षीणे); ते1 आशौचमपरिक्षीणे. –d) न1 काल्यं (→काम्यं); द1 ग्र2 म1 उ1 कामयतः, ते1 चैकाहतः (→वै कामतः).

९४. ब1. ⊙. –a) म1 मुवें. पूर्वाह्णि (→पूर्वाह्णे). –b) का1 अभ्युदयार्थिनां, ब2 अभ्युदयात्मकं, दे2 अभ्युदयार्थिभिः, दे6 अभ्युदयात्मिकां, दे10 ग्र2 अभ्युदयार्थिनः (→अभ्युदयार्थिना). –c) दे6 ते1 म1 दैववत्, द1 उ1 दैवतः (→देववत्); ते1 कार्याणि, ग्र2 म1 एतत् स्यात्, मुब. एवं स्यात् (→एव स्याद्). –d) दे1.8-10 मुवें. मुए. नैव, दे3.4 न वै, द1 ग्र2 म1 उ1 न च (→यवैः); ते1 कुर्यात्, ग्र2 कार्यं (→-क्रिया); दे1.2.6.8-10 न1 मुवें. मुए. तिलैः, द1 उ1 ग्र2 वलि- (→तिल-).

९५. ब1. ⊙. –a) द1 म1 दर्भाश्च (→दर्भाश्च); दे3 रजवः, ग्र2 ऋचयः (→ऋजवः); दे4 द1 ग्र2 कुर्याद् (→कार्या). –b) दे10 ऋषभान् (→युग्मान्); का1 ब1 दे6 योजयेद्, ब3 राजयेद् (→भोजयेद्). –c) द1 ग्र2 म1 उ1 च (→तु).

९६. ब1. ⊙. –a) ग्र2 म1 उ1 मातुः, दे4 प्रीतः (→मातृ-). –b) का1 दे1.6.8-10 न1 ते1 म1 मुवें. मुए. मुब. तदनन्तरं (→स्यादनन्तरम्). –c) का1 ब2.3 दे2.10 न1 ते1 च (→तु). –d) दे10 वृद्ध-, न1 वृद्धं (→वृद्धौ); दे3 न1 श्राद्धं (→श्राद्ध-).

९७. ब1. ⊙; दे6. ९७b–९९a ⊙. –a) ते1 देवपूर्वं प्रपद्येत. –c) मुवें. मुए. विद्वान् (→पिण्डान्).

९८. ब1 दे6. ⊙. –a) का1 ब2.3 दे2 वै (→तु). –b) द1 ग्र2 उ1 शक्त्या (→भक्त्या). –c) का1 प्रतिमासु, ब2.3 ग्र2 उ1 पवित्रेषु (→विचित्रेषु); म1 स्थाण्डिलेषूपविष्टेषु. –d) न1 प्रतिष्ठासु (→प्रतिमासु); का1 द्विजातिषु च सर्वदा.

९९. ब1. ⊙; दे6. a ⊙. –a) दे10 नैवेद्यैर्,+दीपैश्च (→नैवेद्यैर्); ते1 धूपदीपैश्च नैवेद्यैर्. –b) दे1.8-10 मुवें. मुए. भूषणैरपि पूजयेत्. –c) दे10 न1 मातृगणान् (→मातृगणं); ते1 पूजयित्वा तु मातॄणां. –d) दे1.8.9 मुवें. मुए. मुब. द्विजः, दे3 बुधाः (→बुधः); ते1 कुर्याच्छ्राद्धं तु साधकः.

१००. ब1. ⊙. –a) दे1.8-10 मुवें. मुए. मुब. °योगं (→°यागं). –b) दे1.8-10 मुवें. मुए. मुब. यः श्राद्धं तु निवेशयेत्. –c) दे3 ग्र2 तस्याः (→तस्य); दे2 °समोविष्टा, दे3 ते1 ग्र2 °समाविष्टः (→°समाविष्टा). –d) दे1.8-10 मुवें. मुए. गच्छन्ति (→इच्छन्ति).

पुष्पिका—[ब1 द1 पुस्तकयोरध्यायसमाप्तिर्नास्ति]

**पुराणनाम**—का1 इति श्रीकूर्मपुराणे उपरिभागे, ब2 इति कौर्मे, ब3 दे2 इति कू(दे2 कौ)र्मपुराणे उपरिभागे, दे1 इति

नान्यतो जायते धर्मो ब्रह्मविद्या च वैदिकी । तस्माद् धर्मं पुराणं च श्रद्धातव्यं द्विजातिभिः ।।२३

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायामुपरिविभागे चतुर्विंशोऽध्यायः ।।२४।।

# २५

व्यास उवाच ।※

एष वोऽभिहितः कृत्स्नो गृहस्थाश्रमवासिनः ।
द्विजातेः परमो धर्मो वर्त्तनानि निबोधत ।।१
द्विविधस्तु गृही ज्ञेयः साधकश्चाप्यसाधकः ।
अध्यापनं याजनं च पूर्वस्याहुः प्रतिग्रहम् ।
कुसीदकृषिवाणिज्यं प्रकुर्वीतास्वयंकृतम् ।।२
कृषेरभावाद् वाणिज्यं तदभावात् कुसीदकम् ।
आपत्कल्पो ह्ययं ज्ञेयः पूर्वोक्तो मुख्य इष्यते ।।३ वें. २.२५.३

२३. –a) दे3.10 नान्यते, दे6 ते1 नान्यत्र, उ1 नान्यथो (→नान्यतो); दे3 म1 उ1 ज्ञायते, दे10 न1 जायतो, द1 ग्र2 ज्ञानतो (→जायते). –b) मुवें. मुए. ब्राह्मी° (→ब्रह्म°); दे6 °विद्याश्च (→°विद्या च); ब1 वैदिकं (→वैदिकी). –c) द1 ग्र2 म1 उ1 तथा (→तस्माद्); ब1.2 दे3 न1 द1 उ1 धर्म-, ब3 द्रे6 म1 धर्मः (→धर्मं). –d) दे1.3.8-10 न1 ते1 द1 ग्र2 उ1 मुवें. मुए. मुब. मनीषिभिः (→द्विजातिभिः).

**पुष्पिका**—

**पुराणनाम**—का1 दे6 इति श्रीकू(का1 कौ)र्मपुराणे उपरिभागे, ब1 इति कौर्मे उपरिभागे, ब2 दे3 इति कूर्मपुराणे ब3 दे2 इति कू(दे2 कौ)र्मपुराणे उपरिभागे, दे1.8 इति श्रीकूर्मपुराणे उपरिभागे व्यासगीतासु, दे4.10 ते1 द1 इति श्रीकूर्मपुराणे उपरिभागे व्यासगीतासु, न1 इति श्रीकौर्मे, ग्र2 म1 इति श्रीकूर्मपुराणे उपरिभागे व्यासगीतासूपनिषत्सु, उ1 श्री इति श्रीकूर्मपुराणे उत्तरभागे व्यासगीतासु, मुवें. इति श्रीकूर्मपुराणे उत्तरार्द्धे व्यासगीतासु, मुए. इति श्री कूर्मपुराणे उपविभागे व्यासगीतासु, मुब. इति श्रीकौर्मे महापुराणे उपरिभागे ब्रह्मविद्यायां. **अध्यायनाम**—का1 ब1-3 दे1-3.6.8-10 न1 ते1 द1 ग्र2 म1 उ1 मुए. ⊙; मुवें. द्विजानामग्निहोत्रादिकृत्यनिरूपणं नाम, मुब. अग्निहोत्रादिनियमो नाम. **अध्यायसंख्या**—ब2 दे6. ⊙; का1 त्रयोविंशोऽध्यायः ।।२३।।, ब1.3 दे2 ते1 त्रयोविंशोऽध्यायः, दे1 मुवें. मुब. चतुर्विंशोऽध्यायः ।।२४।।, दे3.8-10 द1 ग्र2 म1 उ1 मुए. चतुर्विंशोऽध्यायः, न1 चतुःसप्ततितमोऽध्यायः.

**२५**

※ दे9. ⊙; दे8 व्यास उ.; न1 ते1 ग्र2 उ1 व्यासः; द1 म1 श्रीव्यासः.

१. –a) ब1 एष वो विहितः, दे2 एष वो जाति मतः, दे8 *** भिहितः, दे10 एष वोऽभिहतः (→एष वोऽभिहितः); न1 एष वेदवतः कृष्णो. –b) म1 °वासिनां (→°वासिनः). –c) ब1 दे4 द्विजाते, दे10 द्विजातो (→द्विजातेः); ब1 परतो (→परमो). –d) का1 ब1 ग्र2 म1 वर्त्तमानं, ब2 वर्त्तते तं, दे3.6 द1 उ1 वर्तमानान्, दे10 वर्त्तमाना, न1 वक्ष्यमाणां (→वर्त्तनानि); का1 निबोधतम्. ब1 दे2.4 निबोधतः (→निबोधत).

२. –a) दे4 विविधश्च, ते1 द्विविधश्च (→द्विविधस्तु); उ1 गृहे (→गृही); दे4.9 ज्ञेयाः (→ज्ञेयः). –c) दे1 अध्ययनं (→अध्यापनं). –d) उ1 प्रतिग्रहः (→प्रतिग्रहम्). –e) का1 दे2 कुशीदं, ब3 कुशीद, दे4 प्रसीद, म1 कुसीदं (→कुसीद-); ते1 -वृत्तिर् (→कृषि-). –f) का1 ब1-3 दे4 द1 ग्र2 म1 उ1 प्रकुर्वीत, दे1 मुवें. मुए. प्रकुर्वन्तः, दे3 प्रकुर्त्यैव, दे8-10 प्रकुर्वन्तो, ते1 प्रकुर्वीतान् (→प्रकुर्वीता-); ते1 -वयं कृतः, उ1 -स्वयं कृषीत् (→-स्वयंकृतम्).

३. –a) ब2 दे1.3.4.8-10 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. कृषेरभावे, ते1 कुसीदभावो (→कृषेरभावाद्); दे6 वा नित्यं (→वाणिज्यं). –b) ब2 दे1.3.8.9 म1 मुवें. मुए. मुब. तदभावे, दे6.10 तदभावा (→तदभावात्); का1 ब3 दे1.2.6.10 कुशीदकम्, ब1 कृषीवरं (→कुसीदकम्); ते1 तद्भावामृतदीपकम्. –c) ब1 आपत्काले स्वयं, दे1.8-10 ग्र2 म1 उ1 मुवें. मुए. मुब. आपत्कल्पस्त्वयं (दे10 °सं-), दे3.4 द1 आपत्कालस्त्व (द1 °स्व°)यं, न1 मात्रः कल्पस्त्वयं, ते1 आपत्कल्पे वयं (→आपत्कल्पो ह्ययं); न1 ज्ञेया, द1 ज्ञेयं (→ज्ञेयः). –d) ब2 दे3 उच्यते (→इष्यते); म1 पूर्वो मुख्य इहेष्यते.

वें.२.२५.४ स्वयं वा कर्षणं कुर्याद् वाणिज्यं वा कुसीदकम् ।
कष्टा पापीयसी वृत्तिः कुसीदं तद् विवर्जयेत् ॥४
क्षात्रवृत्तिं परां प्राहुर्न स्वयं कर्षणं द्विजैः ।
तस्मात् क्षात्रेण वर्त्तेत वर्त्तनेनापदि द्विजः ॥५
तेन चावाप्यजीवंस्तु वैश्यवृत्तिं कृषिं व्रजेत् ।
न कथंचन कुर्वीत ब्राह्मणः कर्म कर्षणम् ॥६
लब्धलाभः पितॄन् देवान् ब्राह्मणांश्चापि पूजयेत् ।
ते तृप्तास्तस्य तं दोषं शमयन्ति न संशयः ॥७
देवेभ्यश्च पितृभ्यश्च दद्याद् भागं तु विंशकम् ।
त्रिंशद्भागं ब्राह्मणानां कृषिं कुर्वन् न दुष्यति ॥८
वणिक् प्रदद्याद् द्विगुणं कुसीदी त्रिगुणं पुनः ।
कृषीवलो न दोषेण युज्यते नात्र संशयः ॥९
शिलोञ्छं वाप्याददीत गृहस्थः साधकः पुनः ।
विद्याशिल्पादयस्त्वन्ये बहवो वृत्तिहेतवः ॥१०
असाधकस्तु यः प्रोक्तो गृहस्थाश्रमसंस्थितः ।
शिलोञ्छे तस्य कथिते द्वे वृत्ती परमर्षिभिः ॥११
अमृतेनाथवाजीवेन्मृतेनाप्यथवा यदि ।
अयाचितं स्यादमृतं मृतं भैक्षं तु याचितम् ॥१२

---

४. –a) दे10 स्वयं चा-, न1 न स्वयं (→स्वयं वा); दे3 कार्यं (→कुर्याद्). –b) ते1 च (→वा); का1 ब2 कुशीदकम् (→कुसीदकम्). –c) ब3 बुद्धिः (→वृत्तिः). –d) का1 कुशीदं तद्, ब1 न1 म1 मुए. कुसीदन्तं, दे1.8-10 कुसीदं तां, दे3.4 कुसीदं वा, ते1 कुसीदं तु (→कुसीदं तद्).

५. ब1. २५ अध्यायस्य ५ a– आरभ्य २६ अध्यायस्य १२ d यावन्नास्ति. –a) का1 ब2.3 दे2.6 क्षत्रवृत्तिं, न1 जात्रवृत्तिः (→क्षात्रवृत्तिं); दे1न1 परं प्राहुर्, दे3 परां प्राप्य, द1 म1 उ1 परामाहुः, ग्र2 परं माहुर्(?) (→परां प्राहुर्). –b) दे3 वर्जयेत् (→न स्वयं); ब2 (तु) कर्षणं, ग्र2 कर्मणां (→कर्षणं); दे3 द1 द्विजः (→द्विजैः).–c) का1 ब2 न1 क्षत्रेण (→क्षात्रेण); दे3 * * * (→वर्त्तेत). –d) का1 ब2.3 दे1.4.8.9 द1 मुवें. मुए. मुब. वर्ततेऽनापदि, दे10 न1 वर्तनेनापरि, ग्र2 वर्तनेनापति, म1 वर्त्तेतानावदिन् (?),उ1 वर्जनेनापदि (→वर्त्तनेनापदि).

६. ब1. ⊙. –a) ब3 तेना चैवाप्य, दे2-4.6 न1 ग्र2 म1 उ1 तेन चैवाप्य, दे10 तेनाचावाप्यं, ते1 तेन चैवास्य (→तेन चावाप्य); दे1 मुए. जीवन्तु, दे6 ग्र2 जीवस्तु (→जीवंस्तु). –b) का1 दे10 वैश्यवृत्ति-, दे1.8.9 ते1 मुवें. मुए. मुब. वैश्यवृत्तिः (→वैश्यवृत्तिं). –c) का1 कथंचित् (→कथंचन). –d) दे3 °कार्षणं, न1 °वार्षयं, ते1 °चापलम्, द1 उ1 °बाधकं, म1 °वार्द्धकं, ग्र2 °साधनं (→°कर्षणम्).

७. ब1. ⊙; दे1. ७c–८b ⊙. –a) ब3 नवलाभः, दे6 न1 लब्धालाभः, द1 म1 लब्ध्वा लाभः (→लब्धलाभः). –b) दे4 ते1 चाभि- (→चापि). –c) ब3 सन्दोषं, दे3 दोषं तं, दे4 ते1 तद्दोषं, दे10 दंतोषं, द1 ग्र1 म1 उ1 वै दोषं (→तं दोषं). –d) दे3 नाशयन्ति, दे4 समयंति, दे6 समयंति (→शमयन्ति); का1 समयं नात्र संशयः.

८. ब1. ⊙; दे1. ab ⊙. –a) दे6 देवेभ्यश्चा ग्र2 दैवेभ्यश्च (→देवेभ्यश्च). –b) ब2 न1 भोगं तु, दे10 द1 म1 भागं च, ते1 भ्रापं च (→भागं तु); द1 किंशिकं (→विंशकम्). –c) दे1 त्रिषट्भावं, दे8-10 मुए. त्रिषट्भागं, ते1 त्रिंशादानं, द1 ग्र2 म1 उ1 विंशद्भागं (→त्रिंशद्भागं). –d) दे1.8-10 मुए. कृष्यं, दे4 ग्र2 कृषि- (→कृषिं); ते1 कुर्यान्नि (→कुर्वन्न); दे4 तुष्यति (→दुष्यति).

९. ब1. ⊙. –a) दे1.8-10 मुवें. मुए. मुब. वाणिज्ये द्विगुणं दद्यात्. –b) का1 ब3 दे2.8 कुशीदी, दे1 कुशीदे, दे6 कुषीत्री, ते1 कुशीदे, द1 म1 उ1 कुशीदं, ग्र2 कुसीदस् (→कुसीदी). –c) का1 कृषीवलान्न-, ब3 कृषीवलोऽन्न- दे1.2.4.8-10 मुवें. मुए. मुब. कृषिपालान्न-, न1 कृषीलवान्न- (→कृषीवलो न). –d) ब3 इष्यते (→युज्यते).

१०. ब1. ⊙. –a) का1 ब2.3 चाप्याददीत, ग्र2 साप्याददीत (→वाप्याददीत); दे4 त्रिलोक्यं चापि ददीत. –b) न1 साधकं (→साधकः). –c) ब3 तुल्ये (→त्वन्ये).

११. ब1. ⊙. –a) दे4 यत् (→यः). –c) दे10 कथिताद् (→कथिते). –d) दे6 द्वे वृत्ते, दे10 विवृत्ती, उ1 द्वे वृत्ति (→द्वे वृत्ती).

१२. ब1. ⊙. –a) दे1.6.8.10 अमृते वा(दे6 चा)थवा (→अमृतेनाथवा). –b) ब2 ग्र2 म1 मृतेनाप्यथवापदि, दे1.8.10 मृतेवाप्यथवा यदि. –c) दे1 यथा चित्तं (→अयाचितं). –d) का1 भक्ष्यं तु, दे4.10 भक्ष्यं तु, द1 भैक्षे तु (→भैक्षं तु); न1 अमृतं भैक्षयाचितं.

कुशूलधान्यको वा स्यात् कुम्भीधान्यक एव वा ।
त्र्यहैहिको वापि भवेदश्वस्तनिक एव च ॥१३
चतुर्णामपि चैतेषां द्विजानां गृहमेधिनाम् ।
श्रेयान् परः परो ज्ञेयो धर्मतो लोकजित्तमः ॥१४
षट्कर्मैको भवत्येषां त्रिभिरन्यः प्रवर्त्तते ।
द्वाभ्यामेकश्चतुर्थस्तु ब्रह्मसत्रेण जीवति ॥१५
वर्त्तयंस्तु शिलोञ्छाभ्यामग्निहोत्रपरायणः ।
इष्टीः पार्वायणान्तीयाः केवला निर्वपेत् सदा ॥१६
न लोकवृत्तिं वर्त्तेत वृत्तिहेतोः कथंचन ।
अजिह्मामशठां शुद्धां जीवेद् ब्राह्मणजीविकाम् ॥१७
याचित्वा वाऽपि सद्भ्योऽन्नं पितॄन्देवांस्तु तोषयेत् ।
याचयेद् वा शुचिं दान्तं न तृप्येत स्वयं ततः ॥१८
यस्तु द्रव्यार्जनं कृत्वा गृहस्थस्तोषयेन्न तु ।
देवान् पितॄंश्च विधिना शुनां योनिं व्रजत्यसौ ॥१९
धर्मश्चार्थश्च कामश्च श्रेयो मोक्षश्चतुष्टयम् ।
धर्माविरुद्धः कामः स्याद् ब्राह्मणानां तु नेतरः ॥२० वें.२.२५.२०

---

१३. ब1. ⊙; द1 ग्र2 म1 उ1. cd ⊙ (द्र. सं.). –a) म1 कुसीदलाभात् क्रोधा स्यात्. –b) दे1.3.6.8-10 उ1 मुवें. मुए. च (→वा). –c) का1 ग्रहैहिको, ब3 ग्रहैहिके, दे1.8-10 मुए. त्र्यहेहिको, दे4 ग्रहन्याधिकं, ते1 त्रैकादिको (→त्र्यहैहिको); दे3 मुवें. त्र्यह्निको वापि च भवेद्, दे3 ग्रहाह्निकी वापि च भवेद्. –d) का1 ब2.3 दे2 न1 ते1 वा (→च); दे3 ग्रश्वस्तनिकोपि वा, दे4 स्वदंष्ट्राविक एव वा.

१४. ब1. ⊙. –a) दे1.8.9 मुवें. मुए. मुब. वै तेषां, ग्र2 सर्वेषां (→चैतेषां). –c) का1 श्रेयान्यतः (→श्रेयान् परः); न1 श्रेयात्परं परं ज्ञेयो. –d) का1 दे2.4 ते1 °वित्तमः, उ1 °जित्तमं (→°जित्तमः).

१५. ब1. ⊙. –a) ब2.3 दे6.10 ग्र2 मुवें. मुए. षट्कर्मको, न1 षट्कर्मैका, ते1 षट्कर्मतो, द1 षट्कर्मका (→षट्कर्मैको); दे1.8-10 ते1 मुवें. मुए. मुब. भवेत्तेषां (→भवत्येषां). –b) ग्र2 ग्रन्यैः (→ग्रन्यः). –c) न1 चतुर्थास्तु (→चतुर्थस्तु). –d) दे6 ते1 °क्षत्रेण (→°सत्रेण); दे3 जीवितुं, ग्र2 जीवन्ति (→जीवति).

१६. ब1. ⊙. –a) ते1 वर्तयन्ति (→वर्त्तयंस्तु); न1 वर्त्तयश्च तिलोजाभ्यां. –b) ब3 दे4 ते1 °परायणाः (→°परायणः). –c) का1 इष्टीतेः पर्वणान्तीयाः, ब2 इष्टयः पार्वणान्तायाः, दे1.9 मुवें. मुए. इष्टिः पार्वायणान्ता(दे1.8 °न्ती°)याः, दे3 इष्टिः पार्वायणीतीयो, दे4 उष्णीष पार्वणं नीयाः, दे6 इष्टी पार्वायणालीया, दे10 इष्टिः पर्वायिणांतीयाः, न1 इष्टिः पार्वणयंतीयोः, ते1 इष्टिं च पार्वणीं नित्यं, द1 ग्र2 म1 उ1 इष्टिः पर्वाग्रयणयो. –d) ते1 द1 ग्र2 म1 उ1 केवलं (→केवला); दे3 केवलो वर्तयेत्सदा.

१७. ब1. ⊙. –a) दे1.3.8-10 न1 ते1 द1 मुवें. मुए. लोकवृत्तं (→लोकवृत्तिं); ग्र2 सक्तेत (→वर्त्तेत); उ1 नलोवृत्तमवर्त्तेत. –b) ब2.3 मुब. वृत्तिहोताः (→वृत्तिहेतोः); दे1.8-10 मुवें. मुए. वार्त्तान्ते वृत्तिहेतवे, दे3.4 द1 ग्र2 त1 वर्त(दे4 वर्तं) वृत्तिहेतवे(ग्र2 °वः), म1 वर्तेते वृत्तिहेतवः, + वर्तते वृत्तिहेतवः, उ1 मवर्त्तवृत्तिहेतवे (?). –c) द1 ग्रशिवां (→ग्रशठां); का1 जीवेद् (→शुद्धां); ते1 ग्रजिह्मानि च शूद्रोपि. –d) दे4 °जीविषां, दे10 ग्र2 °जीवकां, न1 °जीवकाः (→°जीविकाम्); का1 ब्राह्मणेना च जीविकाम् (?).

१८. ब1. ⊙. –a) दे1.8.9 मुब. याचित्वा चाथ, दे3 याचित्वा चापि, दे4 या विधावापि, दे10 याचितायापि, न1 याचित्वायापि, उ1 याचिता पापि, मुवें. मुए. याचित्वा चार्थ- (→याचित्वा वापि); दे6 शक्त्यर्थे, ते1 शूद्रोन्यं (→सद्भ्योऽन्नं); ब1 याचित्वापि सदा दद्यात्. –b) ते1 ग्र2 म1 च (→तु). –c) का1 पातयेद्, ब2 याजयेद्, दे3 तर्पयेद् (→याचयेद्); ब2 शुचिं शान्तं, दे1.3.8.9.10 मुवें. मुए. शुचीन् दान्तान्, दे4 शुचीन्दातृन्, दे10 शुचीनूज्ञातान्, ते1 सुरीं वृत्तिं, द1 उ1 पितृन्देवांस्, ग्र2 पित्रिणान्देवान्, म1 शुचीदातृन् (→शुचिं दांतं).

१९. ब1. ⊙. –a) दे3 वस्तु (→यस्तु); दे4 न1 द्रव्यार्चनं, द1 उ1 दुःखार्जनं (→द्रव्यार्जनं); दे4 कुर्याद् (→कृत्वा). –b) का1 मुए. गृहस्थांस्तोषयेन्न तु, ब3 गृहस्थं तोषयेन्न तु, दे4 गृहस्थस्थापयेन्न तु, दे6 हृदस्थस्तोषयेन्न तु. –c) दे1.8-10 मुवें. मुए. मुब. तु (→च). –d) ब2 द्विजः शुनां, दे4 स्वान योनिं (→शुनां योनिं); दे1.3.4.6.8-10 द1 ग्र2 म1 उ1 मुवें. मुए. व्रजत्यधः, ते1 व्रजत्यथ (→व्रजत्यसौ).

२०. ब1. ⊙; दे1. २०c-२१b ⊙. –a) दे1.10 * काम(दे10 °मां)श्च (→च कामश्च); न1 धर्मश्चार्थं च कामं च. –c) दे4 धर्मानुविधः, दे6.8.9 मुवें. मुए. धर्माद्विरुद्धः (→धर्माविरुद्धः); दे10 कामस्याद्, न1 कामं स्याद्, ते1 कामश्च (→कामः स्याद्); ग्र2 धर्माविरुद्धकामा स्यात्. –d) दे10 म1 नेतराः, ते1 नान्तरम् (→नेतरः); दे6 ब्राह्मणायास्तदा परः.

वें.२.२५.२१ **योऽर्थो धर्माय नात्मार्थः सोऽर्थोऽनर्थस्तथेतरः । तस्मादर्थं समासाद्य दद्याद् वै जुहुयाद् यजेत् ॥२१**

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायामुपरिविभागे पञ्चविंशोऽध्यायः ॥२५॥

# २६

**व्यास उवाच ।**❀
**अथातः संप्रवक्ष्यामि दानधर्ममनुत्तमम् ।**
**ब्रह्मणाऽभिहितं पूर्वमृषीणां ब्रह्मवादिनाम् ॥१**
**अर्थानामुदिते पात्रे श्रद्धया प्रतिपादनम् ।**
**दानमित्यभिनिर्दिष्टं भुक्तिमुक्तिफलप्रदम् ॥२**
**यद् ददाति विशिष्टेभ्यः श्रद्धया परया युतः ।**
**तद् वै वित्तमहं मन्ये शेषं कस्यापि रक्षति ॥३**
**नित्यं नैमित्तिकं काम्यं त्रिविधं दानमुच्यते ।**
**चतुर्थं विमलं प्रोक्तं सर्वदानोत्तमोत्तमम् ॥४**

---

२१. ब1. ⊙; दे1. ab ⊙ (द्र. २० पा. वि.). –a) ब2.3 दे6 धर्मायनार्थाय, दे4.10 न1 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. धर्माय नात्मार्थं, ते1 धर्मस्स एवार्थः (→धर्माय नात्मार्थः). –b) दे8.10 मुवें. मुए. मुब. सोऽर्थो नार्थस्, म1 सोऽर्थो धर्मस् (→सोऽर्थोऽनर्थस्); दे4 सोऽर्थो ग्रथस्त्वथेतरः, दे9 सोर्थोनार्थस्त्व-चेतरः, ते1 स्वार्थान्न चावयेन्नरः, ग्र2 सोर्थोनर्थस्तयो रतः. –c) दे1 धर्मादर्थं, ते1 तस्माद् धर्मं (→तस्मादर्थं). –d) दे1.8-10 द1 म1 उ1 मुवें. मुए. मुब. द्विजः, ग्र2 ततः (→यजेत्); ते1 दद्याद्देवानृषीन् यजेत्.

पुष्पिका—

**पुराणनाम**—का1 दे4.6 इति श्रीकू(का1 कौ)र्मपुराणे उपरिभागे, ब2 इति कूर्मपुराणे, ब3 दे2 इति श्रीकू(दे2 कौ)र्मपुराणे उपरिभागे, दे1 इति श्रीकूर्मपुराणे उपरिविभागे व्यासगीतासु, दे3 न1 इति श्रीकूर्मपुराणे, दे8.9 इति श्रीकूर्मपुराणे उपरिभागे व्यासगीतासु, दे10 इति श्रीकूर्मपुराणे व्यासगीतासु, ते1 इत्यादिमहापुराणे श्रीकौर्मे उत्तरभागे व्यासगीतासु, द1 इति श्रीकौर्मे, ग्र2 म1 इति श्रीकूर्मपुराणे उपरि(म1 उत्तर)भागे, व्यासगीतासु, उ1 श्रीकूर्मपुराणे उत्तर-भागे व्यासगीतासु, मुवें. इति श्रीकूर्मपुराणे उत्तरार्द्धे व्यास-गीतासु, मुए. इति श्रीकूर्मपुराणे उपविभागे व्यासगीतासु, मुब. इति श्रीकौर्मे महापुराणे उपरिभागे ब्रह्मविद्यायां. **अध्यायनाम**—का1 ब1-3 दे1-4.6.8-10 न1 ते1 द1 ग्र2 म1 उ1 मुए. ⊙; मुवें. द्विजातीनां वृत्तिनिरूपणं नाम, मुब. द्विविधगृहिवृत्तिकथनं नाम. **अध्यायसंख्या**—ब2 दे6. ⊙; का1 दे4 चतुर्विंशोध्यायः ॥२४॥, ब3 दे2 ते1 चतुर्विंशोऽध्यायः, दे1 मुवें. मुब. पञ्चविंशोऽध्यायः, ॥२५॥, दे3.8-10 द1 ग्र2 म1 उ1 मुए. पञ्चविंशोध्यायः, न1 पंचसप्ततितमोध्यायः.

**२६**

❀ ब1 ते1. ⊙; न1 ग्र2 उ1 व्यासः; द1 म1 श्रीव्यासः,

१. [ब1. २५ अध्यायस्य ५ श्लोकाद् आरभ्य २६ अध्यायस्य १२ d यावन्नास्ति.]. –a) ग्र2 अथातत् (→अथातः); ब3 °वक्षामि (→°वक्ष्यामि). –c) ब2 दे2 ब्रह्मणा विहितं, न1 ब्राह्मणाभिहितः (→ब्रह्मणाभिहितं). –d) दे4.6 °वादिनं (→°वादिनां).

२. ब1. ⊙ (द्र. १ पा. वि.). –a) का1 ब2.3 दे6 मुवें. मुए. मुब. अर्था (ब3 °न्ना) नामुचिते, दे4 अर्थानामुच्यते, ते1 अर्थानामागमे, ग्र2 अर्थीनामुदिते (→अर्थानामुदिते). –b) दे6 श्रद्धाया, न1 श्रद्धयाः (→श्रद्धया); द1 म1 उ1 प्रतिपादितं (→प्रतिपादनं). –c) ब3 दाननित्य° (→दान-मित्य°). –d) ब3 भक्तिमुक्ति°, ग्र2 भुक्ति ** (→भुक्ति-मुक्ति°).

३. ब1. ⊙ (द्र. १ पा. वि.); दे4. ३c–४d ⊙; दे10. ३c–१३d ⊙. –a) ग्र2 विशिष्टेभ्यो (→विशिष्टेभ्यः). –b) का1 न1 पुनः (→युतः); दे1.8.9 मुवें. मुए. मुब. शिष्टेभ्यः श्रद्धायुतः, दे10 यः स भूयो जनायते. –c) दे1.8-10 मुवें. मुए. तद्विचित्र°, द1 ग्र2 म1 उ1 तत्तुवित्त° (→तद्वै वित्त°) –d) ते1 वेषं, ग्र2 शेष्यं (→शेषं); द1 ग्र2 म1 उ1 कस्याभि- (→कस्यापि); दे6 वक्ष्यति (→रक्षति).

४. ब1. दे4.10. ⊙. –a) दे6 ग्र2 नित्य- (→नित्यं). –c) उ1 चतुर्थमविलां (→चतुर्थं विमलं).

अहन्यहनि यत् किंचिद् दीयतेऽनुपकारिणे ।
अनुद्दिश्य फलं तस्माद् ब्राह्मणाय तु नित्यकम् ॥५
यत् तु पापोपशान्त्यर्थं दीयते विदुषां करे ।
नैमित्तिकं तदुद्दिष्टं दानं सद्भिरनुष्ठितम् ॥६
अपत्यविजयैश्वर्यस्वर्गार्थं यत् प्रदीयते ।
दानं तत् काम्यमाख्यातमृषिभिर्धर्मचिन्तकैः ॥७
यदीश्वरप्रीणनार्थं ब्रह्मवित्सु प्रदीयते ।
चेतसा धर्मयुक्तेन दानं तद् विमलं शिवम् ॥८
दानधर्मं निषेवेत पात्रमासाद्य शक्तितः ।
उत्पत्स्यते हि तत्पात्रं यत् तारयति सर्वतः ॥९

कुटुम्बभक्तवसनाद् देयं यदतिरिच्यते ।
अन्यथा दीयते यद्धि न तद् दानं फलप्रदम् ॥१०
श्रोत्रियाय कुलीनाय विनीताय तपस्विने ।
वृत्तस्थाय दरिद्राय प्रदेयं भक्तिपूर्वकम् ॥११
यस्तु दद्यान्महीं भक्त्या ब्राह्मणायाहिताग्नये ।
स याति परमं स्थानं यत्र गत्वा न शोचति ॥१२
इक्षुभिः संततां भूमिं यवगोधूमशालिनीम् ।
ददाति वेदविदुषे यः स भूयो न जायते ॥१३
गोचर्ममात्रामपि वा यो भूमिं संप्रयच्छति ।
ब्राह्मणाय दरिद्राय सर्वपापैः प्रमुच्यते ॥१४ बें.२.२६.१४

५. ब1. ⊙ (द्र.१ पा. वि.); दे10. ⊙ (द्र. ३ पा. वि.). –c) दे6 अनुदिश्य, द1 ग्र2 उ1 अनिर्दिश्य (→अनुद्दिश्य); का1 दे6 म1 तस्य (दे6 °स्या), ब2 दे3 तस्स्यात् (→तस्माद्). –d) द1 ग्र2 उ1 ब्राह्मणायात्र (→ब्राह्मणाय तु); दे9 सर्वदानोत्तमोत्तमं; म1 ब्रह्मणायतमित्यकं.

६. ब1. ⊙ (द्र. १ पा. वि.); दे10. ⊙ (द्र. ३ पा. वि.). –a) ते1 -स्याद्रोग° (→पापोप°). –b) का1 विदुषाङ्कलौ, दे2 विदुषांकरौ, दे3 विदुषां प्रति, दे6 विदुषे किल, ग्र2 पित्रिषां करेत् (→विदुषां करे). –c) दे6 नैमित्तिके (→नैमित्तिकं); दे6 तदुद्दिष्टं, द1 च तद्दिष्टं, ग्र2 च निर्दिष्ट-, म1 तु निर्दिष्टं, उ1 इति दिष्टं (→तदुद्दिष्टं). –d) दे4 सानं (→दानं); दे4 सन्निद् (→सद्भिर्); ब2.3 दे2 न1 अनुत्तमं (→अनुष्ठितम्).

७. ब1. ⊙ (द्र. १ पा. वि.); दे10. ⊙ (द्र. ३ पा. वि.). –a) दे4 अपत्यं, दे6 अपाप-, न1 अ*त्य- (→अपत्य-); दे3 -वित्तपश्वादि (→-विजयैश्वर्य-). –b) ब3 स्वार्गादर्थं (→स्वर्गार्थं). –c) दे4.6 काम° (→काम्य°); म1 °मित्याहुर् (→°माख्यातम्). –d) म1 ख्यातं सद् (→ऋषिभिर्); ते1 धर्मवित्तमैः, द1 ध * चिन्तकैः (→धर्मचिन्तकैः).

८. ब1. ⊙ (द्र. १ पा. वि.); दे10. ⊙ (द्र. ३ पा. वि.). –a) उ1 यदीश्व *- (→यदीश्वर-); दे1 °प्रीतनार्थं (→-°प्रीणनार्थं). –b) दे9 ब्र*विद्भयः, द1 ग्र2 म1 उ1 ब्रह्मविद्भ्यः (ग्र2 °भिः) (→ब्रह्मवित्सु); दे3.4 ते1 द1 म1 उ1 भक्तियुक्तेन, ग्र2 भक्तियत्नेन (→धर्मयुक्तेन). –d) ब2 द1 ग्र2 म1 उ1 स्मृतम् (→शिवम्).

९. ब1. ⊙ (द्र. १ पा. वि.); दे10. ⊙ (द्र. ३ पा.वि.). –a) का1 निषेवेत् (→निषेवेत). –b) उ1 * साद्य (→आसाद्य); ग्र2 भक्तितः (→शक्तितः). –c) ब3 उत् पश्यता, दे1.8 उत्पत्स्य हि (→उत्पत्स्यते); का1 ब2.3 दे2 तु, दे6 च (→हि); दे4 ते1 द1 ग्र2 उ1 यत्पात्रं, न1 तं पात्रं (→तत्पात्रं). –d) दे4 द1 ग्र2 म1 उ1 तत्तारयति, ते1 तत्रायति च (→यत्तारयति).

१०. का1. ⊙; ब1. ⊙ (द्र. १ पा. वि.); दे10. ⊙ (द्र. ३ पा. वि.); दे3. ab ⊙. –a) न1 उद्वंत- (→कुटुम्ब-); ब2.3 -भरणाद् (→-वसनाद्). –b) ग्र2 उ1 तदिति° (→यदति°). –c) दे3 सद्भिर्, दे4 यद्वै, दे6 यद्धि-, ते1 सद्वै, ग्र2 तद्धि (→यद्धि).

११. ब1. ⊙ (द्र. १ पा. वि.); दे10. ⊙ (द्र. ३ पा. वि.). –c) का1 दे8.9 द1 उ1 मुवें. मुए. मुब. व्रतस्थाय, दे3 ब्रह्मिष्ठाय, दे4 वितस्था* (→वृत्तस्थाय); म1 दरिद्राय व्रतस्थाय. –d) दे1.8.9 मुवें. मुए. यद्देयं (→प्रदेयं).

१२. ब1. ⊙(द्र. १ पा. वि.); दे10 ⊙. (द्र. ३ पा. वि.) ; दे4. १२c-१५c ⊙. –a) न1 यत्तु (→यस्तु); उ1 -नादीभक्त्या (→महीं भक्त्या). –b) ग्र2 ब्राह्मणाय (→ब्राह्मणाया-).

१३. दे4. ⊙ (द्र. १२ पा. वि.); दे10. ⊙ (द्र. ३ पा. वि.). –a) का1 सततं, दे1.6 सततां (दे6 °तो), दे3 ते1 द1 ग्र2 म1 उ1 सहितां (→सन्ततां); ब1 ***** तां भूमिं. –b) दे6 याव° (→यव°). –c) दे6 देवविदुष्टे (→वेदविदुषे). –d) ते1 भूयोऽभि- (→भूयो न).

१४. दे4. ⊙ (द्र. १२ पा. वि.). –a) दे10 ते1 म1 °मात्रमपि, द1 **मपि (→मात्रामपि); द1 सा, उ1 वां (→वा). –b) दे1 सो (→यो). –d) उ1 प्रमु*ते (→प्रमुच्यते).

वें२.२६.१५ भूमिदानात् परं दानं विद्यते नेह किञ्चन ।
अन्नदानं तेन तुल्यं विद्यादानं ततोऽधिकम् ।।१५
यो ब्राह्मणाय शान्ताय शुचये धर्मशालिने ।
ददाति विद्यां विधिना ब्रह्मलोके महीयते ।।१६
दद्यादहरहस्त्वन्नं श्रद्धया ब्रह्मचारिणे ।
सर्वपापविनिर्मुक्तो ब्रह्मणः स्थानमाप्नुयात् ।।१७
गृहस्थायान्नदानेन फलं प्राप्नोति मानवः ।
आममेवास्य दातव्यं दत्त्वाप्नोति परां गतिम् ।।१८
**वैशाख्यां पौर्णमास्यां तु ब्राह्मणान् सप्त पञ्च वा ।**
**उपोष्य विधिना शान्तः शुचिः प्रयतमानसः ।।१९**

**पूजयित्वा तिलैः कृष्णैर्मधुना च विशेषतः ।**
**गन्धादिभिः समभ्यर्च्य वाचयेद् वा स्वयं वदेत् ।।२०**
**प्रीयतां धर्मराजेति यद् वा मनसि वर्त्तते ।**
**यावज्जीवकृतं पापं तत्क्षणादेव नश्यति ।।२१**
**कृष्णाजिने तिलान् कृत्वा हिरण्यं मधुसर्पिषी ।**
**ददाति यस्तु विप्राय सर्वं तरति दुष्कृतम् ।।२२**
**कृतान्नमुदकुम्भं च वैशाख्यां च विशेषतः ।**
**निर्दिश्य धर्मराजाय विप्रेभ्यो मुच्यते भयात् ।।२३**
**सुवर्णतिलयुक्तैस्तु ब्राह्मणान् सप्त पञ्च वा ।**
**तर्पयेदुदपात्रैस्तु ब्रह्महत्यां व्यपोहति ।।२४**

---

१५. दे3. १५b-१६b ⊙; दे4. abc ⊙ (द्र. १२ पा. वि.). –c) उ1 अन्नदानन्तु न तुल्यं.

१६. दे3. ab ⊙ (द्र. १५ पा. वि.). –a) दे1.8-10 मुवें. मुए. शुचये (→शान्ताय). –b) ब1.3 दे4.6 ते1 धर्मशीलिने, द1 ग्र2 ब्रह्मवादिने, म1 ब्रह्मशीलिने (→धर्मशालिने); दे1.8-10 मुवें. मुए. धर्मशीलाय शीलिने, न1 शूलये धर्मशीलिने, उ1 शुचिने ब्रह्मवादिने. –c) दे3 *** (→ददाति); दे1.10 विद्या विधिना, ते1 विधिना विद्यां (→विद्यां विधिना).

दे1 अधिकम्—भूमिदानात्परं विद्यते ( = १५a)

१७. –a) दे6 दयाद् (→दद्याद्). –b) द1 श्रद्धयो, उ1 शुद्धाय (→श्रद्धया). –c) ग्र2 °मुक्तः (→°मुक्तो). –d) ब1 दे4 ब्रह्मण, दे1 ब्रह्माणं, दे3 व्रतिनः, दे8-10 मुवें. मुब. ब्राह्मणं, ग्र2 ब्राह्मणः (→ब्रह्मणः); दे1.8.9 स्थानमेष्यति, दे3 स्थानमाश्रयेत्, दे10 स्थानमिष्यते, द1 ग्र2 म1 उ1 पदमाप्नुयात् (→स्थानमाप्नुयात्); न1 ते1 ब्रह्मस्थानमवाप्नुयात्.

१८. द1 ग्र2 उ1. १८a–२६b ⊙ एषु कोशेषु इमे श्लोका ३५ श्लोकानन्तरं वर्तन्ते. –a) दे10 गृहस्थायान्न°, न1 गृहस्थास्यान्न°, ते1 गृहस्थोप्यन्न° ( →गृहस्थायान्न°). –b) का1 ब2 दे3.10 फलमाप्नोति, ब1.3 दे2 न1 मुब.. फलन्नाप्नोति (→फलं प्राप्नोति). –c) का1 अन्नमेवास्य, ब1 दे1.3.4.8-10 म1 मुवें. मुए. आगमे चा (ब1 म1 °वा°)स्य (→आममेवास्य); दे6 दातव्ये (→दातव्यं).

१९. द1 ग्र2 उ1. ⊙ (द्र. १८ पा. वि.); म1. १९a-२६b ⊙. –a) दे10 वैशाखे (→वैशाख्यां); दे1 पूर्णिमास्यां तु, दे4 पौर्णमासां तु, दे6 पौर्णमास्यां वा, दे8.9 पूर्णमास्यां तु (→पौर्णमास्यां तु). –b) का1 पञ्च सप्त (→सप्त पंच); दे4 -क, दे10 च, ते1 च, + वा (→वा). –c) ब1 दे1.4.8-10 न1 ते1 मुवें. मुए. मुब. शान्तान् (→शांतः). –d) दे1.8-10 न1 मुवें. मुए. मुब. शुचीन्, दे6 शुद्धिः (→शुचिः); ब2 च यत°, दे4 तद्गत° (→प्रयत°); दे6 ***, ते1 मुवें. मुए. °मानसाः (→°मानसः); दे1 शुचित्य*तमानसः.

२०. द1 ग्र2 उ1. ⊙ (द्र. १८ पा. वि.); म1. ⊙ (द्र. १९ पा. वि.); ब1 दे6 न1. cd ⊙. –b) दे6 चावशेषः (→च विशेषतः). –c) का1 गन्धादीनिरथाभ्यर्च्य, दे2 गंधादिभिरथाभ्यर्च्य. –d) ब2.3 मुब. वाचयित्वा (→वाचयेद्वा); का1 समर्चयेत् (→स्वयं वदेत्).

२१. द1 ग्र2 म1 ⊙. –a) दे4 प्रीय(त)तां (→प्रीयतां). –b) दे1 मनि* (→मनसि). –c) का1 ब2.3 दे1.2.4.8.9 मुवें. मुए. मुब. यावज्जीवं, ब1 यद्वज्जावं (→यावज्जीव-); का1 ब2.3 दे2 तु तत्, न1 कृतां (→कृतं); दे6 यद्वाजीवे तत्पापं. –d) दे2 नश्यतिः (→नश्यति).

२२. ब1. २२a–२३d ⊙; द1 ग्र2 म1 उ1 ⊙. –a) ब2 कृष्णाजिनं (→कृष्णाजिने); ब2.3 दे6 मुवें मुए. मुब. दत्वा (→कृत्वा). –b) दे6.10 ते1 °सर्पिषि (ते1 षे°), दे4 °सर्पिषां (→°सर्पिषी). –c) दे10 ददतु (→ददाति).

२३. ब1 द1 ग्र2 म1 उ1. ⊙. –a) दे2.6 कृतार्थम्, दे3 दे3 कृत्वान्नम्, ते1 दत्वान्नम् (→कृतान्नम्). –b) का1 ब2.3 दे2.6 ते1 वैशाख्यां तु, दे10 वैशाखे च (→वैशाख्यांच). –c) दे6 निदिश्य (?) (→निर्दिश्य). –d) का1 मध्यमे (→मुच्यते).

२४. ब1 द1 ग्र2 म1 उ1. ⊙. –a) ब2 सुवर्णैस्तिल° (→सुवर्णतिल°); दे4.10 °युक्तैश्च (→°युक्तैस्तु). –b) का1

माघमासे तु विप्रस्तु द्वादश्यां समुपोषितः ।
शुक्लाम्बरधरः कृष्णैः तिलैर्हुत्वा हुताशनम् ॥२५
प्रदद्याद् ब्राह्मणेभ्यस्तु तिलानेव समाहितः ।
जन्मप्रभृति यत्पापं सर्वं तरति वै द्विजः ॥२६
अमावस्यामनुप्राप्य ब्राह्मणाय तपस्विने ।
यत्किंचिद् देवदेवेशं दद्याच्चोद्दिश्य शंकरम् ॥२७
प्रीयतामीश्वरः सोमो महादेवः सनातनः ।
सप्तजन्मकृतं पापं तत्क्षणादेव नश्यति ॥२८
यस्तु कृष्णचतुर्दश्यां स्नात्वा देवं पिनाकिनम् ।
आराधयेद् द्विजमुखे न तस्यास्ति पुनर्भवः ॥२९
कृष्णाष्टम्यां विशेषेण धार्मिकाय द्विजातये ।
स्नात्वाऽभ्यर्च्य यथान्यायं पादप्रक्षालनादिभिः ॥३०
प्रीयतां मे महादेवो दद्याद् द्रव्यं स्वकीयकम् ।
सर्वपापविनिर्मुक्तः प्राप्नोति परमां गतिम् ॥३१
द्विजैः कृष्णचतुर्दश्यां कृष्णाष्टम्यां विशेषतः ।
अमावास्यायां भक्तैस्तु पूजनीयस्त्रिलोचनः ॥३२
एकादश्यां निराहारो द्वादश्यां पुरुषोत्तमम् ।
अर्चयेद् ब्राह्मणमुखे स गच्छेत् परमं पदम् ॥३३ वें.२.२६.३२

पंच सप्त (→सप्त पंच). –c) ब2 तर्पयेद्ब्रह्मं, दे4.6.9 तर्प्पयेद्दुद-, दे10 तर्पयेदुग्ध- (→तर्पयेदुद-); का1 °मात्रैस्तु, ब3 न1 -पात्रैश्च, दे1.8-10 मुवें. मुए. मुब. -पात्राणि (→-पात्रैस्तु). –d) दे1.8-10 ब्राह्मणेभ्यो (→ब्रह्महत्यां); दे2 व्यपोहतिः (→व्यपोहति).

२५. ब1 द1 ग्र2 म1 उ1. ⊙; दे1.8-10 मुए. ab ⊙. –a) ब3 माघमास (→माघमासे); का1 ब2.3 दे2.6 न1 मुब. तमिश्रे तु, दे3 शुचिर्भूत्वा, दे4 तु मिश्रैस्तु (→तु विप्रस्तु); ते1 माघमासस्य शुक्ले तु. –c) दे1 °धरैः, न1 °धरं (→°धरः). –d) दे6 हूत्वा (→हुत्वा).

२६. ब1 द1 ग्र2 म1 उ1. ⊙. –a) न1 ब्राह्मणे * स्तु (→ब्राह्मणेभ्यस्तु). –b) का1 तिलान्येव, दे1.8.9 मुवें. मुए. विप्रेभ्यः सु, दे4 तिलानेतत्, दे10 तिलेभ्यः सु (→तिलानेव); दे2 समहितः (→समाहितः). –d) ब2 दुष्कृतं, न1 वै द्विजाः (→वै द्विजः); दे4 सर्वं तु त्तरति द्विजाः, ते1 तत्क्षणादेव नश्यति.

अतः परं ते1 पुस्तके अधिकम्—

*यस्तु कृष्णचतुर्दश्यां सुशान्ताय द्विजातये ।
स्नात्वाऽभ्यर्च्य यथान्यायं पादप्रक्षालनादिभिः ॥
(=२९, a ३०bcd)

२७. ब1 ते1. ⊙; द1 ग्र2 उ1. ab ⊙. –a) का1 दे2 °प्राप्तां, ब2.3 दे6 °प्राप्तौ (ब2 °प्ते) (→°प्राप्य). –c) दे6 °देवेस्य, दे10 °देवेशा (→°देवेशं). –d) दे1.8-10 मुवें. मुए. मुब. दद्याद्वोद्दिश्य, दे3 दद्यादुद्दिश्य (→दद्याच्चोद्दिश्य); दे10 शंकरीं (→शंकरम्).

२८. ब1. ⊙. –a) ते1 प्रीयतां मे महादेवो. –b) दे10 महादेवं (→महादेवः); ग्र2 सनातनं (→सनातनः); ते1 दद्यात् द्युम्नं स्वकीयकम्. –c) द1 ग्र2 म1 उ1 सर्व° (→सप्त°); ते1 सर्वपापविनिर्मुक्तः. –d) ते1 प्राप्नोति परमां गतिम्.

२९. ब1. ⊙; द1. २९d–३२a ⊙; ग्र2. २९c–३१d ⊙. –a) ते1 द्विजः, ग्र2 उ1 यत्तु (→यस्तु). –b) ग्र2 पितामहं (→पिनाकिनम्); ते1 समुद्दिश्य महेश्वरम्. –c) ब3 विजमुखैस्, दे3 द्विजो भक्त्या, दे4 विप्रमुख्ये, म1 द्विजो मुख्यो, उ1 द्विप्रमुख्यन् (→द्विजमुखे). –d) ब3 तस्या नास्ति, दे4 न तस्या(द)स्ति (→न तस्यास्ति); उ1 पुनर्भवा (→पुनर्भवः).

३०. ब1 द1 ग्र2. ⊙; ते1. cd ⊙. –a) दे6 कृष्णाष्ट्म्यां (→कृष्णाष्टम्यां). –b) उ1 द्विजातयेत् (→द्विजातये); ते1 सर्वतरति वै द्विजः. –c) दे10 °भ्यर्च्यं (→°भ्यर्च्य). –d) दे2 °प्रक्षालं (→°प्रक्षाल-).

ते1, c,d मध्ये अधिकम्—

* अमावास्यामनुप्रायां ब्राह्मणाय तपस्विने ।
यत्किंचिद्देवदेवेशं दद्यादुद्दिश्य शंकरम् ॥
प्रीयतामीश्वरस्सोमो महादेवस्सहोमया ।
सप्तजन्मकृतं पापं तत्क्षणादेव नश्यति ॥ (=२७, २८)

३१. ब1 ग्र2. ⊙; ते1. ३१a–३२d ⊙; द1. ३१a–३२a ⊙. –a) दे2 महादेवं, दे4 महादेवः (→महादेवो). –c) दे2 स सर्वपापविनिर्मुक्तः.

३२. ब1 ते1. ⊙; द1. a. ⊙. –b) दे2 कृष्णाष्टाम्यां (→कृष्णाष्टम्यां). –c) दे1.8.9 न1 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. अमावास्यां तु, दे4 अमावास्यां च (→अमावास्यायां); दे1.8.9 मुवें. मुए. मुब. वै भक्तैः, दे4 या भक्तैः, दे6 उप्तैस्तु, दे10 तु भक्तैः, न1 भुक्त्वौस्तु, द1 म1 भुक्तैस्तु (→भक्तैस्तु); का1 अमावास्यान्तु वै भक्तैस्तु, दे3 अमावास्यां शिवो भक्तैः. –d) ग्र2 °लोचनं (→°लोचनः).

३३. –a) द1 निराहारा (→निराहारो). –c) ग्र2 अर्पयेत् (→अर्चयेद्); म1 ब्राह्मणान्मुख्यान् (→ब्राह्मणमुखे). –d) न1 परमां (→परमं).

वें.२.२६.३३ एषा तिथिर्वैष्णवी स्याद् द्वादशी शुक्लपक्षके ।
तस्यामाराधयेद् देवं प्रयत्नेन जनार्दनम् ॥३४
यत्किञ्चिद् देवमीशानं उद्दिश्य ब्राह्मणे शुचौ ।
दीयते विष्णवे वाऽपि तदनन्तफलप्रदम् ॥३५
यो हि यां देवतामिच्छेत् समाराधयितुं नरः ।
ब्राह्मणान् पूजयेद् यत्नात् स तस्यां तोषयेत् ततः ॥३६
द्विजानां वपुरास्थाय नित्यं तिष्ठन्ति देवताः ।
पूज्यन्ते ब्राह्मणालाभे प्रतिमादिष्वपि क्वचित् ॥३७
तस्मात् सर्वप्रयत्नेन तत् तत् फलमभीप्सता ।
द्विजेषु देवता नित्यं पूजनीया विशेषतः ॥३८

३४. –a) दे2.10 मुवें. एषां (→एषा); दे6 तिथि (→तिथिर्); ते1 यस्मात्तु वैष्णवी सा स्यात्. –b) दे2 शुभ-, उ1 शुद्ध- (→शुक्ल-); का1 ब2.3 दे2.6 -पक्षतः, ते1 -कृष्णयोः (?) (→-पक्षके). –c) ग्र2 ता सां (→तस्यां).

३५. –a) न1 त्वत् (→यत्). –b) दे10 ब्राह्मणैः, द1 ब्राह्मणौ (→ब्राह्मणे); दे4 -षु वै, ते1 गुरौ (→शुचौ). –c) का1 दे2.6 ग्र2 विष्णु मे-, ब1 विष्णुना, दे3 नियमे-, दे10 ते1 वैष्णवे (→विष्णवे); दे3 -नापि, ते1 द1 चापि (→वापि). –d) उ1 तद*न्ते° (→तदनन्त°); ब2 दे1.8-10 मुए. मुब. °स्मृतं, उ1 °व्रतं (→°प्रदम्).

३६. –a) उ1 -भि (→हि); ब2 द1 ग्र2 म1 उ1 तां (→यां); ते1 नित्यं (→इच्छेत्). –b) न1 समा(ना)रा° (→समारा°); ते1 °धयते (→°धयितुं). –c) ग्र2 म1 भोजयेत् (→पूजयेत्); दे1.8.9 मुवें. मुए. मुब. विद्वान्, दे10 धीमान्, न1 मग्नान्, ते1 दानात्, द1 म1 उ1 भक्त्या, ग्र2 भक्तान् (→यत्नात्). –d) दे1.8-10 न1 मुवें. मुए. मुब. तस्यास्तोष-, दे4 यस्यां स्वात-, ते1 स्यात्तावत्त-, द1 म1 उ1 तस्या स्थान- ग्र2 तस्या स्नान- (→तस्यां तोष-); दे1.8-10 मुवें. मुए. मुब. -हेतुतः, दे3.4 न1 -हेतुकः, ते1 -दर्चकः, द1 ग्र2 म1 उ1 -माप्नुयात् (→°येत् ततः).

३६ श्लोकानन्तरम् द1 ग्र2 म1 पुस्तकेषु १८–२६ ab श्लोकाः समागताः —

गृहस्थायान्नदानेन फलं प्राप्नोति मानवः ।
अन्नमेवास्य दातव्यं दत्त्वाप्नोति परं पदम् ॥
वैशाख्यां पौर्णमास्यां वा ब्राह्मणान् सप्त पंचधा ।
उपोष्य विधिना शान्ताच्छुचिः प्रयतमानसः ॥ [4]
पूजयित्वा तिलैः कृष्णैः मधुना तु विशेषतः ।
गन्धादिभिः समभ्यगर्चयित्वा स्वयं वदेत् ॥
प्रीयतां धर्मराजेमि यद्वा मनसि वर्त्तते ।
यावज्जीवं कृतं पापं तत्क्षणादेव नश्यति ॥ [8]
कृष्णाजिने तिलान्दत्वा हिरण्यं मधु सर्पिषं ।
ददाति यस्तु विप्राय सर्वं तरति दुष्कृतं ॥
घृतान्तमुदकुम्भं च वैशाख्यां तु विशेषतः ।
निर्दिश्य धर्मराजाय विप्रेभ्यो मुच्यते भयात् ॥ [12]
सुवर्णतिलयुक्तैस्तु ब्राह्मणान् सप्त पंच वा ।
तर्पयेदुदपात्रैस्तु ब्रह्महत्यां व्यपोहति ॥
माघमासे च शुक्ले तु द्वादश्यां समुपोषितः ।
शुक्लाम्बरधरः कृष्णैस्तिलैर्हुत्वा हुताशनम् ॥ [16]
प्रदद्याद्ब्राह्मणेभ्यतु तिलान्नं वा विशेषतः ।
जन्मप्रभृति यत्पापं सर्वं तरति वै द्विजः ॥
अमावास्याहनि प्राप्य ब्राह्मणाय तपस्विने ।

[–1) म1. ⊙; ग्र2 गृहस्था° (→गृहस्थ). –2) ग्र2 म1 अगमे (→अन्नमे-); म1 दातव्य (→दातव्यं); तद् विष्णोः परमं (→दत्त्वाप्नोति परं). -3) ग्र2 तु (→वा). -4) ग्र2 शान्तो (→शान्तः). -5) ग्र2 म1 च (→तु). -6) ग्र2 गन्धादिभिस्सभ्यर्च्य···यित्वा···देत्, म1 गन्धादिभिस्समभ्यर्च्य तुष्टाव रविनन्दनम्. -7) ग्र2 प्री ** न् (→प्रीयतां); ग्र2 म1 धर्मराजो मे (→धर्मराजेमि); ग्र2 पशून्, म1 यो मे (→यद्वा). –8) ग्र2 म1 सर्पिषी (→सर्पिषं) ग्र2 विप्रा ** र्वन् (→विप्राय शर्वं); द1 तेरति (→तरति). -13) ग्र2 च (→वा). –16) म1 शुक्लै, (→कृष्णे); ग्र2 भुक्त्वा (→हुत्वा). -17) ग्र2 च (→वा). -18) ग्र2 द्विजाः (→द्विजः). –19) -मनु- (→-हनि).]

३७. –a) दे3.4.10 च पु°, ग्र2 वा पु° (→वपु°); ग्र2 °रस्थाय (→°रास्थाय). –b) दे4 नित्ये (→नित्यं). –c) ते1 पूज्यते (→पूज्यन्ते); ब2 ब्राह्मणालाभे, दे4 ब्रह्मलाभेन, उ1 ब्राह्मणाभावे (→ब्राह्मणालाभे). –d) का1 ब2.3 दे2.3 °मादिषु ते (का1 तत्) (→°मादिष्वपि); ते1 प्रतिभाष्वपि कर्हिचित्.

३८. –a) दे6 प्रतिमादिषु यत्नेन. –b) दे6 तस्मात्, उ1 यत्तत् (→तत्तत्); का1 दे4 ग्र2 °मभीप्सतः (दे4 °तां), दे1.8.10 मुवें. मुए. मुब. °मभीप्सुभिः, दे3 °मभीप्सि˚, (→°मभीप्सता); ते1 तत्फलं समभीप्सताम्. –c) द्विजे तु (→द्विजेषु). –d) का1 पूजनीयौ(→पूजनीया).

विभूतिकामः सततं पूजयेद् वै पुरंदरम् ।
ब्रह्मवर्चसकामस्तु ब्रह्माणं ब्रह्मकामुकः ॥३९
आरोग्यकामोऽथ रविं धनकामो हुताशनम् ।
कर्मणां सिद्धिकामस्तु पूजयेद् वै विनायकम् ॥४०
भोगकामस्तु शशिनं बलकामः समीरणम् ।
मुमुक्षुः सर्वसंसारात् प्रयत्नेनार्चयेद्धरिम् ॥४१
यस्तु योगं तथा मोक्षमन्विच्छेज्ज्ञानमैश्वरम् ।
सोऽर्चयेद् वै विरूपाक्षं प्रयत्नेनेश्वरेश्वरम् ॥४२
ये वाञ्छन्ति महायोगान् ज्ञानानि च महेश्वरम् ।
ते पूजयन्ति भूतेशं केशवं चापि भोगिनः ॥४३
वारिदस्तृप्तिमाप्नोति सुखमक्षय्यमन्नदः ।
तिलप्रदः प्रजामिष्टां दीपदश्चक्षुरुत्तमम् ॥४४
भूमिदः सर्वमाप्नोति दीर्घमायुर्हिरण्यदः ।
गृहदोऽग्र्याणि वेश्मानि रूप्यदो रूपमुत्तमम् ॥४५
वासोदश्चन्द्रसालोक्यमश्विसालोक्यमश्वदः ।
अनडुदः श्रियं पुष्टां गोदो व्रध्नस्य विष्टपम् ॥४६　वें.२.२६.४५

३९. दे4. cd ⊙. –a) द10 °कोमत् (→°कामः). –b) का1 ब2.3 दे2 ते1 पूजयेद्धि (ते1 °द्धि), दे6 प्रजयेद्धि (→पूजयेद्वै); दे6 पुरंदरां, ते1 प्रमन्वहम् (→पुरन्दरम्). –c) दे6 ब्रह्मचर्यं (→ब्रह्मवर्च-); ग्र2 उ1 ब्रह्मकामस्तु ब्रह्माणम्. –d) दे6 ब्राह्मणं, ग्र2 उ1 ईशानं (→ब्रह्माणं); का1 ब2.3 दे2.3.6 न1 ते1 ज्ञानकामुकः, द1 ग्र2 म1 उ1 ज्ञानकामवान् (→ब्रह्मकामुकः).

४०. दे1. abc ⊙. –a) दे6 आरोग° (→आरोग्य°); का1 दे2 दे4 °कामो (दे4 °मे)पि, ब2 ते1 °कामस्तु (ते1 °श्च); (→°कामोऽथ); दे4 तरं (→रविं). –b) दे8.9 न1 मुवें. मुए. धेनु°, उ1 सन° (→धन°); म1 धनेश्वरं (→हुताशनम्). –c) ग्र2 कर्माणां, म1 अरिम्णां (→कर्मणां); ब1 कर्म्म° (→सिद्धि°). –d) ते1 दिवाकरम् (→विनायकम्).

४१. –a) न1 तोय°, ते1 वास° (→भोग°); दे1 सवलो, दे4 शषिनं (→शशिनं). –b) दे10 बाल° (→बल°); दे10 समीरणे, न1 समीरिणं (→समीरणम्). –c) दे10 मुमुक्षः (→मुमुक्षुः). –d) ब3 °प्रयत्नाद (→प्रयत्नेना°); उ1 °द्विषु (?) (→°द्धरिम्).

४२. –a) ब1 दे4 योगस्, ब2 ग्र2 भोगं (ग्र2 °गी), दे6 द1 उ1 योगी, न1 मोहं (→योगं); न1 तथा मोहम्, ते1 मया मोक्षम्, द1 उ1 महायोगी (उ1 °गं), ग्र2 महाभोगम्, म1 तया मोक्षम् (→तथा मोक्षम्). –b) ब1 दे1.4.8-10 ते1 द1 म1 उ1 मुवें. मुए. मुब. इच्छेत्तत्, ब3 अनिच्छेत्, न1 इच्छेच्च (→अन्विच्छेत्); म1 °मीश्वरम् (→°मैश्वरम्). –c) का1 दे4 न1 सोऽर्चयेत्तं (का1 °द्धि), ब1 दे2 सोर्च्चयेत, ते1 सेवयेद्वा (→सोऽर्चयेद्वै); का1 * रूपाक्षं (→विरूपाक्षं); दे6 योप्यर्च्चये-द्विरूपाक्षं. –d) ब1 दे1.3.6.8-10 ते1 मुवें. मुए. मुब. प्रयत्नेन, दे4 प्रयत्ने * (→प्रयत्नेने-); ब1 न1 -श्वरं हरिं, दे1.8-10 मुवें. मुए. मुब. महेश्वरं, दे3 स्वयं हरं, दे4 द1 ग्र2 म1 उ1 -श्वरं हरं, ते1 परं हरिम् (→-श्वरेश्वरम्).

४३. –a) ब3 ये वांछति, दे1.8-10 मुवें. मुए. मुब. यो वाञ्छति, दे8 यो वांछिति (→ये वाञ्छन्ति); का1 दे1.8-10 मुवें. मुए. मुब. °योगात्, ब1-3 दे3.4 न1 मुब. °भो (ब3 भा) गान्, दे6 °घोरा, ते1 °लोकान्, द1 ग्र2 म1 उ1 °योगं (→°योगान्). –c) दे1.8-10 मुए. मुब. स, दे9 सं- (→ते); दे1.8-10 मुए. मुब. पूजय (दे9 °ये)ति (→पूजयंति); म1 देवेशं (→भूतेशं). –d) का1 केवलं चापि, ब1 दे1 ते1 केशवं वापि (→केशवं चापि); दे4 न1 म1 मुए. मुब. भो(न1 भा)गिनं, द1 ग्र2 उ1 योगिनः (उ1 °नं).(→भोगिनः).

४४. –a) ब3 °मायान्ति, + °माप्नोति, ते1 °मायांति (→°माप्नोति); ग्र2 वादस्तृप्तिमवाप्नोति. –b) ब3 सुद° (?) दे1.9 धन°, दे6 मुख° (→सुख°); दे10 °मतरः, ग्र2 °मन्तथा (→°मन्नदः); ते1 सुखमप्यक्षयं मनः. –c) ग्र2 तिलः (→तिल-). –d) दे1 दीप*श्चक्षु°, ते1 लभते चक्षु°, ग्र2 दीप-दश्चक्षु° (→दीपदश्चक्षु°).

४५. –a) द1 ग्र2 म1 उ1 ग्रामदस्(→भूमिदः). –b) द1 °माहु° (→मायु°). –c) दे1 गृहदेग्राणि (?), दे6 गृहदोग्धाग्न, न1 गृहदोह्य, ते1 गृहं दत्वा च, द1 ग्र2 गृहभोग्यानि, म1 गृहतो याति, उ1 गृहवेश्मानि (→गृहदोऽग्रचाणि); दे10 वैश्यानि, ते1 रत्नानि, उ1 भोग्यानि (→वेश्मानि). –d) दे4 द1 उ1 रौप्यदो, दे10 रूपदो (→रूप्यदो); दे1 द1 रूप्य° (→रूप°).

४६. –a) दे6 °मालोकं (→°सालोक्यं). –b) का1 ब2.3 दे2.4.6 ग्र2 मुब. अश्व-, दे1 अश्चि-, दे3 अर्क-, दे10 अश्वि-, म1 अ* (→अश्वि-); ब2.3 दे6 मुब. -दोया(ब2 °मा) नम्, ते1 -सारूप्यम् (→-सालोक्यम्); ब2.3 दे6 मुब. उत्तमं, दे10 द1 अश्विदः (→अश्वदः); न1 ***** मुश्वदः. –c) का1 ब2.3 दे2.6 अन्न (ब3 थं)दाता, दे4 द1 ग्र2 म1 उ1 अन्नप्रदः (दे4 ग्र2 °द) (→अनडुदः); ते1 श्रियां (→श्रियं); का1 ब1.2 दे2 इष्टां, ब3 दे4 चेष्टां, दे10 पुष्टं, म1 जुष्टं (→पुष्टां). –d)

वै.२.२६.४६ यानशय्याप्रदो भार्यामैश्वर्यमभयप्रदः ।
धान्यदः शाश्वतं सौख्यं ब्रह्मदो ब्रह्मसात्म्यताम् ॥४७
धान्यान्यपि यथाशक्ति विप्रेषु प्रतिपादयेत् ।
वेदवित्सु विशिष्टेषु प्रेत्य स्वर्गं समश्नुते ॥४८
गवां घासप्रदानेन सर्वपापैः प्रमुच्यते ।
इन्धनानां प्रदानेन दीप्ताग्निर्जायते नरः ॥४९
फलमूलानि शाकानि भोज्यानि विविधानि च ।
प्रदद्याद् ब्राह्मणेभ्यस्तु मुदा युक्तः सदा भवेत् ॥५०
औषधं स्नेहमाहारं रोगिणे रोगशान्तये ।
ददानो रोगरहितः सुखी दीर्घायुरेव च ॥५१
असिपत्रवनं मार्गं क्षुरधारासमन्वितम् ।
तीव्रतापं च तरति छत्रोपानत्प्रदो नरः ॥५२
यद् यदिष्टतमं लोके यच्चापि दयितं गृहे ।
तत्तद् गुणवते देयं तदेवाक्षयमिच्छता ॥५३
अयने विषुवे चैव ग्रहणे चन्द्रसूर्ययोः ।
संक्रान्त्यादिषु कालेषु दत्तं भवति चाक्षयम् ॥५४
प्रयागादिषु तीर्थेषु पुण्येष्वायतनेषु च ।
दत्त्वा चाक्षयमाप्नोति नदीषु च वनेषु च ॥५५

द1 गोदा (→गोदो); म1 ब्रह्मत्रि- (→ब्रध्नस्य); ब1 -धीश्वरं (→विष्टपम्).

४७. -b) दे6 ऐश्वर्य्यं (→ऐश्वर्यम्); उ1 अभयप्रदा (→अभयप्रदः). -c) दे10 धनदः, ते1 धान्यदश्, ग्र2 ध्यानादश् (→धान्यदः); का1 द1 शास्वतः (→शास्वतं); दे6 शौख्यं (→सौख्यं). -d) दे3 ब्रह्मदो(षं), दे4 ब्रह्मणो, दे6 जलानां (→ब्रह्मदो); का1 दे1.2.6.10 ते1 °सात्मतां(दे6°नं), ब1-3 दे3 मुब. °शाश्वतं (ब1 °तां), दे4 उ1 °साम्यतां, न1 °वार्षितां, द1 म1 °सार्ष्टिताम्, ग्र2 °साक्षितां (→°सात्म्यताम्).

४८. ब2.3 दे2.6.10 न1 द1 ग्र2 म1 उ1 धनान्य (दे6 °न्या)पि, दे4 धनाप्यपि, ते1 अन्यानृषि (→धान्यान्यपि). -b) दे6 उ1 विप्रेभ्यः (→विप्रेषु). -c) का1 दे2 वेदविद्या, दे3 वेदवित्सू (→वेदवित्सु); का1 ग्र2 विशेषेषु, दे3 वशिष्टेषु, उ1 वि*ष्टेषु (→विशिष्टेषु). -d) का1 दे2 स्वर्गे (दे2°र्गां); (→स्वर्गं); दे1 समश्नुतेः (→समश्नुते); ते1 स प्रेत्य स्वर्गमश्नुते.

४९. ब1. ४६c–५३d ⊙. -a) का1 दे1.4.6.8.10 द1 मुए. वास°, दे3 ग्रास°, उ1 * स°, दे9 मुवें. वा सं- (→घास°). -b) का1 सर्वं पापं, दे3 सर्वपापात् (→सर्वपापैः). -c) न1 इधध्नानां (?) (→इन्धनानां).

दे4. पुस्तके b, c मध्ये अधिकम्—
* इंधनानां प्रदानेन सर्वपापैः प्रमुच्यते. ( = ४९ c, b)

५०. ब1. ⊙. -a) ब2.3 पर्णानि, दे6 शूपानि, न1 पानानि (→शाकानि). -b) ब2 दे2.6 न1 शाकानि, ब3 पानानि (→भोज्यानि). -c) दे3 प्रदाय, दे6 स दद्यात् (→प्रदद्याद्); दे4 ब्राह्मणेभ्यश्च (→ब्राह्मणेभ्यस्तु). -d) दे3 लक्ष्म्या, दे6 यदा (→मुदा); दे6 शुल्कस् (→युक्तः); दे1.8-10 मुवें. मुंए. स्वयम्भवेत्, ते1 प्रजायते (→सदा भवेत्).

५१. ब1. ⊙. -a) न1 अोषधं, दे6 अ(?)षधं, ग्र2 अौषधास् (→अौषधं); दे1 स्नेहमाहारो, ते1 स्नानमाहारं, ग्र2 तेन माहारं (→स्नेहमाहारं). -b) का1 दे6 रोगिने (दे6°नो), ब2.3 दे1.3 द1 ग्र2 म1 उ1 रोगिं (द1 °हि)णो (→रोगिणे); दे6 रो* (→रोग-). -c) ब3 स दानो, म1 ददानो, + ददाति (→ददानो); म1 °सहितस् (→°रहितः). -d) दे1 न1 सुखा ते1 द1 ग्र2 उ1 शु(ते1सु)चिर्, म1 सुखन् (→सुखी); दे2 °रेव हि (→रेव च).

५२. ब1. ⊙. -a) दे1.8-10 मुए. मुब. दुर्गं, दे2 मार्गा (→मार्गं). -b) ग्र2 क्षुरा° (→क्षुर°); ब2 °माकुलं, (→°मन्वितम्). -c) का1 म1 तीक्षणता तं च, ब2.3 दे4.6 द1 ग्र2 तीक्ष्णातपं च (ग्र2 °त्र), दे2 तीक्ष्नतेपंच, दे3 अनायासेन, न1 क्षीणतापंच, ते1 तीक्ष्णानि पंच, उ1 तीक्ष्णं परं च (→तीव्रतापञ्च); दे4 ग्र2 चरति (→तरति). -d) दे1 छत्रोपानन्, दे6 छत्रोपाना- (→छत्रोपानत्-); म1 प्रदानतः (→°प्रदो नरः) दे4 छत्रोपानहदानतः.

५३. ब1. ⊙. -a) का1 तद्यदिष्ट°, दे6 यमुदिष्ट° (→यद्यदिष्ट°); दे6 °तमा (→°तमं). -b) का1 ब2.3 दे2.6 न1 मुब. यच्चास्य (न1 °न्य) (→यच्चापि); उ1 दर्शितं (→दयितं). -c) का1 दे2 भगवते, न1 गुणप्रदे (→गुणवते). -d) दे6 तदवा° (?), उ1 ते देवा° (→तदेवा°); दे6 °मिछत (→°मिच्छता).

५४. ते1. ५४d–५५a ⊙. -a) दे2 विसुवे (→विषुवे). -b) दे4.10 सूर्यचन्द्रयोः (→चन्द्रसूर्ययोः). -d) ब1 भव* (→भवति); दे6 चक्षयं (→चाक्षयम्).

५५. ब1. cd ⊙; ते1. a ⊙ (द्र. ५४ पा. वि.). -b) दे1 पुण्यो वा (→पुण्येष्वा-); दे2 °यतेनेषु (→°यतनेषु). -c) दे6 दद्या, द1 म1 उ1 दत्तं (→दत्त्वा); ब2 दत्त्वा क्षयमवाप्नोति. -d) ब2.3 द1 ग्र2 म1 उ1 मुब. नदेषु (→वनेषु).

दानधर्मात् परो धर्मो भूतानां नेह विद्यते ।
तस्माद् विप्राय दातव्यं श्रोत्रियाय द्विजातिभिः ।।५६
स्वर्गायुर्भूतिकामेन तथा पापोपशान्तये ।
मुमुक्षुणा च दातव्यं ब्राह्मणेभ्यस्तथाऽन्वहम् ।।५७
दीयमानं तु यो मोहाद् गोविप्राग्निसुरेषु च ।
निवारयति पापात्मा तिर्यग्योनिं व्रजेत् तु सः ।।५८
यस्तु द्रव्यार्जनं कृत्वा नार्चयेद् ब्राह्मणान् सुरान् ।
सर्वस्वमपहृत्यैनं राजा राष्ट्रात् प्रवासयेत् ।।५९
यस्तु दुर्भिक्षवेलायां अन्नाद्यं न प्रयच्छति ।
म्रियमाणेषु विप्रेषु ब्राह्मणः स तु गर्हितः ।।६०
न तस्मात् प्रतिगृह्णीयुर्न विशेयुश्च तेन हि ।
अङ्कयित्वा स्वकाद् राष्ट्रात् तं राजा विप्रवासयेत् ।।६१
यस्त्वसद्भ्यो ददातीह स्वद्रव्यं धर्मसाधनम् ।
स पूर्वाभ्यधिकः पापी नरके पच्यते नरः ।।६२
स्वाध्यायवन्तो ये विप्रा विद्यावन्तो जितेन्द्रियाः ।
सत्यसंयमसंयुक्तास्तेभ्यो दद्याद् द्विजोत्तमाः ।।६३　वें.२.२६.६२

अतः परं दे2 अधिकम्—
* दानधर्मात्परो धर्मो भूतानेह विद्यते कुलः
दत्वाचाक्षयमाप्नोति नदीषु च वनेषु च:
(=५४ab, ५३ cd).

**५६.** दे4. d ⊙. –a) ब2.3 धर्म, न1 अर्थात् (→धर्मात्). –b) ग्र2 भूदानन् (→भूतानां); उ1 इह (→नेह). –d) दे6 ग्र2 श्रोत्रियाया (ग्र2 °च) (→श्रोत्रियाय); ते1 द्विजातये (भिः), द1 ग्र2 म1 उ1 द्विजातये (→द्विजातिभिः).

**५७.** ब1. ५७–७१ ⊙; द1. ५७–५९b ⊙; दे4. abc ⊙. –a) का1 न1 स्वर्गाय (→स्वर्गायुर्); का1 न1 ग्र2 उ1 भूमि°, ते1 भुक्ति° (→भूति°). –b) ग्र2 यथा, म1 (न) तथा (→तथा); ते1 शान्तोप°, म1 पा*प° (→पापोप°). –c) का1 दे9.10 उ1 मुमुक्षुणां, दे1.8 ते मुमुक्षूणां (→मुमुक्षुणा); का1 ब2.3 दे2 दे6 तु (→च). –d) ग्र2 ब्राह्मणेन (→ब्राह्मणेभ्यस्); दे1 तथोन्वहं, दे4 तदन्वहं (→तथान्वहम्).

**५८.** ब1 द1. ⊙. –a) दे10 दीयमानति (→दीयमानंतु); दे2 मोहो, न1 द्रोहाद् (→मोहाद्). –b) ब3 °सुरेव, न1 °रसेषु, दे1 °सु(सु)रेसु (→°सुरेषु); ब2 देवाग्निब्राह्मणेषु च, दे3 विप्राग्निषुसुरेषु च, ते1 विप्राग्निसुरभीषु च. –c) न1 भूतात्मा (→पापात्मा). –d) ब3 दे1.6 व्रजेतु सः, दे4 व्रजेत्तदा, ग्र2 म1 उ1 प्रपद्यते (→व्रजेत्तु सः).

**५९.** ब1. ⊙; द1. ab ⊙. –b) दे6 ना * ये (→नार्च्चयेद्); दे3 ब्राह्मणाय वै, दे6 ब्राह्मणान्वरान् (→ब्राह्मणान् सुरान्). –c) न1 °मपहृत्येनं, ते1 °मुपहृत्वैनं (→°मपहृत्यैनं). –d) दे1.8-10 मुवें. मुए. मुब. राष्ट्राद्वि प्रतिवासयेत्, दे4 ** राष्ट्राद्विवासयेत्, ते1 द1 ग्र2 म1 उ1 राजा (ते1 द1 ग्र2 राष्ट्राद्) विप्रं विवासयेत्.

**६०.** ब1. ⊙. –b) दे4 अन्ना (त्वा) धन् (→अन्नाद्यं). –c) न1 ह्रीयमानेषु, द1 ग्र2 म1 उ1 तपो (म1 °मो) गुणेषु (→म्रियमाणेषु); दे1.8-10 मुवें. मुए. सत्त्वेषु (→विप्रेषु). –d) का1 ब2.3 दे2.3 न1 द1 म1 उ1 मुब. ब्रह्महा, दे9 ग्र2 ब्राह्मणा (→ब्राह्मणः); ते1 वि (→तु); दे6 -मर्हतिः, द1 ग्र2 म1 उ1 कीर्तितः (→गर्हितः).

**६१.** ब1. ⊙. –a) दे1.3.8.10 ते1 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. तस्मान्न (→न तस्मात्); दे1.8.9 °गृह्णीयात्, दे2 °गृह्णीसु, दे6 °गृन्हीरन्, दे10 मुवें. मुए. मुब. °गृह्णीयान्, न1 °गृह्णीयुं (→°गृह्णीयुर्). –b) ब2.3 दे4 न1 ते1 द1 ग्र2 म1 उ1 पिबेयुश्च, दे1.8.9 मुवें. मुए. मुब. वै देयञ्च, दे10 वेदेषुश्च (→विशेयुश्च); दे1.8.9 मुवें. मुए. मुब. तस्य (→तेन); दे3 आपत्स्वपि कदाचन. –c) दे4 अर्चयित्वा (→अंकयित्वा); ब2 [अ]थवा राष्ट्रात्, दे1 स्वकान् राष्ट्रान् दे4 सकाद्राष्ट्रात्, दे6 स्वकाद्रष्ट्रान्, ते1 द1 ग्र2 म1 उ1 स्वकाराज्यात् (→स्वकाद्राष्ट्रात्). –d) दे4 राजा (च), ग्र2 राजं (→राजा); दे1 °सादयेत् (→°वासयेत्).

**६२.** ब1. ⊙. –a) ब2 दे1.3.6.8-10 ते1 द1 म1 मुवें. मुए. मुब. यस्तु (→यस्त्व-); दे4 -सभ्ये, दे6 सद्यो, दे10 भक्त्या, ते1 स्वस्थो (→-सद्भ्यो); दे10 ददातीहो (→ददातीह). –b) दे1.8-10 ते1 मुवें. मुए. न (→स्व-); का °धर्मं (→°द्रव्यं); का1 दे6 द्रव्यसाधनं, दे1.8-10 मुए. मुब. ब्रह्मसाधनं (दे10 °नः), द1 ग्र2 धर्मनाशनं, म1 धर्मनाशनं, + धर्मसाधनम् (→धर्मसाधनम्). –c) का1 न (→स); का1 दे2 पूर्वादधिकः, ब1 न1 पूर्वाभ्यधिकं, दे6 ग्र2 पूर्वाभ्याधिकः, ते1 भूत्वाव्याधितः (→पूर्वाभ्यधिकः); का1 पापो, न1 वापि (→पापी). –d) दे4 पचते (→पच्यते).

**६३.** ब1. ⊙. –a) दे10 स्वध्या * वन्तो (→स्वाध्यायवन्तो); दे6 यो (→ये); दे6 विप्रो, द1 ग्र2 विप्राः (ग्र2 °प्र) (→विप्रा). –b) दे10 जितेद्रियः, ते1 द्विजातयः, उ1 **** (→जितेन्द्रियाः). –c) ते1 सत्व° (→सत्य°); दे1 °संशयसंख्येभ्यो, दे8-10 °संयमसंस्थेभ्यो, न1 °थंयम * भुक्ता, द1 म1 °संधा योग (म1 °दया) युक्ता, ग्र2 °सन्धम-

बं.२.२६.६३ सुभुक्तमपि विद्वांसं धार्मिकं भोजयेद् द्विजम् ।
न तु मूर्खमवृत्तस्थं दशरात्रमुपोषितम् ॥६४
सन्निकृष्टमतिक्रम्य श्रोत्रियं यः प्रयच्छति ।
स तेन कर्मणा पापी दहत्यासप्तमं कुलम् ॥६५
यदि स्यादधिको विप्रः शीलविद्यादिभिः स्वयम् ।
तस्मै यत्नेन दातव्यं अतिक्रम्यापि सन्निधिम् ॥६६
योऽर्चितं प्रतिगृह्णीयाद् दद्यादर्चितमेव च ।
तावुभौ गच्छतः स्वर्गं नरकं तु विपर्यये ॥६७

न वार्यपि प्रयच्छेत नास्तिके हैतुकेऽपि च ।
पाषण्डेषु च सर्वेषु नावेदविदि धर्मवित् ॥६८
अपूपं च हिरण्यं च गामश्वं पृथिवीं तिलान् ।
अविद्वान् प्रतिगृह्णानो भस्मीभवति काष्ठवत् ॥६९
द्विजातिभ्यो धनं लिप्सेत् प्रशस्तेभ्यो द्विजोत्तमः ।
अपि वा जातिमात्रेभ्यो न तु शूद्रात् कथञ्चन ॥७०
वृत्तिसङ्कोचमन्विच्छेन्नेहेत धनविस्तरम् ।
धनलोभे प्रसक्तस्तु ब्राह्मण्यादेव हीयते ॥७१

---

संयुक्त-, उ1 °संयम *** (→°संयमसंयुक्ताः). –d) दे1.8-10 दद्याद्विप्रो (→तेभ्यो दद्याद्); दे3 न1 द1 ग्र2 म1 उ1 द्विजोत्तमः (→द्विजोत्तमाः).

६४. ब1. ⊙. –a) का1 न1 द1 स भुक्तमपि, दे6 स्वमुक्तमपि, दे10 सु(र)भुक्तमपि, ते1 स्वभोज्यमपि, सुभु *** (→सुभुक्तमपि); ते1 दातव्यं, उ1 * द्वांसं (→विद्वांसम्) ते1 चार्चयेत् (→भोजयेद्); दे4 ते1 द्विजः, द1 विभुं (→द्विजम्). –c) दे6 उ1 ननु, ते1 मूर्खं (→न तु); ते1 नष्ट° (→मूर्ख°); ब2.3 दे3.4 °मवृत्तिस्थं, ते1 °प्रवृत्ति तु (→°मवृत्तस्थं). –d) का श्रोपोषितम् (→उपोषितम्).

६५. ब1. ⊙. –b) द1 श्रोत्रिये यः, ग्र2 श्रोत्रियाय, उ1 श्रोत्रियं यं (→श्रोत्रियं यः). –c) न1 वापि (→पापी).

६६. ब1. ⊙. –a) न1 ग्र2 विप्रो (→विप्रः). –b) न1 विद्याशीलादिभिः (→शीलविद्यादिभिः); म1 गुणैः (→स्वयम्). –d) का1 ब3 दे2.6 अतिक्रम्य च, दे4 न1 अतिक्रम्यैव, ते1 अभिक्रम्यापि, ग्र2 अ*क्रम्यापि (→अतिक्रम्यापि).

६७. ब1. ⊙. –a) दे4 योचिते, दे10 याचिते, द1 ग्र2 म1 उ1 याचते (→योऽर्चितं); ब3 प्रतिगृह्णीयाद्, दे1.3.4 8-10 न1 ते1 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. प्रतिगृह्णाति, दे6 प्रतिगृह्णीया (→प्रतिगृह्णीयाद्). –b) दे1.3.4.8-10 न1 ते1 मुवें. मुए. मुब. ददात्यर्चित-°, द1 ग्र2 म1 उ1 ददा (उ1 दद्या-)त्यर्थिन° (→दद्यादर्चित°); ब3 ते1 तु, दे1.4.6.8-10 मुवें. मुए. मुब वा (→च). –c) म1 तावभि (→तावुभौ); का1 दे4 ग्र2 म1 उ1 गच्छत (का1 °तां) (→गच्छतः). –d) ते1 नरकं तद्, ग्र2 नरकस्तु, उ1 नरकं च (→नरकं तु); का1 दे3.4 उ1 विपर्ययं (दे3 °यात्, दे4 उ1 °येत्) (→विपर्यये).

६८. ब1. ⊙. –a) दे6 चार्थपि, ग्र2 वार्य्यापि (→वार्यपि); द1 ग्र2 उ1 प्रयत्नेन (→प्रयच्छेत); ते1 नचाल्पमपि यच्छेत. –b) का1 ब2 दे1.2.4.10 हेतुकेऽपि च (ब2 वा), ते1 हैतुके तु वा, द1 म1 हैतुके तथा, ग्र2 हन्तके *था, उ1 हन्तके तथा, मुवें. हैतुकेऽपि वा (→हैतुकेऽपि च). –c) का1 ब2.3 दे2 ते1 द1 ग्र2 म1 उ1 मुब. न पाषण्डेषु, दे3 पाखंडेषु* (→पाषण्डेषु च); दे4 न पाषंडे सर्वेषु नः –d) का1 न वेदविदि, दे4 * वेदविधि, दे6 न1 ते1 द1 ग्र2नावेदविधि (न1 °ध) (→नावेदविदि); ते1 वत्सु च (→धर्मवित्).

६९. ब1. ⊙. –a) दे4 अप एव, न1 सुवर्णं च, ग्र2 अप्रपञ्च (→अपूपञ्च). –b) ते1 गावस्तु, द1 उ1 गवाश्वं (उ1 °श्व), ग्र2 गवां श्वं (→गामश्वं); दे1.4 ते1 द1 उ1 पृथिवी (→पृथिवीं); ते1 तथा, द1 तिलात् (→तिलान्). –c) दे6 द1 ग्र2 अविप्रान् (द1 °त्) (→अविद्वान्); का1 °गृह्णाति, ते1 °गृह्यापि (→°गृह्णानो). –d) ब2 दारुवत्, दे6 काष्ठवित् (→काष्ठवत्).

७०. ब1. ⊙. –a) दे10 लब्धेत्, उ1 विप्सेत् (→लिप्सेत्). –b) का1 प्रशत्तेभ्यो (→प्रशस्तेभ्यो); का1 दे3 ते1 द्विजोत्तमाः (ते1 °म) (→द्विजोत्तमः). –c) ब2.3 मुब. राजन्य-, दे2 चा जाति-, दे4 वा याति-, दे6 राजाभि-, न1 वा जात-, ते1 वाविप्र- (→वा जाति-); ब2 -वैश्यादेर्, ब3 -वैश्येभ्यो, मुब. -वैश्याभ्यां (→-मात्रेभ्यो). –d) दे1 ननु (→न तु); दे10 शूद्रान् (→शूद्रात्); दे3.4.6 कदाचन (→कथञ्चन).

७१. ब1. ⊙; उ1. ७१–७२ ⊙. दे3. ab ⊙. –a) ग्र2 ब्रीहि° (→वृत्ति°); दे1 °नाच्छ (दि)ष्ठेन्, दे4.6 °मान्विच्छे (दे6 छे)त्, दे8.9 °नादिछेन्, दे10 °नानिच्छेत् (→°मन्विच्छेन्). –b) न1 दीहेत, मुब. नेहते (→नेहेत); न1 वन° (→धन°); दे1.8-10 °विस्तरे (→°विस्तरम्). –c) ब2 °लोभ, दे1.8.10 न1 ते1 मुए. °लाभे (न1 °भो), दे3 °लोभात्, दे4 °योगे, द1 °लोक, ग्र2 °लोको (→°लोभे); का1 प्रजेशस्तु, ब3

क्षेत नास्तिके हैतु लान् यज्ञांश्चावाप्य सर्वशः ।
र्वेषु नावेदविदि नोति सङ्कोचाद् यामवाप्नुयात् ॥७२
त्र गामश्वं पृथिवीं ग्रात् यात्रार्थं तु समाहरेत् ।
ानो भस्मीभवति गृह्णन् ब्राह्मणो यात्यधोगतिम् ॥७३
ाप्सेत् प्रशस्तेभ्यो नित्यं न स स्वर्गस्य भाजनम् ।
भ्यो न तु शूद्रात् ानि यथा चौरस्तथैव सः ॥७४
छिन्नेहेत धर्मा ज्जिहीर्षुरर्चिष्यन् देवतातिथीन् ।
तु ब्राह्मण्यादेव श्नीयान्न तु तृप्येत् स्वयं ततः ॥७५
युक्तात्मा देवताऽतिथिपूजकः ।

वर्त्तमानः संयतात्मा याति तत् परमं पदम् ॥७६
पुत्रे निधाय वा सर्वं गत्वाऽरण्यं तु तत्त्ववित् ।
एकाकी विचरेन्नित्यम् उदासीनः समाहितः ॥७७
एष वः कथितो धर्मो गृहस्थानां द्विजोत्तमाः ।
ज्ञात्वाऽनुतिष्ठेन्नियतं तथाऽनुष्ठापयेद् द्विजान् ॥७८
इति देवमनादिमेकमीशं
गृहधर्मेण समर्चयेदजस्रम् ।
समतीत्य स सर्वभूतयोनिं
प्रकृतिं याति परं न याति जन्म ॥७९ वें.१.२६.७८

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायामुपरिविभागे षड्विंशोऽध्यायः ॥२६॥

-b) का1 ब2 दे1.2 ... वा, द1 भ1 हैतुके मुवें. हैतुकेऽपि वा ... द1 ग्र2 म1 उ1 ...ण्डेषु च); दे4 न ..., दे4 * वेदविधि, (→नावेदविदि); ⊙. -b) दे3 यज्ञानाधाय, दे4 यज्ञश्चावापि -c) न1 न तां गमितिमाप्नोति, द1 ग्र2 ...ोति. -d) दे6 संकोचां वां, ग्र2 संकोच्यायां

a) दे4 अप एव, -b) ते1 गावस्तु, ...). ...वं (→गामश्वं); दे का1 दे1.6 प्रतिगृह° (→प्रतिग्रह°). -b) ...तथा, द1 तिलात् (...ए. मुब. यात्रार्थन्तु धनं हरेत्, न1 ते1 यात्रार्थं °त्) (→अविद्वान्) ग्र2 म1 उ1 यात्रामात्रं समाह(उ1 °च)रेत्. -c) ...). -d) ब2 दारुव ...6 स्छित्यन्ना°, दे10 स्थित्यर्थे°(→स्थित्यर्था°); ...त्). -d) दे4 यातिधो° (→यात्यधो°).

-a) दे10 लब्वेत्, दे8.9 मुवें. मुए. स्याद्याचको, दे10 स्वाध्यायको, ...शस्तेभ्यो (→प्रशस्ते ... याजनको (→याचनको). -b) दे6 तमः, द1 (→द्विजोत्तमः). ... (→न स). -d) दे6 न1 ते1 द1 ग्र2 म1 वा याति-, दे6 रा...र° (→चौर°); ब1 तथा च (→तथैव); दे4.6 ...वा जाति-); ब2 ... (→-मात्रेभ्यो). ) ब1 दे1.6 न1 ग्र2 उ1 मुवें भु (दे6 तृ-)त्याश् (→शूद्रात्); दे दे1.8.10 न1 ते1 द1 ग्र2 म1 मुवें. मुए. मुब. ...→चोज्जिहीर्षुर्). -b) ब1-3 मुवें. मुए. ७१–७२ ⊙. ...3-10 न1ग्र2 अनर्चिष्यं (दे10 °ष्यां), ते1 अभ्यर्चन्, °); दे1 °नाद्य ...1 अर्चिषू (→-अर्चिष्यन्). -d) दे1 नातु, दे10 .9 °नादिछे..., दे ... नानु (→न तु); दे4 तिष्ठेत्, ग्र2 तृप्ये दीहेत, मुब. नेहते न तुष्ये स्वपचं ततः. विस्तरे (→°विस्त. ab ⊙; ग्र2. cd ⊙. -a) का1 मुक्तात्मा लाभे (न1 °भो), दे -b) का1 °नित्य° (→°तिथि°); उ1 °पूजकं (→°लोभे); का1 -c) दे3 धर्मशीलः (→वर्त्तमानः). -d) दे10 ...; ब2 स याति परमां गतिं.

**७७.** दे4. ७७–७८b ⊙. -a) ब2 ग्र2 म1 तत् (→वा). -b) ब3 ते1 द1 [अ]नृण्यं, दे6 नृन्यं, न1 नृभ्यं (→[अ]रण्यं); दे3धर्मवित् (→तत्त्ववित्). -c) द1 ग्र2 उ1 संचरेन् (→विचरेन्).

**७८.** दे4. ab ⊙ (द्र. ७७ पा. वि.). -a) ब2 एवं हि, द1 म1 एवं वः, ग्र2 एवं यः (→एष वः); दे6 धर्म्मा (→धर्मो). -b) दे6.10 ग्र2 उ1 द्विजोत्तमः (दे6°म) (→द्विजोत्तमाः).-c) का1 ब1 दे1.4.6-10 न1 ग्र2 म1 उ1 मुवें. मुए. मुब. ज्ञात्वा तु (→ज्ञात्वाऽनु-); ग्र2 तिष्ठन् (→तिष्ठेन्); द1 नियतस् (→नियतं); ते1 कृत्वानेन विधानेन. -d) ब2 दे6 यथा° (→तथा°); दे4 द्विजाः (→द्विजान्); दे3 तथानुष्ठाय धर्मवित्, ते1 यातितन्नियतं द्विजाः, ग्र2 तथानुष्ठापयेद् द्विजवरान्.

**७९.** दे1.8-10. ⊙. -a) का1 °मेकमासं, दे4 म1 उ1 °देवमीशं, ते1 °मेकविशं (→°मेकमीशं). -b) दे3.4 ते1 गृहधर्म (दे3 गृहीधर्मै) रभिपूजयेदजस्रम्, न1 गृहधर्मेण स*र्चयेद् अजस्रं, द1 ग्र2 उ1 गृहधर्मै (उ1 °र्मो) रभिपूजयेन्महेशं, म1 गृहधर्मे * मिपूजयेदजस्रं. -c) दे4 समभीति, दे6 न1 मुवें. मुए. तमतीत्य, उ1 समधीत्य (→समतीत्य); ब2.3 मुब. * (→स); ब1 समतीत्य* सर्वयोनिं प्रकृति, दे3 समतीत्य पुनः स सर्वयोनिमूलां. -d) का1 प्रकृतिं याति परं यया न जन्म, ब1 याति परन्न याति जन्म **, ब2 प्रकृतिपरं न याति जन्म **, ब3 प्रकृतीं ** परं न याति जन्म, दे3 प्रकृतिं याति शिवं न याति जन्म, दे4 ते1 द1 ग्र2 म1 उ1 प्रकृतिं याति पुनर्न याति जन्म, न1 प्रकृतिं यति परं न योनिजन्मः, मुवें. प्रकृति वै स परं न याति जन्म, मुए. प्रकृतिं ** परं न याति जन्म, मुब. प्रकृतिपरं न याति जन्म.

**पुष्पिका—**

**पुराणनाम—**का1 दे2.4.6 म1 इति श्रीकूर्मपुराणे उपरिभागे, ब1 इति कौर्मे उपरिभागे, ब2 दे3 इति कूर्म-

वें.२.२६.८ हुत्वा प्राणाहुतीः पञ्च ग्रासानष्टौ समाहितः ।
आचम्य देवं ब्रह्माणं ध्यायीत परमेश्वरम् ॥८
अलाबुं दारुपात्रं च मृण्मयं वैणवं ततः ।
चत्वारि यतिपात्राणि मनुराह प्रजापतिः ॥९
प्राग्रात्रे पररात्रे च मध्यरात्रे तथैव च ।
संध्यास्वह्नि विशेषेण चिन्तयेन्नित्यमीश्वरम् ॥१०
कृत्वा हृत्पद्मनिलये विश्वाख्यं विश्वसंभवम् ।
आत्मानं सर्वभूतानां परस्तात् तमसः स्थितम् ॥११
सर्वस्याधारभूतानामानन्दं ज्योतिरव्ययम् ।
प्रधानपुरुषातीतमाकाशं दहनं शिवम् ॥१२
तदन्तः सर्वभावानामीश्वरं ब्रह्मरूपिणम् ।
ध्यायेदनादिमद्वैतमानन्दादिगुणालयम् ॥१३
महान्तं परमं ब्रह्म पुरुषं सत्यमव्ययम् ।
सितेतरारुणाकारं महेशं विश्वरूपिणम् ॥१४
ओंकारान्तेऽथ चात्मानं संस्थाप्य परमात्मनि ।
आकाशे देवमीशानं ध्यायीताकाशमध्यगम् ॥१५
कारणं सर्वभावानामानन्दैकसमाश्रयम् ।
पुराणं पुरुषं शंभुं ध्यायन् मुच्येत बन्धनात् ॥१६

८. –a) दे3.4 द1 ग्र2 म1 उ1 प्राणाहुतिं, न1 प्राणाहुतिः (→प्राणाहुतीः). –b) दे6 ग्रामान् (→ग्रासान्). –c) का1 दे6 उ1 देव-(→देवं); दे4 ब्राह्मणं (→ब्रह्माणं). –d) का1 ध्यायेत (→ध्यायीत).

९. –a) का1 अलाबूं, + अतुंबीं, दे1 आलाबु-, दे6.10 अलांबु (दे6 °बुं) (→अलाबुं); ब1 दारपात्रं, दे1 पात्रं दार्वै, दे8.9 मुए. मुब. पात्रं दार्वं, दे10 पात्रं पूर्वं (→दारुपात्रं), ते1 वा (→च). –b) ब1-3 दे1-3.8.9 न1 उ1 मृन्मयं, दे10 मृण्मये, ग्र2 मृण्मयी (→मृण्मयं); दे4 वैनवं, उ1 वेणवं (→वैणवं); का1 ब1-3 दे2-4 न1 ते1 द1 ग्र2 म1 तथा, दे10 स तः (?), उ1 पुनः (→ततः). –c) ब1 यत्वारियति, दे1 चचार्येतानि, दे6 चत्वारि याति, दे8-10 मुवें. मुए. चत्वार्येतानि (→चत्वारि यति-); दे6-पत्राणि (→-पात्राणि).

अतः परं ब2 पुस्तके अधिकम्—

*सर्वस्याधारमव्यक्तमानन्दं ज्योतिमव्ययम् । ( = १२ab)

१०. –a) दे4 प्राग्मात्रे, दे10 प्रागत्रे, ते1 प्रदोषं, द1 प्राग्रात्रं (→प्राग्रात्रे); दे2 पर र*, दे10 परगत्रे, म1 चापरात्रे, उ1 पाररात्रे (→पररात्रे); ब3 बा (→च). –b) दे4 °पात्रे (→°रात्रे). –c) का1 संध्यासु हि, ब1 सन्ध्यां वह्नि-, ब2.3 सन्द्ध्यामह्नि-, दे1.9.10 मुवें. मुए. मुब. सन्ध्यास्वग्नि (दे10 °ग्निर्), दे2 संध्यामंद्धि-, दे3 संध्ययोह्नि, दे8 ते1 सन्ध्यास्वपि, न1 सन्ध्यासह्नि, ग्र2 सन्ध्यस्वग्नि- (→सन्ध्यास्वह्नि); दे6 संयायामग्निनेषे च. –d) दे4 देवम् (→नित्यम्).

११. –a) द1 हृद्यग्नि- (→हृत्पद्म-); ते1 द1 ग्र2 -निलयं (→-निलये); दे6 कृत्वा कृपा मुनिलये. –b) ब1.3 विश्वाक्षं, ब2 विश्वेशं (→विश्वाख्यं); न1 °संभुवं, ग्र2 °संवसं (→°संभवम्); म1 विष्णवाख्यं विष्णुमव्ययं. –d) द1 परस्थात्, ग्र2 परस्थास्, उ1 परस्वान् (→परस्तात्); ब1.3 दे1.8.9 मुए. मुब. तमसि, द1 तमसं (→तमसः); दे3.4 परं (→स्थितं); ते1 परं शिवमुपस्थितम्, + वरस्मात्तमसः स्थितम्, म1 परस्तात्तमवस्थितं, उ1 परस्वान् समवस्थितम्.

१२. द1. cd ⊙. –a) का1 ब1-3 दे2-4.6 न1 ते1 द1 ग्र2 म1 मुब. सर्वस्या(दे4 ग्र2 °स्वा)धारमव्यक्तम्. –d) का1 ब2 दे1.8-10. मुवें. मुए. मुब. आकाश, दे4 आकाशे, न1 आकारं (→आकाशं); का1 दाहकं, दे1.8-10 मुवें. मुए. मुब. कुहरं, दे3 तं हरं, दे4 ते1 च हरं, न1 परमं, ग्र2 म1 उ1 अजरं (→दहनं); ब2.3 दे6 परं (→शिवम्).

१३. द1. ⊙. –a) दे4 वदन्तः, ते1 अनन्तं (→तदन्तः); का1 ब1 दे2.4 ग्र2 म1 उ1 °भूतानाम् (→°भावानाम्). –b) ते1 सर्वं, ग्र2 उ1 विश्व° (→ब्रह्म°). –c) ब1 मध्यं वै, दे1.4 8-10 ते1 मुवें. मुए. मुब. °मध्यान्तम् (→°मद्वैतम्). –d) दे1 आनन्दक्षि, मुए. मुब. आनन्दाख्य- (→आनन्दादि-); ग्र2 आनन्दाह्निगुणालयम्.

१४. द1. ⊙; ग्र2 म1 उ1. cd ⊙. –a) ग्र2 म1 उ1 अनन्तं (→महान्तं); दे1.3.4.8-10 ते1 ग्र2 म1 उ1 मुवें. मुए. मुब. पुरुषं (→परमं); ग्र2 ब्रह्मं (→ब्रह्म). –b) दे1.3 8-10 ते1 ग्र2 म1 उ1 मुवें. मुए. मुब. ब्रह्माणं, दे4 परमं (→पुरुषं). –b) दे3 ईश्वरम् (→अव्ययम्). –c) का1 दे1.8-10 मुए. सितंसितेतरा(दे1 °महा)कारं, दे3 मुवें. तरुणादित्यसंकाशं, दे4 सितेतरानुराकारं. –d) दे4 सहेषु, दे6 महैशं (→महेशं); ब3 दे6 °कारिणं (→°रूपिणम्).

१५. द1 ग्र2 म1 उ1. ⊙; दे3. cd ⊙. –a) दे1.8-10 मुवें. मुए. मुब. ओङ्कारेण, दे4 ओंकारम् (→ओंकारान्ते); दे3 ते1 [अ]थवात्मानं, न1 तथात्मानं (→[अ]थ चात्मानं). –b) ब2 आसने (→आत्मनि). –d) का1 ध्यायेत (→ध्यायीत); दे10 °मध्यगां (→°मध्यगम्); ते1 ध्यायीत परमेश्वरम्.

१६. दे3. ⊙; द1 ग्र2 म1 उ1. ab ⊙. –a) ब1.2 दे5 ते1 °भूतानां (→°भावानाम्). –b) ते1 मनसैकं समाश्रयेत्.

यद्वा गुहायां प्रकृतौ जगत्संमोहनालये ।
विचिन्त्य परमं व्योम सर्वभूतैककारणम् ॥१७
जीवनं सर्वभूतानां यत्र लोकः प्रलीयते ।
आनन्दं ब्रह्मणः सूक्ष्मं यत् पश्यन्ति मुमुक्षवः ॥१८
तन्मध्ये निहितं ब्रह्म केवलं ज्ञानलक्षणम् ।
अनन्तं सत्यमीशानं विचिन्त्यासीत संयतः ॥१९
गुह्याद् गुह्यतमं ज्ञानं यतीनामेतदीरितम् ।
योऽनुतिष्ठेन्महेशेन सोऽश्नुते योगमैश्वरम् ॥२०
तस्माद् ध्यानरतो नित्यमात्मविद्यापरायणः ।
ज्ञानं समभ्यसेद् ब्राह्मं येन मुच्येत बन्धनात् ॥२१
मत्वा पृथक् स्वमात्मानं सर्वस्मादेव केवलम् ।
आनन्दमजरं ज्ञानं ध्यायीत च पुनः परम् ॥२२
यस्माद् भवन्ति भूतानि यद् गत्वा नेह जायते ।
स तस्मादीश्वरो देवः परस्माद् योऽधितिष्ठति ॥२३
यदन्तरे तद् गगनं शाश्वतं शिवमव्ययम् ।
यदंशस्तत्परो यस्तु स देवः स्यान्महेश्वरः ॥२४
व्रतानि यानि भिक्षूणां तथैवोपव्रतानि च ।
एकैकातिक्रमे तेषां प्रायश्चित्तं विधीयते ॥२५ वें.२ २९.२५

---

–c) ब1 दे1.8-10 उ1 पुराण- (→पुराणं); दे1 शुभं (?), मुवें. मुए. मुब. शुभ्रं (→शंभुं). –d) ब2 दे4.6.10 ध्यायेत्, उ1 ध्यायं (→ध्यायन्).

१७. –a) ब3 यथा (→यद्वा); ते1 गृहायां, + गुहायां (→गुहायां); दे1.3.4.8-10 मुवें. मुए. प्रकृतं, ते1 द1 ग्र2 म1 उ1 प्रकृति (→प्रकृतौ). –b) का1 दे3 द1 म1 उ1 °संमोहनालयं, दे2 °संमोहनालयैः, ग्र2 °संमोहनालयः (→°संमोहनालये). –c) द1 ग्र2 म1 उ1 अचिन्त्यं (→विचिन्त्य); दे10 परमे (→परमं); ग्र2 व्योमं (→व्योम).

१८. –b) म1 यथा: (→यत्र); दे1.6.8 मुए. प्रतीयते (→प्रलीयते). –c) दे4 ब्रह्मणा, म1 परमं (→ब्रह्मणः). –d) ग्र2 उ1 यं (→यत्).

१९. –a) म1 तन्मनो (→तन्मध्ये); ब1 नियतं, ब2 विहितं, दे3 निष्कलं, न1 द1 निहतं, ते1 निलयं (→निहितं); ग्र2 ब्रह्मा (→ब्रह्म). –b) ब1 केवन्य (?), दे4.8.9 केवल (→केवलं); दे2 लक्षणे (→लक्षणं). –c) ग्र2 अनन्तस् (→अनन्तं). –d) द1 अचिन्त्यासीत (→विचिन्त्यासीत); दे4 संयुतः (→संयतः); ग्र2 म1 उ1 परं ब्रह्म सनातनं.

२०. –a) दे3 ज्ञेयं (→ज्ञानं). –b) ते1 एकमीश्वरम्, द1 एतदीश्वरं (→एतदीरितम्). –c) ब3 दे6 योत्र तिष्ठेत्, दे1 योनुविष्टेत्, दे3 सोनुतिष्ठेत्, ग्र2 योनुतिष्ठ (→योऽनुतिष्ठेन्); ब3 ते1 द1 ग्र2 म1 महेशानं, दे1.8-10 मुए. सहैतेन (→महेशेन); ब2 मुब. योनुतिष्ठेत सततं. –d) ब1 दे6.10 योगमीश्वरम् (→योगमैश्वरम्).

२१. –a) ब2 दे6 ज्ञानरतो, दे3 ज्ञात्वा ततो, ते1 ज्ञानपरो (→ध्यानरतो). –c) ब1 ज्ञानं समभ्यत् स ब्रह्मन्, दे1 ज्ञानं सश्नन्यते ब्रह्म, दे3 मुवें. ज्ञानं समाश्रयेद् ब्रह्मा, दे4.8.10 द1 ग्र2 म1 उ1 ज्ञानं समभ्य(ग्र2 °व)सेद् ब्रह्म, ते1 ज्ञानं समभ्यसेद्गुह्यं, मुए. ज्ञानं समन्यते ब्रह्म.

२२. –a) ब1 न1 द1 मुवें. गत्वा, ब2 यत्वा, दे1.10 मुए. नत्वा (→मत्वा); ब1 ते1 त्वमात्मानं, न1 समात्मानं (→स्वमात्मानं). –c) का1 ब1-3 दे2-4.6 न1 ते1 द1 ग्र2 म1 उ1 अक्षरं (→अजरं). –d) दे6 ज्ञायीत, दे10 ध्यायिते, ते1 ध्यायन्न (→ध्यायीत); ब2 तत् (→च); ब1.3 द1 ग्र2 म1 पुनः, दे6 पुरं (→परम्).

२३. –a) ब1 दे1.8-10 मुए. तस्माद्, म1 तस्माद्, + यस्माद् (→यस्माद्). –b) का1 यद् बुद्ध्वा, ब1 द1 ग्र2 म1 उ1 यं गत्वा, दे1 य हुत्वा, दे2 यद्दत्वा, न1 यद् गता, ते1 यद् ज्ञात्वा (→यद् गत्वा); दे3 ज्ञात्वा नेह प्रजायते. –c) ते1 तस्माद्विश्वेश्वरं नित्यं. –d) का1 ब2.3 दे2 न1 मुब. परस्ताद्योधि°, ब1 परस्तायोव°, दे6 परस्तद्येधि°, द1 ग्र2 उ1 स तस्माद्योधि° (→परस्माद्योधि°); का1 दे2 °गच्छति (→°तिष्ठति).

२४. –a) का1 तदंतरैतद्, दे2 यदंतरैतद (→यदन्तरे तद्); ब1 भवनं, ब2 दे1.3.8-10 मुवें. मुए. मुब. गमनं, दे4 ते1 गहनं (→गगनं); द1 ग्र2 म1 उ1 सर्वदुःखप्रशमनं. –b) ते1 देवं (→शिवम्); दे1.4.8-10 ग्र2 मुवें. मुए. उच्यते, दे3 न1 ते1 द1 म1 उ1 अच्युतं (→अव्ययं). –c) ब1 न1 यदाहस्, दे1.4.8-10 द1 ग्र2 म1 उ1 मुवें. मुए. यदाहुस्, दे6 यदंगस्, ते1 यदासुस् (→यदंशस्); दे1.8.9 मुवें. मुए. मुब. यः स्यात्, दे4.10 यस्माद्, ते1 यत्नात् (→यस्तु). –d) दे1.8.9 ते1 मुवें. मुए. मुब. देवस्तु, दे10 देहस्तु (→देवः स्यात्); द1 ग्र2 म1 उ1 स देवः परमेश्वरः. –cd) दे3 ध्यायीत सततं देवं व्रतनिष्ठो महेश्वर.

२५. दे1.8-10. ab ⊙. –a) ते1 यति, ग्र2 धाय (→यानि); दे3 च नृणां, ते1 भिक्षाणां (→भिक्षूणां). –b) दे6 °कृतानि (→°व्रतानि); दे6 तु (→च). –c) ते1 एकैकानि क्रमेणैषां, द1 ग्र2 म1 उ1 एककालिकमेतेषां.

उपेत्य च स्त्रियं कामात् प्रायश्चित्तं समाहितः ।
प्राणायामसमायुक्तं कुर्यात् सांतपनं शुचिः ॥२६
ततश्चरेत नियमात् कृच्छ्रं संयतमानसः ।
पुनराश्रममागम्य चरेद् भिक्षुरतन्द्रितः ॥२७
न धर्मयुक्तमनृतं हिनस्तीति मनीषिणः ।
तथापि च न कर्त्तव्यं प्रसङ्गो ह्येष दारुणः ॥२८
एकरात्रोपवासश्च प्राणायामशतं तथा ।
उक्त्वाऽनृतं प्रकर्तव्यं यतिना धर्मलिप्सुना ॥२९

परमापद्गतेनापि न कार्यं स्तेयमन्यतः ।
स्तेयादभ्यधिकः कश्चिन्नास्त्यधर्म इति स्मृतिः ।
हिंसा चैषापरा दिष्टा या चात्मज्ञाननाशिका ॥३०
यदेतद् द्रविणं नाम प्राणा ह्येते बहिश्चराः ।
स तस्य हरति प्राणान् यो यस्य हरते धनम् ॥३१
एवं कृत्वा स दुष्टात्मा भिन्नवृत्तो व्रताच्च्युतः ।
भूयो निर्वेदमापन्नश्चरेच्चान्द्रायणव्रतम् ॥३२

---

**२६.** दे$_{1.8-10}$ मुए. cd ⊙. –a) दे$_{6}$ उत्पत्य (→उपेत्य); का$_{1}$ वा, दे$_{1.3.8-10}$ ते$_{1}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ मुवें. मुए. मुब. तु (→च); दे$_{1.6}$ कामान् (→कामात्). –b) दे$_{1.8-10}$ मुवें. मुए. कृच्छ्रसंयतमानसः. –c) न$_{1}$ ग्र$_{2}$ म$_{1}$ मुवें. मुब. समायुक्तः (→समायुक्तं). –d) न$_{1}$ कार्यात् (→कुर्यात्); का$_{1}$ ब$_{3}$ दे$_{3.6}$ शान्तपनं, ब$_{1}$ सन्तर्पणं (→सान्तपनं).

**२७.** ब$_{1}$. ⊙; दे$_{1.8-10}$ मुए. ab ⊙. –a) का$_{1}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ चरेत्तु (→चरेत); का$_{1}$ न$_{1}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ नियमान्, ते$_{1}$ मतिमान् (→नियमात्). –b) ब$_{2}$ ते$_{1}$ उ$_{1}$ कृत्स्नं (→कृच्छ्रं); ते$_{1}$ संपद्य° (→संयत°); उ$_{1}$ -मानसं (→-मानसः); दे$_{4}$ कृच्छ्रं संततमात्मनः. –c) ते$_{1}$ आगत्य (→आगम्य). –d) ते$_{1}$ अतीन्द्रियः (→अतन्द्रितः).

**२८.** ब$_{1}$. ⊙. –a) दे$_{1.8.9}$ न$_{1}$ मुवें. मुए. मुब. ननर्म-, दे$_{10}$ न मर्म, ते$_{1}$ अधर्म-, ग्र$_{2}$ म$_{1}$ न धर्म (→न धर्म-); द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ -वक्तुं (→-युक्तं). –b) का$_{1}$ हिनस्तोति, दे$_{6}$ द्विनस्तीति, न$_{1}$ हितसाति, ते$_{1}$ हि न स्थिति (→हिनस्तीति); न$_{1}$ मनीषिणा (→मनीषिणः). –c) द$_{1}$ तथा च, ग्र$_{2}$ न चापि (→तथापि); ब$_{2.3}$ दे$_{2}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ मुब. न च (→च न). –d) दे$_{6}$ प्रसंगो दोष, ग्र$_{2}$ मनसाप्येष (→प्रसंगो ह्येष); ते$_{1}$ ईषद् गुह्यस्य धारणम्.

**२९.** ब$_{1}$. ab ⊙. –a) ब$_{3}$ °वासस्तु, दे$_{6}$ °वासेन, न$_{1}$ °वासं च (→°वासश्च). –b) दे$_{6}$ प्राणायामे (→प्राणायाम-); ब$_{2}$ प्राणायामः समन्ततः. –c) ब$_{3}$ [अ]नृणं (→[अ]नृतं); का$_{1}$ नानृतं वै प्रकर्त्तव्यं, ब$_{1}$ उक्त्वानृतं न कर्त्तव्यं, दे$_{1.3.4.8-10}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ मुवें. मुए. कर्त्तव्यं यतिना धर्म (दे$_{1.3.8-10}$ °र्मं), न$_{1}$ अतंद्रिते न कर्तव्यं, उ$_{1}$ कर्तव्यं नाय * धर्म. –d) दे$_{1.8-10}$ मुवें. मुए. लिप्सुना वरमव्ययम्, दे$_{2}$ लिप्सुना धर्मं लिप्सुना, दे$_{3.4}$ ग्र$_{2}$ म$_{1}$उ$_{1}$ लिप्सुना परमापदि, द$_{1}$ विपरा परमापदि.

**३०.** उ$_{1}$. cd ⊙. –a) का$_{1}$ दे$_{2}$ परमापदि तेनापि, ब$_{1}$ परमापक्रतेनापि, दे$_{1.8-10}$ मुवें. मुए. गतेनापि न (दे$_{10}$ च) कार्यं ते, दे$_{3.4}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ अत्यन्तापद्ग(दे$_{3}$ °पद्ग, दे$_{4}$ °पद्ग)तेनापि, उ$_{1}$ अत्यन्तापग(युक्त)तेनापि. –b) दे$_{9.10}$ मुए. स्तन्यम्, द$_{1}$ स्नेहम् (→स्तेयम्). –c) द$_{1}$ स्नेहाद् (→स्तेयाद्); न$_{1}$ अभ्यधिकं (→अभ्यधिकः); न$_{1}$ किंचित् (→कश्चित्). –d) का$_{1}$ नास्त्वधर्मं, दे$_{4}$ नास्तधर्मं, द$_{1}$ नास्तिधर्म (→नास्त्यधर्मं); का$_{1}$ ब$_{1}$ दे$_{1.3.8-10}$ ते$_{1}$ म$_{1}$ मुए. श्रुतिः, दे$_{4}$ द$_{1}$ ग्र$_{2}$ श्रुतः (→स्मृतिः). –e) ब$_{1}$ दे$_{10}$ ते$_{1}$ उ$_{1}$ चैवा-, दे$_{4}$ द$_{1}$ म$_{1}$ चैव (→चैषा); ते$_{1}$ परो (→परा); का$_{1}$ ब$_{1}$ दे$_{6}$ न$_{1}$ दृष्टा, ब$_{2.3}$ दुष्टा, दे$_{2}$ दृष्ट्वा, ग्र$_{2}$ यष्ट्या (→दिष्टा). –f) दे$_{6}$ वात्माज्ञान°, द$_{1}$ उ$_{1}$ च विज्ञान°, ग्र$_{2}$ सविज्ञान° (→चात्मज्ञान°); दे$_{4}$ °नाशिकाः (दे$_{4}$ °कः), दे$_{3}$ ग्र$_{2}$ °नाशिनी, दे$_{8-10}$ °नासिका, द$_{1}$ उ$_{1}$ °नाशनी (→°नाशिका).

**३१.** –a) मुब. तद् (→यद्); ते$_{1}$ एव (→एतद्). –b) का$_{1}$ प्राणह्येते, म$_{1}$ प्राणाश्चैते (→प्राणा ह्येते); दे$_{10}$ उ$_{1}$ बहिश्चरः (→बहिश्चराः); द$_{1}$ प्राणाह्येतेष्ववस्थिताः. –c) का$_{1}$ ब$_{2.3}$ दे$_{2.6}$ न$_{1}$ हरते, ब$_{1}$ रहते, दे$_{4}$ हारिति (→हरति). –d) उ$_{1}$ य यस्य (→यो यस्य).

**३२.** का$_{1}$ ब$_{1}$ दे$_{4}$. cd ⊙. –a) दे$_{1.8.9}$ मुए. एतत् (→एवं); ब$_{1}$ दे$_{1.8-10}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ मुवें. मुए. सुदुष्टात्मा, दे$_{10}$ सुदिष्टात्मा (?), न$_{1}$ समुद्दिष्टा, म$_{1}$ सुदुष्टात्वा (→स दुष्टात्मा). –b) दे$_{1.6}$ भिन्नवृत्तौ (दे$_{6}$ °त्ते), ग्र$_{2}$ म$_{1}$ हीनवृत्तो (म$_{1}$ °त्तौ) (→भिन्नवृत्तो); का$_{1}$ वृताच्युतः, दे$_{1.3}$ द$_{1}$ उ$_{1}$ वृता (म$_{1}$ °त्तं) हतः, दे$_{4}$ ते$_{1}$ व्रतापहः, दे$_{6}$ वृतश्च्युतेः, दे$_{8-10}$ मुवें. मुए. व्रताहतः, न$_{1}$ यमच्युतः, ग्र$_{2}$ पितामहः, म$_{1}$ प्रतीहतः (→व्रताच्युतः). –c) ब$_{2}$ भूयश्चैवेदम् (→भूयो निर्वेदम्); द$_{1}$ आपन्नाः (→आपन्नः). –d) दे$_{10}$ ते$_{1}$ उ$_{1}$ चान्द्रायणं (→चान्द्रायण-); दे$_{6}$ चरेद्भिक्षुरतंद्रितः.

विधिना शास्त्रदृष्टेन संवत्सरमिति श्रुतिः ।
भूयो निर्वेदमापन्नश्चरेद् भिक्षुरतन्द्रितः ॥३३
अकस्मादेव हिंसां तु यदि भिक्षुः समाचरेत् ।
कुर्यात्कृच्छ्रातिकृच्छ्रं तु चान्द्रायणमथापि वा ॥३४
स्कन्देदिन्द्रियदौर्बल्यात् स्त्रियं दृष्ट्वा यतिर्यदि ।
तेन धारयितव्या वै प्राणायामास्तु षोडश ।
दिवास्कन्दे त्रिरात्रं स्यात् प्राणायामशतं तथा ॥३५
एकान्ने मधुमांसे च नवश्राद्धे तथैव च ।
प्रत्यक्षलवणे चोक्तं प्राजापत्यं विशोधनम् ॥३६
ध्याननिष्ठस्य सततं नश्यते सर्वपातकम् ।
तस्मान्महेश्वरं ज्ञात्वा तस्य ध्यानपरो भवेत् ॥३७
यद् ब्रह्म परमं ज्योतिः प्रतिष्ठाक्षरमद्वयम् ।
योऽन्तराऽत्र परं ब्रह्म स विज्ञेयो महेश्वरः ॥३८
एष देवो महादेवः केवलः परमः शिवः ।
तदेवाक्षरमद्वैतं तदादित्यान्तरं परम् ॥३९
यस्मान्महीयते देवः स्वधाम्नि ज्ञानसंज्ञिते ।
आत्मयोगाह्वये तत्त्वे महादेवस्ततः स्मृतः ॥४०
नान्यद् देवान्महादेवाद् व्यतिरिक्तं प्रपश्यति ।   बें.२.२९.४१

३३. दे$_6$. ⊙; ब$_1$ दे$_{2.4}$. ab ⊙. –b) ब$_3$ सम्वत्सर- (→संवत्सरम्); म$_1$ चरेच्चान्द्रायणव्रतं, + संवत्सरमिति श्रुतिः. –c) द$_1$ आपन्ना: (→आपन्नः). –d) दे$_4$ चरद् (→चरेद्).

३४. –a) का$_1$ दे$_6$ द$_1$ हिंसा तु (→हिंसां तु). –b) ग्र$_2$ समाहरेत् (→समाचरेत्). –c) ग्र$_2$ उ$_1$ कार्यं (→कुर्यात्); ब$_3$ द$_1$ ग्र$_2$ कृच्छ्रादि° (→कृच्छ्राति°); ब$_1$ च (→तु). –d) ते$_1$ अपि चान्द्रायणं तथा.

३५ –a) का$_1$ कृत्वे*न्द्रिय°, ब$_1$ दे$_3$ न$_1$ स्कन्नेदि (दे$_3$ °वें)द्रिय°, दे$_{1.8-10}$ मुवें. मुए. स्कन्नमिद्रिय°, दे$_6$ स्कंद्येद्रि द्रिय°(?), ते$_1$ स्वप्नेवेन्द्रिय° (→स्कन्देदिन्द्रिय°). –b) द$_1$ प्रियां (→स्त्रियं); का$_1$ दृष्टा (→दृष्ट्वा); दे$_3$ क्षरेद्यदि, ते$_1$ चलेद्यदि, द$_1$ पतिर्यदि, म$_1$ पतेर्यदि (→यतिर्यदि). –c) ग्र$_2$ धारयतीयं (→धारयितव्या); ते$_1$ तेन तावद्विधातव्याः. –d) का$_1$ प्राणायामांस्तु, ब$_1$ दे$_{6.10}$ द$_1$ ग्र$_2$ उ$_1$ प्राणायामस्तु (→प्राणायामास्तु). –e) का$_1$ दिवास्कंदे, + रेतस्पंदे, ब$_1$ दे$_{1.3.4.8-10}$ न$_1$ ते$_1$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ मुवें. मुए. मुब. दिवास्कन्ने (→दिवास्कंदे); दे$_1$ त्रिरावं स्यात् (?), दे$_{10}$ त्रिरात्रस्य, ग्र$_2$ तिरात्रौ स्यात् (→त्रिरात्रं स्यात्).

३६. ब$_1$. ⊙. –a) दे$_1$ एकान्ना, दे$_{2-4.8.10}$ द$_1$ ग्र$_2$ मुवें. मुए. एकांते, दे$_6$ एकान्नं, ते$_1$ एकाह्ले (→एकान्ने); दे$_2$ मांसेव, दे$_4$ मांसं च, ग्र$_2$ मासे च, म$_1$ उ$_1$ मांसे तु (→मांसे च). –b) ब$_3$ न च (→नव-). –c) दे$_{10}$ लवणं (→लवणे); ब$_3$ नोक्तं, मुवें. मुए. मुब. प्रोक्तं (→चोक्तं). –d) दे$_{6.10}$ प्राजापत्य विशोधनम्.

३७. ब$_1$ दे$_{10}$. ⊙ –a) दे$_1$ °निष्कस्य (→°निष्ठस्य). –b) दे$_3$ नश्यंते(→नश्यते). –c) द$_1$ माहेश्वरं (→महेश्वरं); ब$_{2.3}$ दे$_{2.6}$ ध्यात्वा (→ज्ञात्वा). –d) ब$_2$ ततो ध्यानपरो भवेत्, ब$_3$ दे$_6$ तस्य ध्यानरतो भवेत्, दे$_{1.3.4.9}$ ते$_1$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ मुवें. मुए. मुब. तद् (दे$_4$ तं) ध्यानपरमो भवेत्.

३८. ब$_1$. ⊙; दे$_1$. bcd ⊙. –a) दे$_{10}$ द$_1$ ज्योति (→ज्योतिः); दे$_1$ ध्यायेद् ब्रह्म परं ज्योतिः. –b) दे$_{3.4.8-10}$ ते$_1$ मुवें. मुए. मुब. प्रतिष्ठाक्षरमव्ययम्, द$_1$ ग्र$_2$ म$_1$ प्रतिष्ठाकरमव्ययम्, उ$_1$ प्रतिष्ठाक्षाममव्ययम्. –c) का$_1$ दे$_2$ योन्तरात्मा परं ब्रह्म, दे$_3$ यः परात् परमं ब्रह्म, दे$_4$ यश्चरेत्परमं ब्रह्म, दे$_{8-10}$ मुवें. मुए. मुब. योन्तरा परमं ब्रह्म, ते$_1$ यो महत्परमं ब्रह्म, द$_1$ ग्र$_2$ म$_1$ उ$_1$ यश्चरेत्परमं ब्रह्म.

३९. ब$_1$. ⊙; दे$_1$. ab ⊙. –a) उ$_1$ एष देवे महादेवे. –b) का$_1$ परमं शिवः, न$_1$ परमेश्वरः (→परमः शिवः). –c) दे$_2$ स (→तद्); दे$_{10}$ तदैकाक्षरं (→तदेवाक्षरम्); ब$_3$ दे$_6$ एवैतं, द$_1$ ग्र$_2$ उ$_1$ अव्यक्तं (→अद्वैतं). –d) दे$_6$ द$_1$ तदादित्या (दे$_6$ °व्या)त्परं पदं (दे$_6$ °रं), ते$_1$ तथादित्यान्तरं परं, ग्र$_2$ उ$_1$ दद्यात्तत्परमं पदं.

४०. ब$_1$. ⊙. –a) दे$_4$ यन्मान्(?), न$_1$ द$_1$ म$_1$ तस्मात् (→यस्मान्); दे$_{1.8-10}$ उ$_1$ मुवें. मुए. महीयसो, दे$_6$ महीयेते, न$_1$ महायते, ते$_1$ स ज्ञायते (→महीयते); दे$_9$ ग्र$_2$ म$_1$ देव, उ$_1$ देवा (→देवः). –b) का$_1$ ब$_{2.3}$ दे$_{1.3.4.8-10}$ न$_1$ म$_1$ मुवें. मुए. मुब. स्वधाग्नि-, उ$_1$ स्वयाम्न- (→स्वधाम्नि); दे$_{1.8-10}$ मुवें. मुए. मुब. °संस्थिते (→°संज्ञिते); ते$_1$ पृथग्विज्ञानसंज्ञितः, ग्र$_2$ स्वधाविज्ञान संज्ञिते, म$_1$ स्वाधाग्निजौ * संहिते. –c) दे$_4$ आत्मयोगमये तत्त्वे, दे$_6$ म$_1$ उ$_1$ आत्मयोगाव्य (दे$_6$ °क, उ$_1$ °ह्व)ये तत्त्वे, न$_1$ आत्मनो गां ह्वये तत्त्वे, ते$_1$ आत्मा यो ज्ञायते तत्त्वं, द$_1$ ग्र$_2$ आत्मयोगाह्वयो(ग्र$_2$ °यं) तत्त्वे. –d) द$_1$ महायोगस् (→महादेवस्).

४१. ब$_1$. ⊙. –a) ब$_2$ दे$_{1.8-10}$ ते$_1$ द$_1$ ग्र$_2$ उ$_1$ मुवें. मुए. मुब. नान्यं (ते$_1$ द$_1$ उ$_1$ °न्य) देवं, ब$_3$ नान्यन्देवा म$_1$

वे२.२६.४१ तमेवात्मानमन्वेति यः स याति परं पदम् ।।४१
मन्यन्ते ये स्वमात्मानं विभिन्नं परमेश्वरात् ।
न ते पश्यन्ति तं देवं वृथा तेषां परिश्रमः ।।४२
एकमेव परं ब्रह्म विज्ञेयं तत्त्वमव्ययम् ।
स देवस्तु महादेवो नैतद् विज्ञाय बध्यते ।।४३
तस्माद् यतेत नियतं यतिः संयतमानसः ।
ज्ञानयोगरतः शान्तो महादेवपरायणः ।।४४
एष वः कथितो विप्रा यतीनामाश्रमः शुभः ।
पितामहेन विभुना मुनीनां पूर्वमीरितम् ।।४५
नापुत्रशिष्ययोगिभ्यो दद्यादिदमनुत्तमम् ।
ज्ञानं स्वयंभुवा प्रोक्तं यतिधर्माश्रयं शिवम् ।।४६
इति यतिनियमानामेतदुक्तं विधानं
पशुपतिपरितोषे यद् भवेदेकहेतुः ।
न भवति पुनरेषामुद्भवो वा विनाशः
प्रणिहितमनसो ये नित्यमेवाचरन्ति ।।४७

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायामुपरिविभागे एकोनत्रिंशोऽध्यायः ।।२६।।

---

नान्यन्देवान् (→नान्यद् देवान्); दे$_1$ उ$_1$ महादेव (→महादेवाद्). –b) का$_1$ ग्र$_2$ अतिरिक्तं, दे$_1$ [अ]नुतिरिक्तं(?), दे$_6$ वातिरिक्तं (→व्यतिरिक्तं). –c) ब$_2$ दे$_{1.8.9}$ मुवें. मुए. मुब. आत्मेति, दे$_{10}$ अव्येति (→अन्वेति); म$_1$ तद्वेदात्मानमद्वैतं. d–) का$_1$ ब$_3$ दे$_1$ न$_1$ मुवें. मुब. यः स याति परमं पदम्, ब$_2$ दे$_3$ ते$_1$ म$_1$ स याति परमं पदं, द$_1$ ग्र$_2$ उ$_1$ स (ग्र$_2$ सं) पश्यति परं पदं.

४२. ब$_1$. ⊙. –a) दे$_{1.3}$ मन्यते यः, दे$_4$ अन्यं मते, द$_1$ अन्यन्ते ये (→मन्यन्ते ये); ते$_1$ मन्यन्ते येऽन्यमात्मानं. –b) का$_1$ उ$_1$ विभिन्न- (→विभिन्नं); दे$_{1.4}$ परमेश्वरान् (दे$_4$ °रं), ते$_1$ परमात्मनः (→परमेश्वरात्). –c) का$_1$ नैते, दे$_3$ न तत्, ते$_1$ ते न (→न ते); का$_1$ ते (→तं). –d) दे$_4$ तथा, उ$_1$ प्रया- (→वृथा); म$_1$ उ$_1$ परिश्रमं (→परिश्रमः).

४३. ब$_1$. ⊙. –a) दे$_{1.8\text{-}10}$ मुवें. मुए. एकं ब्रह्म- (→एकमेव); न$_1$ [अ]परं (→परं). –b) दे$_9$ मुवें. मुए. ज्ञेयं तत्, द$_1$ उ$_1$ विज्ञानं (→विज्ञेयं); म$_1$ विज्ञानं तत्वदर्शिभिः. –c) दे$_6$ सादरस्तु (→स देवस्तु); म$_1$ देवदेव महादेव. –d) दे$_{1.8\text{-}10}$ ग्र$_2$ मुवें. मुए. वाध्यते (→बध्यते); दे$_4$ ते$_1$ नैतद्विज्ञाय-मुह्यति (ते$_1$ °च्यते), म$_1$ ****** ध्यते.

४४. ब$_1$. ⊙. –a) ब$_3$ दे$_{1.3.8\text{-}10}$ ते$_1$ ग्र$_2$ म$_1$ मुवें. मुए. मुब. यजेत, दे$_6$ यतेति (→यतेत). –b) न$_1$ यति (→यतिः). –c) दे$_6$ °रता, न$_1$ °रतिः, ते$_1$ °परः (→°रतः).

४५. –a) दे$_6$ विप्रो, दे$_{10}$ ते$_1$ विप्राः (→विप्रा). –b) ते$_1$ शुचिः (→शुभः); दे$_6$ यतीनामाशुभः परः. –c) द$_1$ ग्र$_2$ म$_1$ उ$_1$ विधिना (→विभुना). –d) ब$_{2.3}$ दे$_2$ मुनि (ब$_2$ दे$_2$ °नी )ना (→मुनीनां); का$_1$ ब$_{2.3}$ दे$_{2\text{-}4.6.8\text{-}10}$ ते$_1$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ ईरितः (→ईरितम्).

४६. दे$_{10}$. cd ⊙. –a) दे$_1$ मुवें. मुए. नात्र शिष्यस्य (→नापुत्रशिष्य-). –b) ते$_1$ एतद् (→इदम्). –c) दे$_{1.8.9}$ मुए. मुब. प्रोक्तं (→ज्ञानं); का$_1$ ब$_3$ दे$_4$ न$_1$ मुवें. मुए. स्वयंभुना, दे$_6$ स्वयंभुवान् (→स्वयंभुवा); दे$_1$ ज्ञातं, दे$_{8.9}$ मुए. मुब. ज्ञानं (→प्रोक्तं). –d) दे$_6$ याति (→यति-); ब$_1$ °धर्मा श्रियं, ब$_{2.3}$ द$_1$ म$_1$ उ$_1$ °धर्माश्रमं (→°धर्माश्रयं); दे$_{1.8}$ मुए. मुब. शुभम्, द$_1$ ग्र$_2$ उ$_1$ परं (→शिवम्).

४७. –a) का$_1$ दे$_3$ यति, द$_1$ उ$_1$ ननु, म$_1$ यदि (→इति); का$_1$ इति, ब$_1$ ** (→यति-); द$_1$ -नियमानम् (→-नियमानाम्). –b) ते$_1$ एकमेव (→एकहेतुः). –c) उ$_1$ मुह्यति (→भवति); ते$_1$ वा विनाशं, द$_1$ नापि नाशं, ग्र$_2$ उ$_1$ वापि नाशं (→वा विनाशः). –d) दे$_{1.4.8.9}$ मुवें. मुए. मुब. °मनसा (→°मनसो); दे$_3$ एवाचंयंति, दे$_4$ एव चरंति (→एवाचरन्ति).

**पुष्पिका**—[द$_1$ पुस्तके अध्यायसमाप्तिर्नास्ति).

**पुराणनाम**—का$_1$ दे$_2$ म$_1$ इति श्रीकूर्मपुराणे उपरिभागे, ब$_1$ इति कौर्मे उपरिभागे, ब$_2$ दे$_3$ इति कूर्मपुराणे, ब$_3$ इति कूर्मपुराणे उपरिभागे, दे$_1$ इति श्रीकूर्मपुराणे उपरिविभागे व्यास-गीतासु, दे$_{4.6.10}$ इति श्रीकूर्मपुराणे, दे$_{8.9}$ इति श्रीकूर्मपुराणे उपरिभागे व्यासगीतासु, न$_1$ इति श्रीकौर्मे, ते$_1$ इत्यादिमहापुराणे श्रीकूर्मपुराणे उत्तरभागे व्यासगीतासु, ग्र$_2$ इति श्रीकूर्मपुराणे उत्तरभागे व्यासगीतासूपनिषत्सु, उ$_1$ श्री इति श्रीकूर्मपुराणे उत्तरभागे, मुवें. इति श्रीकूर्मपुराणे उत्तरार्द्धे व्यासगीतासु, मुए. इति श्रीकूर्मपुराणे उपविभागे व्यासगीतासु, मुब. इति श्रीकौर्मे महापुराणे उपरिभागे ब्रह्मविद्यायां. **अध्यायनाम**—ब$_2$. दे$_{1.3.4.6}$ $_{8.9}$ न$_1$ ते$_1$ द$_1$ ग्र$_2$ म$_1$ उ$_1$. ⊙; का$_1$ यतिधर्मान्, ब$_1$ दे$_2$ यति-धर्मानाम्, ब$_3$ मुवें. मुए. मुब. यतिधर्मो नाम, दे$_{10}$ यतिधर्मे. **अध्यायसंख्या**—ब$_2$ दे$_6$. ⊙; का$_1$ अष्टविंशोऽध्यायः ।।२९।।, ब$_{1.3}$ दे$_2$ ते$_1$ अष्टा(दे$_2$°ष्ट)विंशोऽध्यायः, दे$_{1.3.4.8\text{-}10}$ ग्र$_2$ म$_1$ उ$_1$ एकोनविंशोऽध्यायः, न$_1$ एकोनसीतितमोऽध्यायः, मुवें. मुब. एकोनत्रिंशोऽध्यायः ।।२६।।, मुए. ऊनत्रिंशोऽध्यायः.

# ३०

व्यास उवाच ।❀

अतः परं प्रवक्ष्यामि प्रायश्चित्तविधिं शुभम् ।
हिताय सर्वविप्राणां दोषाणामपनुत्तये ॥१
अकृत्वा विहितं कर्म कृत्वा निन्दितमेव च ।
दोषमाप्नोति पुरुषः प्रायश्चित्तं विशोधनम् ॥२
प्रायश्चित्तमकृत्वा तु न तिष्ठेद् ब्राह्मणः क्वचित् ।
यद् ब्रूयुर्ब्राह्मणाः शान्ता विद्वांसस्तत्समाचरेत् ॥३
वेदार्थवित्तमः शान्तो धर्मकामोऽग्निमान् द्विजः ।
स एव स्यात् परो धर्मो यमेकोऽपि व्यवस्यति ॥४
अनाहिताग्नयो विप्रास्त्रयो वेदार्थपारगाः ।
यद् ब्रूयुर्धर्मकामास्ते तज्ज्ञेयं धर्मसाधनम् ॥५
अनेकधर्मशास्त्रज्ञा ऊहापोहविशारदाः ।
वेदाध्ययनसंपन्नाः सप्तैते परिकीर्त्तिताः ॥६
मीमांसाज्ञानतत्त्वज्ञा वेदान्तकुशला द्विजाः ।
एकविंशतिसंख्याताः प्रायश्चित्तं वदन्ति वै ॥७
ब्रह्महा मद्यपः स्तेनो गुरुतल्पग एव च । वे.२.३०.८

---

३०

❀ दे$_3$ द$_1$. ⊙; न$_1$ ग्र$_2$ उ$_1$ व्यासः; ते$_1$ श्रीशिवः; म$_1$ श्रीव्यासः.

१. –a) दे$_3$ अथातः सं–(→अतः परं). –b) दे$_4$ न$_1$ उ$_1$ प्रायश्चित्तं (→प्रायश्चित्त-); दे$_3$ तव, म$_1$ परं, + शुभं (→शुभम्). –c) ब$_3$ °लोकानां (→°विप्राणां). –d) दे$_1$ मुए. मुब. पापानां (→दोषाणां); का$_1$ अनुपत्तये, ब$_1$ अपपन्नये, न$_1$ अनु(त)रत्तये (→अपनुत्तये).

२. –a) उ$_1$ यत्कृत्वा (→अकृत्वा); दे$_6$ -भिहितं (→विहितं). –b) ते$_1$ विहितं (→निन्दितं); दे$_3$ द$_1$ उ$_1$ वा (→च). –c) दे$_{2.4}$ दोषां (→दोषं). –d) ते$_1$ प्रायश्चित्तेन शोधयेत्.

३. –b) दे$_4$ शुचिर् (→तिष्ठेद्); दे$_6$ ब्रह्मणः (→ब्राह्मणः). –c) दे$_4$ यत्र (→यद्); ते$_1$ यदि स्युः (→यद् ब्रूयुर्). –d) दे$_6$ त्वत्, ते$_1$ तु (→तत्); दे$_1$ °चरन् (→°चरेत्); दे$_3$ विद्वांस त * समाचरेत्.

४. –a) का$_1$ वेदार्थे, दे$_6$ विदार्थं, द$_1$ विद्यार्थ-, ग्र$_2$ वेदान्त- (→वेदार्थ-). –b) का$_1$ दे$_4$ °कामाग्निमान् (→कामोऽग्निमान्); ब$_1$ द्विजा, म$_1$ शुचिः (→द्विजः); ग्र$_2$ धार्मिकः साग्निमान् द्विजः. –c) म$_1$ परा (→परो); ते$_1$ एष स्यात् परमो धर्मो, द$_1$ ग्र$_2$ उ$_1$ स तु स्यात् परमो धर्मो. –d) उ$_1$ य (→यम्); दे$_6$ [अ]ग्नि, द$_1$ वा (→[अ]पि); उ$_1$ व्यवस्थितः (→व्यवस्यति) ते$_1$ यमेकोप्यनुवश्यति.

५. द$_1$. ५a–६b ⊙; म$_1$. c ⊙. –a) दे$_4$ म$_1$ समा° (→अना°); ब$_3$ [अ]नमो, दे$_1$[अ]ग्नये, दे$_2$ [अ]प्रयो (→[अ]ग्नयो). –b) ते$_1$ तपो (→त्रयो); म$_1$ * यो वेदा ****. –c) ब$_2$ दे$_{1.4.10}$ न$_1$ मुवें. °कामांस्ते, दे$_3$ °मात्रे तु, ग्र$_2$ °कामांस्तं (→°कामास्ते); उ$_1$ यद्वदेयुर्धर्मका *. –d) दे$_{1.8\text{-}10}$ मुवें. तत् ज्ञानं (→तज्ज्ञेयं); ते$_1$ ब्रह्म° (→धर्म°); का$_1$ °शोधनम् (→°साधनम्); म$_1$ *** धर्मसाधनम्.

६. ब$_1$. ६a–७d ⊙. –a) म$_1$ अथवा (→अनेक-); न$_1$ ग्र$_2$ °शास्त्रज्ञो (ग्र$_2$ °ज्ञ) (→°शास्त्रज्ञा). –b) दे$_{10}$ जपहोम°, ग्र$_2$ उ$_1$ द्विज(उ$_1$ °जा)योग° (→ऊहापोह°); दे$_4$ °विशारदः (→°विशारदाः). –c) दे$_{4.6}$ ते$_1$ °संपन्ना (→°सम्पन्नाः). –d) द$_1$ ग्र$_2$ उ$_1$ सप्त ते, म$_1$ सभ्यास्ते (→सप्तैते); दे$_3$ सदैते पर्षदः स्मृताः.

७. ब$_1$. ⊙. –a) दे$_4$ ग्र$_2$ म$_1$ मीमांस- (→मीमांसा-); का$_1$ ब$_{2.3}$ दे$_{2.4.6}$ द$_1$ ग्र$_2$ उ$_1$ मुब. -न्याय°, ते$_1$ -शास्त्र° (→-ज्ञान°); दे$_3$ °तत्त्वज्ञो (→°तत्त्वज्ञा). –b) का$_1$ ब$_{2.3}$ दे$_{2.6}$ न$_1$ वेदाङ्ग° (→वेदान्त°); दे$_1$ °कुशलाः, दे$_4$ °कुशल- (→°कुशला). –c) दे$_{1.8\text{-}10}$ मुवें. मुए. मुब. °विख्याताः, दे$_6$ °संख्याता, द$_1$ °ंख्याकाः (→°संख्याताः); द$_1$ च, म$_1$ हि (→वै).

८. –a) ब$_{1.3}$ दे$_{2.4.8\text{-}10}$ ते$_1$ ग्र$_2$ म$_1$ मद्यप (→मद्यपः). –b) दे$_4$ स्तेना, दे$_6$ न$_1$ म$_1$ स्तेयो (→स्तेनो); ग्र$_2$ वा (→च). –c) दे$_4$ पंचमः सत्वविज्ञेयः. –d) दे$_3$ यश्च तैः,

वें.२.३०.८ महापातकिनस्त्वेते यश्चैतैः सह संवसेत् ॥८
संवत्सरं तु पतितैः संसर्गं कुरुते तु यः ।
यानशय्यासनैर्नित्यं जानन् वै पतितो भवेत् ॥९
याजनं योनिसंबन्धं तथैवाध्यापनं द्विजः ।
कृत्वा सद्यः पतेज्ज्ञानात् सह भोजनमेव च ॥१०
अविज्ञायाथ यो मोहात् कुर्यादध्यापनं द्विजः ।
संवत्सरेण पतति सहाध्ययनमेव च ॥११
ब्रह्महा द्वादशाब्दानि कुटिं कृत्वा वने वसेत् ।
भैक्षमात्मविशुद्धयर्थं कृत्वा शवशिरोध्वजम् ॥१२
ब्राह्मणावसथान् सर्वान् देवागाराणि वर्जयेत् ।
विनिन्दन् स्वयमात्मानं ब्राह्मणं तं च संस्मरन् ॥१३
असंकल्पितयोग्यानि सप्तागाराणि संविशेत् ।
विधूमे शनकैर्नित्यं व्यङ्गारे भुक्तवज्जने ॥१४
एककालं चरेद् भैक्षं दोषं विख्यापयन् नृणाम् ।
वन्यमूलफलैर्वापि वर्त्तयेद् धैर्यमाश्रितः ॥१५
कपालपाणिः खट्वाङ्गी ब्रह्मचर्यपरायणः ।
पूर्णे तु द्वादशे वर्षे ब्रह्महत्यां व्यपोहति ॥१६
अकामतः कृते पापे प्रायश्चित्तमिदं शुभम् ।
कामतो मरणाच्छुद्धिर्ज्ञेया नान्येन केनचित् ॥१७

---

दे6 यस्त्वेतैः, ते1 न चेतैस्, द1 ग्र2 उ1 यस्सतैस् (→यश्चैतैः); दे1.8.9 ग्र2 मुवें. मुए. मुब. संविशेत्, दे4 संवदेत् (→संवसेत्).

९. –a) द1 म1 उ1 °सरेण (→°सरन्तु); द1 म1 उ1 पतति, मुब. पतितः (→पतितैः). –b) दे4.6 संसर्ग- (→संसर्गं); दे3 च यः, दे6 तु याः, दे8 तु सः (→तु यः). –c) न1 याग°, ग्र2 ध्यान° (→यान°). –d) दे4 जात्मनः, ते1 याजनैः, उ1[अ] जानन् वै (→जानन् वै).

१०. उ1. १०b-१२a ⊙. –a) दे1 याजन्यं, उ1 याजिनं (→याजनं); दे4 °सैनेयं (→°संबन्धं). –b) दे4 तथैव (→तथैवा-); ब3 द1 ग्र2 °ध्यायनं, ते1 °ध्ययनं (→°ध्यापनं); दे4 ते1 ग्र2 द्विजाः (→द्विजः). –c) दे1.8-10 मुवें. मुए. सद्यः कृत्वा (→कृत्वा सद्यः); दे1.8-10 मुवें. मुए. पतत्येन, दे4 पते जन्म, न1 पतेत् ज्ञानं (→पतेज् ज्ञानात्). –d) का1 भोजन (→भोजनं)

११. उ1. ⊙. –a) द1 ग्र2 [अ]पि (→[अ]थ). –b) दे6 ते1 द1 ग्र2 म1 अध्ययनं (→अध्यापनं); दे4 ते1 द्विजाः (→द्विजः). –c) ब2 पतितं, दे10 पतितः (→पतति). –d) दे4 सदा° (→सहा°); का1 ब3 दे1 °ध्यायनं, दे6 °ध्याजनं (→°ध्ययनं); ते1 सहायाध्यायिन एव च.

दे1 पुस्तके १०cd-११ab आवृत्तम्.

१२. उ1. a ⊙. –a) दे6 द्वादशाहा° (→द्वादशाब्दा°). –b) का1 ब1-3 दे2.3.6 ग्र2 कुटीं, उ1 ** (→कुटिं); ग्र2 वसन् (→वसेत्). –c) का1 भैक्षेणात्म°, ब1 भैक्षस्यान्न°, ब2.3 मुब. भिक्षेदात्म°, दे2 भैक्षाण्या°, दे3 भैक्ष्याश्या°, दे4 भैक्ष्यं स्वा°, न1 भैक्षत्वात्म°, ते1 भैक्षं वात्म°, द1 ग्र2 म1 भैक्षं चात्म° (→भैक्षमात्म°); दे1 मुवें. मुए. °विशुध्यर्थं (→°विशुध्यर्थे); दे6 भैक्ष्यास्वातानि शुध्यर्थं. –d) ब1 गावं, ते1 चाथ (→शव-); म1 मुवें. °शिरोर्ध्वजम् (→°शिरोध्वजम्).

१३. ब1. ⊙; का1. cd ⊙. –b) दे3 नैवा°, दे10 देव° (→देवा°); का1 देवागारान् विवर्जयेत्, दे2 देवागारां वि(नि)वर्जयेत्, ते1 देवागाराणि(च) वर्जयेत्. –c) दे4 विनिंद्यात् स्वियमात्मानं, द1 ग्र2 म1 उ1 विनिन्द्य च स्वमात्मानं. –d) दे3.10 द1 ग्र2 म1 उ1 संस्मरेत् (→संस्मरन्); ते1 ब्राह्मणं मनसा स्मरन्.

१४. ब1. ⊙; का1. ab ⊙. –a) ग्र2 °कराणि (→°कल्पित). –b) ते1 होमा° (→सप्ता°). –c) द1 विधूम-, ग्र2 विधूमै (→विधूमे); ते1 विधिरेष स्वकैर्नित्यं. –d) का1 °वज्जले, ब2 दे4.6-10 न1 °वर्जने, ब3 ते1 द1 ग्र2 म1 उ1 °वर्ज्जिते (→°वज्जने).

१५. ब1 द1 ग्र2 म1. ⊙. –a) ब3 °काले, दे10 °काल (→°कालं); मुब. * रेद् (→चरेद्); दे1.4 भैक्ष्यं (→भैक्षं). –b) दे1.4 उ1 विज्ञापयन् (उ1 °य), का1 न1 विख्यापयेत् (→विख्यापयन्). –c) दे3 धान्य°, उ1 वनै° (→वन्य°). –d) का1 दे2 वर्जयेद् (→वर्त्तयेद्); का1 दे2 धर्मं, दे1.8.9 मुवें. मुए. वै स, दे10 देयं (→धैर्यं).

१६. ब1 द1 ग्र2 म1. ⊙. –a) दे6 °पाणिं (→°पाणिः). –c) दे4 पूर्वे (→पूर्णे). –d) दे8 °हत्या(?) (→°हत्यां).

१७. ब1 द1 ग्र2 म1. ⊙. –a) दे4 अकामतत् कृते पापे. –b) ते1 उ1 स्मृतं (→शुभं). –c) दे10 कामना (→कामतो); दे4 मरणं (→मरणात्); दे6 बुद्धिः (→शुद्धिर्). –d) दे1 ज्ञेयो, दे3 रतो, ते1 भूयान् (→ज्ञेया); उ1 नान्येति (→नान्येन); न1 ज्ञाना नान्येककर्मणा.

कुर्यादनशनं वाऽथ भृगोः पतनमेव वा ।
ज्वलन्तं वा विशेदग्निं जलं वा प्रविशेत् स्वयम् ॥१८
ब्राह्मणार्थे गवार्थे वा सम्यक् प्राणान् परित्यजेत् ।
ब्रह्महत्यापनोदार्थमन्तरा वा मृतस्य तु ॥१९
दीर्घामयान्वितं विप्रं कृत्वानामयमेव तु ।
दत्त्वा चान्नं स दुर्भिक्षे ब्रह्महत्यां व्यपोहति ॥२०
अश्वमेधावभृथके स्नात्वा वा शुध्यते द्विजः ।
सर्वस्वं वा वेदविदे ब्राह्मणाय प्रदाय तु ॥२१

सरस्वत्यास्त्वरुणया संगमे लोकविश्रुते ।
शुध्येत् त्रिषवणस्नानात् त्रिरात्रोपोषितो द्विजः ॥२२
गत्वा रामेश्वरं पुण्यं स्नात्वा चैव महोदधौ ।
ब्रह्मचर्यादिभिर्युक्तो दृष्ट्वा रुद्रं विमुच्यते ॥२३
कपालमोचनं नाम तीर्थं देवस्य शूलिनः ।
स्नात्वाऽभ्यर्च्य पितॄन् भक्त्या ब्रह्महत्यां व्यपोहति ॥२४
यत्र देवादिदेवेन भैरवेणामितौजसा ।
कपालं स्थापितं पूर्वं ब्रह्मणः परमेष्ठिनः ॥२५ वें२.३०.२५

---

१८. ब1. ⊙. –a) दे10 चाच, ते1 चार्य, ग्र2 वाद्य (→वाथ). –b) दे6.10 च (→वा). –c) दे1.8-10 मुए. मुब. ज्वलितं (→ज्वलन्तं); दे3 वह्निं (→अग्नि). –d) दे3 वाथ (→वा प्र-).

१९. –a) ते1 ब्राह्मणोर्थे (→ब्राह्मणार्थे); उ1 गवार्थे ब्राह्मणार्थे वा. –b) द1 ग्र2 म1 उ1 सद्यः (→सम्यक्). –c) म1 महा° (→ब्रह्म°); उ1 °दार्थं (→°दार्थं). –d) ब1 चामृ°, न1 द1 म1 वा वृ° (→वा मृ°); ब1 ते1 च (→तु); दे3 एतदेन व्रतं चरेत्, ग्र2 अन्तराय वृतस्य तु.

२०. –a) का1 ब1.2 दे1-4.6 द1 म1 मुवें. मुए. मुब. दीर्घामयाविनं (दे6 °नां), ब3 न1 दीर्घमा (न1 °स)याविनं, दे8.9 दीर्घामयाचिनं, ते1 ग्र2 दीर्घामयावि (ग्र2 °यि) लं (ग्र2 °नं), उ1 दीर्घात्मयामनि (→दीर्घामयान्वितं). –b) दे4 -मानुषम्, दे10 -नामायं (?), न1 -नमयं (→-नामयं); दे1.8-10 ते1 मुवें. मुए. मुब. वा (→तु). –c) दे1 चा *, दे6 चन्ने (→चान्नं); का1 ब2 दे1.3.4.8.9 न1 द1 ग्र2 उ1 मुवें. मुए. मुब. सु-, दे6 ते1 च (→स); दे1.3.8-10 द1 ग्र2 उ1 मुवें. मुए. मुब. विदुषे, ते1 विदुषां (→दुर्भिक्षे); म1 कृत्वा चान्नं परिषदे. –d) म1 °हत्यामयो°, मुवें. °हत्या व्यपो° (?) (→°हत्यां व्यपो°).

२१. –a) ब1.3 मुवें. मुए. °भृतके (→°भृथके). –b) उ1 स्ना(नं)त्वा (→स्नात्वा); दे1.8.9 मुवें. मुए. मुब. वै, ग्र2 * (→वा); ब2.3 शुध्यति (→शुध्यते); ब1 जनः (→द्विजः); दे10 स्नात्वा शुद्धानते द्विजः, ते1 स्नात्वा विशुद्ध्यते द्विजः. –c) ब1 सर्वस्व, ग्र2 सर्वं स्वं (→सर्वस्वं); ब1 * (→वा); दे4 °विद्भ्यो (→°विदे); दे10 सर्वस्वं वेद विविदे. –d) दे4 ब्राह्मणेभ्यः (→ब्राह्मणाय); दे3 निवेदयेत्, दे4.6 ते1 द1 ग्र2 म1 उ1 प्रदापयेत्, दे10 महाय च (→प्रदाय तु); दे1.8-10 मुवें. मुए. मुब. च (→तु).

२२. –a) ते1 सरस्वत्यास्तु मरणे, ग्र2 सरस्वत्य-स्वरुणयां. –b) दे1 संगमो, दे6 संगेते, ते1 यामुने (→सङ्गमे); न1 *क° (→लोक°). –c) ब1 दे6 शुद्धेत्, दे10 अब्देत् (→शुध्येत्); दे1.6 -वणा-, दे3.4 ग्र2 उ1 -वणं (→-वण-); ब1 न1 -स्नात, दे3 -स्नातस्, दे4 -स्नातास्, ते1 -स्नातः, ग्र2 स्नानं (→-स्नानात्). –d) दे4 त्रिसन्ध्यो-, म1 ब्राह्मणः (→त्रिरात्रो-).

२३. –a) ते1 दृष्ट्वा (→गत्वा); ब1 गणेश्वरं, दे10 सोमेश्वरं (→रामेश्वरं). –b) ते1 महोदधि, म1 महोदये (→महोदधौ); ब1 ज्ञात्वा देवं महादधौ. –c) ब1 दे6 ब्रह्महत्या° (→ब्रह्मचर्या°). –d) दे10 स्पृष्ट्वा (→दृष्ट्वा); ब1 रुपं, ते1 पापैः (→रुद्रं); दे1.8-10 मुवें. मुए. मुब. विमोचयेत्, ते1 प्रमुच्यते (→विमुच्यते).

२४. –a) दे2 कपालं (→कपाल-). –b) दे4 देव-, दे10 तीर्थ (→तीर्थं); दे2 दिवस्य (→देवस्य). –c) दे3 [अ]भ्यर्च (→[अ]भ्यर्च्य); दे1.8-10 द1 ग्र2 उ1 मुवें. मुए. मुब. पितृन् देवान्, म1 महादेवं (→पितृन् भक्त्या). –d) दे8 द1 °हत्या (→°हत्यां).

ab चरणानन्तरं न1 पुस्तके अधिकम्—
* सर्वस्वं वा वेदविदे ब्राह्मणाय प्रदाय तु । ( = २१cd).

२५. –a) म1 एक (→यत्र); ब2 देवाति-, दे1.8-10 ग्र2 मुवें. मुए. मुब. देवाधि- (→देवादि-); द1 ग्र2 उ1 -देवस्य (→-देवेन). –b) ब1 शङ्करेणामि-, ब2 भैरवेण मि-, दे1.8-10 भैरवेणह (दे8 °णाह), ग्र2 भैरवस्यामि- (→भैरवेणामि-); ब1 -जसां, दे6.10 -जसः (→-जसा). –c) द1 कपाल (→कपालं); द1 ग्र2 उ1 सर्वं (→पूर्वं).

बं.२.३०.२६ समभ्यर्च्य महादेवं तत्र भैरवरूपिणम् । तर्पयित्वा पितॄन् स्नात्वा मुच्यते ब्रह्महत्यया ।।२६

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायामुपरिविभागे त्रिंशोऽध्यायः ।।३०।।

# ३१

ऋषय ऊचुः ।*

कथं देवेन रुद्रेण शंकरेणामितौजसा ।
कपालं ब्रह्मणः पूर्वं स्थापितं देहजं भुवि ।।१

सूत उवाच ।*

शृणुध्वमृषयः पुण्यां कथां पापप्रणाशनीम् ।
माहात्म्यं देवदेवस्य महादेवस्य धीमतः ।।२

पुरा पितामहं देवं मेरुशृङ्गे महर्षयः ।
प्रोचुः प्रणम्य लोकादिं किमेकं तत्त्वमव्ययम् ।।३

स मायया महेशस्य मोहितो लोकसंभवः ।
अविज्ञाय परं भावं स्वात्मानं प्राह धर्षिणम् ।।४

अहं धाता जगद्योनिः स्वयंभूरेक ईश्वरः ।
अनादिमत्परं ब्रह्म मामभ्यर्च्य विमुच्यते ।।५

---

२६. –a) दे1 महादेव (→महादेवं). –b) दे10 तं च, ते1 नव (→तत्र). –c) दे6 तर्प्ययित्वा (→तर्पयित्वा).

**पुष्पिका**—[दे6 द1 पुस्तके अध्यायसमाप्तिर्नास्ति]

**पुराणनाम**—का1 म1 इति श्रीकू(का1 कौ)र्मपुराणे उपरिभागे, ब1 इति कौर्मे, ब2 दे3 इति कूर्मपुराणे, ब3 दे2 इति कू(दे2 कौ)र्मपुराणे उपरिभागे, दे1.4.8-10 इति श्रीकूर्मपुराणे, न1 इति श्रीकौर्मे, ते1 इत्यादिमहापुराणे श्रीकौर्मे उपरिभागे व्यासगीतासु, ग्र2 इति श्रीकूर्मपुराणे उत्तरभागे व्यासगीतासुपनिषत्सु, उ1 श्री इति श्रीकूर्मपुराणे उत्तरभागे व्यासगीतासु, मुवें. इति श्रीकूर्मपुराणे उत्तरार्द्धे, मुए. इति श्रीकूर्मपुराणे उपविभागे, मुब. इति श्रीकौर्मे महापुराणे उपरिभागे ब्रह्मविद्यायां. **अध्यायनाम**—का1 ब1-3 दे2-4 न1 ते1 ग्र2 म1 उ1. ⊙; दे1.8-10 मुए. ब्रह्महत्याप्रायश्चित्ते, मुवें. ब्रह्महत्याप्रायश्चित्तवर्णनं नाम, मुब. प्रायश्चित्तकथने. **अध्यायसंख्या**—ब2. ⊙; का1 एकोनत्रिंशोऽध्यायः ।।२९।।, ब1.3 दे2 ते1 एकोनत्रिंशोऽध्यायः, दे1.4 मुवें. मुब. त्रिंशोऽध्यायः ।।३०।।, दे3.8-10 ग्र2 म1 मुए. त्रिंशोऽध्यायः, न1 अशीतितमोऽध्यायः, उ1 त्रिंशोऽध्यायः ।। श्री ।।.

## ३१

* दे6. द1.⊙; दे1 ऋषय ऊचुः; दे2 ऋषय उवाच; ते1 श्रीशिवः, +ऋषयः; ग्र2 ऋषया ऊचुः; म1 उ1 ऋषयः.

१. दे2.6.⊙. –a) उ1 अथ (→कथं); द1 ग्र2 म1 उ1 रुद्रेण देवेन (→देवेन रुद्रेण). –b) का1 ब3 दे1.4.8-10 ते1 म1 मुवें. मुए. मुब. -ति तेजसा (→-मितौजसा). –c) दे10 द1 ब्र(द1 ब्रा)ह्मणः (दे10 °णाः), ते1 स्थापितं (→ब्रह्मणः). –d) द1 ग्र2 उ1 परमेष्ठिनं (ग्र2 °नः), म1 ब्रह्मजं भुवि (→देहजं भुवि).

* दे2. ⊙; का1 ब1-3 दे4.6 मुब. व्यास उवाच; न1 द1 ग्र2 उ1 व्यासः; ते1 सूतः; म1 श्रीव्यासः.

२. –a) ब2 मुनयः (→ऋषयः); ते1 ग्र2 सर्वे (→पुण्यां). –b) दे3 पापं (→पाप-); का1 ब1-3 दे1.3.4.6.10 न1 ते1 ग्र2 म1 मुवें. मुए. मुब. °प्रणाशिनीम् (दे6 °शनं) (→°प्रणाशनीं). –c) ग्र2 माहात्मा, उ1 महात्म्यं (→माहात्म्यं). –d) दे4 ग्र2 उ1 शूलिनः (→धीमतः).

३. –a) ब1 पितामहा (→पितामहं). –b) द1 ग्र2 म1 उ1 मेरुपृष्ठे (→मेरुशृङ्गे). –c) ते1 ऊचुः (→प्रोचुः); का1 दे4.6 द1 लोकादि, दे3 लोकेस्मिन् (→लोकादिं).

४. –a) उ1 मामया (→मायया); दे10 संकरस्या (→महेशस्य). –b) द1 उ1 °शंकरः (→°सम्भवः). –c) दे1 ग्र2 अविज्ञाया (→अविज्ञाय); ग्र2 करं भावं (→परं भावं). –d) ब2 आत्मानं, न1 स्वात्माहं (→स्वात्मानं); ब1.2 दे4 न1 द1 ग्र2 म1 चर्षिणां (ग्र2 °णं), दे2.6 ते1 वर्षिणं (दे2 °णी), दे3 चर्षयः (→धर्षिणम्); उ1 स्वमात्मानं प्रचक्षिणां.

५. –a) दे1 अधं (→अहं); दे1 उ1*ता (→धाता); दे2 लगद्योनिः, ग्र2 जगद्योनिं (→जगद्योनिः). –b) दे1.8-10 मुए. स्वयंभूरुद्र, ग्र2 स्वयं*रेकम् (→स्वयंभूरेक). –d) दे2 मामस्यर्च्य, दे4 समभ्यर्च्य, दे6 मामभ्यर्च्यादि, दे10 मामभ्यर्चं, ग्र2 मामनर्च्य (→मामभ्यर्च्य); ग्र2 न मुच्यते (→विमुच्यते).

अहं हि सर्वदेवानां प्रवर्त्तकनिवर्त्तकः ।
न विद्यते चाभ्यधिको मत्तो लोकेषु कश्चन ।।६
तस्यैवं मन्यमानस्य जज्ञे नारायणांशजः ।
प्रोवाच प्रहसन् वाक्यं रोषताम्रविलोचनः ।।७
किं कारणमिदं ब्रह्मन् वर्त्तते तव सांप्रतम् ।
अज्ञानयोगयुक्तस्य न त्वेतदुचितं तव ।।८
अहं धाता हि लोकानां यज्ञो नारायणः प्रभुः ।
न मामृतेऽस्य जगतो जीवनं सर्वदा क्वचित् ।।९
अहमेव परं ज्योतिरहमेव परा गतिः ।
मत्प्रेरितेन भवता सृष्टं भुवनमण्डलम् ।।१०
एवं विवदतोर्मोहात् परस्परजयैषिणोः ।
आजग्मुर्यत्र तौ देवौ वेदाश्चत्वार एव हि ।।११
अन्वीक्ष्य देवं ब्रह्माणं यज्ञात्मानं च संस्थितम् ।
प्रोचुः संविग्नहृदया याथात्म्यं परमेष्ठिनः ।।१२

ऋग्वेद उवाच ।❀

यस्यान्तःस्थानि भूतानि यस्मात्सर्वं प्रवर्त्तते ।
यदाहुस्तत्परं तत्त्वं स देवः स्यान्महेश्वरः ।।१३　　वें.२.३१.१३

---

६. –a) दे$_{1.8.9}$ देवानामेकः, दे$_{3}$ ते$_{1}$ सर्ववेदानां, दे$_{10}$ देवता(ना)मेकः (→सर्वदेवानां). –b) का$_{1}$ °निवर्त्तकं (→°निवर्त्तकः); ब$_{2}$ वेदानाञ्च प्रवर्त्तकः. –c) उ$_{1}$ विद्येते (→विद्यते); ब$_{2}$ दे$_{6-10}$ न$_{1}$ उ$_{1}$ वा(दे$_{10}$ चा) ध्यधिको, ते$_{1}$ शा(चा)भ्यधिको (→चाभ्यधिको). –d) दे$_{3}$ मर्त्य, ते$_{1}$ मन्ये (→मत्तो).

७. –a) दे$_{4}$ तस्यैव (→तस्यैवं); दे$_{2}$ मन्यमनस्य (→मन्यमानस्य). –b) का$_{1}$ यज्ञे, दे$_{4}$ ते$_{1}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ मुब. यज्ञो (→जज्ञे); दे$_{1.2.8-10}$ मुए. नारायाणा (दे$_{2}$ °ण)द्विभुः (दे$_{2}$ शिजः), दे$_{6}$ नारायणांगजः, द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ नारायणांशकः (→नारायणांशजः). –d) दे$_{1.8-10}$ मुवें. मुए. रोषितोऽयं (दे$_{10}$ °तायस्), ग्र$_{2}$ रोषस्ताम्र- (→रोषताम्र-); दे$_{1.8-10}$ त्रिलोचनः, न$_{1}$ -विलोचनाः (→-विलोचनः).

८. –a) दे$_{2}$ कारणाम् (→कारणम्); ग्र$_{2}$ ब्रह्मा (→ब्रह्मन्); म$_{1}$ किं कारणं मदन्यद्वै. –b) ते$_{1}$ व्रतं ते, ग्र$_{2}$ वर्त्तन्ते (→वर्त्तते); ते$_{1}$ वद (→तव). –c) का$_{1}$ यत् ज्ञान-, ब$_{1}$ दे$_{3.10}$ ते$_{1}$ अज्ञानं (→अज्ञान-); ब$_{3}$ °यो*युक्तस्य, दे$_{6}$ °योगमुक्तस्य (→°योगयुक्तस्य). –d) ब$_{1}$ न त्वे तत्र चितन्तव, ब$_{3}$ न त्वे तत्वचितं तव, दे$_{1.8-10}$ मुवें. मुए. न त्वेतत्त्वयि विद्यते, दे$_{6}$ न चैतदुचितं तव.

९. दे$_{1.8-10}$. ९c-१०b ⊙. –a) ब$_{1}$ दे$_{4.6}$ धातादि-, दे$_{1.8-10}$ मुवें. मुए. कर्त्तादि-, दे$_{3}$ ते$_{1}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ कर्त्ता हि (→धाता हि). –b) दे$_{1.8-10}$ मुवें. जज्ञे, दे$_{2.6}$ जज्ञो, मुए. यज्ञे (→यज्ञो); दे$_{1.8.9}$ मुवें. मुए. नारायणात्, दे$_{4.6}$ नारायणं (→नारायणः); दे$_{1.8-10}$ मुवें. मुए. प्रभोः (→प्रभुः). –c) दे$_{6}$ मामृतस्य (→मामृतेऽस्य); ग्र$_{2}$ जागन्तो (→जगतो). –d) दे$_{3.4}$ न$_{1}$ ते$_{1}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ संभवेत्, मुवें. सर्वथा (→सर्वदा); ब$_{1}$ जगत् (→क्वचित्).

१०. दे$_{1.8-10}$ ab ⊙ (द्र. ९ पा. वि.). –b) का$_{1}$ परमेव (→अहमेव); का$_{1}$ न$_{1}$ परां, उ$_{1}$ परं (→परा). –c) न$_{1}$ उत्, द$_{1}$ ग्र$_{2}$ यत् (→मत्); ग्र$_{2}$ विवता (?), उ$_{1}$ भिवुदा (?) (→भवता). –d) दे$_{6}$ सृष्ट-, न$_{1}$ घृष्टं, द$_{1}$ स्पृष्टं (→सृष्टं); दे$_{1}$ भवन° (→भुवन°).

११. –a) का$_{1}$ ब$_{3}$ दे$_{4.6.10}$ म$_{1}$ विवदतो (म$_{1}$ °तौर्) (→विवदतोर्); दे$_{6}$ मोहान् (→मोहात्); ग्र$_{2}$ उ$_{1}$ एवं हि वदतो मो (उ$_{1}$ °र्मो) हात्. –b) ब$_{1}$ °वधेषिणोः, ब$_{3}$ दे$_{10}$ ग्र$_{2}$ म$_{1}$ °जयैषिणौ (ब$_{3}$ °णः, ग्र$_{2}$ °णाः) (→°जयैषिणोः). –c) दे$_{6}$ म$_{1}$ आजग्मुस् (→आजग्मुर्); ग्र$_{2}$ ता (→तौ). –d) ब$_{3}$ देवाश्चत्वार, दे$_{6}$ देवाश्चत्वर, द$_{1}$ वेदश्चत्वार (→वेदाश्चत्वार); का$_{1}$ ब$_{1-3}$ दे$_{2.6}$ च (→हि); म$_{1}$ वेदाश्च रविसंनिभौ.

१२. –a) का$_{1}$ ब$_{1-3}$ दे$_{4.6}$ निरीक्ष्य, दे$_{2}$ निरीक्ष्या (→अन्वीक्ष्य). –b) दे$_{6}$ जज्ञात्माणं च, मुब. ब्रह्मात्मानञ्च (→यज्ञात्मानं च). –c) ब$_{2}$ च यज्ञ°, दे$_{4}$ संभिन्न°(→संविग्न°); ग्र$_{2}$ °हृ*या, दे$_{10}$ °हृदयो, द$_{1}$ हृदयाः (→°हृदया); ते$_{1}$ संविग्नहृदयाः प्रोचुः. –d) का$_{1}$ दे$_{2}$ याथार्थ्यं, ब$_{2.3}$ न$_{1}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ माहात्म्यं, दे$_{3}$ तत्वं यत् (→याथात्म्यं); दे$_{1}$ परमेष्टिनः, ग्र$_{2}$ त्रिपुरद्विषः, + परमेष्ठिनः (→परमेष्ठिनः).

❀ दे$_{10}$. ⊙; दे$_{9}$ ऋग्वेद उ.; न$_{1}$ ते$_{1}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ ऋग्वेदः.

१३. म$_{1}$. ⊙. –a) ब$_{1}$ दे$_{1.4.8.9}$ यस्यान्तस्थानि, दे$_{6}$ यस्यांतश्चानि, दे$_{10}$ ऋग्वेदायति, ते$_{1}$ उ$_{1}$ यस्यान्ते स्थानि (→यस्यान्तः स्थानि). –b) ब$_{2}$ प्रचक्षते, दे$_{4}$ च वर्त्तते (→प्रवर्त्तते). –c) का$_{1}$ ब$_{2.3}$ दे$_{6}$ यदभूत्तत्, ब$_{1}$ यदाहुतत्, दे$_{2}$ यदाभूत्तत्, ते$_{1}$ यतो ह्यभूत्, ग्र$_{2}$ यदाहंस्तत् (→यदाहुस्तत्); दे$_{1}$ *रंतत्त्वं (→परं तत्त्वं). –d) ब$_{1}$ दे$_{6.9.10}$ द$_{1}$ देव- (→देवः).

यजुर्वेद उवाच ।❀

वें.२.३१.१४ यो यज्ञैरखिलैरीशो योगेन च समर्च्यते ।
यमाहुरीश्वरं देवं स देवः स्यात् पिनाकधृक् ॥१४

सामवेद उवाच ।❀

येनेदं भ्राम्यते चक्रं यदाकाशान्तरं शिवम् ।
योगिभिर्विद्यते तत्त्वं महादेवः स शंकरः ॥१५

अथर्ववेद उवाच ।❀

यं प्रपश्यन्ति योगेशं यतन्तो यतयः परम् ।
महेशं पुरुषं रुद्रं स देवो भगवान् भवः ॥१६

एवं स भगवान् ब्रह्मा वेदानामीरितं शुभम् ।
श्रुत्वाह प्रहसन् वाक्यं विश्वात्माऽपि विमोहितः ॥१७

कथं तत्परमं ब्रह्म सर्वसङ्गविवर्जितम् ।
रमते भार्यया सार्द्धं प्रमथैश्चातिगर्वितैः ॥१८

इतीरितेऽथ भगवान् प्रणवात्मा सनातनः ।
अमूर्त्तो मूर्तिमान् भूत्वा वचः प्राह पितामहम् ॥१९

प्रणव उवाच ।❀

न ह्येष भगवान् पत्न्या स्वात्मनो व्यतिरिक्तया ।
कदाचिद् रमते रुद्रस्तादृशो हि महेश्वरः ॥२०

---

❀ दे1 ययुरुवाच; दे6 यजुर्वेद उवाच; दे8.10 यजुरुवाच; न1 ते1 द1 ग्र2 म1 उ1 यजुर्वेदः.

१४. –a) दे4 जज्ञै° (→यज्ञै°); ब2 °वाततै°, न1 °रखिलो° (→°रखिलै°); ते1 °याग़ैर् (→°रीशो). –b) म1 येन चापि (→योगेन च); दे1.9.10 समभ्यसेत्, दे6 समंन्यते, न1 समर्प्यते, ग्र2 समुच्यते (→समर्च्यते). –c) न1 तमाहुर्, द1 य आहुर् (→यमाहुर्); का1 देवः (→देवं). –d) दे1.4.6 ग्र2 देव- (दे6 वा), दे10 एव (→देवः); का ब2.3 दे2 मुब. महेश्वरः (→पिनाकधृक्).

❀ दे4. ⊙; दे1.8-10 साम उवाच; दे6 सामवेद उवाच; न1 ते1 ग्र2 म1 उ1 सामवेदः; द1 सामवेदः उवाच.

१५. –a) दे6 येनेदे, दे9 ये चक्रं, + येनेदं, ग्र2 एनेदं (→येनेदं); दे1.4.8-10 मुवें. मुए. मुब. विश्वं (→चक्रं). –b) दे6 पद्म° (→यदा°); दे2 °काशान्तरां. न1 °शांतरसं, ते1 °काशात्परं (→°काशान्तरं); दे1 शिवः, दे2 शिवां (→शिवम्). –c) ब1 दे4 न1 ग्र2 उ1 मुवें. वेद्यते, दे1.9-10 मुए. मुब. चिन्त्यते, ते1 बुध्यते, द1 वंद्यते (→विद्यते); का1 योगि * र्न भिद्यते तत्त्वं. –d) दे10 शंकरैः (→शङ्करः).

❀ दे1.3.8-10 मुए. अथर्व उवाच ; न1 अथर्वन; ते1 ग्र2 अथर्वण देवः; द1 म1 उ1 अथर्ववेदः.

१६. दे6. १६c–१८d ⊙. –a) दे6 जं (→यं); दे1.3.8-10 न1 ते1 द1 म1 उ1 मुवें. मुए. मुब. देवेशं (→योगेशं). –b) का1 पर्वतो, दे1.8.9 मुवें. मुए. मुब. यजन्ते, दे3.6.10 यतं ते (→यतंतो); दे4 यततः (→यतयः). –c) का1 ब2.3 दे2 रौद्रं (→रुद्रं). ग्र2 cd यन्तु पश्यन्यि***** न्तो यतयः परम्.

दे4. १६ श्लोकात्परमधिकम्-व्यास उवाच

१७. दे6. ⊙. –a) ग्र2 एकः (→एवं). –b) ब3 देवाना° (→वेदाना°); द1 °मीशितं, उ1 °मीरिदं (→°मीरितं). –c) दे1.3.4.8-10 न1 ते1 द1 म1 उ1 मुवें. मुए. मुब. श्रु(उ1 शु)त्वा विहस्य विश्वात्मा, ग्र2 श्रुत्वा * हस्य विश्वात्मा. –d) दे1.8.9 मुवें. मुए. मुब. ततश्चाह, दे3 वेदांश्चाह, दे4 यस्तानाह, न1 द1 म1 यज्ञश्चाहं, (न1 °त, म1 °पि), ते1 प्रजगाद, ग्र2 उ1 यज्ञञ्चाह (→विश्वात्मापि); दे10 ततश्चातीव गर्वितः.

१७ श्लोकात्परं दे1.4.8.9 अधिकम्—
दे1.4 पितामह उवाच; दे8.9 पितामह उ.

१८. दे6.10. ⊙. –a) ब1 अहं (→कथं); ग्र2 यत् (→तत्); दे4 ब्रह्मान् (→ब्रह्म). –b) ब2 दे2 ते1 विवर्जितः (दे2°ता) (→विवर्जितम्); ग्र2 सर्वसंभववर्जितः. –d) दे4 प्रथम-, उ1 मप्रथै- (→प्रमथै-); का1 ब2.3 °श्चापि, दे2 -श्वापि (→-श्चाति); का1 दे4 द1 गर्वितः, दे1.8.9 मुए. मुब. वर्द्धितं (→-गर्वितैः); ते1 सार्धं प्रमथैश्च समर्च्यते.

१९. –a) दे3 इतीरिते हि, ते1 ग्र2 इतीरितेन (→इतीरितेऽथ); दे6 भगवन् (→भगवान्). –b) ब2 समाहितः (→सनातनः). –c) दे6 अमूर्त्ता, ते1 अमृतो, उ1 आमूर्त्ते (→अमूर्त्तो). –d) का1 ब2.3 दे2.6 न1 हिता (दे6 °तां) वहं (दे2 °हां), ब1 हिताहितं (→पितामहम्).

❀ का1 ब1-3 दे2.6 द1 ग्र2 उ1. ⊙; दे4 प्रणवोवाच; दे10 प्रणव ऊनुः; न1 ते1 म1 प्रणवः.

२०. दे1.8-10 मुए. २०b–२१a ⊙. –a) दे10 स्तेष (→ह्येष); दे1.3.8-10 मुवें. मुए. मुब. ईशः, दे4 ते1 नन्यः, म1 भक्त्या (→पत्न्या). –b) का1 रचानो, दे6 स्वात्मानो, उ1 स्वात्मन्यः (→स्वात्मनो); दे2 व्यतिरिक्तया, ते1 व्यतिरिक्तता

अयं स भगवानीशः स्वयंज्योतिः सनातनः ।
स्वानन्दभूता कथिता देवी नागन्तुका शिवा ।।२१
इत्येवमुक्तेऽपि तदा यज्ञमूर्त्तेरजस्य च ।
नाज्ञानमगमन्नाशमीश्वरस्यैव मायया ।।२२
तदन्तरे महाज्योतिर्विरिञ्चो विश्वभावनः ।
प्रापश्यदद्भुतं दिव्यं पूरयन् गगनान्तरम् ।।२३
तन्मध्यसंस्थं विमलं मण्डलं तेजसोज्ज्वलम् ।
व्योममध्यगतं दिव्यं प्रादुरासीद् द्विजोत्तमाः ।।२४
स दृष्ट्वा वदनं दिव्यं मूर्ध्नि लोकपितामहः ।
तेन तन्मण्डलं घोरमालोकयदनिन्दितम् ।।२५
प्रजज्वालातिकोपेन ब्रह्मणः पञ्चमं शिरः ।
क्षणाददृश्यत महान् पुरुषो नीललोहितः ।।२६
त्रिशूलपिङ्गलो देवो नागयज्ञोपवीतवान् ।
तं प्राह भगवान् ब्रह्मा शंकरं नीललोहितम् ।।२७
जानामि भवतः पूर्वं ललाटादेव शंकर ।
प्रादुर्भावं महेशान मामेव शरणं व्रज ।।२८ वें.२.३१.२८

---

(→व्यतिरिक्तया). –c) ब3 कयाचिद्रमते, द1 उ1 कथंचिद्रमते, ग्र2 म1 कथञ्चिद्र (ग्र2 °त्र)मते (→कदाचिद्रमते). –d) द1 तादृशोपि, उ1 तादृ*हि (→तादृशो हि).

२१. दे1.8-10 मुए. a ⊙ (द्र. २० पा. वि). –a) ते1 अहं, ग्र2 अथस्, म1 स्वयं (→अयं); म1 हि (→स). –b) दे6 ज्योति-, ग्र2 जोतिः (→ज्योतिः). –c) का1 ब2 दे2 ते1 आनन्द-, द1 सानन्द- (→स्वानन्द-); ते1 -भूतो (→-भूता); न1 ते1 कथितो (ना1 °तां) (→कथिता). –d) ब1 उ1 देवा (→देवी) का1 ब1 दे3.4.6 न1 म1 नागंतु (का1 °त) को (का1 °क), दे1.8-10 द1 मुवें. मुए. आ (दे10 मा, द1 चा) गंतुकी (मुवें. मुए °का) (→नागंतुका); ते1 देवानां चातिथिश्शिवः.

२२. दे10. २२c–२३b ⊙. –a) ब2.3 दे6 उक्तोऽपि, दे2 उत्कोऽपि (→उक्तेऽपि); दे1 तया, दे4 तथा (→तदा). –b) दे4 ते1 यज्ञमूर्तं (ते1 °र्ति) (→यज्ञमूर्त्ते-); ते1 -रतस्य, उ1 -रनस्य (→-रजस्य). –c) दे4 नाग्यान°, द1 नात्मान° (→नाज्ञान°); दे3 तावद्, द1 नीशम्, ग्र2 नाथम् (→नाशम्); उ1 नरज्ञान * गमनाशम्. –d) ब2 दे1.2.6.9 न1 ईश्वरस्येव (→ईश्वरस्यैव). –cd) ते1 ज्ञानाज्ञानमयासन्ना तावदीश्वर(व)-मायया.

२३. दे10. ab ⊙. –a) म1 त्वदन्तरे (→तदन्तरे); दे1 महाज्यो * र्, दे4 न1 ग्र2 म1 महज्यो (दे4 °द्यो)तिर्, ते1 ब्रहिज्योतिर् (→महाज्योतिर्). –b) दे1 विरंची, दे3 विरिंचेर् (→विरिञ्चो); दे3 °भावनात् (→°भावनः). –c) ब1 दे3 प्रापश्य (दे3 °श्य)तादभुतं, दे1.8.9 मुवें. मुए. मुब. प्रादर्शदद्भुतं, दे6 प्रापस्यदद्भुतं, दे10 प्रादर्श(य)तद्भुतं, ते1 अपश्यतादभुतं, ग्र2 प्रापश्यमद्भुतन् (→प्रापश्यदद्भुतं); दे4 प्रपश्यदशतादभूतं. –d) ब1 पूरयद्, दे3 पूरितं, दे4 द1 ग्र2 म1 उ1 पुरुषं (→पूरयन्); दे2 दशनांतरं, दे3.4 द1 ग्र2 म1 गगनान्तरे (→गगनान्तरम्).

२४. दे6. २४d-२५a ⊙. –a) दे1.8-10 मुवें. मुए. मुब. तन्मध्यसंस्थि- (→तन्मध्यसंस्थं); दे1.8-10 मुवें. मुए. मुब. तञ्जोतिर् (→विमलं); द1 ग्र2 म1 उ1 तन्मध्ये संस्थितं दिव्यं. –b) द1 ग्र2 म1 उ1 विमलं (→मंडलं); का1 ब1 दे2.6 तेजसा (ब1 °सो) चलं, ते1 विमलोत्तरम् (→तेजसोज्ज्वलम्). –c) दे1.8-10 मुए. शंभुं, दे3 न1 ग्र2 म1 उ1 शुभ्रं, ते1 द1 शुद्धं (→दिव्यं). –d) दे10 प्र(?)दुरासीद् (→प्रादुरासीद्); म1 महेश्वरः (→द्विजोत्तमाः).

२५. म1. २५a-२६b ⊙; दे6. a ⊙. –a) दे3 ग्र2 -संस्पृष्ट्वा, न1 स सृष्ट्वा (→स दृष्ट्वा); न1 वशनं (→वदनं); का1 न1 मुवें. मुए. मुब. दिव्य (?) (→दिव्यं); उ1 संस्पृष्ट्वा-रवदन्दिव्यं. –b) दे1.8-10 मुए. मुब. ऊर्ध्वं (→मूर्ध्नि); दे6 ग्र2 °पितामह (ग्र2 °हं) (→°पितामहः). –c) दे1.8-10 मुवें. मुए. मुब. तैजसं, दे3 तेजसो, ग्र2 तेनेतन् (→तेन तन्).

२६. म1. ab ⊙. –a) दे2 प्रजाज्वालाति-, दे6 प्रजज्वालाय, न1 प्रज्वालनाति- (→प्रजज्वालाति-); उ1 °लोपेन (→°कोपेन). –b) का1 उ1 पञ्चमः (→पञ्चमं); दे6 शिवं (→शिरः); दे3 ब्रह्मणस्तच्छिरो महत्. –c) दे1.8-10 मुवें. मुए. मुब. क्षणादपश्यत्स, दे4 क्षणादपश्यत्* (→क्षणाददृश्यत); दे10 हमान् (?) (→महान्).

दे4 अधिकम्—

* तेन तन्मंडलं घोरमालोकयदि निंदितं । ( = २५ cd)

२७. –a) का1 ब1-3 दे2.4.6 न1 ते1 ग्र2 म1 उ1 त्रिशूली (दे4 °लो, ग्र2 म1 उ1 °लः) (→त्रिशूल-). –d) ब1 °लोहि* (→लोहितम्).

२८. ब1. २८a-७२b ⊙. –a) का1 ब2.3 दे2.6 जानामि भगवान् पूर्वं, दे1.8-10 मुवें. मुए. ज्ञानाय पूर्वं भवतो, दे3 ते1 द1 ग्र2 उ1 जानामि पूर्वं(ते1 °सर्वं) भवतो (ग्र2 °ते), दे10 ज्ञानाय पूर्वं भगवतो, म1 मुब. जानामि पूर्वं भगवान्. –b) दे1.8-10 द1 ग्र2 म1 उ1 मुवें. मुए. अद्य, दे3 अथ (→एव); का1 ब2.3 दे1.2.3.6-10 न1 द1 ग्र2 उ1 मुवें. मुए. मुब.

वें.२.३.२९ श्रुत्वा सगर्ववचनं पद्मयोनेरथेश्वरः ।
प्राहिणोत् पुरुषं कालं भैरवं लोकदाहकम् ॥२९
स कृत्वा सुमहद् युद्धं ब्रह्मणा कालभैरवः ।
चकर्त्त तस्य वदनं विरिञ्चस्याथ पञ्चमम् ॥३०
निकृत्तवदनो देवो ब्रह्मा देवेन शंभुना ।
ममार चेशयोगेन जीवितं प्राप विश्वसृक् ॥३१
अथानुपश्यद् गिरिशं मण्डलान्तरसंस्थितम् ।
समासीनं महादेव्या महादेवं सनातनम् ॥३२
भुजङ्गराजवलयं चन्द्रावयवभूषणम् ।
कोटिसूर्यप्रतीकाशं जटाजूटविराजितम् ॥३३
शार्दूलचर्मवसनं दिव्यमालासमन्वितम् ।
त्रिशूलपाणिं दुष्प्रेक्ष्यं योगिनं भूतिभूषणम् ॥३४
यमन्तरा योगनिष्ठाः प्रपश्यन्ति हृदीश्वरम् ।
तमादिदेवं ब्रह्माणं महादेवं ददर्श ह ॥३५
यस्य सा परमा देवी शक्तिराकाशसंस्थिता ।
सोऽनन्तैश्वर्ययोगात्मा महेशो दृश्यते किल ॥३६
यस्याशेषजगद् बीजं विलयं याति मोहनम् ।
सकृत्प्रणाममात्रेण स रुद्रः खलु दृश्यते ॥३७

शंकरम् (न1 उ1 °रः, ग्र2 °रा) (→शंकर). –c) दे3 प्रदुर्भावं, दे6 प्रादुर्भूते, ग्र2 प्रादुर्भवं, मुवें. प्रादुभूतं (→प्रादुर्भावं); ब3 दे3 न1 ते द1 म1 उ1 ममे (ब3 °हे) शान (ब3 °नां), मुवें. महेशानं (→महेशान). –d) दे1.3.8-10 म1 उ1 मुवें. मुए. मुब. मा मतः, ते1 द1 ग्र2 मागतश् (द1 °तं) (→मामेव).

२९. ब1. ⊙. –a) ब3 म1 उ1 सगर्वं, दे2 स*र्वं-, दे6 स सर्वे (→सगर्व-); ते1 श्रुत्वा च वचनं सर्वं. –b) का1 दे4 ब्रह्मयोनेर्, दे6 पद्मयोनिर्, द1 ग्र2 उ1 पद्मयोनेश- (→पद्मयोनेर्); दे4 महेश्वरः, द1 ग्र2 उ1 च शंकरः (→अथेश्वरः). –c) दे3.4.6 काल- (→कालं). –d) दे4 लोहदाहकं, न1 लोकदायकं, ते1 लोकनायकं (→लोकदाहकम्).

३०. ब1. ⊙. –a) दे2 सुमहे युद्धं, ते1 सुमहद्रूपं, उ1 तु महद्युद्धं (→सुमहद् युद्धं). –b) ते1 ब्रह्मणः (→ब्रह्मणा); द1 ग्र2 म1 उ1 लोकभैरवः (उ1 °व) (→कालभैरवः). –c) दे1.8.9 मुवें. मुए. मुब. प्रचकर्त्तास्य वदनं, दे2 चकर्त तस्य वदनं, दे10 चकर्त तस्य वचनम्. –d) ब3 दे1.8.9 विरंचस्याथ (दे1 °च्च), दे4 विरिंचस्थाथ, दे10 विरंचेश्चाथ, उ1 विरिञ्चस्याधि- (→विरिञ्चस्याथ).

३१. दे1 ब1. ⊙. –a) ब3 निकृष्ट° (→निकृत्त°). –c) का1 दे4 द1 वे (दे4 वै) श, दे3 म1 चैष, मुवें. मुए. मुब. चेशो (→चेश); ते1 अन्तरंगेन योगेन. –d) दे10 जीविनं, न1 म1 जीवनं (→जीवितं); का1 दे6 पाप, दे3 चापि, ते1 प्राप्य (→प्राप); दे8-10 ते1 द1 ग्र2 उ1 मुए. मुब. °कृत्, न1 °सत्, म1 °वित्, मुवें. °धृक् (→°सृक्).

३२. ब1. ⊙. –a) ब2.3 दे4.6.8-10 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. अथान्व (दे6 °न्न, दे1 °न्य) प (उ1 °व)श्यद्, ते1 तथानुपश्यन् (→अथानुपश्यद्); मुवें. मुए. मुब. ईशानं (→गिरिशं); दे1 ज्वालमालासमायुक्तं; ब3 दधौ सपद्गिरिशं*, न1 (अथान्वपश्यन्) अथान्वपश्यन् गिरीशं. –c) ते1 तमीशानं, द1 सहसनी, ग्र2 म1 सहासीनं, उ1 सभासीनं (→समासीनं); ते1 उ1 महादेवं (उ1 °व्यां) (→महादेव्या). –d) ते1 ज्ञात्वा (→महा-); का1 ब2.3 दे2.6 न1 मुब. मुब. त्रिलोचनं (→सनातनम्).

३३. ब1. ⊙; ब3. ३३-४६b; ⊙; ग्र2.३३-३४ ⊙. –a) ते1 भुजंगहार° (→भुजङ्गराज°). –b) दे1.8.9 चन्द्रावलय° (→चन्द्रावयव°). –c) दे1 कौटि°(?) (→कोटि°); दे2 °घत्तिकाशं (→°प्रतीकाशं). –d) ते1 जटामुकुटराजितम्, द1 म1 उ1 जटामुकुट (म1 मण्डल) मंडितं.

३४. ब1.3 ग्र2. ⊙. –b) दे6 दिव्यमाल्या (→दिव्यमाला). –c) का1 °पाणि, न1 °दानं (→°पाणिं); का1 दे1.3.4.6.8-10 दुःप्रेक्ष्यं (दे6 °क्षे), ब3 ते1 म1 दुष्प्रेक्षं (→दुष्प्रेक्ष्यं). –d) दे6 योगिनी (→योगिनं).

३५. ब1.3. ⊙. –a) न1 यदंतरा (→यमन्तरा); दे2 °निष्टां (→°निष्ठाः). –b) न1 महेश्वरं (→हृदीश्वरम्); ग्र2 पश्यन्ति हृदयेश्वरं. –c) दे1.3.8-10 न1 ते1 म1 मुवें. मुए. मुब. तमादिमेकं (→तमादिदेवं); दे1 म1 उ1 ब्रह्माणां (म1 °थ, उ1 °ण) (→ब्रह्माणं). –d) महेश्वरं (→ददर्श ह).

३६. ब1.3. ⊙. –a) न1 पाप रमा, ग्र2 पापहरा (→सा परमा). –b) दे1.4.8.9 न1 म1 मुवें. मुए. मुब. °संज्ञिता (→°संस्थिता); दे6 शक्तिराका प्रंस्यास्थिता(?). –c) दे6 शोभतेश्वर्य-, द1 ग्र2 म1 उ1 अनंतैश्वर्य- (→सोऽनन्तैश्वर्य-); ते1 -योगेहि, ग्र2 -योगात्म (→-योगात्मा). –d) दे3 म1 महेशा (→महेशो); दे1 किलं, उ1 जलं (→किल).

३७. का1 ब1-3 दे2.4.6 ते1. ⊙; ग्र2. ३७–३८ ⊙. –a) दे9 यस्य (→यस्या-); उ1 -गतद्विजं (→-जगद्बीजं). –b) दे1 विलयां, न1 विलया (→विलयं); दे1 * ति

उदक्या गमने विप्रस्त्रिरात्रेण विशुध्यति ।
चाण्डालीगमने चैव तप्तकृच्छ्रत्रयं विदुः ।
सह सांतपनेनास्य नान्यथा निष्कृतिः स्मृता ॥३०
मातृगोत्रां समासाद्य समानप्रवरां तथा ।
चान्द्रायणेन शुध्येत प्रयतात्मा समाहितः ॥३१
ब्राह्मणो ब्राह्मणीं गत्वा कृच्छ्रमेकं समाचरेत् ।
कन्यकां दूषयित्वा तु चरेच्चान्द्रायणव्रतम् ॥३२
अमानुषीषु पुरुष उदक्यायामयोनिषु ।
रेतः सिक्त्वा जले चैव कृच्छ्रं सान्तपनं चरेत् ॥३३
बन्धकीगमने विप्रस्त्रिरात्रेण विशुद्धयति ।
गवि मैथुनमासेव्य चरेच्चान्द्रायणव्रतम् ॥३४

अजावी मैथुनं कृत्वा प्राजापत्यं चरेद् द्विजः ।
पतितां च स्त्रियं गत्वा त्रिभिः कृच्छ्रैर्विशुद्धयति ॥३५
पुल्कसीगमने चैव कृच्छ्रं चान्द्रायणं चरेत् ।
नटीं शैलूषकीं चैव रजकीं वेणुजीविनीम् ।
गत्वा चान्द्रायणं कुर्यात् तथा चर्मोपजीविनीम् ॥३६
ब्रह्मचारी स्त्रियं गच्छेत् कथञ्चित्काममोहितः ।
सप्तागारं चरेद् भैक्षं वसित्वा गर्दभाजिनम् ॥३७
उपस्पृशेत् त्रिषवणं स्वपापं परिकीर्त्तयन् ।
संवत्सरेण चैकेन तस्मात् पापात् प्रमुच्यते ॥३८
ब्रह्महत्याव्रतं वापि षण्मासानाचरेद् यमी ।
मुच्यते ह्यवकीर्णी तु ब्राह्मणानुमते स्थितः ॥३९ वें.२.३३.१७

**३०.** ग्र2. ३०a–३३d ⊙. –a) दे10 उदवाक्यागमे (→उदक्या गमने); न1 विप्रं (→विप्रस्). –b) न1 तु शुद्धयति (→विशुद्धयति). –d) द1 उ1 चरेत् (→विदुः); दे3 तप्त-कृच्छ्रं व्रतं विदुः, ते1 तप्तकृच्छ्रं समाचरेत्. –e) का1 ब2.3 दे2.6 महाशांतपनेनास्य, दे1.8.9 मुवें. मुए. मुब. शुद्धः सान्तपनेन स्यात्, दे4 सह सांतपसे नास्य, दे10 शुचिः संपातने तस्य, न1 सहस्रं तपनेनास्य.

**३१.** ब1. ⊙; ग्र2. a ⊙. –a) ब3 दे1.8-10 द1 म1 उ1 मुवें. मुए. मुब. समारुह्य (→समासाद्य). –b) न1 ततः (→तथा).

**३२.** ब1. ⊙. –a) दे4 ये नराः (→ब्राह्मणो). –b) दे6 ** मेकं (→कृच्छ्रमेकं). –c) दे6 कन्यको दूषयित्वा तु, द1 कन्यकामुपयित्वा तु, ग्र2 कुकन्यकामुपायित्वा. –d) ब2.3 दे2-4.6.10 उ1 चान्द्रायणं (→चान्द्रायण-).

**३३.** ब1 ग्र2. ⊙. –a) दे4 अमानुष्यां तु, दे6 अमानुषीं सु- (→अमानुषीषु); द1 पुरुषं (→पुरुषः). –c) दे1 रेतः सिक्ता, ते1 रेतस्मिता, उ1 रेतस्त्यक्त्वा (→रेतः सिक्त्वा); दे1.8.9 जने (→जले). –d) द1 उ1 चान्द्रायणं (→सान्तपनं).

**३४.** ग्र2. ⊙. –a) ब1 अन्वकी°, ब3 मुब. वद्धकी°, दे1.8-10 वंधुकी°, दे3.4 द1 म1 वर्द्धकी° (दे4 °कीं), ते1 कन्यका°, उ1 मुवें. वार्द्धिकी° (→बन्धकी°); ब1 चैव (→विप्रस्). –c) ब1 गवां, दे4 गव्य, न1 गुर्वी, द1 क्षत्री, उ1 क्षत्रि(यं) (→गवि); ब2 द1 म1 आसाद्य (→आसेव्य). –d) का1 ब1-3 दे2-4.6 उ1 चान्द्रायणं (→चान्द्रायण-).

**३५.** –a) दे1.3.8.9 मुवें. मुए. वेश्यायां, दे4.10 द1 ग्र2 म1 उ1 वैश्यायां, दे6 अजां वै, न1 वेश्यायाः (→अजावी); द1 उ1 गत्वा (→कृत्वा). –b) ग्र2 बुधः (→द्विजः). –c) ते1 पतितानां (→पतितां च). –d) दे4 स्त्रिभिः (→त्रिभिः).

**३६.** ब1. ⊙; दे6. ef ⊙. –a) ब1 दे10 पुंश्चली°, दे1 ग्र2 पुष्कली° (→पुल्कसी°); ग्र2 विप्रः (→चैव). –b) ग्र2 चान्द्रायणव्रतं (→चान्द्रायणं चरेत्). –c) न1 कुटीं, द1 कुटी-, ग्र2 उ1 नट- (→नटीं); का1 दे4 शैलूषकां, ब2 शैलूषिणीं, ब3 दे2 6.10 उ1 शैलूषि (ब3 °शि)कीं, दे1 शैलौषकीं, दे3 शैलूखिनीं, दे8.9 शैलोषकीं, ते1 द1 शैलूषिकां (→शैलूषकीं). –d) ब3 वेत्रजीविनीं, दे6 वेणुजीविता, दे10 वेणुजीविनां, द1 ग्र2 उ1 वेणुकीं त्विमां (→वेणुजीविनीम्). –f) मुब. धर्मो° (→चर्मो°); दे10 ग्र2 °जीवनं (→°जीविनीम्).

**३७.** –a) दे4 द1 म1 उ1 गत्वा (→गच्छेत्). –c) न1 सप्तागारा, ते1 सप्तागारांश् (→सप्तागारं); दे10 भैक्ष्यं (→भैक्षं). –d) ब1 ग्र2 गर्दभाजनं (→गर्दभाजिनम्).

**३८.** –a) ब1 उपस्पृश्य, न1 उपस्पृशंस् (→उपस्पृशेत्). –b) ते1 स्वाध्यायं (→स्वपापं); ब2 दे3.4.6 द1 ग्र2 उ1 परिकीर्त्तयेत्, दे10 परिकीर्त्तयत् (→परिकीर्त्तयन्). –d) दे3.4 न1 द1 म1 विमुच्यते (→प्रमुच्यते).

**३९.** ब1. ⊙. –a) दे1.4.8-10 द1 मुए. मुब. -व्रतं चापि, न1 उ1 -व्रतं पापी, मुवें. -व्रतश्चापि (→-व्रतं वापि). –b) का1 ब3 दे2 मुब. आचरेद्यती, ब2 आचरेद्व्रती, दे1.8.9 मुवें. मुए. विचरन्त्य (मुवें. °न्य)मी, दे4 आचरेद्यमी, दे6 आचरेधमी, दे10 विचरन्त्यपि, न1 वाचरेद्यदि, ते1 आचरेद्यमी, + आचरेद्वशी, द1 ग्र2 म1 उ1 वाचरेद्यमी (→आचरेद्यमी). –c) का1 ह्यवकीर्णं तु, दे3 ह्येनसस्तस्माद्, दे6 ह्यवकीर्णेन, दे10 ह्यवकीर्णा तु, द1 ग्र2 म1 उ1 ह्यवकीर्णी वा (→ह्यव-

वं.२.३३.१८ सप्तरात्रमकृत्वा तु भैक्षचर्याग्निपूजनम् ।
रेतसश्च समुत्सर्गे प्रायश्चित्तं समाचरेत् ।।४०
ओंकारपूर्विकाभिस्तु महाव्याहृतिभिः सदा ।
संवत्सरं तु भुञ्जानो नक्तं भिक्षाशनः शुचिः ।।४१
सावित्रीं च जपेच्चैव नित्यं क्रोधविवर्जितः ।
नदीतीरेषु तीर्थेषु तस्मात् पापाद् विमुच्यते ।।४२
हत्वा तु क्षत्रियं विप्रः कुर्याद् ब्रह्महणो व्रतम् ।
अकामतो वै षण्मासान् दद्यात् पञ्चशतं गवाम् ।।४३
अब्दं चरेत नियतो वनवासो समाहितः ।
प्राजापत्यं सान्तपनं तप्तकृच्छ्रं तु वा स्वयम् ।।४४
प्रमाप्याकामतो वैश्यं कुर्यात् संवत्सरद्वयम् ।
गोसहस्रं सपादं च दद्याद् ब्रह्महणो व्रतम् ।
कृच्छ्रातिकृच्छ्रौ वा कुर्याच्चान्द्रायणमथापि वा ।।४५
संवत्सरं व्रतं कुर्याच्छूद्रं हत्वा प्रमादतः ।
गोसहस्रार्द्धपादं च दद्यात् तत्पापशान्तये ।।४६
अष्टौ वर्षाणि षट् त्रीणि कुर्याद् ब्रह्महणो व्रतम् ।
हत्वा तु क्षत्रियं वैश्यं शूद्रं चैव यथाक्रमम् ।।४७

कीर्णी तु). –d) का1 उ1 स्थितिः, दे4 स्थितं (→स्थितः); दे3 ब्रह्मचारी न संशयः.

४०. ब1 दे3. ab ⊙; दे4. bc ⊙. –a) का1 ब2.3 दे6 सकृत्वातु, दे4 सकृद्भैक्ष (→अकृत्वा तु). –b) ब3 दे6 भैक्ष्यचर्याग्नि°, दे10 ग्र2 भैक्ष्यं (ग्र2 °क्षं) चर्याग्नि° (→भैक्षचर्याग्नि°). –c) दे3 गविरेतः, ग्र2 रेतसश्च (→रेतसश्च). –d) का1 ब3 दे2 समापयेत् (→समाचरेत्).

४१. –a) ब3 °द्भिस्तु, दे2 °निस्तु, दे6 °भ्यस्तु, दे10 °भ्यश्च (→°भिस्तु). –b) उ1 ** (→महा-); ब1 तदा (→सदा). –c) का1 क्षुत्क्षामो, ब1 न1 जुह्वानो, ब2 जप्त्वा वै, ब3 दे6 मुब. यज्वानो, दे2 शुल्कानो (?), ते1 भुंजाने, ग्र2 ते नित्यं (→भुञ्जानो). –d) द1 उ1 नित्यं (→नक्तं); दे3 उ1 भिक्षाशनं, दे4 भिक्षासनं, द1 भिक्षाशनि (→भिक्षाशनः); ग्र2 भिक्षाचर्याशनश्शुचिः.

४२. –a) दे1.10 ग्र2 नित्य-, दे3.8-9 न1 द1 म1 उ1 मुवें. मुए. नित्यं (→चैव). –b) दे1.3.10 उ1 मुवें. मुए. सत्वरः (दे3 °रं) क्रोधवर्जितः, दे8.9 द1 अत्वरः क्रोधवर्जितः, न1 कामक्रोधवर्जितः, ग्र2 मत्सरः क्रोधवर्जितः. –d) ब2 दे1.3.4.6 द1 म1 प्रमुच्यते, दे10 विमुच्यते,+विशुध्यते (→विमुच्यते).

४२ श्लोकात् परं दे3 अधिकम्—

* अथ ब्रह्महणो विप्राः च्वमद्य शोधनं ।

४२ श्लोकात्परं म1 अधिकम्—व्यासः ।

४३. ब1. ⊙. –a) दे6 क्षत्रियां (→क्षत्रियं). –b) ब3 दे2.4.6 ब्रह्महनो, ते1 द1 ग्र2 उ1 ब्रह्महण- (→ब्रह्महणो). –c) का1 ब2.3 दे2.6 द1 अकामतोपि (→अकामतो वै); का1 न1 द1 ग्र2 उ1 षण्मासं (→षण्मासान्). –d) ब2.3 °गवां शतं, उ1 °शतङ्गवान् (→°शतंगवाम्).

४४. ब1 दे4. ⊙. –a) ब2 व्रतं चरेद्वा नियतो, ब3 त्र्यब्दं चरेद्वा नियुतो, दे1.8.9 मुवें. मुए. मुब. अब्दं चरेद्ध्यानयुतो, दे3.6 अब्दं चरेद्वा नियतो, दे10 अचरेत् ध्यानयुक्तो, न1 त्र्यब्दं चरेद्वा न युतो, ते1 अब्दं चरेद्वा न यतो, द1 ग्र2 म1 उ1 आचरेद्बाब्द (ग्र2 °प्त) नवकं. –b) दे6 ते1 ब्रह्मचारी, द1 नियतासु-, ग्र2 नियत्*स्सु-, म1 उ1 नियतः सु- (→वनवासी). –d) का1 ब2.3 दे2.3.6 न1 ते1 म1 तु वा त्रयं, द1 ग्र2 तु च त्रयं, उ1 चतुष्टयं (→तु वा स्वयम्).

४५. ब1 दे4.⊙; दे1.10 द1. cdef ⊙; दे3.9 द1 ग्र2 म1 उ1 मुए. ef ⊙. –a) का1 प्रसर्पकामतो, ब3 प्रमादाकामतो, दे1.3.8-10 मुवें. मुए. प्रमादात्कामतो, दे2 प्रमथकामतो, द1 ग्र2 म1 उ1 प्रमाप्यकामतो (→प्रमाप्याकामतो); का1 वैश्यां, दे2 वेश्यां, द1 वैश्य- (→वैश्यं). –b) दे6 कृत्वा (→कुर्यात्); दे1.3.8-10 न1 द1 ग्र2 म1 उ1 °त्रयम् (→°द्वयम्). –c) ब2 गो सहस्रं सपादन्तु, दे3 गोसहस्रस्य पादस्य, दे6 गोसहस्रैकपादं च, दे8.9 न1 गोसहस्रस्य पादं च, ते1 गोसहस्रन्तु वा दद्यात्, ग्र2 गोसहस्रन्तु प्रदद्यात्, म1 उ1 गोसहस्रस्य(उ1 °न्तु) वा दद्यात्. –d) का1 दद्याद्वै ब्राह्मणो व्रतम्, ब2.3 दद्याद्ब्रह्महणो (ब3 °तो)व्रती, दे2 ते दद्याद्ब्रह्मणो व्रतम्, दे3 दद्याद्ब्रह्मणो व्रतम्, दे8.9 न1 मुवें. मुए. प्रदद्याद्ब्रह्मणो व्रतम्, ते1 मुब. कुर्याद्ब्रह्महणो व्रतम्, ग्र2 म1 अथ ब्रह्महणो (ग्र2 °ण) व्रतम्, उ1 तथाथ ब्रह्मणव्रतम्. –e) न1 °कृच्छ्रं (→°कृच्छ्रौ).

४६. ब1 दे1.3.4.8-10 द1 ग्र2 म1 उ1 मुए. ⊙. –a) न1 त्रयं (→व्रतं). –b) दे6 छत्रं (→शूद्रं). –c) ते1 °दानं (→°पादं).

४७. ब1 दे1.3.4.8-10 द1 ग्र2 म1 उ1 मुए. ⊙. –a) ब3 षट्त्रीणि (वा), दे6 षट् त्रिस्वा, न1 ते1 षट्त्रीन्वा, मुवें. वा त्रीणि (→षट् त्रीणि). –b) न1 स कुर्याद् ब्रह्मणो व्रतं. –c) दे4 च (→तु). –d) दे2 शूद्रे, उ1 शूद्रश् (→शूद्रं).

निहत्य ब्राह्मणीं विप्रस्त्वष्टवर्षं व्रतं चरेत् ।
राजन्यां वर्षषट्कं तु वैश्यां संवत्सरत्रयम् ।
वत्सरेण विशुद्धचेत शूद्रां हत्वा द्विजोत्तमः ।।४८
वैश्यां हत्वा प्रमादेन किञ्चिद् दद्याद् द्विजातये ।
अन्त्यजानां वधे चैव कुर्याच्चान्द्रायणं व्रतम् ।
पराकेणाऽथ वा शुद्धिरित्याह भगवानजः ।।४९
मण्डूकं नकुलं काकं दन्दशूकं च मूषिकम् ।
श्वानं हत्वा द्विजः कुर्यात् षोडशांशं व्रतं ततः ।।५०
पयः पिबेत् त्रिरात्रं तु श्वानं हत्वा सुयन्त्रितः ।
मार्जारं वाऽथ नकुलं योजनं वाध्वनो व्रजेत् ।
कृच्छ्रं द्वादशरात्रं तु कुर्यादश्ववधे द्विजः ।।५१
अभ्रीं कार्ष्णायसीं दद्यात् सर्पं हत्वा द्विजोत्तमः ।
पलालभारं षण्डं च सैसकं चैकमाषकम् ।।५२
घृतकुम्भं वराहं च तिलद्रोणं च तित्तिरिम् ।
शुकं द्विहायनं वत्सं क्रौञ्चं हत्वा त्रिहायनम् ।।५३
हत्वा हंसं बलाकां च बकं बर्हिणमेव च ।
वानरं श्येनभासौ च स्पर्शयेद् ब्राह्मणाय गाम् ।।५४　वें.२.३४.३४

४८. ब$_{1}$. ⊙; दे$_{1.10}$ द$_{1}$. abcd ⊙. –a) का$_{1}$ दे$_{2.4}$ गर्भिणीं (→निहत्य); दे$_{2}$ विप्रेस्, दे$_{4}$ चैव, दे$_{6}$ विप्रास् (→विप्रस्). –b) म$_{1}$ त्रयं (→व्रतं). –c) का$_{1}$ राजन्यो, दे$_{6}$ राजन्यं (→राजन्यां); ब$_{3}$ वर्षपर्यन्तं, ते$_{1}$ वर्षषट्कं वै (→वर्षषट्कं तु); दे$_{8.9}$ मुब. राजकन्यां वर्षषट्कं, उ$_{1}$ राजकन्यां च षट्कं तु. –d) ग्र$_{2}$ वैश्यात् (→वैश्यां). –e) दे$_{1}$ विशुद्धयेते, दे$_{3}$ विशुद्धयेच्च (→विशुद्धयेत); ब$_{2}$ ते$_{1}$ मुब. संवत्सरेण शुद्धयेत, दे$_{6}$ संवत्सरविशुद्धे तु. –f) दे$_{1.4.8-10}$ ते$_{1}$ द$_{1}$ म$_{1}$ मुवें. मुए. शुद्रीं, ग्र$_{2}$ शूद्रं, उ$_{1}$ गुर्वीं (→शूद्रां).

४९. ब$_{1}$ दे$_{4}$. ⊙. –a) दे$_{6}$ वैश्यो, ग्र$_{2}$ म$_{1}$ उ$_{1}$ वैश्यं (→वैश्यां); दे$_{1.8-10}$ मुवें. मुए. मुब. द्विजातिस्तु (→प्रमादेन). –b) दे$_{6}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ दत्वा (→दद्याद्); दे$_{10}$ द्विजातयः (→द्विजातये). –c) दे$_{1}$ न$_{1}$ ते$_{1}$ मुवें. मुए. बधै (→वधे); द$_{1}$ ग्र$_{2}$ द्विजानां वध(ग्र$_{2}$ विधि)कृच्चैव. –d) ग्र$_{2}$ चरेत् (→कुर्यात्); दे$_{10}$ त्रयं (→व्रतम्). –e) दे$_{3.8.9}$ पाराकेण, न$_{1}$ द्वारकेण (→पराकेण). –f) दे$_{1.8-10}$ ते$_{1}$ मुब. मनुः (→अजः).

५०. ब$_{1}$ दे$_{4}$. ⊙. –b) दे$_{1.8-10}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ मुए. मुब. विड्वराहं च (म$_{1}$ तु), दे$_{3}$ मुवें. विडालं खर- (→दन्दशूकंच); का$_{1}$ दे$_{1.3.10}$ ते$_{1}$ द$_{1}$ उ$_{1}$ मुवें. मुए. मुब. मूषकं, दे$_{8.9}$ मूखकं (→मूषिकं). –c) ते$_{1}$ हत्वा स्नानं (→श्वानं हत्वा); का$_{1}$ उ$_{1}$ द्विजं, दे$_{1}$ द्विजां (→द्विजः). –d) का$_{1}$ दे$_{2}$ षोडशांतं, म$_{1}$ षोडशाहं, उ$_{1}$ षोडशंशं (→षोडशांशं); दे$_{1.3.8-10}$ न$_{1}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ मुवें. मुए. मुब. महाव्रतम् (→व्रतं ततः).

५१. ब$_{1}$ दे$_{4}$. ⊙. –b) का$_{1}$ तु यंत्रितः, ब$_{2}$ स्वमन्त्रितः, ब$_{3}$ स्वतन्द्रितः, दे$_{1.3.8-10}$ ग्र$_{2}$ मुवें. मुए. मुब. ह्यतन्द्रितः, दे$_{2}$ (तु) सुयंत्रितः, दे$_{6}$ स्वयंत्रितः, ते$_{1}$ म$_{1}$ उ$_{1}$ त्वतन्द्रितः, द$_{1}$ तु * द्रितः (→सुयन्त्रितः). –c) ग्र$_{1}$ उ$_{1}$ चाथ (→वाथ); ते$_{1}$ शकुलं, + नकुलं (→नकुलं). –d) ब$_{3}$ दे$_{1.8-10}$ म$_{1}$ उ$_{1}$ मुवें. मुए. मुब. चाध्वनो, दे$_{3}$ चाधनो (→वाध्वनो); ते$_{1}$ आचरेत् वाग्यतो व्रतम्. –e) ग्र$_{2}$ °मात्रं (→°रात्रं); ब$_{3}$ कृच्छ्रं कृत्वा दशरात्रन्तु. –f) दे$_{3}$ अश्वव्रतं, उ$_{1}$ अश्वपये (→अश्ववधे).

५२. ब$_{1}$. ⊙; दे$_{4}$. ab ⊙; दे$_{3}$. d ⊙. –a) का$_{1}$ दे$_{2}$ अद्री, ब$_{2}$ अशीं, दे$_{3}$ वभ्रुं, न$_{1}$ अहिं, ते$_{1}$ असिं, ग्र$_{2}$ म$_{1}$ अवीं, मुवें. मुए. मुब. अचर्वां (→अभ्रीं); का$_{1}$ कार्ष्णायसौ, दे$_{10}$ कार्णादसीं, न$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ कृष्णायसीं, ते$_{1}$ कार्ष्णायसं (→कार्ष्णायसीं); द$_{1}$ अविकर्षाय वै दद्यात्. –b) दे$_{1.6.8-10}$ सर्वं (→सर्पं); ब$_{3}$ कृत्वा (→हत्वा). –c) ब$_{2.3}$ दे$_{1.8.9}$ न$_{1}$ ते$_{1}$ मुवें. मुए. मुब. प (न$_{1}$ व) लालभारकं षण्ढे (ब$_{2.3}$ ते$_{1}$ °ण्डे), दे$_{3.4}$ द$_{1}$ म$_{1}$ उ$_{1}$ पलालभारकं चैव, दे$_{6}$ पलालस्तूर्णं च **, दे$_{10}$ पलालभारं * षष्ठे, ग्र$_{2}$ पललाकारकं चैव. –d) दे$_{1.8-10}$ मुवें. मुए. मुब. सीसकं, दे$_{4}$ माषकं, ते$_{1}$ सीषकं (→सैसकं); ब$_{2.3}$ दे$_{2.6.10}$ चैव, दे$_{4}$ वार्द्ध- (→चैक); न$_{1}$ मषकं कृतकुंभकः, द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ मूषि (द$_{1}$ उ$_{1}$ °ष) कंघृतकुंभ कं.

५३. ब$_{1}$ दे$_{3.4}$. ⊙. –a) दे$_{1.8.9}$ मुवें. मुए. मुब. वराहे तु, दे$_{10}$ वराहेषु (→वराहं च); न$_{1}$ वराहे तु तिलद्रोणं, द$_{1}$ ग्र$_{2}$ उ$_{1}$ वराहं तु तिलद्रोणं, म$_{1}$ तैलद्रोणं वराहन्तु. –b) का$_{1}$ दे$_{1.6.8-10}$ ते$_{1}$ मुवें. मुए. मुब. तु (→च); का$_{1}$ तैत्तिरं, दे$_{1.8-10}$ मुवें. मुए. मुब. तित्तिरे, दे$_{6}$ तैत्तिकं (→तित्तिरिं); न$_{1}$ तित्तिरे तु शकौ तथा, द$_{1}$ म$_{1}$ तिलाढं चैव तित्तिरम्, ग्र$_{2}$ उ$_{1}$ तिलार्थं चैव तित्तिरिं (उ$_{1}$ °रं). –c) दे$_{1.8-10}$ द$_{1}$ ग्र$_{2}$ उ$_{1}$ मुए. मुब. शुके, न$_{1}$ तथा, मुवें. शुशुं (→शुकं).

५४. ब$_{1}$ दे$_{4}$. ⊙; दे$_{3}$. a ⊙. –a) ब$_{3}$ दे$_{2.6}$ न$_{1}$ ते$_{1}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ बलाकं (→बलाकां). –b) का$_{1}$ कंक- (→बकं);

बे२.३३.३४ क्रव्यादांस्तु मृगान् हत्वा धेनुं दद्यात् पयस्विनीम् ।
अक्रव्यादान् वत्सतरीमुष्ट्रं हत्वा तु कृष्णलम् ॥५५
किञ्चिदेव तु विप्राय दद्यादस्थिमतां वधे ।
अनस्थ्नां चैव हिंसायां प्राणायामेन शुध्यति ॥५६
फलदानां तु वृक्षाणां छेदने जप्यमृक्शतम् ।
गुल्मवल्लीलतानां तु पुष्पितानां च वीरुधाम् ॥५७
अन्येषां चैव वृक्षाणां सरसानां च सर्वशः ।
फलपुष्पोद्भवानां च घृतप्राशो विशोधनम् ॥५८
हस्तिनां च वधे दृष्टं तप्तकृच्छ्रं विशोधनम् ।
चान्द्रायणं पराकं वा गां हत्वा तु प्रमादतः ।
मतिपूर्वं वधे चास्याः प्रायश्चित्तं न विद्यते ॥५९

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायामुपरिविभागे द्वात्रिंशोऽध्यायः ॥३२॥

---

द1 ग्र2 म1 उ1 टिट्टिभं (→बर्हिणं). –c) उ1 वामनं (→वानरं); का1 दे2 श्येयकं चैव, ब2 दे6 श्येनभाषौ च, दे1.3.8-10 ते1 मुवें. मुब. श्येनभासञ्च, द1 ग्र2 म1 चैव भासं च (→श्येनभासौ च). –d) म1 सौवर्णं (→स्पर्शयेद्).

**५५.** ब1 दे4. ⊙. –a) का1 क्रव्यादांश्च, ब2.3 दे2 न1 क्रव्यादंस्तु (→क्राव्यादांस्तु). –b) म1 हन्यात् (→दद्यात्); का1 पयस्वनीं (→पयस्विनीम्). –c) ब2 दे3 न1 द1 ग्र2 उ1 अक्रव्यादे, ब3 दे2 अक्रव्यादो, म1 अक्रव्यादीं (→अक्रव्यादान्); ग्र2 वत्सतरं, म1 वत्सतरां (→वत्सतरीं); ते1 अक्रव्यादान् मृगानुष्ट्रं. –d) ग्र2 मृष्टां (→उष्ट्रं); का1 च कृष्णगां (→तु कृष्णलम्); ते1 हत्वा कुर्यात्तु कृच्छ्रकम्.

**५६.** ब1 दे4. ⊙. –a) ब2 किञ्चिद्दातु, दे1.3.8-10 मुवें. मुए. किञ्चिद्देयं तु, ग्र2 जीविते च तु (→किंचिदेव तु). –b) का1 ज्ञानादस्थिमतां, दे6 दद्यादस्थिमते (→दद्यादस्थिमतां). –c) ब3 अनस्थ्याञ्चैव, दे1 अनवस्थां चैव, दे2.8-10 अनस्थां चैव, दे6 अटव्यां चैव, न1 अनस्थाञ्चैव, उ1 अस्थ्नानाञ्चैव (→अनस्थ्नांचैव).

**५७.** ब1 दे4. ⊙; दे3. d ⊙. –a) दे2 च (→तु); ग्र2 विप्राणां (→वृक्षाणां). –b) का1 जप्यमृत् काकं, दे6 जप्यमूककं (?), ते1 जप्यमृक् च तम, म1 जप्यमृच्छतम् (→जप्यमृक्शतम्); द1 छेदनादप्यमृक्छतं, ग्र2 छेदनद्वा * कं गतं, उ1 छेदनाज्जप्यमृच्छतं. –c) ब2.3 दे2.3.6 न1 ते1 ग्र2 म1 उ1 च (→तु); का1 गुल्मवद्दिव वृत्तानां च. –d) दे6 पुष्पितां चैव, दे10 पुष्पितानां तु (→पुष्पितानाञ्च); द1 ग्र2 उ1 वीरुधां फलमेव च.

**५८.** ब1 दे4. ⊙; दे3. abc ⊙; ते1 द1 ग्र2 उ1. ab ⊙. –a) का1 अनज्ञानां च सत्वानं, ब2 जरायुजानां सर्वेषां, ब3 अण्डजानाञ्च सत्वानां, दे2.6 ते1 अन्य (दे6 °त्य, ते1 °न्या) जानां च सत्वानां, न1 अन्नाद्यजानां सत्वानां, मुवें. अण्डजानां च सर्वेषां. –b) का1 यज*नां, ब2 अण्डजानां, ब3 दे2.6 ते1 राजसानां, न1 रजसानां, मुवें. स्वेदजानां (→सरसानां). –c) द1 ग्र2 उ1 पुष्पागमानां च तथा. –d) ते1 घृतं प्राश्य (→घृतप्राशो).

**५९.** ब1 दे4. ⊙. –a) का1 ब2.3 दे1 ते1 हस्तिनश्च, दे6 हस्तिनञ्च (→हस्तिनांच) –c) द1 ग्र2 म1 उ1 च (→वा). –d) दे3 द1 ग्र2 उ1 गां च हत्वा (→गां हत्वा तु). –e) का1 मतिपूर्वे, दे1.8-10 न1 ग्र2 मुवें. मुए. मुब. मतिपूर्व- (→मतिपूर्वं); ब2.3 दे2.6 ते1 म1 वधे चास्य, न1 -विधे चास्य (→वधे चास्याः).

**पुष्पिका**—[द1 पुस्तके अध्यायसमाप्तिर्नास्ति].

**पुराणनाम**—का1 दे4.10 न1 इति श्रीकूर्मपुराणे, ब1 इति कौर्मे, ब2.3 दे2.3.6 इति कू(दे2 कौ)र्मपुराणे, दे1 इति श्रीकूर्मपुराणे उपरिविभागे, दे8.9 म1 इति श्रीकूर्मपुराणे उपरिभागे, ते1 इत्यादिमहापुराणे श्रीकौर्मे प्राणिवधप्रायश्चित्ते उपरिभागे व्यासगीतासु, ग्र2 इति श्रीकूर्मपुराणे उत्तरभागे व्यसगीतासूपनित्सु, उ1 इति श्रीकूर्मपुराणे उत्तरभागे व्यासगीतासु, मुवें. इति श्रीकूर्मपुराणे उत्तरार्द्धे, मुए. इति श्रीकूर्मपुराणे उपभागे, मुब. इति श्रीकौर्ममहापुराणे उपरिभागे ब्रह्मविद्यायां. **अध्यायनाम**—दे1.3.4.8.9 न1 ते1 म1 उ1 मुए. ⊙; का1 ब3 दे2.6 प्रायश्चित्तं नाम (दे6 °मा), ब1 प्रायश्चित्तं, ब2 प्रायश्चित्तविधानं, दे10 व्यभिचारहिंसादिनिवृत्तिप्रायश्चित्तं नाम, ग्र2 हिंसादोषप्रायश्चित्तं नाम, मुवें. प्रायश्चित्तनिरूपणे, मुब. प्रायश्चित्तनियमे. **अध्यायसंख्या**—ब1.2 दे6. ⊙; का1 एकत्रिंशोऽध्याय ॥ ३१ ॥, ब3 दे2 एकत्रिंशोऽध्यायः, दे1.3.8-10 ग्र2 म1 मुए. त्रयस्त्रिंशोऽध्यायः, दे2.4 मुब. द्वात्रिंशोऽध्यायः ॥३२॥, न1 त्र्यशीतितमोऽध्यायः, ते1 द्वात्रिंशोऽध्यायः, उ1 त्रयस्त्रिंशोऽध्यायः ॥ श्री ॥, मुवें. त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

# ३३

व्यास उवाच ।❀

ष्याणां तु हरणं कृत्वा स्त्रीणां गृहस्य च ।
ीकूपजलानां च शुध्येच्चान्द्रायणेन तु ॥१
ाणामल्पसाराणां स्तेयं कृत्वाऽन्यवेश्मतः ।
त् सांतपनं कृच्छ्रं तन्निर्यात्यात्मशुद्धये ॥२
यान्नधनचौर्यं तु कृत्वा कामाद् द्विजोत्तमः ।
ातीयगृहादेव कृच्छ्रार्द्धेन विशुद्धयति ॥३
भोज्यापहरणे यानशय्यासनस्य च ।
पुष्पमूलफलानां च पञ्चगव्यं विशोधनम् ॥४
तृणकाष्ठद्रुमाणां च शुष्कान्नस्य गुडस्य च ।
चैलचर्मामिषाणां च त्रिरात्रं स्यादभोजनम् ॥५
मणिमुक्ताप्रवालानां ताम्रस्य रजतस्य च ।
अयःकांस्योपलानां च द्वादशाहं कणाशनम् ॥६
कार्पासकीटजीर्णानां द्विशफैकशफस्य च ।
पक्षिगन्धौषधीनां च रज्वाश्चैव त्र्यहं पयः ॥७ वें.२ ३४.७

---

३३

❀ द$_{1}$. ⊙; दे$_{3.9}$ व्यास उ.; दे$_{10}$ श्रीवेदव्यास उवाच; ग्र$_{2}$ उ$_{1}$ व्यासः; ते$_{1}$ श्री शिवः,+श्रीव्यासः; म$_{1}$ श्रीशुकः.

१. –a) दे$_{4}$ मानुषाणां (→मनुष्याणां); दे$_{4}$ हननं (→हरणं). –b) द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ स्त्रीणां कृत्वा (→कृत्वा (–णां); का$_{1}$ वधस्य च, ब$_{1-3}$ धनस्य च, दे$_{4}$ वधं तथा गृहस्य च). –c) दे$_{4}$ °तडागानां, म$_{1}$ °जलानां तु °जलानां च). –d) ते$_{1}$ मध्ये (→शुद्धचेत्).

२. दे$_{4}$. २c–५b ⊙. –a) ब$_{3}$ अश्म° (→अल्प°). –b) कृत्वाथ (→कृत्वान्य-); का$_{1}$ दे$_{1.3.8-10}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ मुवें. मुब. °वेश्मनः, दे$_{10}$ °सेवनः (→°वेश्मतः). –d) का$_{1}$ मादात्मशुद्धये, दे$_{3}$ अधवानात्मशुद्धये, ते$_{1}$ तं निहृत्यात्म-ये, द$_{1}$ ग्र$_{2}$ उ$_{1}$ चरित्वात्मविशुद्धये, म$_{1}$ निवृत्यात्मविशुद्धये.

३. दे$_{4}$. ⊙ (द्र. २ पा. वि.). –a) द$_{1}$ धान्यानि, उ$_{1}$ ाादि- (→धान्यान्न-); का$_{1}$ दे$_{2}$ द$_{1}$ ग्र$_{2}$ उ$_{1}$ च (→तु); ते$_{1}$ ानामथ चौर्यं तु. –b) दे$_{10}$ द्विजोत्तमाः (→द्विजोत्तमः). ) ब$_{2}$ मुब. स (-स्व-); न$_{1}$ ग्र$_{2}$ उ$_{1}$ -गृहादैव -(→-गृहादेव). ) न$_{1}$ कृच्छ्रादेव (→कृच्छ्रार्धेन); ब$_{3}$ विनश्यति विशुध्यति).

४. दे$_{4}$. ⊙ (द्र. २ पा. वि); ते$_{1}$. d ⊙. –a) का$_{1}$ दे$_{3.10}$ न$_{1}$ ते$_{1}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ मुवें. मुए. मुब. भक्ष्य- भक्ष-); का$_{1}$ ब$_{2}$ दे$_{1.2.8.9}$ मुवें. मुए. मुब. -भोज्योप° -भोज्याप°). –b) ग्र$_{2}$ ध्यान- (→यान-); दे$_{1.8-10}$ ासनेषु, दे$_{6}$ -शय्याशनस्य (→-शय्यासनस्य). –c) म$_{1}$ वा च). –d) का$_{1}$ गव्यं चैव विशोधनं.

५. ते$_{1}$. ⊙; दे$_{4}$. ab ⊙ (द्र. २ पा. वि.); दे$_{3}$ bc ⊙. –a) उ$_{1}$ तृणकाष्ठप्रमाणं च. –b) उ$_{1}$ पुष्पाणां च गुडस्य च. –c) ब$_{1.3}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ चेल-, ब$_{2}$ दे$_{6}$ तैल-, दे$_{10}$ चल- (→चैल-); दे$_{4}$ तैलचर्माणि माखानां, न$_{1}$ चैलचर्मविषाणां च.

६. ते$_{1}$. ⊙. –b) द$_{1}$ ग्र$_{2}$ सुवर्ण-, उ$_{1}$ *** (→ताम्रस्य). –c) ब$_{2}$ अयः कांस्येपलानां च, दे$_{1.8-10}$ ग्र$_{2}$ मुवें. मुए. अयस्कान्तोपलानां च, दे$_{4}$ आयसांचोपलानां च. –d) दे$_{3}$ द्वादशानां (→द्वादशाहं); ब$_{1}$ दे$_{3}$ फलाशनं, ब$_{2}$ मुब. कणादनं दे$_{1.8.9}$ मुए. चरेन्निशं, दे$_{2}$ मुवें. काणाशनं, दे$_{10}$ पयः पिबेत्, द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ विशोधनं (→कणाशनं).

दे$_{10}$ पुस्तके b, c मध्ये अधिकम्—

* चलचर्मामिषाणां च त्रिरात्रं स्यादभोजनम् ।
तृणकाष्ठद्रुमाणां च शुष्कान्नस्य गुडस्य च । (=५cd, ab)

दे$_{4}$ पुस्तके b, c मध्ये अधिकम्—

* पुष्पमूलफलानां च पंचगव्यं विशोधनम् । (=४cd)

७. ब$_{1}$ दे$_{10}$. ⊙; ते$_{1}$. a ⊙. –a) का$_{1}$ कर्पासकीटयोर्नीनां, ब$_{2}$ कर्पासकीटऊर्णानां, दे$_{1.8.9}$ मुवें. मुए. क- (मुवें. मुए. का) र्पासस्यैव हरणे, दे$_{3}$ द्विपाच्चतुःपदानां च, दे$_{6}$ कार्प्पासकटिजीर्णानां, न$_{1}$ कार्पासस्य दुकूलस्य, द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ एतदेव व्रतं कुर्याद्. –b) दे$_{4}$ शफैकशफकस्य च. –c) दे$_{1.8.9}$ पुष्पं, न$_{1}$ क्षीर-, मुवें. मुए. मुब. पुष्प- (→पक्षि-); दे$_{3}$ पक्षिसंघौषधीनां च,+ पुष्पमूलफलानां च, द$_{1}$ ग्र$_{2}$ उ$_{1}$ पक्षिणामोषधीनां च. –d) का$_{1}$ बद्ध्वा च त्रिरपस्यपः, दे$_{1.8-10}$ मुवें. मुए. मुब. पिबेच्चैव त्र्यहं पयः, दे$_{3}$ पंचगव्यं विशोधनं,

वें.२.३४.८ नरमांसाशनं कृत्वा चान्द्रायणमथाचरेत् ।
काकं चैव तथा श्वानं जग्ध्वा हस्तिनमेव च ।
वराहं कुक्कुटं चाथ तप्तकृच्छ्रेण शुध्यति ।।८
क्रव्यादानां च मांसानि पुरीषं मूत्रमेव च ।
गोगोमायुकपीनां च तदेव व्रतमाचरेत् ।
उपोष्य द्वादशाहं तु कूष्माण्डैर्जुहुयाद् घृतम् ।।९
नकुलोलूकमार्जारं जग्ध्वा सांतपनं चरेत् ।
श्वापदोष्ट्रखराञ्जग्ध्वा तप्तकृच्छ्रेण शुद्ध्यति ।
व्रतवच्चैव संस्कारं पूर्वेण विधिनैव तु ।।१०
बकं चैव बलाकं च हंसं कारण्डवं तथा ।
चक्रवाकं प्लवं जग्ध्वा द्वादशाहमभोजनम् ।।११
कपोतं टिट्टिभं चैव शुकं सारसमेव च ।
उलूकं जालपादं च जग्ध्वाऽप्येतद् व्रतं चरेत् ।।१२
शिशुमारं तथा चाषं मत्स्यमांसं तथैव च ।
जग्ध्वा चैव कटाहारमेतदेव चरेद् व्रतम् ।।१३
कोकिलं चैव मत्स्यांश्च मण्डूकं भुजगं तथा ।
गोमूत्रयावकाहारो मासेनैकेन शुद्ध्यति ।।१४
जलेचरांश्च जलजान् प्रतुदान्नखविष्किरान् ।
रक्तपादांस्तथा जग्ध्वा सप्ताहं चैतदाचरेत् ।।१५
शुनो मांसं शुष्कमांसमात्मार्थं च तथा कृतम् ।

---

न1 रंधतश्च त्र्यहं पुनः, ते1 नीरजानां त्र्यहं पयः, द1 ग्र2 म1 उ1 हरेच्चापि त्र्यहं पयः.

अतः परं उ1 पुस्तके अधिकम्—

*कार्पासकीटजीर्णानां द्विशफैकशफस्य च । (=७ab)

८. द1 ग्र2 म1. c–f ⊙. –c) न1 शृंगालं वानरं श्वानं. –d) दे1.8-10 उ1 मुवें. मुए. मुब. वा (→च). –e) ब2 चैव, दे1.3.4.8-10 न1 ते1 मुवें. मुए. मुब. वाथ (→चाथ).

९. ब1. ⊙; द1 ग्र2 म1. abcd ⊙. –a) ब2.3 क्रव्यादां चैव, दे6 क्रव्यादांश्चैव (→क्रव्यादानां च). –b) ब2 दे1.8.9 न1 ते1 मुवें. मुए. मुब. वा (→च). –c) का1 दे2 °कपोतानां (→°कपीनां च). –e) दे1.8-10 मुवें. मुए. मुब. च (→तु). –f) दे3 कुशास्तं, दे4 कूष्माण्डं (→कूष्माण्डैर्).

दे1.8-10 मुवें. पुस्तकेषु d चरणानन्तरमधिकम्—

'शिशुमारं तथा चाषं मत्स्यमांसं तथैव च'

(=१३ ab)

दे3 पुस्तके ९d अनन्तरमधिकः पाठः—

* श्वापदोष्ट्रखराञ्जग्ध्वा तप्तकृच्छ्रेण शुद्ध्यति ।

(=१० cd)

१०. ब1. ef ⊙; दे3. cd ⊙. –a) मुवें. °मार्जारान् (→°मार्जारं). –cd) दे3. उपोष्य द्वादशाहंतु कूष्माण्डैर्जुहुयाद् घृतम् (=९ef). –e) दे1.3.4.8-10 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. प्रकुर्याच्चैव (→व्रतवच्चैव). –f) दे4 पूर्वे चैव तु यत्कृतम्.

११. –a) का1 दे2 बकीं, ग्र2 वलं, म1 वृकं (→बकं); दे1.8-10 बलाकां वा, मुवें. मुए. मुब. बलाकां च (→बलाकं च). –b) दे3 हंस-, उ1 हंसां (→हंसं); दे1.8-10 मुवें. मुए. मुब. कारंडवान् (→कारण्डवं). –c) ब2 चक्रवाकं वलं, ब3 चक्रवाकं नवं, दे1.4.8-10 मुवें. मुए. मुब. चक्रवाकप (दे10 °क) लं, दे6 चक्रवाकं लवं (→चक्रवाकं प्लवं); ते1 चक्रवाकं नरो जग्ध्वा.

१२. दे4. cd ⊙. –a) का1 दे4.8-10 न1 ते1 ग्र2 म1 उ1 मुवें. मुए. कपोत- (→कपोतं); दे1.8-10 मुवें. मुए. -टिट्टिभांश्चैव, द1 ग्र2 म1 उ1 -टिट्टिभं भासं (→टिट्टिभं चैव). –c) ते1 कुक्कुटं (→उलूकं); द1 ताल° (→जाल°); म1 वा (→च). –d) ब1 जग्ध्वा चैव व्रतं चरेत्.

१३. मुए. ⊙; दे1.4. ab ⊙. –a) का1 दे2.6 वीरं, ब1-3 चासं, दे3 चाश्वं, ते1 सारं (→चाषं). –c) दे3 कदाहारं (→कटाहारं); दे4 द1 ग्र2 म1 उ1 जग्ध्वा चैव वराहं च. –d) दे1.3.4.6.8-10 ते1 द1 ग्र2 म1 उ1 मुवें. मुब. एतदेव व्रतं चरेत्.

१४. –a) ब1 मत्स्यास्थान्, दे1.4.6.8-10 मुवें. मुए. मुब. मत्स्यादान्, ते1 मण्डूकं (→मत्स्यांश्च). –b) दे3 नकुलं (→भुजगं). –d) का1 मासेनैव विशुद्ध्यति.

अतः परं ब1 पुस्तके २३ संख्याकः श्लोकः समागतः.

१५. ब1. १५a–२२d ⊙. –a) दे3 जलजस्थलजानां तु. –b) का1 प्रमादान्नखविष्किरान्, ब2 दे1.8-10 न1 प्रतुदान् नखविष्किरान्, दे3 जग्ध्वा मांसं च पक्षिणाम्, दे4 जातुधानश्च विष्कलान्, द1 यातुधानान् विपाषिलान्, ग्र2 यातुधाना वि * षिलान्, म1 यातुधानकविष्किरान्, उ1 यातुधानी विकार्षिलान्, मुवें. मुए. मुब. प्रणुदानथ विष्किरान्. –d) ब2.3 दे2 ते1 सप्ताहं वै तदा (ते1 °था) चरेत्, दे4 सप्ताहं तत्तदाचरेत.

१६. ब1. ⊙. –a) का1 शुन-, ब2.3 शुनां, दे3 शुनां दे6 मूल-, ते1 द1 ग्र2 उ1 मृत-, म1 मृग- (→शुनो). –b)

जनम् ।त्वा मासं चरेदेतत् तत्पापस्यापनुत्तये ॥१६
च ।र्ताकं भूस्तृणं शिग्रुं खुखुण्डं करकं तथा ।
चरेत् ।नापत्यं चरेज्जग्ध्वा शङ्खं कुम्भीकमेव च ॥१७
च ।ण्डुं लशुनं चैव भुक्त्वा चान्द्रायणं चरेत् ।
व्रतम् ।लिकां तण्डुलीयं च प्राजापत्येन शुद्धयति ॥१८
तथा ।मान्तकं तथा पोतं तप्तकृच्छ्रेण शुद्धयति ।
चति ।जापत्येन शुद्धिः स्यात् कक्कुभाण्डस्य भक्षणे ॥१९
रान् ।राबुं किंशुकं चैव भुक्त्वा चैतद् व्रतं चरेत् ।

उदुम्बरं च कामेन तप्तकृच्छ्रेण शुद्धयति ॥२०
वृथा कृसरसंयावं पायसापूपसंकुलम् ।
भुक्त्वा चैवं विधं त्वन्नं त्रिरात्रेण विशुद्धयति ॥२१
पीत्वा क्षीराण्यपेयानि ब्रह्मचारी समाहितः ।
गोमूत्रयावकाहारो मासेनैकेन शुद्धयति ॥२२
अनिर्दशाहं गोक्षीरं माहिषं चाजमेव च ।
संधिन्याश्च विवत्सायाः पिबन् क्षीरमिदं चरेत् ॥२३
एतेषां च विकाराणि पीत्वा मोहेन मानवः ।  वें. २.३४.२२

---

10 आत्मार्थं (→आत्मार्थं); न1 च तदाकृतं, द1 ग्र2 उ1 वा ...कृतं, म1 च यथाक्रमं (→च तथाकृतं).

१७. ब1. ⊙. –a) दे3.10 मुवें. वृन्ताकं (→वार्त्ताकं); ...8-10 मुवें मूलकं, म1 भूगुञ्ज(मं), मुवें. मुब. भूस्तृणो →भूस्तृणं); ते1 वार्त्ताकिं श्वेतवार्त्ताकं, द1 चक्रवाकं कुंजरस्यं, ग्र2 ...ोतं कु*रं शिग्रुं, उ1 वार्त्ताकिं कृतमशिग्रु. –b) का1 कूष्माण्डं ...कं तथा, दे1.4.8.9 मुवें. मुए. मुब. कुट्ट(दे1 मुवें. मुए. मुब. °ट) चटकं (दे1.8 कवकं) तथा, दे2 रुरुंडं करकं तथा, दे3 ...कुटं कवकं तथा, दे10 कुन्दकं कंचकं तथा, न1 खुत्सुण्डं ...कं तथा, ते1 शिग्रकुम्भाण्डकंजकम्,+शिग्रकुम्भाण्डकं तथा, उ1 कुक्कु(उ1 °कु)टं जारकां (उ1 °कं) तथा, म1 कुक्कुटं ...कांस्तथा. –d) ब3 खंखं, दे1.4.8-10 मुए. खट्वां, दे3 मुवें. मुब. खङ्गं, ते1 खगं, द1 उ1 यद्वा, म1 कट्वां →शंखं); दे1.8.9 मुए. मुब. वा (→च).

१८. ब1. ⊙. –c) दे1.4 नालिकं, ते1 नालकां, द1 ...तिका, उ1 वार्त्तकं (→नालिकां); दे4 तण्डुलकं (→तण्डु...यं); ग्र2 वादिकाञ्चण्डुलीयां च, म1 चातक्यन्तुन्धलीयं च. ...d) दे4 प्राजापत्यं विशुद्धयति.

[अतः परं का1 पुस्तके २१a-२४b, दे2 पुस्तके २१-२३ ...लोकाः सन्ति । पाठान्तरं तत्रैव द्रष्टव्यम्.]

१९. ब1. ⊙. –a) ब2.3 दे6.8-10 न1 अश्मन्तकं, दे4 ...1 द1 ग्र2 म1 आश्मातकं (→अश्मान्तकं); दे1.8-10 न1 ...था पातं (दे1.10 °नं), द1 म1 ततोपेतं, ग्र2 तथोपेतं (→तथा ...ोतं). –b) दे1 तदा (→तप्त-). –d) दे1.8.9 मुवें. मुए. मुब. ...सुंभस्य च, दे3 ककुभस्य च, दे6 ककुभांडस्य, दे10 कुंकुमस्य* ...1 कुम्भाण्डस्य च, द1 कुभङ्गस्य*, ग्र2 ककुङ्मांगस्य, म1 ककुभं ...त्स्य-, उ1 ककुभांगस्य (→कक्कुभाण्डस्य); दे6 भोजने, दे10 ...क्षिणे (→भक्षणे).

[१९ श्लोकस्य b चरणानन्तरं दे4 पुस्तके २१a-२४d, ...न1 पुस्तके २१a-२३d श्लोकाः सन्ति].

२०. का1 ब1 दे2.4 न1. ⊙; दे3 म1. cd ⊙. –a) दे1 आलाबुं (→अलाबुं); दे6 किंशुके, द1 हंसुकं, उ1 लशुनं (→किंशुकम्). –b) दे1.3.8-10 ग्र2 म1 उ1 भुक्त्वाप्ये-, दे6 भुक्त्वा वै, द1 भुक्त्वा ह्ये- (→भुक्त्वा चै-). –c) दे1.8-10 मुए. कालेन (→कामेन).

[२० श्लोकस्य b चरणानन्तरं म1 पुस्तके २१-२४, द1 पुस्तके २३-२४, ब1 दे2 न1 मुवें. पुस्तकेषु २४ का1 पुस्तके २४ cd, दे1.8-10 मुए. पुस्तकेषु २४ ab संख्याकाः श्लोकाः समागताः सन्ति । एतेषां पठान्तराणि तत्तत् स्थानेषु द्रष्टव्यम्]

२१. ब1. ⊙; दे1.8-10 मुए. २१a–२४b ⊙; द1. २१–२२ ⊙; मुवें. २१-२३ ⊙. –b) का1 दे2 म1 पायसं (→पायसा-); का1 -शसकुली, ब3 दे4 न1 -शष्कुलं, दे3 म1 -शष्कुलोः, दे6 संष्कुलं, ग्र2 उ1 -शष्कुलीन् (→-संकुलम्). –c) ब3 दे6 चैव, (→चैवं); ब3 म1 विधिं (→-विधं); ब3 दे6 मुब. त्वन्यत्, न1 त्वन्यं, ग्र2 तत्र, म1 कृत्स्नं (→त्वन्नं); दे4 भुक्त्वा चैव विधुन्वं वा, उ1 भुक्त्वा वेदविधिं तत्र.

२२. ब1.2 दे1.8-10 द1 मुवें. मुए. ⊙. –d) दे3 मासेनैव विशुध्यति, ग्र2 उ1 मासार्द्धेन विशुध्यति, म1 मासेनैव तु शुध्यति.

२३. ब1. दे1.8-10 मुवें. मुए. ⊙. –a) दे3 ग्र2 म1 अनिर्द(ग्र2 °दि)शायाः गोक्षीरं, उ1 अनिर्दिशगोक्षीरन्तु. –b) दे3 त्वाजमेव, दे6 म1 वाजमेव, ग्र2 वाक्षमेव (→चाजमेव). –c) ब3 गर्भिण्यांश्च (→सन्धिन्याश्च). –d) दे3 पीत्वा कृच्छ्रमिदं चरेत्, दे4 द1 म1 उ1 पीत्वा पक्षमिदं चरेत्, दे6 पिवक्षीरमिदं चरेत्, न1 विप्रः पक्षमिदं चरेत्.

२४. न1. ⊙; दे1.8-10 मुए. cd ⊙. –a) का1 दे2 विकाराणां (→विकाराणि). –b) ब3 होमेन (→मोहेन); दे1-4.8-10 द1 ग्र2 म1 उ1 मुवें. मुए. वा पुनः (→मानवः). –c) दे2 पावका° (→यावका°).

बं.२.३३.२४ गोमूत्रयावकाहारः सप्तरात्रेण शुद्धयति ॥२४
भुक्त्वा चैव नवश्राद्धे मृतके सूतके तथा ।
चान्द्रायणेन शुद्धयेत ब्राह्मणस्तु समाहितः ॥२५
यस्याग्नौ हूयते नित्यं न यस्याग्रं न दीयते ।
चान्द्रायणं चरेत् सम्यक् तस्यान्नप्राशने द्विजः ॥२६
अभोज्यानां तु सर्वेषां भुक्त्वा चान्नमुपस्कृतम् ।
अन्तावसायिनां चैव तप्तकृच्छ्रेण शुद्धयति ॥२७
चाण्डालान्नं द्विजो भुक्त्वा सम्यक् चान्द्रायणं चरेत् ।
बुद्धिपूर्वं तु कृच्छ्राब्दं पुनः संस्कारमेव च ॥२८
असुरामद्यपानेन कुर्याच्चान्द्रायणव्रतम् ।
अभोज्यान्नं तु भुक्त्वा च प्राजापत्येन शुद्धयति ॥२९
विण्मूत्रप्राशनं कृत्वा रेतसश्चैतदाचरेत् ।
अनादिष्टेषु चैकाहं सर्वत्र तु यथार्थतः ॥३०
विड्वराहखरोष्ट्राणां गोमायोः कपिकाकयोः ।
प्राश्य मूत्रपुरीषाणि द्विजश्चान्द्रायणं चरेत् ॥३१
अज्ञानात् प्राश्य विण्मूत्रं सुरासंस्पृष्टमेव च ।
पुनः संस्कारमर्हन्ति त्रयो वर्णा द्विजातयः ॥३२
क्रव्यादां पक्षिणां चैव प्राश्य मूत्रपुरीषकम् ।
महासांतपनं मोहात् तथा कुर्याद् द्विजोत्तमः ।
भासमण्डूककुररे विष्किरे कृच्छ्रमाचरेत् ॥३३
प्राजापत्येन शुद्धयेत ब्राह्मणोच्छिष्टभोजने ।
क्षत्रिये तप्तकृच्छ्रं स्याद् वैश्ये चैवातिकृच्छ्रकम् ।

---

अतः परं ते1 पुस्तके अधिकम्—
प्राजापत्येन शुद्धिः स्यात् कूष्माण्डस्य च भक्षणे । (=१९cd)

**२५.** दे3. ab ⊙. –a) ब2.3 दे6 न1 नवश्राद्धं (→नवश्राद्धे). –b) ब2.3 दे2.6 द1 ग्र2 उ1 सूतके मृतकेऽपि वा. –d) दे1.8-10 न1 मुवें. मुए. मुब. ब्राह्मणः सुसमाहितः.

**२६.** ब1. ⊙. –a) दे3 होमाग्नौ, न1 यज्ञाग्नौ, द1 उ1 यस्य यद् (→यस्याग्नौ); दे4 श्रूयते (→हूयते); ब2 सम्यक् (→नित्यं). –b) का1 न यस्याग्रे प्रदीयते, ब1 * यस्याग्रं प्रदीयते, ब3 न यस्यान्नं प्रदीयते, दे1.3.8-10 मुवें. मुए. मुब. अन्नस्याग्रं न दीयते, दे4 न यस्याग्रेण दीयते, न1 न यस्याग्रं प्रणीयते, ते1 तस्यान्नं चेन्न दीयते. –c) दे3 चान्द्रायणं चरेदस्य. –d) द1 म1 तस्यान्नं प्राशयेद् द्विजः.

**२७.** ब1.cd ⊙. –a) न1 च (→तु); दे1.3.8-10 मुवें. मुए. मुब. अभोज्यान्नं तु सर्वेषां. –b) न1 उपस्मृतं (→उपस्कृतं); दे4 भुक्त्वा ह्यात्मा सुसंयतं, म1 भुक्त्वा चान्नमसत्कृतं. –c) का1 ते1 अन्ते, दे3.6 द1 ग्र2 म1 अन्त्या° (→अन्ता°). –d) द1 ग्र2 म1 उ1 तप्तकृच्छ्रमुदाहृतं.

**२८.** ब1. ⊙. –a) का1 चण्डालानां, ब2 दे1.3.8-10 न1 ते1 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. चण्डालान्नं, ब3 चाण्डालत्वं, दे4 चाण्डालानां (→चाण्डालान्नं). –c) दे4 बुद्धिपूर्वं त्वब्दकृच्छ्रं, द1 भक्तिपूर्वं तु कृच्छ्राब्दं, ग्र2 बुद्धि(वृद्धि) पूर्वं तु कृच्छ्राब्दं. –b) का1 ब3 दे2.4.6 न1 ते1 पुनः संस्कार एव च, दे3 उ1 पुनः संस्कारमर्हति.

**२९.** ब1. ab⊙; दे4 द1.cd ⊙. –a) ब2 दे4 ते1 °पाने तु, द1 ग्र2 म1 °पाने च (→°पानेन); ब3 सुरामद्यस्य पानेन, दे3 सुरासमस्य पानेन, ग्र2 आसवामद्यपानेन, म1 ससुरामद्यपानेन. –b) ब2.3 दे2.4 चान्द्रायणं (→चान्द्रायण-). –c) ब1.3 दे1.8-10 न1 म1 उ1 उक्त्वा तु (→भुक्त्वा च); दे6 अभोज्यानां तु भुक्त्वा च.

**३०.** द1. ⊙; ब1 ग्र2 म1. cd ⊙. –b) दे4 रेतसश्च-तदाचरेत्, ग्र2 म1 उ1 चरेच्चान्द्रायणत्रयं. –c) का1 अनादिष्टे च, दे1.8-10 न1 उ1 मुवें. मुए. मुब. अनादिष्टे तु, दे4 अन्यादिष्टेषु, ते1 अन्यादिष्टिषु (→अनादिष्टेषु); दे4 चैवाहं (→चैकाहं). –d) ते1 सर्वं तत्र यथार्थवत्.

**३१.** –a) ते1 °खरोष्ट्राश्व- (→°खरोष्ट्राणां); दे2 विड्वासहा खरोष्ट्राणां –b) दे4 पिक° (→कपि°).

**३२.** ब1. ⊙. –a) ब3 अज्ञानात्प्राश्य विवर्स. –b) न1 ते1 °संसृष्ट°, ग्र2 °संस्पृश° (→°संस्पृष्ट°).

**३३.** ब1. ⊙; का1. a-d⊙; मुए. ef ⊙. –a) दे1.8.9 क्रव्यादान्, उ1 क्रव्यादं (→क्रव्यादां); दे6 पाक्षिणं (→पक्षिणां); दे4 ते1 क्रव्यादपक्षिणां चैव, ग्र2 क्रव्यादानां पक्षिणां चैव. –b) दे3 मूत्रं (→मूत्र-). –c) ब2.3 दे6 °शान्तपनं, ग्र2 °सतापनं (→°सांतपनं); द1 ग्र2 म1 उ1 कुर्यात् (→मोहात्); दे2 गवां महासांतपनं. –d) ब2.3 दे6 न1 ते1 कृत्वा (→तथा); दे4 मोहात् (→कुर्यात्); द1 ग्र2 म1 उ1 तेषां मोहाद् द्विजात (उ1 °द) यः. –e) का1 दे3 °कुवरे (दे3 °र), ब2.3 द1 म1 उ1 °कुरर-, दे6 न1 °कुरवो, दे1 ग्र2 कुकुरे (ग्र2 °र) (→°कुररे). –f) का1 उ1 विकि (का1 °क) रे, दे1 विष्करे (→विष्किरे).

**३४.** दे4 मुए. ⊙; बं1. abcd ⊙; द1 ग्र2 म1 उ1 ef. ⊙. –a) ब2.3 दे2.6 शुद्धयेतु (→शुद्धयेत). –b) द1 °भोजनः

वैतदाचरेत् ।
यथार्थतः ।।३०
पिकाकयोः ।
यणं चरेत् ।।३१
टमेव च ।
द्विजातयः ।।३२
रीषकम् ।
जोत्तमः ।
माचरेत् ।
भोजने ।
च्छ्रकम् ।

कुर्याच्चान्द्रायणव्रतम् ।।३४
त्वा चान्द्रायणं चरेत् ।
श त्रिरात्रेण विशुद्ध्यति ।
ातशेषं च रागवान् ।।३५
ताः प्राशयेद् यदा ।
व्रतं पापविशोधनम् ।।३६
दि ज्ञानात् पिबेज्जलम् ।
च्छ्र ब्राह्मणः पापशोधनम् ।।३७
ालेन तु संस्पृष्टं पीत्वा वारि द्विजोत्तमः ।
त्रेण विशुद्ध्येत पञ्चगव्येन चैव हि ।।३८

महापातकिसंस्पर्शे भुङ्क्तेऽस्नात्वा द्विजो यदि ।
बुद्धिपूर्वं तु मूढात्मा तप्तकृच्छ्रं समाचरेत् ।।३९
स्पृष्ट्वा महापातकिनं चाण्डालं वा रजस्वलाम् ।
प्रमादाद् भोजनं कृत्वा त्रिरात्रेण विशुद्ध्यति ।।४०
स्नानार्हो यदि भुञ्जीत अहोरात्रेण शुद्ध्यति ।
बुद्धिपूर्वं तु कृच्छ्रेण भगवानाह पद्मजः ।।४१
शुष्कपर्युषितादीनि गवादिप्रतिदूषितम् ।
भुक्त्वोपवासं कुर्वीत कृच्छ्रपादमथापि वा ।।४२
संवत्सरान्ते कृच्छ्रं तु चरेद् विप्रः पुनः पुनः ।
अज्ञातभुक्तशुद्ध्यर्थं ज्ञातस्य तु विशेषतः ।।४३ वें.२.३४.४३

---

भोजनात्, उ1 °भोजनं (→°भोजने). –d) ते1 वैश्ये →चान्द्राय च्छ्रकं. –f) ब1 कामात्, ते1 चरेत् (→कुर्याद्); का1 (→भुक्त्वा ते1 चान्द्रायणं (→चान्द्रायण-); ब1 चरेत् (→व्रतं).

३५. दे10 मुए. ⊙; दे3.4 ab ⊙; ब1. cdef ) दे4 रेतस –a) ब1 चापि, दे6 वापि (→वारि); दे1 8.9 सुराया –c) के वारि, ते1 सुरा भाण्डोद्ध (द) रे वारि, द1 ग्र2 म1 अनादिष्टे राभाण्डोदकं वापि (ग्र2 पीत्वा). –b) ग्र2 चान्द्रायण- दे4 चैव रेत्. –c) ब2 दे4.6 न1 ग्र2 म1 स्वमुच्छिष्टं, दे1.8.9 1 समुच्छिष्टं (→शुनोच्छिष्टं). –f) ब2.3 दे6.10 ते1 मुब. वा गवां, दे1.8.9 वा गर्मं, न1 वा जलं, द1 ग्र2 म1 राणां); उ1 पालयः (→रागवान्); दे3 पतिशेषं च पावनम्.

३६. ब1 मुए. ⊙. –a) दे4.10 ते1 द1 ग्र2 आपो वसं. –b आपो). का1 ह्रषितान्, दे1.8-10 दूषितैः, ते1 भक्षिता दूषिताः); का1 मदा, दे1.8-10 द1 ग्र2 म1 उ1 मुवें. मुए. a) दे1.8.9 यदि, दे2 मदा, ते1 सदा (→यदा). –c) दे4 तथा पक्षिणां); ा); का1 ब2.3 दे6 शान्तपनं (→सांतपनं); दे1.3.4.8-10 णां चैव. ए. मुब. कृच्छ्रं, द1 ग्र2 म1 उ1 कुर्याद् (→प्रोक्तं) –d) नं, ग्र2 म1 उ1 काय-(→पाप-); ब3. -विनाशनं (→-विशोधनं); मोहात्); पापविशोधनम्.

कृत्वा का1 दे6. ⊙. –a) ब2.3 दे3 द1 ग्र2 म1 उ1 1 तेषां (→चाण्डाल-); दे1.3.8-10 मुए. मुब. °कूपे, ते1 3 °र), →कूप-); न1 चाण्डालकूपभोगेषु. –b) ब1-3 दे2 ते1 कुकुरे दे3 यदाज्ञानात्, दे4.10 न1 द1 म1 यदज्ञानात् ) रे, नात्).

1 ef. दे1. ab ⊙; म1. cd ⊙. –a) ब1.2 दे1-3.6 जनः न: चण्डालेन (→चाण्डालेन); दे3.4 द1 ग्र2 उ1 च संस्पृश्य, न1 यं सृष्टं (→संस्पृष्टं). –b) ब2

पिबेद् वारि, दे3 पीत्वा चापि (→पीत्वा वारि). –c) दे3.6 न1 विशुध्येत्तु (→विशुद्ध्येत); दे1.8-10 मुवें. मुए. मुब. त्रिरात्र-व्रतमुख्येन. –d) दे1.8-10 मुवें. मुए. मुब. शुध्यति (→चैव हि).

३९. म1. ab ⊙. –a) दे4 न1 द1 ग्र2 उ1 °पातक° (→°पातकि°). –b) का1 दे1.4.8-10 द1 मुवें. मुए. मुब. भुक्त्वा- (→भुङ्क्ते-); द1 ग्र2 उ1 द्विजोत्तमः (→द्विजो यदि). –c) ब2 बुद्धिपूर्वमुतान्धोऽपि, दे1.8-10 मुवें. मुए. बुद्धिपूर्वं यदा मोहात्.

४०. –a) ग्र2 उ1 दृष्ट्वा (→स्पृष्ट्वा); दे1 स्पृष्ट्वा मोहात् पातकिनं, न1 स्पृष्ट्वा पातकिनं विप्रं. –b) दे1.4.8.9 न1 चण्डालं (→चाण्डालं); मुवें. मुए. च (→वा); दे6 रजस्वलं (→रजस्वलां).

४१. ब1. ⊙; का1 दे4 ते1 ab. ⊙. –b) ब3 दे2.6 न1 त्वहो-, दे1.8.9 मुवें. मुए. मुब. ह्यहो- (→अहो-). –c) दे6 बुद्धिपूर्वं तु मृच्छेत्सा. –d) दे6 तप्तकृच्छ्रंसमाचरेत, न1 भगवानागजात्मजः

अतः परं दे6 अधिकम् :—

*स्पृष्ट्वा महापातकिनं भगवानाह पङ्कजः । ( = ४०a, ४१d)

४२. ब1. ⊙. –a) ब2.3 न1 द1 म1 शुक्त-, दे1.8-10 मुवें. मुए. मुब. भुक्त्वा, दे3 भुक्त- (→शुष्क-). –b) ब3 उ1 °दूषितः, दे1.8-10 मुवें. मुए. °दूषिताः, न1 °दूषकं (→°दूषितं). –d) द1 ग्र2 कृच्छ्रा (द1 °च्छ्र) चारमथापि वा.

४३. ब1. ⊙. –a) द1 ग्र2 म1 उ1 संवत्सरं तु कुर्वीत. –b) का1 ते1 चरन् विप्रः पुनः पुनः. –c) दे3 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. अज्ञान- (→अज्ञात-); द1 म1 उ1 °भुक्ति-, ग्र2 °बुद्धि- (→°भुक्त-); दे10 अज्ञातश्च तु शुध्यर्थं, ते1 अज्ञानतस्तु शुद्धयर्थं. –d) द1 ग्र2 उ1 अज्ञातस्य विशुद्धये.

वे.२.३४.४४ व्रात्यानां यजनं कृत्वा परेषामन्त्यकर्म च ।
अभिचारमहीनं च त्रिभिः कृच्छ्रैर्विशुद्धयति ।।४४
ब्राह्मणादिहतानां तु कृत्वा दाहादिकाः क्रियाः ।
गोमूत्रयावकाहारः प्राजापत्येन शुद्धयति ।।४५
तैलाभ्यक्तोऽथवा कुर्याद् यदि मूत्रपुरीषके ।
अहोरात्रेण शुद्धयेत श्मश्रुकर्म च मैथुनम् ।।४६
एकाहेन विवाहाग्निं परिहार्य द्विजोत्तमः ।
त्रिरात्रेण विशुद्धयेत त्रिरात्रात् षडहं पुनः ।।४७
दशाहं द्वादशाहं वा परिहार्य प्रमादतः ।
कृच्छ्रं चान्द्रायणं कुर्यात् तत्पापस्यापनुत्तये ।।४८
पतिताद् द्रव्यमादाय तदुत्सर्गेण शुद्धयति ।
चरेत् सांतपनं कृच्छ्रमित्याह भगवान् प्रभुः ।।४९
अनाशकनिवृत्तास्तु प्रव्रज्यावसितास्तथा ।
चरेयुस्त्रीणि कृच्छ्राणि त्रीणि चान्द्रायणानि च ।।५०
पुनश्च जातकर्मादिसंस्कारैः संस्कृता द्विजाः ।
शुद्धयेयुस्तद् व्रतं सम्यक् चरेयुर्धर्मवर्द्धनाः ।।५१
अनुपासितसंध्यस्तु तदहर्यापको वसेत् ।
अनश्नन् संयतमना रात्रौ चेद् रात्रिमेव हि ।।५२
अकृत्वा समिदाधानं शुचिः स्नात्वा समाहितः ।
गायत्र्यष्टसहस्रस्य जप्यं कुर्याद् विशुद्धये ।।५३

---

अतः परं अधिकम् :—
दे1-9.10 व्यास उवाच; दे8 व्यास उ.; ते1 व्यासः.

४४. ब1. ⊙. –a) द1 संस्कारहीना यजनं. –b) का1 सत्य-, दे3 सभ्य-, ग्र2 अन्य-, म1 अन्त- (→अन्त्य-); द1 ग्र2 -कर्मणि (→कर्म च); ते1 परोक्षे मध ? (द) कर्म वा. –c) ब2 दे8.9 अभिचारमहीनां च, ते1 अभिवादनहीनं च.

४५. –a) द1 ग्र2 ब्राह्मणाभि-, म1 उ1 ब्राह्मणानां (→ब्राह्मणादि-); ब1 -मृतानां (→-हतानां); दे10 च (→तु). –b) दे6 दाहादिकीः, ते1 दानादिकीः, दे1.3.8-10 न1 द1 ग्र2 म1 मुवें. मुए. मुब. दाहादिकं (→दाहादिकाः).

४६. –a) दे1.3.8-10 मुवें. मुए. मुब. तैलाभ्यक्तोऽथवान्तो वा, ते1 तैलाभ्यङ्गे तथा कुर्याद्, द1 म1 तैलाभ्यक्तः प्रयातो वा, ग्र2 तैलसक्ता प्रयातो वा, उ1 तैलाभ्यक्तः प्रयाते वा. –b) दे1.3.8-10 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. कुर्याद् (→यदि); ब1 न1 °पुरीषकं (→°पुरीषके). –d) ब2.3 श्मश्रुकर्मा (ब3°र्म) णि मैथुनं, दे1.3.8-10 द1 ग्र2 म1 मुवें. मुए. मुब. श्मश्रुकर्मणि मैथुने.

४७. –a) द1 ग्र2 म1 एकाहे तु (→एकाहेन); दे1.8-10 मुवें. मुए. विहाया° (→विवाहा°). –b) दे1.8.9 परिहाप्यो, दे10 परिहाय, न1 परिभाव्यं, ते1 परिहीयन्, द1 ग्र2 उ1 मुवें. मुए. परिहाप्य (→परिहार्य). –c) दे3 विशुद्धयेत्तु (→विशुद्धयेत). –d) ब1 षड्हः (→षडहं); दे1.8-10 मुवें. मुए. मुब. त्रिरात्रात् षडहः परं, दे4 त्रिरात्रं वाडहं पुनः, ते1 त्रिर्वाथ षहं पुडनः.

४८. –a) दे3 दशाहं वा द्वादशाहं, न1 षडहा द्वादशाहं वा, द1 ग्र2 म1 दशाहे द्वादशाहे वा, उ1 दशाहे द्वादशे वापि. –b) दे1.3.8.9 उ1 मुवें. मुए. परिहाप्य, दे10 परिहाय, न1 परिभाव्य, ग्र2 परिहास्य, ते1 परिहीयन् (→परिहार्य). –c) ब1 कृच्छ्रचान्द्रायणे कुर्यात्. –d) दे1.3.4.8-10 मुवें. मुए. मुब. तत्पापस्योपशान्तये.

४९. ब1. ⊙. –a) ते1 उ1 पतित (उ1 °तं) द्रव्यमादाय. –c) दे1.3.8-10 न1 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. चरेच्च विधिना कृच्छ्रं. –d) दे1.8-10 मुवें. मुए. मुब. मनुः (→प्रभुः).

५०. ब1 दे3. ⊙. –a) का1 ब2.3 दे1.4.6.8-10 न1 ते1 ग्र2 मुवें मुए. मुब. अनाशकद्, म1 अनायक- (→अनाशक-); दे1.8-10 मुवें. मुए. मुब. निवृत्तस्तु, ते1 -निवृत्ताश्च, ग्र2 -निवृत्तात्तु (→-निवृत्तास्तु). –b) ब2 ग्र2 प्रवृत्ता-, ब3 प्रवृत्या- (→प्रव्रज्या-); ते1 प्रवध्नोपशितास्तथा, म1 प्रव्रज्या पतितास्तथा. –c) का1 चरेयुस्त्रीनतिकृच्छ्राणि, दे6 चरेयुस्त्रीनि कृच्छ्राणि, दे10 चरेत्तु त्रीणि कृच्छ्राणि, उ1 चरेद्द्वित्रीणि कृच्छ्राणि. –d) का1 ब2 दे2 तु (→च).

५१. ब1 दे3. ⊙ –a) ते1 °कर्माणि (→°कर्मादि-). –b) दे4 संस्कृतैर्द्विजैः, ग्र2 स्वकृत्य द्विजाः (→संस्कृता द्विजाः). –c) ब2 शुद्धेस्तु, दे10 शुद्धये, ते1 शुद्धिः स्यात् (→शुद्धयेयुस्). –d) दे1.4.8-10 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. °दर्शिनः, न1 °नैपुणं (→°वर्धनाः).

५२. ब1. ⊙; ब3. cd ⊙. –a) ब3 दे2 मुब. जारको, दे1.8.9 मुवें. मुए. यावके (दे8.9 °क), दे4 व्यापको, न1 म1 ज्ञापको (→यापको); दे1.8-10 मुवें. मुए. भवेत् (→वसेत्); द1 तदहर्ज्यापकं वसेत्, ग्र2 तं व्यापक वशेषतः, उ1 तदहर्वाप्यपो विशेत्. –d) म1 च (→हि).

५३. ब1.3 दे3. ⊙. –b) ब2 शुद्धः (→शुचिः). –d) दे4.10 ते1 म1 उ1 जपं (→जप्यं); का1 दे2.6 विशुद्धति (→विशुद्धये); ब2 जपं कृत्वा विशुध्यति.

उपासीत न चेत् संध्यां गृहस्थोऽपि प्रमादतः ।
स्नात्वा विशुद्धयते सद्यः परिश्रान्तस्तु संयमात् ।।५४
वेदोदितानि नित्यानि कर्माणि च विलोप्य तु ।
स्नातकव्रतलोपं तु कृत्वा चोपवसेद् दिनम् ।।५५
संवत्सरं चरेत् कृच्छ्रमग्न्युत्सादी द्विजोत्तमः ।
चान्द्रायणं चरेद् व्रात्यो गोप्रदानेन शुद्धयति ।।५६
नास्तिक्यं यदि कुर्वीत प्राजापत्यं चरेद् द्विजः ।
देवद्रोहं गुरुद्रोहं तप्तकृच्छ्रेण शुद्धयति ।।५७
उष्ट्रयानं समारुह्य खरयानं च कामतः ।
त्रिरात्रेण विशुद्धयेत् तु नग्नो वा प्रविशेज्जलम् ।।५८
षष्ठान्नकालतामासं संहिताजप एव च ।
होमाश्च शाकला नित्यं अपाङ्क्तानां विशोधनम् ।।५९
नीलं रक्तं वसित्वा च ब्राह्मणो वस्त्रमेव हि ।
अहोरात्रोषितः स्नातः पञ्चगव्येन शुद्धयति ।।६०
वेदधर्मपुराणानां चण्डालस्य तु भाषणे ।
चान्द्रायणेन शुद्धिः स्यान्न ह्यन्या तस्य निष्कृतिः ।।६१
उद्बन्धनादिनिहतं संस्पृश्य ब्राह्मणः क्वचित् ।
चान्द्रायणेन शुद्धिः स्यात् प्राजापत्येन वा पुनः ।।६२
उच्छिष्टो यद्यनाचान्तश्चाण्डालादीन् स्पृशेद् द्विजः ।
प्रमादाद् वै जपेत् स्नात्वा गायत्र्यष्टसहस्रकम् ।।६३
द्रुपदाना शतं वापि ब्रह्मचारी समाहितः ।
त्रिरात्रोपोषितः सम्यक् पञ्चगव्येन शुद्धयति ।।६४ वें.२.३४.६४

५४. व1 दे10. ⊙; ब3. ab ⊙. –a) ब2 उपासीनश्चरेत्संध्यां, दे1.4.8-10 मुवें. मुए. मुब. उपवासो चरेत्संध्यां, ते1 उपासीत चरेत्संध्यां. –b) का1 दे1.3.4.8-10 द1 मुवें. मुए. मुब. गृहस्थो हि (→गृहस्थोऽपि). –c) द1 उ1 नद्यः (द1 °द्यः) (→सद्यः); ग्र2 स्नात्वा विशुद्धये नद्याः. –d) दे1.8-10 मुवें. मुए. मुब. परिश्रान्तश्च, दे6 परिग्रावस्तु, न1 परिश्रान्तस्तु, द1 ग्र2 उ1 परिस्रोतस्सु (→परिश्रान्तस्तु); दे1.8-10 मुवें. मुए. संयतः (→संयमात्); म1 चरित्वा प्राणसंयमात्.

५५. ब1. ⊙. –a) द1 ग्र2 म1 उ1 वैदिकानि च नित्यानि. –b) दे3.4 य (→तु). –c) का1 दे1.8-10 न1 ग्र2 म1 मुवें. मुए. मुब. स्नातको (→स्नातक-); ब2 लोपे (→-लोपं). –d) ब3 कुर्यात् (→कृत्वा).

५६. ब1. ⊙. –b) का1 अग्न्यहोमे, दे4 अग्न्युच्छेदी, न1 अग्निमांस्तु, ग्र2 म1 अग्न्युच्छेदे, मुब. अन्योत्सादी (→अग्न्युत्सादी); का1 दे1.8.9 द्विजोत्तमाः, दे4.6 द्विजोत्तम (→द्विजोत्तमः).

अतः परं ते1 पुस्तके २१-२४ श्लोकाः समागताः सन्ति, पाठान्तरं तत्रैव द्रष्टव्यम् ।

५७. ब1. ⊙. –a) दे1.8.9 नास्तिकं, द1 ग्र2 म1 उ1 नास्तिक्याद् (→नास्तिक्यं); म1 प्रति (→यदि).

५८. ब1. ⊙. ब3 न1 पुस्तकयोरयं पाठः ६० श्लोकानन्तरमागतः. –a) दे10 °योनि (→°यानं). –c) ब2 दे4.10 ते1 द1 ग्र2 म1 उ1 विशुध्येत, दे1.8.9 मुवें. मुए. मुब. विशुद्धयेच्च (→विशुध्येत्तु). –d) ते1 प्रविशन् (→प्रविशेत्).

५९. का1 ब1.2 दे2.3.6 ते1. पुस्तकेषु ५९-६० श्लोकौ ५७ श्लोकानन्तरमागतौ. –a) का1 मौनं (→मासं); ब3 षष्ठान्नकर्षितं मासं, दे4 षष्ठान्नकाले चामान्नं, म1 षष्ठान्नकालस्तपसा. –b) द1 ग्र2 म1 उ1 वा (→च). –c) का1 ब2 दे2.6 ते1 होमश्च (→होमाश्च); का1 सकलो, ब2 दे2 साकलो (→शाकला); दे6 ते1 होमाश्च शाकुला नित्यं, द1 भानोश्च सकला नित्यं, म1 भानोश्चांशुकला नित्यं. –d) का1 ब2.3 दे2.6 ते1 मुवें. अयाज्यानां, दे1.8-10 न1 ग्र2 उ1 मुए. मुब. अपङ्क्त्यानां, द1 म1 अपक्वानां (→अपाङ्क्तानां); दे2 विशोषणं (→विशोधनं); दे4 अपाङ्क्तानां विशेषतः.

६०. –a) का1 दे2.4.6 न1 ते1 द1 म1 नील-, ब2 नीलीं (→नीलं); ते1 उषित्वा (→वसित्वा); ब3 दे3 न1 द1 ग्र2 म1 उ1 तु (→च). –b) दे4 च (→हि). –c) दे3 अहोरात्रोषितो भूत्वा, ग्र2 अहोरात्रोषितं स्नातो.

६१. ब1. ⊙; द1. cd ⊙. –a) ब3 दे3 देव- (→वेद-); ग्र2 उ1 -पुराणं च (→-पुराणानां). –b) दे2.4.6 चाण्डालस्य (→चण्डालस्य); का1 दे2.4 च (→तु) द1 ग्र2 म1 उ1 भाषणं (→भाषणे). –d) का1 दे2 न ह्यन्या निः कृतिः क्वचित्, ते1 नान्यथा तस्य निष्कृतिः.

६२. ब1. ⊙; द1. ab ⊙. –b) न1 म1 मुवें. मुए. ब्राह्मणं (→ब्राह्मणः).

६३. ब1. ⊙; ग्र2. ab ⊙. –a) ब3 उच्छिष्टस्य नाचान्तश्, ते1 उच्छिन्ने जवनानां तु, द1 ग्र2 म1 उ1 उच्छिष्टो यदि नाचान्तश्. –b) दे4 द1 चाण्डालादि (→चाण्डालादीन्); का1 चाण्डालादौ यदा स्पृशेद्. –c) का1 दे2.6 प्रमादाद्धि-, ब2 प्रमादेन, ब3 प्रमादाद्धि, दे3 प्रमादाद्वा (→प्रमादाद्वै); द1 म1 प्रमादाच्च द्विजः स्नात्वा.

६४. ब1 ग्र2. ⊙. –a) ब3 दे2-4 उ1 चापि (→वापि). –c) ब3 त्रिरात्रोपासित सम्यक्.

वें.२.३४.६५ चण्डालपतितादींस्तु कामाद् यः संस्पृशेद् द्विजः।
उच्छिष्टस्तत्र कुर्वीत प्राजापत्यं विशुद्धये ।।६५
चाण्डालसूतकशवांस्तथा नारीं रजस्वलाम् ।
स्पृष्ट्वा स्नायाद् विशुद्धयर्थं तत्स्पृष्टं पतितं तथा ।।६६
चाण्डालसूतकशवैः संस्पृष्टं संस्पृशेद् यदि ।
प्रमादात् तत आचम्य जपं कुर्यात् समाहितः ।।६७
तत्स्पृष्टस्पर्शिनं स्पृष्ट्वा बुद्धिपूर्वं द्विजोत्तमः ।
आचमेत् तद् विशुद्धयर्थं प्राह देवः पितामहः ।।६८
भुञ्जानस्य तु विप्रस्य कदाचित् संस्रवेद् गुदम् ।
कृत्वा शौचं ततः स्नायादुपोष्य जुहुयाद् घृतम् ।।६९
चाण्डालान्त्यशवं स्पृष्ट्वा कृच्छ्रं कुर्याद् विशुद्धये ।
स्पृष्ट्वाऽभ्यक्तस्त्वसंस्पृश्यमहोरात्रेण शुद्धयति ।।७०
सुरां स्पृष्ट्वा द्विजः कुर्यात् प्राणायामत्रयं शुचिः ।
पलाण्डुं लशुनं चैव घृतं प्राश्य ततः शुचिः ।।७१
ब्राह्मणस्तु शुना दष्टस्त्र्यहं सायं पयः पिबेत् ।
नाभेरूर्ध्वं तु दष्टस्य तदेव द्विगुणं भवेत् ।।७२
स्यादेतत् त्रिगुणं बाह्वोर्मूर्ध्नि च स्याच्चतुर्गुणम् ।
स्नात्वा जपेद् वा सावित्रीं श्वभिर्दष्टो द्विजोत्तमः।।७३

---

६५. ग्र2. ab ⊙. –a) का1 ब2.3 दे1.3.6.8-10 मुवें. मुए. मुब. चाण्डाल° (→चण्डाल°); दे1.8-10 मुए. मुब. च (→तु). –b) दे6 कामाक्षः, द1 म1 उ1 कामतः (→कामाद्यः); दे4 स्पृशते (→संस्पृशेद्). –d) ते1 विशोधनं, उ1 विशुद्धयति (→विशुद्धये).

६६. ब2. ६६d-६८c ⊙ (द्र. सं.); मुब. d ⊙. –a) का1 ब1 दे4 न1 ते1 द1 म1 चण्डाल- (→चाण्डाल-); दे1.4.8-10 मुवें. मुए. मुब. -सूतकि-, द1 -सूकर-, म1 -सूतिक- (→-सूतक-); दे1.2.8-10 मुए. °शवं(दे8.10बं), दे4 °शठां, दे6 °शची (→°शवांस्); उ1 ये चण्डालसूतकशवास्. –b) दे4.10 द1 उ1 (→नारीं).–c) ते1 कायाद् वि-, द1 स्नानाद्धि, ग्र2 स्नानं वि- (→स्नायाद् वि-). –d) द1 तत्पृष्टात्, उ1 तत्स्पृष्टात्, ग्र2 तत्स्पृष्ट्वा (→तत्स्पृष्टं); दे1.8-10 मुवें. मुए. तस्पृष्टपतितांस्तथा, ते1 उच्छिष्टः पतितं तथा.

का1 पुस्तके a चरणानन्तरमधिकम्—

* 'तत्स्पृष्टस्पर्शिनं स्पृष्ट्वा बुद्धिपूर्वं द्विजोत्तम ।
आचमेत विशुद्धयर्थं (=६८ abc)

६७. ब2.3. ⊙. –a) दे1.8.9 मुवें. मुए. मुब. -सूतकि-, ते1 द1 -शूकर- (→-सूतक-). –b) उ1 संस्पृष्टैः (→संस्पृष्टं). –c) दे1.8-10 मुवें. मुए. मुब. ततः स्नात्वाथ आचम्य, दे4 प्रमादात्तत्र स्नातस्य, द1 ग्र2 म1 उ1 प्रमादात्स्नात आचम्य. –d) का1 ब1 दे2 जप्यं (→जपं); द1 ग्र2 म1 उ1 जपं कृत्वा विशुद्धयति.

६८. ब2.3. abc ⊙. –a) ब1 तत्स्पृष्ट्वा, दे6 तत् दृष्ट्वा, ते1 अस्पृश्य- (→तत्स्पृष्ट-); का1 ब1 दे6 द1 °स्पर्शन (→स्पर्शिनं); दे1.4.8.10 दृष्टवा, दे6 चैव (→स्पृष्ट्वा). –b) दे6 स्पृष्ट्वा पूर्वं द्विजोत्तम, दे10 बुद्धिमानद्विजोत्तमः, द1 ग्र2 म1 उ1 स्नात्वा शुध्येद्द्विजोत्तमः. –c) का1 दे4 ग्र2 आचम्येत्तद्, ब1 दे10 न1 द1 म1 उ1 आचामेत् तद्, दे1.8-10 मुवें. मुए. मुब. स्नात्वाचामेद् (→आचमेत्तद्-). –d) का1 तथा नारी रजस्वला.

६९. –b) दे1.3.8-10 मुए. मुब. संस्पृशेत्, दे4 संस्रवणे, ते1 द1 ग्र2 म1 उ1 संस्रवते (→संस्रवेद्); मुवें. मुए. यदि (→गुदं). –c) द1 कृतः (→ततः); दे6 ते1 ग्र2 स्नात्वा (→स्नायाद्). –d) ग्र2 उपोष्यात् (→उपोष्य); मुब. व्रतम् (?) (→घृतं).

अतः परं ब1 पुस्तके अधिकम् :—'ॐ नमः श्रीनारायणं'

७०. ब1. ⊙; दे3. cd ⊙. –a) दे1.3.8-10 न1 द1 ग्र2 म1 उ1 चा (न1 द1 म1 उ1 च)ण्डालं तु. –b) दे1.8-10 मुए. मुब. कृत्वा (→कुर्याद्); दे1.8-10 मुवें. मुए. मुब. विशुद्धयति (→विशुद्धये). –c) ब2.3 दे2 दृष्ट्वाभ्यक्तस्, दे6 ते1 स्पृष्ट्वा त्यक्तस् (→स्पृष्ट्वाऽभ्यक्तस्); ते1 असंस्पृश्यः (→असंस्पृश्य); द1 दृष्ट्वानवस्थं संस्पर्शं, ग्र2 नष्ट्वान भस्थं संस्पृश्यं, उ1 दृष्ट्वानभस्थं संस्पृश्यं.

७१. ब1. ⊙. –b) उ1 प्राणायामं (→प्राणायाम-); ब2 द्विजः (→शुचिः). –d) द1 ग्र2 म1 उ1 घृतं प्राश्य विशुद्धयति.

७२. ब1. ⊙. –a) द1 स्पृष्टः (→दष्टः). –b) म1 त्वपः (→पयः). –c) ब2.3 नाभ्याः, दे6 नाभ्याद् (→नाभेर्); द1 च दष्टस्य, ग्र2 उ1 इवद(ग्र2 द)ष्टस्य (→तु दष्टस्य). –d) म1 उ1 तदेतत् (→तदेव); द1 ग्र2 उ1 त्रिगुणं (→द्विगुणं); दे4 चरेत् (→भवेत्).

७३. ब1. ⊙. –a) दे3 हृदि तत् (→स्यादेतत्); ब2 न1 द्विगुणं (→त्रिगुणं). –b) ब2.3 दे2.4.6 न1 ते1 म1 उ1 स्यात्तु, दे1.8 स्याच्च (→च स्यात्); दे3 मूर्धनि स्याच्चतुर्गुणं, दे10 मूर्धस्थास्य चतुर्गुणं, द1 ऊर्ध्वं स्यात्तच्चतुर्गुणं.

अनिर्वर्त्य महायज्ञान् यो भुङ्क्ते तु द्विजोत्तमः ।
अनातुरः सति धने कृच्छ्रार्द्धेन स शुद्धयति ।।७४
आहिताग्निरुपस्थानं न कुर्याद् यस्तु पर्वणि ।
ऋतौ न गच्छेद् भार्यां वा सोऽपि कृच्छ्रार्द्धमाचरेत् ।।७५
विनाऽद्भिरप्सु नाप्यार्त्तः शरीरं सन्निवेश्य च ।
सचैलो जलमाप्लुत्य गामालभ्य विशुद्धयति ।।७६
बुद्धिपूर्वं त्वभ्युदितो जपेदन्तर्जले द्विजः ।
गायत्र्यष्टसहस्रं तु त्र्यहं चोपवसेद् व्रती ।।७७
अनुगम्येच्छया शूद्रं प्रेतीभूतं द्विजोत्तमः ।
गायत्र्यष्टसहस्रं च जप्यं कुर्यान्नदीषु च ।।७८
कृत्वा तु शपथं विप्रो विप्रस्य वधसंयुतम् ।
मृषैव यावकान्नेन कुर्याच्चान्द्रायणं व्रतम् ।।७९
पङ्क्त्यां विषमदानं तु कृत्वा कृच्छ्रेण शुद्धयति ।
छायां श्वपाकस्यारुह्य स्नात्वा संप्राशयेद् घृतम् ।।८०
ईक्षेदादित्यमशुचिर्दृष्ट्वाग्निं चन्द्रमेव वा ।
मानुषं चास्थि संस्पृश्य स्नानं कृत्वा विशुद्धयति ।।८१
कृत्वा तु मिथ्याध्ययनं चरेद् भैक्षं तु वत्सरम् ।
कृतघ्नो ब्राह्मणगृहे पञ्च संवत्सरं व्रती ।।८२
हुंकारं ब्राह्मणस्योक्त्वा त्वंकारं च गरीयसः ।
स्नात्वाऽनश्नन्नहःशेषं प्रणिपत्य प्रसादयेत् ।।८३  वें.२.३४.८३

७४. ब1. ⊙; का1. ab ⊙. –a) दे2 अनिर्वृत्य, दे4 अग्निर्वर्त्य (→अनिर्वर्त्य); ते1 अनिवृत्तमहायज्ञो, द1 ग्र2 म1 उ1 पञ्चयज्ञानकृत्वा तु. –b) ते1 यो भुञ्जीत (→यो भुङ्क्ते); द1 ग्र2 म1 उ1 यो भुङ्क्ते प्रत्यहं गृही. –c) द1 स तु (→सति) का1 दे1.8.10 मुए. अनातुरस्य निधने, दे6 अनातुरः सन्निधने, म1 अज्ञानतः सति धने, ग्र2 अनातुरः सन्निधाने. –d) ब2.3 दे2.3 न1 द1 ग्र2 म1 उ1 विशुद्धयति (→स शुद्धयति).

७५. ब1 दे6. ⊙. –a) ब3 द1 ग्र2 आहिताग्नेरुपस्थानं. –b) द1 ग्र2 उ1 यः कुर्यान्न तु पर्वणि. –c) ग्र2 सभार्यायां, उ1 स्वभार्यां (→भार्यां). –d) दे4 सोऽपि कृच्छ्रात् समाचरेत्.

७६. ब1 दे2.3.6 ⊙; उ1. a ⊙. –a) ते1 विनाभिर् (→विनाद्भिर्); ब2 नाद्यन्नं, दे10 चाप्यर्त्तः, द1 -राचान्तः, म1 वाचान्तः (→नाप्यार्त्तः); का1 विनाद्भिरप्सु वाप्यर्द्धं, दे4 विनाद्भिरसुनाप्यर्थं, ते1 विनाभिरप्सुवाप्यन्यं. –b) ब2.3 दे4 न1 म1 संनिवेश्य तु (दे4 च); ते1 शारीरं यो निषेवते.

७७. ब1. ⊙; द1 ग्र2 उ1. ab ⊙. –a) मुवें. मुए. मुब. त्वभ्युदिते (→त्वभ्युदितो). –b) दे2 °जलो, दे4 °जलं (→°जले). –c) दे4 °सहस्रस्य (→°सहस्रं तु). –d) का1 ब2.3 दे2.6 न1 ते1 द्व्यहं, मुब. त्र्यहश् (→त्र्यहं); दे1.8.9 सोपवसेद्, ते1 वोपवसेद् (→चोपवसेद्); दे1.8.9 मुवें. मुए. द्विजः, म1 उ1 यतिः (→व्रती); दे4 जप्यं कुर्यान्नदीतटे, दे10 जप्यं कुर्यान्नदीषु च.

७८. ब1 दे4.10. ⊙. –a) ते1 अनुगम्य च यो शूद्रं. –b) दे3 द1 ग्र2 म1 उ1 प्रेत°, न1 व्रती° (→प्रेती°). –c) का1 ब2.3 दे2.6 न1 ते1 °सहस्रस्य, द1 ग्र2 म1 उ1 °सहस्रं तु (→सहस्रं च); ब1.3 दे1.8.10 न1 द1 म1 मुवें. मुए. मुब. जपं (→जप्यं); का1 न दोषभाक् (→नदीषु च).

७९. ब1. ⊙ ब2. cd ⊙. –a) उ1 कृत्वाशु (→कृत्वा तु); दे1.8-10 मुए. मुब. शपथान् (→शपथं). –b) दे1.8.9 मुवें. मुए. मुब. विप्रस्यावधि-, दे10 न1 द1 ग्र2 म1 उ1 विप्रस्य विधि-, ते1 विप्रस्य पद- (→विप्रस्य वध-); ग्र2 उ1 -संयुते (→-संयुतं); ब3 मित्रस्य धनसंयुतं. –c) दे1.8-10 ग्र2 मुवें. मुए. मुब. स चैव (→मृषैव); ब3 मृषैव पावकार्थ्ये च, दे6 मृषैव यावकार्थे च. –d) दे1.6.10 न1 द1 म1 मुए. चान्द्रायण- (→चान्द्रायणं).

८०. ब1. ⊙. –a) दे1.8-10 मुवें. मुए. मुब. पङ्क्तौ (→पङ्क्त्यां). –c) ते1 छायां प्राप्य श्वपाकस्य. –d) द1 ग्र2 उ1 स्नानं (→स्नात्वा).

८१. ब1. ⊙; द1. cd ⊙; दे10. d ⊙. –a) ते1 नेक्षेतादित्यमशुचिः. –b) का1 ब2.3 दे2.6 न1 मुब. दृष्ट्वा म्लेच्छान्नमेव वा, ते1 दृष्ट्वाग्निं सन्नमेव वा. –c) ग्र1 उ1 मानुष्यं (→मानुषं); ग्र2 म1 उ1 संस्पृष्ट्वा (→संस्पृश्य). –d) ग्र2 स्नानमेव (→स्नानं कृत्वा).

८२. का1 ब1 द1. ⊙; दे10. a ⊙. –b) दे4 भैक्ष्यं, ग्र2 म1 उ1 भिक्षां (→भैक्षं). –c) दे2 °ग्राहे (→°गृहे); ब2.3 कृतघ्नो ब्राह्मणः शुध्येत्. –d) ब2.3 दे2.6 न1 ग्र2 प्रति (→व्रती); दे1.8-10 उ1 मुवें. मुए. मुब. पञ्चसंवत्सरव्रती.

८३. ब1. ⊙. –a) का1 ब3 दे1.6 उ1 °स्योक्ता (→°स्योक्त्वा). –b) दे3 तुंकारं (→त्वंकारं); दे4 ह्यहंकारगरीयसः. –d) दे3 जपन् (→[अ]नश्नन्); दे4 स्नात्वा तु स्नेहतः शेषं, ते1 स्नात्वानश्नन्नहः शेषं, द1 ग्र2 म1 उ1 स्नात्वाचम्य ततः (ग्र2 °दा) शेषं

वें.२.३४.८४ ताडयित्वा तृणेनापि कण्ठं बद्ध्वाऽपि वाससा ।
विवादे वापि निर्जित्य प्रणिपत्य प्रसादयेत् ।।८४
अवगूर्य चरेत् कृच्छ्रमतिकृच्छ्रं निपातने ।
कृच्छ्रातिकृच्छ्रौ कुर्वीत विप्रस्योत्पाद्य शोणितम् ।।८५
गुरोराक्रोशमनृतं कृत्वा कुर्याद् विशोधनम् ।
एकरात्रं त्रिरात्रं वा तत्पापस्यापनुत्तये ।।८६
देवर्षीणामभिमुखं ष्ठीवनाक्रोशने कृते ।
उल्मुकेन दहेज्जिह्वां दातव्यं च हिरण्यकम् ।।८७
देवोद्याने तु यः कुर्यान्मूत्रोच्चारं सकृद् द्विजः ।
छिन्द्याच्छिश्नं तु शुद्ध्यर्थं चरेच्चान्द्रायणं तु वा ।।८८
देवतायतने मूत्रं कृत्वा मोहाद् द्विजोत्तमः ।
शिश्नस्योत्कर्त्तनं कृत्वा चान्द्रायणमथाचरेत् ।।८९
देवतानामृषीणां च देवानां चैव कुत्सनम् ।
कृत्वा सम्यक् प्रकुर्वीत प्राजापत्यं द्विजोत्तमः ।।९०
तैस्तु संभाषणं कृत्वा स्नात्वा देवान् समर्चयेत् ।
दृष्ट्वा वीक्षेत भास्वन्तं स्मृत्वा विश्वेश्वरं स्मरेत् ।।९१
यः सर्वभूताधिपतिं विश्वेशानं विनिन्दति ।
न तस्य निष्कृतिः शक्या कर्त्तुं वर्षशतैरपि ।।९२
चान्द्रायणं चरेत् पूर्वं कृच्छ्रं चैवातिकृच्छ्रकम् ।
प्रपन्नः शरणं देवं तस्मात् पापाद् विमुच्यते ।।९३
सर्वस्वदानं विधिवत् सर्वपापविशोधनम् ।
चान्द्रायणं च विधिना कृच्छ्रं चैवातिकृच्छ्रकम् ।।९४
पुण्यक्षेत्राभिगमनं सर्वपापविनाशनम् ।
देवताभ्यर्चनं नृणामशेषाघविनाशनम् ।।९५

---

८४. ब$_1$ दे$_{10}$. ⊙. –a) दे$_3$ घातयित्वा, उ$_1$ त्रासयित्वा (→ताडयित्वा); ब$_3$ तृणे वापि, दे$_3$ तृणैर्वापि, द$_1$ ग्र$_2$ म$_1$ उ$_1$ तृणेनैव (→तृणेनापि). –b) का$_1$ ब$_{2.3}$ दे$_{1-4.6.8.9}$ न$_1$ म$_1$ कण्ठे, द$_1$ ग्र$_2$ उ$_1$ कर्णे (→कण्ठं); दे$_{1.8-10}$ मुए. मुब. वद्ध्वाथ द$_1$ उ$_1$ बद्ध्वा च, म$_1$ कृत्वा तु (→बद्ध्वापि). –c) का$_1$ दे$_{1.3}$ विवादे चापि, ब$_1$ दे$_4$ विवादेनापि, दे$_6$ विवादेवाद-, न$_1$ ग्र$_2$ विवादे वा वि-, ते$_1$ विवादोऽपि वि- (→विवादे वापि).

८५. ब$_1$. ⊙. –a) का$_1$ ब$_3$ दे$_4$ ग्र$_2$ म$_1$ अवगू(दे$_4$ म$_1$ °ग्र)ह्य, दे$_3$ अपपूर्यं (→अवगूर्य); न$_1$ [आ]चरेत् (→चरेत्); ते$_1$ अवगृह्याचरेत्कृच्छ्रं.

८६. ब$_1$. ⊙; न$_1$. ab ⊙. –a) द$_1$ गुरोराक्रोश-गणितं. –b) दे$_{1.8-10}$ मुवें. मुए. कुर्यात्कृत्वा (→कृत्वा कुर्याद्). –c) दे$_{1.8-10}$ मुवें. मुए. मुब. निराहारस्, ग्र$_2$ म$_1$ उ$_1$ द्विरात्रं वा (→त्रिरात्रं वा). –d) ब$_3$ तत्पापस्योपशान्तये.

८७. –b) दे$_4$ जृम्भना° (→ष्ठीवना°). –c) ब$_1$ न$_1$ मुब. अल्कया च (→उल्मुकेन).

८८. –a) का$_1$ दे$_{1.8.9}$ द$_1$ ग्र$_2$ मुवें. मुए. मुब. देवोद्यानेषु (→देवोद्याने तु). –b) दे$_6$ मूत्रोच्छ्रावं (→मूत्रोच्चारं); दे$_{10}$ मूत्रोच्चारमसद् द्विजः, ते$_1$ मूत्रोच्चारं शकृद् द्विजः. –c) ब$_1$ शिश्नं च, ब$_2$ शिश्नस्य, दे$_{1.8-10}$ न$_1$ ग्र$_2$ मुवें. मुए. मुब. शिश्नं वि- (→शिश्नं तु); दे$_3$ जिह्वां छिन्द्य तु शुध्यर्थं, ते$_1$ शिश्नस्योत्कर्त्तनं कृत्वा. –d) दे$_{1.8.9}$ द$_1$ म$_1$ ग्र$_2$ चान्द्रायण (→चान्द्रायणं); ब$_3$ तथा, दे$_{1.3.8-10}$ द$_1$ ग्र$_2$ म$_1$ व्रतं (→तु वा).

८९. दे$_4$ द$_1$. cd ⊙. –a) ते$_1$ मोहात् (→मूत्रं). –b) दे$_3$ ते$_1$ मूत्रं (→मोहाद्). –cd) ते$_1$ छिन्द्यात् शिश्नं तु शुद्ध्यर्थं चरेच्चान्द्रायणव्रतम्.

९०. दे$_4$ द$_1$. ⊙. –a) ते$_1$ तु (→च). –b) का$_1$ ब$_3$ दे$_{2.10}$ ते$_1$ म$_1$ उ$_1$ वेदानां, ब$_1$ वैद्यानां (→देवानां); ग्र$_2$ कृत्स्नशः (→कुत्सनं); दे$_3$ कुर्याच्चैव च कुत्सनं.

९१. –b) दे$_{1.4.8-10}$ मुवें. मुए. मुब. देवं (→देवान्); दे$_6$ समार्चयेत्, दे$_{10}$ समाचरेत् (→समर्चयेत्). –c) का$_1$ दे$_2$ कृत्वा (→दृष्ट्वा); दे$_1$ द$_1$ वीक्ष्येत (→वीक्षेत); ग्र$_2$ भास्वन्तं सुसंक्रुद्धः. –d) ब$_2$ स्पृष्ट्वा (→स्मृत्वा); दे$_3$ स्पृशेत्, ते$_1$ स्मरन् (→स्मरेत्).

९२. –a) द$_1$ ग्र$_2$ म$_1$ उ$_1$ यः सर्वं (ग्र$_2$ °र्वं) भूतविनु (द$_1$ °न) तं. –b) द$_1$ ग्र$_2$ म$_1$ उ$_1$ विश्वेशं च (→विश्वेशानं); ग्र$_2$ विनिन्दकं, म$_1$ विनिन्द्य तं(→विनिन्दति). –c) म$_1$ निष्कृतिं (→निष्कृतिः); ब$_2$ सम्यक् (→शक्या). –d) दे$_{10}$ चतुर्वर्ष-शतैरपि.

९३. ब$_1$. ⊙; न$_1$. cd ⊙. –c) का$_1$ दे$_2$ प्रपन्नं (→प्रपन्नः). –d) द$_1$ म$_1$ उ$_1$ कृत्वा (→तस्मात्); का$_1$ ब$_2$ प्र- (→वि-).

९४. ब$_1$ न$_1$. ⊙; दे$_{1.4.8-10}$ मुए. cd ⊙. –a) दे$_{1.8-10}$ मुए. कथितं (→विधिवत्). –b) दे$_{1.8-10}$ मुए. मुब. पातकानां विशोधनं. –c) म$_1$ चान्द्रायणविधानेन. –d) ग्र$_2$ कृच्छ्रं चातीवकृच्छ्रकं, म$_1$ कृच्छ्रं चैवार्द्धकृच्छ्रकम्.

९५. दे$_4$. ab ⊙; ब$_1$ दे$_{1.2.4.8-10}$. cd ⊙. –a) ब$_1$ पुण्ये (→पुण्य-); दे$_6$ पुण्यकृत्राभिगमनं. –b) दे$_{1.3.8-10}$ मुवें. मुए. विशोधनं, ग्र$_2$ म$_1$ प्रणाशनं (→विनाशनं). –d) का$_1$ अशेषौघ°, ते$_1$ महापातक° (→अशेषाघ°).

अमावस्यां तिथिं प्राप्य यः समाराधयेच्छिवम् ।
ब्राह्मणान् भोजयित्वा तु सर्वपापैः प्रमुच्यते ।।९६
कृष्णाष्टम्यां महादेवं तथा कृष्णचतुर्दशीम् ।
संपूज्य ब्राह्मणमुखे सर्वपापैः प्रमुच्यते ।।९७
त्रयोदश्यां तथा रात्रौ सोपहारं त्रिलोचनम् ।
दृष्ट्वेशं प्रथमे यामे मुच्यते सर्वपातकैः ।।९८
उपोषितश्चतुर्दश्यां कृष्णपक्षे समाहितः ।
यमाय धर्मराजाय मृत्यवे चान्तकाय च ।।९९
वैवस्वताय कालाय सर्वभूतक्षयाय च ।
प्रत्येकं तिलसंयुक्तान् दद्यात् सप्तोदकाञ्जलीन् ।
स्नात्वा नद्यां तु पूर्वाह्णे मुच्यते सर्वपातकैः ।।१००
ब्रह्मचर्यमधःशय्यामुपवासं द्विजार्चनम् ।
व्रतेष्वेतेषु कुर्वीत शान्तः संयतमानसः ।।१०१
अमावस्यायां ब्रह्माणं समुद्दिश्य पितामहम् ।
ब्राह्मणांस्त्रीन् समभ्यर्च्य मुच्यते सर्वपातकैः ।।१०२
षष्ठ्यामुपोषितो देवं शुक्लपक्षे समाहितः ।
सप्तम्यामर्चयेद् भानुं मुच्यते सर्वपातकैः ।।१०३
भरण्यां च चतुर्थ्यां च शनैश्चरदिने यमम् ।।
पूजयेत् सप्तजन्मोत्थैर्मुच्यते पातकैर्नरः ।।१०४
एकादश्यां निराहारः समभ्यर्च्य जनार्दनम् ।
द्वादश्यां शुक्लपक्षस्य महापापैः प्रमुच्यते ।।१०५
तपो जपस्तीर्थसेवा देवब्राह्मणपूजनम् ।
ग्रहणादिषु कालेषु महापातकशोधनम् ।।१०६
यः सर्वपापयुक्तोऽपि पुण्यतीर्थेषु मानवः ।
नियमेन त्यजेत् प्राणान् स मुच्येत् सर्वपातकैः ।।१०७ वें२.३४.१०८

९६. –a) ब1.3 दे1.2.4.6.8-10 ते1 द1 ग्र2 म1 अमावास्यां (→अमावस्यां). –b) का1 दे1.3.8-10 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. भवं (→शिवं).

९७. दे4.10 द1. ⊙. –a) ब1 दे1.8.9 मुए.मुब. महादेवीं (→महादेवं).

९८. –b) ब1 सोपहारस् (→सोपहारं).–c) ते1 इष्ट्वा तु, द1 ग्र2 म1 उ1 इष्ट्वैव (द1°वं); द1 प्रथमं यामं(→प्रथमे यामे).

९९. ग्र2. c ⊙. –c) दे6 यमराजाय (→धर्मराजाय).

१००. –b) ब1.2 मुब. सर्वपाप-,दे2 सर्वभूता- (→सर्वभूत-); दे1.3.6.8-10 ते1 मुवें. मुए. सर्वप्राणहराय च, द1 उ1 सर्वज्ञाय हराय च. –c) का1 दे2 तिल संमिश्रान्, ब1 तिलकं युक्तं, न1 तिल युक्तं तु (→तिलसंयुक्तान्). –c) दे8-10 सप्तोदकाञ्जलीः, ग्र2 म2 उ1 सप्तोदकाञ्जलिं (→सप्तोदकाञ्जलीन्). –e) दे1.8-10 मुवें. मुए. मुब. दद्याच्च (→नद्यां तु). –f) म1 सर्वपापैः प्रमुच्यते.

१०० b अनन्तरं का1 दे2-4 पुस्तकेष्वधिकम्—

50. * उदुम्बराय दध्नाय नीलाय परमेष्ठिने, ।
वृकोदराय चित्राय चित्रगुप्ताय वै नमः ।

१०१. ब1 ते1. ⊙. –a) मुवें. मुए. मुब. अधः शय्या (→अधः शय्यां). –b) दे1.8-10 मुवें. मुए. मुब. उपवासो (→उपवासं). –c) उ1 पूर्वेषु,+ कुर्वीत (→कुर्वीत); दे1.8-10 मुए. तेष्वेतेषु प्रकुर्वीत.

१०२. ब1 ते1. ⊙. –a) का1 अमावास्यां ब्रह्माणं च, ब2 दे4 अमावास्यायां ब्राह्मणं, ब3 दे1.2.6.8.9 द1 ग्र2 म1 अमावास्यायां ब्राह्मणं, दे3 अमावास्यां तु यो विप्रः, दे10 अमावास्यां ब्रह्माणं (ब3 ब्राह्मणं), न1 उ1 अमावास्यायां ब्राह्मणः, ग्र2 अमावास्यां यो ब्रह्माणं. –b) उ1 पितामहः (→पितामहं).

१०३. ब1ते1 द1 ग्र2 म1. ⊙. –a) दे6 °षते, दे10 °षतं (→°षितो).

१०४. ब1. ⊙. –a) का1 ब2.3 दे2.3.6 द1 म1 उ1 तु (→च); का1 ब2 दे6 यः, दे2 वा, + यः, दे3.4 वा, दे10 द1 ग्र2 म1 उ1 तु (→च); ब3 भरण्यां तु चतुर्दश्यां, न1 उपोषितश्चतुर्थ्यां यः. –b) ब3 शनैश्चरदिने यमं, दे4 शनैश्चरविनायकां, ग्र2 शनैश्चरदिनमेव च. –c) दे4.9 °जन्मोक्तैः, द1 °जन्मार्थं, ग्र2 °जन्मार्थैः, उ1 °जन्मार्थे (→°जन्मोत्थैः). –c) दे1.8-10 द1 मुए. मुब. मुच्यते सर्वपातकैः, दे4 पातकैर्मुच्यते नरः.

१०५. –c) ते1 कृष्ण- (→शुक्ल-). –d) ब1 सर्व- (→महा-); ब2.3 दे4 वि° (→प्र°).

१०६. ब1. ⊙. –b) ग्र2 °भोजनम् (→°पूजनम्); ते1 देवतानां च पूजनं.

१०७. ब1. ⊙. –a) दे6.10 °मुक्तोऽपि (→°युक्तोऽपि); द1 ग्र2 म1 उ1 सर्वपातकयुक्तोऽपि. –c) म1 न्यसेत् (→त्यजेत्); ग्र2 प्राणं (→प्राणान्); दे6 नियमे त्यजनिर्द्धतौ. –d) ब2 दे1.3.4.8-10 ते1 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. मुच्यते सर्वपातकैः, दे6 नात्र कार्या विचारणा.

२.३४.१०८ ब्रह्मघ्नं वा कृतघ्नं वा महापातकदूषितम् ।
भर्त्तारमुद्धरेन्नारी प्रविष्टा सह पावकम् ॥१०८
एतदेव परं स्त्रीणां प्रायश्चित्तं विदुर्बुधाः ।
सर्वपापसमुद्भूतौ नात्र कार्या विचारणा ॥१०९
पतिव्रता तु या नारी भर्तृशुश्रूषणोत्सुका ।
न तस्या विद्यते पापमिह लोके परत्र च ॥११०
पतिव्रता धर्मरता रुद्राण्येव न संशयः ।
नास्याः पराभवं कर्त्तुं शक्नोतीह जनः क्वचित् ॥१११
यथा रामस्य सुभगा सीता त्रैलोक्यविश्रुता ।
पत्नी दाशरथेर्देवी विजिग्ये राक्षसेश्वरम् ॥११२
रामस्य भार्यां विमलां रावणो राक्षसेश्वरः ।
सीतां विशालनयनां चकमे कालचोदितः ॥११३
गृहीत्वा मायया वेषं चरन्तीं विजने वने ।
समाहर्त्तुं मतिं चक्रे तापसः किल कामिनीम् ॥११४
विज्ञाय सा च तद्भावं स्मृत्वा दाशरथिं पतिम् ।
जगाम शरणं वह्निमावसथ्यं शुचिस्मिता ॥११५
उपतस्थे महायोगं सर्वदोषविनाशनम् ।
कृताञ्जली रामपत्नी साक्षात् पतिमिवाच्युतम् ॥११६
नमस्यामि महायोगं कृतान्तं गहनं परम् ।
दाहकं सर्वभूतानामीशानं कालरूपिणम् ॥११७
नमस्ये पावकं देवं साक्षिणं विश्वतोमुखम् ।

---

१०८. दे$_{6}$. ⊙; का$_{1}$. d ⊙. –a) ते$_{1}$ म$_{1}$ च (→वा); द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ सुरापं (→कृतघ्नं). –b) का$_{1}$ दे$_{2}$ महापातककारकं, ब$_{1}$ महापातककारिणं, ब$_{2}$ महापातकनाशनं; ब$_{3}$ महापातकिनां वरं. –c) ग्र$_{2}$ भर्त्तारमुत्तरन्नारी. –d) दे$_{3}$ प्रविश्य (→प्रविष्टा); ग्र$_{2}$ म$_{1}$ पावके (→पावकं).

१०९. का$_{1}$ दे$_{6}$. ⊙. दे$_{1.8\text{-}10}$ मुवें. मुए. cd ⊙. –c) ब$_{1\text{-}3}$ °समुद्भूतो, ते$_{1}$ °समुद्भूतैः (→°समुद्भूतौ).

११०. का$_{1}$. a ⊙. –a) ब$_{2}$ च (→तु). –b) का$_{1}$ दे$_{2.3}$ भर्त्तुः (→भर्तृ-); दे$_{1.8\text{-}10}$ मुवें. मुए. मुब.° शुश्रूषणे रता (→°शुश्रूषणोत्सुका). –c) ब$_{1}$ दे$_{10}$ तस्य, दे$_{4}$ तस्यां (→तस्याः).

*अतः परं मुवें. पुस्तके अधिकम्—

'सर्वपापविनिर्मुक्ता नास्ति कार्या विचारणा ।
पातिव्रत्यसमायुक्ता भर्तृशुश्रूषणोत्सुका ।
न यास्तु पातकं तस्यामिह लोके परत्र च ।
(= १०९cd–११० ab)

१११. –b) दे$_{1.8\text{-}10}$ मुब. भद्राण्येव (→रुद्राण्येव); ते$_{1}$ रुद्राणीव न संशयः, मुवें. मुए. भद्राण्येव लभेत्सदा. –c) दे$_{10}$ ग्र$_{2}$ उ$_{1}$ तस्याः (→नास्याः). –d) दे$_{3}$ नरः (→जनः); दे$_{4}$ न शक्नोति जनः क्वचित्, द$_{1}$ उ$_{1}$ शक्नोति न जनः क्वचित्.

११२. –b) दे$_{4}$ माता (→सीता); द$_{1}$ त्रैलोक- (→त्रैलोक्य-). –c) म$_{1}$ लक्ष्मीर् (→देवी).

११३. दे$_{6}$. ab ⊙. –a) दे$_{1.3.4.8\text{-}10}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ मुवें. मुए. मुब. सुभगां (→विमलां). –b) ब$_{1}$ रावणो नाम राक्षसः. –c) दे$_{1}$ तां विशालत्रिनयनां, दे$_{4}$ सीता विशालनयना. –d) दे$_{1.3.4.8\text{-}10}$ मुवें. मुए. मुब. °नोदितः (→°चोदितः); ते$_{1}$ चकमे कामचोदितः.

११४. –a) दे$_{3}$ राक्षसं, दे$_{4}$ मानुषं (→मायया); का$_{1}$ ब$_{3}$ दे$_{2.6}$ चेमां, ब$_{1}$ वेशं, ब$_{2}$ चैनां, द$_{1}$ वैतां (→वेषं); ते$_{1}$ गृहीता मायया चेयं. –c) द$_{1}$ समागतं (→समाहर्त्तुं); दे$_{3}$ सतीं, द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ मनश् (→मतिं). –d) दे$_{3}$ न$_{1}$ तापसं (→तापसः); ब$_{2.3}$ न$_{1}$ ते$_{1}$ मुब. भाविनीं, दे$_{2.3}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ भामिनीं (→कामिनीं).

११५. –a) ब$_{1}$ विज्ञानं, दे$_{6}$ भर्त्तारं, न$_{1}$ तं भावं (→तद्भावं); ते$_{1}$ विज्ञाय तं च तं भावं. –b) ते$_{1}$ स्मृता (→स्मृत्वा). –d) ब$_{2.3}$ दे$_{6}$ आवसथ्यं (→आवसथ्यं); मुवें. शुचिस्मितः (→शुचिस्मिता)

११६. का$_{1}$ दे$_{10}$. cd⊙ (द्र. सं.). –b) दे$_{1.3.8.9}$ मुवें. मुए. मुब. °लोक- (→°दोष-); दे$_{1.3.4.8.9}$ द$_{1}$ म$_{1}$ उ$_{1}$ मुवें. मुए. मुब. -विदाहकं, न$_{1}$ -विदाहकः, ते$_{1}$ -निवारणं (→-विनाशनं). –c) ब$_{2.3}$ मुब. कृताञ्जलि, दे$_{2}$ कृत्वाञ्जल्यां, दे$_{6}$ ते$_{1}$ कृत्वाञ्जलिं (→कृताञ्जली); दे$_{1.2}$ राजपत्नी, दे$_{6}$ रामपत्नीं (→रामपत्नी) ग्र$_{2}$ कृताञ्जलिरथा पत्नी.

अतः परं म$_{1}$ पुस्तके अधिकम्—सीता

११७. का$_{1}$ दे$_{10}$. a ⊙ –b) दे$_{1.8\text{-}10}$ मुवें. मुए. मुब. कृशानुं गह्वरं परं, दे$_{3}$ कृत्वा तद् दहनं परं, न$_{1}$ कृत्वा तं वाहनं वनं. –d) ब$_{3}$ ईशानं कलिरूपिणं, उ$_{1}$ सर्वभूतहृदि स्थितं.

११८. दे$_{3}$. ⊙. ब$_{1}$ दे$_{1.8\text{-}10}$ मुए. cd. ⊙. –a) दे$_{1.4.8\text{-}10}$ मुवें. मुए. प्रपद्ये, द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ प्रयास्ये (→नमस्ये). –b) दे$_{6}$ साक्षिणे (→साक्षिणं); न$_{1}$ सर्वतो° (→विश्वतो°); दे$_{1.8\text{-}10}$

आत्मानं दीप्तवपुषं सर्वभूतहृदि स्थितम् ॥११८
प्रपद्ये शरणं वह्निं ब्रह्मण्यं ब्रह्मरूपिणम् ।
भूतेशं कृत्तिवसनं शरण्यं परमं पदम् ॥११९
ॐ प्रपद्ये जगन्मूर्त्तिं प्रभवं सर्वतेजसाम् ।
महायोगेश्वरं वह्निमादित्यं परमेष्ठिनम् ॥१२०
प्रपद्ये शरणं रुद्रं महाग्रासं त्रिशूलिनम् ।
कालाग्निं योगिनामीशं भोगमोक्षफलप्रदम् ॥१२१
प्रपद्ये त्वां विरूपाक्षं भुर्भुवः स्वः स्वरूपिणम् ।
हिरण्मये गृहे गुप्तं महान्तममितौजसम् ॥१२२
वैश्वानरं प्रपद्येऽहं सर्वभूतेष्ववस्थितम् ।
हव्यकव्यवहं देवं प्रपद्ये वह्निमीश्वरम् ॥१२३
प्रपद्ये तत्परं तत्त्वं वरेण्यं सवितुः स्वयम् ।
भर्गमग्निपरं ज्योती रक्ष मां हव्यवाहन ॥१२४
इति वह्न्यष्टकं जप्त्वा रामपत्नी यशस्विनी ।
ध्यायन्ती मनसा तस्थौ राममुन्मीलितेक्षणा ॥१२५
अथावसथ्याद् भगवान् हव्यवाहो महेश्वरः ।
आविरासीत् सुदीप्तात्मा तेजसा प्रदहन्निव ॥१२६
सृष्ट्वा मायामयीं सीतां स रावणवधेप्सया ।
सीतामादाय धर्मिष्ठां पावकोऽन्तरधीयत ॥१२७
तां दृष्ट्वा तादृशीं सीतां रावणो राक्षसेश्वरः ।
समादाय ययौ लङ्कां सागरान्तरसंस्थिताम् ॥१२८
कृत्वाऽथ रावणवधं रामो लक्ष्मणसंयुतः ।
समादायाभवत् सीतां शङ्काकुलितमानसः ॥१२९ वें२.३४.१२८

---

मुए. ब्रह्मण्यं ब्रह्मरूपिणं, मुवें. शाश्वतं विश्वरूपिणं. –c) ब$_2$ दिव्य-, ग्र$_2$ दीप्य- (→दीप्त-). –d) ब$_2$ सर्वभूतवपुः स्थितं.

११८ पूर्वार्धात्परं दे$_{1.3.8-10}$ उ$_1$ मुवें. मुए. पुस्तकेषु अधिकम्—

योगिनं कृत्तिवसनं भूतेशं परमं पदम् । (= ११९ cd)
[दे$_{8-10}$ मुए. °वासानं (→°वसनं)]

११९. ब$_1$ दे$_{1.3.8-10}$ द$_1$ म$_1$ उ$_1$ मुवें. मुए. ⊙; न$_1$ cd ⊙. –c) का$_1$ ब$_2$ दे$_6$ ग्र$_2$ ते$_1$ योगिनं (→भूतेशं). –d) ब$_2$ भूतेशं (→शरण्यं) न$_1$ आदित्यं परमेष्ठिनः.

११८–११९ श्लोकयोः स्थाने दे$_{1.8-10}$ मुए. पुस्तकेषु पाठः–

49. *प्रपद्ये पावकं देवं ब्रह्मण्यं ब्रह्मरूपिणम् ।
योगिनं कृत्तिवसनं भूतेशं परमं पदम् ।

१२०. द$_1$. १२०a–१४२d ⊙; न$_1$. ⊙; ब$_1$ दे$_4$. ab ⊙. –a) ब$_2$ तं प्रपद्ये (→ॐ प्रपद्ये). –c) मुवें. ग्र$_2$ म$_1$ °योगीश्वरं (→°योगेश्वरं). –d) दे$_3$ ग्र$_2$ म$_1$ परमेश्वरं (→परमेष्ठिनं).

१२१. –b) दे$_4$ महायोगं, ते$_1$ महाप्रासं (→महाग्रासं). –d) दे$_3$ °सुखप्रदं (→°फलप्रदं).

१२२. म$_1$. ⊙; ब$_1$. ab ⊙. –a) दे$_1$ विरूपाक्षीं (→विरूपाक्षं). –b) ग्र$_2$ भूभुवस्वर्गरूपिणं. –c) ब$_3$ ते$_1$ उ$_1$ सुप्तं (→गुप्तं).

१२३. ब$_1$ म$_1$. ⊙. –b) दे$_3$ सर्वभूतव्यवस्थितं.

१२४. ब$_1$. ⊙. –a) म$_1$ त्वां, उ$_1$ तं (→तत्); ब$_3$ प्रपद्ये परमं तत्त्वं. –b) म$_1$ उ$_1$ वरेण्य- (→वरेण्यं); दे$_4$ सर्वतः (→सवितुः); दे$_{1.3.4.8-10}$ न$_1$ ग्र$_2$ म$_1$ मुवें. मुए. मुब. शिवं (→स्वयं). –c) का$_1$ ब$_{2.3}$ दे$_{2.6}$ भाग°, दे$_{1.8-10}$ मुवें. मुए. मुब. स्वर्ग°, दे$_3$ सम°, दे$_4$ गर्भ°, उ$_1$ भग° (→भर्ग°); न$_1$ जातवेदः परं ज्योति. –d) दे$_{1.8-10}$ मुवें. मुए. स्वाक्षयं हव्यवाहनं, दे$_{2.4.6}$ रक्षसां (दे$_4$ °सा) हव्यवाहन, दे$_3$ रक्ष मां कव्यवाहन.

१२५. –a) का$_1$ इति वह्निं पूजयित्वा, दे$_{2.6}$ इति वह्निं पूज्यजप्त्वा, ते$_1$ इति पद्याष्टकं जप्त्वा. –b) दे$_{3.4}$ ग्र$_2$ म$_1$ उ$_1$ मनस्विनी (→यशस्विनी). –c) दे$_3$ तस्य (→तस्थौ).

१२६. न$_1$. cd ⊙. –a) ब$_{2.3}$ दे$_{3.4}$ ग्र$_2$ उ$_1$ अथावसथ्यो (ब$_3$ °स्थ्यो) भगवान्, ते$_1$ आवसथ्यस्स भगवान्. –b) ब$_1$ हव्यवाह महेश्वरः. –c) दे$_1$ ते$_1$ ग्र$_2$ म$_1$ उ$_1$ स (→सु-). –d) का$_1$ दे$_{2.6}$ तेजसे, दे$_8$ तेजसी (→तेजसा); दे$_{1.8-10}$ मुवें. मुए. मुब. निर्दहन्निव, दे$_3$ च दहन्निव (→प्रदहन्निव).

१२७. न$_1$. ⊙. –a) ब$_1$ दृष्ट्वा, ब$_3$ दे$_4$ स्पृष्ट्वा, (→सृष्ट्वा); दे$_{1.4}$ मायामयी (→मायामयीं). –b) दे$_3$ तां (→स); ब$_1$ दे$_{1.8-10}$ म$_1$ उ$_1$ मुवें. मुए. मुब. °वधेच्छया (→°वधेप्सया). –c) ते$_1$ स्थितां (→सीतां); दे$_{1.8.9}$ मुवें. मुए. मुब. रामेष्टां (→धर्मिष्ठां); दे$_{10}$ सीता रामाय मे दृष्टां.

१२८. न$_1$. ab ⊙. –a) ब$_3$ तामसीं (→तादृशीं). –c) ग्र$_2$ म$_1$ उ$_1$ ततो (→ययौ); ग्र$_2$ लोकां (→लङ्कां). –d) दे$_6$ °संस्थितः (→°संस्थितां); ग्र$_2$ लङ्कासागरसुस्थितां.

१२९. न$_1$. १२९d–१३१a ⊙ (द्र. सं.). –a) दे$_{1.4.8-10}$ न$_1$ तु, ग्र$_2$ म$_1$ उ$_1$ च (→[अ]थ). –c) दे$_{1.4}$ म$_1$ उ$_1$ समादाय (→समादाया-); ग्र$_2$ म$_1$ उ$_1$ -गतः (→[अ]भवत्). –d) ग्र$_2$ म$_1$ उ$_1$ लज्जा- (→शङ्का-); उ$_1$ -मानसी (→-मानसः).

वें२.३४.१२६ सा प्रत्ययाय भूतानां सीता मायामयी पुनः ।
विवेश पावकं दीप्तं ददाह ज्वलनोऽपि ताम् ॥१३०
दग्ध्वा मायामयीं सीतां भगवानुग्रदीधितिः ।
रामायादर्शयत् सीतां पावकोऽभूत् सुरप्रियः ॥१३१
प्रगृह्य भर्त्तुश्चरणौ कराभ्यां सा सुमध्यमा ।
चकार प्रणतिं भूमौ रामाय जनकात्मजा ॥१३२
दृष्ट्वा हृष्टमना रामो विस्मयाकुललोचनः ।
ननाम वह्निं शिरसा तोषयामास राघवः ॥१३३
उवाच वह्नेर्भगवान् किमेषा वरवर्णिनी ।
दग्धा भगवता पूर्वं दृष्टा मत्पार्श्वमागता ॥१३४
तमाह देवो लोकानां दाहको हव्यवाहनः ।
यथावृत्तं दाशरथिं भूतानामेव सन्निधौ ॥१३५
इयं सा मिथिलेशेन पार्वतीं रुद्रवल्लभाम् ।
आराध्य लब्धा तपसा देव्याश्चात्यन्तवल्लभा ॥१३६
भर्त्तुः शुश्रूषणोपेता सुशीलेयं पतिव्रता ।
भवानीपार्श्वमानीता मया रावणकामिता ॥१३७
या नीता राक्षसेशेन सीता भगवताहृता ।
मया मायामयी सृष्टा रावणस्य वधाय सा ॥१३८
तदर्थं भवता दुष्टो रावणो राक्षसेश्वरः ।
मयोपसंहृता चैव हतो लोकविनाशनः ॥१३९

१३०. न$_1$.⊙ (द्र. १२६ पा. वि.). –a) ते$_1$ दे$_1$ सापि (ते$_1$ सीता) प्रत्यय भूतानां. –b) का$_1$ ग्र$_2$ म$_1$ मायामयीं (→मायामयी). –c) ग्र$_2$ दीप्तां, मुवें. क्षिप्रं (→दीप्तं). –d) का$_1$ ददर्श (→ददाह); उ$_1$ त्वनलोऽपि (→ज्वलनोऽपि); दे$_{4.6}$ ददाह ज्वलनोत्थितः (दे$_6$ °तं).

१३१. न$_1$.a ⊙ (द्र. १२६ पा. वि.). –a) ते$_1$ तत्र (→दग्ध्वा); उ$_1$ द *** मयी सीता. –b) ग्र$_2$ म$_1$ उ$_1$ भगवान् हव्यवाहनः. –c) ब$_1$ दे$_{2.6}$ न$_1$ रामाय (→रामाया-). –d) ग्र$_2$ म$_1$ उ$_1$ पेतुः (उ$_1$*) खे पुष्पवृष्टयः.

१३२. –d) उ$_1$ रामोय (→रामाय); का$_1$ दे$_2$ जनकात्मजां (→जनकात्मजा).

१३३. –a) दे$_{10}$ कष्ट° (→हृष्ट°); ते$_1$ दृष्ट्वा हि सुमना रामो. –b) ब$_2$ °मानसः (→°लोचनः); ग्र$_2$ म$_1$ उ$_1$ विस्मयं परमं ययौ. –c) का$_1$ दे$_8$ नमाम, मुवें. प्रणम्य (→ननाम). –d) दे$_6$ राघव (→राघवः).

१३४. दे$_{1.3.8-10}$ ग्र$_2$ म$_1$ मुए. ⊙. –a) ते$_1$ वह्ने, मुवें. मुब. उ$_1$ वह्निं (→वह्नेर्). –b) ब$_1$ न$_1$ परिवर्त्तिनी (→वरवर्णिनी). –c) का$_1$ ब$_{1.3}$ दग्ध्वा, न$_1$ दत्त्वा (→दग्धा); ब$_2$ दग्ध्वा वाराणसीं पूर्वं. –d) ब$_{1-3}$ न$_1$ दृष्ट्वा (→दृष्टा).

१३५. –a) उ$_1$ तामहं (→तमाह); ब$_1$ देव-, दे$_4$ देवं (→देवो); दे$_{10}$ लङ्कानां, ते$_1$ भक्तानां (→लोकानां). –b) ते$_1$ पापहा, ग्र$_2$ म$_1$ उ$_1$ पावको (→दाहको). –c) का$_1$ यथाव्रतं, दे$_{1.8.9}$ यथावृत्ता, दे$_4$ यथाव्यस्तं (→यथावृत्तं); ग्र$_2$ म$_1$ उ$_1$ लज्जायुतं दाशरथिं. –d) ते$_1$ लोकानां (→भूतानां).

१३६. दे$_2$. १३६b–१३८a ⊙ (द. सं.); दे$_4$. cd ⊙. –a) ब$_3$ दे$_6$ इत्थं (→इयं); दे$_4$ सु- (→सा); दे$_{1.8-10}$ मुवें. मुए. मुब. इयं सा परमा साध्वी. –b) दे$_{1.8.9}$ पार्वतीव भवप्रिया, दे$_{4.6}$ पार्वती रुद्रवल्लभा, दे$_{10}$ पार्वती चभवत् प्रिया, मुवें. मुब. पार्वतीव प्रिया तव. –c) ते$_1$ उपास्य (→आराध्य); का$_1$ ब$_{1-3}$ दे$_{3.4.8-10}$ ग्र$_2$ म$_1$ उ$_1$ मुवें. मुए. मुब. लब्ध्वा (→लब्धा); दे$_6$ आराध्य तपसा लब्धा. –d) ब$_3$ °दुर्लभा (→°वल्लभा); दे$_{1.8-10}$ देव्याश्चोत्पन्नवल्लभा.

१३७. दे$_2$. ⊙ (द. सं.); ब$_1$. ab ⊙. –a) ब$_{2.3}$ दे$_{4.6}$ न$_1$ ते$_1$ ग्र$_2$ म$_1$ उ$_1$ भर्तृ- (→भर्त्तुः). –c) ते$_1$ भवान्या (→भवानी-); ब$_1$ °पार्शतानीता, दे$_{1.3.8-10}$ मुवें. मुए. °वे (दे$_{3.8}$ °चे) श्वरे (दे$_3$ री)गुप्ता, दे$_6$ °पश्चमानीता, ग्र$_2$ उ$_1$ °सै(उ$_1$ °वै°)श्वरीगुप्ता, म$_1$ °वेश्वरी प्राप्ता (→°पार्श्वमानीता). –d) ब$_{1.2}$ दे$_{1.8.9}$ ते$_1$ ग्र$_2$ म$_1$ मुवें. मुए. माया (→मया); का$_1$ दे$_3$ ग्र$_2$ म$_1$ °कामिना, उ$_1$ °कामतः (→°कामिता).

१३८. उ$_1$. ab ⊙; दे$_2$. a ⊙. –b) ब$_1$ सीता च भवता हृता, ब$_{2.3}$ मुब. सीता सा भस्मतां गता, दे$_{1.8-10}$ मुए. सीता वलवतावृता, न$_1$ ग्र$_2$ म$_1$ मुवें. सीता भगवती हृता. –c) दे$_{1.6}$ न$_1$ म$_1$ मुवें सृष्ट्वा (→सृष्टा). –d) दे$_{1.8-10}$ ग्र$_2$ उ$_1$ मुवें. मुए. वधेच्छया, दे$_3$ म$_1$ वधेप्सया (→वधाय सा).

१३९. ते$_1$. ab ⊙. –a) का$_1$ तदर्थे, ब$_{1.2}$ दे$_2$ न$_1$ ग्र$_2$ म$_1$ उ$_1$ यदर्थं (दे$_2$ °र्थे)) (→तदर्थं); दे$_3$ भगवन्, दे$_{1.4.8.10}$ न$_1$ म$_1$ मुवें. मुए. मुब. दृष्टो (→दुष्टो). –b) म$_1$ राक्षसोहतः (→राक्षसेश्वरः). –c) दे$_{10}$ न$_1$ ग्र$_2$ उ$_1$ सैव (→चैव); का$_1$ ब$_{1-3}$ दे$_{1.9}$ न$_1$ मुए. मुब. मायोपसंहृता चैव,

गृहाण विमलामेनां जानकीं वचनान्मम ।
पश्य नारायणं देवं स्वात्मानं प्रभवाव्ययम् ॥१४०
इत्युक्त्वा भगवांश्चण्डो विश्वार्चिर्विश्वतोमुखः ।
मानितो राघवेणाग्निर्भूतैश्चान्तरधीयत ॥१४१
एतत् पतिव्रतानां वै माहात्म्यं कथितं मया ।
स्त्रीणां सर्वाघशमनं प्रायश्चित्तमिदं स्मृतम् ॥१४२
अशेषपापयुक्तस्तु पुरुषोऽपि सुसंयतः ।
स्वदेहं पुण्यतीर्थेषु त्यक्त्वा मुच्येत किल्बिषात् ॥१४३
पृथिव्यां सर्वतीर्थेषु स्नात्वा पुण्येषु वा द्विजः ।
मुच्यते पातकैः सर्वैः समस्तैरपि पूरुषः ॥१४४

व्यास उवाच ।❀

इत्येष मानवो धर्मो युष्माकं कथितो मया ।
महेशाराधनार्थाय ज्ञानयोगं च शाश्वतम् ॥१४५
योऽनेन विधिना युक्तं ज्ञानयोगं समाचरेत् ।
स पश्यति महादेवं नान्यः कल्पशतैरपि ॥१४६
स्थापयेद् यः परं धर्मं ज्ञानं तत्पारमेश्वरम् ।
न तस्मादधिको लोके स योगी परमो मतः ॥१४७
यः संस्थापयितुं शक्तो न कुर्यान्मोहितो जनः ।
स योगयुक्तोऽपि मुनिर्नात्यर्थं भगवत्प्रियः ॥१४८
तस्मात् सदैव दातव्यं ब्राह्मणेषु विशेषतः ।
धर्मयुक्तेषु शान्तेषु श्रद्धया चान्वितेषु वै ॥१४९
यः पठेद् भवतां नित्यं संवादं मम चैव हि ।
सर्वपापविनिर्मुक्तो गच्छेत परमां गतिम् ॥१५०
श्राद्धे वा दैविके कार्ये ब्राह्मणानां च सन्निधौ ।
पठेत नित्यं सुमनाः श्रोतव्यं च द्विजातिभिः ॥१५१ वें२.३४.१५०

---

दे$_{3}$ मायोपसंहृतः सैषः, दे$_{4}$ माययासंहृता चैव, ते$_{1}$ या मया संहिता चैव. –d) न$_{1}$ सर्व-, उ$_{1}$ हेतोर् (→हृतो); न$_{1}$ °विनाशना (→°विनाशनः).

१४०. ब$_{1}$. cd ⊙. –a) दे$_{1.3.8-10}$ ग्र$_{2}$ मुवें. मुए. गृहाण चैतां विमलां, म$_{1}$ उ$_{1}$ गृहाण सीतां विमलां. –c) का$_{1}$ ब$_{2}$ दे$_{2.10}$ ते$_{1}$ उ$_{1}$ पश्यन् (→पश्य). –d) ग्र$_{2}$ आत्मानं (→स्वात्मानं); दे$_{8.9}$ प्रभवाप्ययं (→प्रभवाव्ययं).

१४१. –a) दे$_{3}$ साम्बो, ग्र$_{2}$ म$_{1}$ उ$_{1}$ अग्निर् (→चण्डो). –b) दे$_{3}$ विश्वार्थीर् (→विश्वार्चिर्). –c) उ$_{1}$ राघवेणैव (→राघवेणाग्निर्). –d) न$_{1}$ भूतश् (→भूतैश्).

१४२. न$_{1}$. ⊙; ग्र$_{2}$. a ⊙. –a) दे$_{10}$ वृतो (→एतत्); ते$_{1}$ हि (→वै). –b) ते$_{1}$ वोदितं (?) (→कथितं). –c) दे$_{4}$ स्त्रीणां सर्वेषु मायेषु.

१४३. न$_{1}$. ab ⊙. –a) दे$_{1.8-10}$ उ$_{1}$ मुवें. मुए. मुब. °संयुक्तः (→°युक्तस्तु). –b) दे$_{1.8.9}$ मुवें. मुए. मुब. सुसंयुतः, दे$_{3}$ न संशयः, दे$_{10}$ सु सर्वतः (→सुसंयतः); दे$_{4}$ पुरुषो मुनिसंघतः. –d) दे$_{3}$ ग्र$_{2}$ बन्धनात् (→किल्बिषात्).

१४४. –b) ते$_{1}$ सर्वेषु (→पुण्येषु); दे$_{3}$ वै, दे$_{4}$ च (→वा). –d) दे$_{1.8-10}$ मुवें. मुए. मुब. सञ्चितैर् (→समस्तैर्).

❀ दे$_{1.3.8-10}$ न$_{1}$ ते$_{1}$ द$_{1}$ ग्र$_{2}$ उ$_{1}$ मुए. मुब. ⊙; म$_{1}$ व्यासः.

१४५. –a) ब$_{2.3}$ इत्येवं, दे$_{2}$ इत्येव (→इत्येष). –b) का$_{1}$ ब$_{2}$ कथितं (→कथितो). –d) दे$_{1.3.8-10}$ न$_{1}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ मुवें. मुए. मुब. ज्ञानयोगश्च शाश्वतः (न$_{1}$ °तं), ते$_{1}$ ज्ञानं योगं च शाश्वतम्.

१४६. –a) दे$_{1.3.6.8-10}$ न$_{1}$ ग्र$_{2}$ मुवें. मुए. योगेन (→योऽनेन); दे$_{1.3.8-10}$ म$_{1}$ मुवें. मुए. युक्तो (→युक्तं). –b) दे$_{3.4}$ ज्ञानं (→ज्ञान-). –c) ते$_{1}$ न (→स).

१४७. ब$_{1}$. ⊙. –a) दे$_{2.6}$ स्थापयेयुः, ग्र$_{2}$ स्थापयेद् यत्, उ$_{1}$ स्थापयेत्तत् (→स्थापयेद् यः); दे$_{3}$ परमं (→परं); म$_{1}$ धामं (→धर्मं). –b) का$_{1}$ ब$_{2}$ दे$_{6}$ न$_{1}$ ग्र$_{2}$ उ$_{1}$ -परमेश्वरं (→-पारमेश्वरं). –c) उ$_{1}$ कस्मात् (→तस्मात्). –d) का$_{1}$ योगो (→योगी); दे$_{3}$ गतः (→मतः).

१४८. ब$_{1}$. ⊙. –a) दे$_{3}$ संस्थापयति (→संस्थापयितुं); दे$_{10}$ युक्तो (→शक्तो). –b) दे$_{4}$ न कुर्यात्कर्मयोगदं. –c) द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ पुनर् (→मुनिर्); का$_{1}$ दे$_{4}$ स योगयुक्तो मुनिना. –d) का$_{1}$ प्रीत्यर्थं भगवत् प्रियः.

१४९. ब$_{1}$. ⊙. –a) उ$_{1}$ सदैवं (→सदैव). –d) दे$_{4}$ द$_{1}$ म$_{1}$ च (→वै); ब$_{2}$ श्रद्धया चान्वितेन वै, दे$_{6}$ श्रद्धया चार्थितेषु वै, ग्र$_{2}$ उ$_{1}$ शुद्धवाचान्वितेषु च.

१५०. ब$_{1}$. ⊙. –a) का$_{1}$ भवतो (→भवतां). –b) ग्र$_{2}$ संसारं (→संवादं). –c) दे$_{6}$ न$_{1}$ स सर्वपापनिर्मुक्तः. –d) ब$_{2.3}$ ते$_{1}$ गच्छेत्स परमां गतिं, न$_{1}$ गच्छेत् परमिकां गतिं, उ$_{1}$ गच्छेत्तत्परमां गतिं.

१५१. ब$_{1}$. ⊙. –a) उ$_{1}$ मुब. श्राद्धं (→श्राद्धे); ब$_{3}$ ग्र$_{2}$ म$_{1}$ मुब. वैदिके (→दैविके); दे$_{4}$ श्राद्धे वा देवकार्ये वा.

*२.३४.१५१ योऽर्थं विचार्य युक्तात्मा श्रावयेद् ब्राह्मणान् शुचीन् ।
स दोषकञ्चुकं त्यक्त्वा याति देवं महेश्वरम् ।।१५२
एतावदुक्त्वा भगवान् व्यासः सत्यवतीसुतः ।
समाश्वास्य मुनीन् सूतं जगाम च यथागतम् ।।१५३

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायामुपरिविभागे त्रयस्त्रिंशोऽध्यायः ।।३३।।

# ३४

ऋषय ऊचुः ।❀
तीर्थानि यानि लोकेऽस्मिन् विश्रुतानि महान्ति च ।
तानि त्वं कथयास्माकं रोमहर्षण सांप्रतम् ।।१
रोमहर्षण उवाच ।❀
शृणुध्वं कथयिष्येऽहं तीर्थानि विविधानि च ।
कथितानि पुराणेषु मुनिभिर्ब्रह्मवादिभिः ।।२
यत्र स्नानं जपो होमः श्राद्धदानादिकं कृतम् ।
एकैकशो मुनिश्रेष्ठाः पुनात्यासप्तमं कुलम् ।।३
पञ्चयोजनविस्तीर्णं ब्रह्मणः परमेष्ठिनः ।
प्रयागं प्रथितं तीर्थं तस्य माहात्म्यमीरितम् ।।४

–c) का1 ब2.3 दे2.6 पठेच्च (→पठेत); ते1 पठेन्नित्यं सुमनसा, द1 पठेन्नित्यं च सुमनाः. –d) ते1 तु (→च).

**१५२.** ब1. ⊙. –b) ते1 शुचिः (→शुचीन्); दे1.8-10 द1 ग्र2 म1 मुवें. मुए. मुब. श्रावयेद्वा द्विजान् शुचीन्, दे3 श्रावयेद्वा द्विजातिभिः, उ1 श्रावयेद्वा द्विजान् क्वचित्. –c) ते1 पाप° (→दोष°). –d) दे6 दैवं (→देवं).

**१५३.** ब1. cd ⊙. –c) दे1.8-10 समीभूतं (दे10 °तां), न1 ग्र2 मुनीन् सर्वान्, उ1 मुनीन् सूत (→मुनीन् सूतं). –d) ग्र2 यथातथः, म1 यथासुखं (→यथागतं).

**पुष्पिका—**

**पुराणनाम**—का1 दे4.6 इति श्रीकूर्मपुराणे (दे6 °णो), ब1 इति कौर्मे, ब2.3 दे2.10 इति कू (दे2 कौ)र्मपुराणे, दे1 इति श्रीकूर्मपुराणे उपरिविभागे, दे3 इति श्रीकूर्मपुराणे व्यासगीतासु, दे8.9 मुए. इति श्रीकूर्मपुराणे उपरि(मुए. °वि)भागे, न1 इति श्रीकौर्मे, ते1 इत्यादि महापुराणे श्रीकौर्मे उपरिभागे व्यासगीतासु, द1 म1 उ1 इति श्रीकूर्मपुराणे उपरि (उ1 °त्तर) भागे व्यासगीतासु (म1 °यां), ग्र2 इति श्रीकूर्मपुराणे उत्तरभागे व्यासगीतासूपनिषत्सु, मुवें. इति श्रीकूर्मपुराणे उत्तरार्द्धे, मुब. इति श्रीकौर्मे महापुराणे उपरिभागे ब्रह्मविद्यायां. **अध्यायनाम—** दे1.4.8-10 न1 द1 म1 उ1 मुवें. मुए. ⊙; का1 ब1.3 दे2.6 पतिव्रतोपाख्याने, ब2 व्रतोपाख्याने, दे3 प्रायश्चित्तेषु पतिव्रतामाहात्म्यं, ते1 पतिव्रतामाहात्म्यं नाम, ग्र2 सीताचरितं नाम, मुब. प्रायश्चित्तविवेको नाम. **अध्यायसंख्या**—दे6. ⊙; का1 द्वात्रिंशोऽध्यायः ।।३२।।, ब1.3 द्वात्रिंशोऽध्यायः, ब2 त्रिंशोऽध्याये व्यासगीतासमाप्ता, दे1.3 मुवें. चतुस्त्रिंशोऽध्यायः ।।३४।।, दे2 द्वात्रिंशोऽध्यायः व्यासगीता च समाप्ता, दे4 त्रयस्त्रिंशोऽध्यायः ।।३३।। ऋषिगीता समाप्ता ।।, दे8-10 ग्र2 चतुस्त्रिंशोऽध्यायः, न1 चतुरशीतितमोऽध्यायः, ते1 त्रयस्त्रिंशोऽध्यायः, द1 म1 चतुस्त्रिंशोऽध्यायः ।। श्रीव्यासगीता समाप्ता (म1 °प्तः), उ1 चतुस्त्रिंशोऽध्यायः ।। व्यासगीतासमाप्ता ।। शिवार्पणमस्तु ।।, मुए. चतुस्त्रिंशोऽध्यायः व्यासगीता च समाप्ता, मुब. त्रयस्त्रिंशोऽध्यायः ।।३३।।.

**३४**

❀ दे1 न1 ग्र2 म1 उ1 ऋषयः; ते1 श्रीशिवः, + ऋषय.

**१.** –a) ब2 यानि तीर्थानि (→तीर्थानि यानि). –b) दे1.8-10 मुवें. मुए. मुब. महान्त्यपि (→महान्ति च).

❀ दे3 लोमहर्षण उवाच; दे4 सूत उवाच; न1 रोमहर्षः; ते1 द1 उ1 रोमहर्षणः; ग्र2 सूतः; म1 श्रीसूतः.

**२.** द1 ग्र2 उ1. २a-३d ⊙. –d) न1 मुक्तिभिर् (→मुनिभिर्).

**३.** द1 ग्र2 उ1. ⊙. –a) का1 ब3 होम- (→होमः); ते1 यद्व्रतं यत्तपो होमे, म1 यत्स्नानं च जपो होमे. –b) का1 ते1 म1 श्राद्धं (→श्राद्ध-). –d) म1 पुनात्युपशमान्वितं.

**४.** दे6. ४a-५d ⊙. –b) ते1 °विस्तीर्णो (→°विस्तीर्णं). –c) का1 निर्मितं, दे10 द1 ग्र2 म1 कथितं (→प्रथितं). –d) दे1.4.8.9 मुवें. मुए. मुब. यस्य (→तस्य); दे10 ईश्वरं (→ईरितं).

तीर्थप्रवरं कुरूणां देववन्दितम् ।
ाश्रमैर्जुष्टं सर्वपापविशोधनम् ।।५
वा विशुद्धात्मा दम्भमात्सर्यवर्जितः ।
यत्किञ्चिदपि पुनात्युभयतः कुलम् ।।६
परं गुह्यं पितॄणां चाति वल्लभम् ।
ण्डप्रदानं तु न भूयो जायते नरः ।।७
ाभिगमनं कृत्वा पिण्डं ददाति यः ।
पितरस्तेन यास्यन्ति परमां गतिम् ।।८
कहितार्थाय रुद्रेण परमात्मना ।
पदं न्यस्तं तत्र पितॄन् प्रसादयेत् ।।९
मनं कर्त्तुं यः शक्तो नाभिगच्छति ।
शोचन्ति पितरस्तं वै वृथा तस्य परिश्रमः ।।१०
गायन्ति पितरो गाथाः कीर्त्तयन्ति महर्षयः ।
गयां यास्यति यः कश्चित् सोऽस्मान् संतारयिष्यति ।।११
यदि स्यात् पातकोपेतः स्वधर्मरतिवर्जितः ।
गयां यास्यति वंश्यो यः सोऽस्मान् संतारयिष्यति ।।१२
एष्टव्या बहवः पुत्राः शीलवन्तो गुणान्विताः ।
तेषां तु समवेतानां यद्येकोऽपि गयां व्रजेत् ।।१३
तस्मात् सर्वप्रयत्नेन ब्राह्मणस्तु विशेषतः ।
प्रदद्याद् विधिवत् पिण्डान् गयां गत्वा समाहितः ।।१४
धन्यास्तु खलु ते मर्त्या गयायां पिण्डदायिनः ।
कुलान्युभयतः सप्त समुद्धृत्याप्नुयात् परम् ।।१५ बें २.३५.१५

---

दे$_6$. ⊙; न$_1$. ab ⊙. –a) ते$_1$ अन्यत्तु, ा$_1$ अन्यत्र (→अन्यच्च). –b) का$_1$ दे$_4$ गुरूणां ); म$_1$ °निर्मितं (→°वन्दितं); ते$_1$ कुरुणा चैव c) दे$_3$ युक्तं (→जुष्टं); का$_1$ ऋषीणामाश्रमे का$_1$ ब$_{1-3}$ दे$_{2.4}$ ते$_1$° विनाशनं (→°विशोधनं).

परं द$_1$ अधिकम्—

तत्र स्नात्वा विशुध्यन्ति कृत्वा कायविशोधनम् ।

–a) ग्र$_2$ तस्य (→तत्र). –b) ग्र$_2$ उ$_1$ दैन्य° दे$_3$ °वन्दिताः, म$_1$ °वर्जितं (→°वर्जितः); ंगवर्जितः. –d) दे$_{10}$ कुली (→कुलम्).

दे$_{1.8-10}$. ⊙. –a) दे$_4$ मुबें. मुए. मुब. परं तीर्थं. –b) ते$_1$ पितॄणामति-, द$_1$ ग्र$_2$ म$_1$ उ$_1$ (→पितॄणां चाति-); ब$_{1-3}$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ मुबें. -दुर्लभं (→ -वल्लभं). –c) दे$_4$ कृता (→कृत्वा); (→पिण्ड°).

–a) द$_1$ ग्र$_2$ उ$_1$ सम्यक् (→सकृद्). –b) म$_1$ →कृत्वा); का$_1$ पिण्डान्, न$_1$ दण्डं (→पिण्डं); ा पिंडानि दाति यः. –c) का$_1$ ब$_{1-3}$ दे$_{2.6}$ ते$_1$ रतास्तेन, दे$_4$ धृतरक्तं तारितास्तेन.

दे$_{1.3.4.8-10}$ न$_1$ द$_1$ ग्र$_2$ म$_1$ उ$_1$. ⊙. –d) त्र पिण्डं (ब$_1$ °ण्डान्), ब$_2$ दे$_6$ पितॄंस्तत्र (→तत्र ब$_1$ ते$_1$ प्रदापयेत् (→प्रसादयेत्).

–a) ते$_1$ गयां तु (→गयाऽभि-);दे$_{10}$ **(→कर्त्तुं). प्रोक्तो (→शक्तो); दे$_{1.8-10}$ ते$_1$ म$_1$ मुबें. मुए. →नाभि°); उ$_1$ यः शक्तो न हि शुद्धयति. –c) दे$_{10}$ →शोचन्ति); ब$_2$ तस्य, ब$_3$ म$_1$ तेषां (→तं वै).

अतः परं द$_1$ ग्र$_2$ म$_1$ उ$_1$ पुस्तकेषु २, ३ संख्याकौ श्लोकौ समागतौ ।

११. म$_1$. ⊙; द$_1$ ग्र$_2$ उ$_1$. ab ⊙. –a) ब$_{1-3}$ दे$_{2.4.6}$ ते$_1$ गीताः (→गाथाः). –c) दे$_2$ गयां यास्यति यत् किञ्चित्. –d) का$_1$ वै (→सं-); ते$_1$ तस्मात्स तारयिष्यति, ग्र$_2$ सोऽस्माकं तारयिष्यति.

१२. दे$_{10}$. ⊙; दे$_6$. d ⊙. –a) द$_1$ ग्र$_2$ म$_1$ उ$_1$ मामको° (→पातको°). –b) दे$_{1.3.8.9}$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ मुबें. मुए. मुब. °परि° (→°रति°). –c) दे$_1$ मुबें. यः कश्चित्, दे$_3$ वत्सोऽथ, दे$_4$ वंशोऽस्य, दे$_{8.9}$ मुए. मुब. वंशोत्थः, न$_1$ वंशोर्धः, ते$_1$ वंशे यः (→वंश्यो यः); ब$_1$ गयां यास्यति रण्ये यः, द$_1$ गयायां यास्यति च यः, ग्र$_2$ गयायां यास्यति दिवं, उ$_1$ गयां यास्यति दिव्यांशे. –d) ते$_1$ तस्मात् स, ग्र$_2$ सोऽस्माकं (→सोऽस्मान् सं-).

१३. –a) दे$_1$ एष्टव्याः, दे$_6$ एष्टव्यः, दे$_{10}$ पृष्टव्या (→एष्टव्या). –b) ब$_3$ दे$_6$ बलवन्तो (→शीलवन्तो). –c) दे$_6$ समचित्तानां, ते$_1$ समुपेतानां, ग्र$_2$ समवेदानां (→समवेतानां). –d) ते$_1$ यद्यप्येको (→यद्येकोऽपि).

१४. ब$_1$. ⊙. –b) दे$_3$ ते$_1$ द$_1$ उ$_1$ ब्राह्मणश्च, ग्र$_2$ ब्राह्मणाय (→ब्राह्मणस्तु). –c) द$_1$ म$_1$ उ$_1$ यदि तान् (→विधिवत्); ते$_1$ दद्यादेव सपिण्डांस्तु. –d) द$_1$ ग्र$_2$ म$_1$ उ$_1$ गयायां तु (उ$_1$ च) विशेषतः.

१५. ब$_1$. ab ⊙. –a) द$_1$ ग्र$_2$ उ$_1$ मन्ये (→मर्त्या). –c) ब$_1$ गयान्युभयतः, ते$_1$ कुलानुभयतः (→कुलान्युभयतः); का$_1$ संतः (→सप्त). –d) ब$_1$ दे$_{1.3}$ मुबें. आप्नुयुः, दे$_{8.9}$ मुए.

वें.२.३५.१६ अन्यच्च तीर्थप्रवरं सिद्धावासमुदाहृतम् ।
प्रभासमिति विख्यातं यत्रास्ते भगवान् भवः ।।१६
तत्र स्नानं तपः श्राद्धं ब्राह्मणानां च पूजनम् ।
कृत्वा लोकमवाप्नोति ब्रह्मणोऽक्षय्यमुत्तमम् ।।१७
तीर्थं त्रैयम्बकं नाम सर्वदेवनमस्कृतम् ।
पूजयित्वा तत्र रुद्रं ज्योतिष्टोमफलं लभेत् ।।१८
सुवर्णाक्षं महादेवं समभ्यर्च्य कपर्दिनम् ।
ब्राह्मणान् पूजयित्वा तु गाणपत्यं लभेद् ध्रुवम् ।।१९
सोमेश्वरं तीर्थवरं रुद्रस्य परमेष्ठिनः ।
सर्वव्याधिहरं पुण्यं रुद्रसालोक्यकारणम् ।।२०
तीर्थानां परमं तीर्थं विजयं नाम शोभनम् ।
तत्र लिङ्गं महेशस्य विजयं नाम विश्रुतम् ।।२१
षण्मासान् नियताहारो ब्रह्मचारी समाहितः ।
उषित्वा तत्र विप्रेन्द्रा यास्यन्ति परमां पदम् ।।२२
अन्यच्च तीर्थप्रवरं पूर्वदेशे सुशोभनम् ।
एकाम्रं देवदेवस्य गाणपत्यफलप्रदम् ।।२३
दत्त्वाऽत्र शिवभक्तानां किञ्चिच्छश्वन्महीं शुभाम् ।
सार्वभौमो भवेद् राजा मुमुक्षुर्मोक्षमाप्नुयात् ।।२४
महानदीजलं पुण्यं सर्वपापविनाशनम् ।
ग्रहणे समुपस्पृश्य मुच्यते सर्वपातकैः ।।२५
अन्या च विरजा नाम नदी त्रैलोक्यविश्रुता ।
तस्यां स्नात्वा नरो विप्रा ब्रह्मलोके महीयते ।।२६

---

मुब. आन्वयुः (→आप्नुयात्); ब$_1$ परः, न$_1$ पदं (→परम्); द$_1$ ग्र$_2$ म$_1$ उ$_1$ समुद्धरति वै नरः.

१६. –a) दे$_4$ ते$_1$ अन्यत्र, द$_1$ ग्र$_2$ म$_1$ उ$_1$ अन्यत्तु (→अन्यच्च). –b) दे$_{3.10}$ द$_1$ उ$_1$ सिद्ध° (→सिद्धा°); ब$_1$ सिद्धवाससमन्वितं. –d) न$_1$ भगवानजः (→भगवान्भवः).

१७. –a) का$_1$ ब$_{2.3}$ दे$_6$ तु यः, दे$_{1.3.8-10}$ ग्र$_2$ मुवें. मुए. मुब. ततः (→तपः); ते$_1$ तत्र स्नानं च श्राद्धं च. –b) दे$_2$ ते$_1$ भोजनं (→पूजनं). –c) दे$_{1.2.10}$ मुए. योगं (→लोकं). –d) ब$_3$ दे$_{1.2.4.8-10}$ न$_1$ ते$_1$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ मुवें. मुए. मुब. ब्राह्मणो (→ब्रह्मणो); दे$_{10}$ उच्यते (→उत्तमं).

१८. न$_1$. c ⊙. –a) का$_1$ त्र्ययंबकं, दे$_{2.8-10}$ त्रियम्बकं दे$_{3.4}$ तु त्र्यम्बकं, द$_1$ ग्र$_2$ उ$_1$ पंचनदं, म$_1$ स्वयं व्रतं (→त्रैयम्बकं); ते$_1$ तीर्थं तु त्र्यम्बकं पुण्यं. –c) का$_1$ दे$_3$ रुद्रो (→रुद्रं). –d) न$_1$ अग्निष्टोम° (→ज्योतिष्टोम°); न$_1$ ग्र$_2$ भवेत् (→लभेत्).

१९. ब$_1$. ⊙. –a) का$_1$ दे$_{2.6.10}$ न$_1$ सुपर्णाक्षे (दे$_6$ °क्ष-), ब$_{2.3}$ ते$_1$ म$_1$ सुवर्णाख्ये (म$_1$ °ख्यं), द$_1$ ग्र$_2$ उ$_1$ सुपर्णास्यं (→सुवर्णाक्षं); न$_1$ मही° (→महा°). –b) द$_1$ ग्र$_2$ म$_1$ उ$_1$ कपालिनं (→कपर्दिनं). –c) दे$_3$ ते$_1$ ग्र$_2$ म$_1$ भोजयित्वा (→पूजयित्वा); दे$_{1.8-10}$ मुवें. मुए. मुब. च (→तु). –d) मुवें. लभेत सः (→लभेद् ध्रुवं); द$_1$ म$_1$ गवाप(म$_1$ °य)नफलं लभेत्, ग्र$_2$ उ$_1$ गयायां न फलं भवेत्.

२०. ब$_1$. ⊙. –a) का$_1$ ब$_{2.3}$ दे$_{2.6}$ °सायुज्य° (→°सालोक्य°); ग्र$_2$ रुद्रस्यालोककारणं.

२१. ब$_1$. ⊙; दे$_3$.cd ⊙. –a) उ$_1$ तीर्थानामपरं तीर्थं. –b) ब$_2$ शोभितं (→शोभनं). –c) द$_1$ त्रिलिंगम महेशस्य(?). –d) ते$_1$ धाम, + नाम (→नाम).

२२. ब$_1$. ⊙. –a) दे$_{1.4.8.9}$ न$_1$ द$_1$ ग्र$_2$ म$_1$ मुवें. मुए. मुब. षण्मास-, दे$_3$ पर्णाशी, उ$_1$ षण्मासं (→षण्मासान्). –c) दे$_{3.4}$ न$_1$ द$_1$ म$_1$ उ$_1$ वसित्वा (→उषित्वा). –d) का$_1$ ब$_{2.3}$ दे$_{2-4.6}$ न$_1$ मुब. प्रयास्यन्ति परं पदं, ते$_1$ प्रयास्यन्ति परां गतिं.

२३. ब$_1$. ab ⊙. –a) ते$_1$ अन्यत्र, द$_1$ ग्र$_2$ म$_1$ अन्यत्तु (→अन्यच्च); ब$_3$ तीर्थं (→तीर्थ-); का$_1$ ब$_2$ दे$_{2.6}$ ते$_1$ तीर्थं परमं (→तीर्थप्रवरं). –b) का$_1$ न$_1$ म$_1$ मुवें. मुए. मुब. पूर्वदेशेषु (→पूर्वदेशे सु-). –c) का$_1$ ब$_2$ दे$_{1.8-10}$ द$_1$ म$_1$ मुवें. मुए. मुब. एकान्तं, ब$_1$ दे$_6$ न$_1$ उ$_1$ मुब. एकाग्रं, ग्र$_2$ एकानां (→एकाम्रं). –d) दे$_4$ गाणपत्यं फलं फलं.

२४. दे$_{1.3.4.8-10}$ न$_1$ द$_1$ ग्र$_2$ म$_1$ उ$_1$. ⊙. –a) ते$_1$ दत्त्वा च (→दत्त्वाऽत्र). –b) दे$_6$ शुभं, ते$_1$ पुनः, +शुभां (→शुभां). –d) ब$_1$ मुमुक्षुर्मोक्षमवाप्नुयात्.

२५. –a) ब$_{1.3}$ °नदीं (→°नदी-). –b) का$_1$ ते$_1$ °प्रणाशनं, ग्र$_2$ उ$_1$ °विशोधनं (→°विनाशनं). –c) ब$_1$ च उपस्पृश्य, दे$_{1.3.4.8-10}$ न$_1$ ते$_1$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ मुवें. मुए. मुब. तदुपस्पृश्य (→समुपस्पृश्य). –d) द$_1$ ग्र$_2$ म$_1$ उ$_1$ सर्वपापैः प्रमुच्यते.

२६. –a) ब$_1$ अन्यत्र, दे$_{6.10}$ ते$_1$ अन्यच्च, द$_1$ कन्या च (→अन्या च). –b) दे$_4$ ग्र$_2$ °विश्रुतः (→°विश्रुता). –c) दे$_4$ तस्मात्, द$_1$ ग्र$_2$ म$_1$ उ$_1$ तत्र (→तस्यां). –c) दे$_{1.8-10}$ ग्र$_2$ मुवें. मुए. विप्रो, दे$_6$ विप्रां, ते$_1$ विप्राः (→विप्रा).

तीर्थं नारायणस्यान्यन्नाम्ना तु पुरुषोत्तमम् ।
तत्र नारायणः श्रीमानास्ते परमपूरुषः ॥२७
पूजयित्वा परं विष्णुं स्नात्वा तत्र द्विजोत्तमः ।
ब्राह्मणान् पूजयित्वा तु विष्णुलोकमवाप्नुयात् ॥२८
तीर्थानां परमं तीर्थं गोकर्णं नाम विश्रुतम् ।
सर्वपापहरं शंभोर्निवासः परमेष्ठिनः ॥२९
दृष्ट्वा लिङ्गं तु देवस्य गोकर्णेश्वरमुत्तमम् ।
ईप्सिताँल्लभते कामान् रुद्रस्य दयितो भवेत् ॥३०
उत्तरं चापि गोकर्णं लिङ्गं देवस्य शूलिनः ।
महादेवस्यार्चयित्वा शिवसायुज्यमाप्नुयात् ॥३१
तत्र देवो महादेवः स्थाणुरित्यभिविश्रुतः ।
तं दृष्ट्वा सर्वपापेभ्यो मुच्यते तत्क्षणान्नरः ॥३२
अन्यत् कुब्जाश्रमतुलं स्थानं विष्णोर्महात्मनः ।
संपूज्य पुरुषं विष्णुं श्वेतद्वीपे महीयते ॥३३
यत्र नारायणो देवो रुद्रेण त्रिपुरारिणा ।
कृत्वा यज्ञस्य मथनं दक्षस्य तु विसर्जितः ॥३४
समन्ताद् योजनं क्षेत्रं सिद्धर्षिगणवन्दितम् ।
पुण्यमायतनं विष्णोस्तत्रास्ते पुरुषोत्तमः ॥३५
अन्यत् कोकामुखं विष्णोस्तीर्थमद्भुतकर्मणः ।
मृतोऽत्र पातकैर्मुक्तो विष्णुसारूप्यमाप्नुयात् ॥३६
शालग्रामं महातीर्थं विष्णोः प्रीतिविवर्धनम् ।
प्राणांस्तत्र नरस्त्यक्त्वा हृषीकेशं प्रपश्यति ॥३७
अश्वतीर्थमिति ख्यातं सिद्धावासं सुपावनम् ।
आस्ते हयशिरा नित्यं तत्र नारायणः स्वयम् ॥३८　वें.२.३५.३८

२७. ग्रै$_{3}$. २७a–२८b ⊙. –a) का$_{1}$ ब$_{2.3}$ दे$_{6}$ तीर्थं नारायणस्याथ, दे$_{4}$ तीर्थं नारायणस्याद्य. –b) ब$_{2.3}$ दे$_{6}$ स्नात्वा (→नाम्ना); ते$_{1}$ श्री- (→तु); ब$_{2}$ दे$_{6}$ पुरुषोत्तमे, ब$_{3}$ पुरुषोत्तमः (→पुरुषोत्तमं). –c) दे$_{6}$ तस्य (→तत्र); ब$_{1}$ उ$_{1}$ नारायण- (→नारायणः).

२८. दे$_{3}$. ab ⊙. –a) ब$_{1}$ विश्वं (→विष्णुं). –b) का$_{1}$ ते$_{1}$ द्विजोत्तमाः, दे$_{6}$ द्विजोत्तम (→द्विजोत्तमः). –c) ते$_{1}$ उ$_{1}$ भोजयित्वा (→पूजयित्वा); म$_{1}$ च (→तु).

२९. ब$_{1}$. २९a–३५d ⊙. –a) न$_{1}$ प्रवरं (→परमं). –d) ब$_{2}$ दे$_{4}$ निवासं, दे$_{3}$ निवेशः (→निवासः).

३०. ब$_{1}$. ⊙. –a) ब$_{3}$ लिङ्गस्तु (→लिंगं तु). –b) दे$_{1.3.4.8.9}$ द$_{1}$ ग्र$_{2}$ गोकर्णं परं, दे$_{10}$ गोकर्णसुरं, ते$_{1}$ गोकर्णवरं, ग्र$_{2}$ गोकर्णं पुरं (→गोकर्णेश्वरं). –c) द$_{1}$ ग्र$_{2}$ म$_{1}$ विविधान् (→ईप्सितान्).

३१. ब$_{1}$. ⊙. –a) न$_{1}$ उत्कृतं, ते$_{1}$ उत्तरां (→उत्तरं). –c) का$_{1}$ दे$_{1.8-10}$ मुवें. मुए. मुब. महादेवं चार्चयित्वा, द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ अर्चयित्वा महादेवं. –d) दे$_{3}$ ते$_{1}$ °सारूप्यम् (→°सायुज्यम्).

३२. ब$_{1}$. ⊙. –b) दे$_{10}$ स्थाणयित्यभिविश्रुतः, ग्र$_{2}$ स्थाणुरित्याभिविश्रुतः. –d) दे$_{1.8-10}$ मुवें. मुए. मुब. तत्क्षणान्मुच्यते नरः.

३३. ब$_{1}$. ⊙. –a) का$_{1}$ अन्यत्कुब्जामृतं स्थानं, दे$_{1.8-10}$ मुवें. मुए. मुब. अन्यत् कुब्जाश्रमं पुण्यं, दे$_{3}$ अन्यच्च तीर्थमतुलं, दे$_{4}$ अन्यं तु कुब्जाम्रमतुलं, ते$_{1}$अन्यत्कुब्जाश्रमं तीर्थं, म$_{1}$ एककुब्जाम्रमतुलं, उ$_{1}$ अन्यत्कुब्जाभ्रमतुलं. –b) का$_{1}$ कृष्णस्य च महात्मनः. –c) ब$_{3}$ दे$_{6}$ विष्णोः (→विष्णुं).

३४. ब$_{1}$. ⊙. –a) ब$_{2}$ दे$_{4}$ म$_{1}$ तत्र (→यत्र). –b) ब$_{2}$ त्रिपुरारिणिः, ब$_{3}$ उ$_{1}$ त्रिपुरद्विषा (→त्रिपुरारिणा). –c) न$_{1}$ कथनं, म$_{1}$ निधनं (→मथनं). –d) का$_{1}$ च (→तु); ब$_{2}$ दे$_{6}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ विवर्जितः (→विसर्जितः).

३५. ब$_{1}$. ⊙. –b) ग्र$_{2}$ देवर्षि° (→सिद्धर्षि°); ब$_{2.3}$ दे$_{1.8-10}$ न$_{1}$ मुवें. मुए. मुब. °सेवितं (→°वन्दितं). –d) दे$_{10}$ तत्रस्तैः (→तत्रास्ते).

३६. –a) दे$_{1.8-10}$ न$_{1}$ ग्र$_{2}$ मुवें. मुए. कोकामुखे, दे$_{3}$ काकमुखं दे$_{4}$ काममुखं, दे$_{6}$ कोकमुखं (→कोकामुखं). –b) दे$_{4}$ °कर्मणा, उ$_{1}$ °कर्मतः (→°कर्मणः). –c) दे$_{1.8-10}$ मुवें. मुए. मुब. मुक्तोऽत्र पातकैर्मर्त्यो, दे$_{3}$ मृतो ना पातकैर्मुक्तो, ते$_{1}$ अतोऽत्र पातकैर्मुक्तो. –d) का$_{1}$ दे$_{4}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ °सायुज्यम् (→°सारूप्यम्).

३७. –a) ब$_{3}$ दे$_{1}$ ग्र$_{2}$ म$_{1}$ साल°, दे$_{1.8-10}$ ते$_{1}$ द$_{1}$ उ$_{1}$ मुवें. मुए. शालि° (→शाल°). –b) द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ विष्णु- (→विष्णोः); ब$_{1}$ यद्विष्णोः प्रीतिवर्धनं. –d) दे$_{10}$ विपश्यति (→प्रपश्यति).

३८. ब$_{1}$. ⊙. –a) दे$_{2}$ ख्यातीं (→ख्यातं). –b) ब$_{3}$ दे$_{1}$ सिद्ध° (→सिद्धा°); दे$_{1.3.8-10}$ ते$_{1}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ मुवें. मुए. मुब. सुशोभनं (→सुपावनं); दे$_{4}$ सिद्धावासमपावनं. –c) का$_{1}$ दे$_{1.8-10}$ मुए. हयशिरो, दे$_{6}$ हयाशिरो, ग्र$_{2}$ हयशिरं (→हयशिरा); ब$_{2}$ नाम (→नित्यं).

बें.२.३५.३८ तीर्थं त्रैलोक्यविख्यातं ब्रह्मणः परमेष्ठिनः ।
पुष्करं सर्वपापघ्नं मृतानां ब्रह्मलोकदम् ॥३९
मनसा संस्मरेद् यस्तु पुष्करं वै द्विजोत्तमः ।
पूयते पातकैः सर्वैः शक्रेण सह मोदते ॥४०
तत्र देवाः सगन्धर्वाः सयक्षोरगराक्षसाः ।
उपासते सिद्धसङ्घा ब्रह्माणं पद्मसंभवम् ॥४१
तत्र स्नात्वा भवेच्छुद्धो ब्रह्माणं परमेष्ठिनम् ।
पूजयित्वा द्विजवरान् ब्रह्माणं संप्रपश्यति ॥४२
तत्राभिगम्य देवेशं पुरुहूतमनिन्दितम् ।
सुरूपो जायते मर्त्यः सर्वान् कामानवाप्नुयात् ॥४३
सप्तसारस्वतं तीर्थं ब्रह्माद्यैः सेवितं परम् ।
पूजयित्वा तत्र रुद्रमश्वमेधफलं लभेत् ॥४४
यत्र मङ्कणको रुद्रं प्रपन्नः परमेश्वरम् ।
आराधयामास हरं पञ्चाक्षरपरायणः ॥४५
नमः शिवायेति मुनिः जपन् पञ्चाक्षरं परम् ।
आराधयामास शिवं तपसा गोवृषध्वजम् ॥४६
प्रजज्वालाथ तपसा मुनिर्मङ्कणकस्तदा ।
ननर्त्त हर्षवेगेन ज्ञात्वा रुद्रं समागतम् ॥४७
तं प्राह भगवान् रुद्रः किमर्थं नर्तितं त्वया ।
दृष्ट्वाऽपि देवमीशानं नृत्यति स्म पुनः पुनः ॥४८
सोऽन्वीक्ष्य भगवानीशः सगर्वं गर्वशान्तये ।
स्वकं देहं विदार्यास्मै भस्मराशिमदर्शयत् ॥४९
पश्येमं मच्छरीरोत्थं भस्मराशिं द्विजोत्तम ।
माहात्म्यमेतत् तपसस्त्वादृशोऽन्योपि विद्यते ॥५०

३९. ते$_{1}$. ३९a–४२b ⊙; न$_{1}$ म$_{1}$ उ$_{1}$. b ⊙. –b) दे$_{1.8.9}$ सिद्धावासं सुशोभनं. –d) दे$_{6}$ सर्वं (→ब्रह्म-).

अतः परं दे$_{1.8-9}$ मुवें. मुए. अधिकम्—

* तत्रास्ति पुण्यदं तीर्थं ब्रह्मणः परमेष्ठिनः। (= ३९ ab)

उ$_{1}$ न$_{1}$ म$_{1}$ अधिकम्—

ब्रह्मणः परमेष्ठिनः। (= ३९ b)

[उ$_{1}$ ब्राह्मणं, म$_{1}$ ब्रह्मादि (→ब्रह्मणः)]

४०. ते$_{1}$. ⊙. –a) म$_{1}$ नित्यं (→यस्तु). –b) का$_{1}$ दे$_{2}$ तीर्थं यः पुष्करं नरः. –c) दे$_{3}$ पूयेत, दे$_{4}$ मुच्यते, दे$_{10}$ पूतयेत् (→पूयते). –d) उ$_{1}$ शंभुणा (→शक्रेण).

४१. ते$_{1}$. ⊙. –b) दे$_{6}$ सयक्षोरगरक्षसः. –c) उ$_{1}$ °सखा (→°संघाः). –d) दे$_{4}$ सिद्ध° (→पद्म°).

४२. ते$_{1}$. ab ⊙. –a) दे$_{1.8.9}$ मुए. मुब. लभेच्छुद्धो, दे$_{4}$ न$_{1}$ द$_{1}$ म$_{1}$ भावशुद्धो, मुवें. व्रजेच्छुद्धो (→भवेच्छुद्धो). –c) दे$_{1.8-10}$ मुवें. मुए. द्विजवरं (→द्विजवरान्).

४३. –a) म$_{1}$ तत्राधि- (→तत्राभि-); दे$_{4}$ द$_{1}$ देवेशीं दे$_{6}$ देवेश (→देवेशं). –b) ब$_{1}$ पुरस्कृतं (→पुरुहूतं); दे$_{4}$ द$_{1}$ पुरुहूतामनिन्दितां, न$_{1}$ पुरुहूतमविनिन्दितं, म$_{1}$ ग्र$_{2}$ उ$_{1}$ पुरुहूतं पुरुष्टुतं. –c) दे$_{1}$ मद्रूपो, न$_{1}$ सुरूपे, ते$_{1}$ सुमारो, मुवें. मुए. मुब. तद्रूपो, दे$_{6}$ उ$_{1}$ स्वरूपो (→सुरूपो); का$_{1}$ ब$_{2.3}$ दे$_{2.6}$ सद्यः (→मर्त्यः). –d) का$_{1}$ ब$_{1.3}$ दे$_{2.6}$ न$_{1}$ ते$_{1}$ समश्नुते (→अवाप्नुयात्).

४४. –a) ब$_{1.3}$ दे$_{6}$ न$_{1}$ ते$_{1}$ मुब. °गोदावरं (न$_{1}$ ते$_{1}$ °री) (→°सारस्वतं). –b) दे$_{1.8-10}$ मुए. मुब. परिसेवितं, दे$_{4}$ सेवितं पुरा, ते$_{1}$ सेवितं नरः (→सेवितं परम्). –d) दे$_{1.10}$ म$_{1}$ उ$_{1}$ मुवें. मुए. मुब. भवेत् (→लभेत्).

४५. ब$_{1}$. ⊙; द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$. ab ⊙; दे$_{1.8.9}$ मुवें. मुए. cd ⊙. –a) दे$_{4}$ न$_{1}$ तत्र (→यत्र); ते$_{1}$ यत्र मांगलिको रुद्रः. –b) ते$_{1}$ प्रसन्नः परमेष्ठिनः. –c) दे$_{4.10}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ परं (→हरं). –d) द$_{1}$ म$_{1}$ उ$_{1}$ मन्त्रं साक्षरपञ्चकः.

४६. ब$_{1}$. ⊙; दे$_{1.8.9}$ मुवें. मुए. ab ⊙; ग्र$_{2}$. abc ⊙. –a) ते$_{1}$ परं, म$_{1}$ सदा (→मुनिः). –b) का$_{1}$ दे$_{2.6.10}$ पदं (→परं). –c) दे$_{6}$ जघन्यं चाक्षरं पदं.

४७. ब$_{1}$. ⊙. –a) न$_{1}$ प्रजज्वाल च तपसा, ग्र$_{2}$ प्रज-ज्वालाधितपसा. –b) ब$_{2.3}$ दे$_{3.4.6}$ ग्र$_{2}$ तथा (→तदा); ते$_{1}$ मुनिर्माङ्गलिकस्तथा. –c) दे$_{10}$ योगेन (→वेगेन). –d) ब$_{3}$ दे$_{2.6}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ ज्ञात्वा रुद्रः समागतः, ते$_{1}$ ज्ञात्वा रुद्रमुमापतिं.

४८. ब$_{1}$. ⊙. –c) दे$_{3}$ तु (→[अ]पि). –d) दे$_{4}$ न$_{1}$ नृत्यन्ति, द$_{1}$ नर्तति (→नृत्यति).

४९. ब$_{1}$. ⊙. –a) दे$_{3}$ सोनुवीक्ष्य, दे$_{6}$ सोवीक्ष्य (→सोऽन्वीक्ष्य). –b) ब$_{3}$ सगर्भं, दे$_{2}$ सर्वाभः, दे$_{3}$ संगतो, न$_{1}$ द$_{1}$ सर्वगं, उ$_{1}$ सर्वगो (→सगर्वं); दे$_{4}$ न$_{1}$ सर्वशान्तये, दे$_{10}$ शान्तये स्वयं (→गर्वशान्तये). –c) दे$_{1.8.9}$ मुए. स्वयं (→स्वकं); दे$_{1.8}$ मुए. विहाया°, दे$_{4}$ विदीर्या° (→विदार्या°). –d) का$_{1}$ दे$_{10}$ प्रदर्शयेत्, न$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ प्रदर्शयत्, दे$_{1.4.8.9}$ मुए. प्रदर्शयन्, दे$_{6}$ द$_{1}$ अदर्शयन् (→अदर्शयत्).

५०. ब$_{1}$ दे$_{4}$. ⊙. –b) दे$_{1.8.9}$ मुए. मुब. भस्मापि त्वं (→भस्मराशिं); ब$_{2.3}$ दे$_{1-3.10}$ उ$_{1}$ द्विजोत्तमः (→द्विजोत्तम).

यत् सगर्वं हि भवता नर्तितं मुनिपुंगव ।
न युक्तं तापसस्यैतत् त्वत्तोप्यत्राधिको ह्यहम् ॥५१
इत्याभाष्य मुनिश्रेष्ठं स रुद्रः किल विश्वदृक् ।
आस्थाय परमं भावं ननर्त्त जगतो हरः ॥५२
सहस्रशीर्षा भूत्वा सहस्राक्षः सहस्रपात् ।
दंष्ट्राकरालवदनो ज्वालामाली भयंकरः ॥५३
सोऽन्वपश्यदशेषस्य पार्श्वे तस्य त्रिशूलिनः ।
विशाललोचनमेकां देवीं चारुविलासिनीम् ।
सूर्यायुतसमप्रख्यां प्रसन्नवदनां शिवाम् ॥५४
सस्मितं प्रेक्ष्य विश्वेशं तिष्ठन्तीममितद्युतिम् ।
दृष्ट्वा संत्रस्तहृदयो वेपमानो मुनीश्वरः ।
ननाम शिरसा रुद्रं रुद्राध्यायं जपन् वशी ॥५५
प्रसन्नो भगवानीशस्त्र्यम्बको भक्तवत्सलः ।
पूर्ववेषं स जग्राह देवी चान्तर्हिताऽभवत् ॥५६
आलिङ्ग्य भक्तं प्रणतं देवदेवः स्वयंशिवः ।
न भेतव्यं त्वया वत्स प्राह किं ते ददाम्यहम् ॥५७
प्रणम्य मूर्ध्ना गिरिशं हरं त्रिपुरसूदनम् ।
विज्ञापयामास तदा हृष्टः प्रष्टुमना मुनिः ॥५८
नमोऽस्तु ते महादेव महेश्वर नमोऽस्तु ते ।
किमेतद् भगवद्रूपं सुघोरं विश्वतोमुखम् ॥५९
का च सा भगवत्पार्श्वे राजमाना व्यवस्थिता ।
अन्तर्हितेव सहसा सर्वमिच्छामि वेदितुम् ॥६०　　वें.२.३५.६१

---

–c) का$_1$ म$_1$ तपसा (→तपसः); दे$_{10}$ माहात्म्यं ये न तपसा. –d) ग्र$_2$ म$_1$ त्वादृशोऽन्यो न विद्यते.

५१. ब$_1$. ⊙. –a) दे$_{1.8-10}$ मुए. मुब. यः स-, द$_1$ ग्र$_2$ यत्र (→यत् स-); दे$_4$ न$_1$ सर्वगं (→सगर्वं); ते$_1$ यत्समक्षं हि भवतो, उ$_1$ यत् गर्वं हि भगवता. –b) दे$_6$ ते$_1$ वर्तितं (→नर्तितं); दे$_2$ ग्र$_2$ °पुङ्गवा, दे$_4$ द$_1$ °पुङ्गवं (→°पुङ्गव). –c) का$_1$ न युक्तं न यशस्यं तत्. –d) द$_1$ ग्र$_2$ म$_1$ उ$_1$ त्वत्तो ह्यत्रा-, दे$_{3.4}$ त्वत्तः पुत्रा- (→त्वत्तोप्यत्रा-); ब$_3$ ह्ययं, दे$_3$ [अ] स्म्यहं (→ह्यहं); दे$_{1.8-10}$ मुवें. मुए. मुब. त्वत्तोप्यभ्यधिको ह्यहं.

५२. ब$_1$. ⊙. –b) मुवें. रुद्रोऽखिल- (→रुद्रः किल); ब$_3$ दे$_{3.6.10}$ द$_1$ म$_1$ °धृक्, दे$_4$ न$_1$ ग्र$_2$ °सृक्, उ$_1$ °कृत् (→°दृक्). –c) मुवें. आख्यया, मुए. आख्याय (→आस्थाय). –d) द$_1$ ग्र$_2$ म$_1$ उ$_1$ ननर्त्त च ततो हरः.

५३. ब$_1$. ⊙. –a) दे$_4$ ते$_1$ °शीर्षो (→°शीर्षा); दे$_3$ तु (→स-); द$_1$ ग्र$_2$ म$_1$ उ$_1$ सहस्रशीर्षा पुरुषः, न$_1$ सहस्रशिरसा भूत्वा. –d) दे$_1$ ज्वाल- (→ज्वाला-); का$_1$ दे$_{1.3}$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ माला-, दे$_{10}$ -मालि- (→-माली).

५४. ब$_1$. ⊙. –a) दे$_{1.3.4.8-10}$ न$_1$ ते$_1$ ग्र$_2$ म$_1$ उ$_1$ मुवें. मुए. मुब. अथेशस्य (→अशेषस्य). –b) ब$_{2.3}$ दे$_6$ शाश्वतस्य (→पार्श्वे तस्य); न$_1$ प्रशूलिनः (→त्रिशूलिनः). –d) दे$_3$ °विलोचनां (→°विलासिनीं). –e) दे$_6$ °समप्रख्यं द$_1$ मुवें. मुए. °समाकारां (→°समप्रख्यां). –f) दे$_{10}$ प्रसन्नवदनं शिवं.

५५. ब$_1$. ⊙. –a) दे$_3$ विस्मितं, दे$_4$ विस्मिता, दे$_{10}$ सा स्मितं, न$_1$ तस्मिस्तं, ते$_1$ म$_1$ सस्मितां (→सस्मितं); दे$_{2.4}$ विश्वेशां, न$_1$ विश्वेशीं (→विश्वेशं). –b) दे$_{1.8-10}$ ते$_1$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ मुवें. मुए. तिष्ठन्तं (→तिष्ठन्तीं); म$_1$ अमितौजसं (→अमितद्युतिं). –c) न$_1$ म$_1$ संतप्त°, ते$_1$ संहृष्ट° (→संत्रस्त°). –d) द$_1$ ग्र$_2$ म$_1$ हृदीश्वरं, उ$_1$ महेश्वरं (→मुनीश्वरः). –f) द$_1$ ग्र$_2$ म$_1$ उ$_1$ हृदा, दे$_3$ शिवं (→वशी).

५६. ब$_1$. ⊙; दे$_4$. ५६d–५७b ⊙. –b) दे$_4$ भक्ति° (→भक्त°). –c) दे$_4$ पूर्वमेव, द$_1$ म$_1$ उ$_1$ पूर्वदेहं (→पूर्ववेषं); दे$_{1.8-10}$ मुए. जगृहे (→जग्राह). –d) उ$_1$ °स्थिता° (→°हिता°).

५७. ब$_1$. ⊙; दे$_4$. ab ⊙ (द्र. ५६ पा. वि.). –a) ते$_1$ अष्टाङ्ग- (→आलिङ्ग्य); ग्र$_2$ सततं (→प्रणतं). –d) दे$_3$ वरं, ते$_1$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ ब्रूहि (→प्राह).

५८. ब$_1$. ⊙. –c) ग्र$_2$ मुदा (→तदा). –d) दे$_{3.6}$ उ$_1$ हृष्ट- (→हृष्टः); का$_1$ दे$_3$ न$_1$ ते$_1$ द$_1$ ग्र$_2$ म$_1$ पुष्टमना (→प्रष्टुमना); दे$_4$ हृष्टपुष्टचतुर्मुनिः.

५९. ब$_1$. ⊙. –b) म$_1$ विशेश्वर (→महेश्वर). –c) दे$_6$ भवतो रूपं, द$_1$ उ$_1$ भगवन् रूपं (→भगवद्रूपं). –d) द$_1$ ग्र$_2$ म$_1$ उ$_1$ अघोरं (→सुघोरं).

६०. ब$_1$. ⊙. –a) का$_1$ ब$_{2.3}$ दे$_{2.3}$ ते$_1$ भगवन् पार्श्वे, दे$_6$ द$_1$ भगवान् पार्श्वे (→भगवत्पार्श्वे). –b) का$_1$ ब$_{2.3}$ दे$_{2.6}$ ते$_1$ भ्राज° (→राज°). –c) का$_1$ ब$_3$ दे$_3$ म$_1$ °हितैव ब$_2$ दे$_{1.4.8.9}$ मुवें. मुब. °हिते च, दे$_6$ °हिते वै, ते$_1$ द$_1$ ग्र$_2$ °हिता च (→°हितेव).

बें.२.३५.६१ इत्युक्ते व्याजहारेमं तथा मङ्कणकं हरः ।
महेशः स्वात्मनो योगं देवीं च त्रिपुरानलः ॥६१
अहं सहस्रनयनः सर्वात्मा सर्वतोमुखः ।
दाहकः सर्वपापानां कालः कालकरो हरः ॥६२
मयैव प्रेर्यते कृत्स्नं चेतनाचेतनात्मकम् ।
सोऽन्तर्यामी स पुरुषो ह्यहं वै पुरुषोत्तमः ॥६३
तस्य सा परमा माया प्रकृतिस्त्रिगुणात्मिका ।
प्रोच्यते मुनिभिशक्तिर्जगद्योनिः सनातनी ॥६४
स एष मायया विश्वं व्यामोहयति विश्ववित् ।
नारायणः परोऽव्यक्तो मायारूप इति श्रुतिः ॥६५

एवमेतज्जगत् सर्वं सर्वदा स्थापयाम्यहम् ।
योजयामि प्रकृत्याऽहं पुरुषं पञ्चविंशकम् ॥६६
तथा वै संगतो देवः कूटस्थः सर्वगोऽमलः ।
सृजत्यशेषमेवेदं स्वमूर्त्तेः प्रकृतेरजः ॥६७
स देवो भगवान् ब्रह्मा विश्वरूपः पितामहः ।
तवैतत् कथितं सम्यक् स्रष्टृत्वं परमात्मनः ॥६८
एकोऽहं भगवान् कालो ह्यनादिश्चान्तकृद् विभुः ।
समास्थाय परं भावं प्रोक्तो रुद्रो मनीषिभिः ॥६९
मम वै साऽपरा शक्तिर्देवी विद्येति विश्रुता ।
दृष्टा हि भवता नूनं विद्यादेहस्त्वहं ततः ॥७०

---

६१. ब$_1$. ⊙. –a) का$_1$ ब$_{2.3}$ दे$_{2.6.10}$ न$_1$ ते$_1$ द$_1$ ग्र$_2$ मुब. इत्युक्तो, दे$_3$ इत्युक्तं (→इत्युक्ते); दे$_{1.8-10}$ मुबें. मुए. मुब. व्याजहारेशस्, द$_1$ ग्र$_2$ उ$_1$ व्याजहारेत्थं, म$_1$ व्याजहारेत्य (→व्याजहारेमं). –b) दे$_{1.3.4.8-10}$ न$_1$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ मुबें. मुए. मुब. तदा (→तथा); ते$_1$ माङ्गलिकं, म$_1$ तं मङ्कणं (→मंकणकं). –c) द$_1$ महेशं, ग्र$_2$ मेनेशं, उ$_1$ येनेशं (→महेशः); का$_1$ ब$_2$ दे$_6$ चात्मनो (→स्वात्मनो); न$_1$ स्वात्मयोगं च देवीं च, ते$_1$ महेशस्यात्मनो योगं, म$_1$ महेश स्वात्मनो ज्ञेया. –d) का$_1$ देवो हि, दे$_6$ ते$_1$ देवं च, न$_1$ देवश्च (→देवीं च); का$_1$ दे$_{3.4}$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ त्रिपुरान्तकः (उ$_1$ °कं), दे$_{4.6}$ त्रिपुराननः (→त्रिपुरानलः).

६२. ब$_1$. ⊙. –b) ग्र$_2$ सहस्रात्मा, उ$_1$ सर्वदः (→सर्वात्मा); म$_1$ विश्वतो° (→सर्वतो°). –c) दे$_{1.8-10}$ मुबें. मुए. मुब. °पाशानां (→°पापानां). –d) का$_1$ उ$_1$ काल-, न$_1$ काम- (→कालः); दे$_4$ न$_1$ °हरो (→°करो).

६३. ब$_1$. ⊙. –a) दे$_{3.4}$ मयैतत्, ते$_1$ मयेदं, ग्र$_2$ मयैवं, उ$_1$ इत्येव (→मयैव); ब$_{2.3}$ पूर्यते, ते$_1$ पीयते, द$_1$ ग्र$_2$ म$_1$ व्याप्यते, उ$_1$ प्राप्यते (→प्रेर्यते); दे$_{1.8-10}$ मुए. मुब. विश्वं (→कृत्स्नं). –b) दे$_{10}$ चेतनश्चेतनात्मकम्. –c) ब$_2$ यः, ग्र$_2$ च, ते$_1$ उ$_1$ ह (→स); का$_1$ सर्वान्तर्यामी पुरुषो. –d) द$_1$ ग्र$_2$ म$_1$ उ$_1$ च (→वै); दे$_4$ यत्र स्तास शिवोऽच्युतः.

६४. ब$_1$. ⊙. –a) ते$_1$ तामसी (→तस्य सा). –c) न$_1$ प्रेर्यते (→प्रोच्यते). –d) न$_1$ उ$_1$ सनातनः (→सनातनी).

६५. ब$_1$. ⊙. –a) न$_1$ द$_1$ ग्र$_2$ उ$_1$ एव (→एष). –b) दे$_{1.8-10}$ उ$_1$ मुबें. मुए. मुब. विश्वकृत् (→विश्ववित्). –c) न$_1$ नारायणं (→नारायणः). –d) ग्र$_2$ °रूपी (→°रूप); म$_1$ मायारूपीति विश्रुतिः.

६६. ब$_1$. ⊙. –a) का$_1$ दे$_2$ ग्र$_2$ म$_1$ एवमेव (→एवमेतत्); का$_1$ ब$_{2.3}$ दे$_2$ ते$_1$ म$_1$ कृत्स्नं (→सर्वं). –d) का$_1$ सर्वदा ख्यापयाम्यहं, दे$_{3.6}$ सदा संस्थापयाम्यहं, म$_1$ सर्वं संस्थापयाम्यहं.

६७. ब$_1$. ⊙. –a) का$_1$ दे$_{2.3.6}$ न$_1$ म$_1$ तया (→तथा); का$_1$ ब$_{2.3}$ दे$_{2.6}$ स संगतो (→वै संगतो); ते$_1$ तया स स्वजिते देवः, द$_1$ तथैव संगतो देवः, उ$_1$ तथा या वै गतो देवः. –b) ग्र$_2$ सर्वतो (→सर्वगो); दे$_3$ भवः (→[अ]मलः); द$_1$ म$_1$ उ$_1$ हृत्स्थः सर्वगतोऽमलः. –c) दे$_{10}$ सृजत्यानेव शेषेदं. –d) ते$_1$ स्वमूर्त्तिप्रेरितो जनः.

६८. ब$_1$. ⊙. का$_1$ ६८a 'ब्रह्मा' इत्यारभ्य ६९a 'भगवान्' पर्यन्तं ⊙ (द्र. सं.). –a) ग्र$_2$ सर्वदेवो भवान् ब्रह्म. –b) न$_1$ ग्र$_2$ विश्वरूप- (→विश्वरूपः); ब$_{2.3}$ दे$_{2.6}$ विश्वरूपधरः प्रभुः. –c) दे$_6$ तथैतत्, ते$_1$ इत्येतत्, म$_1$ त्वयैतत् (→तवैतत्). –d) ब$_{2.3}$ सृष्ट्यर्थं, दे$_{8-10}$ उ$_1$ सृष्टृत्वं, ते$_1$ संस्मृत्या (→स्रष्टृत्वं); दे$_{1.9.10}$ ग्र$_2$ परमेष्ठिना, दे$_3$ द$_1$ म$_1$ परमेष्ठिनः, दे$_4$ परात्मनः (→परमात्मनः).

६९. ब$_1$. ⊙. –a) ग्र$_2$ यो मोहो (→एकोहं). –b) न$_1$ ह्यनन्तश् (→ह्यनादिश्);

७०. ब$_1$. ⊙. –a) दे$_6$ मयैव (→ममैव); दे$_{1.8.9}$ प्राभिर् (→शक्तिर्); ते$_1$ ममैनमपराशक्तिः. –b) ब$_2$ नित्येति (→विद्येति); ते$_1$ देवी विद्येत्यभिश्रुता. –c) दे$_{1.4.8-10}$ मुबें. मुए. मुब. दृष्टो, न$_1$ ग्र$_2$ उ$_1$ दृष्ट्वा, द$_1$ स्रष्टा, म$_1$ सृष्टा (→दृष्टा); ते$_1$ सा (→हि); द$_1$ भगवन्, ग्र$_2$ म$_1$ भगवान् (→भवता). –d) का$_1$ °देहास्, दे$_3$ °वेदस्, दे$_{10}$ ग्र$_2$ °देहं, द$_1$ °देवी (→°देहस्); दे$_{1.8-10}$ न$_1$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ मुबें. मुए. मुब. स्वयं (→त्वहं); दे$_{10}$ वृतः (→ततः).

वें.२.३८.१८

आसामथैषामपि वासुदेवो
मायी मुरारिर्मनसि प्रविष्टः ।
करोति भोगान् मनसि प्रवृत्तिं
मायानुभूयन्त इतीव सम्यक् ॥१८
विभाति विश्वामरभूतभर्त्ता
स माधवः स्त्रीगणमध्यविष्टः ।
अशेषशक्त्यासनसंनिविष्टो
यथैकशक्त्या सह देवदेवः ॥१९
करोति नृत्यं परमप्रभावं
तदा विरूढः पुनरेव भूयः ।
ययौ समारुह्य हरिः स्वभावं
तदीशवृत्तामृतमादिदेवः ॥२०
दृष्ट्वा नारीकुलं रुद्रं पुत्राणामपि केशवम् ।
मोहयन्तं मुनिश्रेष्ठाः कोपं संदधिरे भृशम् ॥२१
अतीव परुषं वाक्यं प्रोचुर्देवं कपर्दिनम् ।
शेपुश्च शापैर्विविधैर्मायया तस्य मोहिताः ॥२२
तपांसि तेषां सर्वेषां प्रत्याहन्यन्त शंकरे ।
यथादित्यप्रकाशेन तारका नभसि स्थिताः ॥२३
ते भग्नतपसो विप्राः समेत्य वृषभध्वजम् ।
को भवानिति देवेशं पृच्छन्ति स्म विमोहिताः ॥२४

---

१८. ब$_1$. acd ⊙; दे$_4$ ग्र$_2$.cd ⊙. –a) दे$_{1.8-10}$ मुवें. मुए. आशामथैकां, दे$_6$ न$_1$ उ$_1$ आशामथैषां, द$_1$ आप्रामथैषां(?), मुब. आसामथैकां (→आसामथैषां); दे$_4$ भूतभर्त्ता, द$_1$ ग्र$_2$ वासुदेवे (→वासुदेवो). –b) दे$_{3.6.10}$ ते$_1$ द$_1$ ग्र$_2$ माया, न$_1$ मारी (→मायी); ब$_2$ महारिर्, ते$_1$ सुरारिः (→मुरारिर्); ब$_2$ प्रहृष्टः, दे$_2$ प्रविष्टं, दे$_3$ प्रविश्या, ते$_1$ प्रतिष्ठः, द$_1$ प्रविष्टा, उ$_1$ प्रविष्टो (→प्रविष्टः); दे$_4$ समाधवस्त्रीगणमध्यविष्टः. –c) दे$_{10}$ भागान्, म$_1$ मोहान् (→भोगान्); का$_1$ ब$_{2.3}$ दे$_{2.6}$ मनसोनुवृत्तिं, दे$_3$ विविधान्मनोज्ञं, न$_1$ मनसो निवृत्तिर्, ते$_1$ मनसोपि वृत्तिं, द$_1$ मनसि प्रवृत्तं (→मनसि प्रवृत्तिं). –d) दे$_{1.8.10}$ मायीनुभूयन्त (→मायानुभूयन्त); ब$_2$ मायानुभूतान्महतीव सम्यक्, ब$_3$ मुब. मायानुभूतान् स इतीव सम्यक्, दे$_3$ मायामयं देहमुपेत्य सम्यक्, दे$_6$ मायानुभूतं तदतीव सम्यक्.

१९. ग्र$_2$. ⊙; ब$_1$ दे$_4$. ab ⊙. –a) ब$_2$ विष्णाति (→विभाति); दे$_{1.8.9}$ मुवें. मुए. मुब. °विश्वनाथः, ते$_1$ द$_1$ °भूतिभर्ता (→°भूतभर्त्ता); दे$_{10}$ विश्वाति विश्वात्परिविश्वनाथः. –b) का$_1$ °मध्यविप्राः, दे$_3$ °संप्रविष्टः, दे$_{8-10}$ मुवें. मुए. मुब. °संनिविष्टः (→°मध्यविष्टः); दे$_1$ समाधवस्त्रीसगणो निविष्टः. –c) दे$_3$ यथेष्ट-, म$_1$ अथेष- (→अशेष-); दे$_{1.8-10}$ ते$_1$ मुवें. मुए. मुब. -शक्त्या समयं निविष्टो, द$_1$ शक्त्या ****** (→-शक्त्यासनसंनिविष्टो). –d) ते$_1$ यथैव सभ्यो (→यथैकशक्त्या).

२०. –a) का$_1$ ब$_1$ दे$_{1.2.8-10}$ ग्र$_2$ मुवें. मुए. मुब. नित्यं, दे$_4$ न$_1$ म$_1$ उ$_1$ नृत्तं, ते$_1$ वल्कं, द$_1$ भावं (→नृत्यं); ब$_1$ दे$_4$ ते$_1$ म$_1$ उ$_1$ परमं प्रभावं, दे$_{1.3.8-10}$ द$_1$ ग्र$_2$ मुवें. मुए.मुब. परमं प्रधानं (→परमप्रभावं). –b) का$_1$ब$_3$ तदादिरूढः, दे$_2$ तदधिरूढः, दे$_3$ तदा विरूढं, दे$_4$ तथादिभूतः, दे$_{6.10}$ द$_1$ ग्र$_2$ तदाधिरूढः, न$_1$ तदा विरुद्धं, ते$_1$ *****, उ$_1$ तदादिभूतः (→तदा विरूढः). –c) दे$_3$ ययौ समालिंग्य हरेरुदारं. –d) ब$_1$ तदीशभूतोमृतमादिदेवः, दे$_{1.8.10}$ ग्र$_2$ मुवें. मुए. मुब. तमीदृशं नाम तमादिदेवम्, दे$_3$ मुखारविंदामृतमादिदेवः, ते$_1$ तदीशतुष्टामृतमादिदेवः, द$_1$ उ$_1$ नदीश(उ$_1$ °य) नृत्तामृत (उ$_1$ भृ) तमादिदेवः.

२१. –a) दे$_3$ शतं (→-कुलं). –b) ब$_3$ पुत्राणामति-, दे$_{1.8-10}$ न$_1$ उ$_1$ मुवें. मुए. मुब. पुत्रानपि च (→पुत्राणामपि). –c) ब$_1$ दे$_4$ द$_1$ मोहयन्ति (→मोहयन्तं); दे$_6$ मुनिश्रेष्ठां, ते$_1$ इति श्रेष्ठाः (→मुनिश्रेष्ठाः).

२२. –a) का$_1$ दे$_6$ ते$_1$ अतीव सदृशं, ब$_1$ द$_1$ उ$_1$ अतीव पुरुषं, ब$_{2.3}$ दे$_6$ अतीवासदृशं (→अतीव परुषं). –b) ग्र$_2$ म$_1$ उ$_1$ पिनाकिनं (→कपर्द्दिनम्). –c) दे$_{10}$ शेषश्च (→शेपुश्च); ब$_1$ पाशैर्विविधैर्, दे$_{1.8-10}$ मुवें. मुए, विविधैर्वाक्यैर्, दे$_4$ विविधैः शापैः, न$_1$ भावैर्वि*धैर् (→शापैर्विविधैर्).

२३. उ$_1$. २३–२४ ⊙ (द्र. सं.); दे$_4$. b ⊙. –a) द$_1$ म$_1$ विविधान्यत्र (→तेषां सर्वेषां); ग्र$_2$ यान्ति विविधान्यत्र. –b) का$_1$ संप्रहन्यतु, ब$_2$ प्रत्यहन्वथ, ब$_3$ प्रत्याहत्याथ, दे$_{2-4}$ प्रत्याहन्यत, ते$_1$ प्रत्यहन्यन्त, म$_1$ प्रत्यहन्येति (→प्रत्याहन्यन्त); का$_1$ ब$_{2.3}$ दे$_{2-4.6}$ शंकरः, ते$_1$ सर्वतः (→शंकरे). –c) दे$_{1.8-10}$ न$_1$ मुवें. मुए. मुब. °प्रतीकाशे (→°प्रकाशेन); दे$_{10}$ यथा दिव्यप्रतीकाशे. –d) ब$_1$ नभसंस्थिताः (→नभसि स्थिताः); द$_1$ तारकारं नभस्थिताः.

२४. उ$_1$. ⊙ (द्र. २३ पा. वि.). –a) दे$_{1.8.10}$ मुवें. तं भर्त्स्यं तापसा, दे$_9$ संभर्त्स्यं तापसा, द$_1$ ग्र$_2$ ते

सोऽब्रवीद्      भगवानीशस्तपश्चर्तुमिहागतः ।
इदानीं भार्यया देशे भवद्भिरिह सुव्रताः ।।२५
तस्य ते वाक्यमाकर्ण्य भृग्वाद्या मुनिपुंगवाः ।
ऊचुर्गृहीत्वा वसनं त्यक्त्वा भार्यां तपश्चर ।।२६
अथोवाच विहस्येशः पिनाकी नीललोहितः ।
संप्रेक्ष्य जगतो योनिं पार्श्वस्थं च जनार्दनम् ।।२७
कथं भवद्भिरुदितं स्वभार्यापोषणोत्सुकैः ।
त्यक्तव्या मम भार्येति धर्मज्ञैः शान्तमानसैः ।।२८

ऋषय ऊचुः ।❀

व्यभिचाररता नार्यः संत्याज्याः पतिनेरिताः ।
अस्माभिरेषा सुभगा तादृशी त्यागमर्हति ।।२९

महादेव उवाच ।❀

न कदाचिदियं विप्रा मनसाप्यन्यमिच्छति ।
नाहमेनामपि तथा विमुञ्चामि कदाचन ।।३०

ऋषय ऊचुः ।❀

दृष्ट्वा व्यभिचरन्तीह ह्यस्माभिः पुरुषाधम ।
उक्तं ह्यसत्यं भवता गम्यतां क्षिप्रमेव हि ।।३१
एवमुक्ते महादेवः सत्यमेव मयेरितम् ।
भवतां प्रतिभात्येषेत्युक्त्वासौ विचचार ह ।।३२
सोऽगच्छद्धरिणा सार्द्धं मुनीन्द्रस्य महात्मनः ।    वे.२.३८.३३

---

भग्नमनसो, म$_{1}$ तद् भग्नतपसो, मुवें. मुब. तं भत्स्यं तपसा (→ते भग्नतपसो); दे$_{3}$ तथा ते भग्नतपसो. –b) दे$_{3}$ विप्रा ऐत्य वृषध्वजम्. –c) ते$_{1}$ विश्वेशं (→देवेशं). –d) दे$_{6}$ पृच्छंति ऋषयस्थिता.

२५. –b) का$_{1}$ ब$_{2.3}$ दे$_{2}$ तपस्तप्तुं (→तपश्चर्तुं); का$_{1}$ इहागतं, दे$_{3.4}$ न$_{1}$ द$_{1}$ म$_{1}$ अहं गतः, दे$_{10}$ ते$_{1}$ इहागताः (→इहागतः). –c) दे$_{4}$ तदानीं (→इदानीं); का$_{1}$ देव, दे$_{1.3.4.8-10}$ ग्र$_{2}$ उ$_{1}$ मुवें. मुए. देशं, द$_{1}$ म$_{1}$ चाहं (→देशे). –d) दे$_{3}$ भवतामिह, म$_{1}$ इमन्देशन्तु (→भवद्भिरिह).

२६. –a) ते$_{1}$ तस्य तद्वाक्यमाकर्ण्य, द$_{1}$ ग्र$_{2}$ म$_{1}$ तस्य वाक्यं समाकर्ण्य. –c) दे$_{1.4.8-10}$ म$_{1}$ उ$_{1}$ वचनं, न$_{1}$ वचनस्, ते$_{1}$ तु वनं (→वसनं). –d) ब$_{1}$ दे$_{1.6}$ तपश्चरन्, दे$_{2}$ न$_{1}$ म$_{1}$ तपश्चरः (→तपश्चर).

२७. –a) का$_{1}$ प्रहस्येशः, दे$_{3}$ प्रहस्यैव, ते$_{1}$ प्रहस्यैष (→विहस्येशः); दे$_{6}$ अथोपवाचं विहसेश. –c) दे$_{1.3.6.8-10}$ न$_{1}$ म$_{1}$ उ$_{1}$ मुवें. मुए. मुब. जगतां, द$_{1}$ ग्र$_{2}$ भगवान् (→जगतो); दे$_{1}$ योनिः (→योनिं). –d) का$_{1}$ ब$_{1.3}$ दे$_{3}$ न$_{1}$ ते$_{1}$ पार्श्वसंस्थं, ब$_{2}$ स्वपार्श्वस्थं, दे$_{2.6}$ पार्श्वं संस्थं (→पार्श्वस्थं च).

२८. –a) का$_{1}$ दे$_{2}$ आदिष्टा, ब$_{2}$ आदिष्टं, ब$_{3}$ उद्दिष्टं, दे$_{6}$ उद्विष्ट- (→उदितं). –b) म$_{1}$ सभार्या- (→स्वभार्या-); उ$_{1}$ °त्सुकाः (→°त्सुकैः); दे$_{6}$ भार्याया चैवमुत्सुकैः. –c) दे$_{6}$ ममेयमिति (→मम भार्येति). –d) दे$_{3}$ भवद्भिः, दे$_{4}$ धर्मज्ञाः, ग्र$_{2}$ म$_{1}$ धर्मः किं (→धर्मज्ञैः).

❀ दे$_{1.8.9}$ मुए. मुनय ऊचुः; न$_{1}$ ते$_{1}$ द$_{1}$ ऋषयः; ग्र$_{2}$ म$_{1}$ उ$_{1}$ मुनयः.

२९. दे$_{6}$. ⊙. –a) दे$_{1.9}$ मुवें. मुए. मुब. भार्याः (→नार्यः); ते$_{1}$ व्यभिचारं चरन्मर्त्यस्. –b) न$_{1}$ संत्यज्याः पतितेरितं, ते$_{1}$ सन्त्याज्य इति चोदितम्. –c) दे$_{1.8-10}$ मुवें. मुए. अस्माभिर्भक्ताः (दे$_{10}$ °क्त), दे$_{3}$ अस्माकमेषा (→अस्माभिरेषा); का$_{1}$ अस्माभिसुभगारेषा, द$_{1}$ अस्माभिरेष सा माना, ग्र$_{2}$ अस्माभि *** समा. –d) दे$_{1.8-10}$ उ$_{1}$ मुवें. मुए. नेदृशास्, द$_{1}$ तादृशां (→तादृशी); दे$_{1}$ त्यागमर्हसि, म$_{1}$ त्याज्यमर्हसि (→त्यागमर्हति).

❀ दे$_{6.10}$ ⊙; का$_{1}$ श्रीमहादेव उवाच; ब$_{1-3}$ दे$_{2.4}$ देव उवाच; न$_{1}$ देवः; ते$_{1}$ ईश्वरः; द$_{1}$ श्रीमहादेवः; ग्र$_{2}$ म$_{1}$ उ$_{1}$ महादेवः.

३०. द$_{1}$ ग्र$_{2}$. ⊙. –a) ब$_{1}$ द्विजं, ते$_{1}$ प्रियं (→इयं). –c) म$_{1}$ नाहमन्यां (→नाहमेनां). –d) ते$_{1}$ म$_{1}$ कथञ्चन (→कदाचन).

❀ दे$_{6}$ द$_{1}$ ग्र$_{2}$. ⊙; का$_{1}$ देवा ऊचुः; दे$_{1}$ न$_{1}$ ते$_{1}$ उ$_{1}$ ऋषयः; म$_{1}$ मुनयः.

३१. द$_{1}$ ग्र$_{2}$. ⊙. –a) दे$_{8}$ दृष्टाः, + दृष्ट्वा (→दृष्ट्वा). –b) दे$_{10}$ पुरुषोधमः (→पुरुषाधम). –ab) का$_{1}$ ब$_{1-3}$ दे$_{2-4}$ न$_{1}$ दृष्ट्वा व्यभिचरन्तीयमस्माभिः पुरुषाधम (ब$_{3}$ न$_{1}$ °मः), ते$_{1}$ दृष्ट्वा व्यभिचरन्तीयमस्माभिः पुरुषोत्तम, म$_{1}$ दृष्ट्वा व्यभिचारीयमस्माभिः पुरुषोत्तम. –c) ब$_{2}$ उत्सृज्य सत्यं, दे$_{4}$ उक्तं हि सत्यं (→उक्तं ह्यसत्यं). –d) का$_{1}$ ब$_{1-3}$ दे$_{2.4.6}$ न$_{1}$ ते$_{1}$ उ$_{1}$ तु (→हि).

३२. द$_{1}$ ग्र$_{2}$. ab ⊙; का$_{1}$ ब$_{2}$ म$_{1}$. b ⊙. –a) दे$_{3.4.10}$ ते$_{1}$ म$_{1}$ उ$_{1}$ मुवें. मुए. मुब. एवमुक्तो (→एवमुक्ते). –b) दे$_{1.8-10}$ मयेरिता, उ$_{1}$ मयेरितः(→ मयेरितम्). –c) का$_{1}$ दे$_{10}$ भवता, म$_{1}$ ** तां (→भवतां); का$_{1}$ दे$_{2}$ न$_{1}$ प्रतिभा ह्येषे, ब$_{1}$ प्रतिभा * षे, दे$_{1.4.8.9}$ मुवें. मुए. प्रतिभा ह्येषा, दे$_{3}$ प्रतिभात्येव, दे$_{10}$ प्रति * स्पेष्ट्वा, ते$_{1}$ प्रतिभार्या मे, द$_{1}$

वें.२.३८.३३ वसिष्ठस्याश्रमं पुण्यं भिक्षार्थी परमेश्वरः ॥३३

दृष्ट्वा समागतं देवं भिक्षमाणमरुन्धती ।
वसिष्ठस्य प्रिया भार्या प्रत्युद्गम्य ननाम तम् ॥३४

प्रक्षाल्य पादौ विमलं दत्त्वा चासनमुत्तमम् ।
संप्रेक्ष्य शिथिलं गात्रमभिघातहतं द्विजैः ।
संधयामास भैषज्यैर्विषण्णा वदना सती ॥३५

चकार महतीं पूजां प्रार्थयामास भार्यया ।
को भवान् कुत आयातः किमाचारो भवानिति ।
उवाच तां महादेवः सिद्धानां प्रवरोऽस्म्यहं ॥३६

यदेतन्मण्डलं शुद्धं भाति ब्रह्ममयं सदा ।
एषैव देवता मह्यं धारयामि सदैव तत् ॥३७

इत्युक्त्वा प्रययौ श्रीमाननुगृह्य पतिव्रताम् ।
ताडयाञ्चक्रिरे दण्डैर्लोष्टिभिर्मुष्टिभिर्द्विजाः ॥३८

दृष्ट्वा चरन्तं गिरिशं नग्नं विकृतलक्षणम् ।
प्रोचुरेतद् भवाँल्लिङ्गमुत्पाटयतु दुर्मते ॥३९

तानब्रवीन्महायोगी करिष्यामीति शंकरः ।
युष्माकं मामके लिङ्गे यदि द्वेषोऽभिजायते ॥४०

इत्युक्त्वोत्पाटयामास भगवान् भगनेत्रहा ।
नापश्यंस्तत्क्षणेनेशं केशवं लिङ्गमेव च ॥४१

तदोत्पाता बभूवुर्हि लोकानां भयशंसिनः ।
न राजते सहस्रांशुश्चचाल पृथिवी पुनः ।

---

प्रतिभाषेत, ग्र2 प्रतिभाषन्ने, म1 प्रतिभाषेति, उ1 प्रतिभात्येषा (→प्रतिभात्येषे-). –d) का1 ब2 दे2.6 न1 ते1 ग्र2 त्युक्त्वा (ग्र2° क्ता) सौ, दे2 मुक्तासौ, म1 ह्युक्त्वासौ (→त्यक्त्वाऽसौ).

३३. –c) का1 ब1-3 दे2.4.6 न1 ते1 वसिष्ठस्य गृहं पुण्यं.

३४. –b) ब1.3 भिक्ष्यमाणं, दे1 भिक्षुमाणं (→भिक्षमाणं). –c) दे1.3.4.8-10 न1 द1 ग्र2 म1 मुवें. मुए. मुब. भक्त्या (→भार्या). –d) ब1-3 दे2-4.6 ते1 म1 उ1 मुवें. मुए. मुब. ननाम च, न1 ननाद च, द1 ननाम ह (→ननाम तम्); का1 प्रत्युद्दस्य च ननाम ह, ग्र2 प्रत्युद्गम्यभिवाद्य वै.

३५. ब1. cdef ⊙. –a) ब1 विपुलं, दे3.4 विमलौ (→विमलं). –b) द1 दत्वा चासमनुत्तमम्, ग्र2 कृत्वासननमुत्तमम्, उ1 दत्वासनमनुत्तमम्. –d) दे3 अभिधावतमं द्विजैः, ते1 अभिपात हतद्विजा, म1 अभिवादहतं द्विजै, उ1 अभिवाद्य तु तं द्विजैः. –e) दे1.6.8.9 भेषज्यैर्, दे4 भैक्षान्नं, द1 गर्भे वै, ग्र2 म1 उ1 भक्त्या वै (→भैषज्यैर्).

३६. –a) का1 दे4 महती (→महतीं). –b) दे3 सा सती (→भार्यया). –e) ब1 वाचे तामाह देवानां, ब2.3 भवस्तामाह देवानां, दे1.3.4.8-10 मुवें. मुए. मुब. उच्य (दे3 °क्ते)तामाह भगवान्, दे6 धारितामाह देवानां, न1 तामाह भगवान् रुद्रः, ते1 तामाह परदेवानां, द1 ग्र2 म1 उ1 उच्यतां हि महाभागे. –f) दे1.8.9 प्रवरो ह्ययं, दे10 न1 द1 म1 उ1 मुवें. मुए. मुब. प्रवरो ह्यहम् (→प्रवरोऽस्म्यहम्).

३६ श्लोकात्परं द1 अधिकम्—महादेव उवाच.

३७. –a) ग्र2 उ1 यदेवं (→यदेतन्); दे1-3.8-10 द1 ग्र2 म1 उ1 मुवें. मुए. शुभ्रं (→शुद्धं). –d) ब3 सदैवतः, दे1 सदेव तु, दे3 न1 सदैव तं, दे4.8-10 ग्र2 उ1 मुवें. मुए. मुब. सदैव तु, म1 सहैव तत् (→सदैव तत्).

३८. –d) ब1 दे4 लोष्टभिर्, ब2 मुब. यष्टिभिर्, ब3 दे6 न1 ते1 द1 ग्र2 उ1 लोष्टाभिर् (→लोष्टिभिर्); दे1.8-10 मुष्टिभिर्द्विजैः, ते1 मुनिपुंगवाः, द1 ग्र2 मुष्टिजानुभिः (→मुष्टिभिर्द्विजाः).

३९. –b) दे10 नग्ने (→नग्नं); दे1.4.6.8-10 न1 ग्र2 उ1 मुवें. मुए. विकृतिलक्षणम्, ते1 विकृतिलोचनम् (→विकृतलक्षणम्). –c) दे1.4 न1 उ1 मुवें. मुए. मुब. भवल्लिगं, ग्र2 भयं ** (→भवाँल्लिगं); द1 म1 प्रोचुरेवो (म1 °तो)द्भवं लिगं. –d) का1 दे2 द1 ग्र2 उ1 उत्पाटयसुदुर्मते, दे1.8-10 मुवें. उत्पाटय सुदुर्मतिः (मुवें. °तेः), म1 उत्पाटयसि दुर्मते.

४०. ब1. ⊙; दे1.3.4.8-10 द1 ग्र1 उ1. cd ⊙. –a) ब2 ते1 महायोगं, ब3 दे6 महायोगः (→महायोगी). –c) ते1 मामकैर्लिङ्गैः (→मामके लिगे). –d) का1 यद्युद्वेजोभिजायते, न1 यदि द्वेषोभ्यवर्त्तत, म1 यदि द्वेषोह्यवर्तत.

४१. दे1. cd ⊙. –a) का1 इत्येष त्रोटयामास, ब1-3 दे2.6 मुब. इत्युक्तोत्पाटयामास, दे1 उक्तान्यूत्पाटयामास, दे.3.8-10 द1 मुवें. मुए. उक्त्वा तूत्पाटयामास, दे4 इत्युक्तोद्घाटयामास, ग्र2 म1 उ1 उक्त्वा उ(ग्र2 त)त्पाटयामास. –b) ब1 दे1 भव (→भग-). –c) ब1.3 दे2.6 तत्क्षणेनेह, ब2 तत्क्षणेनाथ, दे3 मुवें. मुए. तत्क्षणादीशं, दे4 ते1 तत्क्षणेनैशं, दे8-10 मुब. तत्क्षणाच्चेशं (→तत्क्षणेनेशं). –d) ग्र2 म1 केवलं (→केशवं); का1 ब2.3 दे2.6 तु, न1 यत् (→च).

४२. ब1. ४२c-५०d ⊙; दे1. ab ⊙. –a) दे3 तत्रोत्पाता, दे4.8.9 ते1 द1 म1 ततोत्पाता (→तदोत्पाता).

निष्प्रभाश्च ग्रहाः सर्वे चुक्षुभे च महोदधिः ॥४२
अपश्यच्चानुसूयात्रेः स्वप्नं भार्या पतिव्रता ।
कथयामास विप्राणां भयादाकुलितेक्षणा ॥४३
तेजसा भासयन् कृत्स्नं नारायणसहायवान् ।
भिक्षमाणः शिवो नूनं दृष्टोऽस्माकं गृहेष्विति ॥४४
तस्या वचनमाकर्ण्य शङ्कमाना महर्षयः ।
सर्वे जग्मुर्महायोगं ब्रह्माणं विश्वसंभवम् ॥४५
उपास्यमानममलैर्योगिभिर्ब्रह्मवित्तमैः ।
चतुर्वेदैर्मूर्त्तिमद्भिः सावित्र्या सहितं प्रभुम् ॥४६
आसीनमासने रम्ये नानाश्चर्यसमन्विते ।
प्रभासहस्रकलिले ज्ञानैश्वर्यादिसंयुते ॥४७
विभ्राजमानं वपुषा सस्मितं शुभ्रलोचनम् ।
चतुर्मुखं महाबाहुं छन्दोमयमजं परम् ॥४८
विलोक्य वेदपुरुषं प्रसन्नवदनं शुभम् ।
शिरोभिर्धरणीं गत्वा तोषयामासुरीश्वरम् ॥४९
तान् प्रसन्नमना देवश्चतुर्मूर्त्तिश्चतुर्मुखः ।
व्याजहार मुनिश्रेष्ठाः किमागमनकारणम् ॥५०
तस्य ते वृत्तमखिलं ब्रह्मणः परमात्मनः ।
ज्ञापयाञ्चक्रिरे सर्वे कृत्वा शिरसि चाञ्जलिम् ॥५१

ऋषय ऊचुः ।❀

कश्चिद् दारुवनं पुण्यं पुरुषोऽतीवशोभनः ।
भार्यया चारुसर्वाङ्ग्या प्रविष्टो नग्न एव हि ॥५२ वें. २.३८.५२

---

–c) दे$_{6}$ न संज्ञते, ते$_{1}$ ना राजते, ग्र$_{2}$ रराज ते (→न राजते). –f) दे$_{3}$ चुक्षोभ च (→चुक्षुभे च); ग्र$_{2}$ महार्णवः (→महोदधिः).

४३. ब$_{1}$. ⊙ (द्र. ४२ पा. वि.). –a) दे$_{1.8-10}$ [अ]-नुसूयात्र, दे$_{3}$ [अ]नसूया वै (→[अ]नुसूयात्रेः); ते$_{1}$ अपश्यंश्चान-सूयांते. –b) दे$_{1.8.9}$ स्वप्नभार्या, ते$_{1}$ स्वप्ने भार्या, ग्र$_{2}$ स्वं भार्या, म$_{1}$ भार्या स्वप्नं (→स्वप्नं भार्या); ते$_{1}$ पतिव्रताम् (→पतिव्रता). –d) का$_{1}$ दे$_{2}$ भयव्याकुलितेक्षणा, दे$_{1.8-10}$ मुवें. मुए. मुब. भयादाकुलितेन्द्रिया (दे$_{10}$ °यः).

४४. ब$_{1}$. ⊙ (द्र. ४२ पा. वि.). –c) दे$_{10}$ भिक्ष्यमाणः (→भिक्षमाणः). –d) दे$_{9}$ दृष्ट्वोस्माकं, न$_{1}$ दृष्टास्माकं, ते$_{1}$ दृष्ट्वाऽस्माकं, ग्र$_{2}$ म$_{1}$ दृष्टोऽस्माभिर् (→दृष्टोऽस्माकं); का$_{1}$ ब$_{2.3}$ दे$_{2}$ गृहेष्विह, न$_{1}$ गृहेन्विति (→गृहेष्विति).

४५, ब$_{1}$. ⊙ (द्र. ४२ पा. वि.). –a) दे$_{4}$ भव्य- (→तस्या). –c) न$_{1}$ कस्माज्जग्मुर् (→सर्वे जग्मुर्).

४६. ब$_{1}$. ⊙ (द्र. ४२ पा. वि.). –a) ते$_{1}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ अमलं (→अमलैर्). –b) ते$_{1}$ चार्थचिन्तकैः, द$_{1}$ ब्रह्मसंभवैः, ग्र$_{2}$ म$_{1}$ ब्रह्मसत्तमैः, उ$_{1}$ ब्रह्मनिष्ठितैः (→ब्रह्मवित्तमैः). –d) दे$_{3}$ ऋतुं, द$_{1}$ ग्र$_{2}$ उ$_{1}$ विभुं (→प्रभुम्).

४७. ब$_{1}$. ⊙ (द्र. ४२ पा. वि.). –a) ग्र$_{2}$ म$_{1}$ दिव्ये (→रम्ये). –b) दे$_{4}$ नानैश्वर्य° (→नानाश्चर्य°). –c) दे$_{3}$ °कलिते, दे$_{10}$ °कपिले, ते$_{1}$ * विते, द$_{1}$ ग्र$_{2}$ म$_{1}$ °ज्वलिते (→°कलिले). –d) दे$_{3}$ म$_{1}$ °संकुले (→°संयुते); ते$_{1}$ नानारत्नसमन्विते.

४८. ब$_{1}$. ⊙ (द्र. ४२ पा. वि.). –a) दे$_{10}$ वपुषां (→वपुषा); ग्र$_{2}$ विभ्रमाणश्च वपुषा. –b) ब$_{2}$ दे$_{2.3.6}$ सुस्मितं (→सस्मितं); ब$_{2}$ दे$_{4}$ शु(दे$_{4}$सु) भ्रुलोचनं, ब$_{3}$ दे$_{2}$ वभ्रुलोचनं, दे$_{6}$ *भ्रूलोचनम्, ते$_{1}$ म$_{1}$ शुभलोचनम्, ग्र$_{2}$ सुविलोचनं (→शुभ्रलोचनम्). –d) का$_{1}$ दे$_{10}$ छन्दोमयमलं (दे$_{10}$ °त) परं, ब$_{2.3}$ दे$_{2.6}$ छन्दोमयम (दे$_{6}$ °ज)लं प्रभुं, दे$_{4}$ छन्दोमध्यमजं विभुं, ते$_{1}$ छन्दसामयनं प्रभुम्, ग्र$_{2}$ छन्दोमायामजं परं, म$_{1}$ छन्दोमयमजं वरं.

४९. ब$_{1}$. ⊙ (द्र. ४२ पा. वि.). –a) ब$_{2}$ देवपुरुषं, ब$_{3}$ दे$_{1.4.8-10}$ न$_{1}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ मुवें. मुए. मुब. देववपुषं, दे$_{3}$ वेदवपुषं, ते$_{1}$ दिव्यवपुषं (→वेदपुरुषं). –b) दे$_{1.4.8-10}$ शुचिः, दे$_{3}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ मुवें. मुए. मुब. शुचिम् (→शुभं). –c) ग्र$_{2}$ कृत्वा (→गत्वा). –d) ग्र$_{2}$ तोषयामास ईश्वरं.

५०. ब$_{1}$. ⊙ (द्र. ४२ पा. वि.). –a) दे$_{1.8-10}$ मुए. मुब. तान् प्रसन्नो महादेवश्, द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ तान् प्रेक्ष्य मनसा देवश्. –b) दे$_{10}$ विश्वमूर्तिश् (→चतुर्मूर्तिश्); दे$_{4}$ चतुर्भुजः (→चतुर्मुखः). –c) न$_{1}$ मुनीन् श्रेष्ठाः, द$_{1}$ म$_{1}$ उ$_{1}$ मुनिश्रेष्ठान् (→मुनिश्रेष्ठाः).

५१. –a) दे$_{1.8-10}$ तस्य प्रवृत्तं, दे$_{4}$ तस्मात्ते वृत्तं, दे$_{6}$ यस्य ते वृत्तं, मुवें. मुए. तत्तस्य वृत्तं (→तस्य ते वृत्तं). –b) द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ परमेष्ठिनः (→परमात्मनः). –c) दे$_{6}$ ज्ञायतं स्वक्रिरे (→ज्ञापयाञ्चक्रिरे). –d) दे$_{10}$ चांगुलिं (→चांजलिम्).

❀ दे$_{10}$. ⊙; दे$_{1}$ ऋषयः ऊचुः; न$_{1}$ ते$_{1}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ ऋषयः.

५२. –b) ते$_{1}$ पुरुषस्त्रिदशोद्भवः. –c) न$_{1}$ भार्ययाथात् (→भार्यया चारु-).

वें.२.३८.५३

मोहयामास वपुषा नारीणां कुलमीश्वरः ।
कन्यकानां प्रिया चास्य दूषयामास पुत्रकान् ॥५३
अस्माभिर्विविधाः शापाः प्रदत्ताश्च पराहताः ।
ताडितोऽस्माभिरत्यर्थं लिङ्गं तु विनिपातितम् ॥५४
अन्तर्हितश्च भगवान् सभार्यो लिङ्गमेव च ।
उत्पाताश्चाभवन् घोराः सर्वभूतभयंकराः ॥५५
क एष पुरुषो देव भीताः स्म पुरुषोत्तम ।
भवन्तमेव शरणं प्रपन्ना वयमच्युत ॥५६
त्वं हि वेत्सि जगत्यस्मिन् यत्किञ्चिदपि चेष्टितम् ।
अनुग्रहेण विश्वेश तदस्माननुपालय ॥५७
विज्ञापितो मुनिगणैर्विश्वात्मा कमलोद्भवः ।
ध्यात्वा देवं त्रिशूलाङ्कं कृताञ्जलिरभाषत ॥५८

ब्रह्मोवाच ।❀

हा कष्टं भवतामद्य जातं सर्वार्थनाशनम् ।
धिग्बलं धिक् तपश्चर्या मिथ्यैव भवतामिह ॥५९
संप्राप्य पुण्यसंस्कारान्निधीनां परमं निधिम् ।
उपेक्षितं वृथाचारैर्भवद्भिरिह मोहितैः ॥६०
काङ्क्षन्ते योगिनो नित्यं यतन्तो यतयो निधिम् ।

---

**५३.** –a) दे$_{4}$ पुरुषो (→वपुषा); दे$_{6}$ मोहयामासु पुरुषा. –b) ब$_{3}$ दे$_{6}$ कुलमाशु च, ते$_{1}$ ग्र$_{2}$ कुलमीश्वरा (ते$_{1}$ °राः) (→कुलमीश्वरः). –c) ते$_{1}$ कन्यका च (→कन्यकानां); ब$_{1}$ दे$_{6}$ प्रिया यस्य, ब$_{2.3}$ मुवें. प्रियो यस्तु, दे$_{1}$ प्रियाभाष्य, दे$_{3}$ कुलं सर्वें, न$_{1}$ प्रिया चान्यां, ते$_{1}$ प्रिया तस्य, द$_{1}$ म$_{1}$ प्रियश्चासौ, ग्र$_{2}$ प्रियावासौ (→प्रिया चास्य). –d) दे$_{10}$ पुत्रवान् (→पुत्रकान्).

**५४.** का$_{1}$. b ⊙. –a) ब$_{2.3}$ विविधाः पाशाः (ब$_{3}$ °पाः), दे$_{1.8-10}$ विविधा घा(दे$_{1}$ वा)ताः, दे$_{4}$ विविधा माया (→विविधाः शापाः). –b) ब$_{2.3}$ दे$_{6}$ मुब. प्रवृत्ताश्च, दे$_{1.8-10}$ मुवें. मुए. प्रदत्तास्ते (→प्रदत्ताश्च); दे$_{3}$ पराजितः, न$_{1}$ पराहितः (→पराहताः). –c) न$_{1}$ म$_{1}$ ताडिता (→ताडितो). –d) ब$_{1}$ लिङ्गं भूमौ निपातितम्, दे$_{3}$ लिङ्गं भुवि निपातितम्, दे$_{4}$ ते$_{1}$ लिंगं भुवि निपात्यते (ते$_{1}$ तु), दे$_{6}$ लिङ्गस्तु विनिपातितम्, द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ लिङ्गं च विनिपातितम्.

**५५.** म$_{1}$. a ⊙. –b) दे$_{4}$ लिंग एव च, द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ लिंग एव हि (→लिङ्गमेव च).

**५६.** दे$_{4}$. ५६a-५७d ⊙; ब$_{1}$. cd ⊙. –a) का$_{1}$ न$_{1}$ मुवें. एव, ग्र$_{2}$ एवं, उ$_{1}$ * व (→एष). –b) ब$_{1}$ भीता स्म, दे$_{1.8.9}$ उ$_{1}$ मुवें. मुए. मुब. भीताः स्मः, दे$_{6}$ भीतोस्म, दे$_{10}$ भीताः *, न$_{1}$ भीतासु, द$_{1}$ भीता सा (→भीताः स्म); क$_{1}$ ब$_{1.3}$ उ$_{1}$ पुरुषोत्तमः (→पुरुषोत्तम). –c) ब$_{3}$ भवन्तमेवं, दे$_{3}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ भवन्तमेकं (→भवन्तमेव). –d) ब$_{3}$ न$_{1}$ ग्र$_{2}$ वयमच्युतं (ब$_{3}$ °तः), दे$_{3}$ भयकारणात्, दे$_{10}$ वयमुच्यते, उ$_{1}$ लयमच्युत (→वयमच्युत).

**५७.** दे$_{4}$. ⊙ (द्र. ५६ पा. वि.); ब$_{1}$. ab ⊙. का$_{1}$ त्वं हि वेत्थं, ब$_{2.3}$ दे$_{2.6}$ द$_{1}$ म$_{1}$ त्वं हिं वेत्थ, दे$_{3}$ भवान्वेत्ति, न$_{1}$ त हि वेत्थ, ते$_{1}$ त्वं विहोत्त (→त्वं हि वेत्सि). –b) का$_{1}$ दे$_{1.3.8-10}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ मुवें. मुए. मुब. यत्किञ्चिदिह (→यत्किञ्चिदपि); न$_{1}$ चेष्टतः (→चेष्टितम्). –c) ब$_{1}$ देवेश, दे$_{1.3.8-10}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ मुवें. मुए. मुब. युक्तेन, ते$_{1}$ विश्वात्मन् (→विश्वेश). –d) द$_{1}$ ग्र$_{2}$ अनुपालयन् (ग्र$_{2}$ °या) (→अनुपालय); दे$_{1.9}$ मुए. मुए. मुब. तदस्मानुपपालय.

अतः परं दे$_{3}$ अधिकम्—सूत उवाच.

**५८.** –a) दे$_{8.10}$ विज्ञापिते, द$_{1}$ ग्र$_{2}$ उ$_{1}$ विज्ञापितं, म$_{1}$ विज्ञापयन् (→विज्ञापितो). –b) द$_{1}$ म$_{1}$ उ$_{1}$ निशम्य (→विश्वात्मा). –c) दे$_{4}$ कृत्वा लोकं (→ध्यात्वा देवं); दे$_{6}$ त्रिशूलंका (?), द$_{1}$ त्रिशूलाक्षं, ग्र$_{2}$ त्रिशूलांगं (→त्रिशूलांकं).

❀ दे$_{8.9}$ ब्रह्मा उवाच; दे$_{10}$ ब्रह्मा ऊचुः; न$_{1}$ ते$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ ब्रह्मा.

**५९.** –b) का$_{1}$ दे$_{2}$ सर्वात्म° (→सर्वार्थ°); दे$_{10}$ °साधनं, ते$_{1}$ °साधकम् (→°नाशनम्). –c) दे$_{2}$ मुब. धिग्बनं, ग्र$_{2}$ धिक् जपं (→धिग्बलं); ब$_{2}$ ते$_{1}$ द$_{1}$ म$_{1}$ तपश्चर्यां, ग्र$_{2}$ जपश्चर्या (→तपश्चर्या); न$_{1}$ धिगन्वयं धिक्तपश्च. –d) दे$_{1.8-10}$ मिथ्या यद्, द$_{1}$ ग्र$_{2}$ उ$_{1}$ धिक् ज्ञानं, म$_{1}$ धिक् प्राणं (→मिथ्यैव).

**६०.** –a) ब$_{2.3}$ दे$_{6}$ मुब. पुण्यसंस्थानां (ब$_{3}$ दे$_{6}$ °ना), ग्र$_{2}$ पुण्यं संस्कारं (→पुण्यसंस्कारान्). –b) दे$_{4}$ ते$_{1}$ परमां निधिं, द$_{1}$ उ$_{1}$ परमो निधिः (→परमं निधिं); दे$_{1}$ निधी ******. –c) ब$_{2}$ द$_{1}$ ग्र$_{2}$ उ$_{1}$ उपेक्षितो, ब$_{3}$ उत्क्षिपेत्तं (→उपेक्षितं); का$_{1}$ दे$_{1.8.9}$ मुए. वृथाभावैर्, दे$_{10}$ कृताभावैर् (→वृथाचारैर्). –d) दे$_{10}$ इति मोहितैः, न$_{1}$ दिवमाहितैः (→इह मोहितैः).

**६१.** ब$_{1}$. cd ⊙. –a) का$_{1}$ ब$_{1-3}$ दे$_{2.6}$ न$_{1}$ मुब. कांक्षन्ति, दे$_{4.10}$ कांक्षिते, ते$_{1}$ गच्छन्ति, द$_{1}$ कांक्षते (→काङ्क्षन्ते); न$_{1}$ नित्यश् (→नित्यं). –b) का$_{1}$ उ$_{1}$ यतंते, ब$_{1}$ यतन्ति, ते$_{1}$ यजन्ते (→यतन्तो); दे$_{4}$ निधिः, म$_{1}$ निशम् (→निधिम्).

यमेव तं समासाद्य हा भवद्भिरुपेक्षितम् ॥६१
यजन्ति यज्ञैर्विविधैर्यत्प्राप्त्यैर्वेदवादिनः ।
महानिधिं समासाद्य हा भवद्भिरुपेक्षितम् ॥६२
यं समासाद्य देवानामैश्वर्यमखिलं जगत् ।
तमासाद्याक्षयनिधिं हा भवद्भिरुपेक्षितम् ॥६३
यत्समापत्तिजनितं विश्वेशत्वमिदं मम ।
तदेवोपेक्षितं दृष्ट्वा निधानं भाग्यवर्जितैः ॥६४
यस्मिन् समाहितं दिव्यमैश्वर्यं यत् तदव्ययम् ।
तमासाद्य निधिं ब्राह्मं हा भवद्भिर्वृथाकृतम् ॥६५
एष देवो महादेवो विज्ञेयस्तु महेश्वरः ।
न तस्य परमं किञ्चित् पदं समधिगम्यते ॥६६
देवतानामृषीणां च पितृणां चापि शाश्वतः ।
सहस्रयुगपर्यन्ते प्रलये सर्वदेहिनाम् ।
संहरत्येष भगवान् कालो भूत्वा महेश्वरः ॥६७
एष चैव प्रजाः सर्वाः सृजत्येकः स्वतेजसा ।
एष चक्री च वज्री च श्रीवत्सकृतलक्षणः ॥६८
योगी कृतयुगे देवस्त्रेतायां यज्ञ उच्यते ।
द्वापरे भगवान् कालो धर्मकेतुः कलौ युगे ॥६९
रुद्रस्य मूर्त्तयस्तिस्रो याभिर्विश्वमिदं ततम् ।
तमो ह्यग्नी रजो ब्रह्मा सत्त्वं विष्णुरिति प्रभुः ॥७०  वें.२.३८.६६

–c) दे$_{6}$ यामवंतं(?), दे$_{10}$ यमेवं तं, द$_{1}$ यमेनकं, उ$_{1}$ यमेनन्तं (→यमेव तं). –d) द$_{1}$ विभूतिभिर् (→हा भवद्भिर्); ब$_{3}$ उपेक्ष तं (→उपेक्षितम्).

६२. का$_{1}$ ब$_{1-3}$ दे$_{2.4.6}$ ते$_{1}$ द$_{1}$ मुब. ⊙. –b) दे$_{1}$ न$_{1}$ ग्र$_{2}$ म$_{1}$ -प्राप्तैर्, दे$_{3}$ -प्राप्ते, दे$_{8.10}$ उ$_{1}$ मुवें. -प्राप्तेर् (→-प्राप्त्यैर्); न$_{1}$ वेदवादिनं (→वेदवादिनः).

६३. का$_{1}$ दे$_{1.8.9}$ मुवें. मुए. ⊙; ब$_{1}$. ab ⊙; न$_{1}$. cd⊙. –a) म$_{1}$ यमासाद्याप्तवान् कामं. –b) ब$_{2.3}$ दे$_{2.4.6}$ ते$_{1}$ मुब. ध्रुवं, दे$_{10}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ महत् (→जगत्). –c) ब$_{2.3}$ दे$_{2.6}$ मुब. त (दे$_{2.6}$ स) मासाद्याक्षयं देवं, दे$_{4}$ तमासाद्य जयनिधिं, दे$_{10}$ समासाद्याक्षयनिधिं.

६४. न$_{1}$. ⊙; ब$_{1}$. ab ⊙. –a) का$_{1}$ दे$_{6}$ यत्समाये (दे$_{6}$ °यां)ति जनितं, ब$_{2}$ यत् रकाशान्तु जनितं, ब$_{3}$ यत्समास * जनितं, दे$_{1.8-10}$ मुवें. मुए. मुब. यमर्चयित्वा सततं, दे$_{3}$ यस्येच्छयेतिजनितं, दे$_{4}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ येन प्राप्तं हि तदिदं, ते$_{1}$ यस्मान्मयैतज्जनितं. –b) दे$_{1.8-10}$ विश्वेशित्वं, उ$_{1}$ विश्वेशं त्वं (→विश्वेशत्वं). –c) ब$_{1}$ तदेवोप्रेक्षतं, दे$_{1.8-10}$ मुवें. मुए. मुब. सदेवोपेक्षितो (→तदेवोपेक्षितं); द$_{1}$ ग्र$_{2}$ म$_{1}$ प्राप्तं (→दृष्ट्वा). –d) दे$_{2}$ विधानं, दे$_{3}$ भवद्भिर् (→निधानं); ब$_{1}$ भाग्यवर्जितः, दे$_{1.8-10}$ मुवें. मुए. मुब. भाग्यवर्जिताः, ते$_{1}$ रागवर्जितम् (→भाग्यवर्जितैः).

६५. न$_{1}$. ab ⊙. –a) ब$_{3}$ अस्मिन् (→यस्मिन्). –b) ब$_{2}$ यत्तदुत्तमं, द$_{1}$ ग्र$_{2}$ उ$_{1}$ तत्तदव्ययम् (→यत्तदव्ययम्). –c) द$_{1}$ समासाद्य (→तमासाद्य); का$_{1}$ ब$_{3}$ निधिं ब्रह्मं, दे$_{1.8.10}$ न$_{1}$ म$_{1}$ उ$_{1}$ मुवें. मुए. मुब. निधिं (दे$_{10}$ °शिं) ब्रह्म, ते$_{1}$ ब्रह्मनिधिं, ग्र$_{2}$ इदं ब्रह्म (→निधिं ब्राह्मं). –d) का$_{1}$ ब$_{3}$ दे$_{2}$ यथा कृतम्, ब$_{2}$ दे$_{2}$ द$_{1}$ ग्र$_{3}$ उ$_{1}$ उपेक्षितं, न$_{1}$ युवा कृतं (→वृथा कृतम्).

६६. ब$_{3}$. ६६c–६७f ⊙ (द्र. सं.). –a) दे$_{4}$ एवं (→एष); उ$_{1}$ एष देवोति ***. –c) ब$_{1}$ स तस्य, दे$_{4}$ तत्तस्य (→न तस्य); ते$_{1}$ न तस्मादपरं किंचित्. –d) दे$_{1.3.6.8-10}$ ते$_{1}$ द$_{1}$ ग्र$_{2}$ उ$_{1}$ पदं समभि°, दे$_{4}$ इदं किमभि° (→पदं समधि°).

६७. ब$_{1.3}$. ⊙. –a) द$_{1}$ मुवें. मुए. मुब. वा (→च). –b) दे$_{1.8.9}$ न$_{1}$ म$_{1}$ शाश्वतं, दे$_{3}$ सर्वशः (→शाश्वतः); दे$_{4}$ प्रियाणां च प्रिया श्रुतं, दे$_{10}$ प्रियाणां चाप्य शश्वतं, ते$_{1}$ प्रियाणामपि शाश्वतम्. –c) दे$_{4}$ ते$_{1}$ द$_{1}$ म$_{1}$ उ$_{1}$ °युगपर्यन्तं, ग्र$_{2}$ °युगपन्नित्यं (→°युगपर्यन्ते). –d) दे$_{4}$ उ$_{1}$ प्रलयं (→प्रलये); द$_{1}$ ग्र$_{2}$ उ$_{1}$ सति (→सर्व-). –e) द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ सलोकान् संहरत्येष.

६८. –b) दे$_{1.3.8-10}$ उ$_{1}$ मुवें. मुए. मुब. सृजत्येष, दे$_{4}$ सृज्यते वा, द$_{1}$ ग्र$_{2}$ म$_{1}$ सृजत्येव(म$_{1}$ °वं) (→सृजत्येकः); न$_{1}$ सृजत्येतेन तेजसा. –c) दे$_{1.8-10}$ मुवें. मुए. मुब. चक्रवर्त्ती, दे$_{4}$ च वक्री च, दे$_{6}$ च चद्राय (→च वज्री च); ब$_{1}$ एषश्चक्रश्च वक्री च, दे$_{3}$ पालयत्येष भगवान्, उ$_{1}$ एष च श्री च वज्री च.

६९. ब$_{1}$. ६९a-७३d ⊙. –a) दे$_{4}$ वस्त्रे, द$_{1}$ म$_{1}$ देवाः (→देवः). –b) दे$_{1.8-10}$ मुवें. मुए. मुब. एव च (→उच्यते); दे$_{10}$ त्रेता यज्ञममेव च, म$_{1}$ त्रेतायां वज्र उच्यते. –d) दे$_{2}$ ब्रह्मकेतुः, दे$_{4}$ धर्मसेतुः, ग्र$_{2}$ धर्महेतुः (→धर्मकेतुः); दे$_{1.8-10}$ न$_{1}$ द$_{1}$ म$_{1}$ मुए. कलौभवः (→कलौ युगे).

७०. ब$_{1}$. ⊙(द्र. ६९ पा. वि.). –a) दे$_{1}$ रुद्रास्तु (→रुद्रस्य). –b) ब$_{2.3}$ दे$_{6}$ ते$_{1}$ यानि चार्चन्ति पण्डिताः, म$_{1}$ याति विश्वमिदं ततः. –d) दे$_{1.8.9}$ मुवें. मुए. मुब. स्मृतिः, दे$_{3.10}$ न$_{1}$ उ$_{1}$ श्रुतिः, ते$_{1}$ त्रिभिः, द$_{1}$ ग्र$_{2}$ म$_{1}$ स्थितिः (ग्र$_{2}$ °तः) (→प्रभुः); दे$_{4}$ योगेन तु समन्विते.

वें.२.३८.७० मूर्त्तिरन्या स्मृता चास्य दिग्वासा वै शिवा ध्रुवा ।
यत्र तिष्ठति तद् ब्रह्म योगेन तु समन्वितम् ॥७१
या चास्य पार्श्वगा भार्या भवद्भिरभिवीक्षिता ।
सा हि नारायणो देवः परमात्मा सनातनः ॥७२
तस्मात् सर्वमिदं जातं तत्रैव च लयं व्रजेत् ।
स एव मोहयेत् कृत्स्नं स एव परमा गतिः ॥७३
सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
एकशृङ्गो महानात्मा पुराणोऽष्टाक्षरो हरिः ॥७४
चतुर्वेदश्चतुर्मूर्त्तिस्त्रिमूर्त्तिस्त्रिगुणः परः ।
एकमूर्त्तिरमेयात्मा नारायण इति श्रुतिः ॥७५
ऋतस्य गर्भो भगवानापो मायातनुः प्रभुः ।
स्तूयते विविधैर्मन्त्रैर्ब्राह्मणैर्धर्ममोक्षिभिः ॥७६
संहृत्य सकलं विश्वं कल्पान्ते पुरुषोत्तमः ।
शेते योगामृतं पीत्वा यत् तद् विष्णोः परं पदम् ॥७७
न जायते न म्रियते वर्द्धते न च विश्वसृक् ।
मूलप्रकृतिरव्यक्ता गीयते वैदिकैरजः ॥७८
ततो निशायां वृत्तायां सिसृक्षुरखिलञ्जगत् ।
अजस्य नाभौ तद् बीजं क्षिपत्येष महेश्वरः ॥७९

---

७१. ब$_1$ दे$_4$. ⊙. –a) ते$_1$ मूर्तिरस्या, म$_1$ मूर्त्तिमत्या (→मूर्त्तिरन्या); दे$_3$ द$_1$ म$_1$ उ$_1$ स्मृता दिव्या, ते$_1$ स्मृतं चान्यं, ग्र$_2$ तदा दिव्या (→स्मृता चास्य). –b) का$_1$ दिग्वासा हि, दे$_{1.8-10}$ ग्र$_2$ मुवें. मुए. दिग्वासा च (दे$_{10}$ सा), ते$_1$ ऋग्वासा वै, द$_1$ म$_1$ वामाङ्के च, उ$_1$ वामांगे तु (→दिग्वासा वै); म$_1$ धृता (→ध्रुवा); दे$_3$ शाश्वती शिवरूपिणी. –c) म$_1$ तत्र (→यत्र); ब$_3$ तद् ब्रह्मा, ते$_1$ तु ब्रह्मा, द$_1$ तं ब्रह्मा (→तद् ब्रह्म); ग्र$_2$ यत्रावसततं ब्रह्मा. –d) ग्र$_2$ उ$_1$ समन्वितः (→समन्वितम्).

७२. ब$_1$. ⊙ (द्र. ६९ पा. वि.). –a) ब$_3$ सा (→या); दे$_6$ पार्श्वगं भार्या (→पार्श्वगा भार्या); द$_1$ ग्र$_2$ या चाष्टैश्वर्यगर्भा च, उ$_1$ यस्य पार्श्वगता भार्या. –b) ब$_3$ न$_1$ इति वीक्षिता, दे$_{1.3.8-10}$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ मुवें. मुए. मुब. अभिभाषिता, दे$_4$ अभिभाषते, दे$_6$ अपि वीक्षिता (→अभिवीक्षिता). –c) का$_1$ दे$_{1.3.4.6.8-10}$ न$_1$ ते$_1$ म$_1$ मुवें. मुए. मुब. स (→सा).

७३. ब$_1$. ⊙ (द्र. ६९ पा. वि.). –a) ब$_3$ दे$_1$ ज्ञातं, दे$_6$ ज्ञानं (→जातं). –b) न$_1$ तथैव (→तत्रैव); ब$_2$ प्रलयं (→च लयं). –c) दे$_{1.4.8-10}$ उ$_1$ मुवें. मुए. मुब. (→एव); दे$_{1.3.8.9}$ द$_1$ ग्र$_2$ म$_1$ मुवें. मुए. मोचयेत्, दे$_{10}$ मोचनं, न$_1$ मोहयन्, ग्र$_2$ मो** (→मोहयेत्); दे$_4$ यस्तु (→कृत्स्नं). –d) दे$_{1.3.8-10}$ न$_1$ ते$_1$ द$_1$ ग्र$_2$ म$_1$ मुवें. मुए. मुब. स एष (दे$_3$ न$_1$ ते$_1$ द$_1$ ग्र$_2$ म$_1$ °व) च परागतिः.

७४. म$_1$. ⊙. –c) म$_1$. एकमुक्तिरमेयात्मा. –d) का$_1$ दे$_4$ पुराणेष्टाक्षरो हरिः, दे$_{1.8.9}$ ग्र$_2$ म$_1$ उ$_1$ मुवें. मुए. नारायण इति श्रुतिः, द$_1$ पुराणो ह्यक्षरो हरिः.

७५. ब$_1$ दे$_{1.8.9}$ मुवें. मुए. ⊙; म$_1$. ab ⊙. –b) का$_1$ ब$_{2.3}$ दे$_{2.6}$ मुब. त्रिगुणः (दे$_2$ °णैः) परमेश्वरः, न$_1$ ते$_1$ त्रिमूर्तिस्त्रिगुणं परं, ग्र$_2$ त्रिमूर्त्तिस्त्रिगुणोत्तमः. –c) का$_1$ एष (→एक-); ब$_{2.3}$ ते$_1$ एकमूर्त्तिरनन्तात्मा, दे$_{2.6}$ एषमूर्त्तिरनन्तात्मा.

७६. ब$_1$. ⊙. –a) ब$_{2.3}$ मुब. स तस्य, दे$_{1.8-10}$ उ$_1$ रेतस्य, दे$_3$ हिरण्य-, दे$_4$ तं तस्य, मुवें. मुए. रेतोऽस्य (→ऋतस्य); का$_1$ दे$_2$ धर्मो, न$_1$ भर्गो (→गर्भो). –b) का$_1$ आद्यो माया तनुः, ब$_{2.3}$ मुब. आपोमयतनुः, दे$_3$ अजो मायातनुः, ते$_1$ मायी मायातनुः, म$_1$ आपो नारायणः (→आपो मायातनुः); द$_1$ ग्र$_2$ परः, उ$_1$ पुरा (→प्रभुः). –c) न$_1$ संस्तुतो, उ$_1$ तयन्ते (→स्तूयते). –d) दे$_{1.3.4.8-10}$ न$_1$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ मुवें. मुए. मुब. मोक्ष (न$_1$ °क्षि) कांक्षिभिः, ते$_1$ भक्तिमोक्षिभिः (→धर्ममोक्षिभिः).

७७. –c) दे$_{10}$ योगामृते, ते$_1$ योगासने, ग्र$_2$ योगाश्रमं (→योगामृतं). –d) दे$_{1.8-10}$ मुवें. मुए. मुब. यत्र विष्णोः (→यत्तद्विष्णोः); ब$_3$ यत्तद्विष्णोः परमं पदं, दे$_3$ ते$_1$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ तद्विष्णोः परमं पदम्.

७८. ब$_1$. ७८c-९२b ⊙. –b) दे$_3$ वर्त्तते न, दे$_4$ न पर्यते, ग्र$_2$ वर्द्धन्ते न, उ$_1$ वर्द्धते स (→वर्द्धते न); दे$_{1.8.9}$ मुवें. मुए. मुब. विश्वदृक्, दे$_3$ विश्वभृत्, दे$_{6.10}$ उ$_1$ विश्वधृक्, न$_1$ ते$_1$ विश्वकृत्, म$_1$ कुत्रचित् (→विश्वसृक्). –c) का$_1$ दे$_{2.3}$ ग्र$_2$ मुवें. मुब. अव्यक्तो, दे$_4$ अव्यक्त, न$_1$ अव्यक्तं (→अव्यक्ता). –d) का$_1$ ते$_1$ अतः (→अजः).

७९. ब$_1$. ⊙ (द्र. ७८ पा. वि.). –a) का$_1$ ब$_{2.3}$ दे$_{2.6}$ ते$_1$ मुब. व्युष्टायां, म$_1$ *** (→वृत्तायां). –c) दे$_{1.8-10}$ द$_1$ म$_1$ मुवें. मुए. मुब. अजनाभौ तु, दे$_3$ उ$_1$ अंजनाभौ तु (→अजस्य नाभौ). –d) का$_1$ ब$_{2.3}$ दे$_{2.3.6}$ न$_1$ ते$_1$ म$_1$ क्षिपत्येकं, दे$_4$ ग्र$_2$ क्षिप्यतेकं (ग्र$_2$ °व) (→क्षिपत्येष).

तं मां वित्त महात्मानं ब्रह्माणं विश्वतो मुखम् ।
महान्तं पुरुषं विश्वमपां गर्भमनुत्तमम् ॥८०
न तं विदाथ जनकं मोहितास्तस्य मायया ।
देवदेवं महादेवं भूतानामीश्वरं हरम् ॥८१
एष देवो महादेवो ह्यनादिर्भगवान् हरः ।
विष्णुना सह संयुक्तः करोति विकरोति च ॥८२
न तस्य विद्यते कार्यं न तस्माद् विद्यते परम् ।
स वेदान् प्रददौ पूर्वं योगमायातनुर्मम ॥८३
स मायी मायया सर्वं करोति विकरोति च ।
तमेव मुक्तये ज्ञात्वा व्रजेत शरणं भवम् ॥८४
इतीरिता भगवता मरीचिप्रमुखा विभुम् ।
प्रणम्य देवं ब्रह्माणं पृच्छन्ति स्म सुदुःखिताः ॥८५

मुनय ऊचुः ।❀

कथं पश्येम तं देवं पुनरेव पिनाकिनम् ।
ब्रूहि विश्वामरेशान त्राता त्वं शरणैषिणाम् ॥८६

पितामह उवाच ।❀

यद् दृष्टं भवता तस्य लिङ्गं भुवि निपातितम् ।
तल्लिङ्गानुकृतीशस्य कृत्वा लिङ्गमनुत्तमम् ॥८७
पूजयध्वं सपत्नीकाः सादरं पुत्रसंयुताः ।
वैदिकैरेव नियमैर्विविधैर्ब्रह्मचारिणः ॥८८
संस्थाप्य शांकरैर्मन्त्रैर्ऋग्यजुःसामसंभवैः ।　　वें२.३९.४

८०. ब१. ⊙ (द्र. ७८ पा. वि.). –a) का१ तं मां विद्धि, दे1.8.9 तमाविष्ट, दे4 यमावृत्य, दे10 तं मां विष्ट, न१ तमावित्तं, ते१ तस्माच्चिन्त्य, द१ ग्र२ म१ उ१ समाचिन्त्य (→तं मां वित्त); दे3 तमाविकृतमात्मानं. –b) न१ ब्राह्मणं (→ब्रह्माणं). –c) दे10 पुरुषो (→पुरुषं). –d) दे3 ते१ माया- (→अपां).

८१. ब१. ⊙ (द्र. ७८ पा. वि.). –a) का१ ते१ ग्र२ उ१ वेदाथ, ब2.3 मुवें. मुए. मुब. जानीत, दे3 विदामि, दे4 विद्यात्र, दे6 देवाथ, द१ वेदधि- (→विदाथ); म१ *** (→जनकं). –b) दे3 उ१ मोहितस् (→मोहितास्); न१ मानसा (→मायया); म१ मोहितास्तस्य ***. –d) दे1.8-10 न१ हरिं, ते१ परम् (→हरम्).

८२. ब१. ⊙; म१. b ⊙. –a) ग्र२ एवं (→एष). –b) दे10 हरिः (→हरः).

८३. ब१. ⊙ (द्र. ७८ पा. वि.); दे6. ab ⊙. –b) दे2 ****** परम्. –c) दे3 सर्वदा, न१ स वेदात्, द१ स देवान् (→स वेदान्). –d) दे3 योगं माया°, ग्र२ वेदमाया° (→योगमाया°); न१ °तनुं (→°तनुर्).

८४. ब१. ⊙(द्र. ७८ पा. वि.). –a) का१ समायो, दे6 सा माया, द१ ग्र२ अमायी (→स मायी); ते पूर्वं (→सर्वं). –c) दे1.8 मुक्ताय, म१ परमं (→मुक्तये). –d) दे1.8-10 मुवें. मुए. मुब. व्रजध्वं (→व्रजेत); दे1.3.8-10 द१ ग्र२ उ१ मुवें. मुए. मुब. शिवम्, म१ शुभम् (→भवं).

८५. ब१. ⊙ (द्र. ७८ पा. वि.). –a) द१ ग्र२ उ१ इतीरयित्वा भगवान्. –b) ते१ °प्रमुखा भवम्, द१ ग्र२ उ१ °प्रमुखान् विभुः (→°प्रमुखा विभुम्). –d) दे4 मरीचि (→पृच्छन्ति); दे1.8-10 द१ ग्र२ म१ उ१ मुवें. मुब. समाहिताः (→सुदुःखिताः); ब२ पृच्छन्ति श्रद्धयान्विताः.

८५ श्लोकात् परं दे3 ग्र२ मुवें. पुस्तकेषु अध्यायसमाप्तिर्वर्तते.

दे3 इति कूर्मपुराणे अष्टत्रिंशोऽध्यायः, ग्र२ इति श्रीकूर्मपुराणे उपरिभागे वने ईश्वरविष्णुप्रादुर्भावो नाम षट्त्रिंशोऽध्यायः, मुवें. इति श्रीकूर्मपुराणे उत्तरार्द्धे अष्टत्रिंशोऽध्यायः.

❀ द१ उ१. ⊙; दे1 न१ ते१ म१ मुनयः; ग्र२ सूतः.

८६. ब१ ग्र२. ⊙. –a) दे4 पश्यतमं, न१ पश्यामहं (→पश्येम तं). –b) दे6 पिनाकिनां (→पिनाकिनम्). –c) दे3 त्वममरेशान, दे10 विश्वामरेशानं (→विश्वामरेशान). –d) न१ नतो (→त्राता).

अतः परं उ१ अधिकम्—इत्युक्त्वा भगवान् ब्रह्मा.

❀ ब१ ग्र२. उ१ ⊙; दे1.3.4 द१ मुवें. मुए. मुब. ब्रह्मोवाच; दे8.9 ब्रह्मा उवाच; दे10 ब्रह्मा ऊचुः; न१ पितामहः; ते१ म१ ब्रह्मा.

८७. ब१ ग्र२. ⊙; ते१.cd ⊙. –a) दे4 यष्टं च (→यद्दृष्टं); न१ भवतां (→भवता); दे1 तस्यां (→तस्य); दे3 भवद्भूर्यादिशं तस्य. –b) का१ ब२ दे2 लिङ्गं तु विनि°, दे6 लिंगस्तु विनि° (→लिङ्गं भुवि नि°). –c) दे2 तल्लिंगाकृतिमीशस्य, दे4 तल्लिंगो न कृती यस्य, द१ म१ उ१ तल्लिङ्गानुकृतिं (म१ °तं) सम्यक्.

८८. ब१ ग्र२. ⊙. –a) दे6.10 पूजयिध्वं (→पूजयध्वं); ते१ समाहिताः पूजयध्वं, + समाहिताः सपत्नीकाः. –b) दे4 संहारं, द१ उ१ सदारं (→सादरं); ते१ भक्तिसंयुताः, द१ पुत्रसंयुतम् (→पुत्रसंयुताः). –c) म१ वैदिकास्तत्र (→वैदिकैरेव). –d) दे4.6 ब्रह्मचारिभिः (→ब्रह्मचारिणः).

८९. ब१ ग्र२. ⊙. –a) ते१ संपूज्य (→संस्थाप्य); का१ ब3 दे6 न१ शंकरैर् (→शांकरैर्). –b) उ१ °साममंत्रकैः (→°साम-

वं २.३९.४ तपः परं समास्थाय गृणन्तः शतरुद्रियम् ॥८९
समाहिताः पूजयध्वं सपुत्राः सह बन्धुभिः ।
सर्वे प्राञ्जलयो भूत्वा शूलपाणिं प्रपद्यथ ॥९०
ततो द्रक्ष्यथ देवेशं दुर्दर्शमकृतात्मभिः ।
यं दृष्ट्वा सर्वमज्ञानमधर्मश्च प्रणश्यति ॥९१
ततः प्रणम्य वरदं ब्रह्माणममितौजसम् ।
जग्मुः संहृष्टमनसो देवदारुवनं पुनः ॥९२
आराधयितुमारब्धा ब्रह्मणा कथितं यथा ।
अजानन्तः परं देवं वीतरागा विमत्सराः ॥९३
स्थण्डिलेषु विचित्रेषु पर्वतानां गुहासु च ।
नदीनां च विविक्तेषु पुलिनेषु शुभेषु च ॥९४
शैवालभोजनाः केचित् केचिदन्तर्जलेशयाः ।
केचिदभ्रावकाशास्तु पादाङ्गुष्ठाग्रविष्ठिताः ॥९५
दन्तोऽलूखलिनस्त्वन्ये ह्यश्मकुट्टास्तथा परे ।
शाकपर्णाशिनः केचित् संप्रक्षाला मरीचिपाः ॥९६
वृक्षमूलनिकेताश्च शिलाशय्यास्तथा परे ।
कालं नयन्ति तपसा पूजयन्तो महेश्वरम् ॥९७
ततस्तेषां प्रसादार्थं प्रपन्नार्त्तिहरो हरः ।
चकार भगवान् बुद्धिं प्रबोधाय वृषध्वजः ॥९८
देवः कृतयुगे ह्यस्मिन् शृङ्गे हिमवतः शुभे ।
देवदारुवनं प्राप्तः प्रसन्नः परमेश्वरः ॥९९
भस्मपाण्डुरदिग्धाङ्गो नग्नो विकृतलक्षणः ।

---

संभवैः). –c) दे1.6.9 ततः (→तपः); दे6 परममास्थाय (→परं समास्थाय).

९०. ब1 ग्र2. ⊙. –a) का1 सपुत्रः, ते1 संयतास् (→सपुत्राः). –c) दे4 सर्वेषां जलजीभूत्वा. –d) का1 दे2 प्रपश्यथ, ब2 ते1 प्रपश्यत, दे4 प्रपश्य तं (→प्रपद्यथ).

९१. ब1 ग्र2. ⊙. –a) दे1.6 द्रक्षथ, दे4 ईक्ष्यथ (→द्रक्ष्यथ). –b) ब3 दे1 दुर्दशं, द1 ग्रदृश्यं, उ1 ** शं (→दुर्दर्शं); उ1 ग्रकृताञ्जलिं (→ग्रकृतात्मभिः). –c) द1 उ1 सर्वयज्ञानां (→सर्वमज्ञानं). –d) दे10 ग्रधर्मस्य, ते1 ग्रधर्मस्य (श्च), मुब. ग्रधर्मञ्च (→ग्रधर्मश्च); दे6 विनश्यति, दे10 प्रयच्छति (→प्रणश्यति).

९२. ग्र2. ⊙; ब1. ab ⊙. –a) न1 म1 वदनं (→वरदं). –c) का1 ब2.3 दे2.6 न1 ते1 सुप्रीत°, दे1.8 सहृष्ट° (→संहृष्ट°); ब1 यज्ञेषु प्रीतमनसो. –d) ब1 °वने (→°वनं).

ग्रतः परं द1 उ1 ग्रधिकम्—
इति श्रीकूर्मपुराणे उपरिभागे अष्टत्रिंशोऽध्यायः ।

९३. –a) दे4 ग्राधारयितुं (→ग्राराधयितुं). –b) ब2.3 दे10 तथा (→यथा). –c) दे1.3.4.8-10 द1 उ1 मुवें. मुए. मुब. परं भावं, ग्र2 परं भावः, म1 परिभवं (→परं देवं); ते1 भवन्तः परमं देवं. –d) ब1 द1 वीतराग- (→वीतरागा).

९४. दे4. ६४c–६६d ⊙. –a) दे4 संडिलेषु, ते1 नन्दनेषु (→स्थण्डिलेषु); दे3 विविक्तेषु (→विचित्रेषु). –b) ते1 गृहासु (→गुहासु). –c) ब2 वियुक्तेषु (→विविक्तेषु). –d) दे3***, उ1 नगेषु (→शुभेषु).

९५. दे4. ⊙ (द्र. ६४ पा. वि.). –a) उ1 कांचित् (→केचित्). –b) दे3 ग्र2 केचिदन्तर्जलाशयाः, दे10 केचिदन्तर्जलेजयः, म1 केचिच्चैव जलाशयाः. –c) का1 ग्रभ्रविकाशास्तु, दे1.10 ग्रभ्रावकाशासु, दे2.6 ग्रत्रावकाशा (दे6 °श) स्तु, न1 ग्रभ्रावकेशास्तु, द1 दन्तावकाशास्तु (→ग्रभ्रावकाशास्तु). –d) का1 दे2 पादांगुष्ठाग्रविश्रुताः, दे1.8-10 मुवें. मुए. मुब. पादांगुष्ठे (दे1.8-10 °ष्ठा) ह्यधिष्ठिताः, दे3 पादांगुष्ठावपीडिताः, दे6 पादाग्रंगुष्ठविस्मिताः, न1 पादांगुष्ठांगविष्ठिताः, द1 पादांगुष्ठाग्रचवस्थिताः, ग्र2 उ1 पादांगुष्ठावधिष्ठिताः, म1 पादांगुष्ठाग्र्यविष्ठिताः.

९६. दे4. ⊙ (द्र. ६४ पा. वि.). –c) का1 दे1.8-10 न1 द1 ग्र2 उ1 मुवें. मुए. मुब. शाकपर्णाशनाः (दे10 द1 उ1 °नः), दे2 शाकपार्णशिनः (→शाकपर्णाशिनः); द1 कश्चित् (→केचित्).

९७. ब1. ab ⊙. –a) दे3 द1 ग्र2 म1 तृण°, मुब. ब्रह्म° (→वृक्ष°). –b) का1 शिलाशायी, दे4 सिलासंघाय् (→शिलाशय्यास्). –c) दे6 लयंति (→नयन्ति); दे10 तपसः (→तपसा).

९८. ब1. ab ⊙; दे3 म1. cd ⊙. –a) उ1 मुवें. मुए. प्रसादार्थे (→प्रसादार्थं). –d) दे1.8-10 न1 द1 ग्र2 उ1 मुवें. मुए. बोधयन् वृषभध्वजः, ते1 प्रबोधार्थं वृषध्वजः.

९९. म1. ⊙; दे3. ab ⊙. –a) न1 तस्माद्, ते1 तस्मिन् (→ह्यस्मिन्); ग्र2 देवः ** युगे ह्यस्मिन्. –b) दे1.8-10 भृगोर्, दे2 ग्र2 भृगौ, न1 विभौ, उ1 गृहौ (→शृङ्गे); दे1.8-10 सुता (→शुभे). –c) दे6.10 प्राप्ता, उ1 प्राप्तं (→प्राप्तः); दे3 तस्मिन् दारुवने प्राप्तः. –d) न1 प्रपन्नः (→प्रसन्नः); ब1 प्रसन्नं परमेश्वरं.

१००. ब1. १००–१५० ab ⊙; म1. ⊙. –a) दे3 °दिग्वासा, ते1 °लिप्तांगो (→°दिग्धांगो). –b) दे10

उल्मुकव्यग्रहस्तश्च रक्तपिङ्गललोचनः ।।१००
क्वचिच्च हसते रौद्रं क्वचिद् गायति विस्मितः ।
क्वचिन्नृत्यति शृङ्गारी क्वचिद् रौति मुहुर्मुहुः ।।१०१
आश्रमेऽभ्यागतो भिक्षां याचते च पुनः पुनः ।
मायां कृत्वात्मनो रूपं देवस्तद् वनमागतः ।।१०२
कृत्वा गिरिसुतां गौरीं पार्श्वे देवः पिनाकधृक् ।
सा च पूर्ववद् देवेशी देवदारुवनं गता ।।१०३
दृष्ट्वा समागतं देवं देव्या सह कपर्दिनम् ।
प्रणेमुः शिरसा भूमौ तोषयामासुरीश्वरम् ।।१०४
वैदिकैर्विविधैर्मन्त्रैः सूक्तैर्माहेश्वरैः शुभैः ।
अथर्वशिरसा चान्ये रुद्राद्यैर्ब्रह्मभिर्भवम् ।।१०५
नमो देवादिदेवाय महादेवाय ते नमः ।
त्र्यम्बकाय नमस्तुभ्यं त्रिशूलवरधारिणे ।।१०६
नमो दिग्वाससे तुभ्यं विकृताय पिनाकिने ।
सर्वप्रणतदेहाय स्वयमप्रणतात्मने ।।१०७
अन्तकान्तकृते तुभ्यं सर्वसंहरणाय च ।
नमोऽस्तु नृत्यशीलाय नमो भैरवरूपिणे ।।१०८
नरनारीशरीराय योगिनां गुरवे नमः ।
नमो दान्ताय शान्ताय तापसाय हराय च ।।१०९
विभीषणाय रुद्राय नमस्ते कृत्तिवाससे ।
नमस्ते लेलिहानाय शितिकण्ठाय ते नमः ।।११० वें.२.३१.२५

नग्नौ, ते1 भुग्नो (→नग्नो); ते1 विकृतलोचनः, द1 ग्र2 उ1 वैकृतलक्षणः (→विकृतलक्षणः). –c) का1 ब2 दे4 न1 ग्र2 मुवें. मुए. उल्मूक-, ब3 उल्मुको, दे1.6 उल्लक- (→उल्मुक-); दे3 तु (→च). –d) दे3 तथा पिंगल-, न1 रक्तपिंगश्च (→रक्तपिंगल-); दे2 °लोचनाः, दे4 °लोचनं (→°लोचनः).

१०१. ब1. ⊙ (द्र. १०० पा. वि.); न1. cd ⊙. –a) ब3 दे2 च सहतो (दे2 °ते), ग्र2 प्रहरते, म1 च हरते (→च हसते); न1 रुद्रः (→रौद्रं). –b) ते1 भवति (→गायति); दे3 ते1 विस्मितं (→विस्मितः). –c) का1 ब2.3 दे2.4.6 न1 ते1 द1 ग्र2 म1 उ1 शृङ्गारं (→शृङ्गारी).

१०२. ब1. ⊙ (द्र. १०० पा. वि.); दे3. ⊙. –a) दे1.8-10 मुवें. मुए. मुब. आश्रमे ह्यटते भिक्षुर्, दे4 आश्रमे ह्यतटे भैक्षं, न1 आश्रमे ह्यतते भैक्ष्ये, ते1 आश्रमेऽभ्यागतो भैक्षं, द1 उ1 आश्रमेष्वटते भैक्षं (उ1 °क्ष्यं), ग्र2 आश्रमे ह्यटते **, म1 आश्रमे ह्यटते भिक्षां. –c) दे1.8.9 रूपां, दे10 उ1 रूप (→रूपं). –d) द1 आत्मनः (→आगतः); न1 देहि भिक्षामिति ब्रुवन्.

१०३. ब1. ⊙ (द्र. १०० पा. वि.). –a) का1 ब1.2 दे2.4.6 न1 ते1 देवीं (→गौरीं). –b) दे3 देवीं (→देवः). –c) का1 देवेशो, दे1.8.9 देवेशं, ते1 देवेशौ (→देवेशी); दे3 एवं स देवदेवेशो, दे4 स च पूर्वं च देवेशो, दे6 सा पूर्ववर्गं रेवासीं, दे10 सा च पूर्वे च देवेशं, न1 सा च शर्ववशा देवी, द1 ग्र2 म1 उ1 सा च सर्वं च (उ1 तु) देवेषी (म1 °शा). –d) दे1.3.8 गतः, दे10 न1 ते1 गताः (→गता).

१०४. ब1. ⊙ (द्र. १०० पा. वि.). –b) दे10 पिनाकिनं (→कपर्दिनम्). –c) दे3 प्रणम्य, ग्र2 वृणोमि (→प्रणेमुः); दे6 सहसा (→शिरसा); द1 उ1 देवं (→भूमौ).

१०५. ब1. ⊙ (द्र. १०० पा. वि.). –a) दे1 देवं (→मन्त्रैः). –b) दे1 मंत्रैर्, दे8-10 उ1 मुवें. मुए. मुब. स्तोत्रैर् (→सूक्तैर्); द1 माहेश्वरः (→माहेश्वरैः). –c) ब2.3 दे2.3.6 न1 ते1 द1 ग्र2 चान्यै, दे1 चाग्रे (→चान्ये). –d) दे1.8.9 अर्चयेद् भवम्, मुवें. मुए. मुब. अर्चयन् भवम्, ते1 बहुभिर्हरम्, द1 ग्र2 म1 बहुभिर्भवं (→ब्रह्मभिर्भवम्).

१०६. ब1. ⊙(द्र. १०० पा. वि.). –a) ब2 देवातिदेवाय, दे1.6.8-10 मुवें. मुए. मुब. देवाधिदेवाय (→देवादिदेवाय). –c) ग्र2 त्रियंबकाय नमस्तुभ्यं.

दे1.8 अधिकम्—

*नमो दिग्वाससे तुभ्यं त्रिशूलवरधारिणे। (= १०७a, १०६d)

१०७. ब1. ⊙(द्र. १०० पा. वि.); दे4.10. १०७c-१०८b ⊙. –b) दे4.10 सर्वस्व (दे4 प्र) हरणाय च. –c) का1 ते1 °प्रणव° (→°प्रणत°); दे1.6.8 मुवें. मुए. °देवाय (→°देहाय).

१०८. ब1. ⊙ (द्र. १०० पा. वि); दे4.10. ab ⊙; दे3.१०८c-१०९d ⊙. –b) दे3 सर्वप्रहरणाय च, न1 सर्वसंहरणाय ते, द1 सर्वस्वहरणाय च, म1 सर्वसंधारणाय ते. –c) दे1.8-10 वृत्तशीलाय, न1 ते1 द1 म1 नृत्तशीलाय (→नृत्यशीलाय); दे6 नमो नृत्यंत शांस्तुभ्यं.

१०९. ब1. ⊙ (द्र. १०० पा. वि.); दे3. ⊙. –a) का1 नरनारायणेशाय. –b) दे1.4.8-10 म1 मुब. योगिने (→योगिनां); न1 पतये (→गुरवे).–c) म1 नमो दान्तायाक्षराय. –d) दे4 द1 तपसाय (→तापसाय); म1 तापसायाक्षराय च.

११०. ब1. ⊙ (द्र. १०० पा. वि.). –a) म1 ते तुभ्यं (→रुद्राय). –c) दे3 लेनिहानाय रुद्राय, द1 नमस्ते ललितानाथ.

वें.२.३६.२६ अघोरघोररूपाय वामदेवाय वै नमः ।
नमः कनकमालाय देव्याः प्रियकराय च ॥१११
गङ्गासलिलधाराय शंभवे परमेष्ठिने ।
नमो योगाधिपतये ब्रह्माधिपतये नमः ॥११२
प्राणाय च नमस्तुभ्यं नमो भस्माङ्गरागिने ।
नमस्ते घनवाहाय दंष्ट्रिणे वह्निरेतसे ॥११३
ब्रह्मणश्च शिरो हर्त्रे नमस्ते कालरूपिणे ।
आगतिं ते न जानीमो गतिं नैव च नैव च ।
विश्वेश्वर महादेव योऽसि सोऽसि नमोऽस्तु ते ॥११४
नमः प्रमथनाथाय दात्रे च शुभसंपदाम् ।
कपालपाणये तुभ्यं नमो मीढुष्टमाय ते ।
नमः कनकलिङ्गाय वारिलिङ्गाय ते नमः ॥११५
नमो वह्न्यर्कलिङ्गाय ज्ञानलिङ्गाय ते नमः ।
नमो भुजंगहाराय कर्णिकारप्रियाय च ।
किरीटिने कुण्डलिने कालकालाय ते नमः ॥११६
वामदेव महेशान देवदेव त्रिलोचन ।
क्षम्यतां यत्कृतं मोहात् त्वमेव शरणं हि नः ॥११७
चरितानि विचित्राणि गुह्यानि गहनानि च ।
ब्रह्मादीनां च सर्वेषां दुर्विज्ञेयोऽसि शंकर ॥११८

---

–d) दे$_{1.3.4.8-10}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ मुवें. मुए. मुब. श्रीकण्ठाय च ते नमः.

१११. ब$_{1}$. ⊙ (द्र. १०० पा. वि.). –a) का$_{1}$ अघोराय घोररूपाय. –b) दे$_{4}$ वामरूपाय, दे$_{6}$ नमो देवाथ, ते$_{1}$ वासुदेवाय, म$_{1}$ महादेवाय (→वामदेवाय); दे$_{3}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ ते (→वै). –c) न$_{1}$ नमः कमनकालाय (?). –d) दे$_{10}$ दिव्यः (→देव्याः); ब$_{3}$ प्रकरणाय, दे$_{3}$ प्रियतमाय, ग्र$_{2}$ म$_{1}$उ$_{1}$ प्रीतिकराय(→प्रियकराय).

११२. ब$_{1}$. ⊙ (द्र. १०० पा. वि.). –a) म$_{1}$ °धारां हि (→°धाराय). –b) म$_{1}$ धारिणे (→शंभवे). –c) द$_{1}$ उ$_{1}$ नमोस्तु गाधिपतये, ग्र$_{2}$ नमो स्कन्धाधिपतये. –d) का$_{1}$ ब$_{2.3}$ दे$_{2.6}$ मुवें. मुए. मुब. भूताधिपतये नमः.

११३. ब$_{1}$. ⊙ (द्र. १०० पा. वि.). –b) का$_{1}$ ब$_{2}$ ते$_{1}$ °रागिणे, ब$_{3}$ °भागिने, दे$_{1.3.4.8-10}$ न$_{1}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ मुवें. मुए. मुब. °धारिणे (→°रागिने). –c) दे$_{1.8-10}$ मुवें. मुए. मुब. हव्यवाहाय, दे$_{3.4}$ मेघवाहाय, दे$_{6}$ नद्यवाहाय, द$_{1}$ ग्र$_{2}$ म$_{1}$ घनवाताय (→घनवाहाय); ते$_{1}$ नमः श्मशानवासाय. –d) ते$_{1}$ वह्नये (→दंष्ट्रिणे); दे$_{1.8-10}$ मुवें. मुए. मुब. हव्य°, दे$_{4}$ ह्यग्नि° (→वह्नि°).

११४. ब$_{1}$. ⊙ (द्र. १०० पा. वि.). –a) ग्र$_{2}$ ब्रह्मणाय (→ब्रह्मणश्च); ब$_{3}$ दे$_{3}$ न$_{1}$ म$_{1}$ उ$_{1}$ हंत्रे, दे$_{6}$ हर्त्तें (→हर्त्रे). –c) का$_{1}$ अतीव ते, ब$_{2}$ अतीत ते, ब$_{3}$ दे$_{6}$ अनतीते, दे$_{2}$ अ*तिते, दे$_{10}$ अगतिं ते, ते$_{1}$ आनीतं तु, द$_{1}$ आगतं ते (→आगतिं ते). –d) ते$_{1}$ मतिं (→गतिं). –e) दे$_{1.8-10}$ मुए. विश्वेश्वराय सौम्याय. –f) दे$_{1.8-10}$ महाप्रलयकारिणे, द$_{1}$ योगीशाय नमो नमः, ग्र$_{2}$ उ$_{1}$ योगीशाय नमोऽस्तु ते.

११५. ब$_{1}$. ⊙ (द्र. १०० पा. वि.). –a) ब$_{3}$ प्रमथनाशाय, दे$_{4}$ ग्र$_{2}$ प्रथमनाथाय (→प्रमथनाथाय). –b) ब$_{2}$ सर्वदात्र च, + सर्वसंपदां, दे$_{2}$ सुखसंपदां, न$_{1}$ शुभसंपदात् (→शुभसंपदाम्); ग्र$_{2}$ दात्रेण गुणसंपदां. –c) उ$_{1}$ °पाहने (→°पाणये). –d) दे$_{1.3.8-10}$ नमो दुष्टतमाय ते, दे$_{2.6}$ नमो मीषुष्टमाय ते, मुवें. मुए. मुब. नमो जुष्टतमाय ते. –e) ब$_{2}$ दे$_{1.8-10}$ ते$_{1}$ मुवें. मुए. मुब. कनकपिङ्गाय (→कनकलिङ्गाय). –f) का$_{1}$ दे$_{2}$ परलिंगाय, ब$_{3}$ दे$_{6}$ पारिलिंगाय, दे$_{4}$ योनिलिंगाय, ते$_{1}$ पारलिंगाय, द$_{1}$ वारिपिंगाय (→वारिलिङ्गाय).

११६. ब$_{1}$. ⊙ (द्र. १०० पा. वि.); का$_{1}$ ब$_{3}$ दे$_{2}$ न$_{1}$. ab ⊙; द$_{1}$. cdef ⊙. –a) दे$_{4}$ वह्नार्क°, दे$_{10}$ वन्यर्क° (→वह्न्यर्क°). –b) दे$_{3}$ यज्ञ° (→ज्ञान°). –d) दे$_{1}$ कर्णिकायाप्रियाय च, दे$_{2}$ कर्णिकारा प्रियाय च, दे$_{8-10}$ कर्णिकाय प्रियाय च. –f) दे$_{1}$ **, उ$_{1}$ कालः (→काल-).

ब$_{2}$. b, c मध्ये अधिकम्—

54. * विश्वेश्वरदेवयोगिन् योगिप्रियाय ते नमः ।

११७. ब$_{1}$. ⊙(द्र. १०० पा. वि.). –a) दे$_{1.3.8.9}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ मुए. मुब. महादेव महादेव, दे$_{4}$ न$_{1}$ उ$_{1}$ महादेव महेशान, दे$_{6}$ वामदेवाय मीशान, दे$_{10}$ महादेवाय देवाय. –b) दे$_{3}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ महादेव (→देवदेव); दे$_{3}$ त्रिशूलधृक्, ग्र$_{2}$ त्रिशूलिने (→त्रिलोचन). –c) दे$_{4}$ कुप्यतां (→क्षम्यतां); दे$_{6}$ परतं (→यत्कृतं).

११८. ब$_{1}$. ⊙(द्र. १०० पा. वि.); दे$_{4}$. cd ⊙. –b) ब$_{2}$ दे$_{1}$ ग्रहना (ब$_{2}$ °णा) नि (→गहनानि). –ab) दे$_{4}$ चरित्राणि सुगुह्यानि गहनानि चराणि च. –d) दे$_{1.2.8.9}$ ग्र$_{2}$ मुवें. मुए. दुर्विज्ञेयो हि शंकरः.

अज्ञानाद्यदि वाज्ञानाद् यत्किंचित्कुरुते नरः ।
तत्सर्वं भगवानेव कुरुते योगमायया ॥११९
एवं स्तुत्वा महादेवं प्रहृष्टेनान्तरात्मना ।
ऊचुः प्रणम्य गिरिशं पश्यामस्त्वां यथा पुरा ॥१२०
तेषां संस्तवमाकर्ण्य सोमः सोमविभूषणः ।
स्वमेव परमं रूपं दर्शयामास शंकरः ॥१२१
तं ते दृष्ट्वाऽथ गिरिशं देव्या सह पिनाकिनम् ।
यथा पूर्वं स्थिता विप्राः प्रणेमुर्हृष्टमानसाः ॥१२२
ततस्ते मुनयः सर्वे संस्तूय च महेश्वरम् ।
भृग्वङ्गिरोवसिष्ठास्तु विश्वामित्रस्तथैव च ॥१२३
गौतमोऽत्रिः सुकेशश्च पुलस्त्यः पुलहः क्रतुः ।
मरीचिः कश्यपश्चापि संवर्त्तश्च महातपाः ।
प्रणम्य देवदेवेशमिदं वचनमब्रुवन् ॥१२४
कथं त्वां देवदेवेश कर्मयोगेन वा प्रभो ।
ज्ञानेन वाऽथ योगेन पूजयामः सदैव हि ॥१२५
केन वा देवमार्गेण संपूज्यो भगवानिह ।
किं तत् सेव्यमसेव्यं वा सर्वमेतद् ब्रवीहि नः ॥१२६

देवदेव उवाच ।❁

एतद् वः संप्रवक्ष्यामि गूढं गहनमुत्तमम् ।
ब्रह्मणे कथितं पूर्वमादावेव महर्षयः ॥१२७
सांख्ययोगो द्विधा ज्ञेयः पुरुषाणां हि साधनम् ।
योगेन सहितं सांख्यं पुरुषाणां विमुक्तिदम् ॥१२८　वे.२.३६.४४

१९९. ब$_{1.3}$. ⊙. –a) म$_{1}$ विज्ञानाद् (→अज्ञानाद्). –b) का$_{1}$ मुवें. मुए. मुब. किञ्चिद्यत् (→यत्किंचित्). –c) दें$_{3}$ म$_{1}$ भगवानेकः (→भगवानेव).

१२०. ब$_{1.3}$. ⊙. –b) दे$_{1.8\text{-}10}$ मुवें. मुए. मुब. प्रविष्टैरंतरात्मभिः, दे$_{3.4}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ प्रहृष्टैरन्तरात्म (उ$_{1}$ °दि)भिः, दे$_{6}$ प्रक्रुतानांतरात्मना. –c) ते$_{1}$ विश्वेशं (→गिरिशं). –d) दे$_{6}$ पश्यमास्त्वं, द$_{1}$ पश्याम त्वां (→पश्यामस्त्वां).

१२१. ब$_{1.3}$. ⊙. –b) म$_{1}$ साकं (→सोमः). –c) दे$_{1.8\text{-}10}$ मुवें. मुए. मुब. स्वयमेव परं रूपं.

१२२. ब$_{1}$. ⊙ (द्र. १०० पा. वि.). –a) ब$_{3}$ तत्ते, दे$_{3}$ ततो, दे$_{4}$ ततं (→तं ते). –b) ग्र$_{2}$ सह देव्या (→देव्या सह). –ab) म$_{1}$ तमालोक्य महादेवम्मुनयस्ते पिनाकिनम्. –c) ब$_{2.3}$ दे$_{1.4.6.8\text{-}10}$ पूर्व-, दे$_{2}$ पूर्वा- (→पूर्वं); का$_{1}$ ब$_{2.3}$ दे$_{2.3.6}$ ते$_{1}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ स्थितं, दे$_{4}$ स्थितः (→स्थिता); ग्र$_{2}$ मुवें. विप्रः (→विप्राः). –d) ब$_{3}$ हृष्टि°, म$_{1}$ दृढ° (→हृष्ट°); दे$_{6}$ °मानसं (→°मानसाः).

१२३. ब$_{1}$. ⊙ (द्र. १०० पा. वि.). –b) ते$_{1}$ संभूय (→संस्तूय). –c) दे$_{1.4.8\text{-}10}$ म$_{1}$ मुवें. मुए. मुब. भृग्वंगिरा, ग्र$_{2}$ भृग्वादयो (→भृग्वंगिरो-); ब$_{2}$ दे$_{3}$ वसिष्ठाश्च, दे$_{1.8\text{-}10}$ न$_{1}$ ते$_{1}$ म$_{1}$ उ$_{1}$ मुवें. मुए. मुब. वसिष्ठस्तु, दे$_{4}$ वसिष्ठश्च (→-वसिष्ठास्तु).

१२४. ब$_{1}$. ⊙ (द्र. १०० पा. वि.). –a) ब$_{2}$ सुवेगश्च, ब$_{3}$ दे$_{6}$ सुरेशश्च, दे$_{2}$ सुवेशं च, द$_{1}$ सुकेतश्च, म$_{1}$ सुकेतुश्च (→सुकेशश्च). –b) दे$_{1}$ पुत्रहः (→पुलहः); उ$_{1}$ कुरुः (→क्रतुः). –c) ग्र$_{2}$ *** (→मरीचिः); न$_{1}$ ग्र$_{2}$ म$_{1}$ काश्यपश्चापि (ग्र$_{2}$ म$_{1}$ °त्रिः), द$_{1}$ उ$_{1}$ कश्यपश्चात्रिः (→कश्यपश्चापि). –d) दे$_{1.8.9}$ ग्र$_{2}$ मुवें. मुए. मुब. संवर्त्तक- (→संवर्त्तश्च). –f) उ$_{1}$ अब्रवीत् (→अब्रुवन्); दे$_{6}$ कर्मयोगे नरा प्रभो.

124 श्लोकान्तरं म$_{1}$ अधिकम्—मुनयः.

१२५. ब$_{1}$. ⊙ (द्र. १०० पा. वि.). –a) म$_{1}$ त्वामेव (→त्वां देव-); दे$_{10}$ ते$_{1}$ °देवेशं (→°देवेश). –d) म$_{1}$ पूजनीयः (→पूजयामः).

१२६. ब$_{1}$. ⊙ (द्र. १०० पा. वि.). –a) दे$_{10}$ दैव° (→देव°). –c) दे$_{4}$ किंतु (→किं तत्); ते$_{1}$ स्यात् (→वा). –d) न$_{1}$ सर्वमेतं, ग्र$_{2}$ सर्वमेव, म$_{1}$ सर्वं ते तद् (→सर्वमेतद्).

❁ ब$_{1}$ न$_{1}$ ग्र$_{2}$. ⊙; का$_{1}$ ब$_{2.3}$ दे$_{2.4.6}$ देव उवाच; दे$_{3}$ महादेव उवाच; ते$_{1}$ श्रीमहादेवः; द$_{1}$ म$_{1}$ उ$_{1}$ देवदेवः.

१२७. ब$_{1}$. ⊙(द्र. १०० पा. वि.). –a) दे$_{1.8\text{-}10}$ मुब. गाढं (→गूढं). –c) ब$_{2}$ दे$_{3.6}$ ते$_{1}$ म$_{1}$ उ$_{1}$ मुवें. मुए. मुब. ब्रह्मणा, दे$_{1.8\text{-}10}$ ग्र$_{2}$ ब्रह्मणः, न$_{1}$ ब्रह्मेण, द$_{1}$ ब्राह्मणः (→ब्रह्मणे); द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ कथितो (म$_{1}$ °तं) योग- (→कथितं पूर्वं). –d) दे$_{1.8\text{-}10}$ महादेवो, दे$_{3}$ वामदेव-, मुवें. मुए. महादेवे (→आदावेव); दे$_{3}$ महर्षये, दे$_{10}$ महेश्वरः (→महर्षयः).

१२८. ब$_{1}$. ⊙ (द्र. १०० पा. वि.). –a) दे$_{1.8\text{-}10}$ न$_{1}$ ग्र$_{2}$ म$_{1}$ मुवें. मुए. मुब. सांख्ययोगात्, दे$_{3}$ सांख्यं योगं, दे$_{4}$ योगसांख्यं (→सांख्ययोगो); दे$_{1.3.8\text{-}10}$ न$_{1}$ मुवें. मुए. मुब. द्विधाज्ञेयं, दे$_{4}$ तथा ज्ञेयं, दे$_{6}$ धिया ज्ञेयः (→द्विधा ज्ञेयः). –b) का$_{1}$ विविक्तिदः, दे$_{2}$ विभुक्तिदः, दे$_{3}$ तु साधनम् (→हि साधनम्). –c) का$_{1}$ संहितं (→सहितं). –d) का$_{1}$ विभक्तिदं (→विमुक्तिदं).

वें.२.३९.४५ न केवलेन योगेन दृश्यते पुरुषः परः ।
ज्ञानं तु केवलं सम्यगपवर्गफलप्रदम् ॥१२९

भवन्तः केवलं योगं समाश्रित्य विमुक्तये ।
विहाय सांख्यं विमलमकुर्वन्त परिश्रमम् ॥१३०

एतस्मात् कारणाद् विप्रा नृणां केवलधर्मिणाम् ।
आगतोऽहमिमं देशं ज्ञापयन् मोहसंभवम् ॥१३१

तस्माद् भवद्भिर्विमलं ज्ञानं कैवल्यसाधनम् ।
ज्ञातव्यं हि प्रयत्नेन श्रोतव्यं दृश्यमेव च ॥१३२

एकः सर्वत्रगो ह्यात्मा केवलश्चितिमात्रकः ।
आनन्दो निर्मलो नित्यं स्यादेतत् सांख्यदर्शनम् ॥१३३

एतदेव परं ज्ञानमेष मोक्षोऽत्र गीयते ।
एतत् कैवल्यममलं ब्रह्मभावश्च वर्णितः ॥१३४

आश्रित्य चैतत् परमं तन्निष्ठास्तत्परायणाः ।
पश्यन्ति मां महात्मानो यतयो विश्वमीश्वरम् ॥१३५

एतत् तत् परमं ज्ञानं केवलं सन्निरञ्जनम् ।
अहं हि वेद्यो भगवान् मम मूर्त्तिरियं शिवा ॥१३६

बहूनि साधनानीह सिद्धये कथितानि तु ।
तेषामभ्यधिकं ज्ञानं मामकं द्विजपुंगवाः ॥१३७

ज्ञानयोगरताः शान्ता मामेव शरणं गताः ।
ये हि मां भस्मनिरता ध्यायन्ति सततं हृदि ॥१३८

---

१२९. ब$_{1}$. ⊙ (द्र. १०० पा. वि.). –a) दे$_{4.8}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ मुवें. मुए. मुब. केवलं हि, न$_{1}$ केवलं तु (→केवलेन); का$_{1}$ न केवलेन दृश्यन्ते, दे$_{1.9.10}$ न केवलं वियोगेन. –b) उ$_{1}$ पुरुषं परं (→पुरुषः परः); का$_{1}$ पुरुषः परमः परः. –c) दे$_{8.9}$ ज्ञानं सु-, दे$_{10}$ ज्ञानस्तु, ग्र$_{2}$ ज्ञानात्तु (→ज्ञानंतु); का$_{1}$ केवलः, दे$_{10}$ केवले (→केवलं).

१३०. ब$_{1}$. ⊙ (द. १०० पा. वि.). –a) न$_{1}$ द$_{1}$ भवंतं (→भवन्तः); न$_{1}$ कवयं (→केवलं). –b) का$_{1}$ विविक्तये (→विमुक्तये). –d) का$_{1}$ दे$_{2}$ आकुर्वंत, ब$_{2.3}$ दे$_{6}$ ते$_{1}$ मुवें. मुए. मुब. अकुर्वंत, दे$_{1.8-10}$ उ$_{1}$ अकुर्वन्तः, दे$_{4}$ अकुर्वंतः, ग्र$_{2}$ अकुर्वन्तं (→अकुर्वन्त).

१३१. ब$_{1}$. ⊙ (द्र. १०० पा. वि.). –b) ब$_{2}$ योग- (→नृणां); ब$_{2}$ दे$_{3.4}$ न$_{1}$ द$_{1}$ °कर्मिणां, दे$_{1.8-10}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ मुवें. मुए. मुब. °कर्मणाम् (→°धर्मिणां). –c) दे$_{6}$ स्वागतोऽहं, म$_{1}$ कामतोऽहं (→आगतोऽहं). –d) न$_{1}$ ज्ञापये (→ज्ञापयन्).

१३२. ब$_{1}$. ⊙ (द्र. १०० पा. वि.); द$_{1}$ ग्र$_{2}$ उ$_{1}$. ab ⊙. –ab) ते$_{1}$ भवद्भिः विमलं ज्ञानं तस्मात् कैवल्यसाधनम्. –d) दे$_{1.8-10}$ मुए. धर्म एव च, ते$_{1}$ धर्मते च वः, द$_{1}$ ग्र$_{2}$ उ$_{1}$ धर्मते भवः (→दृश्यमेव च).

१३३. ब$_{1}$. ⊙ (द्र. १०० पा. वि.). –a) द$_{1}$ ग्र$_{2}$ उ$_{1}$ एष (→एकः); ब$_{2.3}$ सर्वत्र गुह्यात्मा (→सर्वत्रगो ह्यात्मा). –b) ब$_{2}$ केवलश्च त्रिमात्रिकः, दे$_{3.6}$ केवलस्थितिमात्रकः, दे$_{4}$ केवल्यंश्चितिमात्रिकः, दे$_{10}$ केवलश्चेति मातृकः, ते$_{1}$ केवलं चितिमात्रकः, द$_{1}$ ग्र$_{2}$ केवलं चिन्मयात्मकः, म$_{1}$ केवलश्चिन्मयात्मिका. –c) दे$_{4}$ निर्मलं (→निर्मलो); दे$_{1.3.8-10}$ न$_{1}$ म$_{1}$ मुवें. मुए. मुब. नित्य- (दे$_{3}$ °त्यः) (→नित्यं). –d) दे$_{1.8-10}$ मुवें. मुए. एतद्वै, न$_{1}$ स्यादेकं (→स्यादेतत्).

१३४. ब$_{1}$. ⊙ (द्र. १०० पा. वि.). –a) न$_{1}$ एतत्ते परमं ज्ञानं. –b) दे$_{1.8.9}$ न$_{1}$ मुवें. मुए. मुब. अथ मोक्षाऽनुगीयते, दे$_{3}$ न$_{1}$ म$_{1}$ एष मोक्षोनुगीयते, दे$_{4}$ एतदेवं परं पदं, दे$_{10}$ अथ मोक्षाय गीयते, ते$_{1}$ अयं मोक्षोनुगीयते, द$_{1}$ ग्र$_{2}$ उ$_{1}$ एतन्मोक्षोऽनुगीयते. –c) का$_{1}$ ब$_{2.3}$ दे$_{2.6}$ कैवल्यमतुलं, दे$_{4}$ कैवल्यगमनं, न$_{1}$ त्रैलोक्यममलं (→कैवल्यममलं). –d) ग्र$_{2}$ बह्मवर्णश्च (→ब्रह्मभावश्च).

१३५. ब$_{1}$. ⊙ (द्र. १०० पा. वि.). –c) ते$_{1}$ पश्यन्तीमं (→पश्यन्ति मां); ग्र$_{2}$ महात्मानं (→महात्मानो). –d) उ$_{1}$ विश्वतोमुखं (→विश्वमीश्वरम्).

१३६. ब$_{1}$. ⊙ (द्र. १०० पा. वि.). –a) का$_{1}$ ब$_{2.3}$ दे$_{2.3.6}$ न$_{1}$ एषां (दे$_{3}$ °ष) तत्परमं, दे$_{4}$ एतावत्परमं, द$_{1}$ ग्र$_{2}$ एषा च तत् परं, म$_{1}$ आहुश्च परमं, उ$_{1}$ एतावत्परमं (→एतत् तत्परमं). –b) दे$_{10}$ तं निरंजनं, द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ मां निरञ्जनम् (→सन्निरंजनम्). –c) द$_{1}$ विद्यो (→वेद्यो). –d) दे$_{1}$ मम प्रीतिरियं शिया (?).

१३७. ब$_{1}$. ⊙ (द्र. १०० पा. वि.). –b) दे$_{8}$ सिद्धाय (→सिद्धये); म$_{1}$ च (→तु). –c) दे$_{2}$ येषामभ्यधिकं, म$_{1}$ कथा मयाधिकं (→तेषामभ्यधिकं).

१३८. ब$_{1}$. ⊙ (द्र. १०० पा. वि.). –b) ब$_{3}$ दे$_{2.6}$ मामैव (→मामेव). –c) दे$_{4}$ यो (→ये); दे$_{3}$ न$_{1}$ भक्तिनिरता, द$_{1}$ ग्र$_{2}$ उ$_{1}$ योगनिरता (→भस्मनिरता). –d) म$_{1}$ शिवं, +हृदि (→हृदि).

मद्भक्तिपरमा नित्यं यतयः क्षीणकल्मषाः ।
नाशयाम्यचिरात् तेषां घोरं संसारसागरम् ।।१३९
प्रशान्तः संयतमना भस्मोद्धूलितविग्रहः ।
ब्रह्मचर्यरतो नग्नो व्रतं पाशुपतं चरेत् ।।१४०
निर्मितं हि मया पूर्वं व्रतं पाशुपतं परम् ।
गुह्याद् गुह्यतमं सूक्ष्मं वेदसारं विमुक्तये ।।१४१
यद् वा कौपीनवसनः स्याद् वैकवसनो मुनिः ।
वेदाभ्यासरतो विद्वान् ध्यायेत् पशुपतिं शिवम् ।।१४२
एष पाशुपतो योगः सेवनीयो मुमुक्षिभिः ।
भस्मच्छन्नैर्हि सततं निष्कामैरिति विश्रुतिः ।।१४३
वीतरागभयक्रोधा मन्मया मामुपाश्रिताः ।
बहवोऽनेन योगेन पूता मद्भावमागताः ।।१४४
अन्यानि चैव शास्त्राणि लोकेऽस्मिन् मोहनानि तु ।
वेदवादविरुद्धानि मयैव कथितानि तु ।।१४५
वामं पाशुपतं सोमं लाकुलं चैव भैरवम् ।
असेव्यमेतत् कथितं वेदबाह्यं तथेतरम् ।।१४६
वेदमूर्त्तिरहं विप्रा नान्यशास्त्रार्थवेदिभिः ।
ज्ञायते मत्स्वरूपं तु मुक्त्वा वेदं सनातनम् ।।१४७ वें. २.३६.६३

---

१३९. ब$_1$. ⊙ (द्र. १०० पा. वि.). –a) म$_1$ तद्भक्ति° (→मद्भक्ति°); दे$_{1.8-10}$ मुवें. मुए. मुब. °तत्परा नित्यं, उ$_1$ °परमं ज्ञानं (→°परमा नित्यं). –b) उ$_1$ ज्ञान° (→क्षीण°). –c) दे$_4$ नाशयाम्यचिरं तेषां, ते$_1$ नाशयाम्यन्तरा तेषां. –d) ग्र$_2$ उ$_1$ मुवें. मुए. मुब. °गह्वरम (→°सागरम्).

१४०. ब$_1$. ⊙ (द्र. १०० पा.वि.). –a) ब$_{2.3}$ दे$_6$ प्रशान्तोयं यतमना, ते$_1$ प्रशान्ता यतमानाश्च, ग्र$_2$ उ$_1$ प्रशान्तः सन्ततमना. –b) ब$_3$ ते$_1$ द$_1$ ग्र$_2$ उ$_1$ °विग्रहाः (→°विग्रहः). –c) द$_1$ ग्र$_2$ उ$_1$ ब्रह्मण्येव (→ब्रह्मचर्य-); दे$_2$ °व्रतो (→°रतो); दे$_{3.10}$ नग्नौ, दे$_4$ नग्नं (→नग्नो).

१४१. ब$_1$. ⊙ (द्र. १०० पा. वि.). –a) दे$_{10}$ निर्मिते (→निर्मितं). –b) ब$_{2.3}$ दे$_{2.6}$ यत्नात्, म$_1$ मतं (→व्रतं); दे$_{1.3.4.8-10}$ म$_1$ मुवें. मुए. मुब. शुभम्, द$_1$ ग्र$_2$ उ$_1$ शिवम् (→परं). –d) दे$_3$ एतद् ज्ञानं (→वेदसारं).

१४२. ब$_1$. ⊙ (द्र. १०० पा. वि.). –a) ते$_1$ तथा (→यद्वा); न$_1$ कौपीनवसनः स्याद्वा. –b) का$_1$ ब$_{2.3}$ स्याद्वा दिग्वसनो, दे$_{1.8-10}$ ते$_1$ म$_1$ उ$_1$ मुवें. मुए. मुब. स्यादेकवसनो, दे$_6$ स्याद्वा दिग्धवसमो (?), न$_1$ स्याद्वैकं वर्जनो (→स्याद्वैक-वसनो). –c) म$_1$ वेदाध्ययनतो विद्वान्. –d) ते$_1$ ध्यायन् (→ध्यायेत्); द$_1$ म$_1$ उ$_1$ द्विजाः (→शिवम्); ब$_3$ ध्यापयेत्(?) पशुपतिं शिवम्.

१४३. ब$_1$. ⊙ (द्र. १०० पा. वि.); द$_1$. cd ⊙. –a) दे$_4$ द$_1$ उ$_1$ एकः (→एष). –c) का$_1$ भस्मच्छन्नैर्हि-निष्कामैर्, दे$_{1.8.9}$ मुवें. मुए. तस्मिन्स्थितैस्तु पठितं, दे$_4$ भस्मच्छन्नैस्तु सततं, दे$_{10}$ तस्मैच्छिन्नैस्तु पठितं, ग्र$_2$ तस्मात् छन्नस्तु सततं, उ$_1$ भस्मच्छन्नेषु सततं. –d) दे$_{1.8-10}$ मुवें. मुए. मुब. हि श्रुतम्, दे$_2$ हि स्थितिः, दे$_6$ हृस्थितिः (→विश्रुतिः); का$_1$ इति *** श्रुतिः, ग्र$_2$ निष्ठारारीति हि स्थितिः, उ$_1$ निष्ठारामैरिति स्थितिः.

१४४. ब$_1$ द$_1$. ⊙; ग्र$_2$ उ$_1$. ab ⊙; म$_1$. cd ⊙. –a) दे$_{1.8}$ वीतरागामयक्रोध, दे$_9$ वीतरागाभयक्रोधा. –b) दे$_{3.4}$ मन्मना, ते$_1$ मद्गता (→मन्मया). –c) का$_1$ बहवो ज्ञान-, दे$_{10}$ बहवो तेन (→बहवोऽनेन). –d) न$_1$ रूपा (→पूता); दे$_{10}$ तद्भावं (→मद्भावं).

१४५. ब$_1$. ⊙ (द्र. १०० पा. वि.); द$_1$. ab ⊙; उ$_1$. cd ⊙. –a) दे$_4$ यानि शास्त्राणि, ते$_1$ वेदसाराणि (→चैव शास्त्राणि). –b) का$_1$ प्रोक्तानि (→लोकेऽस्मिन्); दे$_4$ मुब. मोहनानि च, ते$_1$ मोहकानि तु (→मोहनानि तु). –c) दे$_4$ भेदवाद-, द$_1$ वेदवेद- (→वेदवाद-); का$_1$- विशुद्धानि, दे$_4$ -विशुद्धात्मा (→-विरुद्धानि). –d) ते$_1$ विहितानि (→कथितानि).

१४६. ब$_1$. ⊙ (द्र. १०० पा. वि.). –a) दे$_3$ कौलं तथा (→पाशुपतं); दे$_4$ भागं, दे$_6$ शोमं (→सोमं). –b) दे$_{1.8.9}$ मुवें. मुए. लाकुरं, दे$_{3.6}$ ते$_1$ नाकुलं, न$_1$ लाकुटं (→लाकुलं); ग्र$_2$ भैरवः (→भैरवम्). –c) ब$_2$ दे$_6$ आसेव्यं, ग्र$_2$ असिद्धं, म$_1$ मत्सेव्यं, उ$_1$ अशौचं (→असेव्यं). –d) ब$_2$ तथैव तु, दे$_{1.2.4.6.8.9}$ मुवें. मुए. मुब. तथेतरम्, दे$_3$ तथैव च, दे$_{10}$ तथोत्तरम्, न$_1$ द$_1$ ग्र$_2$ उ$_1$ तथेतरत्, म$_1$ तथेति यत्(→तथेतरम्); का$_1$ वेदव्यासं तथोतरं, ते$_1$ वेदवाक्यं तथोत्तरम्.

१४७. ब$_1$. ⊙ (द्र. १०० पा. वि.). –a) ते$_1$ वेदमूर्ते-रयं विप्राः. –b) का$_1$ दे$_2$ नान्यशास्त्रानुचारिभिः, ब$_2$ नान्य-शास्त्रानुसारिभिः, ब$_3$ दे$_6$ नान्यशास्त्रार्थचारिभिः, दे$_3$ न च शास्त्रार्थवादिभिः, दे$_4$ नान्यशास्त्रार्थवादिनः, न$_1$ ते$_1$ म$_1$ नान्य-शास्त्रार्थवादिभिः, द$_1$ ग्र$_2$ उ$_1$ नान्यवेच्छास्त्रार्थवादिभिः.

वै.२.३९.६४ स्थापयध्वमिदं मार्गं पूजयध्वं महेश्वरम् ।
अचिरादैश्वरं ज्ञानमुत्पत्स्यति न संशयः ॥१४८
मयि भक्तिश्च विपुला भवतामस्तु सत्तमाः ।
ध्यातमात्रो हि सान्निध्यं दास्यामि मुनिसत्तमाः ॥१४९
इत्युक्त्वा भगवान् सोमस्तत्रैवान्तरधीयत ।
तेऽपि दारुवने तस्मिन् पूजयन्ति स्म शंकरम् ।
ब्रह्मचर्यरताः शान्ता ज्ञानयोगपरायणाः ॥१५०
समेत्य ते महात्मानो मुनयो ब्रह्मवादिनः ।
वितेनिरे बहून् वादान्नध्यात्मज्ञानसंश्रयान् ॥१५१
किमस्य जगतो मूलमात्मा चास्माकमेव हि ।
कोऽपि स्यात् सर्वभावानां हेतुरीश्वर एव च ॥१५२
इत्येवं मन्यमानानां ध्यानमार्गावलम्बिनाम् ।
आविरासीन्महादेवी देवी गिरिवरात्मजा ॥१५३
कोटिसूर्यप्रतीकाशा ज्वालामालासमावृता ।
स्वभाभिर्विमलाभिस्तु पूरयन्ती नभस्तलम् ॥१५४
तामन्वपश्यन् गिरिजाममेयां
ज्वालासहस्रान्तरसन्निविष्टाम् ।
प्रणेमुरेकामखिलेशपत्नीं
जानन्ति ते तत् परमस्य बीजम् ॥१५५

---

–d) का1 वेदे, ब2.3 चेदं, दे1 देव-, दे8.9 द1 मुवें. मुए. मुब. देवं (→वेदं).

१४८. ब1. ⊙ (द्र. १०० पा. वि.). –a) ब2 दे2.4.6 म1 उ1 इमं (→इदं); द1 स्थायित्वमिमं मार्गं. –c) दे1.8-10 ततो विराड्वरं (दे10 °ह) ज्ञानं, ग्र2 अचिरादीश्वरं ज्ञानं, मुवें. मुए. मुब. ततोऽचिराद्वरं ज्ञानं.. –d) का1 दे4 उत्पत्स्यंति (→उत्पत्स्यति); ते1 ज्ञानादुत्पद्यते शुभम्.

१४९. ब1. ⊙ (द्र. १०० पा. वि.); दे6 ते1 द1 ग्र2 म1.cd ⊙. –b) का1 भावतासस्तु(?), दे3 भवतामस्ति, दे4 भवतावस्तु (→भवतामस्तु). –c) दे1.8.9 मुवें. मुए. ध्यानमात्रं, दे3 ध्यानमात्रे (दे3 °त्रे), दे10 ध्यानमासं (→ध्यातमात्रो); का1 ध्यानमात्रो हि सान्निध्यं, + ध्यानमात्रो हि सा नित्यं.

१५०. ब1.ab ⊙(द्र. १०० पा. वि.). –b) दे1.4.8.9 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. तत्रैवान्तर्हितोऽभवत्. –c) दे6 °वनं (→°वने); मुवें. मुए. मुब. स्थित्वा (→तस्मिन्). –d) म1 पूजयन्ति हि, मुवें. मुए. मुब. ह्यर्चयन्ति स्म (→पूजयन्ति स्म); द1 ग्र2 उ1 पूजयन्ति महेश्वरम्. –e) ग्र2 °पराश्शान्ताः (→°रताः शान्ता). –f) का1 ब1-3 दे2-4.6 ते1 ग्र2 म1 उ1 सांख्ययोग° (→ज्ञानयोग°).

१५१. –a) का1 ब2.3 दे2 समेत्याभि-, दे4 समेत्य तं, दे6 सामाद्यति (→समेत्य ते). –c) दे1 वितेरे च, मुवें. मुए. मुब. विचक्रिरे (→वितेनिरे); ब1 म1 बहून्वेदान्, ब2.3 बहून् मार्गान्, दे2 बहून्नादान्, न1 ब्रह्मवादान्, ते1 बहून्पादान् (→बहून्वादान्). –d) दे1.3.4.8-10 मुवें. मुए. मुब. स्वात्मज्ञानसंश्रयान् (दे3.10 °यात्, दे4 °याः), दे6 ध्यानार्थ-ज्ञानसंश्रयात्, न1 अध्यात्मज्ञानसंश्रयात्, द1 ग्र2 मम विज्ञान (ग्र2 °नात्) संश्रयान्, म1 स्वात्मविज्ञानसंश्रयात्, उ1 नाम-विज्ञानसंश्रयान्.

१५२. –a) दे4 भूतं (→मूलं). –b) ग्र2 च (→हि). –c) का1 ब2.3 दे2.6 सर्वभूतानां (→सर्वभावानां). –d) ग्र2 उ1 हि (→च).

१५३. –b) दे4 ध्यानमार्गो वलं विना, दे10 ध्यान-मग्नावलंबिनं, ते1 ध्यानकर्मावलंबनम्. –c) दे4.6 महादेवीं (→महादेवी). –d) दे1 म1 गौरी, मुवें. मुए. मुब. ततो (→देवी); दे4 [ग्रा]त्मजां (→ [ग्रा]त्मजा); दे3 गिरि-राजरात्मजा.

१५४. ब1. ⊙. –a) न1 °प्रतीकाशो, ग्र2 °प्रतीकाशां (→°प्रतीकाशा). –c) ब3 स्वभातिर्, द1 ग्र2 म1 उ1 प्रभाभिर्, (→स्वभाभिर्); दे1.3.4.8-10 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. निर्मलाभिः सा, न1 निर्भयाभिस्तु (→विमलाभिस्तु). –d) ब2 प्लावयन्ती, ते1 पूजयन्ती (→पूरयन्ती); दे2.10 ते1 द1 म1 नभस्थलं (→नभस्तलम्).

१५५. ब1. d ⊙. –a) का1 दे1.8.9 न1 ग्र2 म1 मुवें. मुए. मुब. तामन्वपश्यद्, ब1 तमान्वपश्यद्, दे2 तामनुपश्यद्, दे4 तामन्वपश्य, दे6 तां संपश्य, दे10 तामन्यपशयत्, द1 तमन्वपश्यन् (→तामन्वपश्यन्); ब2 गिरिजाममायां, ब3 गिरिजामयेयां, दे6 गिरिजाममेया (→गिरिजाममेयां). –b) द1 विनिष्टाः (→निवि-ष्टाम्). –c) दे1.8.9 उ1 मुवें. मुए. मुब. प्रणेमुरेतां, दे3.4 द1 ग्र2 म1 प्रणेमुरेनां, दे10 प्रणेमुमेतां (→प्रणेमुरेकां); ब1 ** (→°पत्नीं). –d) दे1.8-10 उ1 मुवें. मुए.मुब. चैतत्, दे2 * तत् (→ते तत्); उ1 परमं स्वबीजं (→परमस्य बीजम्); का1 जानन्ति ते तस्य परस्य बीजम्.

अस्माकमेषा परमेशपत्नी
गतिस्तथात्मा गगनाभिधाना ।
पश्यन्त्यथात्मानमिदं च कृत्स्नं
तस्यामथैते मुनयश्च विप्राः ॥१५६

निरीक्षितास्ते परमेशपत्न्या
तदन्तरे देवमशेषहेतुम् ।
पश्यन्ति शंभुं कविमीशितारं
रुद्रं बृहन्तं पुरुषं पुराणम् ॥१५७

आलोक्य देवीमथ देवमीशं
प्रणेमुरानन्दमवापुरग्र्यम् ।
ज्ञानं तदैशं भगवत्प्रसादा-
दाविर्बभौ जन्मविनाशहेतु ॥१५८

इयं हि सा जगतो योनिरेका
सर्वात्मिका सर्वनियामिका च ।
माहेश्वरीशक्तिरनादिसिद्धा
व्योमाभिधाना दिवि राजतीव ॥१५९

अस्या महत्परमेष्ठी परस्ता-
न्महेश्वरः शिव एकोऽथ रुद्रः ।
चकार विश्वं परशक्तिनिष्ठां
मायामथारुह्य स देवदेवः ॥१६०

एको देवः सर्वभूतेषु गूढो
मायी रुद्रः सकलो निष्कलश्च ।
स एव देवी न च तद्विभिन्न-
मेतज्ज्ञात्वा ह्यमृतत्वं व्रजन्ति ॥१६१ वें २.३९.७७

---

१५६. ब1. a ⊙ (इ. सं.). –a) दे1.8.9 न1. मुवें मुए. मुब. परमस्य (→परमेश-). –b) ते1 तथात्नो, द1 ग्र2 उ1 तदात्मा (→तथात्मा). –c) ब1 पुष्यत्तथात्मानं, दे3 पश्यंति चात्मानं, दे4 पश्येत्पथात्मानं, दे6 पश्यत्न्यनात्मानं, दे10 न1 पश्यं-तथात्मानां, ते1 पश्यंस्तदा नीलं, ग्र2 पायात्मथात्मानं (→पश्य-न्त्यथात्मानं). –d) न1 तस्य भवान्याः (→तस्यामथैते); का1 दे1.3.8.9 न1 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. प्रहृष्टाः, ब1 प्रविष्टं, दे10 प्रतिष्टा, ते1 प्रनिष्टाः (→च विप्राः).

१५७. –a) दे10 निरीक्षिमास्ते, द1 निरीक्षितास्वे, उ1 निरीक्षास्ते (→निरीक्षितास्ते). –b) दे4 तदंतरं (→तदंतरे); द1 वेदमशेष°, म1 शेषमशेष° (→देवमशेष°). –c) ते1 पश्यन्तमीशं (→पश्यन्ति शम्भुं); न1 कपिं (→कविं). –d) म1 भद्रं प्रभन्तं प्रभुमीशितारम्.

१५८. ब1. cd ⊙. –a) न1 आलोच्य (→आलोक्य); दे6 ** मथ, द1 ग्र2 उ1 देव्या सह (→देवीमथ); का1 देवमायां (→देवमीशं); म1 अनन्तरूपं सह देवमीशं. –c) का1 दे1.8.9 मुवें. मुए. तदीशं, दे10 तदीयं, ते1 तदेकं, द1 ग्र2 तदेशं (→तदैशं). –d) दे2.4.10 न1 ते1 द1 ग्र2 म1 उ1 °हेतुः, दे6 °हेतुं (→°हेतु).

१५९. –a) का1 अयं हि सा, ब1 दे8-10 मुवें. मुए. मुब. इयं या सा, ब3 इयं हि *, द1 इत्थं हि या, ग्र2 म1 इत्थं हि सा (→इयं हि सा); ब1 योनिरूपा (→योनिरेका); दे1 सेयं प्रपातजगतोनिरेका. –b) ते1 सदात्मिका (→सर्वात्मिका); दे4 °नियामिकां (→°नियामिका); ब2.3 सर्वा (ब3 °र्वं) **** नियामि (ब2 °रात्मि°) का *, म1 सर्वात्मिका धर्ममया पुराणी. –d) दे1 व्योमाभिधाना, + व्योमा त्विधाना, म1 स्वात्माभिधाना (→व्योमाभिधाना); दे10 भूवि (→दिवि); न1 द1 ग्र2 व्योमाभि (ग्र2 °द) धानाभि (द1 हि°) विराजतीव.

१६०. –a) का1 अस्या महान्, ब2.3 अस्यामहं, दे1.3.8-10 न1 मुवें. मुए. मुब. अस्यां महान् (दे10 °हा), ते1 अस्यामयं, द1 उ1 अस्यां महात्मा (→अस्या महत्); दे1.8-10 ते1 परस्तात् (→परस्तान्); ग्र2 अस्या महात्मा परमे परास्मा. –b) ब1 **, दे3 शर्वं (→शिव); का1 दे1.8-10 मुवें. मुए. मुब. एकः स रुद्रः, न1 (एव) एकोथ रुद्रः, ते1 एकोऽथ तत्वः, म1 एकोभिरुद्रः (→एकोऽथ रुद्रः). –c) द1 ग्र2 शक्ति, उ1 शान्तं (→विश्वं); दे1.8-10 उ1 मुवें. मुए. मुब. °शक्तिनिष्ठं, दे3 °शक्तिनिष्ठो, दे4 न1 °शक्तिमीष्ठां (→°शक्तिनिष्ठां). –d) दे1.3.4.8-10 द1 ग्र2 उ1 मुवें. मुए. मुब. च (→स); दे4 देवदेवं (→देवदेवः); म1 मायामथारुह्य महानुभावः.

१६१. न1.b ⊙; ब2.d ⊙. –a) दे10 **** (→एको देवः); ब1 **, दे6 रूढो (→गूढो). –b) ब3 माया-रुद्रः, दे6 मायारूढो, म1 मायां रुद्रः (→मायी रुद्रः); ग्र2 सागलो(?) (→सकलो). –c) दे1.8-10 स (→न); दे3 सा तदन्यद्, उ1 भिन्नमेतद् (→तद्विभिन्नं); ब2 स एव देवी ******. –d) दे4 द1 म1 ह्येतज्ज्ञात्वा, उ1 ज्ञात्वा तत्वं (→एतज्ज्ञात्वा); म1 भजन्ति (→व्रजन्ति); का1 एतत् ज्ञात्वा देही चामृतत्वं व्रजन्ति, ते1 यद्ज्ञात्वा ह्यमृतत्वं व्रजन्ति, ग्र2 एतज्ज्ञात्वा तत्वं ह्यमृतत्वं व्रजन्ति.

वें२.३९.७८

अन्तर्हितोऽभूद् भगवानथेशो-
देव्या भर्गः सह देवादिदेवः ।
आराधयन्ति स्म तमेव देवं
वनौकसस्ते पुनरेव रुद्रम् ॥१६२

एतद् वः कथितं सर्वं देवदेवविचेष्टितम् ।
देवदारुवने पूर्वं पुराणे यन्मया श्रुतम् ॥१६३
यः पठेच्छृणुयान्नित्यं मुच्यते सर्वपातकैः ।
श्रावयेद् वा द्विजान् शान्तान् स याति परमां गतिम् ।१६४

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायामुपरिविभागे सप्तत्रिंशोऽध्यायः ॥३७॥

# ३८

सूत उवाच ।❀
**एषा पुण्यतमा देवी देवगन्धर्वसेविता ।**
**नर्मदा लोकविख्याता तीर्थानामुत्तमा नदी ॥१**
**तस्याः शृणुध्वं माहात्म्यं मार्कण्डेयेन भाषितम् ।**
**युधिष्ठिराय तु शुभं सर्वपापप्रणाशनम् ॥२**
युधिष्ठिर उवाच ।❀
**श्रुतास्तु विविधा धर्मास्त्वत्प्रसादान्महामुने ।**
**माहात्म्यं च प्रयागस्य तीर्थानि विविधानि च ॥३**

**१६२.** ब2. ⊙. –a) दे6 अन्तर्हितोऽथ (→अन्तर्हितोऽभूद्); का1 दे1.8-10 मुवें. मुए. मुब. भगवान्महेशो, ग्र2 भगवानधीशो (→भगवानथेशो). –b) म1 देवो (→देव्या); का1 दे1.8-10 सर्गः, ब3 दे2 मुवें. मुए. मुब. तया, दे3.4 उ1 रुद्रः, ते1 भवः, द1 ग्र2 भर्त्ता (→भर्गः); म1 सर्व- (→सह); का1 दे1.8-10 उ1 मुवें. मुए. मुब. देवाधिदेवः (→देवादिदेवः). –c) दे1.8-10 मुवें. मुए. मुब. तमादि- (→तमेव). –d) ग्र2 वनौकसंसे, म1 अनागनस्ते (→वनौकसस्ते); दे3 पुनरेव देवं, दे4.10 द1 पुनरेकरुद्रम्, दे10 उ1 पुनरेव रुद्रः (→पुनरेव रुद्रम्).

**१६३.** ब2. ⊙. –b) का1 दे1.3.4.8.9 मुवें. मुए. मुब. देवदेवस्य चेष्टितम्, दे6 द1 देवदेवं विचेष्टितम्. –c) दे1.8.9 °वनं (→°वने). –d) ब1 पुराणं (→पुराणे); दे4 तन्मया (→यन्मया); दे6 श्रुतिः, ग्र2 श्रियं (→श्रुतम्).

**१६४.** ब2. ⊙. –c) का1 ब1 दे2.6 न1 श्रावयित्वा (→श्रावयेद् वा); ब3 न1 द्विजान् जान्तान्, दे4 द्विजान् श्रांतान, दे6 द्विजान्साक्षात्, उ1 द्विजगणान् (→द्विजान् शांतान्). –d) का1 ब1.3 दे2-4.6.10 न1 प्रयाति (→स याति).

**पुष्पिका—**

**पुराणनाम**—का1 दे6.10 न1 इति श्रीकू(का1 कौ)र्मपुराणे, ब1 इति कौर्मे, ब3 दे2.3 इति कूर्मपुराणे, दे1 इति श्रीकूर्मपुराणे उपरिविभागे, दे4.8.9 द1 ग्र2 म1 उ1 मुए. इति श्रीकूर्मपुराणे उपरि(मुए. °वि)भागे, ते1 इत्यादि महापुराणे श्रीकौर्मे, मुवें. इति श्रीकूर्मपुराणे उत्तरार्द्धे, मुब. इति श्रीकौर्मे महापुराणे उपरिभागे.

**अध्यायनाम**—दे3.4 न1 द1 म1 उ1. ⊙; का1 दे1.6 ते1 मुवें. मुए. देवदारुवनप्रवेशो नाम, ब1 तीर्थमाहात्म्ये देवदारु** प्रवेशे, ब3 दे2 मुब. तीर्थमाहात्म्ये देवदारुवनप्रवेशो नाम, दे8.9 देवदारुवनप्रवेशे, दे10 देवदारु** प्रवेशे, ग्र2 दारुवन ऋषीणां ईश्वरप्रादुर्भावो नाम. **अध्यायसंख्या**—दे6. ⊙; का1 ब1 दे3 षट्त्रिंशोऽध्यायः, ब3 अष्टविंशोऽध्यायः, दे1 एकोनचत्वारिंशोऽध्यायः ॥३४॥, दे3.8-10 द1 ग्र2 म1 उ1 एकोनचत्वारिंशोऽध्यायः, दे4 चत्वारिंशोऽध्यायः, न1 अष्टाशीतितमोऽध्यायः, ते1 सप्तत्रिंशोऽध्यायः, मुवें. ऊनचत्वारिंशोऽध्यायः ॥३९॥ मुए. अष्टात्रिंशोऽध्यायः, मुब. सप्तत्रिंशोऽध्यायः ॥३७॥

**३८**

[ब2 अध्यायारम्भात् ८ b यावत् श्लोकाः न सन्ति]

❀ ब2. ⊙; दे3.8 सूत उ.; न1 ग्र2 उ1 सूतः; ते1 श्रीशिवः, + सूतः; म1 श्रीसूतः.

**१.** ब2. ⊙. –a) दे6 देव- (→देवी). –d) द1 ग्र2 उ1 परमा (→उत्तमा).

**२.** ब2. ⊙; न1. २b–४c ⊙ (द्र. सं.). –d) दे2 °प्रनाशनम् (→°प्रणाशनम्).

❀ ब2 न1. ⊙; दे3 युधिष्ठिर उ.; ते1 द1 ग्र2 म1 उ1 युधिष्ठिरः.

**३.** ब2 न1. ⊙. –a) का1 दे1.8.9 मुवें. मुए. मुब. श्रुतास्ते, दे4 श्रुत्वा च, , दे10 श्रुत्वास्ते, ग्र2 श्रुत्वा तु (→श्रुतास्तु); का1

नर्मदा सर्वतीर्थानां मुख्या हि भवतेरिता ।
तस्यास्त्विदानीं माहात्म्यं वक्तुमर्हसि सत्तम ॥४

मार्कण्डेय उवाच ।❀

नर्मदा सरितां श्रेष्ठा रुद्रदेहाद् विनिःसृता ।
तारयेत् सर्वभूतानि स्थावराणि चराणि च ॥५
नर्मदायास्तु माहात्म्यं पुराणे यन्मया श्रुतम् ।
इदानीं तत्प्रवक्ष्यामि शृणुष्वैकमनाः शुभम् ॥६
पुण्या कनखले गङ्गा कुरुक्षेत्रे सरस्वती ।
ग्रामे वा यदि वाऽरण्ये पुण्या सर्वत्र नर्मदा ॥७
त्रिभिः सारस्वतं तोयं सप्ताहेन तु यामुनम् ।
सद्यः पुनाति गाङ्गेयं दर्शनादेव नार्मदम् ॥८
कलिङ्गदेशपश्चार्द्धे पर्वतेऽमरकण्टके ।
पुण्या च त्रिषु लोकेषु रमणीया मनोरमा ॥९
सदेवासुरगन्धर्वा ऋषयश्च तपोधनाः ।
तपस्तप्त्वा तु राजेन्द्र सिद्धिं तु परमां गताः ॥१०
तत्र स्नात्वा नरो राजन् नियमस्थो जितेन्द्रियः ।
उपोष्य रजनीमेकां कुलानां तारयेच्छतम् ॥११
योजनानां शतं साग्रं श्रूयते सरिदुत्तमा ।
विस्तारेण तु राजेन्द्र योजनद्वयमायता ॥१२
षष्टितीर्थसहस्राणि षष्टिकोटयस्तथैव च ।
पर्वतस्य समन्तात् तु तिष्ठन्त्यमरकण्टके ॥१३
ब्रह्मचारी शुचिर्भूत्वा जितक्रोधो जितेन्द्रियः ।
सर्वहिंसानिवृत्तस्तु सर्वभूतहिते रतः ॥१४
एवं सर्वसमाचारो यस्तु प्राणान् समुत्सृजेत् । वें.२.४०.१५

विविधान् धर्मान् (→विविधा धर्मास्). –b) दे$_{4}$ मुवें. मुए, मुब. तत् (→त्वत्).

४. ब$_{2}$. ⊙; न$_{1}$. abc ⊙. –b) द$_{1}$ भवते रता (→भवतेरिता); उ$_{1}$ मुख्या भगवतेरिता. –d) दे$_{1}$ सत्तमः (→सत्तम).

❀ का$_{1}$ ब$_{2}$ द$_{1}$. ⊙; न$_{1}$ श्रीमार्कण्डेयः; ते$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ मार्कण्डेयः.

५. ब$_{2}$. ⊙. –a) ब$_{1}$ दे$_{1}$ नर्मदां (→नर्मदा); ते$_{1}$ पुण्या (→श्रेष्ठा). –b) ते$_{1}$ रुद्रदेहात् विनिस्स्रुता, द$_{1}$ रुद्रदेवानिःसृता, ग्र$_{2}$ रुद्रदेवादिनिःसृता. –d) ब$_{3}$ ते$_{1}$ च नर्मदा, दे$_{6}$ च सर्वदा (→चराणि च).

६. ब$_{2}$. ⊙. –a) दे$_{3}$ माहात्म्ये (→माहात्म्यं). –b) दे$_{1.8\text{-}10}$ पुराणं (→पुराणे). –c) न$_{1}$ तदानीं (→इदानीं); दे$_{6}$ संप्रवक्ष्यामि, द$_{1}$ तच्च वक्ष्यामि, ग्र$_{2}$ तां च वक्ष्यामि, उ$_{1}$ तं च वक्ष्यामि (→तत्प्रवक्ष्यामि). –d) दे$_{1}$ शुभां, दे$_{4}$ नृप, न$_{1}$ श्रुतं (→शुभम्).

७. ब$_{2}$. ⊙. –b) का$_{1}$ ब$_{3}$ ते$_{1}$ रुद्रक्षेत्रे (→कुरुक्षेत्रे). –c) ब$_{1}$ ग्राम्ये (→ग्रामे). –d) दे$_{10}$ पुण्याः (→पुण्या).

८. ब$_{2}$. ab ⊙. –b) दे$_{1.8\text{-}10}$ मुवें. मुए. मुब. सप्ताहाद् यामुनं जलम्, ग्र$_{2}$ सप्ताह्ने ** यामुनं, उ$_{1}$ सप्ताहान्तेन तु यामुनं. –c) ब$_{2}$ *** तु गाङ्गेयं. –d) ब$_{1.3}$ दे$_{10}$ उ$_{1}$ नर्मदम्, दे$_{4}$ न$_{1}$ द$_{1}$ ग्र$_{2}$ नर्मदा (न$_{1}$ °दां) (→नार्मदम्); दे$_{6}$ दर्शनं देवि नर्मदं, म$_{1}$ दर्शनात् स्पर्शनात् सदा.

९. दे$_{4}$. cd ⊙. –a) ब$_{2}$ ते$_{1}$ कलिंगदेशे पश्चार्द्धे, द$_{1}$ ग्र$_{2}$ कलिंगदर्शनस्यार्धे, म$_{1}$ कलिन्ददर्शनस्यार्धं, उ$_{1}$ कलिंगे दर्श*स्यार्धे. –b) ते$_{1}$ पर्वते क्षुरकण्टके. –c) दे$_{1.8\text{-}10}$ मुवें. मुए. पुण्या त्रिषु त्रिलोकेषु.

१०. दे$_{4}$. ⊙. –c) न$_{1}$ स (→तु). –d) का$_{1}$ द$_{1}$ उ$_{1}$ सिद्धिं च, दे$_{3}$ संसिद्धिं (→सिद्धिं तु); ब$_{1}$ योजनद्वयमागतं.

११. ग्र$_{2}$. ११c–१४b ⊙ (द्र. सं.). –a) द$_{1}$ ग्र$_{2}$ तत्त-त्कृत्वा (→तत्र स्नात्वा); ग्र$_{2}$ याति (→राजन्). –b) दे$_{4}$ नियमस्थे, ग्र$_{2}$ नियमस्था (→नियमस्थो); ग्र$_{2}$ जितेन्द्रियाः (→जितेन्द्रियः).

१२. ग्र$_{2}$. ⊙ (द्र. ११ पा. वि.). –a) उ$_{1}$ सास्रं (→साग्रं). –b) ब$_{1}$ ज्ञायते, म$_{1}$ नृपते (→श्रूयते). –c) ब$_{1}$ दे$_{1.2.6.9.10}$ न$_{1}$ द$_{1}$ विस्तरेण (→विस्तारेण). –d) का$_{1}$ -मायया, ब$_{1}$ दे$_{3}$ न$_{1}$ म$_{1}$ आयतं, दे$_{4}$ ते$_{1}$ आगतम्, दे$_{10}$ आगता (→आयता); द$_{1}$ योजनं हयमागतं.

१३. ग्र$_{2}$. ⊙ (द्र. ११ पा. वि.). –a) म$_{1}$ तस्य कोटयस् (→षष्टितीर्थ-). –b) म$_{1}$ षड्भिः (→षष्टि-). –c) दे$_{10}$ पर्वतस्तु (→पर्वतस्य); दे$_{1}$ समीपे तु (→समन्तात्तु). –d) ब$_{1}$ दे$_{6}$ °कण्टकं (→°कण्टके).

१४. ग्र$_{2}$. ab ⊙ (द्र. ११ पा. वि.). –c) ते$_{1}$ सर्वभूत° (→सर्वहिंसा°); द$_{1}$ °निवृत्तिस्तु (→°निवृत्तस्तु). –d) दे$_{6}$ रताः (→रतः).

१५. –a) दे$_{1.8\text{-}10}$ मुवें. मुए. मुब. शुद्धसमाचारो, ग्र$_{2}$ उ$_{1}$ सर्वसमो राजन् (→सर्वसमाचारो). –b) दे$_{1.3.4.8\text{-}10}$ द$_{1}$

वें.२.४०.१५ तस्य पुण्यफलं राजन् शृणुष्वावहितो नृप ।।१५
शतवर्षसहस्राणि स्वर्गे मोदति पाण्डव ।
अप्सरोगणसंकीर्णो दिव्यस्त्रीपरिवारितः ।।१६
दिव्यगन्धानुलिप्तश्च दिव्यपुष्पोपशोभितः ।
क्रीडते देवलोके तु दैवतैः सह मोदते ।।१७
ततः स्वर्गात् परिभ्रष्टो राजा भवति धार्मिकः ।
गृहं तु लभतेऽसौ वै नानारत्नसमन्वितम् ।।१८
स्तम्भैर्मणिमयैर्दिव्यैर्वज्रवैदूर्यभूषितम् ।
आलेख्यवाहनैः शुभ्रैर्दासीदाससमन्वितम् ।।१९
राजराजेश्वरः श्रीमान् सर्वस्त्रीजनवल्लभः ।
जीवेद् वर्षशतं साग्रं तत्र भोगसमन्वितः ।।२०
अग्निप्रवेशेऽथ जले अथवाऽनशने कृते ।
अनिर्वत्तिका गतिस्तस्य पवनस्याम्बरे यथा ।।२१
पश्चिमे पर्वततटे सर्वपापविनाशनः ।
ह्रदो जलेश्वरो नाम त्रिषु लोकेषु विश्रुतः ।।२२
तत्र पिण्डप्रदानेन संध्योपासनकर्मणा ।
दशवर्षाणि पितरस्तर्पिताः स्युर्न संशयः ।।२३
दक्षिणे नर्मदाकूले कपिलाख्या महानदी ।
सरलार्जुनसंछन्ना नातिदूरे व्यवस्थिता ।।२४
सा तु पुण्या महाभागा त्रिषु लोकेषु विश्रुता ।

मुए. मुब. परित्यजेत् (→समुत्सृजेत्). –c) ते1 सर्वं (→राजन्). –d) दे1.3.8-10 मुवें. मुए. मुब. [श्र] नव (→नृप).

१६. दे4. ⊙. –a) का1 ब2.3 दे1.6.8.9 ते1 मुवें. मुए. मुब. शतं (→शत-); न1 °सहस्राणां (→°सहस्राणि). –b) दे6 स्वर्गं (→स्वर्गे); दे10 मोदंति (→मोदति); उ1 पाण्डवः (→पाण्डव).

१७. ब1 दे4.ab ⊙. –b) ब3 °शोभितं, उ1 °शोभिता (→°शोभितः). –c) ग्र2 वितते (→क्रीडते); दे1.2.8-10 न1 उ1 मुवें. मुए. मुब. द्विव्यलोके तु (दे10 °षु), द1 देवदेवे तु, म1 देवलोकेषु (→देवलोके तु). –d) दे1.4.8-10 मुवें. मुए. मुब. विबुधैः (→दैवतैः).

१८. –b) न1 भवतु (→भवति). –c) का1 गृहं च, द1 ग्रहं तु (→गृहं तु); का1 ब2 न1 लभते सौधैर्, ब1 लभते शौचं, दे3 लभते सोऽयं, दे4 लभते यो वै, दे6 लभते शौरेः, द1 ग्र2 म1 उ1 लभते सर्वं (→लभतेऽसौ वै). –d) ब1-3 दे2 ते1 °विभूषितम् (→°समन्वितम्); दे6 नानारुद्रविभूषितं.

१९. दे10. ⊙; ब1.१८c-२०d ⊙. –a) ब1 शुभैर् (→स्तम्भैर्); म1 मणिस्तम्भमयैर्दिव्यैर्. –b) का1 दे1-3.6.8.9 ते1 म1 °वैडूर्य° (→°वैदूर्य°); दे4 °भूषणैः, ग्र2 °शोभितं (→°भूषितम्). –c) दे1.4 आलेख्यैर्, दे8.9 आलेख्या, ग्र2 आलिख्य- (→आलेख्य-); न1 -भुवनैः, द1 ग्र2 -गहने (द1 °नैः), उ1 -भवने (→-वाहनैः). –d) दे1.8.9 न1 मुवें. मुए. मुब. दासीशत° (→दासीदास°).

२०. ब1. ⊙. –b) ते1 सर्वश्री° (→सर्वस्त्री°). –c) ग्र2 स्वर्गं (→साग्रं); म1 शतं साग्रं वसक्येव (?). –d) का1 सर्व- (→तत्र); दे4 उ1 °समन्वितं (→°समन्वितः); म1 राजराजविभूषणः.

२१. –a) दे1.3.4.8-10 द1 ग्र2 अथ वह्निप्रवेशे तु (द1 ग्र2 °न), म1 वह्निप्रवेशेनुकृते, उ1 अथ प्रवेशेन जले. –b) दे1.8-10 कुले वा नाशके, दे3 जले वाऽनशने, दे4 जले वा नायके, द1 जले नानशके, ग्र2 म1 जले वानाशके, उ1 ** वानशके, मुवें. मुए. वाथ वानशने (→अथवानशने). –c) दे3 अवितर्क्या, दे4 अनिर्वर्तं, ते1 अनिवारिता, ग्र2 अवृत्तिराका (→अनिर्वत्तिका). –d) दे4 पवनस्याचरे, द1 पतनस्याम्बरे, ग्र2 पतनस्यार्च्चयेत्, म1 पवनस्यापरा, उ1 पवनचाचरेत् (→पवनस्याम्बरे); द1 ग्र2 उ1 तथा (→यथा).

२२. –a) न1 °स्तंभे (→°तटे). –b) का1 ब2.3 दे2.6 °प्रणाशनः, उ1 °विनाशनं (→°विनाशनः). –c) का1 ह्रदेर्, ब3 दे6 नदो, ते1 रुद्रो, द1 ह्रदे (→ह्रदो); का1 ब3 दे2.6 जालेश्वरो (→जलेश्वरो). –d) ब2 ***, दे4 विश्रुताः (→विश्रुतः).

२३. ब2. २३a–२४d ⊙. –b) न1 ***** कर्मणा. –c) का1 ब1.3 दे1.2.6.8.9 न1 ते1 मुवें. मुए. मुब. दशवर्षसहस्राणि. –d) दे10 तर्पितास्यर्, द1 ग्र2 म1 तर्पितास्तु (→तर्पिताः स्युर्); न1 पितरस्युश्च तर्पिताः.

२४. ब2. ⊙. –b) द1 कपिलाख्ये (→कपिलाख्या). –c) का1 सवलार्जुन, दे1.8-10 मुए. सरसार्जुन° (→सरलार्जुन°); दे6 शालार्ज्जन स संछन्ना, ग्र2 सरलार्जलकल्लोला. –d) ब1 व्यवस्थिताः (→व्यवस्थिता).

२५. ब2. ⊙; ब1. ab ⊙. –a) दे4 सति (→सा तु). –b) दे4.10 विश्रुताः (→विश्रुता). –c) द1 तस्य (→तत्र).

तत्र कोटिशतं साग्रं तीर्थानां तु युधिष्ठिर ॥२५
तस्मिंस्तीर्थे तु ये वृक्षाः पतिताः कालपर्ययात् ।
नर्मदातोयसंस्पृष्टास्ते यान्ति परमां गतिम् ॥२६
द्वितीया तु महाभागा विशल्यकरणी शुभा ।
तत्र तीर्थे नरः स्नात्वा विशल्यो भवति क्षणात् ॥२७
कपिला च विशल्या च श्रूयते राजसत्तम ।
ईश्वरेण पुरा प्रोक्ता लोकानां हितकाम्यया ॥२८
अनाशकं तु यः कुर्यात् तस्मिंस्तीर्थे नराधिप ।
सर्वपापविशुद्धात्मा रुद्रलोकं स गच्छति ॥२९
तत्र स्नात्वा नरो राजन्नश्वमेधफलं लभेत् ।
ये वसन्त्युत्तरे कूले रुद्रलोके वसन्ति ते ॥३०
सरस्वत्यां च गङ्गायां नर्मदायां युधिष्ठिर ।
समं स्नानं च दानं च यथा मे शंकरोऽब्रवीत् ॥३१
परित्यजति यः प्राणान् पर्वतेऽमरकण्टके ।
वर्षकोटिशतं साग्रं रुद्रलोके महीयते ॥३२
नर्मदायां जलं पुण्यं फेनोर्मिसमलंकृतम् ।
पवित्रं शिरसा वन्द्य सर्वपापैः प्रमुच्यते ॥३३
नर्मदा सर्वतः पुण्या ब्रह्महत्यापहारिणी ।
अहोरात्रोपवासेन मुच्यते ब्रह्महत्यया ॥३४
जालेश्वरं तीर्थवरं सर्वपापविनाशनम् ।
तत्र गत्वा नियमवान् सर्वकामांल्लभेन्नरः ॥३५
चन्द्रसूर्योपरागे तु गत्वा ह्यमरकण्टकम् ।
अश्वमेधाद् दशगुणं पुण्यमाप्नोति मानवः ॥३६
एष पुण्यो गिरिवरो देवगन्धर्वसेवितः ।
नानाद्रुमलताकीर्णो नानापुष्पोपशोभितः ॥३७
तत्र संनिहितो राजन् देव्या सह महेश्वरः ।     वें.२.४०.३८

–d) का1 दे2 विशेषतः, ब3 युधिष्ठिरं, दे10 द1 युधिष्ठिरः (द1 °रे) (→युधिष्ठिर).

२६. ब2. ⊙. –a) ब1 दे2.4 ते1 उ1 तीर्थेषु, दे10 तीर्थे च (→तीर्थे तु). –b) द1 उ1 कालपर्वतात् (द1 °तान्). (→कालपर्ययात्). –c) ब3 ग्र2 °संस्पृष्ट्वा (→°संस्पृष्टाः). –d) का1 ब1.3 दे2-4.6 न1 ते1 द1 उ1 यान्ति ते (→ते यान्ति).

२७. ब2. ⊙. –a) दे1.8.10 न1 मुए. मुब. महाभाग (→महाभागा). –b) दे1.8-10 न1 ग्र2 °करणा (→°करणी).

२८. ब1.2. ⊙. –a) दे4 कपिल्या (→कपिला). –b) दे2 द1 ग्र2 मुवें. मुए. मुब. श्रूयेते (→श्रूयते); दे1.3.4.8-10 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. सरिदुत्तमे (दे3 द1 म1 °मां) (→राजसत्तम). –c) दे1.4.8-10 उ1 मुवें. मुए. मुब. प्रोक्ते (→प्रोक्ता). –d) दे3 *** म्यया (→हितकाम्यया).

२९. ब1.2 दे4. ⊙. –a) दे1.8 कुर्यास् (→कुर्यात्); ते1 अनाशनं तपः कुर्यात्. –b) का1 दे2.6 ते1 नरोत्तमः, ब3 द्विजोत्तमाः, दे10 नराधिपः (→नराधिप). –d) दे1.3.8.9 ग्र2 मुवें. मुए. रुद्रलोके (→रुद्रलोकं).

३०. ब2 दे4. ⊙; ब1. ab ⊙. –a) उ1 नरमेध° (→अश्वमेध°). –c) ग्र2 यो (→ये); दे10 यत्र संत्युत्तरे कूले. –d) दे10 द1 ग्र2 रुद्रलोकं (→रुद्रलोके); दे6 चरंति ते, ग्र2 स गच्छति (→वसन्ति ते).

३१. ब2 दे1.3.4.8-10 द1 ग्र2 म1 उ1. ⊙. –b) न1 युधिष्ठिरः (→युधिष्ठिर). –c) दे6 यमं (→समं).

३२. ब2 दे1.3.4.8-10 द1 ग्र2 म1 उ1. ⊙. –a) न1 परित्यजंति (→परित्यजति). –c) का1 वर्षकोटिं स साहस्रं.

३३. ब1.2. ⊙; दे4. ab ⊙. –a) का1 दे3.6.8.10 द1 म1 नर्मदाया, दे2 नर्मदाय (→नर्मदायां). –b) का1 °शमलंकृतम्, दे1.8.9 न1 द1 मुवें. मुए. °सफलीकृतम्, दे10 °सकलं कृतं (→°समलंकृतम्). –c) का1 ब3 दे2 मुवें. मुब. धृत्वा, दे1.9 बंधं, दे6 धार्यं, दे8 न1 ते1 द1 म1 उ1 वंद्यं (→वंद्य).

३४. ब2. ⊙. –a) ब1 पूर्वतः (→सर्वतः). –b) ते1 ब्रह्महत्या विनाशिनी.

३५. ब1. ⊙. –a) दे3.10 ते1 जलेश्वरं (→जालेश्वरं); द1 ग्र2 ज्ञानतीर्थं परं चैकं (ग्र2 शैवं). –b) दे1.4.8-10 ग्र2 मुवें. मुए. मुब. °प्रणाशनम्, न1 °प्रनाशनम् (→°विनाशनम्). –c) दे10 स्नात्वा (→गत्वा); का1 तत्र स्नात्वा तु नियमान्. –d) का1 सकामान् सलभेन्नरः, दे6 सर्वान् कामान् नरेश्वरः.

३६. –a) ब2 दे3 मुवें. च (→तु). –b) दे10 इष्ट्वा चामर° (→गत्वा ह्यमर°). –c) म1 शतगुणं (→दशगुणं). –d) दे2 पुण्यं प्राप्नोति, ते1 फलं प्राप्नोति (→पुण्यमाप्नोति).

३७. दे4. ⊙. –b) दे1.8-10 द1 म1 नानागन्धर्व°, ग्र2 म1 नागगन्धर्व° (→देवगन्धर्व°).

३८. दे4. ⊙. –a) का1 ब1 दे1.2.3.8-10 न1 अत्र (→तत्र). –c) का1 ब2 दे1.2.8-10 म1 तथा चन्द्रो, ब1 तथा

वें.२.४०.३८ ब्रह्मा विष्णुस्तथा चेन्द्रो विद्याधरगणैः सह ॥३८
प्रदक्षिणं तु यः कुर्यात् पर्वतं ह्यमरकण्टकम् ।
पौण्डरीकस्य यज्ञस्य फलं प्राप्नोति मानवः ॥३९
कावेरी नाम विपुला नदी कल्मषनाशिनी ।
तत्र स्नात्वा महादेवमर्चयेद् वृषभध्वजम् ।
संगमे नर्मदायास्तु रुद्रलोके महीयते ॥४०

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायामुपरिविभागे अष्टात्रिंशोऽध्यायः ॥३८॥

# ३९

मार्कण्डेय उवाच ।❀
नर्मदा सरितां श्रेष्ठा सर्वपापविनाशिनी ।
मुनिभिः कथिता पूर्वमीश्वरेण स्वयंभुवा ॥१
मुनिभिः संस्तुता ह्येषा नर्मदा प्रवरा नदी ।
रुद्रगात्राद् विनिष्क्रान्ता लोकानां हितकाम्यया ॥२
सर्वपापहरा नित्यं सर्वदेवनमस्कृता ।
संस्तुता देवगन्धर्वैरप्सरोभिस्तथैव च ॥३
उत्तरे चैव तत्कूले तीर्थं त्रैलोक्यविश्रुतम् ।
नाम्ना भद्रेश्वरं पुण्यं सर्वपापहरं शुभम् ।
तत्र स्नात्वा नरो राजन् दैवतैः सह मोदते ॥४
ततो गच्छेत राजेन्द्र तीर्थमाम्रातकेश्वरम् ।
तत्र स्नात्वा नरो राजन् गोसहस्रफलं लभेत् ॥५

---

चक्रे, ब$_{3}$ तथा रुद्रा, दे$_{6}$ मुवें. मुए. मुब. तथा रुद्रो, ते$_{1}$ तथैवेन्द्रो, द$_{1}$ ग्र$_{2}$ उ$_{1}$ तथा चन्द्रो (→तथा चेन्द्रो).

३९. दे$_{4}$. ab ⊙. –a) ते$_{1}$ हि यत्, द$_{1}$ ग्र$_{2}$ उ$_{1}$ ततः (→तु यः). –b) का$_{1}$ दे$_{2.6}$ पर्वतामरकण्टकं, ब$_{2.3}$ न$_{1}$ मुवें. मुए. मुब. पर्वतेऽमरकण्टके, दे$_{1.8-10}$ नगं चामरकण्टकम्. –d) दे$_{3}$ द$_{1}$ म$_{1}$ उ$_{1}$ फलमाप्नोति (→फलं प्राप्नोति).

४०. ब$_{1}$. ⊙. –a) द$_{1}$ ग्र$_{2}$ म$_{1}$ कौवेरी (→कावेरी). –b) का$_{1}$ ब$_{2.3}$ दे$_{2}$ मुवें. मुए. मुब. विख्याता (→विपुला); दे$_{8.9}$ उ$_{1}$ °नाशनी (→°नाशिनी).

**पुष्पिका**—[द$_{1}$ पुस्तके अध्यायसमाप्तिर्नास्ति]

**पुराणनाम**—का$_{1}$ दे$_{6.10}$ न$_{1}$ मुए. इति श्रीकूर्मपुराणे, ब$_{1}$ इति कौर्मे, ब$_{2.3}$ दे$_{2.3}$ इति कू(दे$_{2}$ कौ)र्मपुराणे, दे$_{1}$ इति श्रीकूर्मपुराणे उपरिविभागे, दे$_{4.8.9}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ इति श्रीकूर्मपुराणे उपरिभागे, ते$_{1}$ इत्यादिमहापुराणे श्रीकौर्मे, मुवें. इति श्रीकूर्मपुराणे उत्तरार्द्धे, मुब. इति श्रीकौर्मे महापुराणे उपरिभागे. **अध्यायनाम**—दे$_{4}$ न$_{1}$ म$_{1}$ उ$_{1}$. ⊙; का$_{1}$ दे$_{3.6}$ मार्कण्डेययुधिष्ठिरसंवादे नर्मदामहात्म्ये, ब$_{1.3}$ दे$_{2}$ ते$_{1}$ मुवें. मुए. मार्कण्डेययुधिष्ठिरसंवादे नर्मदामाहात्म्यं नाम, ब$_{2}$ दे$_{1.8-10}$ नर्मदामाहात्म्ये, ग्र$_{2}$ तीर्थप्रशंसायां मार्कण्डेययुधिष्ठिरसंवादे, मुब. तीर्थमाहात्म्ये मार्कण्डेययुधिष्ठिरसंवादे नर्मदामाहात्म्यं नाम. **अध्यायसंख्या**—ब$_{2}$ दे$_{6}$. ⊙; का$_{1}$ ब$_{1.3}$ दे$_{2}$ सप्तत्रिंशोऽध्यायः, दे$_{1.8.9}$ ग्र$_{2}$ म$_{1}$ चत्वारिंशोऽध्यायः, दे$_{3}$ चत्वारिंशोध्यायः ॥४४॥, दे$_{4}$ एकचत्वारिंशोध्यायः ॥, दे$_{10}$ मुवें. चत्वारिंशोऽध्यायः॥४०॥, न$_{1}$ एकोननवतितमोऽध्यायः, ते$_{1}$ अष्टत्रिंशोऽध्यायः, उ$_{1}$ चत्वारिंशोऽध्यायः ॥ श्री ॥, मुए. ऊनचत्वारिंशोऽध्यायः, मुब. अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

३९

❀ द$_{1}$. ⊙; न$_{1}$ ग्र$_{2}$ उ$_{1}$ मार्कण्डेयः; ते$_{1}$ श्री शिवः, + सूतः, म$_{1}$ श्रीमार्कण्डेयः.

१. –b) दे$_{1.3.6.8-10}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ °प्रणाशनी (→°विनाशिनी). –c) ब$_{1.2}$ दे$_{1.2.8-10}$ ग्र$_{2}$ मुनिभ्यः, दे$_{6}$ अगस्त्यः (→मुनिभिः); ते$_{1}$ ऋषिभ्यः कथितं सर्वं. –d) मुवें. स्वयंभुना (→स्वयंभुवा).

२. दे$_{4}$. ⊙; दे$_{3}$. ab ⊙. –a) दे$_{1.8-10}$ येषां (→ह्येषा); ते$_{1}$ मुनिभिश्च स्तुता ह्येषा. –c) °गात्र-, द$_{1}$ ग्र$_{2}$ उ$_{1}$ °लोकाद् (→°गात्राद्); म$_{1}$ पर्वतात्स्वाद् विनिष्क्रान्ता.

३. दे$_{10}$. cd ⊙; न$_{1}$. c ⊙. –b) दे$_{10}$ सर्वदेवैस्तु संस्तुता.

४. –a) द$_{1}$ ग्र$_{2}$ उ$_{1}$ कूले वै, म$_{1}$ कूले हि, मुवें. मुए. कूले च (→तत्कूले). –b) ब$_{2.3}$ दे$_{6}$ ग्र$_{2}$ मुवें. मुए. मुब. तीर्थं (→तीर्थं); ब$_{2.3}$ दे$_{6}$ मुवें. मुए. मुब. विश्रुते (→विश्रुतं). –c) ते$_{1}$ यत्र (→नाम्ना); दे$_{1.8-10}$ महेश्वरं, दे$_{4}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ रुद्रेश्वरं (→भद्रेश्वरं). –d) न$_{1}$ पुरं (→शुभं). –f) दे$_{1.4.8-10}$ रुद्रलोके महीयते, दे$_{3}$ देवैः सह स मोदते, दे$_{6}$ गोसहस्रफलं लभेत्.

५. दे$_{1.3.4.8-10}$. cd ⊙. –b) दे$_{1.3.8-10}$. मुवें. विमलेश्वरमुत्तमं. –c) ग्र$_{2}$ ततो (→नरो). –d) का$_{1}$ भवेत् (→लभेत्).

ततोऽङ्गारेश्वरं गच्छेन्नियतो नियताशनः ।
सर्वपापविशुद्धात्मा रुद्रलोके महीयते ॥६
ततो गच्छेत राजेन्द्र केदारं नाम पुण्यदम् ।
तत्र स्नात्वोदकं कृत्वा सर्वान् कामानवाप्नुयात् ॥७
पिप्पलेशं ततो गच्छेत् सर्वपापविनाशनम् ।
तत्र स्नात्वा महाराज रुद्रलोके महीयते ॥८
ततो गच्छेत राजेन्द्र विमलेश्वरमुत्तमम् ।
तत्र प्राणान् परित्यज्य रुद्रलोकमवाप्नुयात् ॥९
ततः पुष्करिणीं गच्छेत् स्नानं तत्र समाचरेत् ।
स्नातमात्रो नरस्तत्र इन्द्रस्यार्द्धासनं लभेत् ॥१०
ततो गच्छेत राजेन्द्र शूलभेदमिति श्रुतम् ।
तत्र स्नात्वार्चयेद् देवं गोसहस्रफलं लभेत् ॥११
ततो गच्छेत राजेन्द्र बलितीर्थमनुत्तमम् ।
तत्र स्नात्वा नरो राजन् सिंहासनपतिर्भवेत् ॥१२
शक्रतीर्थं ततो गच्छेत् कूले चैव तु दक्षिणे ।
उपोष्य रजनीमेकां स्नानं कृत्वा यथाविधि ॥१३
आराधयेन्महायोगं देवं नारायणं हरिम् ।
गोसहस्रफलं प्राप्य विष्णुलोकं स गच्छति ॥१४
ऋषितीर्थं ततो गत्वा सर्वपापहरं नृणाम् ।
स्नातमात्रो नरस्तत्र शिवलोके महीयते ॥१५
नारदस्य तु तत्रैव तीर्थं परमशोभनम् ।
स्नातमात्रो नरस्तत्र गोसहस्रफलं लभेत् ॥१६ वें२.४१.१६

६. ब1 दे1.3.4.8-10 उ1. ⊙. –a) ब2 ततोङ्गारेश्वरं तीर्थं, द1 ग्र2 म1 ततो गच्छेत राजेन्द्र, मुवें. मुए. ततोङ्गारकेश्वरं गच्छेत्. –b) मुवें. नियतायनः (→नियताशनः); ब2 गच्छेत नियताशनः, द1 ग्र2 म1 ॐकारेश्वरमुत्तमं. –c) दे6 °विशुद्धचर्थं (→°विशुद्धात्मा).

अतः परं न1 द1 म1 पुस्तके अधिकम्—
* ततो गच्छेत राजेन्द्र शूलभेदमिति श्रुतम् ।
ब्रह्मावर्त्तमिति श्रुतं ।
तत्र स्नात्वा नरो राजन् ब्रह्मलोके महीयते ।
(=११cd, ८cd)
[–1) द1. म1 ⊙.]

७. दे1.3.6.8-10. ⊙; ग्र2. cd ⊙. –b) म1 ब्रह्मावर्त्तमिति श्रुतं. –c) ब3 द1 उ1 मुवें. मुए. मुब. पीत्वा (→कृत्वा).

अतः परं उ1 अधिकम्—
*ततो गच्छेत राजेन्द्र ॐकारेश्वरमुत्तमम् ।
सर्वपापविशुद्धात्मा रुद्रलोके महीयते । (=६)
55. ततो गच्छेत राजेन्द्र ब्रह्मावर्त्तमनुत्तमं ।
तत्र स्नात्वा नरो राजन् ब्रह्मलोके महीयते । [4]

८. दे1.3.6.8-10 न1 ते1 ग्र2. ⊙. –a) मुवें. मुए. मुब. निष्फलेशं (→पिप्पलेशं). –b) उ1 °प्रणाशनं (→°विनाशनं). –c) दे4 म1 उ1 नरो राजन् (→महाराज).

९. ब1 न1 ते1. ⊙; दे1.3.8-10. ab ⊙. –b) दे6 बलितीर्थमनुत्तमं, मुवें. मुए. मुब. बाणतीर्थमनुत्तमं.

१०. ब1. ⊙. –b) दे3 तत्र स्नानं (→स्नानं तत्र). –c) दे1.3.6 ग्र2 म1 स्नान- (→स्नात-); दे3.4.10 ग्र2 °मात्रे (→°मात्रो). –d) ते1 इन्द्रस्यार्द्धासने वसेत्.

११. ब1. ⊙. –b) ब3 दे6 मूल-, दे10 शूले (→शूल-); दे3 स्मृतं (→श्रुतं); का1 मूलभेदेति विश्रुतं, दे4 मुवें. मुए. शू (मुए. °मू) लभेद इति श्रुतिः (दे4 °तं), द1 उ1 शूलदेवमिति श्रुतं, ग्र2 शूलमेघमिति श्रुतं. –c) का1 ब3 दे2.6 मुवें. मुए. मुब. तत्र स्नात्वा च पीत्वा च.

१२. मुवें. मुए. पुस्तकयोः cd चरणयोः पाठः १० श्लोकानन्तरं वर्तते; ब1.3. ⊙. –b) दे3 वट- (→बलि-). –c) दे2 स्नानकरो (→स्नात्वा नरो). –d) ग्र2 उ1 अश्वमेधफलं लभेत्.

अतः परं द1 ग्र2 उ1 अधिकम्—
56.*ततो गच्छेत राजेन्द्र सिंहतीर्थमनुत्तमम् ।
लिंगतीर्थं ततो गच्छेत्सिंहासनपतिर्भवेत् ।
[–२) द1 ग्र2 ⊙.]

१३. मुवें. मुए. पुस्तकयोः ab चरणयोः पाठौ १० श्लोकानन्तरं वर्तेते; ब1.3. ab. ⊙. –a) दे10 शुक्र°, द1 ग्र2 उ1 चक्र°, म1 सर्व° (→शक्र°).

१४. ब1. ⊙. –a) का1 ते1 द1 आराधयन् (→आराधयेन्). –b) का1 ब2.3 दे2.6 मुवें. मुए. मुब. देवदेवं नरोऽमलः. –d) ग्र2 उ1 विष्णुलोके महीयते.

१५. ब1 दे4. ⊙; दे3.१५-१६a ⊙ (द्र. सं.). –a) दे1.3.8-10 न1 द1 ग्र2 म1 गच्छेत् (→गत्वा). –c) दे1.6.9 म1 स्नान° (→स्नात°).

१६. ब1. ⊙; दे3. ⊙ (द्र. १५ पा. वि.). –b) का1 °शोभितं (→°शोभनं). –c) दे1.6 न1 म1 स्नान- (→स्नात-); दे4 म1 °मात्रे (→°मात्रो).

वें.२.४१.१७ यत्र तप्तं तपः पूर्वं नारदेन सुरर्षिणा ।
प्रीतस्तस्य ददौ योगं देवदेवो महेश्वरः ॥१७
ब्रह्मणा निर्मितं लिङ्गं ब्रह्मेश्वरमिति श्रुतम् ।
यत्र स्नात्वा नरो राजन् ब्रह्मलोके महीयते ॥१८
ऋणतीर्थं ततो गच्छेत् स ऋणान्मुच्यते ध्रुवम् ।
महेश्वरं ततो गच्छेत् पर्याप्तं जन्मनः फलम् ॥१९
भीमेश्वरं ततो गच्छेत् सर्वव्याधिविनाशनम् ।
स्नातमात्रो नरस्तत्र सर्वदुःखैः प्रमुच्यते ॥२०
ततो गच्छेत राजेन्द्र पिङ्गलेश्वरमुत्तमम् ।
अहोरात्रोपवासेन त्रिरात्रफलमाप्नुयात् ॥२१
तस्मिंस्तीर्थे तु राजेन्द्र कपिलां यः प्रयच्छति ।
यावन्ति तस्या रोमाणि तत्प्रसूतिकुलेषु च ।
तावद् वर्षसहस्राणि रुद्रलोके महीयते ॥२२
यस्तु प्राणपरित्यागं कुर्यात् तत्र नराधिप ।
अक्षयं मोदते कालं यावच्चन्द्रदिवाकरौ ॥२३
नर्मदातटमाश्रित्य तिष्ठन्ते ये तु मानवाः ।
ते मृताः स्वर्गमायान्ति सन्तः सुकृतिनो यथा ॥२४
ततो दीप्तेश्वरं गच्छेद् व्यासतीर्थं तपोवनम् ।
निवर्त्तिता पुरा तत्र व्यासभीता महानदी ।
हुंकारिता तु व्यासेन दक्षिणेन ततो गता ॥२५
प्रदक्षिणं तु यः कुर्यात् तस्मिंस्तीर्थे युधिष्ठिर ।
प्रीतस्तस्य भवेद् व्यासो वाञ्छितं लभते फलम् ॥२६
ततो गच्छेत राजेन्द्र इक्षुनद्यास्तु संगमम् ।
त्रैलोक्यविश्रुतं पुण्यं तत्र सन्निहितः शिवः ।
तत्र स्नात्वा नरो राजन् गाणपत्यमवाप्नुयात् ॥२७

---

१७. ब$_{1}$. ⊙; दे$_{3}$. ⊙ (द्र. १५ पा. वि.). –a) का$_{1}$ दे$_{1.8-10}$ तत्र (→यत्र). –c) दे$_{4}$ म$_{1}$ तत्र (→तस्य); म$_{1}$ ततो (→ददौ); ग्र$_{2}$ योगी (→योगं). –d) दे$_{6}$ देवोत्तर-महेश्वरः.

१८. ब$_{1}$. ⊙; दे$_{3}$. ⊙ (द्र. १५ पा. वि.). –b) दे$_{1.8}$ ब्राह्मे° (→ब्रह्मे°). –c) का$_{1}$ दे$_{1.2.4.6.8-10}$ ते$_{1}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ तत्र (→यत्र).

१९. ब$_{1}$. ⊙; दे$_{3}$. a ⊙ (द्र. १५ पा. वि.); दे$_{1}$. १९b–२०a ⊙; न$_{1}$. bc ⊙(ह सं.). –b) दे$_{6}$ द्रुतं (→ध्रुवं); ब$_{2.3}$ उ$_{1}$ मुवें. मुए. मुब. ऋणान्मुच्येन्नरो ध्रुवं, दे$_{4}$ द$_{1}$ ग्र$_{2}$ ऋणान्मुच्येत वै ध्रुवं, म$_{1}$ ऋणान्मुक्तो भवेद् ध्रुवं. –c) ब$_{2}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ मुवें. मुए. मुब. वटेश्वरं, ब$_{3}$ माहेश्वरं, दे$_{3}$ चरुतीर्थं (→महेश्वरं); दे$_{8-10}$ ततो गच्छेत राजेन्द्र. –d) दे$_{8-10}$ संप्राप्तं (→पर्याप्तं); दे$_{3}$ जायते, ग्र$_{2}$ जन्मतः (→जन्मनः).

२०. ब$_{1}$. ⊙; ते$_{1}$. ab ⊙; दे$_{1}$. a ⊙ (द्र. १९ पा. वि.). –a) दे$_{3}$ भीमतीर्थं (→भीमेश्वरं). –b) दे$_{3}$ °पाप° (→°व्याधि°). –c) दे$_{6.10}$ म$_{1}$ स्नान- (→स्नात-); दे$_{4}$ ग्र$_{2}$ °मात्रे (→°मात्रो). –cd) दे$_{1}$ स्नानमात्रेण गच्छेत स ऋणान्मुच्यते ध्रुवं.

२१. –b) ब$_{1}$ पिप्पले° (→पिङ्गले°). –d) उ$_{1}$ अति-रात्रफलं लभेत्.

२२. –a) दे$_{3.4}$ अस्मिन् (→तस्मिन्); ब$_{1}$ दे$_{10}$ तीर्थेसु (→तीर्थे तु). –c) ब$_{1.2}$ दे$_{6}$ ते$_{1}$ तस्य, दे$_{4}$ नख- (→तस्या). –d) दे$_{3}$ तत्प्रसूतिषु चैव हि, द$_{1}$ ग्र$_{2}$ उ$_{1}$ तत्प्रसूतिकगोषु (ग्र$_{2}$ °ष्ठि ) च.

२३. ब$_{1}$. ⊙. –b) दे$_{6}$ चात्र (→तत्र); ब$_{2}$ नरेश्वर (→नराधिप). –c) दे$_{6}$ काले (→कालं). –d) दे$_{4}$ °दिवाकरैः, ग्र$_{2}$ °दिवाकराः (→°दिवाकरौ).

२४. –a) ते$_{1}$ °तल- (→°तट-); द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ नदीतटं समासाद्य. –b) ब$_{2}$ उ$_{1}$ तिष्ठन्ति (→तिष्ठन्ते); न$_{1}$ सागराः, + मानवाः (→मानवाः); दे$_{1.8-10}$ मुवें. मुए. मुब. ये च तिष्ठन्ति मानवाः, ते$_{1}$ भिद्यन्ते ये हि मानवाः. –c) दे$_{4}$ पूताः (→मृताः). –d) म$_{1}$ यतयः सिद्धमानसाः.

२५. –b) का$_{1}$ °तीर्थे (→°तीर्थं); का$_{1}$ ब$_{1}$ ते$_{1}$ ततो वनं, दे$_{1.8.9}$ ग्र$_{2}$ म$_{1}$ तपोधनं, दे$_{3}$ तपोधनाः (→तपोवनं). –c) दे$_{1.8.10}$ पुरी (→पुरा). –d) दे$_{3}$ न$_{1}$ °गीता, द$_{1}$ ग्र$_{2}$ उ$_{1}$ °तीर्थे (→°भीता). –f) दे$_{1.8-10}$ मुवें. मुए. तत्क्षणेन (→दक्षिणेन); न$_{1}$ व्रज (→गता); दे$_{3}$ दक्षिणोऽन्यतरो गता.

२६. दे$_{4}$. ⊙. –a) दे$_{1.8-10}$ प्रदक्षिणां (→प्रदक्षिणं). –b) ब$_{1.3}$ न$_{1}$ ग्र$_{2}$ युधिष्ठिरः (ग्र$_{2}$ °राः), ते$_{1}$ द्विजोत्तमः, म$_{1}$ विशेषतः (→युधिष्ठिर). –c) दे$_{1.3}$ द$_{1}$ मुवें. मुए. मुब. तत्र (→तस्य); न$_{1}$ तस्य प्रीतो, म$_{1}$ प्रसन्नोऽस्य (→प्रीतस्तस्य).

अतः परं न$_{1}$ पुस्तके अधिकम्—

57. * तस्य वेद्यां नरः स्नात्वा वाञ्छितं लभते फलम्' ।

२७. –a) दे$_{4}$ इतो (→ततो). –b) दे$_{1.3.8.9}$ द$_{1}$ इषु, ते$_{1}$ वंक्षा, ग्र$_{2}$ इन्द्र- (→इक्षु-); ग्र$_{2}$ सागरं (→संगमं). –c) का$_{1}$ त्रिलोक° (→त्रैलोक्य°).

स्कन्दतीर्थं ततो गच्छेत् सर्वपापप्रणाशनम् ।
आजन्मनः कृतं पापं स्नातस्तीव्रं व्यपोहति ।।२८
तत्र देवाः सगन्धर्वा भवात्मजमनुत्तमम् ।
उपासते महात्मानं स्कन्दं शक्तिधरं प्रभुम् ।।२९
ततो गच्छेदाङ्गिरसं स्नानं तत्र समाचरेत् ।
गोसहस्रफलं प्राप्य रुद्रलोकं स गच्छति ।।३०
अङ्गिरा यत्र देवेशं ब्रह्मपुत्रो वृषध्वजम् ।
तपसाराध्य विश्वेशं लब्धवान् योगमुत्तमम् ।।३१
कुशतीर्थं ततो गच्छेत् सर्वपापप्रणाशनम् ।
स्नानं तत्र प्रकुर्वीत अश्वमेधफलं लभेत् ।।३२
कोटितीर्थं ततो गच्छेत् सर्वपापप्रणाशनम् ।
तत्र स्नात्वा नरो राज्यं लभते नात्र संशयः ।।३३
चन्द्रभागां ततो गच्छेत् स्नानं तत्र समाचरेत् ।
स्नातमात्रो नरस्तत्र सोमलोके महीयते ।।३४
नर्मदादक्षिणे कूले संगमेश्वरमुत्तमम् ।
तत्र स्नात्वा नरो राजन् सर्वयज्ञफलं लभेत् ।।३५
नर्मदायोत्तरे कूले तीर्थं परमशोभनम् ।
आदित्यायतनं रम्यमीश्वरेण तु भाषितम् ।।३६
तत्र स्नात्वा तु राजेन्द्र दत्त्वा दानं तु शक्तितः ।
तस्य तीर्थप्रभावेण लभते चाक्षयं फलम् ।।३७
दरिद्रा व्याधिता ये तु ये च दुष्कृतकारिणः ।
मुच्यन्ते सर्वपापेभ्यः सूर्यलोकं प्रयान्ति च ।।३८
मार्गेश्वरं ततो गच्छेत् स्नानं तत्र समाचरेत् ।
स्नातमात्रो नरस्तत्र स्वर्गलोकमवाप्नुयात् ।।३९  वें.२.४१.४१

---

२८. ब$_1$. ⊙. –a) दे$_6$ स्वर्गं-, मुवें. ऋण- (→स्कन्द-). –b) मुवें. स ऋणानुच्यते ध्रुवं. –c) दे$_4$ आजन्मना, दे$_{10}$ आजन्मतः (→आजन्मनः); का$_1$ ब$_{2.3}$ दे$_{2.6}$ आजन्ममरणं पापं. –d) का$_1$ दे$_{2.6}$ ते$_1$ ततस्, ब$_{2.3}$ तत्र, दे$_1$ स्नानस् (→स्नातस्); दे$_3$ द$_1$ ग्र$_2$ उ$_1$ स्नात(उ$_1$ °न) मात्रे(द$_1$ °त्रो), दे$_4$ स्नातमात्रात्, ते$_1$ तत्र स्नात्वा, म$_1$ स्नानमात्रं (→स्नातस्तीव्रं).

२९. ब$_1$ न$_1$. ⊙. –b) ब$_3$ दे$_6$ भगा-, दे$_{1.3.8-10}$ मुवें. मुए. मुब. भर्गा- (→भवा-); दे$_4$ भृगुतीर्थममुत्तमं, द$_1$ म$_1$ भेजुर्मज्जनमुत्तमं, ग्र$_2$ उ$_1$ गुहा (ग्र$_2$ °ह्या)जन्ममनुत्तमं. –c) का$_1$ ब$_{2.3}$ दे$_{2.3}$ महाज्ञानं (दे$_3$ °नः), दे$_4$ महात्मानः (→महात्मानं).

३०. ब$_1$ न$_1$. ⊙. –c) का$_1$ ब$_{2.3}$ दे$_{2.6}$ ते$_1$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ तस्य, दे$_3$ तत्र (→प्राप्य). –d) का$_1$ दे$_{2.6}$ °लोके (→°लोकं); ब$_2$ च (→स); ब$_3$ रुद्रलोके महीयते.

३१. ब$_1$ न$_1$. ⊙. –c) ब$_3$ दे$_{2.6}$ देवेशं (→विश्वेशं).

३२. ब$_1$. ⊙; न$_1$. ab ⊙. –a) का$_1$ ब$_{2.3}$ दे$_{2.10}$ कुल-, दे$_4$ द$_1$ म$_1$ उ$_1$ जल-, ते$_1$ कुलि-, ग्र$_2$ कोटि- (→कुश-); दे$_4$ कुलार्थं तु ततो गच्छेत्. –c) दे$_{1.8-10}$ मुवें. मुए. मुब. तत्र स्नानं (→स्नानं तत्र); ते$_1$ प्रकुर्वन्ति (→प्रकुर्वीत). –d) दे$_3$ सर्वमेव, दे$_6$ न$_1$ पशुमेध-, ग्र$_2$ ह्यश्वमेध- (→अश्वमेध-).

३३. ब$_1$. ⊙; दे$_1$ न$_1$ मुवें. मुए. cd ⊙. –c) ते$_1$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ राजन् (→राज्यं); दे$_{8-10}$ तत्र स्नानं प्रकुर्वीत. –d) दे$_{8-10}$ अश्वमेधफलं लभेत्.

अतः परं दे$_{8-10}$ मुवें. मुए. मुब. अधिकम्—

* आजन्मनः कृतं पापं स्नातस्तत्र व्यपोहति । ( = २८cd)
[-1) दे$_{10}$ आजन्मतः (→आजन्मनः)]

३४. –a) का$_1$ ब$_3$ दे$_{4.10}$ द$_1$ म$_1$ चन्द्रभागं (→चन्द्रभागां). –b) दे$_3$ सर्वपापप्रणाशिनीं. –c) ब$_{1.3}$ दे$_1$ ग्र$_2$ म$_1$ उ$_1$ स्नान- (→स्नात-); ग्र$_2$ मात्रे (→मात्रो). –d) ग्र$_2$ °लोकं (→°लोके).

३५. –b) ब$_3$ दे$_{2.6}$ ते$_1$ सगरेश्वर° (→संगमेश्वर°); ब$_1$ गणेश्वरमनुत्तमं. –c) ग्र$_2$ तत्र स्नात्वा तु राजेन्द्र.

३६. ब$_1$ दे$_4$. ⊙. –a) दे$_{1.6.8-10}$ मुवें. मुए. नर्मदाचोत्तरे कूले, दे$_3$ नार्मदे चोत्तरे कूले, म$_1$ नर्मदायोत्तरे कूले, + नर्मदोत्तर कूले तु, मुवें. नर्मदाया उदक्कूले. –c) दे$_3$ म$_1$ पुण्यं (→रम्यं). –d) का$_1$ प्रभाषितं, द$_1$ तु भावितं (→तु भाषितं).

३७. ब$_1$. ⊙; दे$_4$. ab ⊙; ग्र$_2$. cd ⊙. –c) दे$_3$ तेन (→तस्य); का$_1$ ब$_3$ दे$_{1.3.4.6.8-10}$ ते$_1$ द$_1$ म$_1$ °प्रभावेन (→°प्रभावेण). –d) दे$_4$ लभते वाञ्छितं फलं.

३८. ब$_1$ ग्र$_2$. ⊙. –a) दे$_4$ दरिद्र-, दे$_{10}$ दरिद्री (→दरिद्रा); का$_1$ दे$_{1.8-10}$ न$_1$ ते$_1$ मुए. मुब. च (→तु). –b) दे$_{3.6}$ न$_1$ मुवें. तु (→च); दे$_{1.4.6.8-10}$ उ$_1$ मुवें. मुए. मुब. °कर्मिणः (→°कारिणः); द$_1$ म$_1$ दुःखिनः कर्मिणस्तथा. –d) उ$_1$ सूर्यलोकं स गच्छति.

३९. ग्र$_2$. a ⊙. –a) ब$_1$ दे$_2$ गणेश्वरं, दे$_{1.8-10}$ मुवें. मुए.मुब. मातृतीर्थं, दे$_6$ मग्नेश्वरं, ते$_1$ मागेश्वरं (→मार्गेश्वरं). –c) ब$_1$ दे$_{1.6.10}$ द$_1$ ग्र$_2$ उ$_1$ स्नान- (→स्नात-); ग्र$_2$ -मात्रे (→-मात्रो); द$_1$ यत्र (→तत्र); म$_1$ स्नानं तत्र नरः कृत्वा. –d) ते$_1$ स्वर्गलोके महीयते.

वें.२.४१.४१ ततः पश्चिमतो गच्छेन्मरुदालयमुत्तमम् ।
तत्र स्नात्वा तु राजेन्द्र शुचिर्भूत्वा प्रयत्नतः ।।४०
काञ्चनं तु द्विजो दद्याद् यथाविभवविस्तरम् ।
पुष्पकेण विमानेन वायुलोकं स गच्छति ।।४१
ततो गच्छेत राजेन्द्र अहल्यातीर्थमुत्तमम् ।
स्नानमात्रादप्सरोभिर्मोदते कालमक्षयम् ।।४२
चैत्रमासे तु संप्राप्ते शुक्लपक्षे त्रयोदशी ।
कामदेवदिने तस्मिन्नहल्यां यस्तु पूजयेत् ।।४३
यत्र तत्र नरोत्पन्नो वरस्तत्र प्रियो भवेत् ।
स्त्रीवल्लभो भवेच्छ्रीमान् कामदेव इवापरः ।।४४
अयोध्यां तु समासाद्य तीर्थं शक्रस्य विश्रुतम् ।
स्नातमात्रो नरस्तत्र गोसहस्रफलं लभेत् ।।४५
सोमतीर्थं ततो गच्छेत् स्नानं तत्र समाचरेत् ।
स्नातमात्रो नरस्तत्र सर्वपापैः प्रमुच्यते ।।४६
सोमग्रहे तु राजेन्द्र पापक्षयकरं भवेत् ।
त्रैलोक्यविश्रुतं राजन् सोमतीर्थं महाफलम् ।।४७
यस्तु चान्द्रायणं कुर्यात् तत्र तीर्थे समाहितः ।
सर्वपापविशुद्धात्मा सोमलोकं स गच्छति ।।४८
अग्निप्रवेशं यः कुर्यात् सोमतीर्थे नराधिप ।
जले चानशनं वापि नासौ मर्त्योऽभिजायते ।।४९
स्तम्भतीर्थं ततो गच्छेत् स्नानं तत्र समाचरेत् ।
स्नातमात्रो नरस्तत्र सोमलोके महीयते ।।५०
ततो गच्छेत राजेन्द्र विष्णुतीर्थमनुत्तमम् ।
योधनीपुरमाख्यातं विष्णोः स्थानमनुत्तमम् ।।५१
असुरा योधितास्तत्र वासुदेवेन कोटिशः ।
तत्र तीर्थं समुत्पन्नं विष्णुश्रीको भवेदिह ।
अहोरात्रोपवासेन ब्रह्महत्यां व्यपोहति ।।५२

---

४०. दे$_6$. ४०d–४२a श्लोकाः ४२ श्लोकानन्तरमागताः. –a) ग्र$_2$ ततः पश्चिमयोः पार्श्वात्. –b) दे$_{1.8-10}$ मुवें. मुए. मुब. मरुताशयमुत्तमं, ते$_1$ ककुदालयमुत्तमं. –d) दे$_{1.3.4.8-10}$ मुवें. मुए. मुब. समाहितः (→प्रयत्नतः).

४१. –a) का$_1$ तु (→च); ब$_{2.3}$ दे$_3$ ते$_1$ द्विजे, दे$_{1.8-10}$ मुवें. मुए. मुब. यतेर् (→द्विजो). –b) ब$_1$ यथाविभववासके. –c) दे$_{3.4}$ पुष्करेण (→पुष्पकेण).

४२. ब$_1$. ⊙. –b) दे$_{4.8-10}$ अहिल्या- (→अहल्या-) –c) का$_1$ स्नानमात्रोप्सरोभिश्च, दे$_{3.4}$ स्नानमात्रेणाप्सरोभिर्. –d) का$_1$ दे$_{1.8-10}$ मुवें. मुए. मुब. उत्तमं (→अक्षयं).

४३. ब$_1$. ⊙. –a) ब$_2$ °मात्रे (→°मासे). –b) ते$_1$ चतुर्दशीं (→त्रयोदशी). –c) दे$_{1.8-10}$ मुए. शुभ्रे (→तस्मिन्); ते$_1$ तथा कामदिने तस्मिन्. –d) दे$_{1.8-10}$ अहिल्यां (→अहल्यां); मुवें अहल्यां पूजयेत्ततः.

४४. ब$_1$. ⊙. –a) दे$_3$ ग्र$_2$ यत्र यत्र, न$_1$ म$_1$ तत्र तत्र (→यत्र तत्र); दे$_{1.8-10}$ मुवें.मुए. मुब. समुत्पन्नो, दे$_3$ नरो याति (→नरोत्पन्नो). –b) दे$_{1.8-10}$ मुवें. मुए. मुब. नरोऽत्यर्थं, दे$_3$ तत्र तत्र (→वरस्तत्र). –c) दे$_3$ स्त्रीवत्सलो (→स्त्रीवल्लभो).

४५. ब$_1$. ⊙; का$_1$. ४५d–४६c ⊙. –a) दे$_3$ च (→तु); दे$_{1.8-10}$ मुवें. मुए. मुब. सरिद्वरां (→अयोध्यां तु); का$_1$ दे$_4$ अयोध्यायां समासाद्य. –b) ते$_1$ म$_1$ शुक्र (ते$_1$ °क्ल)स्य (→शक्रस्य). –c) दे$_4$ स्नानमात्रे (→स्नातमात्रो); का$_1$ दे$_{1.4}$ तस्य (→तत्र).

४६. ब$_1$. ⊙; का$_1$. abc ⊙ (द्र. ४५ पा. वि.). –b) म$_1$ स्नानमात्रं (→स्नानं तत्र).

४७. ब$_1$. ⊙. –c) का$_1$ दे$_2$ त्रैलोक्ये (→त्रैलोक्य-). –d) दे$_4$ म$_1$ उ$_1$ महत्फलं, न$_1$ महाबलं (→महाफलं); द$_1$ सोमेश्वरमनुत्तमं, ग्र$_2$ सोमदर्थो महत्फलं.

४८. ब$_1$. ⊙; दे$_4$. cd ⊙. –a) म$_1$ यस्तु चन्द्रमसे कुर्यात्, + यस्तु चान्द्रायणं कुर्यात्. –c) दे$_6$ °विशुद्ध्यर्थं (→°विशुद्धात्मा).

४९. ब$_1$ दे$_4$. ⊙. –b) का$_1$ ब$_{2.3}$ दे$_{2.6}$ ते$_1$ समाहितः (→नराधिप). –c) दे$_{1.3.8-10}$ म$_1$ वानाशके, न$_1$ ते$_1$ वानशनं, द$_1$ वा नासिके, उ$_1$ वानाशको (→चानशनं). –d) म$_1$ मुक्तो (→मर्त्यो); दे$_{1.8.9}$ मुवें. मुए. मुब. हि (→[अ]भि-).

५०. ब$_1$ दे$_4$. ⊙. –a) का$_1$ शुभ्र-, ब$_{2.3}$ दे$_{2.3.6}$ शुम्भ-, ते$_1$ शुभं (→स्तम्भ-). –c) दे$_{1.3}$ म$_1$ उ$_1$ स्नान° (→स्नात°).

५१. ब$_1$. ⊙; ते$_1$ म$_1$. cd ⊙. –b) दे$_4$ ब्रह्म- (→विष्णु-). –c) का$_1$ दे$_{1.8-10}$ योधनापर (का$_1$ दे$_{10}$ °पुर) माख्यातं, मुवें. योधीपुरमिति ख्यातं. –d) दे$_{10}$ न$_1$ द$_1$ ग्र$_2$ उ$_1$ मुवें. विष्णु- (→विष्णोः).

५२. ब$_1$. ⊙; दे$_3$. abc ⊙. –a) दे$_4$ उ$_1$ निहताः, ते$_1$ पोषिताः, म$_1$ मथिता (→योधितास्). –d) दे$_6$ ते$_1$ विष्णुः (→विष्णु-); ब$_3$ °प्रीतो, उ$_1$ °श्रीगो (→°श्रीको).

वें.२.४१.४१ ततः पश्चिमतो गच्छेन्मरुदालयमुत्तमम् ।
तत्र स्नात्वा तु राजेन्द्र शुचिर्भूत्वा प्रयत्नतः ॥४०
काञ्चनं तु द्विजो दद्याद् यथाविभवविस्तरम् ।
पुष्पकेण विमानेन वायुलोकं स गच्छति ॥४१
ततो गच्छेत राजेन्द्र अहल्यातीर्थमुत्तमम् ।
स्नानमात्रादप्सरोभिर्मोदते कालमक्षयम् ॥४२
चैत्रमासे तु संप्राप्ते शुक्लपक्षे त्रयोदशी ।
कामदेवदिने तस्मिन्नहल्यां यस्तु पूजयेत् ॥४३
यत्र तत्र नरोत्पन्नो वरस्तत्र प्रियो भवेत् ।
स्त्रीवल्लभो भवेच्छ्रीमान् कामदेव इवापरः ॥४४
अयोध्यां तु समासाद्य तीर्थं शक्रस्य विश्रुतम् ।
स्नातमात्रो नरस्तत्र गोसहस्रफलं लभेत् ॥४५
सोमतीर्थं ततो गच्छेत् स्नानं तत्र समाचरेत् ।
स्नातमात्रो नरस्तत्र सर्वपापैः प्रमुच्यते ॥४६
सोमग्रहे तु राजेन्द्र पापक्षयकरं भवेत् ।
त्रैलोक्यविश्रुतं राजन् सोमतीर्थं महाफलम् ॥४७
यस्तु चान्द्रायणं कुर्यात् तत्र तीर्थे समाहितः ।
सर्वपापविशुद्धात्मा सोमलोकं स गच्छति ॥४८
अग्निप्रवेशं यः कुर्यात् सोमतीर्थे नराधिप ।
जले चानशनं वापि नासौ मर्त्योऽभिजायते ॥४९
स्तम्भतीर्थं ततो गच्छेत् स्नानं तत्र समाचरेत् ।
स्नातमात्रो नरस्तत्र सोमलोके महीयते ॥५०
ततो गच्छेत राजेन्द्र विष्णुतीर्थमनुत्तमम् ।
योधनीपुरमाख्यातं विष्णोः स्थानमनुत्तमम् ॥५१
असुरा योधितास्तत्र वासुदेवेन कोटिशः ।
तत्र तीर्थं समुत्पन्नं विष्णुश्रीको भवेदिह ।
अहोरात्रोपवासेन ब्रह्महत्यां व्यपोहति ॥५२

---

४०. दे$_{6}$. ४०d–४२a श्लोकाः ४२ श्लोकानन्तरमागताः. –a) ग्र$_{2}$ ततः पश्चिमयोः पार्श्वात्. –b) दे$_{1.8-10}$ मुवें. मुए. मुब. मरुताशयमुत्तमं, ते$_{1}$ ककुदालयमुत्तमं. –d) दे$_{1.3.4.8-10}$ मुवें. मुए. मुब. समाहितः (→प्रयत्नतः).

४१. –a) का$_{1}$ तु (→च); ब$_{2.3}$ दे$_{3}$ ते$_{1}$ द्विजे, दे$_{1.8-10}$ मुवें. मुए. मुब. यतेर् (→द्विजो). –b) ब$_{1}$ यथाविभववासके. –c) दे$_{3.4}$ पुष्करेण (→पुष्पकेण).

४२. ब$_{1}$. ⊙. –b) दे$_{4.8-10}$ अहिल्या- (→अहल्या-) –c) का$_{1}$ स्नानमात्रोप्सरोभिश्च, दे$_{3.4}$ स्नानमात्रेणाप्सरोभिर्. –d) का$_{1}$ दे$_{1.8-10}$ मुवें. मुए. मुब. उत्तमं (→अक्षयं).

४३. ब$_{1}$. ⊙. –a) ब$_{2}$ °मात्रे (→°मासे). –b) ते$_{1}$ चतुर्दशीं (→त्रयोदशी). –c) दे$_{1.8-10}$ मुए. शुभ्रे (→तस्मिन्); ते$_{1}$ तथा कामदिने तस्मिन्. –d) दे$_{1.8-10}$ अहिल्यां (→अहल्यां); मुवें अहल्यां पूजयेत्ततः.

४४. ब$_{1}$. ⊙. –a) दे$_{3}$ ग्र$_{2}$ यत्र यत्र, न$_{1}$ म$_{1}$ तत्र तत्र (→यत्र तत्र); दे$_{1.8-10}$ मुवें.मुए. मुब. समुत्पन्नो, दे$_{3}$ नरो याति (→नरोत्पन्नो). –b) दे$_{1.8-10}$ मुवें. मुए. मुब. नरोऽत्यर्थं, दे$_{3}$ तत्र तत्र (→वरस्तत्र). –c) दे$_{3}$ स्त्रीवत्सलो (→स्त्रीवल्लभो).

४५. ब$_{1}$. ⊙; का$_{1}$. ४५d–८६c ⊙. –a) दे$_{3}$ च (→तु); दे$_{1.8-10}$ मुवें. मुए. मुब. सरिद्वरां (→अयोध्यां तु); का$_{1}$ दे$_{4}$ अयोध्यायां समासाद्य. –b) ते$_{1}$ म$_{1}$ शुक्र (ते$_{1}$ °क्ल)स्य (→शक्रस्य). –c) दे$_{4}$ स्नानमात्रे (→स्नातमात्रो); का$_{1}$ दे$_{1.4}$ तस्य (→तत्र).

४६. ब$_{1}$. ⊙; का$_{1}$. abc ⊙ (द्र. ४५ पा. वि.). –b) म$_{1}$ स्नानमात्रं (→स्नानं तत्र).

४७. ब$_{1}$. ⊙. –c) का$_{1}$ दे$_{2}$ त्रैलोक्ये (→त्रैलोक्य-). –d) दे$_{4}$ म$_{1}$ उ$_{1}$ महत्फलं, न$_{1}$ महाबलं (→महाफलं); द$_{1}$ सोमेश्वरमनुत्तमं, ग्र$_{2}$ सोमदर्थो महत्फलं.

४८. ब$_{1}$. ⊙; दे$_{4}$. cd ⊙. –a) म$_{1}$ यस्तु चन्द्रमसे कुर्यात्, +यस्तु चान्द्रायणं कुर्यात्. –c) दे$_{6}$ °विशुद्ध्यर्थं (→°विशुद्धात्मा).

४९. ब$_{1}$ दे$_{4}$. ⊙. –b) का$_{1}$ ब$_{2.3}$ दे$_{2.6}$ ते$_{1}$ समाहितः (→नराधिप). –c) दे$_{1.3.8-10}$ म$_{1}$ वानाशके, न$_{1}$ ते$_{1}$ वानशनं, द$_{1}$ वा नासिके, उ$_{1}$ वानाशको (→चानशनं). –d) म$_{1}$ मुक्तो (→मर्त्यो); दे$_{1.8.9}$ मुवें. मुए. मुब. हि (→[अ]भि-).

५०. ब$_{1}$ दे$_{4}$. ⊙. –a) का$_{1}$ शुभ्र-, ब$_{2.3}$ दे$_{2.3.6}$ शुम्भ-, ते$_{1}$ शुभं (→स्तम्भ-). –c) दे$_{1.3}$ म$_{1}$ उ$_{1}$ स्नान° (→स्नात°).

५१. ब$_{1}$. ⊙; ते$_{1}$ म$_{1}$. cd ⊙. –b) दे$_{4}$ ब्रह्म- (→विष्णु-). –c) का$_{1}$ दे$_{1.8-10}$ योधनापर (का$_{1}$ दे$_{10}$ °पुर) माख्यातं, मुवें. योधीपुरमिति ख्यातं. –d) दे$_{10}$ न$_{1}$ द$_{1}$ ग्र$_{2}$ उ$_{1}$ मुवें. विष्णु- (→विष्णोः).

५२. ब$_{1}$. ⊙; दे$_{3}$. abc ⊙. –a) दे$_{4}$ उ$_{1}$ निहताः, ते$_{1}$ पोषिताः, म$_{1}$ मथिता (→योधितास्). –d) दे$_{6}$ ते$_{1}$ विष्णुः (→विष्णु-); ब$_{3}$ °प्रीतो, उ$_{1}$ °श्रीगो (→°श्रीको).

नर्मदादक्षिणे कूले तीर्थं परमशोभनम् ।
कामतीर्थमिति ख्यातं यत्र कामोऽर्चयद् भवम् ॥५३
तस्मिंस्तीर्थे नरः स्नात्वा उपवासपरायणः ।
कुसुमायुधरूपेण रुद्रलोके महीयते ॥५४
ततो गच्छेत राजेन्द्र ब्रह्मतीर्थमनुत्तमम् ।
उमाहकमिति ख्यातं तत्र संतर्पयेत् पितॄन् ॥५५
पौर्णमास्याममावास्यां श्राद्धं कुर्याद् यथाविधि ।
गजरूपा शिला तत्र तोयमध्ये व्यवस्थिता ॥५६
तस्मिंस्तु दापयेत् पिण्डान् वैशाख्यां तु विशेषतः ।
स्नात्वा समाहितमना दम्भमात्सर्यवर्जितः ।
तृप्यन्ति पितरस्तस्य यावत् तिष्ठति मेदिनी ॥५७
सिद्धेश्वरं ततो गच्छेत् स्नानं तत्र समाचरेत् ।
स्नातमात्रो नरस्तत्र गाणपत्यपदं लभेत् ॥५८
ततो गच्छेत राजेन्द्र लिङ्गो यत्र जनार्दनः ।
तत्र स्नात्वा तु राजेन्द्र विष्णुलोके महीयते ॥५९
यत्र नारायणो देवो मुनीनां भावितात्मनाम् ।
स्वात्मानं दर्शयामास लिङ्गं तत् परमं पदम् ॥६०
अङ्कोलं तु ततो गच्छेत् सर्वपापविनाशनम् ।
स्नानं दानं च तत्रैव ब्राह्मणानां च भोजनम् ।
पिण्डप्रदानं च कृतं प्रेत्यानन्तफलप्रदम् ॥६१
त्रैयम्बकेन तोयेन यश्चरुं श्रपयेत् ततः ।
अङ्कोलमूले दद्याच्च पिण्डांश्चैव यथाविधि ।
तारिताः पितरस्तेन तृप्यन्त्याचन्द्रतारकम् ॥६२
ततो गच्छेत राजेन्द्र तापसेश्वरमुत्तमम् ।
तत्र स्नात्वा तु राजेन्द्र प्राप्नुयात् तपसः फलम् ॥६३ वें.२.४१ ६६

५३. दे3. ५३c–५५b ⊙. –d) का1 काले (→कामो); का1 दे1.8-10 मुवें. [अ]र्चये (दे10 मुब. °य)द्धरिं (दे1.8.9 °रं), दे4 [अ]र्चयेद्बुधं (→[अ]र्चयद्भवं).

५४. दे3. ⊙ (द्र. ५३ पा. वि.). –d) ते1 ब्रह्म° (→रुद्र°).

५५. ब1. ⊙; दे3. ab (द्र. ५३ पा. वि.). –b) द1 ग्र2 उ1 ब्रह्मतीर्थमितिश्रुतं. –c) दे3 कामेश्वर-, दे4 न1 म1 अमोहक- (→उमाहक-); का1 ब2.3 दे2 द1 अ (ब2 °स्व) मोघमिति विख्यातं, दे6 अमोदमिति विख्यातं, ते1 अमोहमिति विख्यातं.

५६. ब1. ⊙. –a) दे1.6.8.9 पूर्णिमास्यां, दे3 पौर्णमासीं (→पौर्णमास्यां). –b) दे3 स्नानं (→श्राद्धं); दे4 तथा- (→यथा-). –c) का1 ब2 ते1 दे1 °रूप- (→°रूपा); ते1 ग्र2 शिलास् (→शिला). –d) दे3 जल° (→तोय°).

५७. ब1. ⊙; द1 ग्र2 उ1. ab ⊙. –a) दे4 म1 तस्यां तु (→तस्मिंस्तु). –b) दे1-3.4.8-10 न1 ते1 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. वैशाखे (→वैशाख्यां); दे1.3.4.8-10 न1 द1 ग्र2 म1 उ1 समाहितः (→विशेषतः). –d) ते1 दम्भदर्पविवर्जितः. –e) का1 ब2.3 दे2-4 ते1 ग्र2 म1 उ1 तावद् (→तस्य).

५८. –a) दे3 न1 मुवें. विश्वेश्वरं (→सिद्धेश्वरं). –c) ते1 गाणपत्यं (→नरस्तत्र). –d) दे1.8-10 गाण (दे8.9 °णा) पत्यमिदं लभेत् (दे8 °सेत्), दे3.6 म1 गाणपत्य (दे3 °त्यं) फलं लभेत्, दे4 गाणपत्यं लभेत् पुनः, ते1 फलं शीघ्रं लभेन्नरः, द1 ग्र2 उ1 गाणपत्यमवाप्नुयात्.

५९. न1. bc ⊙. –b) का1 लिङ्गं, + स्थानं, ब2 दे6 द1 लिङ्गं, ब3 लिङ्गे (→लिङ्गो); दे4 द1 जनार्दनं (→जनार्दनः). –c) दे1.8.10 मुवें. मुए. मुब. नरो भक्त्या (→तु राजेन्द्र).

६०. –b) का1 भावनात्मानां (→भावितात्मनां).

६१. ब1. ⊙. –a) दे1.8.9 मुवें. मुए. अ (दे8.9 अं) कोल्लं, दे3 अकालं, दे10 त्र्यम्बको, द1 अकोलं (→अङ्कोलं) –c) द1 ग्र2 तु (→च); दे3 तत्र स्नानं च दानं च. –d) ग्र2 उ1 तु (→च). –e) द1 तु (→च); उ1 पिण्डदानं चैव कृतं. –f) दे1 गत्या°, दे10 ग्र2 प्रीत्या° (→प्रेत्या°).

६२. ब1. ⊙; ब2. ६२d–६३d ⊙; दे6. ६२c–६३d. –a) दे1 मुवें. मुब. त्रियम्बकेन, दे4 त्रयंबकेन, म1 उ1 त्र्यम्बकेन तु (→त्रैयम्बकेन); ग्र2 त्र्यम्बको ततो ततोयेन. –b) का1 संश्रयेत्ततः, ब2 दे10 श्रापयेत्ततः, दे4 श्रपयेत्पुनः, दे6.8.9 मुवें. मुए. मुब. श्रपयेद्द्विजः (→श्रपयेत्ततः); दे1 यश्च रुद्रं श्रयेद् द्विजः, दे3 यं च रुद्रं प्रयत्नतः. –c) दे1 अंकोल°, दे8-10 मुए. अकुल्ल° (दे10 °क्ष), मुवें. अकोल्ल°, दे8-10 मुए. अकुल्ल° (दे10 °क्ष), मुवें. अकोल्ल° (→अंकोल°); दे3 वा (→च); न1 अंकोलमूले पिण्डान्वै. –d) दे10 यथाविधिः (→यथाविधि); न1 यथाविधि वितारिताः. –e) का1 ब3 तर्पिताः, दे2 तर्पितं (→तारिताः); न1 पितरस्तेन तृप्यन्ति. –f) दे4 जीवन्त्या चन्द्रतारकं, न1 जीवेदाचन्द्रतारकं.

६३. ब1. ⊙; ब2 दे6. ⊙ (द्र. ६२ पा. वि.). –d) द1 ग्र2 उ1 तपसः प्राप्नुयात्फलं.

वॅ२.४१.६७ शुक्लतीर्थं ततो गच्छेत् सर्वपापविनाशनम् ।
नास्ति तेन समं तीर्थं नर्मदायां युधिष्ठिर ।।६४
दर्शनात् स्पर्शनात् तस्य स्नानदानतपोजपात् ।
होमाच्चैवोपवासाच्च शुक्लतीर्थे महत् फलम् ।।६५
योजनं तत् स्मृतं क्षेत्रं देवगन्धर्वसेवितम् ।
शुक्लतीर्थमिति ख्यातं सर्वपापविनाशनम् ।।६६
पादपाग्रेण दृष्टेन ब्रह्महत्यां व्यपोहति ।
देव्या सह सदा भर्गस्तत्र तिष्ठति शंकरः ।।६७
कृष्णपक्षे चतुर्दश्यां वैशाखे मासि सुव्रत ।
कैलासाच्चाभिनिष्क्रम्य तत्र सन्निहितो हरः ।।६८
देवदानवगन्धर्वाः सिद्धविद्याधरास्तथा ।
गणाश्चाप्सरसां नागास्तत्र तिष्ठन्ति पुंगव ।।६९
रजकेन यथा वस्त्रं शुक्लं भवति वारिणा ।
आजन्मनि कृतं पापं शुक्लतीर्थे व्यपोहति ।
स्नानं दानं तपः श्राद्धमनन्तं तत्र दृश्यते ।।७०
शुक्लतीर्थात् परं तीर्थं न भूतं न भविष्यति ।
पूर्वे वयसि कर्माणि कृत्वा पापानि मानवः ।
अहोरात्रोपवासेन शुक्लतीर्थे व्यपोहति ।।७१
कार्त्तिकस्य तु मासस्य कृष्णपक्षे चतुर्दशी ।
घृतेन स्नापयेद् देवमुपोष्य परमेश्वरम् ।
एकविंशत्कुलोपेतो न च्यवेदैश्वरात् पदात् ।।७२
तपसा ब्रह्मचर्येण यज्ञदानेन वा पुनः ।
न तां गतिमवाप्नोति शुक्लतीर्थे तु यां लभेत् ।।७३

६४. ब1. ⊙; ब2. ⊙ (द्र. ६२ पा. वि.); दे3. ६४b-६६c ⊙. –a) ब3 दे4 शुक्र-, दे6 शुष्क-, द1 शुक्लं (→शुक्ल-).

६५. ब1.2. ⊙; दे3. ⊙ (द्र. ६४ पा. वि.). –a) ब3 दे2.6 स्पर्शनादस्य, दे4 स्पर्शनाद्वापि, द1 ग्र2 स्पर्शनात्तत्र (→स्पर्शनात्तस्य). –b) दे1.8-10 न1 उ1 मुवें. मुए. मुब. स्नानाद्दानात्, दे4 स्नानदानात्, द1 स्नानं दानात्, म1 स्नानं दानं (→स्नानदान-); दे6 तपो जपन्, दे10 ततो जपात्, द1 ततो जपः, ग्र2 जपो तपः, म1 उ1 तपो जपः (→-तपोजपात्). –c) दे10 होमान्, ग्र2 होमं (→होमात्); द1 म1 उ1 होमश्चैवो(म1 °को)पवासश्च. –d) ब3 दे4 ग्र2 म1 उ1 शुक्र-, दे6 शुष्क- (→शुक्ल-); दे4 महाफलं (→महत्फलं).

६६. ब1.2.⊙; दे3. abc ⊙ (द्र. ६४ पा. वि.). –c) ब3 म1 उ1 शुक्र°, दे6 शुष्क°, द1 शुद्ध° (→शुक्ल°). –d) ब3 दे2-4.6 न1 ते1 द1 म1 °प्रणाशनं (→°विनाशनं).

६७. ब2.3. ⊙; दे6. cd ⊙. –a) दे6 इत्येत, ग्र2 मृष्टेन (→दृष्टेन); का1 पादायाग्रेनदृष्टेन, दे3 याममात्रेणतिष्ठेत, उ1 पादमात्रेणसृष्टेन. –c) ब3 महाभागस्, दे1-10 महागर्भस्, द1 ग्र2 म1 उ1 महादेवस् (→सदा भर्गस्). –d) दे10 सूत्र तिष्ठति शंकरः.

६८. ब1.2. ⊙. –b) दे1.8-10 न1 म1 सुव्रताः (→सुव्रत). –c) का1 दे2 कैलासाद्याति निष्क्रम्य, ब3 कैलासादति निष्क्रम्य, दे1.8-10 मुवें. लोकात् स्वकाद्विनिष्क्रम्य, दे3 शुक्लाक्यादभिनिष्क्रम्य, दे4 लोकाच्चायाति निष्क्रम्य, द1 ग्र2 लोकांश्चैवाति निष्क्रम्य, उ1 लोकाचैवात्र निष्क्रम्य, म1 लोकाश्चैवाभिनिष्क्रम्य. –d) ब3 हरिः (→हरः).

६९. ब1. ⊙; ब2 दे6. ⊙ (द्र. ६२ पा. वि.). –b) ब3 दे2.3 सिद्धा (→सिद्ध-). –c) का1 दे1.2.8-10 न1 ग्र2 मुवें. मुए. मुब. चाप्सरसः (→चाप्सरसां); का1 दे2 शान्तास् (→नागास्). –d) का1 दे1.8-10 न1 ग्र2 उ1 मुवें. मुए. मुब. पुङ्गवाः, ब3 पाण्डव, दे2 पूगशः (→पुङ्गव); ते1 तिष्ठन्ति युगपत्तथा.

७०. ब1. ⊙; ब2 दे6 ⊙ (द्र. ६२ पा. वि.); दे1.8-10. ef ⊙. –a) दे1.8.10 मुवें. मुए. मुब. रंजितं हि (दे10 च), ग्र2 रजतेन (→रजकेन); ग्र2 तथा (→यथा). –b) ब3 क्रियते (→भवति); न1 धावनात्, ग्र2 दारुणं, म1 पाणिना(→वारिणा). –c) का1 आजन्म नियतं, ब3 दे2 आजन्मनः कृतं, दे1.3.4.8-10 न1 मुवें. मुए. मुब. आजन्मजनितं, ते1 आजन्ममरणं(→आजन्मनि कृतं).–d) दे2.4 ग्र2 °तीर्थं (→°तीर्थे). –e) उ1 स्नानदानतपः श्राद्धं. –f) का1 दे2 ते1 गीतये, ब3 जायते (→दृश्यते).

७१. ब1.2 दे1.8-10 मुए. ⊙. –a) दे4 तत्र, ग्र2 मुवें शुक्र-(→शुक्ल-). –b) दे2 भूतो (→भूतं); मुवें. न भविष्यति पावनं. –d) दे4 व्यक्त्वा (→कृत्वा). –f) मुवें. शुक्र- (→शुक्ल-).

७२. ब1. ⊙; ब2. ⊙ (द्र. ६२ पा. वि.); दे4. ef. ⊙. –a) दे2.6 ते1 कार्त्तिकेयस्य तु मासस्य, दे10 कार्त्तिके च कृष्णपक्षे. –b) दे3 द1 ग्र1 म1 शुक्ल- (→कृष्ण-). –e) ब3 ते1 एकात्रिंशत्, दे3 एकविंश-, दे6 एकविंशति (→एकविंशत्-). –f) ग्र2 व्यपेत्, म1 चलेत् (→च्यवेद्); दे3 न1 द1 परात् (→पदात्); दे1.8-10 मुवें. मुए. मुब. न च्यवेदीश्वरालयात्.

७३. ब1.2. ⊙; दे4. ab. ⊙. –b) का1 जप-, दे1.3.8-10 न1 म1 मुवें. मुए. मुब. यज्ञैर् (→यज्ञ-). –c) दे3.10 द1 स

शुक्लतीर्थं महातीर्थमृषिसिद्धनिषेवितम् ।
तत्र स्नात्वा नरो राजन् पुनर्जन्म न विन्दति ॥७४
अयने वा चतुर्दश्यां संक्रान्तौ विषुवे तथा ।
स्नात्वा तु सोपवासः सन् विजितात्मा समाहितः ॥७५
दानं दद्याद् यथाशक्ति प्रीयेतां हरिशंकरौ ।
एतत् तीर्थप्रभावेण सर्वं भवति चाक्षयम् ॥७६
अनाथं दुर्गतं विप्रं नाथवन्तमथापि वा ।
उद्वाहयति यस्तीर्थे तस्य पुण्यफलं शृणु ॥७७
यावत् तद्रोमसंख्या तु तत्प्रसूतिकुलेषु च ।
तावद् वर्षसहस्राणि रुद्रलोके महीयते ॥७८
ततो गच्छेत राजेन्द्र यमतीर्थमनुत्तमम् ।
कृष्णपक्षे चतुर्दश्यां माघमासे युधिष्ठिर ।
स्नानं कृत्वा नक्तभोजी न पश्येद् योनिसङ्कटम् ॥७९
ततो गच्छेत राजेन्द्र एरण्डीतीर्थमुत्तमम् ।
संगमे तु नरः स्नायादुपवासपरायणः ।
ब्राह्मणं भोजयेदेकं कोटिर्भवति भोजिताः ॥८०
एरण्डीसंगमे स्नात्वा भक्तिभावात् तु रञ्जितः ।
मृत्तिकां शिरसि स्थाप्य अवगाह्य च तज्जलम् ।
नर्मदोदकसंमिश्रं मुच्यते सर्वकिल्बिषैः ॥८१
ततो गच्छेत राजेन्द्र तीर्थं कार्णाटिकेश्वरम् ।
गङ्गावतरते तत्र दिने पुण्ये न संशयः ॥८२
तत्र स्नात्वा च पीत्वा च दत्त्वा चैव यथाविधि ।
सर्वपापविनिर्मुक्तो ब्रह्मलोके महीयते ॥८३　बं.२.४१.८६

(→तां). –d) ब$_3$ शुक्र- (→शुक्ल-); दे$_3$ मृतो नरः, दे$_4$ तु यां भवेत् (→तु यां लभेत्).

७४. ब$_{1.2}$. ⊙. –a) ब$_3$ शुक्र° (→शुक्ल°); का$_1$ दे$_1$ °तीर्थे (→°तीर्थं). –b) द$_1$ उ$_1$ ऋषिसिद्धैश्च सेवितम्. –d) दे$_6$ ग्र$_2$ विद्यते (→विन्दति).

७५. ब$_{1.2}$. ⊙. –a) दे$_4$ अयमेव, ग्र$_2$ अनेनैव (→अयने वा). –b) ब$_3$ विषुवेऽथवा, ते$_1$ विषुवेषु च (→विषुवे तथा). –c) का$_1$ ब$_3$ दे$_{2.6}$ कृत्वा (→स्नात्वा); ब$_3$ दे$_6$ स, दे$_4$ ग्र$_2$ उ$_1$ स्याद् (→सन्); ते$_1$ स्नाता तपोवासः स्यात्, द$_1$ स्नात्वा तु सोम वासस्य, म$_1$ स्नात्वा तु सोमवासी स्याद्. –d) ब$_3$ निर्जितात्मा, दे$_4$ द्विजात्मा तु, द$_1$ म$_1$ उ$_1$ द्विजन्मा तु (म$_1$ सु-), ग्र$_2$ द्विजानां तु (→विजितात्मा).

७६. ब$_{1.2}$.⊙. –b) का$_1$ दे$_{10}$ ग्र$_2$ प्रीयतां (→प्रीयेतां); ब$_3$ °केशवौ (→°शंकरौ). –c) का$_1$ द$_1$ ग्र$_2$ एवं (→एतत्). –c) दे$_{3.4.8.9}$ न$_1$ ते$_1$ द$_1$ ग्र$_2$ उ$_1$ °प्रभावेन (→°प्रभावेण). –d) उ$_1$ तीर्थं (→सर्वं); का$_1$ वाक्षयं, दे$_4$ चाक्षुषं (→चाक्षयं).

७७. ब$_{1.2}$. ⊙. –a) का$_1$ दे$_{10}$ दुर्गतिं (→दुर्गतं). –c) ग्र$_2$ उद्वाहयन्ति (→उद्वाहयति); दे$_3$ यस्तत्र, द$_1$ ग्र$_2$ उ$_1$ धर्मात्मा, म$_1$ धर्मेण(→यस्तीर्थे). –d) दे$_3$ तीर्थे त्रैलोक्यविश्रुते.

७८. ब$_{1.2}$. ⊙. –a) द$_1$ ग्र$_2$ यावती, म$_1$ यावत्तु (→यावत्तद्). –b) दे$_3$ प्रभूत° (→प्रसूति°).

अतः परं उ$_1$ अधिकम्—

58. *ततो गच्छेत राजेन्द्र वरणातीर्थमुत्तमम् ।

७९. ब$_2$. ⊙. –b) उ$_1$ वरणातीर्थमुत्तमं. –c) दे$_3$ कृष्णपक्ष (→कृष्णपक्षे). –d) ब$_3$ युधिष्ठिरः (→युधिष्ठिर). –e) द$_1$ ग्र$_2$ नरो भोगी, उ$_1$ नगे भोजी (→नक्तभोजी). –f) द$_1$ ग्र$_2$ म$_1$ उ$_1$ °संभवं (→°संकटं).

८०. ब$_2$. ⊙; उ$_1$. ab ⊙. –b) दे$_4$ वरदं, ते$_1$ एरण्डा-, द$_1$ ग्र$_2$ परण्डा-, म$_1$ परमं (→एरण्डी-). –c) का$_1$ ब$_{1.3}$ दे$_{1.3.6.8-10}$ उ$_1$ मुवें. मुए. मुब. स्नात्वा (→स्नायात्). –f) का$_1$ भोजिकाः, दे$_6$ भोजितः, ग्र$_2$ भोजितं, उ$_1$ भो द्विजा (→भोजिताः).

८१. ब$_2$. दे$_4$. ⊙. –a) का$_1$ ते$_1$ एरण्डा-, द$_1$ ग्र$_2$ परण्डा, उ$_1$ परण्डया (→एरण्डी-). –b) दे$_{10}$ मुक्ति- (→भक्ति-); का$_1$ ब$_3$ दे$_{8.9}$ न$_1$ ते$_1$ म$_1$ °भावानु-, ब$_1$ °भावार्थ- दे$_6$ °भावात्म- (→°भावात्तु); दे$_3$ भक्तिभावेन संयुतः, उ$_1$ भक्तिमाननुरञ्जितः. –d) ब$_{1.3}$ दे$_2$ द$_1$ ग्र$_2$ त्ववगाह्य, म$_1$ ह्यवगाह्य (→अवगाह्य); दे$_3$ तु (→च); ब$_1$ ततो जलं (→च तज्जलं). –e) दे$_3$ नर्मदातटसंमिश्रं. –f) दे$_3$ ग्र$_2$ °पातकैः (→°किल्बिषैः).

८२. ब$_2$. ⊙; ब$_1$. ८२b-८५a ⊙ (द्र. स.). –b) ब$_3$ दे$_3$ कल्लोलिते°, दे$_{1.8-10}$ द$_1$ उ$_1$ मुवें. मुए. मुब. कल्लोलके°, दे$_2$ कर्णाटिते°, दे$_4$ कलोलिके°, दे$_6$ कर्णोटिते°, न$_1$ कल्लोत्तिरे°, म$_1$ कल्लोनिके° (→कार्णाटिके°); ग्र$_2$ तीर्थं कल्लोलकेशवं. –d) ब$_3$ स्थाने (→दिने).

८३. ब$_1$. ⊙ (द्र. ८२ पा. वि.); ब$_2$. ⊙. –a) दे$_4$ राजेन्द्र (→पीत्वा च). –b) दे$_{1.10}$ यथाविधिः, दे$_4$ युधिष्ठिर (→यथाविधि).

वें.२.४१.६०

नन्दितीर्थं ततो गच्छेत् स्नानं तत्र समाचरेत् ।
प्रीयते तस्य नन्दीशः सोमलोके महीयते ॥८४
ततो गच्छेत राजेन्द्र तीर्थं त्वनरकं शुभम् ।
तत्र स्नात्वा नरो राजन् नरकं नैव पश्यति ॥८५
तस्मिंस्तीर्थे तु राजेन्द्र स्वान्यस्थीनि विनिक्षिपेत् ।
रूपवान् जायते लोके धनभोगसमन्वितः ॥८६
ततो गच्छेत राजेन्द्र कपिलातीर्थमुत्तमम् ।
तत्र स्नात्वा नरो राजन् गोसहस्रफलं लभेत् ॥८७
ज्येष्ठमासे तु संप्राप्ते चतुर्दश्यां विशेषतः ।
तत्रोपोष्य नरो भक्त्या दद्याद् दीपं घृतेन तु ॥८८
घृतेन स्नापयेद् रुद्रं सघृतं श्रीफलं दहेत् ।
घण्टाभरणसंयुक्तां कपिलां वै प्रदापयेत् ॥८९
सर्वाभरणसंयुक्तः सर्वदेवनमस्कृतः ।
शिवतुल्यबलो भूत्वा शिववत् क्रीडते चिरम् ॥९०
अङ्गारकदिने प्राप्ते चतुर्थ्यां तु विशेषतः ।
स्नापयित्वा शिवं दद्याद् ब्राह्मणेभ्यस्तु भोजनम् ॥९१
सर्वभोगसमायुक्तो विमानैः सार्वकामिकैः ।
गत्वा शक्रस्य भवनं शक्रेण सह मोदते ॥९२
ततः स्वर्गात् परिभ्रष्टो धनवान् भोगवान् भवेत् ।
अङ्गारकनवम्यां तु अमावास्यां तथैव च ।
स्नापयेत् तत्र यत्नेन रूपवान् सुभगो भवेत् ॥९३
ततो गच्छेत राजेन्द्र गणेश्वरमनुत्तमम् ।
श्रावणे मासि संप्राप्ते कृष्णपक्षे चतुर्दशी ॥९४
स्नातमात्रो नरस्तत्र रुद्रलोके महीयते ।
पितॄणां तर्पणं कृत्वा मुच्यतेऽसावृणत्रयात् ॥९५

---

८४. ब$_1$. ⊙ (द्र. ८२ पा. वि. ); दे$_{10}$. ⊙. –b) दे$_{1.8.9}$ न$_1$ द$_1$ ग्र$_2$ उ$_1$ मुवें. मुए. मुब. तत्र स्नानं (→स्नानं तत्र). –c) दे$_6$ स्थीयते, न$_1$ पीयन्ते, म$_1$ द्रियते (→प्रीयते); दे$_{1.3.4.6}$ न$_1$ ग्र$_2$ म$_1$ उ$_1$ मुवें. मुए. तत्र (→तस्य).

८५. ब$_1$. a ⊙(द्र. ८२ पा. वि.); दे$_4$. ⊙. –b) का$_1$ तं नरकं, ब$_2$ द$_1$ ग्र$_2$ उ$_1$ च नरकं, ब$_3$ हि नरकं (→त्वनरकं); ब$_1$ स्मृतं (→शुभं). –c) का$_1$ ततो (→नरो). –d) का$_1$ ब$_{1.3}$ दे$_{2.6}$ न$_1$ ते$_1$ तु न, ब$_2$ न च, दे$_3$ न स, द$_1$ ग्र$_2$ उ$_1$ न च (→नैव); दे$_{10}$ गच्छति (→पश्यति).

८६. ब$_1$. ८६a-९३d ⊙. –a) दे$_3$ तत्र, म$_1$ तस्य (→तस्मिन्); दे$_3$ स्नात्वा (→तीर्थे). –b) का$_1$ यान्य°, दे$_6$ स्वाम्य° (→स्वान्य°). –d) दे$_3$ जनो, द$_1$ ग्र$_2$ म$_1$ उ$_1$ यान- (→धन-); दे$_{10}$ °भक्ति°, न$_1$ °लोभ° (→°भोग°).

८७. ब$_1$. ⊙ (द्र. ८६ पा. वि.). –c) दे$_3$ तत्र स्नात्वा तु राजेन्द्र.

८८. ब$_1$. ⊙ (द्र. ८६ पा. वि.). –a) का$_1$ ज्येष्ठे (→ज्येष्ठ-). –c) ग्र$_2$ शुचिर् (→नरो); ते$_1$ राजन् (→भक्त्या). –d) दे$_{1.8-10}$ ते$_1$ म$_1$ उ$_1$ मुवें. मुए. मुब. दत्त्वा (→दद्याद्).

८९. ब$_1$. ⊙ (द्र. ८६ पा. वि.). –a) का$_1$ ग्र$_2$ स्थापयेद् (→स्नापयेद्). –b) का$_1$ दे$_{1.8-10}$ मुवें. मुए. ततो वै (→सघृतं); दे$_{1.8.9}$ ग्र$_2$ उ$_1$ मुवें. मुए. मुब. लभेत्, दे$_{10}$ ते$_1$ ददेत्, द$_1$ हरेत् (→दहेत्). –c) न$_1$ देहा-, ते$_1$ कण्ठा-, उ$_1$ स्वर्णा- (→घण्टा-). –d) का$_1$ कपिलां विप्राय दापयेत्, ब$_3$ दे$_6$ कपिलां वि(दे$_6$ स)प्रदाय तु, न$_1$ कपिलायै प्रदाय तु, ते$_1$ कपिलां विप्रदापयेत्, द$_1$ ग्र$_2$ म$_1$ उ$_1$ कपिलां चैव प्रदापयेत्.

९०. ब$_1$. ⊙ (द्र. ८६ पा. वि.). –a) का$_1$ ब$_{2.3}$ दे$_{2.6}$ न$_1$ ते$_1$ सर्वपापविनिर्मुक्तः. –d) दे$_{1.3.6.8-10}$ न$_1$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ मुवें. मुए. मुब. सदा, दे$_4$ सह (→चिरं).

९१. ब$_1$. ⊙ (द्र. ८६ पा. वि.). –a) दे$_{10}$ अङ्गारके (→अङ्गारक-). –b) द$_1$ ग्र$_2$ म$_1$ उ$_1$ चतुर्दश्यां (→चतुर्थ्यां तु). –c) दे$_6$ देवं (→दद्याद्). –d) दे$_6$ दद्याद् ब्राह्मणभोजनम्.

९२. ब$_1$. ⊙ (द्र. ८६ पा. वि.). –a) दे$_{1.8-10}$ मुवें. मुए. °देव° (→°भोग°). –b) ब$_2$ दे$_{1.8-10}$ विमाने (→विमानैः); का$_1$ ब$_3$ दे$_{6.8}$ न$_1$ मुवें. मुए. मुब. सर्व- (→सार्व-); दे$_{1.8-10}$ मुवें. मुए. मुब. °कामिके, द$_1$ °कालिकैः, ग्र$_2$ उ$_1$ °गायकैः (ग्र$_2$ °के) (→°कामिकैः). –c) दे$_{1.8-10}$ °भुवनं (→°भवनं); म$_1$ गत्वा च देवभवनं. –d) म$_1$ शंकरेण सह मोदते.

९३. ब$_1$. ⊙ (द्र. ८६ पा. वि.). –b) दे$_1$ धृतवान्, मुवें. मुए. धृतिमान् (→धनवान्); ते$_1$ धान्यवान् (→भोगवान्). –c) न$_1$ कृष्णपक्षे नवम्यां तु. –d) का$_1$ ब$_{2.3}$ दे$_{3.8.10}$ न$_1$ द$_1$ ग्र$_2$ उ$_1$ मुवें. मुए. मुब. अमावस्यां, दे$_9$ अमायां तु, + अमावास्यां (→अमावास्यां). –e) दे$_3$ स्नायाच्च (→स्नापयेत्). –f) दे$_3$ द$_1$ ग्र$_2$ उ$_1$ भोगवान् (→सुभगो).

९४. न$_1$. cd ⊙. –c) दे$_3$ नियतः (→संप्राप्ते). –d) ब$_2$ दे$_2$ शुक्ल- (→कृष्ण-); ब$_{1.2}$ ते$_1$ म$_1$ चतुर्दशीं (→चतुर्दशी).

९५. न$_1$. ⊙. –a) दे$_{3.6}$ द$_1$ म$_1$ स्नान- (→स्नात-). –b) दे$_{1.8-10}$ ब्रह्म°, दे$_3$ इन्द्र° (→रुद्र°). –d) का$_1$ ब$_1$ दे$_3$ द$_1$ म$_1$ उ$_1$ मुवें. मुए. मुब. स-, दे$_1$ ग्र$_2$ च, ते$_1$ स्म. (→[अ]सौ).

गङ्गेश्वरसमीपे तु गङ्गावदनमुत्तमम् ।
अकामो वा सकामो वा तत्र स्नात्वा तु मानवः ।
आजन्मजनितैः पापैर्मुच्यते नात्र संशयः ॥९६
तस्य वै पश्चिमे देशे समीपे नातिदूरतः ।
दशाश्वमेधिकं तीर्थं त्रिषु लोकेषु विश्रुतम् ॥९७
उपोष्य रजनीमेकां मासि भाद्रपदे शुभे ।
अमावस्यां नरः स्नात्वा पूजयेद् वृषभध्वजम् ॥९८
काञ्चनेन विमानेन किङ्किणीजालमालिना ।
गत्वा रुद्रपुरं रम्यं रुद्रेण सह मोदते ॥९९
सर्वत्र सर्वदिवसे स्नानं तत्र समाचरेत् ।
पितॄणां तर्पणं कुर्यादश्वमेधफलं लभेत् ॥१००

इति श्रीकूर्मपुराणे षट्साहस्त्र्यां संहितायामुपरिविभागे एकोनचत्वारिंशोऽध्यायः ॥३९॥

# ४०

**मार्कण्डेय उवाच ।**❀

ततो गच्छेत राजेन्द्र भृगुतीर्थमनुत्तमम् ।
तत्र देवो भृगुः पूर्वं रुद्रमाराधयत् पुरा ॥१
दर्शनात् तस्य देवस्य सद्यः पापात् प्रमुच्यते ।
एतत् क्षेत्रं सुविपुलं सर्वपापप्रणाशनम् ॥२
तत्र स्नात्वा दिवं यान्ति ये मृतास्तेऽपुनर्भवाः ।

वें.२.४२.३

---

९६. न1. ab ⊙. –a) म1 गङ्गेश्वरमिति ख्यातं. –b) दे3 °वहन° (→°वदन°); ते1 गङ्गाह्लदमनुत्तमम्. –d) द1 ग्र2 स्नायात्तु (→स्नात्वा तु).

९७. –a) ते1 तस्यैव (→तस्य वै); दे1.4.8.9 मुवें. मुए. मुब. भागे (→देशे).

९८. –b) का1 ब2.3 दे2.6 मासे, न1 महा- (→मासि). –c) ब1.2 दे1.2.6.8.9 ते1 ग्र2 मुब. अमावास्यां, दे3 अमायां तु (→अमावस्यां); दे1.4.8-10 द1 ग्र2 म1 उ1 मुवें. मुए. हरं (→नरः); दे1.8-10 न1 मुवें. मुए. मुब. स्नाप्य (→स्नात्वा). –d) दे1.8-10 न1 मुवें. मुए. मुब. गोवृषध्वजं (→वृषभध्वजम्); म1 पूजयानो वृषध्वजं.

९९. –b) का1 °मालिनः, दे4 °शोभना, दे6.10 न1 °मालिनी (→°मालिना). –c) ब2 °पुरीं, दे3 °पदं, ग्र2 °वनं (→°पुरं); ब2 रम्यां, दे1 रम्ये (→रम्यं).

१००. –a) म1 सर्वत्र सप्तदिवसं. –c) दे1.3.8-10 न1 मुवें. मुए. मुब. कृत्वा (→कुर्याद्). –d) दे1.8-10 मुवें. मुए. मुब. चाश्व (→अश्व-).

**पुष्पिका**—[द1 पुस्तके अध्यायसमाप्तिर्नास्ति]

**पुराणनाम**—का1 दे2.4.6.10 न1 इति श्रीकू(दे2 °कौ)र्म-पुराणे, ब1-3 दे3 इति कूर्मपुराणे, दे1 इति श्रीकूर्मपुराणे उपरिविभागे, दे8.9 ग्र2 म1 उ1 इति श्रीकूर्मपुराणे उपरिभागे, ते1 इत्यादिमहापुराणे श्रीकौर्मे, मुवें. इति श्रीकूर्मपुराणे उत्तरार्धे, मुए. इति श्रीकूर्मपुराणे उपविभागे, मुब. इति श्रीकौर्मे महापुराणे उपरिभागे. **अध्यायनाम**—दे3 न1 ते1 म1. ⊙; का1 ब1-3 दे1.2.4.6.8-10 उ1 मुवें. मुए. नर्मदामाहात्म्ये, ग्र2 नर्मदा-माहात्म्यं नाम, मुब. नर्मदातीर्थमाहात्म्यं नाम. **अध्यायसंख्या**—ब2 दे6. ⊙; का1 ब1.3 दे2 अष्टत्रिंशोऽध्यायः, दे1.8-10 ग्र2 म1 एकचत्वारिंशोऽध्यायः, दे3 द्विचत्वारिंशोऽध्यायः ॥४२॥, दे4 मुए. चत्वारिंशोऽध्यायः, न1 नवतितमोऽध्यायः, ते1 एकोन-चत्वारिंशोऽध्यायः, उ1 एकचत्वारिंशोऽध्यायः ॥श्री॥, मुवें. एकचत्वारिंशोऽध्यायः ॥४१॥, मुब. एकोनचत्वारिंशो-ऽध्यायः ॥३९॥

**४०**

[दे4 पुस्तके अध्यायोऽयं नास्ति]

❀ दे4 द1. ⊙; न1 सूतः; ते1 श्रीशिवः,+मार्कण्डेयः; ग्र2 उ1 मार्कण्डेयः; म1 श्रीमारकण्डेयः.

१. –c) का1 ब2.3 दे2.3.6.10 न1 ते1 ग्र2 म1 उ1 यत्र (→तत्र); का1 ब1-3 दे2.3.6 ते1 द1 ग्र2 म1 मुब. देवं (→देवो); का1 ब2.3 दे2 न1 मुब. भर्गं, ब1 दे6 भंगं (दे6 °ग्य), दे10 पूर्वे, ते1 भीमं (→पूर्वं). –d) ग्र2 आराधयेत् (→आराधयत्); द1 ग्र2 उ1 तदा, म1 प्रभुः (→पुरा).

२. ब1. २a–३b ⊙. –a) दे3 न1 द1 ग्र2 तत्र (→तस्य); न1 रुद्रस्य (→देवस्य). –b) ते1 सर्वदुःखात्प्रमुच्यते. –c) का1 म1 तु (→सु-); उ1 °विमलं (→°विपुलं). –b) ब2 विनाशनं (→प्रणाशनं).

३. ब1. ab ⊙. –b) ग्र2 भूतास् (→मृतास्). –c) दे1.8.9 न1 ग्र2 मुवें. मुए. मुब. उपानहौ तथा, ते1 उपानहस्तथो

वें.२.४२.३ उपानहोस्तथा युग्मं देयमन्नं सकाञ्चनम् ।
भोजनं च यथाशक्ति तदस्याक्षयमुच्यते ।।३
क्षरन्ति सर्वदानानि यज्ञदानं तपः क्रिया ।
अक्षयं तत् तपस्तप्तं भृगुतीर्थे युधिष्ठिर ।।४
तस्यैव तपसोग्रेण तुष्टेन त्रिपुरारिणा ।
सान्निध्यं तत्र कथितं भृगुतीर्थे युधिष्ठिर ।।५
ततो गच्छेत राजेन्द्र गौतमेश्वरमुत्तमम् ।
यत्राराध्य त्रिशूलाङ्कं गौतमः सिद्धिमाप्नुयात् ।।६
तत्र स्नात्वा नरो राजन् उपवासपरायणः ।
काञ्चनेन विमानेन ब्रह्मलोके महीयते ।।७
वृषोत्सर्गं ततो गच्छेच्छाश्वतं पदमाप्नुयात् ।
न जानन्ति नरा मूढा विष्णोर्मायाविमोहिताः ।।८
धौतपापं ततो गच्छेद् धौतं यत्र वृषेण तु ।
नर्मदायां स्थितं राजन् सर्वपातकनाशनम् ।
तत्र तीर्थे नरः स्नात्वा ब्रह्महत्यां व्यपोहति ।।९
तत्र तीर्थे तु राजेन्द्र प्राणत्यागं करोति यः ।
चतुर्भुजस्त्रिनेत्रश्च हरतुल्यबलो भवेत् ।।१०
वसेत् कल्पायुतं साग्रं शिवतुल्यपराक्रमः ।
कालेन महता जातः पृथिव्यामेकराड् भवेत् ।।११
ततो गच्छेत राजेन्द्र हंसतीर्थमनुत्तमम् ।
तत्र स्नात्वा नरो राजन् ब्रह्मलोके महीयते ।।१२
ततो गच्छेत राजेन्द्र सिद्धो यत्र जनार्दनः ।
वराहतीर्थमाख्यातं विष्णुलोकगतिप्रदम् ।।१३
ततो गच्छेत राजेन्द्र चन्द्रतीर्थमनुत्तमम् ।
पौर्णमास्यां विशेषेण स्नानं तत्र समाचरेत् ।
स्नातमात्रो नरस्तत्र चन्द्रलोके महीयते ।।१४

---

(→उपानहोस्तथा); दे1 पुण्यं, दे9 मुए. युग्यं (→युग्मं). –d) दे1.8-10 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. च, न1 सु- (→स-). –e) दे10 न1 यथाशक्त्या (→यथाशक्ति). –f) दे1.8.9 उ1 मुवें. मुए. तस्याप्यक्षयमुच्यते.

४. –a) म1 °पापानि (→°दानानि). –b) द1 म1 यज्ञं (→यज्ञ-); ब1-3 दे2.3.6 -दान- (→-दानं); ब2 दे1-3.8.9 क्रियाः (→क्रिया). –c) का1 ब1-3 दे2.3.10 न1 ते1 मुब. न क्षेरद्, दे6 नक्षत्रे (→अक्षयं); ब1 दे2.3.10 न1 ते1 यस्तपस्, ब2.3 मुब. यत्तपस्, द1 म1 तु तपस् (→तत्तपस्). –d) द1 ग्र2 गुह्यार्थे युधिष्ठिर.

५. दे1.2.6.10. ⊙ (द. सं.). –b) का1 दे3.8.9 द1 ग्र2 म1 उ1 मुवें. मुए. रुद्रेण, ते1 तिष्ठेत्तु (→तुष्टेन). –c) दे3 विहितं, ग्र2 कथितः (→कथितं). –d) ब1 ग्र2 युधिष्ठिरः (→युधिष्ठिर)

६. –b) दे6 गौडीशेश्वरमुत्तमम्. –c) द1 यत्राराध्यं (→यत्राराध्य); दे3 शिवं देवं, दे6 त्रिशूलाङ्गं (→त्रिशूलाङ्कं). –d) ब1 दे3 ते1 द1 म1 मुवें. आप्तवान् (→आप्नुयात्).

७. –b) द1 ग्र2 उ1 उपवाससमन्वितः. –d) द1 ग्र2 म1 उ1 रुद्रलोके महीयते.

८. ब1. ⊙. –b) ब2.3 दे2 ते1 शाश्वतीं, दे10 शासनं (→शाश्वतं); का1 ब2.3 दे2.6 ते1 गतिं (→पदं). –c) का1 नरो मूढा विमूढात्मा. –d) दे3 द1 म1 विष्णुमाया (→विष्णोर्माया°).

९. –b) ब3 दे2.6 च (→तु); ब3 धौतं यत्र वृषेऽपि च, म1 धौतं यत्र वसेन्नरः. –c) का1 द1 उ1 स्थिरा (द1 °रां), दे3 ग्र2 अर्घं (→स्थितं). –d) दे3 ग्र2 सर्वपापप्रणाशनं. –e) का1 ब1-3 दे1.2.5.8-10 न1 ते1 मुए. मुब. विमुञ्चति (→व्यपोहति).

१०. दे6 न1. ⊙. –a) का1 दे3 तस्मिन्, ब1 ते1 म1 तपस् (→तत्र); का1 तीर्थेन, ब1 ग्र2 उ1 तीर्थेषु (→तीर्थे तु). –b) म1 -हत्यां (→-त्यागं). –c). दे3 ते1 त्रिणेत्रस्तु, दे10 त्रिनेत्रस्य, उ1 त्रिनेत्रं च (→त्रिनेत्रश्च); दे10 व्रजो, उ1 ततो, म1 स वै (→-बलो); द1 हरेत् (→भवेत्).

११. ब1 दे6 न1. ⊙. –b) ब2 शिवभक्तिपरायणः, दे3 शिवतुल्यबलो दिवि. –c) द1 ग्र2 म1 उ1 स्नातमात्रो नरस्तत्र.

१२. द1 ग्र2. ⊙. –b) दे3 इन्द्र-, मुवें. मुए. मुब. हस्त- (→हंस-). –c) ब2 लोको (→राजन्).

१३. ब1 ग्र2. ⊙. –b) दे1.8-10 न1 मुवें. मुए. मुब. यत्र सिद्धो, दे6 सिद्धौ यत्र (→सिद्धो यत्र). –c) का1 ब2.3 दे1.3.8.9 व(दे9 वा)राहं, दे2.6 वाराह- (→वराह-); दे3 अतुलं (→आख्यातं). –d) दे6 °लोके (→°लोक-).

१४. दे3. ⊙; दे6. cdef ⊙; ब1 दे1.6.8-10 ग्र2 मुवें. मुए. ef ⊙. –d) ते1 द1 ग्र2 म1 उ1 तत्र (उ1 °स्य) स्नानं (→स्नानं तत्र). –f) का1 ब्रह्मलोके (→चन्द्रलोके).

अतः परं ग्र2 पुस्तके १२cd, १३, १५ श्लोकाः समागताः सन्ति ।

ततो गच्छेत राजेन्द्र कन्यातीर्थमनुत्तमम् ।
शुक्लपक्षे तृतीयायां स्नानं तत्र समाचरेत् ।
स्नातमात्रो नरस्तत्र पृथिव्यामेकराड् भवेत् ॥१५
देवतीर्थं ततो गच्छेत् सर्वदेवनमस्कृतम् ।
तत्र स्नात्वा च राजेन्द्र दैवतैः सह मोदते ॥१६
ततो गच्छेत राजेन्द्र शिखितीर्थमनुत्तमम् ।
यत् तत्र दीयते दानं सर्वं कोटिगुणं भवेत् ॥१७
ततो गच्छेत राजेन्द्र तीर्थं पैतामहं शुभम् ।
यत्तत्र क्रियते श्राद्धं सर्वं तदक्षयं भवेत् ॥१८
सावित्रीतीर्थमासाद्य यस्तु प्राणान् परित्यजेत् ।
विधूय सर्वपापानि ब्रह्मलोके महीयते ॥१९
मनोहरं तु तत्रैव तीर्थं परमशोभनम् ।
तत्र स्नात्वा नरो राजन् दैवतैः सह मोदते ॥२०
ततो गच्छेत राजेन्द्र मानसं तीर्थमुत्तमम् ।
स्नात्वा तत्र नरो राजन् रुद्रलोके महीयते ॥२१
स्वर्गबिन्दुं ततो गच्छेत्तीर्थं देवनमस्कृतम् ।
तत्र स्नात्वा नरो राजन् दुर्गतिं नैव गच्छति ॥२२
अप्सरेशं ततो गच्छेत् स्नानं तत्र समाचरेत् ।
क्रीडते नाकलोकस्थो ह्यप्सरोभिः स मोदते ॥२३
ततो गच्छेत राजेन्द्र भारभूतिमनुत्तमम् ।
उपोषितोऽर्चयेदीशं रुद्रलोके महीयते ।
अस्मिंस्तीर्थे मृतो राजन् गाणपत्यमवाप्नुयात् ॥२४ वें.२.४१.२६

अतः परं १३ श्लोकमागतम्.

१५. ब1.3 दे1-3.8-10 न1 मुवें. मुए. मुब. abcd ⊙; दे6. ab ⊙. –d) दे2 स्नानमात्रं (→स्नानं तत्र).

अतः परं द1 म1 पुस्तके अधिकम्—

59. * महाराज ततो गच्छेत् भर्गतीर्थमनुत्तमम् ।

१६. ब3 मुब. पुस्तकयोः १६-२० श्लोकाः २१ श्लोकानन्तरमागताः सन्ति; दे3. ⊙; म1. ab ⊙; का1. d ⊙. –a) का1 वेद- (→देव-); द1 ग्र2 उ1 अथो (→ततो). –b) ब1 दे1.4.8-10 न1 द1 ग्र2 उ1 मुवें. मुए. °तीर्थ°, ते1 °लोक° (→°देव°). –c) का1 ब1.2 दे2.6 न1 ते1 तु राजेन्द्र, द1 ग्र2 उ1 नरो राजन्, म1 ततो राजन् (→च राजेन्द्र).

१७. का1 ब1. दे1.3 मुब.⊙.–b) दे2.6 शाखा°, दे8-10 मुवें. मुए. शङ्खि° (→शिखि°). –c) ते1 तत्र यद्दीयते दानं. –d) द1 ग्र2 तच्च (→सर्वं).

१८. दे1. ⊙; का1. a ⊙. –b) म1 तीर्थं त्रैलोक्य विश्रुतं, मुब. तीर्थं परमशोभनम्. –c) का1 दे2.3.8-10 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. दीयते (→क्रियते); का1 दे2 म1 दानं (→श्राद्धं). –d) का1 ब1 दे8-10 ग्र2 म1 मुवें. मुए. तस्याक्षयं, दे3 तच्चाक्षयं, द1 उ1 तत्राक्षयं (→तदक्षयं).

१९. –b) का1 दे2.3 विमुञ्चति (→परित्यजेत्).

२०. ब1. ⊙; दे1. cd. ⊙. –a) म1 मनोहरं तद्वदेव. –b) दे6 तीर्थानि पितामहं शुभं. –c) दे3 तत्र स्नात्वा तु राजेन्द्र. –d) का1 ब2.3 दे6.8-10 न1 ते1 द1 ग्र2 म1 मुवें. मुए. रुद्रलोके महीयते.

२१. न1 द1 ग्र2. ⊙; दे1. ab ⊙; ब3. cd ⊙; दे10. d ⊙. –b) उ1 मानसी- (→मानसं); का1 ब1-3 दे1.6.8-10 म1 मुवें. मुए. मुब. कन्यातीर्थमनुत्तमं. –c) दे1-3 तत्र स्नात्वा (→स्नात्वा तत्र). –d) का1 ब1.2 दे1.6.8-10 ते1 मुवें. मुए. मुब. सर्वपापैः प्रमुच्यते.

ब2 पुस्तके b, c मध्ये अधिकम्—

* तत्र स्नात्वा नरो राजन् रुद्रलोके महीयते (=२१cd)

60. *ततो गच्छेत राजेन्द्र कल्पतीर्थमनुत्तमम्

२१ श्लोकस्य b. c मध्ये ते1 अधिकम्

61. *पोषितोऽर्चयित्वेशं रुद्रलोके महीयते'। (=२४ cd)

अतः परं १५ab आवृत्तम्.

२१ श्लोकानन्तरं ब3 मुवें. मुए. मुब. पुस्तकेषु १५ ab वर्तते.

२२. म1 ग्र2 उ1. ⊙; दे10. abc ⊙. –a) का1 दे2 स्वर्गतीर्थं, ब2 स्वर्णबिन्दुं, दे1.8.9 मुवें. मुए. सर्गबिन्दुं, दे3 स्वर्गसिद्धि, दे6 स्वर्गमिन्द्रं (→स्वर्गबिन्दुं); द1 गत्वा (→गच्छेत्). –b) ब1 तीर्थं देवमनुत्तमं. –d) ब1 च न पश्यति, ब2 दे3.6 नैव पश्यति, दे1.8-10 ते1 मुवें. मुए. मुब. वै न पश्यति, द1 वै न गच्छति, म1 नाधिगच्छति (→नैव गच्छति).

२३. ब1 न1. ⊙. –a) दे3 गच्छेत्ततोप्सरस्तीर्थं, दे10 अप्सरो सततं गच्छेत्. –c) दे10 नागलोकस्थो, ते1 नाकलोकऽसौ, द1 ग्र2 म1 उ1 नागलोके च (→नाकलोकस्थो). –d) का1 दे2 त्वप्सरोभिः, दे10 अप्सरोभिः (→ह्यप्सरोभिः); ब2 समन्वितः, दे3 सुसेवितः, ते1 च मोदते (→स मोदते).

२४. –b) दे2.3 तपो भूमिं, दे6 भवभूतिं, ते1 भारज्योतिं, द1 ग्र2 उ1 नानुभूतिं, म1 भारभूमं (→भारभूतिं); का1 तपसो भूमिमुत्तमं, दे9 भारभूतिजमुत्तमं. –c) ब1-3 दे6 न1 [अ]र्चयित्वेशं, दे1.8-10 मुवें. मुए. मुब. यजेतेशं, ते1 [अ]र्चयित्वैवं (→[अ]र्चयेदीशं). –e) ब3 दे3 ते1 तस्मिन् (→अस्मिन्);

वें.२.४२.२७ कार्त्तिके मासि देवेशमर्चयेत् पार्वतीपतिम् ।
अश्वमेधाद् दशगुणं प्रवदन्ति मनीषिणः ॥२५
वृषभं यः प्रयच्छेत तत्र कुन्देन्दुसप्रभम् ।
वृषयुक्तेन यानेन रुद्रलोकं स गच्छति ॥२६
एतत् तीर्थं समासाद्य यस्तु प्राणान् परित्यजेत् ।
सर्वपापविशुद्धात्मा रुद्रलोकं स गच्छति ॥२७
जलप्रवेशं यः कुर्यात् तस्मिंस्तीर्थे नराधिप ।
हंसयुक्तेन यानेन स्वर्गलोकं स गच्छति ॥२८
एरण्डया नर्मदायास्तु संगमं लोकविश्रुतम् ।
तत्र तीर्थं महापुण्यं सर्वपापप्रणाशनम् ॥२९
उपवासपरो भूत्वा नित्यं व्रतपरायणः ।
तत्र स्नात्वा तु राजेन्द्र मुच्यते ब्रह्महत्यया ॥३०
ततो गच्छेत राजेन्द्र नर्मदोदधिसंगमम् ।
जमदग्निरिति ख्यातः सिद्धो यत्र जनार्दनः ॥३१
तत्र स्नात्वा नरो राजन् नर्मदोदधिसंगमे ।
त्रिगुणं चाश्वमेधस्य फलं प्राप्नोति मानवः ॥३२
ततो गच्छेत राजेन्द्र पिङ्गलेश्वरमुत्तमम् ।
तत्र स्नात्वा नरो राजन् रुद्रलोके महीयते ॥३३
तत्रोपवासं यः कृत्वा पश्येत विमलेश्वरम् ।
सप्तजन्मकृतं पापं हित्वा याति शिवालयम् ॥३४
ततो गच्छेत राजेन्द्र आलिकातीर्थमुत्तमम् ।
उपोष्य रजनीमेकां नियतो नियताशनः ।
अस्य तीर्थस्य माहात्म्यान्मुच्यते ब्रह्महत्यया ॥३५
एतानि तव संक्षेपात् प्राधान्यात् कथितानि तु ।
न शक्या विस्तराद् वक्तुं संख्या तीर्थेषु पाण्डव ॥३६
एषा पवित्रा विमला नदी त्रैलोक्यविश्रुता ।
नर्मदा सरितां श्रेष्ठा महादेवस्य वल्लभा ॥३७

---

ब1 मृते, द1 ग्र2 उ1 नरो (→मृतो). –f) दे6 द1 गणा° (→गाण°).

२५. ब1. ⊙. –b) ते1 अर्चयेत्पुरुषोत्तमम्. –d) ते1 प्रवदन्ति मुनीश्वराः,

२६. ब1. ⊙. –a) ब3 दे6 न1 ते1 द1 ग्र2 उ1 प्रयच्छेत्तु (→प्रयच्छेत); म1 वृषभं प्रयच्छते यस्तु. –b) का1 ब3 दे2.3 म1 °सन्निभं (ग्र2 °भः) (→°सप्रभं); ब2 कुन्देन्दुहंससन्निभं, ते1 तत्र कुण्डे तु सप्रभं, ग्र2 तत्र किञ्जल्कसन्निभः. –d) ब2.3 दे1.6.8-10 न1 ते1 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. रुद्रलोकं स गच्छति.

२७. ब1 द1 ग्र2 म1 उ1. ⊙. –b) का1 दे2 समुत्सृजेत् (→परित्यजेत्). –c) ब2.3 दे6 °विमुक्तात्मा, दे1.8-10 मुवें. मुए. मुब. °विनिर्मुक्तः (→°विशुद्धात्मा). –d) दे2 °लोके (→°लोकं).

२८. ब1 दे10 द1 ग्र2 म1. ⊙.–b) का1 दे2.3 समाहितः (→नराधिपः). –d) ब3 रुद्र°, ते1 ब्रह्म° (→स्वर्ग°).

२९. a) दे6 म1 परण्ड्यां न1 एरण्ड-, ते1 एरण्ड्यां, द1 ग्र2 उ1 परमं (→एरण्डया). –c) ब1.2 दे1.6.8-10 न1 ते1 मुवें. मुए. मुब. तच्च (→तत्र); द1 ग्र2 म1 उ1 तत्र (ग्र2 °च्च) तीर्थे नरो राजन्. –d) द1 म1 °प्रणाशने (→°प्रणाशनं).

३०. –a) दे1 °वृत्तो दे8.9 °व्रतो, मुवें. मुए. °कृतो (→°परो). –c) का1 दे2.3 तस्मिन् (→तत्र).

३१. ब1. ⊙; दे1.3. cd ⊙. –b) दे1 °संगमे (→°संगमम्); दे6 नर्मदादधिसंगमं, द1 नर्मदादेविसंगमं. –c) दे8-10 मुवें. मुए. मुब. जमदग्निमिति ख्यातं.

३२. न1. ⊙; दे1.3. ab ⊙. –a) दे2 तत्र स्नात्वा तु राजेन्द्र. –b) द1 ग्र2 उ1 नर्मदादेविसंगमे. –c) द1 वा° (→चा°). –d) दे2.3 द1 म1 उ1 आप्नोति (→प्राप्नोति).

३३. –b) का1 ब1-3 दे2.3.6 न1 ते1 द1 ग्र2 म1 उ1 मुब. विमले° (→पिङ्गले°). –d) दे1.8-10 ते1 मुवें. मुए. ब्रह्म° (→रुद्र°).

३४. ब1. ab ⊙. –a) दे2.3 ते1 ग्र2 कुर्यात् (→कृत्वा); का1 पश्यन्तं, ते1 पश्येद्वा (→पश्येत). –c) ब1-3 दे6 भित्त्वा (→हित्वा).

३५. –b) का1 दे2 शूलतीर्थमनुत्तमं, ब2.3 दे3 मुब. अलकातीर्थमुत्तमं; दे1.4.8.9 मुवें. मुए. अलितीर्थमनुत्तमं, दे6 द1 अलिकातीर्थमुत्तमं, न1 ग्र2 म1 उ1 कालिकातीर्थमुत्तमं, ते1 काशिकातीर्थमुत्तमं. –e) न1 ग्र2 उ1 माहात्म्यं (→माहात्म्यात्).

३६. –b) मुवें. मुए. मुब. च (→तु); द1 ग्र2 म1 उ1 पुण्यानि कथितानि तु. –c) ब2 शक्तो, दे6 द1 शक्याद्, दे2.10 शक्यो (→शक्या). –d) द1 ग्र2 उ1 तीर्थानि (→तीर्थेषु).

३७. –a) ब1 दे1.8-10 न1 द1 ग्र2 उ1 मुवें. मुए. मुब. विपुला (→विमला). –b) दे3 अपि (→नदी).

मनसा संस्मरेद्यस्तु नर्मदां वै युधिष्ठिर ।
चान्द्रायणशतं साग्रं लभते नात्र संशयः ॥३८
अश्रद्दधानाः पुरुषा नास्तिक्यं घोरमाश्रिताः ।
पतन्ति नरके घोरे इत्याह परमेश्वरः ॥३९
नर्मदां सेवते नित्यं स्वयं देवो महेश्वरः ।
तेन पुण्या नदी ज्ञेया ब्रह्महत्यापहारिणी ॥४०

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायामुपरिविभागे चत्वारिंशोऽध्यायः ॥४०॥

# ४१

सूत उवाच ।❀

इदं त्रैलोक्यविख्यातं तीर्थं नैमिशमुत्तमम् ।
महादेवप्रियकरं महापातकनाशनम् ॥१
महादेवं दिदृक्षूणामृषीणां परमेष्ठिनाम् ।
ब्रह्मणा निर्मितं स्थानं तपस्तप्तुं द्विजोत्तमाः ॥२
मरीचयोऽत्रयो विप्रा वसिष्ठाः क्रतवस्तथा ।
भृगवोऽङ्गिरसः पूर्वा ब्रह्माणं कमलोद्भवम् ॥३
समेत्य सर्ववरदं चतुर्मूर्तिं चतुर्मुखम् । वें.२.४३.४

३८. –a) दे6 य (→सं-). –c) का1 ब1-3 दे2.6 जीवं वर्ष-, ते1 राजसूय-, द1 चाद्रायणं (→चान्द्रायण-); दे3 °व्रतं (→°शतं).

३९. ब1. ⊙.–b) का1 दे10 नास्तिक्यां (→नास्तिक्यं). –c) उ1 तपन्ति (→पतन्ति); ब2.3 दे2.6 द1 म1 उ1 निरये (→नरके); ब3 दे3 ग्र2 मुवें. मुए. मुब. घोर (→घोरे).

४०. दे3. ab ⊙. –c) ते1 द1 म1 तेन पुण्येन विज्ञेया.

**पुष्पिका**—[द1 पुस्तके अध्यायसमाप्तिर्नास्ति]

**पुराणनाम**—का1 दे6.10 इति श्रीकू(का1 कौ)र्म पुराणे, ब1 इति कूर्मपुराणे उत्तरार्द्धे, ब2.3 दे2.3 इति कू (दे2 कौ)र्मपुराणे, दे1 इति श्रीकूर्मपुराणे उपरिभागे, दे8.9 ग्र2 म1 उ1 मुए. इति श्रीकूर्मपुराणे उपरि(मुए. वि)भागे, न1 इति श्रीकौर्मे, ते1 इत्यादिमहापुराणे श्रीकौर्मे, मुवें. इति श्रीकूर्मपुराणे उत्तरार्द्धे, मुब. इति श्रीकौर्मे महापुराणे उपरिभागे. **अध्यायनाम**—का1 दे3 न1 म1. ⊙; ब1 नर्मदामाहात्म्यं समाप्त, ब2 दे2 नर्मदामाहात्म्यं, ब3 दे1.6.8-10 ते1 ग्र2 उ1 मुवें. मुए. नर्मदामाहात्म्ये, मुब. नर्मदामाहात्म्यं नाम. **अध्यायसंख्या**—ब1.2 दे6. ⊙; का1 एकोनचत्वारिंशोध्यायः ॥३९॥ नर्मदामाहात्म्यमिति ॥, ब3 एकोनचत्वारिंशोऽध्यायः ॥०॥, दे1 द्विचत्वारिंशोऽध्यायः ॥३७॥, दे2 एकोनत्रिंशोऽध्यायः ॥ नर्मदामाहात्म्यं समाप्ता ।, दे3 त्रिचत्वारिंशोऽध्यायः ॥४३॥, दे8.9 ग्र2 म1 उ1 द्विचत्वारिंशोऽध्यायः, दे10 मुवें. द्विचत्वारिंशोऽध्यायः ॥४२॥, न1 एकनवतितमोऽध्यायः, ते1 चत्वारिंशोऽध्यायः, मुए. एकचत्वारिंशोऽध्यायः, मुब. चत्वारिंशोऽध्यायः ॥४०॥.

**४१**

❀ दे1.8.10 द1. ⊙; न1 उ1 सूतः; ते1 श्रीशिवः सूतः; ग्र2 म1 श्रीसूतः.

१. –b) का1 ब1-3 दे1-3.8-10 न1 ते1 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. नैमिष° (→नैमिश°); दे4 तीर्थं नैष्ठिकमुत्तमं, दे6 नैमिषं तीर्थमुत्तमं. –c) दे1.4.8-10 न1 म1 मुवें. मुए. मुब. °प्रियतरं (→°प्रियकरं).

२. –a) का1 ब1.2 दे2.3.6 न1 ते1 द1 ग्र2 उ1 पुरा, दे4 पर- (→महा-); दे2 -देव-, न1 -भृशं (→-देवं); म1 पुरा देवादिदेवेन. –b) ब3 ते1 द1 म1 उ1 मुवें. मुए. मुब. परमेष्ठिना, दे1.8-10 न1 परमेष्ठिनः (→परमेष्ठिनां); दे3 परमेष्ठिनमव्ययं. –d) ब1 दे1.6.8.10 न1 तप्तं (→तप्तुं); दे4.6 उ1 द्विजोत्तमः, न1 पुरा द्विजाः (→द्विजोत्तमाः).

३. –a) दे3 मरीचयस्त्रयो विप्राः, दे8-10 मा (दे9 म) रीचवोऽथ ये विप्राः, न1 अवीचयोऽत्रयो विप्राः, द1 भृगुर्मरीचयो विप्राः, ग्र2 श्रुत्वा मरीचयो विप्राः. –b) ब2.3 दे1.2.6.8.10 वासिष्ठा (→वसिष्ठाः); दे1.8-10 ध्रुवतस् (→क्रतवस्). –c) का1 ब1 दे1.4.8-10 न1 ते1 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. पूर्वं, दे3 पूर्वे (→पूर्वा). –d) दे4 ब्राह्मणाः (→ब्रह्माणं); उ1 कमले भवं (→कमलोद्भवम्).

४. –a) म1 संप्राप्य (→समेत्य); दे3 न1 सर्वे (→सर्व-); ब1 °वदनं (→°वरदं). –b) द1 ग्र2 उ1 चतुर्भुजं (→चतुर्मुखं).

वें.२.४३.४ पृच्छन्ति प्रणिपत्यैनं विश्वकर्माणमच्युतम् ॥४

षट्कुलीया ऊचुः ।❀

भगवन् देवमीशानं भर्गमेकं कपर्दिनम् ।
केनोपायेन पश्यामो ब्रूहि देवनमस्कृतम् ॥५

ब्रह्मोवाच ।❀

सत्रं सहस्रमासध्वं वाङ्मनोदोषवर्जिताः ।
देशं च वः प्रवक्ष्यामि यस्मिन् देशे चरिष्यथ ॥६
उक्त्वा मनोमयं चक्रं स सृष्ट्वा तानुवाच ह ।
क्षिप्तमेतन्मया चक्रमनुव्रजत मा चिरम् ।
यत्रास्य नेमिः शीर्येत स देशः पुरुषर्षभाः ॥७
ततो मुमोच तच्चक्रं ते च तत्समनुव्रजन् ।
तस्य वै व्रजतः क्षिप्रं यत्र नेमिरशीर्यत ।
नैमिशं तत्स्मृतं नाम्ना पुण्यं सर्वत्र पूजितम् ॥८
सिद्धचारणसंकीर्णं यक्षगन्धर्वसेवितम् ।
स्थानं भगवतः शंभोरेतन्नैमिशमुत्तमम् ॥९
अत्र देवाः सगन्धर्वाः सयक्षोरगराक्षसाः ।
तपस्तप्त्वा पुरा देवा लेभिरे प्रवरान् वरान् ॥१०
इमं देशं समाश्रित्य षट्कुलीयाः समाहिताः ।
सत्रेणाराध्य देवेशं दृष्टवन्तो महेश्वरम् ॥११
अत्र दानं तपस्तप्तं स्नानं जप्यादिकं च यत् ।
एकैकं पावयेत् पापं सप्तजन्मकृतं द्विजाः ॥१२

---

–c) दे1.8-10 प्रणयाच्चैनं, दे3 प्रणिपत्येशं, दे6 प्रतिपद्यैनं (→प्रणिपत्यैनं). –d) दे1.3.4.8-10 न1 द1 म1 उ1 मुवें. मुए. मुब. अव्ययं (→अच्युतं).

❀ ग्र2. ⊙; दे6 षंगुलीया ऊचुः; दे10 षडंगुलिया ऊचुः; द1 षट्कुलीयाः; म1 षट्कुलीनाः; उ1 षट्कुलीश्वराः.

५. –b) ब1-3 दे3.6 न1 ते1 भगवन्तं, दे1.8-10 मुवें. मुए. मुब. तमेवैकं, दे4 द1 ग्र2 म1 उ1 भवमेकं (द1 °वं) (→भर्गमेकं). –c) ब1-3 दे6 ते1 मुब. पश्येम, न1 पश्येत (→पश्यामो). –d) ब1-3 दे1.8.9 मुवें. मुए. मुब. °नमस्तव, दे3 °नमोऽस्तु ते, दे10 °पितामह, न1 °नमस्तवः, ते1 उ1 °नमस्कृतः, द1 ग्र2 °नमस्कृताः, म1 °नमस्कृत (→°नमस्कृतं).

❀ ते1. ⊙; दे8 ब्रह्मा उवाच; दे9 ब्रह्मा उचो; न1 ग्र2 म1 उ1 ब्रह्मा.

६. –a) दे4 शतं (→सत्रं); ब1-3 दे6 द1 म1 मुब. सत्रं महत्समासध्वं, ते1 सतां सह समारब्धं, ग्र2 स्त्रि*स्रहृत् समासता, उ1 स्तत्रे सहस्र***. –b) दे4 ग्र2 °वर्जितः (→°वर्जिताः). –c) म1 तु (→च); ब1 तं देशं वः प्रवक्ष्यामि, दे2 देशं तं वः प्रवक्ष्यामि, दे3 देवेशं तत्र पश्यामि, दे4 देशं तं च प्रवक्ष्यामि, दे6 देशं चरः प्रवक्ष्यामि, न1 ते1 देशं वः संप्रवक्ष्यामि, द1 ग्र2 उ1 देशं तपश्चरिष्यामि. –d) दे3 तस्मिन्देशे भविष्यति, ते1 यस्मिन्देशे वसिष्यथ, म1 समदेशं चरिष्यथ.

७. –a) का1 न1 द1 उक्ता, दे1.8.9 मुवें. मुए. मुब. मुक्त्वा, दे4 सृष्ट्वा, ते1 इदं (→उक्त्वा); ते1 वज्रं (→चक्रं). –b) ब1 संक्षिप्त्वा, ब3 न1 ग्र2 संसृष्ट्वा, दे1 संस्मृ*, दे4 द1 सदृष्ट्वा, दे6 समृष्ट्वा, दे8-10 ते1 उ1 मुवें. मुए. मुब. संस्पृष्ट्वा (→स सृष्ट्वा); दे10 तानु वाह च (→तानुवाच ह). –c) उ1 कर्म (→चक्रं). –d) का1 अनुप्रयात, ब2 उग्रं भजत, दे4 अनुचक्षत (→अनुव्रजत); उ1 अनुव्रजस्व हृत्समाः. –e) न1 यथास्य, ते1 यस्यात्र, द1 तत्रास्य (→यत्रास्य). –f) ब2.3 दे1.3.8-10 न1 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. स देशस्तपसः शुभः.

८. –a) दे1 ग्र2 तमो (→ततो); दे10 तं (→तत्). –b) दे1.6.8.9 समनुव्रजेत् (→समनुव्रजन्); दे3 ते ततः समनुव्रजन्, दे4 ते तच्चक्रमनुव्रजेत्. –c) द1 उ1 तस्यैवं (→तस्य वै). –d) दे4 तत्र (→यत्र). –e) का1 ब1-3 दे1.2.4.6.8-10 न1 ते1 म1 उ1 मुवें. मुए. मुब. नैमिषं (→नैमिशं); दे3 तत्कृतं, न1 तु कृति (→तत्स्मृतं); ते1 तीर्थं (→नाम्ना).

९. –a) दे1.6.8-10 मुवें. मुए. मुब. °संपूर्णं (→°संकीर्णं). –b) दे6 यत्र (→यक्ष-). –d) का1 ब1-3 दे1.2.4.6.8-10 न1 उ1 मुवें. मुए. मुब. नैमिषं (→नैमिशं).

१०. दे1. cd ⊙. –c) दे3 भृशं, ते1 सुराः, म1 परा (→पुरा). –d) ग्र2 पुरान् (→वरान्).

११. दे1. ⊙. –a) का1 ब1-3 दे2.6 ते1 समासाद्य (→समाश्रित्य). –c) दे4 तत्र चोपास्य, दे6 सत्रेणावाध्य, ते1 न तेनाराध्या, द1 ग्र2 अत्र चोपास्य, म1 शत्रेणोपास्य (→सत्रेणाराध्य).

१२. –a) का1 ब2.3 दे1.2.6.8-10 मुवें. अन्न-, दे4 ते1 द1 ग्र2 म1 उ1 तत्र (→अत्र); दे10 तीर्थं (→तप्तं). –b) का1 ब1-3 दे1.2.4.6.8-10 न1 ते1 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. श्राद्धं (→स्नानं); मुवें. मुए. मुब. यागादिकं (→जप्यादिकं). –c) का1 पावयेत्, + नाशयेत्, दे1.8-10 मुवें. मुए. मुब. नाशयेत् (→पावयेत्). –d) दे1.3.4.8-10 द1 ग्र2 म1 उ1 मुवें मुए. मुब. तथा (→द्विजाः).

अत्र पूर्वं स भगवानृषीणां सत्रमासताम् ।
प्रोवाच वायुर्ब्रह्माण्डं पुराणं ब्रह्मभाषितम् ॥१३
अत्र देवो महादेवो रुद्राण्या किल विश्वकृत् ।
रमतेऽद्यापि भगवान् प्रमथैः परिवारितः ॥१४
अत्र प्राणान् परित्यज्य नियमेन द्विजातयः ।
ब्रह्मलोकं गमिष्यन्ति यत्र गत्वा न जायते ॥१५
अन्यच्च तीर्थप्रवरं जाप्येश्वरमितिश्रुतम् ।
जजाप रुद्रमनिशं यत्र नन्दी महागणः ॥१६
प्रीतस्तस्य महादेवो देव्या सह पिनाकधृक् ।
ददावात्मसमानत्वं मृत्युवञ्चनमेव च ॥१७
अभूदृषिः स धर्मात्मा शिलादो नाम धर्मवित् ।
आराधयन्महादेवं पुत्रार्थं वृषभध्वजम् ॥१८
तस्य वर्षसहस्रान्ते तप्यमानस्य विश्वकृत् ।
शर्वः सोमो गणवृतो वरदोऽस्मीत्यभाषत ॥१९
स वव्रे वरमीशानं वरेण्यं गिरिजापतिम् ।
अयोनिजं मृत्युहीनं देहि पुत्रं त्वया समम् ॥२०
तथास्त्वित्याह भगवान् देव्या सह महेश्वरः ।
पश्यतस्तस्य विप्रर्षेरन्तर्द्धानं गतो हरः ॥२१
ततो यियक्षुः स्वां भूमिं शिलादो धर्मवित्तमः ।
चकर्ष लाङ्गलेनोर्वीं भित्त्वादृश्यत शोभनः ॥२२
संवर्त्तकानलप्रख्यः कुमारः प्रहसन्निव ।
रूपलावण्यसंपन्नस्तेजसा भासयन् दिशः ॥२३
कुमारतुल्योऽप्रतिमो मेघगम्भीरया गिरा ।
शिलादं तात तातेति प्राह नन्दी पुनः पुनः ॥२४ वें.२.४३.२५

१३. –a) म1 यत्र (→अत्र). –b) दे4 द1 ग्र2 उ1 ऋषीणां च समासतां. –c) दे1.8-10 मुवें. मुए. मुब. स वै प्रोवाच ब्रह्माण्डं, दे4 उवाच वाचं ब्रह्माण्डं, न1 द1 ग्र2 उ1 प्रोवाच वाचं ब्रह्माणं. –d) ते1 पूरयन्, द1 ग्र2 उ1 पुराणे (→पुराणं); का1 दे8 द1 मुवें. मुए. मुब. °भावितं (→°भाषितं).

१४. –a) म1 यत्र (→अत्र). –b) दे1.8.9 उ1 म1 मुवें. मुए. मुब. विश्वदृक्, दे3 विश्वसृट्, दे10 विश्वधृक्, न1 विश्वसृक्, + विश्वसृट्, द1 ग्र2 विश्वसृक् (→विश्वकृत्). –d) ग्र2 प्रमथैः सहितस्तदा.

१५. –b) ते1 द्विजोत्तमाः (→द्विजातयः). –d) न1 श्रुत्वा (→गत्वा); दे4 तत्रैव निवसन्ति ते, दे6 यत्र देवो न जायते.

१६. –b) ब1 दे4.6 न1 ते1 ग्र2 जप्ये° (→जाप्ये°); का1 ब1-3 दे2.6 ते1 द1 उ1 अनुत्तमं, ग्र2 इति स्मृतं (→इति श्रुतं). –d) दे1.8-10 मुब. यथा (→यत्र); ब1 महीगणः (→महागणः).

१७ –a) द1 ग्र2 म1 प्रीतो यस्य, उ1 प्रीते यस्य (→प्रीतस्तस्य). –b) ते1 °धृत् (→°धृक्). –c) का1 ब2.3 दे2.6.10 ते1 दत्त्वा चात्म°, न1 प्रददावात्म° (→ददावात्म°).

१८. –a) ब1 दे10 सु-(→स). –b) द1 शिलोदा (→शिलादो). –d) दे1.8-10 मुवें. मुए. प्रसादार्थं वृषध्वजं, द1 ग्र2 उ1 धर्मार्थं वृषभध्वजं.

१९. –a) ब2 अस्य (→तस्य). –b) दे1.3.8-10 मुवें. मुए. मुब. विश्वधृक, दे4 न1 उ1 विश्वसृक्, द1 ग्र2 म1 विश्वदृक् (→विश्वकृत्). –c) का1 ब1-3 दे1.4.6 सर्वः, ते1 शिवः (→शर्वः); ब3 सोम- (→सोमो); दे4 गणपतो (→गणवृतो); ग्र2 शर्वः साम्बो गुणयुतो.

२०. –a) दे4 द1 ग्र2 म1 उ1 तं (→स); दे4 परम्, ते1 देवं (→वरं). –b) दे3 वरेण्यं गिरिशं शिवं. –c) ब1 मृत्युतीतं (→मृत्युहीनं). –d) दे1.4.8-10 मुवें. मुए. मुब. याचे (→देहि).

२१. ब1 दे3. cd⊙. –a) न1 तवास्त्व°(→तथास्त्व°). –b) दे6 म1 महेश्वरं (→महेश्वरः). –c) ब2 ततस्तस्य तु विप्रर्षेर्.

२२. ते1. cd ⊙. –a) ग्र2 ततोऽथ यक्षः (→ततो यियक्षुः); द1 ग्र2 उ1 सो (→स्वां); का1 ततो यक्षस्तु स्वां भूमिं, दे1.8-10 मुवें. मुए. ततो युयोज तां भूमिं, दे4 ते1 ततोऽपि यज्ञः स्वां भूमिं, म1 ततो यियक्षुस्तं शंभुं. –b) ब1 शिलादो नाम वित्तमः. –c) दे1.8.9 चकर्षे (→चकर्ष); ग्र2 चकर्ष लाङ्गले चोर्वी. –d) का1 भृत्वा, दे3 भूत्वा, द1 हित्वा (→भित्त्वा); का1 लोचनः, ब1 तत्सुतः (→शोभनः); म1 भित्वा मृश्य तपोधन.

२३ ब1. ⊙; ते1. a ⊙. –a) दे4 ते1 °प्रख्यं (→°प्रख्यः); दे1.6 ग्र2 मुवें. मुए. मुब. संवर्त्तकोऽनलप्रख्यः. –d) का1 दे2.6 उ1 दिशं (→दिशः).

२४. ब1. ⊙. –a) दे4.10 ते1 कुमारतुल्यप्रतिमो. –d) ते1 नन्दी प्राह पुनः पुनः.

वें.२.४३.२६ तं दृष्ट्वा नन्दनं जातं शिलादः परिषस्वजे ।
मुनिभ्यो दर्शयामास ये तदाश्रमवासिनः ।।२५
जातकर्मादिकाः सर्वाः क्रियास्तस्य चकार ह ।
उपनीय यथाशास्त्रं वेदमध्यापयत् सुतम् ।।२६
अधीतवेदो भगवान् नन्दी मतिमनुत्तमाम् ।
चक्रे महेश्वरं द्रष्टुं जेष्ये मृत्युमिति प्रभुम् ।।२७
स गत्वा सरितं पुण्यामेकाग्रश्रद्धयान्वितः ।
जजाप रुद्रमनिशं महेशासक्तमानसः ।।२८
तस्य कोटयां तु पूर्णायां शंकरो भक्तवत्सलः ।
आगत्य साम्बः सगणो वरदोऽस्मीत्युवाच ह ।।२९
स वव्रे पुनरेवाहं जपेयं कोटिमीश्वरम् ।
तावदायुर्महादेव देहीति वरमीश्वर ।।३०
एवमस्त्विति संप्रोच्य देवोऽप्यन्तरधीयत ।
जजाप कोटिं भगवान् भूयस्तद्गतमानसः ।।३१
द्वितीयायां च कोटयां वै संपूर्णायां वृषध्वजः ।
आगत्य वरदोऽस्मीति प्राह भूतगणैर्वृतः ।।३२
तृतीयां जप्तुमिच्छामि कोटिं भूयोऽपि शंकर ।
तथास्त्वित्याह विश्वात्मा देवोऽप्यन्तरधीयत ।।३३
कोटित्रयेऽथ संपूर्णे देवः प्रीतमना भृशम् ।
आगत्य वरदोऽस्मीति प्राह भूतगणैर्वृतः ।।३४
जपेयं कोटिमन्यां वै भूयोऽपि तव तेजसा ।
इत्युक्ते भगवानाह न जप्तव्यं त्वया पुनः ।।३५

२५. ब1. ⊙. –a) का1 ब2.3 दे2.6 न1 ते1 द1 ग्र2 म1 उ1 नन्दिनं (→नन्दनं). –c) दे1.8-10 न1 ग्र2 मुवें. मुए. मुब. मुनीनां (→मुनिभ्यः). –d) दे1.8-10 उ1 मुवें. मुए. मुब. तत्राश्रमनिवासिनाम्, न1 तं तदाश्रमवासिनां.

२६. ब1. ⊙. –b) दे10 तत्र (→तस्य). –d) का1 ब2.3 दे2.6 न1 ते1 वेदानध्यापयत् (→वेदमध्यापयत्); ब2 दे1.3.4.8-10 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. स्वयम् (→सुतं).

२७. ब1. ab ⊙. –b) का1 ब3 दे1-3.4.6.8.9 ग्र2 अनुत्तमं (→अनुत्तमां). –c) ब1-3 दे1.3.6.8-10 न1 ते1 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. दृष्ट्वा (→द्रष्टुं). –d) दे3 जेतुं, द1 ग्र2 उ1 तो, दे6 ज्येष्ठो (→जेष्ये); दे1.8.9 मुवें. मुए. मृत्युमिव (→मृत्युमिति); दे4 ततो मृत्युमिवापरं.

२८. ब1. ⊙. –a) ते1 सोऽगच्छत् (→स गत्वा); दे1.8-10 मुवें. मुए. सागरं, दे3 [अ]थगिरिं, दे4 च गिरिं, न1 सरितां, द1 म1 उ1 स गिरिं, ग्र2 सागरीं (→सरितं); दे1.3.4.8-10 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. पुण्यं (→पुण्यां). –b) का1 दे1.6.8-10 न1 द1 मुवें. मुए. मुब. एकाग्रः, ब3 दे3 एकाग्रं, दे4 एकान्ते, म1 एकाकी (→एकाग्र-); उ1 °श्रद्धयान्वितं (→°श्रद्धयान्वितः).

२९. ब1. cd ⊙. –a) दे1.8-10 मुवें. मुए. मुब. च (→तु). –c) ग्र2 आगस्य (→आगत्य); दे1.8-10 मुवें. मुए. आगतः सर्व (दे8.9 °र्वः) स गणो. –d) दे1.3.4.8-10 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. वरदोऽस्मीत्य (दे4 °ति) भाषत, ते1 वरं ब्रूहि यमिच्छसि.

३०. ब1. ⊙; ते1. cd ⊙. –a) ब2 दे1.4.8-10 द1 ग्र1 म1 उ1 मुवें. मुए. मुब. पुनरेवे (दे10 °वै)शं, दे3 वरमप्येवं, न1 वरमेवाहं (→पुनरेवाहं). –b) ते1 ईश्वर (→ईश्वरं); दे3 जपेयं पुनरीश्वरं. –c) ब2 भवेदायुर्, दे1 भवदोहं, दे8-10 मुवें. मुए. भवदाहं (→तावदायुर्); द1 मुवें. मुए. मुब. महादेवं, ग्र2 महादेवो (→महादेव). –d) दे1.8-10 म1 मुवें. मुए. परमेश्वरं, दे3 परमेश्वर, दे4 न1 वरमीश्वरं (→वरमीश्वर).

३१. ब1. ⊙; ब2. cd ⊙. –d) म1 भवस् (→भूयस्).

३२. ब1.2. ⊙. –a) दे3.4 द1 उ1 तु (→च); दे1.8.9 कोट्यायां, दे4 कोट्यां च, ग्र2 द1 कोट्यां तु (→कोट्यां वै); ते1 द्वितीयायां तथा कोट्यां, म1 द्वितीयकोट्यां जातायां. –b) दे1.6.8-10 म1 पूर्णायां वृषभध्वजः, दे4 संपूर्णायां महेश्वरं, मुवें. मुए. मुब. पूर्णायां च वृषध्वजः. –d) म1 उ1 भूयो (→भूत-); दे3 प्राह भूयो वृषध्वजः.

३३. ब1.2 न1. ⊙. –a) ग्र2 त्रितयं, उ1 तृतीयं (→तृतीयां). –b) दे4.6.10 ग्र2 कोटि- (→कोटिं); म1 उ1 कोटिं भूयो महेश्वर. –d) दे1.3.4.8-10 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. देव्या (दे10 °व्यां) चान्तरधीयत.

३४. न1. ⊙; ब1.ab ⊙; दे6.d ⊙. –a) दे10 °त्रयेभ्यः, द1 ग्र2 °त्रयेषु (→°त्रयेऽथ); म1 स तृतीये तु संपूर्णे. –b) ते1 देव्याः, + देवः (→देवः); उ1 प्रीततमो (→प्रीतमना); द1 ग्र2 [अ]भवत् (→भृशं). –d) द1 भूयो, ग्र2 देवो (→भूत-).

३५. –a) ते1 यजेयं कोटिमात्रं वै. –c) ब2 दे2.3 ग्र2 इत्युक्तो (→इत्युक्ते). –d) द1 ग्र2 म1 उ1 [अ]नघ (→पुनः); दे3 जप्तव्या वै त्वयानघ.

अमरो जरया त्यक्तो मम पार्श्वगतः सदा ।
महागणपतिर्देव्याः पुत्रो भव महेश्वरः ॥३६
योगीश्वरो योगनेता गणानामीश्वरेश्वरः ।
सर्वलोकाधिपः श्रीमान् सर्वज्ञो मद्बलान्वितः ॥३७
ज्ञानं तन्मामकं दिव्यं हस्तामलकवत् तव ।
आभूतसंप्लवस्थायी ततो यास्यसि मत्पदम् ॥३८
एतदुक्त्वा महादेवो गणानाहूय शंकरः ।
अभिषेकेण युक्तेन नन्दीश्वरमयोजयत् ॥३९
उद्वाहयामास च तं स्वयमेव पिनाकधृक् ।
मरुतां च शुभां कन्यां सुयशेति च विश्रुताम् ॥४०
एतज्जप्येश्वरं स्थानं देवदेवस्य शूलिनः ।
यत्र तत्र मृतो मर्त्यो रुद्रलोके महीयते ॥४१　वें.२.४३.४२

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायामुपरिविभागे एकचत्वारिंशोऽध्यायः ॥४१॥

३६. –a) ते$_1$ अमरोऽजरयायुक्तो. –b) ब$_3$ दे$_{1.8-10}$ मुवें. मुए. पार्श्वे (→पार्श्व-); उ$_1$ पार्श्वचरः (→पार्श्वगतः). –d) दे$_3$ गणेश्वरः (→महेश्वरः); द$_1$ ग्र$_2$ म$_1$ तुष्टाव च महेश्वरं.

३७. ब$_1$. ⊙; दे$_{6.10}$. ab ⊙. –a) का$_1$ दे$_{1.4.8-10}$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ मुवें. मुए. योगेश्वरो (→योगीश्वरो); दे$_{1.8.9}$ मुवें. मुए. महायोगी, दे$_4$ योगमाता, म$_1$ योगवेत्ता, उ$_1$ योगरेता, मुब. योगनेत्रो (→योगनेता). –b) द$_1$ ग्र$_2$ उ$_1$ गणानामीश्वरः प्रभुः. –c) °लोकादिभिः, न$_1$ °लोकधिपतिः (→°लोकाधिपः). –d) दे$_{1.8-10}$ मुवें. मुए. सर्वयज्ञमयो हितः, दे$_4$ सर्वज्ञो मद्वलाश्रितः, ते$_1$ सर्वज्ञो मदनान्वितः, द$_1$ ग्र$_2$ सर्वज्ञानवलाश्रितः, उ$_1$ सर्वयज्ञवला श्रुतिः.

३८. ब$_1$. ⊙. –a) का$_1$ मुवें. तन्नामकं (→तन्मामकं). –b) दे$_{1.8-10}$ मुवें. मुए. हस्तामलक संज्ञिकं (मुवें. मुए. °तं), उ$_1$ हस्तामलकवर्जितं. –c) का$_1$ °व्यापी (→°स्थायी). –d) दे$_{10}$ तत्रोपास्यसि, न$_1$ ततो यास्यति (→ततो यास्यसि); का$_1$ दे$_{1.2.8.9}$ द$_1$ मुवें. मुए. मुब. तत्पदं (→मत्पदं).

३९. –a) का$_1$ ब$_{2.3}$ दे$_{2.6}$ न$_1$ ते$_1$ एवमुक्त्वा (→एतदुक्त्वा); ब$_1$ ततश्चकार भगवान्. –b) ते$_1$ गणनाथाय (→गणानाहूय). –d) ब$_3$ दे$_{10}$ नन्दीश्वरमयोजगत्.

४०. –a) ब$_1$ ततः, दे$_3$ च तां (→च तं). –b) दे$_3$ महेश्वरः (→पिनाकधृक्). –c) ते$_1$ वा (→च); ग्र$_2$ सुतं (→शुभां); दे$_3$ मरुत्वतां च तां कन्यां. –d) ब$_1$ दे$_{1.8-10}$ उ$_1$ मुवें. मुए. स्वयमेति च, ब$_2$ सुपथेति च, ब$_3$ दे$_6$ म$_1$ स्वयशेति च (→सुयशेति च); दे$_{4.10}$ विश्रुतं, मुवें. मुए. विष्णुतां (→विश्रुतां); दे$_3$ स्तूयतेति च विश्वतां.

४१. –a) का$_1$ दे$_{10}$ जपेश्वरं (→जप्येश्वरं). –c) न$_1$ म$_1$ मुवें. यत्र (→तत्र).

**पुष्पिका** :—[द$_1$ पुस्तके अध्यायसमाप्तिर्नास्ति]

**पुराणनाम**—का$_1$ दे$_{4.6.10}$ इति श्रीकूर्मपुराणे, ब$_1$ इत्यादिकौर्मे महापुराणे षट्साहस्र्यां संहितायां वैयासिक्यां, ब$_{2.3}$ दे$_{2.3}$ इति कू (दे$_2$ कौ)र्मपुराणे, दे$_1$ इति श्रीकूर्मपुराणे उपरि विभागे, दे$_{8.9}$ इति श्रीकूर्मपुराणे उत्तरखण्डे, न$_1$ इति श्रीकौर्मे, ते$_1$ इत्यादिमहापुराणे श्रीकौर्मे, ग्र$_2$ म$_1$ उ$_1$ मुए. इति श्रीकूर्मपुराणे उपरि(मुए. °वि)भागे, मुवें. इति श्रीकूर्मपुराणे उत्तरार्धे, मुब. इति श्रीकौर्मे महापुराणे उपरिभागे. **अध्यायनाम**—दे$_{3.4}$ म$_1$. ⊙. का$_1$ ब$_{2.3}$ दे$_{1.2.6.8-10}$ ते$_1$ मुवें. मुए. ज (का$_1$ जा) प्येश्वरमाहात्म्ये (दे$_1$ °त्म्यं), ब$_1$ न$_1$ जप्येश्वरमाहात्म्यं नाम, ग्र$_2$ श्रीनन्दिकेश्वरोत्पत्तौ, उ$_1$ नन्दीशोत्पत्तौ, मुब. नैमिषारण्ये जाप्येश्वर माहात्म्ये. **अध्यायसंख्या**—ब$_{1.2}$. दे$_6$. ⊙; का$_1$ चत्वारिंशोऽध्यायः ॥४०॥, ब$_3$ दे$_{2.4}$ चत्वारिंशोऽध्यायः, दे$_1$ त्रिचत्वारिंशोऽध्यायः ॥३७॥, दे$_{1.8.9}$ ग्र$_2$ म$_1$ त्रिचत्वारिंशोऽध्यायः, दे$_3$ चतुश्चत्वारिंशोऽध्यायः ॥४४॥, दे$_{10}$ मुवें. त्रिचत्वारिंशोऽध्यायः ॥४३॥, न$_1$ द्विनवतितमोऽध्यायः, ते$_1$ एकचत्वारिंशोऽध्यायः, उ$_1$ त्रिचत्वारिंशोऽध्यायः ॥श्री॥, मुए. द्विचत्वारिंशोऽध्यायः, मुब. एकचत्वारिंशोऽध्यायः ॥४०॥

# ४२

वें.२.४४.१

सूत उवाच ।❀

अन्यच्च तीर्थप्रवरं जप्येश्वरसमीपतः ।
नाम्ना पञ्चनदं पुण्यं सर्वपापप्रणाशनम् ।।१
त्रिरात्रोपोषितस्तत्र पूजयित्वा महेश्वरम् ।
सर्वपापविशुद्धात्मा रुद्रलोके महीयते ।।२
अन्यच्च तीर्थप्रवरं शंकरस्यामितौजसः ।
महाभैरवमित्युक्तं महापातकनाशनम् ।।३
तीर्थानां च परं तीर्थं वितस्ता परमा नदी ।
सर्वपापहरा पुण्या स्वयमेव गिरीन्द्रजा ।।४
तीर्थं पञ्चतपं नाम शंभोरमिततेजसः ।
यत्र देवादिदेवेन चक्रार्थं पूजितो भवः ।।५
पिण्डदानादिकं तत्र प्रेत्यानन्तफलप्रदम् ।
मृतस्तत्रापि नियमाद् ब्रह्मलोके महीयते ।।६
कायावरोहणं नाम महादेवालयं शुभम् ।
यत्र माहेश्वरा धर्मा मुनिभिः संप्रवर्त्तिताः ।।७
श्राद्धं दानं तपो होम उपवासस्तथाऽक्षयः ।
परित्यजति यः प्राणान् रुद्रलोकं स गच्छति ।।८
अन्यच्च तीर्थप्रवरं कन्यातीर्थमिति श्रुतम् ।
तत्र गत्वा त्यजेत् प्राणाँल्लोकान् प्राप्नोति शाश्वतान् ।।९
जामदग्न्यस्य तु शुभं रामस्याक्लिष्टकर्मणः ।
तत्र स्नात्वा तीर्थवरे गोसहस्रफलं लभेत् ।।१०

## ४२

[ब1. पुस्तके अध्यायोऽयं नास्ति]

❀ दे1.8.9 द1. ⊙; न1 ग्र2 उ1 सूतः; ते1 श्रीशिवः, + सूतः; म1 श्रीसूतः.

१. –a) दे10 °परमं (→°प्रवरं). –b) का1 ब2 दे2.4 ते1 म1 °समीपगं (→°समीपतः); ब2 जप्येश्वरमनुत्तमं, दे6 जप्येश्वरतदुत्तमं, ग्र2 जप्येश्वरसमन्वितः. –c) दे4 पंचबलं (→पंचनदं).

२. –a) दे1.8.9 मुवें. मुए. मुब. त्रिरात्रमुषितस्तत्र. –c) ब1.3 न1 °विनिर्मुक्तो, ब2 °विमुक्तात्मा (→°विशुद्धात्मा).

३. दे1.8-10. cd ⊙. –b) दे1.3.4.8-10 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. शक्रस्यामिततेजसः. –c) ते1 °कौरव° (→°भैरव°). –d) द1 उ1 सर्व- (→महा-); ग्र2 महापापप्रणाशनं.

४. दे1.8-10. ⊙. –a) दे3.4 न1 ग्र2 परमं, ते1 च वरं, द1 म1 प्रवरं (→च परं). –b) दे4 विश्रुता, द1 म1 विशस्ती, ग्र2 विशन्ति, उ1 विशस्त (→वितस्ता). –c) द1 उ1 रम्या (→पुण्या).

५. दे1.8-10. ab. ⊙. –a) ब2.3 दे4 न1 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. पंचतपो, ते1 परं तपं (→पञ्चतपं). –c) ब2 देवाति-, दे6.8-10 न1 मुवें. मुए. मुब. देवाधि- (→देवादि-); दे10 -देवैश (→-देवेन). –d) का1 दे1.8-10 मुवें. मुए. शकार्थं (दे1. मुवें. मुए. °र्थे), दे3 पुत्रार्थं, दे4 सर्वार्थं, उ1 चक्रार्थे (→चक्रार्थं); दे6 द1 ग्र2 उ1 हरः (ग्र2 °रिः) (→भवः).

६. –b) का1 द1 ग्र2 मुवें. मुए. मुब. प्रेत्यानन्द- (→प्रेत्यानन्त-); दे1.8.9 मुवें. मुए. मुब. °सुखप्रदं (→°फलप्रदं). –c) दे1.3.8-10 न1 ते1 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. तत्राथ (→तत्रापि); दे6 मृत्पुत्रापि नियमाद्.

७. –b) द1 ग्र2 परं, उ1 पुरं (→शुभं). –c) का1 तत्र (→यत्र); दे3.10 यत्र माहेश्वरो धर्मो, दे6 ग्र2 यत्र माहेश्वरं धर्मं. –d) का1 ब2.3 दे2.4.6 ते1 ग्र2 संप्रकीर्त्तिताः (दे6 °त) (→संप्रवर्त्तिताः).

८. दे4. ⊙; दे1. d ⊙. –a) उ1 श्राद्ध- (→श्राद्धं); का1 न1 ते1 जपो (→तपो); न1 ते1 द1 होमं (→होम). –b) द1 ग्र2 उ1 उपवासं (→उपवासस्); ब2 तदाक्षयः, दे1.8-10 न1 द1 ग्र2 तथाक्षयं, दे3 तथा जपः, म1 तपोऽक्षयं (→तथाक्षयः).

९. दे4. ⊙; दे1. abc ⊙; न1. ६b–१०d ⊙. –b) दे8-10 मुवें. मुए. मुब. कन्यातीर्थमनुत्तमं. –c) ब2.3 ते1 मुब. त्यजन् (→त्यजेत्). –d) का1 ब2.3 दे2.3.6 ते1 म1 मुब. आप्नोति (→प्राप्नोति); द1 ग्र2 उ1 पुष्कलान् (→शाश्वतान्).

१०. न1. ⊙. –a) दे1.4.8-10 मुवें. मुए. मुब. च (→तु). –b) दे10 रामस्य क्लिष्टकर्मणः. –c) ब2 तत्र स्नात्वा नरो राजन्, ते1 तत्र तीर्थवरे स्नात्वा.

महाकालमिति ख्यातं तीर्थं त्रैलोक्यविश्रुतम् ।
गत्वा प्राणान् परित्यज्य गाणपत्यमवाप्नुयात् ॥११
गुह्याद् गुह्यतमं तीर्थं नकुलीश्वरमुत्तमम् ।
तत्र सन्निहितः श्रीमान् भगवान् नकुलीश्वरः ॥१२
हिमवच्छिखरे रम्ये गङ्गाद्वारे सुशोभने ।
देव्या सह महादेवो नित्यं शिष्यैश्च संवृतः ॥१३
तत्र स्नात्वा महादेवं पूजयित्वा वृषध्वजम् ।
सर्वपापैर्विमुच्येत मृतस्तज्ज्ञानमाप्नुयात् ॥१४
अन्यच्च देवदेवस्य स्थानं पुण्यतमं शुभम् ।
भीमेश्वरमिति ख्यातं गत्वा मुञ्चति पातकम् ॥१५
तथान्यच्चण्डवेगायाः संभेदः पापनाशनः ।
तत्र स्नात्वा च पीत्वा च मुच्यते ब्रह्महत्यया ॥१६
सर्वेषामपि चैतेषां तीर्थानां परमा पुरी ।
नाम्ना वाराणसी दिव्या कोटिकोट्ययुताधिका ॥१७
तस्याः पुरस्तान्माहात्म्यं भाषितं वो मया त्विह ।
नान्यत्र लभ्यते मुक्तिर्योगिनाप्येकजन्मना ॥१८
एते प्राधान्यतः प्रोक्ता देशाः पापहरा नृणाम् ।
गत्वा संक्षालयेत् पापं जन्मान्तरशतैः कृतम् ॥१९
यः स्वधर्मान् परित्यज्य तीर्थसेवां करोति हि ।
न तस्य फलते तीर्थमिह लोके परत्र च ॥२०
प्रायश्चित्ती च विधुरस्तथा पापचरो गृही ।
प्रकुर्यात् तीर्थसंसेवां ये चान्ये तादृशा जनाः ॥२१ वे.२.४४.२१

---

११. –b) दे1.8-10 उ1 मुवें. मुए. मुब. लोकेषु (→त्रैलोक्य-). –d) दे2.8.9 द1 म1 गाणा° (→गाण°).

१२. –a) दे4 ग्र2 गुह्यतरं (→गुह्यतमं). –b) दे3 नकुले°, ते1 लकुले°, द1 कुलाली°, ग्र2 उ1 लकुली° (→नकुली°). –c) दे6 ततः, द1 ग्र2 उ1 यत्र (→तत्र). –d) का1 दे3 लकुले°, न1 ग्र2 म1 उ1 लकुली°, ते1 विमली° (→नकुली°).

१३. दे4. ⊙. –b) दे1.8-10 गङ्गाद्वारं सुशोभनं. –d) का1 सुव्रतः, दे1.8-10 मानवः, दे3 संयुतः, मुवें. मुए. संभृतः (→संवृतः); द1 ग्र2 म1 उ1 नित्यं वसति चेश्वरः.

१४. –c) ब2 दे3 मुब. प्रमुच्यते, दे1.8-10 द1 ग्र2 म1 उ1 मुवें. मुए. विशुद्ध्येत (→विमुच्येत). –d) का1 ब3 दे6 मृतस्तु ज्ञान°, दे3 मृतस्तद्भाव°, दे4 मृतस्तद्गत° (→मृतस्तज्ज्ञान°); ते1 मृतस्तु ज्ञानमवाप्नुयात्.

१५. –c) का1 ब2.3 दे2.6 भीमेश्वरः (→भीमेश्वरं). –d) ब2 दे3.4 मुच्येत (→मुञ्चति); द1 ग्र2 म1 उ1 स्नात्वा मुच्येत किल्बिषात्.

१६. दे4.ab ⊙. –a) दे1.6.8-10 म1 मुवें. मुए. मुब. तथान्यश्, दे3 द1 ग्र2 श्रथान्यश् (ग्र2 °न्यत्), ते1 तथापश् (→तथान्यत्); द1 ग्र2 चन्द्र° (→चण्ड°). –b) दे3 म1 संगमः (दे3 °मे), द1 ग्र2 उ1 सदेवः (→संभेदः); का1 ते1 °नाशनं, दे3 °नाशने (→°नाशनः). –c) का1 च मुच्येत, दे4 तु राजेन्द्र, ते1 जपित्वा च (→च पीत्वा च). –d) का1 ब्रह्महत्यां व्यपोहति.

१७. –b) दे3 तीर्थानां तीर्थमुत्तमं. –c) दे3 द1 ग्र2 म1 पुण्या (→दिव्या). –d) द1 ग्र2 दिव्य° (→कोटि°); दे3 म1 कोटिकोट्यधिकाधिका.

१८. –a) उ1 तस्यां (→तस्याः); ते1 पुर्यास्तु (→पुरस्तात्). –b) दे6 भावितं, ते1 भाषितुं (→भाषितं); दे6 द1 चोमया, न1 वा मया, ग्र2 उ1 च मया (→वो मया). –c) का1 ब2.3 दे1.3.4.6.8-10 न1 द1 ग्र2 उ1 मुवें. मुए. मुब. लभते, ते1 कुरुते (→लभ्यते); दे1.4.8-10 न1 ते1 द1 ग्र2 उ1 मुक्ति (→मुक्तिर्). –d) का1 योगिनां, दे4 न1 ते1 ग्र2 उ1 योगिनो, दे1.8-10 उ1 मुवें. मुए. मुब. योगेना- (→योगिना-).

१९. –a) दे4 एतत्, ते1 एताः (→एते); दे4 प्रायोन्यत, दे10 प्रधानतः (→प्राधान्यतः). –b) द1 ग्र2 उ1 शुभाः (→नृणां). –c) का1 कृत्वा (→गत्वा); ब2 प्रक्षालयेत्, दे1.8-10 संख्यां(दे8.9°ख्या)लयेत् (→संक्षालयेत्). –d) दे1.8-10 द1 ग्र2 उ1 मुवें. मुए. मुब. °शतैरपि (→°शतैः कृतम्).

२०. –a) दे3 ते1 यस्तु, द1 येत्व-, ग्र2 यस्य, म1 यश्च (→यः स्व-). –b) द1 ग्र2 उ1 तीर्थमेकं (→तीर्थसेवां); दे3 वै, म1 च (→हि). –c) ब2.3 दे2.6 फलदं, दे10 उ1 लभते (→फलते).

२१. –a) दे10 प्रायश्चित्तश्च (→प्रायश्चित्ती च); दे4 विधिधास् (→विधुरस्); ग्र2उ1 प्रायश्चित्तविधि परस् (ग्र2°रास्). –b) दे4.8-10 न1 मुवें. मुए. मुब. यायावरो. दे6 पापवरो द1 ग्र2 म1 उ1 पापप (उ1 *)रो (→पापचरो); द1 ग्रही (→गृही); दे3 तथा योगरतो भवेत्. –c) दे3 °सेवां तु, द1 ग्र2 उ1° संवासं (→°संसेवां). –d) म1 पापानां गोचरा जनाः, मुवें. मुए. मुब. यश्चान्यस्तादृशो जनः.

वें.२.४४.२२ सहाग्निर्वा सपत्नीको गच्छेत् तीर्थानि यत्नतः ।
सर्वपापविनिर्मुक्तो यथोक्तां गतिमाप्नुयात् ।।२२
ऋणानि त्रीण्यपाकृत्य कुर्याद् वा तीर्थसेवनम् ।
विधाय वृत्तिं पुत्राणां भार्यां तेषु निधाय च ।।२३
प्रायश्चित्तप्रसङ्गेन तीर्थमाहात्म्यमीरितम् ।
यः पठेच्छृणुयाद् वाऽपि मुच्यते सर्वपातकैः ।।२४

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायामुपरिविभागे द्विचत्वारिंशोऽध्यायः ।।४२।।

# ४३

सूत उवाच ।※
एतदाकर्ण्य विज्ञानं नारायणमुखेरितम् ।
कूर्मरूपधरं देवं पप्रच्छुर्मुनयः प्रभुम् ।।१
मुनय ऊचुः ।※
कथिता भवता धर्मा मोक्षज्ञानं सविस्तरम् ।
लोकानां सर्गविस्तारं वंशमन्वन्तराणि च ।।२
प्रतिसर्गमिदानीं नो वक्तुमर्हसि माधव ।
भूतानां भूतभव्येश यथा पूर्वं त्वयोदितम् ।।३

---

२१ श्लोकात् परं ते1 अधिकम्—

62. *वनेऽपि दोषाः प्रभवन्ति रागिणां गृहेऽपि पञ्चेन्द्रियनिग्रहस्तपः ।
अकुत्सिते कर्मणि यः प्रवर्त्तते निवृत्तरागस्य गृहं तपोवनम् ।

**२२.** –a) न1 यः (→वा). –b) म1 यानि वै (→यत्नतः). –d) दे6 ग्र2 यथोक्तं (→यथोक्तां).

**२३.** –a) ब2 अपाहृत्य, दे1.8-10 मुवें. मुए. अपाकुर्यात् (→अपाकृत्य). –b) दे1.8-10 मुवें. मुए. कुर्वन्वा (→कुर्याद्वा). –c) द1 पुत्रं (→वृत्तिं). –d) का1 दे1.4 द1 ग्र2 उ1 मुवें. मुए. विधाय (→निधाय).

**२४.** –d) दे1.8-10 मुवें. मुए. सर्वपापैः प्रमुच्यते.

**पुष्पिका—**

**पुराणनाम**—का1 द1 ग्र2 म1 उ1 इति श्रीकू(का1 कौ)र्मपुराणे उपरिभागे, ब2 इति कूर्मपुराणे, ब3 दे2 इति कू(दे2 कौ)-र्मपुराणे उपरिभागे, दे1.3.4.6.8-10 इति श्रीकूर्मपुराणे, न इति श्रीकौर्मे, ते1 इत्यादिमहापुराणे श्रीकौर्मे, मुवें. इति श्रीकूर्मपुराणे उत्तरार्धे, मुए. इति श्रीकूर्मपुराणे उपविभागे, मुब. इति श्रीकौर्मे महापुराणे उपरिभागे. **अध्यायनाम**—दे3.4 न1द1 म1 उ1. ⊙; का1. ब3 दे2.6 मुवें. मुए. मुब. तीर्थमाहात्म्यं नाम, ब2 दे1.8-10 तीर्थमाहात्म्ये, ते1 तीर्थयात्रामाहात्म्यकथनं नाम, ग्र2 तीर्थप्रसङ्गं नाम. **अध्यायसंख्या** - ब2 दे6. ⊙; का1 एकचत्वारिंशोऽध्यायः ।।४१।।, ब3 दे2 एकचत्वारिंशोध्यायः, दे1 चतुःचत्वारिंशोध्यायः ।।३८।।, दे4.8.9 द1 ग्र2 म1 चतुश्चत्वारिंशोऽध्यायः, दे10 मुवें. चतुश्चत्वारिंशोऽध्यायः ।।४४।।, दे3 पंचचत्वारिंशोऽध्यायः ।।४५।।, न1 त्रिनवतितमोऽध्यायः ते1 द्विचत्वारिंशोऽध्यायः, उ1 चतुश्चत्वारिंशोऽध्यायः, मुए. त्रिचत्वारिंशोऽध्यायः, मुब. द्विचत्वारिंशोऽध्यायः ।।४२।।

**४३**

※. न1 ग्र2 उ1 सूतः; ते1 श्रीशिवः, + सूतः; द1 ऋषय ऊचुः; म1 श्रीसूतः.

**१.** –a) ब1 एकदाकर्ण्य (→एतदाकर्ण्य).

※ ब3 दे3 द1 ग्र2 उ1. ⊙; दे1.9 मुनयः ऊचुः; न1 ते1 ऋषयः; म1 मुनयः; मुब. ऋषय ऊचुः.

**२.** –a) दे1.2.4.8-10 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. कथितो (→कथिता); दे1.4.8-10 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. धर्मो (→धर्मा). –b) ब1 मोक्षदानं, ब2 मोक्षद्वारं (→मोक्षज्ञानं); ब2 ते1 सुविस्तरम् (→सविस्तरम्). –c) ब3 स्वर्गविस्तारं, दे1.3.8-10 न1 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. सर्गविस्तारो (→सर्गविस्तारं). –d) का1 तथा, ब1 वंशो, दे1.8.9 वंशा, दे6.10 वंशं (→वंश-).

**३.** –a) दे1.8-10 मुवें. मुए. मुब. इदानीं देवदेवेश, दे3.4 द1 ग्र2 म1 उ1 इदानीं प्रतिसर्गं (दे4 °गर्भं) नो. –b) दे1.8-10 मुवें. मुए. मुब. प्रलयं वक्तुमर्हसि, ते1 कच्चित्वं वक्तुमर्हसि. –d) का1 यन्मे पूर्वं, ब1 दे2 ते1 जन्मपूर्वं, ब2 यत्तु पूर्वं, ब3 दे6 यत्र पूर्वं (→यथा पूर्वं).

३ श्लोकात् परं ब2 अधिकम् —

63. * प्रतिसञ्चरमिच्छामः श्रान्तं त्वत्तो वयं प्रभो ।

का1 b,c मध्ये अधिकम् —

64. * पूर्वरूपधरं देवं प्रलयं वक्तुमर्हसि ।

सूत उवाच ।※

श्रुत्वा तेषां तदा वाक्यं भगवान् कूर्मरूपधृक् ।
व्याजहार महायोगी भूतानां प्रतिसंचरम् ।।४

कूर्म उवाच ।※

नित्यो नैमित्तिकश्चैव प्राकृतात्यन्तिकौ तथा ।
चतुर्द्धाऽयं पुराणेऽस्मिन् प्रोच्यते प्रतिसंचरः ।।५
योऽयं संदृश्यते नित्यं लोके भूतक्षयस्त्विह ।
नित्यः संकीर्त्यते नाम्ना मुनिभिः प्रतिसंचरः ।।६
ब्राह्मो नैमित्तिको नाम कल्पान्ते यो भविष्यति ।
त्रैलोक्यस्यास्य कथितः प्रतिसर्गो मनीषिभिः ।।७
महदाद्यं विशेषान्तं यदा संयाति संक्षयम् ।
प्राकृतः प्रतिसर्गोऽयं प्रोच्यते कालचिन्तकैः ।।८
ज्ञानादात्यन्तिकः प्रोक्तो योगिनः परमात्मनि ।
प्रलयः प्रतिसर्गोऽयं कालचिन्तापरैर्द्विजैः ।।९
आत्यन्तिकश्च कथितः प्रलयोऽत्र ससाधनः ।
नैमित्तिकमिदानीं वः कथयिष्ये समासतः ।।१०
चतुर्युगसहस्रान्ते संप्राप्ते प्रतिसंचरे ।
स्वात्मसंस्थाः प्रजाः कर्तुं प्रतिपेदे प्रजापतिः ।।११
ततो भवत्यनावृष्टिस्तीव्रा सा शतवार्षिकी ।
भूतक्षयकरी घोरा सर्वभूतक्षयंकरी ।।१२
ततो यान्यल्पसाराणि सत्त्वानि पृथिवीतले ।
तानि चाग्रे प्रलीयन्ते भूमित्वमुपयान्ति च ।।१३ वें.२.४५.१३

※ का1 ब1-3 दे2.3.6 ते1 म1. ⊙; न1 ग्र2 उ1 सूतः; द1 श्रीसूतः.

४. –a) ते1 शेषां (→तेषां); ब1 यदा, म1 तथा (→तदा). –c) दे3 व्याजहारात्मभूतानां. –d) दे3 भूतसंक्षयम्, दे4 द1 भूतसंचरः (द1 °रम्), ग्र2 उ1 प्रतिसञ्चय (उ1 °यं) (→प्रतिसञ्चरम्).

※ दे3. ⊙; का1 दे2 कूर्मरूप उवाच; दे8.9 कूर्म उ.; न1 म1 कूर्मः; ते1 द1 ग्र2 उ1 श्रीकूर्मः.

५. –a) दे4 नित्ये (→नित्यो); ग्र2 नित्यनैमित्तिके चैव. –b) का1 दे1.8-10 मुवें. मुए. प्राकृतोऽत्यन्तिकस्तथा, ब3 दे2 प्राकृतोत्यन्तिकौ मतः, दे6 प्राकृतौत्यन्तिकौ तदा, ग्र2 उ1 प्राकृतात्यन्तिकौ यथा. –c) ब1 चतुर्धा तु, दे4 चतुर्धा ये (→चतुर्द्धाऽयं). –d) दे4 प्रतिशंकरः (→प्रतिसञ्चरः).

६. ब1. ⊙. –a) ब2 सङ्कीर्त्यते (→संदृश्यते). –b) न1 °क्षयं त्विह (→°क्षयस्त्विह). –c) दे10 उ1 नित्यं (→नित्यः); ब3 न1 संकीर्त्तते, दे10 संकीर्तयेत्, ग्र2 संकीर्त्तनो (→संकीर्त्यते).

७. –a) ब3 दे4 द1 ब्रह्मो, दे1.8-10 ब्रह्म, ते1 प्रोक्तं (→ब्राह्मो); दे4 ****, द1 निमित्तिको, उ1 नैमुस्तुको (?) (→नैमित्तिको). –c) दे3 त्रैलोक्यस्यैष, दे4 उ1 त्रैलोक्यस्यापि, द1 ग्र2 म1 त्रैलोक्ये सोपि (→त्रैलोक्यस्यास्य).

८. –b) दे4 यदा संयति, द1 उ1 प्रतिसंय (उ1 °या) ति (→यदा संयाति). –c) न1 उ1 प्राकृतं (→प्राकृतः); म1 प्रतिसर्गो यः (→प्रतिसर्गोऽयं).

९. दे10.ab ⊙. –a) दे1 ग्र2 ज्ञानादात्यन्तिकं प्रोक्तौ (ग्र2 °क्तः). –b) म1 परमार्थिनः (→परमात्मनि). –c) दे10 प्राकृतः (→प्रलयः); ते1 प्रलयश्च समाख्यातः. –d) दे4 द1 म1 नरैः, ग्र2 जनैः (→द्विजैः); ते1 प्रतिसर्गो वरैर्द्विजैः.

१०. –a) ब1 दे1.3.8-10 न1 मुवें. मुए. मुब. आत्यन्तिकस्तु, द1 ग्र2 आद्यन्तकश्च (→आत्यन्तिकश्च). –b) ब1 प्रलयोत्र प्रसाधनः, ब2.3 प्रलयो लयसाधनः, दे1.8-10 मुवें. मुए. मुब. प्रलयो ज्ञानसाधनः, दे4 म1 प्रलयोत्र मया श्रुतः, दे6 प्रलयोत्तमसाधनः, द1 ग्र2 उ1 प्रलयोत्र महाध्रुवः (उ1 °वं). –c) दे3 यः, उ1 च (→वः). –d) का1 ब1-3 दे2.6 न1 ते1 कीर्त्तयिष्ये (→कथयिष्ये); ते1 ग्र2 म1 समाहितः, उ1 समासकः (→समासतः).

११. –a) दे1.8.9 चतुर्व्यूहः, दे10 ग्र2 मुवें. मुए. चतुर्व्यूह- (→चतुर्युग-). –b) दे3 द1 ग्र2 म1 प्रतिसंचरः (→प्रतिसंचरे). –c) ते1 कर्तुः (→कर्तुं); दे10 स्नात्वा संस्वजः प्रजाकर्तुं(?). –d) दे1 प्रतिषेवे (→प्रतिपेदे).

१२. –a) दे10 ग्र2 मुवें. मुए. मुब. ततोऽभवत्त्वनावृष्टिस्. –b) ब2 त्रासिका (→तीव्रा सा). –d) ब2.3 दे3 ग्र2 म1 उ1 °भयंकरी (→°क्षयंकरी).

१३. ब1. १३c–२८b ⊙. –a) दे6 यात्यल्पसाराणि, ग्र2 यान्यत्रसाराणि, उ1 यान्यतिसाराणि (→यान्यल्पसाराणि). –b) ब1-3 ते1 सस्यानि, दे6 सेव्यानि (→सत्त्वानि); दे1.8-10 मुवें. मुए. पृथिवीपते (→पृथिवीतले). –c) ग्र2 यान्ति (→तानि); दे1 चाग्नि-, द1 ग्र2 म1 उ1 चात्र (→चाग्रे); दे6 प्रतीयन्ते (→प्रलीयन्ते). –d) दे3 मुनित्वमुपयांति च, द1 भूमौ तान्यशुयानि च, ग्र2 भूत्वा वः स्फुटयानि च, म1 भूमौ यान्यप्सु यानि च, उ1 भूमित्वा वसुधान्ति च.

वें.२.४५.१४ सप्तरश्मिरथो भूत्वा समुत्तिष्ठन् दिवाकरः ।
असह्य रश्मिर्भवति पिबन्नम्भो गभस्तिभिः ॥१४
तस्य ते रश्मयः सप्त पिबन्त्यम्बु महार्णवे ।
तेनाहारेण ता दीप्ताः सूर्याः सप्त भवन्त्युत ॥१५
ततस्ते रश्मयः सप्त सूर्या भूत्वा चतुर्दिशम् ।
चतुर्लोकमिदं सर्वं दहन्ति शिखिनस्तथा ॥१६
व्याप्नुवन्तश्च ते विप्रास्तूर्ध्वं चाधश्च रश्मिभिः ।
दीप्यन्ते भास्कराः सप्त युगान्ताग्निप्रतापिनः ॥१७
ते सूर्या वारिणा दीप्ता बहुसाहस्ररश्मयः ।
खं समावृत्य तिष्ठन्ति निर्दहन्तो वसुंधराम् ॥१८
ततस्तेषां प्रतापेन दह्यमाना वसुंधरा ।
साद्रिनद्यर्णवद्वीपा निस्नेहा समपद्यत ॥१९
दीप्ताभिः संतताभिश्च रश्मिभिर्वै समन्ततः ।
अधश्चोर्ध्वं च लग्नाभिस्तिर्यक् चैव समावृतम् ॥२०
सूर्याग्निना प्रमृष्टानां संसृष्टानां परस्परम् ।
एकत्वमुपयातानामेकज्वालं भवत्युत ॥२१

१४. ब1. ⊙ (द्र. १३ पा. वि.). -a) दे4 द1 ग्र2 उ1 सप्तरश्मिस्ततो भूत्वा. -b) दे3 समुत्तिष्ठेद्, दे4 ते1 समुत्तिष्ठद्, दे10 समुत्तिष्ठ, ग्र2 सुमुत्तिष्ठो, उ1 समुद्दिष्ठो (→समुत्तिष्ठन्). -d) का1 पिबन्त्वापो, दे1.8.9 विचिन्वन्तो, दे3 पिबत्यंभो, दे4 पिबंतीनो, दे6 पिबंतंभो, ते1 पिबन्निव, ग्र2 वाञ्छन्तं भो (→पिबन्नम्भो); दे10 विविभो भोग भवस्त्विभिः.

१५. ब1 दे6. ⊙; दे1 न1 ते1. bcd ⊙. -a) का1 दे2-4 सर्वे (→सप्त). -b) दे3 पिबत्यंभो महार्णवं, दे10 पिबत्यंबुर्महार्णवे, द1 म1 पिबन्त्यम्बुमहार्णवम्, ग्र2 उ1 पिबत्यंबुमहार्णवं (उ1 °वे). -c) दे3 अनाहारेण (→तेनाहारेण); ब2.3 ते सूर्या, दे3 ते तप्ताः, दे10 द1 उ1 ते दीप्ताः, मुवें. मुए. ता दीप्त्वा (→ता दीप्ताः). -d) ब2.3 दीप्ताः सप्त, दे8-10 मुवें. मुए. सप्त सूर्या (→सूर्याः सप्त); ब2.3 मुब. भवन्ति हि (ब2 वै), दे10 भवत्यतः, द1 ग्र2 उ1 भवन्ति च (→भवन्त्युत).

१६. ब1. ⊙; दे1 न1 ते1. a ⊙. -a) का1 ब2 दे2.6 तस्य ते, ग्र2 म1 उ1 ततस्ता (→ततस्ते). -b) ब2 दे4 न1 द1 ग्र2 सूर्यो भूत्वा, दे1.8-10 मुवें. मुए. मुब. शोषयित्वा (→सूर्या भूत्वा). -c) दे1.8-10 द1 म1 मुवें. मुए. इमं (→इदं); ब2 कृत्स्नं (→सर्वं). -d) दे3 दहंतः, दे4 ददाति (→दहन्ति); ब2.3 मुवें. मुए. मुब. शिखिनो यथा, दे3 शिखिनस्तदा, दे8-10 शंखिनस्तथा, ग्र2 म1 उ1 शिखिभिस्तथा (→शिखिनस्तथा).

१७. ब1. ⊙ (द्र. १३ पा. वि.). -a) दे4 ते1 उ1 व्याप्नुवंति च (→व्याप्नुवन्तश्च); का1 विप्रो, ब3 तीव्रा, दे1.8-10 मुवें. मुए. मुब. दीप्ता (→विप्राः); द1 म1 व्याप्नुवंश्च ततो विप्राः, ग्र2 प्राप्नुवंश्च रतो विप्रा. -b) ब2 दे1.8-10 प्रतापिताः, दे4.6 प्रतापितः, न1 प्रतापनाः, द1 ग्र2 प्रभाविनः, म1 विभाविनः, मुवें. मुए. मुब. प्रदीपिताः (→प्रतापिनः).

१८. ब1. ⊙. -a) दे3 सूर्याश्चि?, दे4 सूर्याश्च (→ते सूर्या). -b) द1 ग्र2 म1 हृष्टा (→बहु-). -c) ब1 सुसमावृत्य, उ1 खण्डमावृत्य (→खं समावृत्य). -d) ब2.3 दे1.8-10 मुवें. मुए. मुब. प्रदहन्तो, दे6 निर्दहन्ते, द1 ग्र2 निर्दहन्ति, म1 विदहन्ति (→निर्दहन्तो).

१९. ब1. ⊙; दे4.6. ab ⊙. -a) दे2 तेन (→तेषां); ते1 द1 ग्र2 उ1 प्रभावेन (→प्रतापेन). -c) दे8-10 यान्ति (→साद्रि-); दे1 यान्ति नद्यर्णवद्गोपा, दे3 साद्रिद्रुमार्णवादीप्ता, दे4 साद्रिनद्य नवद्वीपाः, दे6 मत्रित स्वर्णवर्दीया. -d) दे1.8-10 उ1 मुवें. मुए. मुब. संप्रपद्यते, न1 ग्र1 संप्रपद्यत (→समपद्यत).

२०. ब1. ⊙; का1 दे2.6 न1 ते1. cd ⊙. -a) दे4 दीप्तातिं-, दे6 न1 दीप्ताग्निः (→दीप्ताभिः); दे4 महताभिश्च, द1 ग्र2 म1 उ1 संहि(द1 °ह)ताभिश्च (→संतताभिश्च); ब2.3 मुब. मरीचिभिः प्रदीप्ताभिः. -b) ब2.3 मुब. संतताभिः, दे4 द1 ग्र2 म1 उ1 व्याप्ताभिश्च, दे3 पिबद्भिश्च (→रश्मिभिर्वै); का1 दे2.6 ते1 ज्वालाभिश्च समावृतं, न1 रश्मिभिः स समावृतः. -c) ब2.3 दे3.4 द1 ग्र2 म1 उ1 अधश्चोर्ध्वं च तिर्यक् च. -d) ब2.3 समावृत्य सहस्रशः, दे3 द1 ग्र2 म1 उ1 दिशश्चैव समावृताः, दे4 खं दिशश्च समावृतः.

अतः परम् ब2 पुस्तके b, c मध्ये अधिकम् —

❀ 'दीप्ताभिः संतताभिश्च ज्वालाभिश्च समन्ततः. ( = २०ab)

२१. ब1. ⊙. -a) का1 दे2.6 अथाग्निना, ग्र2 म1 सूर्याग्निनां (→सूर्याग्निना); का1 दे2 प्रसृष्टानां, ब2.3 प्रदीप्तानां, दे6 द1 ग्र2 म1 स(दे6 म1 प्र)हृष्टानां, ते1 सतप्तानां, उ1 सवृन्तानां (→प्रमृष्टानां); दे3 सूर्याग्निनोपविष्टानां. -b) दे3.4 उ1 संतप्तानां, दे10 संपृष्टानां, ते1 सम्मृष्टानां, द1 ग्र2 संप्रहृष्टानां (→संसृष्टानां). -c) ब3 एकत्वमुपजातानां, दे4 ते1 द1 ग्र2 म1 उ1 एकत्वमुपपन्नानां. -d) दे3 एकज्वाला, ते1 एककालं, द1 ग्र2 म1 एकज्ञानं (→एकज्वालं); दे3 भवत्युरुः, दे4 भवत्पुनः, दे10 ते1 भवत्यतः (→भवत्युत).

सर्वलोकप्रणाशश्च सोऽग्निर्भूत्वा सुकुण्डली ।
चतुर्लोकमिदं सर्वं निर्दहत्यात्मतेजसा ॥२२
ततः प्रलीने सर्वस्मिञ् जङ्गमे स्थावरे तथा ।
निर्वृक्षा निस्तृणा भूमिः कूर्मपृष्ठा प्रकाशते ॥२३
अम्बरीषमिवाभाति सर्वमापूरितं जगत् ।
सर्वमेव तदर्चिर्भिः पूर्णं जाज्वल्यते पुनः ॥२४
पाताले यानि सत्त्वानि महोदधिगतानि च ।
ततस्तानि प्रलीयन्ते भूमित्वमुपयान्ति च ॥२५
द्वीपांश्च पर्वतांश्चैव वर्षाण्यथ महोदधीन् ।
तान् सर्वान् भस्मसात् कृत्वा सप्तात्मा पावकः प्रभुः ।२६
समुद्रेभ्यो नदीभ्यश्च पातालेभ्यश्च सर्वशः ।
पिबन्नपः समिद्धोऽग्निः पृथिवीमाश्रितो ज्वलन् ॥२७
ततः संवर्त्तकः शैलानतिक्रम्य महांस्तथा ।
लोकान् दहति दीप्तात्मा रुद्रतेजोविजृम्भितः ॥२८
स दग्ध्वा पृथिवीं देवो रसातलमशोषयत् ।
अधस्तात् पृथिवीं दग्ध्वा दिवमूर्ध्वं दहिष्यति ॥२९
योजनानां शतानीह सहस्राण्ययुतानि च ।
उत्तिष्ठन्ति शिखास्तस्य वह्नेः संवर्त्तकस्य तु ॥३०
गन्धर्वांश्च पिशाचांश्च सयक्षोरगराक्षसान् ।
तदा दहत्यसौ दीप्तः कालरुद्रप्रचोदितः ॥३१   वें.२.४५.३१

२२. ब1. ⊙. –a) ते1 एक- (→सर्व-); द1 ग्र2 उ1 -भूत- (→-लोक-); दे3.4 -प्रमाणोऽयं, न1 ते1 म1 -प्रमाणं (ते1 °णश्) च (→-प्रणाशश्च). –b) दे4 योग्निर् (→सोग्निर्); ब2.3 दे6 भूत्वात्म-, दे1.4.8-10 उ1 मुवें. मुए. मुब. भूत्वा तु, न1 भूत्वानु-, ते1 भूत्वाथ, ग्र2 निर्भूत-, म1 भूत्वा च (→भूत्वा सु-); ब2.3 दे1.4.8-10 न1 ते1 मुवें. मुए. मुब. -मण्डली, द1 ग्र2 म1 उ1 -मण्डलं (→-कुण्डली); दे3 सह सूर्योग्निमण्डलः. –c) दे1.8-10 मुवें. मुए. इमं (→इदं). –d) दे1.3.4.8.9 न1 ते1 मुवें. मुए. मुब. निर्दहत्याशु, द1 म1 निर्दहत्यति- (→निर्दहत्यात्म-).

२३. ब1. ⊙. –a) ब3 दे6 प्रलीनः (दे6 °न) (→प्रलीने) दे3 लोकेऽस्मिन् (→सर्वस्मिन्). –b) स्थावरे जंगमे तथा. –c) का1 दे2 निम्नगा (→निस्तृणा). –d) दे6 °प्रह्वा (→°पृष्ठा).

२४. –a) दे1.4.8-10 न1 ते1 द1 ग्र2 म1 उ1 मुए. अम्बरीष इवाभाति. –b) दे3 द1 ग्र2 म1 उ1 व्यापूरितं, दे4 व्यापारितं (→आपूरितं). –c) ब2.3 मुवें. सर्वमेवत्तदर्चिभिः, दे1.8-10 मुवें.मुए. सर्वमेव तदर्चिर्वै, दे3 सर्वमेतत्तदंभोभिः, दे4 सर्वं चैव तदम्बोभिः, ते1 सर्वमेतत्तदार्चिभिः. –d) ब2 पूर्वं, दे6 पूर्णा (→पूर्णं); दे3.4 प्रज्वाल्यते, म1 जज्वाल्यते (→जाज्वल्यते); न1 संपूर्णो ज्वाल्यते पुनः, द1 उ1 पूर्णं न ज्वाल्यते पुनः.

२५. ब1. ⊙; दे3.4 म1. cd ⊙. –a) का1 दे2 तोयानि, ब2.3 दे6 ते1 तीर्थानि, दे3 रत्नानि (→सत्त्वानि). –b) दे3 °चितानि, दे4 द1 ग्र2 म1 °शयानि (→°गतानि). –c) का1 ब2.3 दे6 मुब. तत्र तानि, ग्र2 तत स्थानि (→ततस्तानि). –d) का1 ब2.3 दे2.6 वै (→च).

२६. ब1. ⊙. –b) ब2 म1 सर्वानथ, दे4 सर्वाण्यपि (→वर्षाण्यथ); दे3 महौषधीन्, ते1 महोदधिम् (→महोदधीन्). –c) दे1.3.4.8-10 न1 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. भस्मसाच्चक्रे (→भस्मसात्कृत्वा).

२७. ब1. ⊙. –a) म1 समुद्राश्च (→समुद्रेभ्यो); दे4 नदीभिश्च (→नदीभ्यश्च). –b) दे1.8-10 मुवें. मुए. आपः शुष्काश्च सर्वशः, न1 नदेभ्यश्चैव सर्वशः. –c) दे3 पिबन्नपि, ते1 पिबत्यपः (→पिबन्नपः); दे3.4 ते1 समुद्रोऽग्निः, द1 ग्र2 म1 उ1 समृद्धोऽग्निः (→समिद्धोऽग्निः). –d) ते1 जगत्, द1 म1 बली, उ1 जलं (→ज्वलन्); दे1 पृथिवीमाश्रितोऽभवत्, दे4 पृथिवीमाश्रितं जलं.

२८. ब1 म1. ab ⊙. –b) दे3 महानलः, ग्र2 महांस्तदा (→महांस्तथा). –c) दे3 तेजोभिः, ते1 दीप्तोग्निः(→दीप्तात्मा). –d) दे1.8-10 मुवें. मुए. मारुतेयो (→रुद्रतेजो-); दे3 रुद्रतेजोभिजृम्भितः, उ1 मारुत्तेजोविजृम्भितः.

२९. ब1.cd ⊙. –a) न1 भित्वा स (→स दग्ध्वा); दे3 स दग्धपृथिवीलोको. –b) दे4 न1 म1 अशेषयत्, द1 अशेषयेत, मुवें. मुए. मुब. अशोभयत् (→अशोषयत्). –d) दे3 दहन्नपि, द1 ग्र2 म1 गमिष्यति (→दहिष्यति).

३०. ब1. ab ⊙; दे4.cd ⊙. –b) दे6 सहस्राणि शतानि च. –c) दे3 आतिष्ठन्ति (→उत्तिष्ठन्ति); द1 ग्र2 म1 उ1 तत्र (→तस्य). –d) का1 ब1-3 दे2.6 न1 ते1 हि, दे3.10 द1 ग्र2 म1 उ1 च (→तु).

अतः परं ब2 पुस्तके b, c मध्ये अधिकम्—

*तत्तेजः समनुप्राप्य कृत्स्नं जगदिदं शनैः । (=३३cd)

३१. ब1 दे4. ab⊙. –a) ब3 दे1.8-10 न1 पिशाचाश् (→पिशाचान्). –b) दे1.8-10 न1 °राक्षसाः (→°राक्षसान्). –c) दे6 दह्यत्यसौ, ग्र2 हरत्यसौ (→दहत्यसौ); ते1 तदा दहति दीप्तः सन्. –d) दे6 कालचक्रं, न1 ग्र2 उ1 कारुरुद्रः

वें.४५.३२ भूर्लोकं च भुवर्लोकं स्वर्लोकं च तथा महः ।
दहेदशेषं कालाग्निः कालो विश्वतनुः स्वयम् ॥३२
व्याप्तेष्वेतेषु लोकेषु तिर्यगूर्ध्वमथाग्निना ।
तत् तेजः समनुप्राप्य कृत्स्नं जगदिदं शनैः ।
अयोगुडनिभं सर्वं तदा चैकं प्रकाशते ॥३३
ततो गजकुलोन्नादास्तडिद्भिः समलंकृताः ।
उत्तिष्ठन्ति तदा व्योम्नि घोराः सवर्त्तका घनाः ॥३४
केचिन्नीलोत्पलश्यामाः केचित् कुमुदसन्निभाः ।
धूम्रवर्णास्तथा केचित् केचित् पीताः पयोधराः ॥३५
केचिद् रासभवर्णास्तु लाक्षारसनिभास्तथा ।
शङ्खकुन्दनिभाश्चान्ये जात्यञ्जननिभाः परे ॥३६
मनःशिलाभास्त्वन्ये च कपोतसदृशाः परे ।
इन्द्रगोपनिभाः केचिद्धरितालनिभास्तथा ।
इन्द्रचापनिभा केचिदुत्तिष्ठन्ति घना दिवि ॥३७
केचित् पर्वतसंकाशाः केचिद् गजकुलोपमाः ।
कूटाङ्गारनिभाश्चान्ये केचिन्मीनकुलोद्वहाः ।
बहुरूपा घोररूपा घोरस्वरनिनादिनः ॥३८
तदा जलधराः सर्वे पूरयन्ति नभःस्थलम् ।
ततस्ते जलदा घोरा राविणो भास्करात्मजाः ।
सप्तधा संवृतात्मानस्तमग्निं शमयन्त्युत ॥३९
ततस्ते जलदा वर्षं मुञ्चन्तीह महौघवत् ।
सुघोरमशिवं सर्वं नाशयन्ति च पावकम् ॥४०

(→कालरुद्र-); दे1.8-10 मुवें. मुए. मुब. °प्रणोदितः (→°प्रचोदितः); का1 कालरुद्रेण चोदितः.

३२. ब1. ⊙. –a) ते1 भूर्लोकश्च भुवर्लोकः. –b) का1 तथा परः, दे4 तथा महान् (→तथा महः); दे1.8-10 मुवें. मुए. महर्लोकं तथैव च, ते1 स्वर्लोकश्च तथा महः. –d) दे1.3.4.8-10 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. कालाविष्ट- (दे10 °ष्टः) (→कालो विश्व-); द1 ग्र2 म1 उ1 -तनु (→-तनुः).

३३. ब1.cd ⊙. –a) का1 ब1-3 दे2.6 न1 ते1 व्याप्तेषु तेषु लोकेषु, द1 ग्र2 म1 उ1 तेन व्याप्तेषु लोकेषु. –d) दे3 ज्वलन् (→शनैः); ते1 दृश्यते जगदिदं शनैः. –e) दे1.8.9 मुवें. मुए. इदं (→-निभं); ब2 वर्षं (→सर्वं); ते1 अयोप्रभृतिकं सर्वं. –f) दे1.3.8-10 न1 ग्र2 मुवें.मुए. तदेवैकं, दे4 ते1 द1 म1 उ1 तथैवेकं (→तदा चैकं).

३४. –a) दे1.8-10 न1 मुवें. मुए. ततो गजकुलाकारास्, दे3 ततो गजकरोन्मानः, ते1 ततो जलाकुलोन्मानास्, ग्र2 ततो-गजकुलो जाता, म1 ततो गजकुलान्नानाः. –b) का1 ब1-3 दे2.6 ते1 स्तनितैस् (→तडिद्भिः). –c) दे6 तथा (→तदा).

३५. ब1. cd ⊙. –b) का1 दे4 कुंकुम°, दे2 कुसुम° (→कुमुद°). –c) दे3.9 ते1 म1 धूम° (→धूम्र°).

३६. ब1. ⊙; द1. cd ⊙. –a) ब2.3 दे2 केचिद् द्राक्षाभवर्णास्तु, दे4 न1 द1 ग्र2 म1 उ1 केचिल्लाक्षाभवर्णास्तु. –b) दे1.4.8-10 न1 द1 ग्र2 म1 उ1 मुवें. मुए. परे (→तथा); दे3 लाक्षानीरनिभास्तथा. –c) न1 °कुम° (→°कुंद°); म1 शश्वत्कुन्दनिभांश्चान्ये. –d) ते1 जात्वञ्जन°, ग्र2 उ1 लाक्षाञ्जन° (→जात्यञ्जन°); दे1.4.8-10 म1 मुवें. मुए. मुब. तथा (→परे).

३७. ब1. ⊙; द1. cd ⊙; दे3.4 म1 उ1. de ⊙. –a) दे1.8-10 म1 मुवें. मुए. च परे, दे3.4 न1 ते1 द1 ग्र2 उ1 त्वपरे (→त्वन्ये च); दे6 मनः शिलानिभास्त्वन्ये. –c) न1 ग्र2 म1 °कोप° (→°गोप°). –d) का1 केचित्तालनिभास्तथा. –e) का1 कारण्डव°, ब2.3 दे2 काकाण्डक° (→इन्द्रचाप°). –f) ब2 उपतिष्ठन्ति स्म नादिभिः.

३८. ब1. ⊙; दे4. ३८c-३९ab ⊙. –a) का1 दे2 पङ्कज° (→पर्वत°). –b) ब2.3 दे2.6 न1 ते1 म1 मुब. कूटागार°, द1 उ1 कूटांकारा° (उ1 °र°) (→कूटाङ्गार°). –d) दे3 ते1 द1 ग्र2 म1 उ1 °कुलोपमाः, न1 °कुलोद्भवाः (→°कुलोद्वहाः). –e) ते1 बहुरूपधराश्चान्ये. –f) दे3 घोरनिःस्वननादिनः.

३९. दे4. ab. ⊙. –a) का1 ब1-3 दे1.3.8.10 न1 उ1 मुवें. मुए. मुब. नभस्थलम् (→नभःस्थलं). –c) दे3 ततस्ते जलदाराव. –d) ब2 दे2.6 वारिणा, दे3.4 न1 रावणा (→राविणो). –e) ब1 दे1.4.8-10 न1 ग्र2 म1 उ1 मुवें.मुए. मुब. संवृतात्मानं, दे6 ते1 संभृतात्मानस् (→संवृतात्मानस्). –f) ब1 शोषयन्त्यतः, ब3 शमयन्ततः, दे1.8-10 मुए. शमयेत्पुनः, मुवें. शमयन्ति ते (→शमयन्त्युत).

४०. ब1. cd ⊙. –a) ब2 सर्वं (→वर्षं). –b) दे3 विमुञ्चन्ति, दे4 मुञ्चति च, म1 मुञ्चंतीव (→मुञ्चंतीह). –b) दे3.4 म1 महेषुवत्, मुब. महारवं (→महौघवत्). –c) ते1 सघोरं (→सुघोरं); दे1.8.9 मुवें. मुए. मुब. वर्षं (→सर्वं); दे3 ते घोरममितं सर्वं, द1 उ1 सुघोरमसितं सर्वं. –d) ग्र2 नाशयन्तीव पावकं.

प्रवृष्टे च तदात्यर्थमम्भसा पूर्यते जगत् ।
अद्भिस्तेजोभिभूतत्वात् तदाऽग्निः प्रविशत्यपः ॥४१
नष्टे चाग्नौ वर्षशतैः पयोदाः क्षयसंभवाः ।
प्लावयन्तोऽथ भुवनं महाजलपरिस्रवैः ॥४२
धाराभिः पूरयन्तीदं चोद्यमानाः स्वयंभुवा ।
अत्यन्तसलिलौघैश्च वेला इव महोदधिः ॥४३
साद्रिद्वीपा तथा पृथ्वी जलैः संछाद्यते शनैः ।
आदित्यरश्मिभिः पीतं जलमभ्रेषु तिष्ठति ।
पुनः पतति तद् भूमौ पूर्यन्ते तेन चार्णवाः ॥४४
ततः समुद्राः स्वां वेलामतिक्रान्तास्तु कृत्स्नशः ।
पर्वताश्च विलीयन्ते मही चाप्सु निमज्जति ॥४५
तस्मिन्नेकार्णवे घोरे नष्टे स्थावरजङ्गमे ।
योगनिद्रां समास्थाय शेते देवः प्रजापतिः ॥४६
चतुर्युगसहस्रान्तं कल्पमाहुर्महर्षयः ।
वाराहो वर्त्तते कल्पो यस्य विस्तार ईरितः ॥४७
असंख्यातास्तथा कल्पा ब्रह्मविष्णुशिवात्मकाः ।
कथिता हि पुराणेषु मुनिभिः कालचिन्तकैः ॥४८
सात्त्विकेष्वथ कल्पेषु माहात्म्यमधिकं हरेः ।
तामसेषु हरस्योक्तं राजसेषु प्रजापतेः ॥४९
योऽयं प्रवर्त्तते कल्पो वाराहः सात्त्विको मतः ।
अन्ये च सात्त्विकाः कल्पा मम तेषु परिग्रहः ॥५०　वें.२.४५.५३

---

४१. ब$_1$. ⊙. –a) का$_1$ दे$_{2.6}$ प्रवि(दे$_2$ वृ)ष्टैश्च, ब$_2$ प्रवृत्तेन, ब$_3$ प्रवृष्ट्यैस्तैस्, दे$_{1.8-10}$ मुए. अतिवृद्धस्, न$_1$ प्रवृत्तेश्च, ते$_1$ प्रवृत्तिश्च, द$_1$ प्रदष्टे च, ग्र$_2$ उ$_1$ प्रवृत्ते च, म$_1$ प्रवृष्टेषु, मुवें. अतिवृद्धं, मुब. प्रवृद्धैस्तै (→प्रवृष्टे च); दे$_3$ ततो°, दे$_{10}$ तथा° (→तदा°). –b) दे$_4$ मनसा, द$_1$ ग्र$_2$ म$_1$ उ$_1$ तमसा (→अम्भसा); ब$_2$ किल (→जगत्). –c) मुब. °भूतात्मा (→°भूतत्वात्); ब$_2$ अद्भिस्तेजो विभूतित्वात्, ब$_3$ अद्भिस्तेजोधिभूतात्मा, दे$_{1.4.8-10}$ ग्र$_2$ उ$_1$ मुवें. मुए. अद्भिस्तेऽम्भोभिभूतत्वात्. –d) दे$_{2.3.6.10}$ ते$_1$ द$_1$ तदाग्नि, दे$_4$ ग्र$_2$ उ$_1$ मुवें. मुए. तदग्निः (→तदाग्निः); का$_1$ ब$_2$ प्रविनश्यति, दे$_{2.6}$ ते$_1$ प्रविशत्यपि, दे$_3$ शमयत्यथ, ग्र$_2$ प्रविशन्नपः (→प्रविशत्यपः).

४२. –a) ब$_3$ दे$_3$ °शते (→°शतैः). –b) ब$_{1.3}$ दे$_6$ न$_1$ ते$_1$ पक्ष°, ब$_2$ जल° (→क्षय°). –c) दे$_4$ द$_1$ ग्र$_2$ म$_1$ प्लावयन्ति (→प्लावयन्तो-); दे$_{1.3.4.8-10}$ न$_1$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ मुवें. मुए. मुब. प्लावयन्तो जगत्सर्वं.

४३. –a) द$_1$ ग्र$_2$ म$_1$ उ$_1$ वारिभिः (→धाराभिः); न$_1$ पूरयन्तस्ते, ते$_1$ पूरयन्तीह (→पूरयन्तीदं). –b) दे$_{1.8-10}$ मुवें. मुए. मुब. नोद्यमानाः (→चोद्यमानाः); दे$_4$ स्वयंभुवः, दे$_{10}$ मनोः स्वयं (→स्वयंभुवा). –c) दे$_{1.8-10}$ मुवें. मुए. मुब. सलिलौघास्तु, दे$_3$ ते$_1$ सलिलौघैस्तु (→सलिलौघैश्च). –d) दे$_2$ महोदधि, दे$_{1.8-10}$ न$_1$ ते$_1$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ मुवें. मुए. मुब. महोदधेः (→महोदधिः); ब$_{2.3}$ परिप्लाव्य दिशो दश.

४४. –a) ब$_{2.3}$ दे$_{4.9}$ साब्धि°, ग्र$_2$ सर्व° (→साद्रि°); दे$_{1.8-10}$ मुवें. मुए. मुब. ततः, दे$_3$ शनैः, ते$_1$ तदा (→तथा); दे$_{10}$ पृथ्वीं (→पृथ्वी). –c) दे$_{10}$ ग्र$_2$ म$_1$ शंस्थाप्यते, ते$_1$ संपूर्यते (→संछाद्यते); ब$_{2.3}$ ते$_1$ मुब. घनैः (→शनैः); दे$_3$ जलैः संहन्यते तदा. –d) ब$_1$ अभ्रे तु, दे$_3$ त्वभ्रेषु, दे$_4$ म$_1$ वाभ्रेषु, द$_1$ ग्र$_2$ उ$_1$ चाभ्रेषु (→अभ्रेषु). –e) न$_1$ पुनः पतितसंभूमी, ते$_1$ पुनः पतन्ति ते भूमौ.

४५. दे$_4$. ⊙; ब$_1$. cd ⊙. –a) दे$_3$ समुद्रास्ते, दे$_{10}$ समुद्रां स्वां, म$_1$ समुद्रास्तां (→समुद्राः स्वां). –b) दे$_{1.8-10}$ अतिक्रम्यास्तु (दे$_1$ °शु) (→अतिक्रान्तास्तु).

४६. –a) न$_1$ मुवें. मुब. तस्मिन्नेकार्णवघोरे. –c) दे$_{10}$ समाख्याय, द$_1$ ग्र$_2$ म$_1$ उ$_1$ समासाद्य (→समास्थाय). –d) ब$_{2.3}$ जगत्पतिः (→प्रजापतिः).

४७. –a) दे$_6$ ते$_1$ द$_1$ ग्र$_2$ म$_1$ सहस्रान्ते (→सहस्रान्तं). –b) दे$_{1.3.4.8-10}$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ मुवें. मुए. मुब. मनीषिणः (→महर्षयः). –c) दे$_{1.4}$ द$_1$ वराहो (→वाराहो). –d) दे$_{1.4.8-10}$ द$_1$ ग्र$_2$ उ$_1$ मुवें. मुए. मुब. विस्तरः (→विस्तारः).

४८. –a) ब$_3$ दे$_{2.6}$ तदा (→तथा); द$_1$ अद्रिसंख्यास्तथा कल्पा. –b) दे$_3$ °हरात्मकाः, दे$_{6.10}$ न$_1$ द$_1$ °शिवात्मिकाः (→°शिवात्मकाः). –c) ब$_1$ कथितानि, दे$_3$ गदितास्तु, दे$_4$ द$_1$ ग्र$_2$ उ$_1$ कथिताश्च (→कथिता हि). –d) दे$_3$ तत्त्व° (→काल°).

४९. न$_1$. ⊙. –a) दे$_3$ सात्त्विकेष्वेव, दे$_6$ * त्विकेत्वथ, दे$_{10}$ स्वातिकेष्वथ (→सात्त्विकेष्वथ). –b) ग्र$_2$ उ$_1$ कथितं (→अधिकं). –c) का$_1$ ब$_{1-3}$ दे$_2$ शिव° (→हर°).

५०. न$_1$.ab ⊙. –a) ब$_2$ सोऽयं (→योऽयं); दे$_4$ कालो (→कल्पो). –c) दे$_6$ अन्ते च, ग्र$_2$ अन्यैश्च, म$_1$ अन्येषु (→अन्ये च). –d) न$_1$ तेषु तेषु, द$_1$ मम चेष्ट-, उ$_1$ मानवेषु (→मम तेषु); ब$_1$ ग्र$_2$ म$_1$ परिग्रहाः (→परिग्रहः); दे$_6$ मम तेष्वपरिग्रहः.

वें.२.४५.५३ ध्यानं तपस्तथा ज्ञानं लब्ध्वा तेष्वेव योगिनः ।
आराध्य गिरिशं मां च यान्ति तत् परमं पदम् ॥५१
सोऽहं सत्त्वं समास्थाय मायी मायामयीं स्वयम् ।
एकार्णवे जगत्यस्मिन् योगनिद्रां व्रजामि तु ॥५२
मां पश्यन्ति महात्मानः सुप्तं कालं महर्षयः ।
जनलोके वर्त्तमानास्तपसा योगचक्षुषा ॥५३
अहं पुराणपुरुषो भूर्भुवः प्रभवो विभुः ।
सहस्रचरणः श्रीमान् सहस्रांशुः सहस्रदृक् ॥५४
मन्त्रोऽग्निर्ब्राह्मणा गावः कुशाश्च समिधो ह्यहम् ।
प्रोक्षणी च श्रुवश्चैव सोमो घृतमथास्म्यहम् ॥५५
संवर्त्तको महानात्मा पवित्रं परमं यशः ।
वेदो वेद्यं प्रभुर्गोप्ता गोपतिर्ब्रह्मणो मुखम् ॥५६
अनन्तस्तारको योगी गतिर्गतिमतां वरः ।
हंसः प्राणोऽथ कपिलो विश्वमूर्त्तिः सनातनः ॥५७
क्षेत्रज्ञः प्रकृतिः कालो जगद्बीजमथामृतम् ।
माता पिता महादेवो मत्तो ह्यन्यन्न विद्यते ॥५८
आदित्यवर्णो भुवनस्य गोप्ता
नारायणः पुरुषो योगमूर्त्तिः ।
मां पश्यन्ति यतयो योगनिष्ठा
ज्ञात्वात्मानममृतत्वं व्रजन्ति ॥५९

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायामुपरिविभागे त्रिचत्वारिंशोऽध्यायः ॥४३॥

---

**५१.** दे$_4$.cd ⊙. –a) द$_1$ ग्र$_2$ उ$_1$ जपस् (→तपस्). –b) दे$_{1.8-10}$ मुवें. मुए. लब्ध्वा ते योगिनः परं, दे$_3$ लब्ध्वा तेष्वथ योगिनः, उ$_1$ लब्ध्वा तेष्वेव नः परं. –c) ब$_{1-3}$ न$_1$ वा (→च); दे$_{1.8-10}$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ मुवें. मुए. आराध्य तं (द$_1$ ग्र$_2$ म$_1$ उ$_1$ मां) च गिरीशं, ते$_1$ आराध्य गिरिशं गंगां.

**५२.** दे$_4$.ab ⊙. –a) दे$_{2.3}$ ते$_1$ मुवें. मुए. मुब. तत्त्वं (→सत्त्वं); दे$_1$ सोहं स हंसमास्थाय. –b) का$_1$ ब$_{1-3}$ द$_1$ ग्र$_2$ म$_1$ मायामयं, दे$_{2.3}$ उ$_1$ मुब. मायामयः, दे$_6$ मायामयी, मुए. मायामयां (→मायामयीं); ब$_1$ शिवं, ब$_2$ जगत्, ते$_1$ नराः (→स्वयं). –d) दे$_3$ च (→तु).

**५३.** –a) दे$_{1.8-10}$ महात्मानं (→महात्मानः); दे$_3$ मां प्रपश्यन्ति संसुप्तं. –b) ब$_{1.2}$ दे$_{10}$ सुप्तकालं, ब$_3$ स्वप्तं कालं, दे$_1$ समकालं, दे$_3$ कालकालं, दे$_4$ सुप्तं वालं, दे$_{8.9}$ ते$_1$ द$_1$ ग्र$_2$ मुब. सप्तकालं, उ$_1$ सर्वकालं, मुवें. सुप्तिकाले, मुए. सुप्तकाले (→सुप्तं कालं). –d) का$_1$ दे$_{1.6.8-10}$ ते$_1$ द$_1$ उ$_1$ मुवें. मुए. मुब. तापसा (→तपसा).

**५४.** ते$_1$. ab ⊙. –a) दे$_{1.3.4.8.9}$ न$_1$ मुवें. मुए. मुब. पुराणः, द$_1$ पुराणं (→पुराण-). –b) दे$_6$ ग्र$_2$ पुरुषो (→प्रभवो); दे$_3$ भुवस्तत्त्ववतो विभुः, म$_1$ भूर्भुवः स्वर्भवो विभुः. –d) दे$_{1.3.8-10}$ मुवें. मुए. मुब. सहस्राक्षः, द$_1$ ग्र$_2$ उ$_1$ सहस्रार्चिः (→सहस्रांशुः); का$_1$ ब$_{1.3}$ दे$_{1.2.3.6.8.9}$ न$_1$ ते$_1$ मुवें. मुए. मुब. सहस्रपात्, दे$_{4.10}$ उ$_1$ सहस्रधृक् (→सहस्रदृक्).

**५५.** ब$_1$. ⊙; दे$_{3.4}$. cd ⊙. –a) का$_1$ दे$_{2.6}$ मत्तोऽग्नि-, दे$_{1.8-10}$ मुवें. मुए. मुब. मन्त्रोऽहं, दे$_4$ मैत्रोऽग्नि-, ग्र$_2$ मन्त्राग्नि- (→मन्त्रोग्निर्); ब$_3$ दे$_3$ ते$_1$ ब्राह्मणो, मुब. दक्षिणा (→ब्राह्मणा). –b) दे$_{1.8-10}$ मुवें. मुए. कुशोऽथ (→कुशाश्च). –c) दे$_{1.8-10}$ ग्र$_2$ मुवें. मुए. प्रोक्षणीयं स्वयं चैव, द$_1$ उ$_1$ प्रोक्षणीयाः स्रुवश्चैव, म$_1$ यजुश्च स्रुक् श्रुवौ चैव. –d) दे$_6$ सोम-, उ$_1$ सौम्यो (→सोमो); दे$_{1.8-10}$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ मुवें. मुए. व्रतं (→घृतं); द$_1$ अथो ह्यहं (→अथास्म्यहं).

**५६.** ब$_1$. ⊙; म$_1$. cd ⊙. –a) दे$_6$ संवर्त्तकं (→संवर्त्तको); दे$_1$ ग्र$_2$ महात्मानं (ग्र$_2$ °नः), दे$_{8-10}$ महात्माहं (→महानात्मा); ते$_1$ यदि, म$_1$ सदा (→यशः). –c) 1.8-10 मुवें. मुए. मेधाप्यहं, दे$_4$ वेधावेद्यं, न$_1$ वेदावेद्यं, ते$_1$ तदावेद्य, द$_1$ ग्र$_2$ उ$_1$ वेदवेद्यः (→वेदो वेद्यं); दे$_3$ विभुर् (→प्रभुर्); ते$_1$ पारो (→गोप्ता). –d) का$_1$ ब$_3$ दे$_{1.2.6.8.9}$ ते$_1$ मुवें. मुए. मुब. ब्राह्मणो (→ब्रह्मणो); द$_1$ ग्र$_2$ उ$_1$ गोपतिश्चाथ गोमयं (उ$_1$ °यः).

**५७.** ब$_1$. ⊙. –c) दे$_3$ अहं, ते$_1$ सिहः (→हंसः); ब$_2$ हंस यानो कपिलो, ग्र$_2$ हंसः प्राणोऽथवा कालो. –d) म$_1$ ह्यम्मूर्त्तिश्च सनातनः.

**५८.** ब$_1$. ab ⊙. –a) म$_1$ कार्यो (→कालो). –b) न$_1$ द्वीपं (→बीजं). –d) दे$_{1.8-10}$ मुवें. मुए. ह्यन्यो (→ह्यन्यत्); दे$_4$ मत्तश्चान्यं न विद्यते.

**५९.** –a) म$_1$ हिरण्य° (→आदित्य°). –b) ते$_1$ परायणः (→नारायणः). –c) दे$_{1.4.8-10}$ न$_1$ मुवें. मुए. तं (→मां); दे$_{1.8-10}$ मुवें. मुए. मुब. पश्यन्ते (→पश्यन्ति). –d) दे$_{1.8.9}$ ग्र$_2$ मुवें. मुए. मम तत्त्वं (→अमृतत्त्वं); ब$_2$ ते$_1$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ भजन्ति, दे$_4$ भजेते (→व्रजन्ति).

**पुष्पिका**—[द$_1$ पुस्तके अध्यायसमाप्तिर्नास्ति]

**पुराणनाम**—का$_1$ दे$_6$ न$_1$ इति श्रीकू(का$_1$ कौ)र्मपुराणे, ब$_1$ इति कौर्मे, ब$_2$ दे$_3$ इति कूर्मपुराणे, ब$_3$ दे$_2$ इति कू(दे$_2$ कौ)र्म

# ४४

कूर्म उवाच ।❀

अतः परं प्रवक्ष्यामि प्रतिसर्गमनुत्तमम् ।
प्राकृतं हि समासेन शृणुध्वं गदतो मम ॥१

गते परार्द्धद्वितये कालो लोकप्रकालनः ।
कालाग्निर्भस्मसात् कर्त्तुं करोति निखिलं मतिम् ॥२

स्वात्मन्यात्मानमावेश्य भूत्वा देवो महेश्वरः ।
दहेदशेषं ब्रह्माण्डं सदेवासुरमानुषम् ॥३

तमाविश्य महादेवो भगवान्नीललोहितः ।
करोति लोकसंहारं भीषणं रूपमाश्रितः ॥४

प्रविश्य मण्डलं सौरं कृत्वाऽसौ बहुधा पुनः ।
निर्दहत्यखिलं लोकं सप्तसप्तिस्वरूपधृक् ॥५

स दग्ध्वा सकलं सत्त्वमस्त्रं ब्रह्मशिरो महत् ।
देवतानां शरीरेषु क्षिपत्यखिलदाहकम् ॥६

दग्धेष्वशेषदेवेषु देवी गिरिवरात्मजा ।
एका सा साक्षिणी शंभोस्तिष्ठते वैदिकी श्रुतिः ॥७

शिरःकपालैर्देवानां कृतस्रग्वरभूषणः । वें.२४६.८

---

पुराणे उपरिभागे, दे$_1$ इति श्रीकूर्मपुराणे उपरिविभागे व्यासगीतासु, दे$_4$ उ$_1$ इति श्रीकूर्मपुराणे उत्तरभागे, दे$_{8.9}$ मुए. इति श्रीकूर्मपुराणे उपरि(मुए. °वि)भागे व्यासगीतासु, दे$_{10}$ इति श्रीकूर्मपुराणे व्यासगीतासु, ते$_1$ इत्यादिमहापुराणे श्रीकौर्मे उपरिभागे, ग्र$_2$ म$_1$ इति श्रीकूर्मपुराणे उपरिभागे, मुवें. इति श्रीकूर्मपुराणे उत्तरार्द्धे व्यासगीतासु, मुब. इति श्रीकौर्मे महापुराणे उपरिभागे. **अध्यायनाम**—दे$_{1.3.4.8-10}$ न$_1$ ते$_1$ म$_1$ उ$_1$ मुवें. मुए. ⊙; का$_1$ ब$_{1-3}$ दे$_{2.6}$ प्रतिसर्गकथनो (ब$_2$ °नं) नाम, ग्र$_2$ कालनिर्णयं नाम, मुब. भूतप्रलयवर्णनं नाम. **अध्यायसंख्या**—ब$_2$ दे$_6$. ⊙; का$_1$ द्विचत्वारिंशोऽध्यायः ॥४२॥, ब$_{1.3}$ दे$_2$ द्वि(ब$_3$ द्वा) चत्वारिंशोऽध्यायः, दे$_1$ पंचचत्वारिंशोऽध्यायः ॥३६॥, दे$_3$ षट्चत्वारिंशोऽध्यायः ॥४६॥, दे$_{4.8.9}$ ग्र$_2$ म$_1$ पञ्चचत्वारिंशोऽध्यायः, दे$_{10}$ मुवें. पंचचत्वारिंशोऽध्यायः ॥४५॥, न$_1$ चतुर्नवतितमोऽध्यायः, ते$_1$ त्रिचत्वारिंशोऽध्यायः, उ$_1$ पंचचत्वारिंशोऽध्यायः ॥श्री॥, मुए. चतुश्चत्वारिंशोऽध्यायः, मुब. त्रिचत्वारिंशोऽध्यायः ॥४३॥.

**४४**

❀ द$_1$. ⊙; दे$_3$ कूर्म उ.; ते$_1$ श्रीशिवः, + कूर्मः; ग्र$_2$ म$_1$ उ$_1$ श्रीकूर्मः.

१. –c) ब$_1$ दे$_4$ न$_1$ ते$_1$ वः, दे$_{1.8-10}$ मुवें. मुए. मुब. तत्, द$_1$ उ$_1$ च (→हि); दे$_6$ प्राकृतं प्रतिसमासेन, ग्र$_2$ प्राकृतेन समासेन, म$_1$ प्राकृतश्च समानेन.

२. –a) दे$_4$ परार्द्धे (→परार्द्ध-). –b) दे$_{1.8-10}$ न$_1$ द$_1$ मुवें. मुए. मुब. काले (→कालो); दे$_{4.6}$ प्रकाशनः (दे$_6$ °कः). –d) का$_1$ करोत्यग्रेऽखिलं जगत्, + चरते चाखिलं जगत्, ब$_2$ द$_1$ ग्र$_2$ उ$_1$ करोति निखिलां गतिम्, दे$_{1.8-10}$ मुवें. मुए. मुब. चरते चाखिलं जगत्, दे$_4$ करोति निखिलां महीम्, दे$_4$ न$_1$ करोति निखिलं मतम्.

३. दे$_4$. ⊙. –a) ब$_2$ दे$_{3.6}$ द$_1$ ग्र$_2$ म$_1$ उ$_1$ आत्मन्या-, दे$_{1.8.9}$ स्वात्मना (→स्वात्मन्या-); ग्र$_2$ आवेद्य (→आवेश्य). –b) ब$_2$ दृष्ट्वा (→भूत्वा); म$_1$ सोऽपि (→देवो). –c) ग्र$_2$ दहेत शेषं ब्रह्माण्डं. –d) ब$_1$ दे$_{2.6}$ न$_1$ °मानवं (→°मानुषं).

४. –a) ब$_2$ तमावेश्य, दे$_4$ तत्राविश्य, ग्र$_2$ तत्रादिश्य (→तमाविश्य). –c) ब$_3$ दे$_{10}$ लोके (→लोक-); का$_1$ दे$_2$ संहार-, द$_1$ -साहारं (→-संहारं). –d) दे$_{10}$ भूषणं (→भीषणं); दे$_3$ आस्थितः, न$_1$ आस्थितः,+आश्रितः (→आश्रितः).

५. –a) का$_1$ दे$_4$ शौरं, ब$_1$ ते$_1$ घोरं (→सौरं). –b) दे$_{10}$ कृत्वा तु (→कृत्वासौ). –c) दे$_6$ निर्दहेत् (→निर्दहत्य-); दे$_3$ सर्वं (→लोकं). –d) ब$_2$ न$_1$ ग्र$_2$ म$_1$ उ$_1$ सप्तसप्त-, दे$_4$ सप्तसृष्टि- (→सप्तसप्ति-); दे$_{10}$ -धृत (→-धृक्).

६. –a) उ$_1$ संदग्ध्वा (→स दग्ध्वा); दे$_{1.8-10}$ मुवें. मुए. मुब. विश्वं, द$_1$ तत्र (→सत्त्वं). –d) दे$_{1.3.6}$ क्षिपत्या- (→क्षिपत्य-); का$_1$ ब$_{1-3}$ दे$_{2-4.6}$ न$_1$ ते$_1$ द$_1$ म$_1$ उ$_1$ -दाहकः, ग्र$_2$ -साधकः (→-दाहकं).

७. –a) दे$_{4.6}$ दग्धेषु शेष-, म$_1$ दग्धेष्वखिल- (→दग्धेष्वशेष-); दे$_4$ द$_1$ ग्र$_2$ उ$_1$ -देहेषु (→ -देवेषु). –c) दे$_{1.4.8.9}$ मुवें. मुए. एष (→एका); ग्र$_2$ उ$_1$ सत्यास् (→शंभोस्); ब$_1$ कषायसाक्षिणी शंभोस्. –d) ब$_2$ शिष्यते (→तिष्ठते).

८. –a) का$_1$ दे$_2$ शिवः (→शिरः). –b) ब$_3$ उ$_1$ कृतः (→कृत-); द$_1$ ग्र$_2$ °श्रवण° (→°स्रग्वर°). –c)

वें.२.४६.८ आदित्यचन्द्रादिगणैः पूरयन् व्योममण्डलम् ॥८
सहस्रनयनो देवः सहस्राकृतिरीश्वरः ।
सहस्रहस्तचरणः सहस्रार्चिर्महाभुजः ॥९
दंष्ट्राकरालवदनः प्रदीप्तानललोचनः ।
त्रिशूली कृत्तिवसनो योगमैश्वरमास्थितः ॥१०
पीत्वा तत्परमानन्दं प्रभूतममृतं स्वयम् ।
करोति ताण्डवं देवीमालोक्य परमेश्वरः ॥११
पीत्वा नृत्तामृतं देवी भर्तुः परममङ्गला ।
योगमास्थाय देवस्य देहमायाति शूलिनः ॥१२
संत्यक्त्वा ताण्डवरसं स्वेच्छयैव पिनाकधृक् ।
ज्योतिःस्वभावं भगवान् दग्ध्वा ब्रह्माण्डमण्डलम् ॥१३
संस्थितेष्वथ देवेषु ब्रह्मविष्णुपिनाकिषु ।
गुणैरशेषैः पृथिवी विलयं याति वारिषु ॥१४
स वारितत्त्वं सगुणं ग्रसते हव्यवाहनः ।
तेजस्तु गुणसंयुक्तं वायौ संयाति संक्षयम् ॥१५
आकाशे सगुणो वायुः प्रलयं याति विश्वभृत् ।
भूतादौ च तथाकाशं लीयते गुणसंयुतम् ॥१६
इन्द्रियाणि च सर्वाणि तैजसे यान्ति संक्षयम् ।
वैकारिके देवगणाः प्रलयं यान्ति सत्तमाः ॥१७
वैकारिकस्तैजसश्च भूतादिश्चेति सत्तमाः ।
त्रिविधोऽयमहंकारो महति प्रलयं व्रजेत् ॥१८

---

ग्र2 °गणः (→°गणैः); दे3 आदित्यचन्द्रोडुगण-. –d) ते1 देव (→व्योम-); दे3 स्फुरद्योतितमण्डले.

९. ब1. ⊙; द1 ग्र2. cd ⊙. –b) दे1.8-10 उ1 मुवें. मुए. सहस्राक्ष इतीश्वरः, ते1 सहस्रांशुकृदीश्वरः. –c) दे4 म1 सहस्रचरणश्शान्तः. –d) ते1 सहस्रांघ्रिः, उ1 सहस्राक्षो, (→सहस्रार्चिर्).

१०. ब1 द1 ग्र2. ⊙; उ1. bc ⊙ (द्र. सं.). –a) ब3 न1 °वदनं (→°वदनः). –c) दे1.8-10 मुवें. मुए. त्रिशूल- (→त्रिशूली). –d) उ1 ऐश्वर्यम (→ऐश्वरं); दे3 आश्रितः, दे6 संस्थितः (→आस्थितः).

११. द1 ग्र2. ⊙. –b) का1 प्रसूतम् (→प्रभूतम्); का1 ब2.3 दे2.6 ते1 स्वकं, ब1 स्वरः (→स्वयम्). –c) ते1 मण्डलं (→ताण्डवं); ब3 उ1 परमेश्वरं (→परमेश्वरः).

१२. ब1. ⊙. –a) का1 ब2.3 दे6 मुवें. मुए. मुब. नृत्या° (→नृत्ता°). –b) दे1.8-10 न1 ते1 मुवे. मुए. मुब. °मंगलम्, दे4 °मंगतः, द1 ग्र2 म1 °मण्डलम् (→°मंगला). –c) ते1 शिवस्य देवदेवस्य, द1 ग्र2 घोषमास्थाय देवस्य, म1 योगस्थाय च देवस्य. –d) दे3 देहमर्धं त्रिशूलिनः, म1 देहमागात्त्रिशूलिनः.

१३. ब1. ⊙; दे3.4 पुस्तकयोः cd चरणयोः पाठः १४ श्लोकानन्तरमागतः. –a) ब2 संत्यज्य, दे1.3.4.8.9 न1 ते1 म1 उ1 मुवें. मुए. मुब. स भुक्त्वा, दे6 संत्यक्ता, दे10 स्वभुक्त्वा, द1 ग्र2 सा भक्त्या (→संत्यक्त्वा); ब3 ताण्डववर-, ते1 ताण्डवचनं, ग्र2 ताण्डवरवं (→ताण्डवरसं). –b) दे4 उ1 पिनाकिनं, द1 ग्र2 पिनाकिनः (→पिनाकधृक्). –c) का1 ब2 दे2-4.6.9.10 ते1 द1 ग्र2 म1 मुब. याति, ब3 जातिः (→ज्योतिः); न1 स्वभावं याति भगवान्. –d) दे4 मृग्धा (→दग्ध्वा); दे3 दग्धे ब्रह्माण्डमण्डले.

१४. –a) ब2 सर्वेषु (→देवेषु); ते1 संक्षिप्तेष्वपि देवेषु. –d) ग्र2 °शिवादिषु (→°पिनाकिषु); दे1.8-10 मुवें. मुए. ब्रह्मा विष्णुः पिनाकधृक्. –c) उ1 प्रकृतिः,+पृथिवी (→पृथिवी); दे3 गतेषु तेषु पृथिवी.

१५. –a) द1 ग्र2 उ1 °सत्त्वं (→°तत्त्वं); द1 हि गुणं, म1 हि गुणैर् (→सगुणं); दे3 तद्वारि सगुणं याति, ते1 सवारितत्त्वस्य गुणं. –b) दे3 विलयं हव्यवाहने. –c) का1 ब2.3 दे2.6 तैजसं, ब1 तेजैः स्व-, दे1.8-10 न1 ग्र2 मुवें. मुए. मुब. तेजः स्व-, ते1 तेजश्च (→तेजस्तु). –d) दे6 संपूज्य (→संयाति); दे4 संक्षयी (→संक्षयं).

अतः परं दे3 पुस्तके अधिकम्—

65. * वायुश्च गुण संयुक्त आकाशे याति संक्षयम् ।

१६. दे3. ⊙. –a) दे2 सुगुणे (→सगुणे). –b) दे4.10 °धृक्, द1 ग्र2 उ1 °भुक् (→°भृत्). –c) दे2 यथा-, ते1 तदा- (→तथा-); ब1 दे1.8.9 न1 उ1 मुवें. मुए. [आ]काशे, दे4 द1 ग्र2 म1 [आ]काशो, दे10 [आ]काले, म1 (→[आ]काशं). –d) का1 ब1 दे1.2.4.8-10 न1 द1 ग्र2 मुवें. मुए. मुब. °संयुतः (→°संयुतं).

१७. दे3.4. ab ⊙; दे4 द1 ग्र2 म1 उ1. cd ⊙. –b) ब1 दे8-10 तेजसे, ब3 दे2 तेजांसि, दे6 तेजसं, म1 तेजस्के (→तैजसे). –c) का1 दे2.3 वैकारिकाः (→वैकारिके); ब1 दे1.8-10 न1 मुवें. मुए. वैकारिको देवगणैः (न1 °णः).

१८. ब3 दे1.6.8-10 मुवें. मुए. ⊙. –b) ब2.3 भूतादिश्चैव (→भूतादिश्चेति).

महान्तमेभिः सहितं ब्रह्माणमतितेजसम् ।
अव्यक्तं जगतो योनिः संहरेदेकमव्ययम् ॥१९
एवं संहृत्य भूतानि तत्त्वानि च महेश्वरः ।
वियोजयति चान्योन्यं प्रधानं पुरुषं परम् ॥२०
प्रधानपुंसोरजयोरेष संहार ईरितः ।
महेश्वरेच्छाजनितो न स्वयं विद्यते लयः ॥२१
गुणसाम्यं तदव्यक्तं प्रकृतिः परिगीयते ।
प्रधानं जगतो योनिर्मायातत्त्वमचेतनम् ॥२२
कूटस्थश्चिन्मयो ह्यात्मा केवलः पञ्चविंशकः ।
गीयते मुनिभिः साक्षी महानेकः पितामहः ॥२३
एवं संहारकरणी शक्तिर्माहेश्वरी ध्रुवा ।
प्रधानाद्यं विशेषान्तं दहेद् रुद्र इति श्रुतिः ॥२४
योगिनामथ सर्वेषां ज्ञानविन्यस्तचेतसाम् ।
आत्यन्तिकं चैव लयं विदधातीह शंकरः ॥२५
इत्येष भगवान् रुद्रः संहारं कुरुते वशी ।
स्थापिका मोहनीशक्तिर्नारायण इति श्रुतिः ॥२६
हिरण्यगर्भो भगवान् जगत् सदसदात्मकम् ।
सृजेदशेषं प्रकृतेस्तन्मयः पञ्चविंशकः ॥२७
सर्वज्ञाः सर्वगाः शान्ताः स्वात्मन्येव व्यवस्थिताः ।
शक्तयो ब्रह्मविष्ण्वीशा भुक्तिमुक्तिफलप्रदाः ॥२८
सर्वेश्वराः सर्ववन्द्याः शाश्वतानन्तभोगिनः ।
एकमेवाक्षरं तत्त्वं पुंप्रधानेश्वरात्मकम् ॥२९ वे. २.४६.२८

---

१९. –a) दे3.4 द1 ग्र2 सततं (→सहितं). –b) द1 ग्र2 म1 ब्रह्माण्डं (→ब्रह्माणं); ब2 दे1.8-10 न1 ते1 द1 ग्र2 म1 मुवें. मुए. मुब. अमितौजसं (→अतितेजसं). –c) का1 दे3 अव्यक्तो, ब1 अव्यक्त- (→अव्यक्तं); दे1.4.8.9 ग्र2 च गतो (→जगतो); दे3 योनिं, ग्र2 योऽग्निस् (→योनिः). –d) ब3 दे6 ते1 अव्ययः (→अव्ययं).

२०. –a) दे6 संकृत्य (→संहृत्य); ब1.3 ते1 भूतादि- (→भूतानि). –b) द1 म1 उ1 सत्त्वानि (→तत्त्वानि). –c) का1 ब2.3 दे2.6 न1 द1 ग्र2 म1 नियोजयत्यथान्योन्यं, ब1 नियोजयत्यजोऽन्योन्यं, ते1 नियोजयत्तथायोऽन्याः. –d) दे6 प्रधानं वै परस्परं.

२१. –a) दे3 °पुरुषयोर् (→°पुंसोर्); दे6 ते1 अनयोर् (→अजयोर्). –b) ब2 संसारः (→संहारः); दे4 जीवितः, द1 कारितः, म1 ईश्वरः (→ईरितः). –c) दे4 महेश्वरे वा, ते1 इहेश्वरेच्छा- (→महेश्वरेच्छा-); ग्र2 -जनिते (→-जनितो). –d) दे4 नृपः, द1 उ1 च यः, म1 लयं (→लयः).

२२. दे4. ⊙. –a) दे6 गुणव्यक्तसमापन्नः, ते1 गुणसाम्यतयाव्यक्तं. –b) ते1 प्रकृतिः परमीक्षते. –c) का1 ब1 दे1.8-10 ते1 म1 योनिं (→योनिर्). –d) दे3 सचेतनं, दे10 निचेतनः (→अचेतनम्).

२३. दे4. ⊙. –a) दे1.8.10 कूटश्च, दे2 द1 कूटस्थाश्, न1 तत्रस्थं, म1 कूटस्थं (→कूटस्थस्). –b) का1 दे1.3.8-10 न1 म1 उ1 मुवें. मुए. केवलं (→केवलः). –c) दे10 साक्ष्यैः, उ1 सो हि (→साक्षी). –d) दे1.8-10 मुवें. मुए. मुब. एष (→एकः).

२४. दे4. ⊙. –a) का1 ब1-3 दे2 ते1 संसार- (→संहार-); दे1.8-10 मुवें. मुए. मुब. -शक्तिश्च, ग्र2 -कारिणी (→-करिणी); –b) ब3 शुभा, दे3 वृषा (→ध्रुवा). –f ) ब1.3 दे1.8-10 न1 ग्र2 उ1 मुवें. मुए. देहे (→दहेद्).

२५. –a) ब1 योनिनां (→योगिनां); दे3 इह (→अथ); द1 संयोगी नाम सर्वेषां, म1 योगी सनाथस्सर्वेषां. –b) दे3 काल- (→ज्ञान-); दे1 -तेजसां (→-चेतसां). –c) उ1 आत्यन्तिकश् (→आत्यन्तिकं); दे3 तु विलयं, दे4 द1 उ1 च प्रलयं, ते1 च विलयं (→चैव लयं).

२६. –b) का1 ब1.3 दे6 शंकरः (→संहारं). –c) ब1 दे3.4 न1 द1 स्थापिता, दे1.8.9 ते1 म1 उ1 मुवें. मुए. मुब. स्वापिका, द1 स्वापिता (→स्थापिका); का1 ब2.3 दे1.3.6.8-10 ते1 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. मोहिनी° (→मोहनी°); ग्र2 स्थापितो मोहशक्तीनां.

२७. –b) ब1 जगत्सर्ग-, दे10 निजपद-, म1 महान् सद- (→जगत्सद-). –c) का1 ब1-3 दे2.6 म1 प्रकृति (→प्रकृतेस्). –d) दे3 चिन्मयः (→तन्मयः); म1 °संज्ञितः (→°विंशकः).

२८. दे4. ⊙. –a) दे1 मुवें. मुए. दुर्बलाः (→सर्वज्ञाः); ग्र2 उ1 शुद्धाः (→शान्ताः); ते1 सर्वज्ञः सर्वगः शान्तो. –c) म1 °विष्णवंशा (→°विष्ण्वीशा).

ब2 पुस्तके b, c मध्ये अधिकम्—

66. *शक्तयो ब्रह्मणः शान्ताः स्वात्मन्येव व्यवस्थिताः ।

२९. दे4. ⊙. –a) ब1 सर्ववाक्याः (→सर्ववन्द्याः). –b) ब1-3 दे6 न1 ते1 उ1 शाश्वतानन्द-, म1 शाश्वतानष्ट-

वे.१.४४.२९ अन्याश्च शक्तयो दिव्याः सन्ति तत्र सहस्रशः ।
इज्यन्ते विविधैर्यज्ञैः शक्रादित्यादयोऽमराः ॥३०
एकैकस्य सहस्राणि देहानां वै शतानि च ।
कथ्यन्ते चैव माहात्म्याच्छक्तिरेकैव निर्गुणा ॥३१
तां तां शक्तिं समाधाय स्वयं देवो महेश्वरः ।
करोति देहान् विविधान् ग्रसते चैव लीलया ॥३२
इज्यते सर्वयज्ञेषु ब्राह्मणैर्वेदवादिभिः ।
सर्वकामप्रदो रुद्र इत्येषा वैदिकी श्रुतिः ॥३३
सर्वासामेव शक्तीनां ब्रह्मविष्णुमहेश्वराः ।
प्राधान्येन स्मृता देवाः शक्तयः परमात्मनः ॥३४
आद्यः परस्ताद् भगवान् परमात्मा सनातनः ।
गीयते सर्वशक्त्यात्मा शूलपाणिर्महेश्वरः ॥३५
एनमेके वदन्त्यग्निं नारायणमथापरे ।
इन्द्रमेके परे विश्वान् ब्रह्माणमपरे जगुः ॥३६
ब्रह्मविष्ण्वग्निवरुणाः सर्वे देवास्तथर्षयः ।
एकस्यैवाथ रुद्रस्य भेदास्ते परिकीर्तिताः ॥३७
यं यं भेदं समाश्रित्य यजन्ति परमेश्वरम् ।
तत् तद् रूपं समास्थाय प्रददाति फलं शिवः ॥३८
तस्मादेकतरं भेदं समाश्रित्यापि शाश्वतम् ।
आराधयन्महादेवं याति तत्परमं पदम् ॥३९

---

(→शाश्वतानन्त-); द1 -योगिनः (→-भोगिनः). –c) का1 ब2 एवमेका-, ब3 एवमेवा-, दे2.3 एकमेका- (→एकमेवा-); ग्र2 उ1 °क्षयं (→°क्षरं). –d) का1 ब1 दे2.6 यत्प्रधानं, ते1 सुप्रधानं, द1 ग्र2 म1 उ1 तत्प्रधाने- (→पुंप्रधाने-); ते1 -श्वरात्मकः (→-स्वरात्मकं); ब2 प्रधानेश्वरकात्मकं.

३०. –a) द1 ग्र2 उ1 विप्राः (→दिव्याः). –b) दे1.8-10 मुवें. मुए. मुब. तत्र सन्ति (→सन्ति तत्र). –c) ब3 युज्यन्ते, दे1.10 ग्र2 उ1 मुवें. मुए. इत्येते, दे4 पूज्यन्ते (→इज्यन्ते). –d) दे1.4.8.9 न1 उ1 मुवें. मुए. शक्त्यादित्या°, दे3 शक्रदिव्या° (→शक्रादित्या°); ते1 चक्रादित्यादयो सुराः.

३१. –a) दे1.8-10 मुवें. मुए. मुब. एकैकस्याः, द1 ग्र2 म1 एकैकस्यां (→एकैकस्य). –b) दे3 देहानाविश्य तानि च. –c) दे3 कथ्यते चैव माहात्म्यं.

३२. –a) का1 समादाय, ब1 समाभूय, दे3.4 न1 द1 ग्र2 समास्थाय (→समाधाय); ब2 मुब. इमां शक्तिं समादा (मुब. °स्था)य, दे1 मुवें. मुए. तां शक्तिं स्वयमास्थाय, दे8-10 तां स्वशक्तिं समास्थाय, ते1 मायाशक्तिं समास्थाय, म1 शांतां शक्तिं समास्थाय. –c) द1 ग्र2 म1 देवान् (→देहान्); ब1-3 दे1.8-10 न1 ते1 मुवें. मुए. मुब. करोति विविधान् देहान् (ते1 °वान्). –d) दे1.8-10 मुवें. मुए. दृश्यते (→ग्रसते); दे4 लीयते, न1 स्वेच्छया (→लीलया).

३३. –a) दे10 इत्येते (→इज्यते); ग्र2 °यज्ञैस्तु (→°यज्ञेषु). –b) ब1 °वादिषु, दे10 °शक्तिभिः, म1 °पारगैः (→°वादिभिः). –d) दे1 उ1 इत्येषां (→इत्येषा).

३४. दे4. cd. ⊙. –b) म1 ब्रह्मविष्णुशिवात्मकाः. –c) द1 म1 प्रधाना (म1 °न), संस्मृताः देवाः, ग्र2 उ1 प्राधान्यः (उ1 °न्यं) संस्मृता देव्यः (ग्र2 °व). –d) ग्र2 उ1 परमेष्ठिनः (→परमात्मनः).

३५. दे4. ⊙. –a) ब3 दे1.8-10 न1 ते1 द1 म1 मुवें. मुए. मुब. आभ्यः (→आद्यः); का1 पुरस्ताद् (→परस्ताद्). –c) दे1.8.9 मुवें. मुए. मुब. °मायात्मा, दे6 *** (→°शक्त्यात्मा).

३६. –a) का1 एवमेकं, ब2.3 मुए. एकमेके, दे1.8.9 एकमेवं (दे1 °व), दे4 एतस्माकं, दे6.10 एवमेके, द1 उ1 एतमेके (→एनमेके); दे4 न1 वदन्त्यग्निर्, द1 म1 वदन्त्यन्ये (म1 °ग्रचे) (→वदन्त्यग्निं). –c) द1 ग्र2 उ1 इन्द्रमीशं (→इन्द्रमेके); ब1 विद्वान्, ब2.3 विप्राः, दे1.8-10 मुवें. मुए. मुब. प्राणं, दे3 द1 ग्र2 उ1 विष्णुं, म1 विश्वं (→विश्वान्). –d) का1 दे4 मुवें. ब्राह्मणं (→ब्रह्माणं); ब2 ब्रह्माणं परमं जगुः.

३७. –a) दे3 ब्रह्मविष्णवीशशरणाः, दे4 ब्रह्मा विष्णुश्च वरुणः. –b) का1 ब2 दे2 त्वथर्षयः, ब1 दे3 ते1 महर्षयः, द1 सहर्षयः (→तथर्षयः). –c) का1 एकैकस्याथ रुद्रस्य, दे3 एकैकशोऽथ रुद्रस्य. –d) दे4 तेजस्ते (→भेदास्ते).

३८. दे1.8-10. cd ⊙. –a) ब2.3 दे6 यं यं देवं, दे3 नानाभेदं, न1 यद् यद् भेदं, ते1 नानाभेदान् (→यं यं भेदं). –c) ते1 तं तं रूपं (→तत्तद्रूपं). –d) दे3 स ददाति (→प्रददाति).

३९. दे1.3.8-10. ⊙. –a) न1 एकपरं (→एकतरं); न1 स्थानं, + भेदं (→भेदं). –b) न1 समाश्रित्यादि-, द1 ग्र2 समाश्रित्याथ (→समाश्रित्यापि). –c) दे4 न1 द1 ग्र2 उ1 आराधयेत् (→आराधयन्).

किन्तु देवं महादेवं सर्वशक्तिं सनातनम् ।
आराधयेद् वै गिरिशं सगुणं वाऽथ निर्गुणम् ॥४०
मया प्रोक्तो हि भवतां योगः प्रागेव निर्गुणः ।
आरुरुक्षुस्तु सगुणं पूजयेत् परमेश्वरम् ॥४१
पिनाकिनं त्रिनयनं जटिलं कृत्तिवाससम् ।
पद्मासनस्थं रुक्माभं चिन्तयेद् वैदिकी श्रुतिः ॥४२
एष योगः समुद्दिष्टः सबीजो मुनिसत्तमाः ।
तस्मात् सर्वान् परित्यज्य देवान् ब्रह्मपुरोगमान् ।
आराधयेद् विरूपाक्षमादिमध्यान्तसंस्थितम् ॥४३
भक्तियोगसमायुक्तः स्वधर्मनिरतः शुचिः ।
तादृशं रूपमास्थाय समायात्यन्तिकं शिवम् ॥४४
एष योगः समुद्दिष्टः सबीजोत्यन्तभावने ।
यथाविधि प्रकुर्वाणः प्राप्नुयादैश्वरं पदम् ॥४५
अत्राप्यशक्तोऽथ हरं विष्णुं ब्रह्माणमर्चयेत् ।
अथ चेदसमर्थः स्यात् तत्रापि मुनिपुंगवाः ।
ततो वाय्वग्निशक्रादीन् पूजयेद् भक्तिसंयुतः ॥४६
ये चान्ये भावने शुद्धे प्रागुक्ते भवतामिह ।
अथापि कथितो योगो निर्बीजश्च सबीजकः ॥४७
ज्ञानं तदुक्तं निर्बीजं पूर्वं हि भवतां मया ।
विष्णुं रुद्रं विरिञ्चिं च सबीजं भावयेद् बुधः ।
अथवाग्न्यादिकान् देवांस्तत्परः संयतेन्द्रियः ॥४८
पूजयेत् पुरुषं विष्णुं चतुर्मूर्त्तिधरं हरिम् ।
अनादिनिधनं देवं वासुदेवं सनातनम् ॥४९ वें.२.४६.४१

४०. दे1.8-10. ⊙; दे3. ab ⊙. –c) दे3 महादेवं, दे4 हरि देवं, ते1 वै गौरीशं, द1 वै सहर्षं, म1 वाथ ऋषिं, उ1 परं देवं, मुवें. मुए. [इ]ह गिरिशं (→वै गिरिशं). –d) ते1 चापि (→वाथ).

४१. दे1.8-10. ⊙. –ab) ते1 मया प्रोक्तो हि भगवान् योगी योगे च निर्गुणः. –d) द1 ग्र2 उ1 पूजयेत्परमं शिवं.

४२. –b) ब1 कीर्त्ति- (→कृत्ति-). –c) ते1 ब्रह्मासनस्थं (→पद्मासनस्थं); दे4 रुक्माङ्गं (→रुक्माभं); दे1.8-10 मुवें. मुए. मुब. रुक्माभं वा सहस्रार्कात्.

४३. –b) ब2 सजीवो (→सबीजो); दे1.3.4.8-10 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. °पुंगवाः (→°सत्तमाः). –d) म1 शक्र° (→ब्रह्म°). –f) का1 ब1 दे2.6 न1 ते1 आदित्यान्तर-(→आदिमध्यान्त-); द1 ग्र2 म1 उ1 -वर्जितं (→-संस्थितं).

४४. मुवें. cd ⊙. –a) दे1.8-10 °समायुक्तं (→°समायुक्तः). –b) दे1.8-10 मुए. स्वकर्म- (→स्वधर्म-). –c) ग्र2 नाद्येशं (→तादृशं). –d) दे4 समासाद्या- (→समायात्य-); का1 ब1.3 दे6 मुब. शिवः, ब2 हरेः, न1 शुभं (→शिवं); दे1.8-10 मुब. आसाद्यात्यन्तिकं शिवं, ग्र2 समासाद्य हरं शिवं.

४५. मुब. ab ⊙. –a) ते1 बीजः (→योगः); दे10 एष योग सबीजोन्यं. –b) ब1 भारतः, दे1.4 मुब. भावनः, दे3 °साधकः, दे8.9 °भावना, ते1 भावगे (→°भावने); का1 सबीजोत्पत्तिभावने, दे10 तत्रावेत्य यथाविधि, द1 ग्र2 म1 उ1 स बीजो ह्येष भावने. –c) द1 ग्र2 विधिं (→°विधि); दे10 प्रकुर्वाणः प्राप्नुयादेव. –d) दे3 प्राप्नुयात्परमं पदं, दे10 ऐश्वरं परमं पदम्.

४६. ब1-3 दे1.3.4.6.8-10 न1 ते1 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. पुस्तकेषु अयं श्लोकः ४३ श्लोकस्य b, c मध्ये आगतः. –a) दे3 द1 ग्र2 उ1 अथा- (→अत्रा-); दे3 -प्यशक्तश्च (→ -प्यशक्तोऽथ). –b) दे1.4.8-10 मुवें. मुए. मुब. विश्वं (→विष्णुं).–c) ब2.3 अथ चेन्न, दे1.3.8 अथवेद-(→अथ चेद-). –d) दे3 अत्रापि (→तत्रापि); द1 ग्र2 म1 उ1 द्विज° (→मुनि°). –f) दे3 ततो वाय्वादिकान् देवान्.

४७. –a) ब3 दे1.3.8-10 न1 मुवें. मुए. द्वे (→ये); ब1 ये चान्ते तारणे शुद्धे, दे3 द्वे रूपे तस्य संशुद्धे, दे4 द्वे वास्य भावने शुद्धे. –c) का1 ब1.3 दे3.4.6 न1 ते1 म1 मुब. अत्रापि, ब2 अन्यापि, द1 ग्र2 नाद्यापि, उ1 तत्रापि (→अथापि); म1 योनिर् (→योगो). –d) दे3 तु (→च); दे4 निर्बीजः स च बीजकः, म1 योनिबीजकश्च बीजकः.

४८. –b) द1 दे4 भवता (→भवतां). –c) का1 दे10 उ1 विरञ्चि वा (दे10 च), ब1 विरञ्चं च, ब2.3 दे6 विरिञ्चि वा, दे8.9 विरंचं च, दे4 ते1 द1 ग्र2 म1 विरिञ्चं वा (→विरञ्चिं च). –d) ब1 ते1 सबीजे, द1 ग्र2 सबीजो (→सबीजं); दे1.8-10 सबीजे (दे10 °जो) साधयेद् बुधः, न1 सबीजे भावने बुधः. –e) वेदान् (→देवान्); दे1.3.8-10 न1 द1 ग्र2 उ1 मुवें. मुए. मुब. अथ वाय्वादिकान् देवान्. –f) ग्र2 तत्पदः (→तत्परः); दे6 संजितेन्द्रियः, ते1 पूजयेत्ततः (→संयतेन्द्रियः); दे1.8-10 न1 मुवें. मुए. मुब. तत्परो नियतात्मवान्, दे3 तर्पयेत् संयतेन्द्रियः.

४९. –b) दे1.4.8-10 द1 उ1 मुवें. हरं (→हरिं). –d) म1 जनार्दनं (→सनातनं).

वें.२.४६.५० नारायणं जगद्योनिमाकाशं परमं पदम् ।
तल्लिङ्गधारी नियतं तद्भक्तस्तदपाश्रयः ।
एष एव विधिर्ब्राह्मो भावने चान्तिके मतः ।।५०
इत्येतत् कथितं ज्ञानं भावनासंश्रयं परम् ।
इन्द्रद्युम्नाय मुनये कथितं यन्मया पुरा ।।५१
अव्यक्तात्मकमेवेदं चेतनाचेतनं जगत् ।
तदीश्वरः परं ब्रह्म तस्माद् ब्रह्ममयं जगत् ।।५२

सूत उवाच ।❀

एतावदुक्त्वा भगवान् विरराम जनार्दनः ।
तुष्टुवुर्मुनयो विष्णुं शक्रेण सह माधवम् ।।५३

मुनय ऊचुः ।❀

नमस्ते कूर्मरूपाय विष्णवे परमात्मने ।
नारायणाय विश्वाय वासुदेवाय ते नमः ।।५४
नमो नमस्ते कृष्णाय गोविन्दाय नमो नमः ।
माधवाय नमस्तुभ्यं नमो यज्ञेश्वराय च ।।५५
सहस्रशिरसे तुभ्यं सहस्राक्षाय ते नमः ।
नमः सहस्रहस्ताय सहस्रचरणाय च ।।५६
ॐ नमो ज्ञानरूपाय परमात्मस्वरूपिणे ।
आनन्दाय नमस्तुभ्यं मायातीताय ते नमः ।।५७
नमो गूढशरीराय निर्गुणाय नमोऽस्तु ते ।
पुरुषाय पुराणाय सत्तामात्रस्वरूपिणे ।।५८
नमः सांख्याय योगाय केवलाय नमोऽस्तु ते ।
धर्मज्ञानाधिगम्याय निष्कलाय नमो नमः ।।५९
नमोऽस्तु व्योमतत्त्वाय महायोगेश्वराय च ।

---

५०. –c) का1 दे2 °मानी, दे6 °माली (→°धारी); ब2 दे3 ते1 द1 ग्र2 म1 उ1 नियतस् (→नियतं). –d) का1 मद्भक्तः, दे1.8-10 न1 मुवें. मुए. मुब. यद् युक्तः (दे1 °क्तं) (→तद्भक्तस्); दे1.3.4.8-10 ते1 मुवें. मुए. मुब. तदुपाश्रयः, द1 ग्र2 म1 उ1 तत्परायणः (→तदपाश्रयः). –e) ब1 द1 ग्र2 ब्रह्मो, दे3.4.6 उ1 ब्रह्म-, दे8-10 ब्राह्म-, ते1 ब्रह्मा, म1 बाह्मो (→ब्राह्मो); दे1 मुवें. मुए. एष एव विधिर्वास्व. –f) दे1 मुवें. मुए. मुब. चान्तिमे, दे3 भाति मे, दे4 ते1 चान्तिको, दे8-10 चान्तमे, न1 यान्ति मे (→चान्तिके); द1 ग्र2 म1 उ1 भावने चेति मे मतिः (म1 °तः).

५१. –b) दे4 भगवान् (→भावना-); न1 -संश्रयं मतः, म1 -संश्रयः परं (→-संश्रयं परं); ते1 भावमात्माश्रयं परं.

५२. –a) का1 अव्यक्तमेवमेवेदं, दे4 अव्यक्ताव्यक्तमेवेदं, ते1 अव्यक्तकारणं सर्वं, द1 अव्यक्तं व्यक्तमप्येवं. –b) न1 चेतना चेतनात्मकं. –c) का1 ब2 दे1.8-10 न1 ग्र2 मुवें. मुए. तदीश्वरं (→तदीश्वरः). –d) दे4 ब्रह्मसमं (→ब्रह्ममयं).
अतः परं ब3 पुस्तके अधिकम्—इति कूर्मपुराणे.

❀ दे6 सूत उ.; न1 ते1 ग्र2 सूतः; द1 श्री सूतः.

५३. –a) दे3 एतदुक्त्वा स भगवान्, द1 म1 उ1 इत्येवमुक्त्वा भगवान्. –c) उ1 नित्यं (→विष्णुं). –d) का1 उ1 मुवें. मुए. शुक्रेण (→शक्रेण).

❀ का1. ⊙; ब1-3 दे2.6 मुब. ऋषय ऊचुः; न1 ते1 ऋषयः; ग्र2 म1 उ1 मुनयः.

५४. –a) न1 धर्म° (→कूर्म°).

५५. ते1.ab ⊙. –a) उ1 रुद्राय (→कृष्णाय). –b) ब2 दे4 द1 ग्र2 म1 नमोऽस्तु ते, दे1.8-10 मुए. मुब. च ते नमः (→नमो नमः). –c) दे1.8-10 मुवें. मुए. मुब. च ते नित्यं, दे3.4.6 द1 ग्र2 म1 उ1 नमो नित्यं (→नमस्तुभ्यं).

५६. दे4. ⊙. –a) म1 नित्यं (→तुभ्यं). –c) दे2.6 न1 ते1 °पादाय, म1 °देहाय (→°हस्ताय); का1 नमः शतहस्तपादाय. –d) ते1 द1 म1 ते (→च).

५७. दे4. ⊙. –a) दे1 नमो ज्ञानविरूपाय, दे10 नमो ज्ञानाय रूपाय. –b) दे3 न1 ते1 द1 ग्र2 म1 उ1 परमार्थस्वरूपिणे, दे1.8-10 मुवें. मुए. मुब. विष्णवे परमात्मने. –d) दे3 वै (→ते).

५८. दे4. ⊙; दे3 द1 ग्र2 उ1. cd ⊙; दे6.c ⊙. –a) ब2 मुब. म1 °स्वरूपाय (→°शरीराय). –b) उ1 नमो नमः (→नमोऽस्तु ते).

५९. दे4. ⊙; दे3 द1 ग्र2 उ1.ab ⊙. –a) दे1 संख्याय (→सांख्याय); म1 महते (→योगाय). –b) ब3 कैवल्याय (→केवलाय). –c) ब1 दे1.8-10 न1 म1 °ज्ञानाभि°, दे3 ते1 °ज्ञानादि° (→°ज्ञानाधि°); द1 उ1 धर्मज्ञायादि(द1 °भि)गम्याय. –d) दे1.8-10 मुवें. मुए. नमोऽस्तु ते (→नमो नमः).

६०. ब2.3 पुस्तकयोः ६०,६१ संख्याकौ श्लोकौ ५६ श्लोकानन्तरमागतः; दे4.6. ⊙. –a) ब2.3 नमस्ते (→नमोऽस्तु); दे1.8-10 मुवें. मुए. मुब. योग° (→व्योम°). –b) दे3 उ1

परावराणां प्रभवे वेदवेद्याय ते नमः ।।६०
नमो बुद्धाय शुद्धाय नमो युक्ताय हेतवे ।
नमो नमो नमस्तुभ्यं मायिने वेधसे नमः ।।६१
नमोऽस्तु ते वराहाय नारसिंहाय ते नमः ।
वामनाय नमस्तुभ्यं हृषीकेशाय ते नमः ।।६२
नमोऽस्तु कालरुद्राय कालरूपाय ते नमः ।
स्वर्गापवर्गदात्रे च नमोऽप्रतिहतात्मने ।।६३
नमो योगाधिगम्याय योगिने योगदायिने ।
देवानां पतये तुभ्यं देवार्त्तिशमनाय ते ।।६४
भगवंस्त्वत्प्रसादेन सर्वसंसारनाशनम् ।
अस्माभिर्विदितं ज्ञानं यज्ज्ञात्वाऽमृतमश्नुते ।।६५
श्रुतास्तु विविधा धर्मा वंशा मन्वन्तराणि च ।
सर्गश्च प्रतिसर्गश्च ब्रह्माण्डस्यास्य विस्तरः ।।६६
त्वं हि सर्वजगत्साक्षी विश्वो नारायणः परः ।
त्रातुमर्हस्यनन्तात्मंस्त्वमेव शरणं गतिः ।।६७

सूत उवाच ।❀

एतद् वः कथितं विप्रा योगमोक्षप्रदायकम् ।
कौर्मं पुराणमखिलं यज्जगाद गदाधरः ।।६८
अस्मिन् पुराणे लक्ष्म्यास्तु संभवः कथितः पुरा ।
मोहायाशेषभूतानां वासुदेवेन योजनम् ।।६९
प्रजापतीनां सर्गस्तु वर्णधर्माश्च वृत्तयः ।
धर्मार्थकाममोक्षाणां यथावल्लक्षणं शुभम् ।।७०　　वें.२.४६.७०

---

महायोगी° (→महायोगे°). –c) का$_{1}$ ब$_{1.3}$ दे$_{2.3}$ परापराणां (→परावराणां). –d) ब$_{1}$ °विद्याय (→°वेद्याय).

६१. ब$_{2.3}$ पुस्तकयोरयंश्लोकः ५६ श्लोकानन्तरमागतः; दे$_{6}$. ⊙. –a) ते$_{1}$ नमो शुद्धाय बुद्धाय. –b) का$_{1}$ ब$_{2.3}$ दे$_{2.4}$ मुक्ताय (→युक्ताय); दे$_{3}$ ते$_{1}$ नमस्ते मुक्तिहेतवे, द$_{1}$ ग्र$_{2}$ नमः सर्वस्य हेतवे. –d) दे$_{3}$ साक्षिणे (→मायिने); ते$_{1}$ मायिने योगवेधसे. –cd) ब$_{2.3}$ नमो मायाविने तुभ्यं वेधसे च नमो नमः.

६२. –a) का$_{1}$ ब$_{2.3}$ दे$_{1.3.4.10}$ न$_{1}$ द$_{1}$ ग्र$_{2}$ मुवें. मुए. मुब. वाराहाय (→वराहाय). –b) ब$_{1}$ दे$_{3}$ नरसिंहाय (→नारसिंहाय).

६३. दे$_{1.8-10}$ मुवें. मुए. ab ⊙. –a) दे$_{3.4}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ नमस्ते (→नमोऽस्तु). –c) दे$_{1.3.4.8-10}$ उ$_{1}$ मुवें. मुए. °दानाय, दे$_{6}$ न$_{1}$ °दाता च, द$_{1}$ ग्र$_{2}$ °सेनाय, म$_{1}$ °द्वारा च (→°दात्रे च). –d) ब$_{3}$ [अ]प्रतिहताय च, दे$_{6}$ [अ]प्रतिहाताय ते (→[अ]प्रतिहतात्मने); दे$_{10}$ प्रतिहंतात्मने नमः.

६४. –d) दे$_{3}$ दवार्त्तिशमनाय च, ग्र$_{2}$ देवशक्तिप्रदाय ते.

६५. –a) ग्र$_{2}$ अभवत् (→भगवन्). –b) ब$_{1}$ सर्वं (→सर्व-); दे$_{4}$ °सागरं (→°नाशनं).

६६. –a) ब$_{3}$ श्रुत्वा तु, दे$_{4}$ श्रुतीस्तु, दे$_{1.8-10}$ उ$_{1}$ मुवें. मुए. मुब. श्रुताश्च (→श्रुतास्तु); दे$_{10}$ विविधान् धर्मान् (→विविधा धर्मा). –b) ब$_{1}$ दे$_{2.4}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ मुब. वंश-, दे$_{10}$ वंशो (→वंशा). –c) दे$_{4}$ मनुसर्गं च, न$_{1}$ प्रतिसर्गं च (→प्रतिसर्गश्च). –d) दे$_{4}$ न$_{1}$ म$_{1}$ विस्तरं (→विस्तरः); दे$_{3}$ ब्रह्माण्डस्यैष विस्तरः, ग्र$_{2}$ ब्रह्माण्डस्य स विस्तरः.

६७. –a) ग्र$_{2}$ तत्त्वं (→त्वं हि). –b) ग्र$_{2}$ तत्त्वं (→विश्वो); न$_{1}$ विश्वो नारायणापरः. –c) दे$_{1.8-10}$ न$_{1}$ द$_{1}$ ग्र$_{2}$ मुवें. मुए. मुब. °स्यनन्तात्मा (→°स्यनन्तात्मन्). –d) दे$_{1.4.6.8-10}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ मुवें. मुए. मुब. त्वामेव शरणं गताः (दे$_{4.6}$ °तः), ते$_{1}$ त्वमेव शरणं च नः.

अतः परं दे$_{3}$ पुस्तके अधिकम्—

इति कूर्मपुराणे सप्तचत्वारिंशोऽध्यायः ।

❀ न$_{1}$ ते$_{1}$ ग्र$_{2}$ उ$_{1}$ सूतः; द$_{1}$ श्रीसूत उवाच; म$_{1}$ श्रीसूतः.

६८. दे$_{6}$. a ⊙. –a) न$_{1}$ विप्र- (→विप्राः). –b) दे$_{1.3.4.8-10}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ मुवें. मुए. मुब. भोग° (→योग°); ते$_{1}$ योगं मोक्षप्रदायकं. –d) संजगाद (→यज्जगाद).

६९. –a) दे$_{3}$ भक्त्यास् (→लक्ष्म्यास्); दे$_{4}$ च (→तु). –b) उ$_{1}$ कथितं (→कथितः); उ$_{1}$ पुरः (→पुरा). –c) का$_{1}$ मोहिनीसर्वभूतानां, ब$_{1.3}$ दे$_{6}$ ते$_{1}$ मोहयन् (ब$_{1}$ °येत्) सर्वभूतानां, ब$_{2}$ न$_{1}$ मोहाय सर्वभूतानां, दे$_{2}$ मोहनाय सर्वभूतानां, दे$_{4}$ मोक्षायाशेषभूतानां, दे$_{10}$ मोहायाशेषं तु भूतानां. –d) का$_{1}$ योजता, दे$_{1.8-10}$ मुवें. मुए. मुब. योजितः (→योजनं).

७०. ग्र$_{2}$. d ⊙. –a) दे$_{1.6.8-10}$ मुए. सर्गास् (→सर्गस्); ब$_{1-3}$ दे$_{2.6}$ न$_{1}$ ते$_{1}$ च (→तु). –b) द$_{1}$ म$_{1}$ °धर्मास्तु (→°धर्माश्च); ब$_{1}$ भूतयः, ग्र$_{2}$ उ$_{1}$ वित्तमाः (→वृत्तयः) ते$_{1}$ वर्णधर्मप्रवृत्तयः. –c) द$_{1}$ धर्मकामार्थमोक्षाणां. –d) उ$_{1}$ गुणं (→शुभं).

वें.२.४६.७० पितामहस्य विष्णोश्च महेशस्य च धीमतः ।
एकत्वं च पृथक्त्वं च विशेषश्चोपवर्णितः ॥७१
भक्तानां लक्षणं प्रोक्तं समाचारश्च शोभनः ।
वर्णाश्रमाणां कथितं यथावदिह लक्षणम् ॥७२
आदिसर्गस्ततः पश्चादण्डावरणसप्तकम् ।
हिरण्यगर्भसर्गश्च कीर्त्तितो मुनिपुंगवाः ॥७३
कालसंख्याप्रकथनं माहात्म्यं चेश्वरस्य च ।
ब्रह्मणः शयनं चाप्सु नामनिर्वचनं तथा ॥७४
वराहवपुषा भूयो भूमेरुद्धरणं पुनः ।
मुख्यादिसर्गकथनं मुनिसर्गस्तथापरः ॥७५
व्याख्यातो रुद्रसर्गश्च ऋषिसर्गश्च तापसः ।
धर्मस्य च प्रजासर्गस्तामसात् पूर्वमेव तु ॥७६
ब्रह्मविष्णुविवादः स्यादन्तर्देहप्रवेशनम् ।
पद्मोद्भवत्वं देवस्य मोहस्तस्य च धीमतः ॥७७
दर्शनं च महेशस्य माहात्म्यं विष्णुनेरितम् ।
दिव्यदृष्टिप्रदानं च ब्रह्मणः परमेष्ठिनः ॥७८
संस्तवो देवदेवस्य ब्रह्मणा परमेष्ठिना ।
प्रसादो गिरिशस्याथ वरदानं तथैव च ॥७९
संवादो विष्णुना सार्धं शंकरस्य महात्मनः ।
वरदानं तथापूर्वमन्तर्द्धानं पिनाकिनः ॥८०
वधश्च कथितो विप्रा मधुकैटभयोः पुरा ।
अवतारोऽथ देवस्य ब्रह्मणो नाभिपङ्कजात् ॥८१
एकीभावश्च देवस्य विष्णुना कथितस्ततः ।
विमोहो ब्रह्मणश्चाथ संज्ञालाभो हरेस्ततः ॥८२
तपश्चचरणमाख्यातं देवदेवस्य धीमतः ।
प्रादुर्भावो महेशस्य ललाटात् कथितस्ततः ॥८३

---

७१. –b) द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ महादेवस्य (→महेशस्य च). –d) ब$_{1}$ विशेषश्चैव, दे$_{6}$ विशेषाश्चापि, न$_{1}$ विशेषं चोप-, उ$_{1}$ विशेषं चापि (→विशेषश्चोप-); दे$_{6}$ वर्णिताः, उ$_{1}$ वर्णितं (→-वर्णितः).

७२. –a) ते$_{1}$ चैव (→प्रोक्तं). –b) दे$_{3}$ साधनं, न$_{1}$ शोभनं (→शोभनः); दे$_{1.8\text{-}10}$ मुवें. मुए. समाचारश्च भोजनं, ते$_{1}$ सदाचारश्च शोभनः, द$_{1}$ उ$_{1}$ समाचाराश्च शोभनाः, ग्र$_{2}$ समाराधनशोभनः, मुवें. समाचारः सुशोभनः. –c) दे$_{3}$ सर्वा° (→वर्णा°).

७३. –a) का$_{1}$ उ$_{1}$ °सर्गं (→°सर्गः); ब$_{3}$ दे$_{2.6}$ आदित्यसर्गतः पश्चात्, दे$_{4}$ आदिसर्गस्तु यः पश्चात्, ते$_{1}$ आदित्यसर्गः तत्पश्चात्. –d) उ$_{1}$ कीर्तंते (→कीर्त्तितो).

७४. ब$_{1}$. ७४a-७५d ⊙; दे$_{1.3.4.8\text{-}10}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$. cd ⊙. –a) द$_{1}$ °संज्ञा° (→°संख्या°); ग्र$_{2}$ °प्रकथितं (→°प्रकथनं). –b) का$_{1}$ ब$_{2.3}$ दे$_{2}$ न$_{1}$ उ$_{1}$ तु (→च).

७५. ब$_{1}$. ⊙ (द्र. ७४ पा. वि.); दे$_{1.3.4.8\text{-}10}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$. ⊙. –a) मुवें. मुए. मुब. °वपुषो (→°वपुषा). –c) ते$_{1}$ मुख्यानां (→मुख्यादि-).

७६. दे$_{1.3.4.8\text{-}10}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$. ⊙. –a) ब$_{1}$ **तो, न$_{1}$ व्याख्याने (→व्याख्यातो). –b) का$_{1}$ दे$_{2}$ मुनि-, ब$_{2}$ सर्षि- (→ऋषि-); न$_{1}$ तामसः (→तापसः). –d) न$_{1}$ तामसः पूर्वमेव तु.

७७. –a) ब$_{1}$ °विवादं (→°विवादः); दे$_{4}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ च (→स्यात्); ब्रह्मविष्ण्वादिदेवानां. –b) द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ अन्तर्दैवप्रवेशनं. –c) दे$_{4}$ पद्मोद्भवन्तं, ग्र$_{2}$ यद्भवत्वं च, उ$_{1}$ पद्मोद्भवं च (→पद्मोद्भवत्वं). –d) दे$_{3}$ मोहस्तस्यैव, दे$_{4}$ मोक्षस्तस्यैव, ग्र$_{2}$ उ$_{1}$ महत्तस्य च (→मोहस्तस्य च).

७८. दे$_{4}$. cd ⊙. –a) म$_{1}$ तु (→च). –b) दे$_{6}$ चैव (→विष्णु-). –d) दे$_{6}$ परमेष्ठिनं, मुवें. मुए. परमेष्ठिना (→परमेष्ठिनः).

७९. दे$_{4}$. ⊙; दे$_{10}$ ग्र$_{2}$ उ$_{1}$. ab ⊙; दे$_{6}$. b ⊙. –b) का$_{1}$ ब$_{1\text{-}3}$ दे$_{2.6}$ ते$_{1}$ संभवो (→संस्तवो). –b) दे$_{1.8.9}$ ते$_{1}$ ब्रह्मणः परमेष्ठिनः. –d) का$_{1}$ ब$_{2.3}$ दे$_{2.6}$ वरदानं ततः (दे$_{2}$ °मः)परं, ब$_{1}$ वरदानं स्वयम्भुवे, ते$_{1}$ वरदानं तपः परम्.

८०. दे$_{4}$. ab ⊙. –a) का$_{1}$ ब$_{2.3}$ दे$_{2.6}$ विवादो, ते$_{1}$ वरदो (→संवादो).

८१. –b) का$_{1}$ ब$_{1.3}$ दे$_{2.6}$ न$_{1}$ परं, ब$_{2}$ ततः, दे$_{3}$ द$_{1}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ तथा (→पुरा). –c) दे$_{4}$ अवतारश्च देवश्च.

८२. दे$_{1.4.8\text{-}10}$ ते$_{1}$ द$_{1}$ ग्र$_{2}$ उ$_{1}$. cd ⊙. –a) दे$_{1.3.4.6.8\text{-}10}$ ग्र$_{2}$ म$_{1}$ उ$_{1}$ मुवें. मुए. मुब. देवेन, ग्र$_{2}$ देवानां (→देवस्य). –b) दे$_{1.8\text{-}10}$ मुवें. मुए. मुब. ब्रह्मणा, द$_{1}$ म$_{1}$ विनाशः, ग्र$_{2}$ वि** (→विष्णुना); दे$_{1.8\text{-}10}$ मुवें. मुए. मुब. पुरा (→ततः). –d) मुवें. मुए. संज्ञालाभो हरेस्ततः.

८३. दे$_{1.4.8\text{-}10}$ ते$_{1}$. ⊙. –d) दे$_{3}$ ललाटे (→ललाटात्); द$_{1}$ उ$_{1}$ हि वः, ग्र$_{2}$ शिवः (→ततः).

रुद्राणां कथिता सृष्टिर्ब्रह्मणः प्रतिषेधनम् ।
भूतिश्च देवदेवस्य वरदानोपदेशकौ ।।८४
अन्तर्द्धानं च रुद्रस्य तपश्चर्याण्डजस्य च ।
दर्शनं देवदेवस्य नरनारीशरीरता ।।८५
देव्या विभागकथनं देवदेवात् पिनाकिनः ।
देव्यास्तु पश्चात् कथितं दक्षपुत्रीत्वमेव च ।।८६
हिमवद्दुहितृत्वं च देव्या माहात्म्यमेव च ।
दर्शनं दिव्यरूपस्य वैश्वरूपस्य दर्शनम् ।।८७
नाम्नां सहस्रं कथितं पित्रा हिमवता स्वयम् ।
उपदेशो महादेव्या वरदानं तथैव च ।।८८
भृग्वादीनां प्रजासर्गो राज्ञां वंशस्य विस्तरः ।
प्राचेतसत्वं दक्षस्य दक्षयज्ञविमर्दनम् ।।८९
दधीचस्य च दक्षस्य विवादः कथितस्तदा ।
ततश्च शापः कथितो मुनीनां मुनिपुंगवाः ।।९०
रुद्रागतिः प्रसादश्च अन्तर्द्धानं पिनाकिनः ।
पितामहस्योपदेशः कीर्त्यते रक्षणाय तु ।।९१
दक्षस्य च प्रजासर्गः कश्यपस्य महात्मनः ।
हिरण्यकशिपोर्नाशो हिरण्याक्षवधस्तथा ।।९२
ततश्च शापः कथितो देवदारुवनौकसाम् ।
निग्रहश्चान्धकस्याथ गाणपत्यमनुत्तमम् ।।९३
प्रह्लादनिग्रहश्चाथ बलेः संयमनं ततः ।
बाणस्य निग्रहश्चाथ प्रसादस्तस्य शूलिनः ।।९४ वे.२.४६.६४

८४. ते1. ⊙. -b) दे4 प्रतिषेचनं, दे6 प्रतिषेधनः (→प्रतिषेधनं). -c) का1 ब2.3 दे2.6 मुवें. ततश्च, ब1 दे3.4 न1 उ1 स्तुतिश्च, द1 उ1 स्मृतिश्च, म1 स्तुतिभिर् (→भूतिश्च). -d) का1 ब2.3 दे2.6 °पदेशनं, ब1 दे4 °पदेशकं (दे4 °के); दे3 °पसेवकौ (→°पदेशकौ).

८५. ते1. ⊙. -a) ब2 अन्तर्द्धानस्य (→अन्तर्द्धानं च); दे1.6.8-10 उ1 मुवें. मुए. मुब. देवस्य (→रुद्रस्य). -b) ब1-3 दे6 न1 तु (→च); का1 ग्र2 उ1 तपश्चर्यामजस्य तु (का1 च), दे3 तपश्चर्या ह्यजस्य च, दे4 तपश्चर्यात्मिकस्य च, द1 म1 तपश्चर्यात्मिकस्य तु. -d) ब2 उ1 °शरीरतः, दे3 °शरीरिणः, न1 °शरीरिणां, ग्र2 °शरीरिता (→°शरीरता).

८६. -a) ते1 दिव्यं (→देव्या); द1 ग्र2 म1 उ1 विवाह° (→विभाग°); ब2 विभागकथनं देव्याः, दे10 देव्यादिभागकथनं. -c) दे1.8-10 मुवें. मुए. मुब. च (→तु). -d) दे8-10 °पुत्रित्वं (→°पुत्रीत्वं).

८७. न1 द1. ab ⊙. -b) दे1.4.8-10 मुवें. मुए. °याथात्म्य- (→°माहात्म्य-). -c) दे3.10 ते1 देव- (→दिव्य-). -d) दे1.8-10 मुवें. मुए. विश्वरूपाक्षदर्शनं, दे3 म1 विश्वरूपप्रदर्शनं, दे4 ग्र2 वैश्वरूप्यप्रदर्शनं, न1 वैश्वरूपाक्षदर्शनं, मुब. विश्वरूपस्य दर्शनं.

८८. -a) ब1 स्नात्वा (→नाम्नां); दे6 नाम्ना सहस्रस्य कथितं, उ1 नाम्नां सहस्रकथनं. -b) ब2 पुत्र्या (→पित्रा).

८९. -b) ब1 दे3 राज-, दे2.10 न1 राज्ञा (→राज्ञां); दे4 विश्वस्य (→वंशस्य); ब2 विस्तरं (→विस्तरः). -d) न1 ते1 °विनाशनं (→°विमर्दनं).

९०. दे3. ⊙; उ1. a ⊙. -a) का1 दे2 मरीचस्य (→दधीचस्य); न1 तु (→च); दे1.8.9 न1 मुवें. मुए. मुब. यज्ञस्य (→दक्षस्य). -b) का1 ब1-3 दे2.6 न1 ते1 तथा, दे4 तव, द1 ग्र2 तु वः, म1 ततः (→तदा). -c) ब2 शापः, + नाशः, न1 भावः, म1 वंशः (→शापः); द1 ग्र2 उ1 ततश्च वंशचरितं (उ1 °ता). -d) द1 ग्र2 उ1 कथितो (उ1 °ता) (→मुनीनां); ते1 मुनीनां भावितात्मनां.

९१. दे3.4. ⊙. -a) न1 स्यात् (→च); का1 रुद्राग्रया (भि) प्रसादं तु, ब1-3 द1 ग्र2 उ1 रुद्रागतिप्रसादः स्यात्, दे2 रुद्राग्रभिप्रसादः स्यात्, दे10 रुद्रागतिप्रसादश्च, म1 रुद्रायतिः प्रसादोऽस्य. -b) म1 ह्यन्तर्धानं (→अन्तर्द्धानं). -c) दे1.8-10 न1 ते1 म1 मुवें. मुए. मुब. पितामहोपदेशः स्यात्(ते1 म1 °श्च). -d) ते1 म1 कीर्त्तितो (→कीर्त्यते); दे1.8.9 मुवें. मुए. वैरणाय (→रक्षणाय); ब2 द1 च (→तु).

९२. दे3. ab ⊙. -a) ब3 दे4.6 तु (→च); द1 ग्र2 °सर्गं (→°सर्गः). -b)द1 ग्र2 म1 उ1 काश्यपस्य (→कश्यपस्य). -c) दे6 हिरण्यं (→हिरण्य-); का1 दे4 °कश्यपोर् (→°कशिपोर्); दे4 न्यासो (→नाशो). -d) दे6 हिरण्याक्षं (→हिरण्याक्ष-).

९३. ते1. d ⊙. -a) दे10 ततस्य (→ततश्च); न1 भावः (→शापः).

९४. का1 ब1.3 दे2 न1 ते1. cd. ⊙ -a) उ1 °निग्रहं (→°निग्रहस्). -b) ब1 वालः, ब2 बाण-, ब3 दे6 बने (→बलेः); दे1.8-10 मुवें. मुए. मुब. त्वथ, दे3 द1 ग्र2 म1 उ1 तथा (→ततः). -c) दे3 वाराणस्या निग्रहश्च, ग्र2 बाणस्य निग्रहश्चाधः. -d) ग्र2 द1 प्रसादश्चैव शूलिनः.

वें. २.४६.६४ ऋषीणां वंशविस्तारो राज्ञां वंशाः प्रकीर्त्तिताः ।
वसुदेवात् ततो विष्णोरुत्पत्तिः स्वेच्छया हरेः ॥९५
दर्शनं चोपमन्योर्वै तपश्चरणमेव च ।
वरलाभो महादेवं दृष्ट्वा साम्बं त्रिलोचनम् ॥९६
कैलासगमनं चाथ निवासस्तत्र शार्ङ्गिणः ।
ततश्च कथ्यते भीतिर्द्वारवत्या निवासिनाम् ॥९७
रक्षणं गरुडेनाथ जित्वा शत्रून् महाबलान् ।
नारदागमनं चैव यात्रा चैव गरुत्मतः ॥९८
ततश्च कृष्णागमनं मुनीनामागतिस्ततः ।
नैत्यकं वासुदेवस्य शिवलिङ्गार्चनं तथा ॥९९
मार्कण्डेयस्य च मुनेः प्रश्नः प्रोक्तस्ततः परम् ।
लिङ्गार्चननिमित्तं च लिङ्गस्यापि सलिङ्गिनः ॥१००
याथात्म्यकथनं चाथ लिङ्गाविर्भाव एव च ।
ब्रह्मविष्णोस्तथा मध्ये कीर्त्तितो मुनिपुंगवाः ॥१०१
मोहस्तयोस्तु कथितो गमनं चोर्ध्वतोऽप्यधः ।
संस्तवो देवदेवस्य प्रसादः परमेष्ठिनः ॥१०२
अन्तर्धानं च लिङ्गस्य साम्बोत्पत्तिस्ततः परम् ।
कीर्त्तिता चानिरुद्धस्य समुत्पत्तिर्द्विजोत्तमाः ॥१०३
कृष्णस्य गमने बुद्धिर्ऋषीणामागतिस्तथा ।
अनुशासितं च कृष्णेन वरदानं महात्मनः ॥१०४
गमनं चैव कृष्णस्य पार्थस्यापि च दर्शनम् ।
कृष्णद्वैपायनस्योक्ता युगधर्माः सनातनाः ॥१०५

---

९५. –b) दे4 द1 ग्र2 म1 राज-, दे6 न1 राज्ञा (→राज्ञां); दे2.6.10 ग्र2 वंशः (→वंशाः); ते1 राज्ञां वंशस्तथैव च. –c) ब1.2 दे1.4.8.10 न1 द1 उ1 वासुदेवात् (→वसुदेवात्); दे3 यतो (→ततो).

९६. –a) ते1 च (→वै). –c) द1 ग्र2 म1 महादेवात् (→महादेवं). –d) ब1 दे6 शाम्बं, द1 ग्र2 म1 उ1 श (ग्र2 स) वँ (→साम्बं); दे1.8.9 त्रिलोचनः (→त्रिलोचनं).

९७. –a) द1 ग्र2 म1 चापि (→चाथ). –b) दे1.4 ग्र2 मुवें. मुए. तस्य (→तत्र); द1 निवासस्य च धीमतः, उ1 निवासश्चापि धीमतः. –c) ब3 दे3 तपश् (→ततश्); द1 ग्र2 म1 उ1 कथिता (→कथ्यते); दे10 नीतिर्, द1 भूतिर् (→भीतिर्). –d) का1 ब2.3 दे1.4.6 न1 द1 म1 मुवें. मुए. मुब. द्वारवत्यां (→द्वारवत्या).

९८. –a) दे3 ततश्च (→रक्षणं); दे4 गरुडेनाहि, ते1 गरुडेनाभि- (→गरुडेनाथ). –b) का1 ब1-3 दे2 द1 ग्र2 म1 उ1 महात्मना, दे3 रणाजिरे, ते1 महात्मनः (→महाबलान्).

९९. –a) म1 कृष्ण- (→कृष्णा-). –b) दे1.8.9 मुवें. मुए. आश्रमस्, दे10 न1 आगमस् (→आगतिस्); द1 ग्र2 उ1 तथा (→ततः); का1 मुनीनां संगतिस्ततः. –c) ब2.3 उ1 मुब. नैत्यिकं, दे3 नैष्ठिक्यं, दे4 नैमित्यकं (→नैत्यकं).

१००. –a) द1 तु (→च). –b) ते1 द1 ग्र2 म1 उ1 प्रश्नाः प्रोक्ताः (→प्रश्नः प्रोक्तः); न1 परः, द1 ग्र2 म1 पुरा (→परं). –c) दे1 ते1 लिङ्गार्चनं (→लिङ्गार्चन-). –d) का1 ब1-3 दे2.3.4 ते1 द1 ग्र2 म1 उ1 च (→स-); न1 अलिङ्गस्यापि सलिङ्गिनः.

१०१. उ1. ⊙; दे4 द1 ग्र2 म1. cd ⊙. –a) का1 ब3 दे2 या(का1 य)थार्थ्यं(ब3 °र्थं), ब2 दे3 न1 माहात्म्यं, दे10 यथात्म-, ते1 पार्थस्य (→याथात्म्य-); का1 ब2.3 दे2.4 °कथितं (→°कथनं); दे3 चैव, द1 ग्र2 म1 चापि (→चाथ). –b) दे1.8-10 मुवें. मुए. मुब. लिङ्गाद्वै भीतिरेव च, द1 ग्र2 लिङ्गाविर्भावमेव च. –c) ब2 दे8. ते1 विष्ण्वोस्, दे7 विष्णुस् (→विष्णोस्) –d) दे1.8-10 मुवें. मुए. मुब. कीर्त्तिताः (→कीर्त्तितो).

१०२. उ1. ⊙;ब1. bcd ⊙. –a)दे1.8-10 मुवें. मुए. मुब. वै, दे3 हि, द1 ग्र2 म1 च (→तु). –b) दे1.8-10 मुवें. मुए. मुब. चोर्ध्वतो ह्यधः (दे10 °तः) (→चोर्ध्वतोऽप्यधः); दे3 गमनं पर्वतस्य च. –c) ते1 संभवो (→संस्तवो).

१०३. ब1. ⊙; दे4. cd ⊙. –b) दे3 न1 साम्बोत्पत्तिस्तथैव च. –c) का1 ब2.3 दे2.6 न1 ते1 द1 ग्र2 उ1 कीर्त्यते (→कीर्त्तिता); दे1.6 द1 उ1 वानि° (→चानि°).

१०४. दे4. ⊙; ब1. abc ⊙; ग्र2. cd ⊙. –a) द1 ग्र2 म1 उ1 सिद्धिर् (→बुद्धिर्). –b) ब2 द1 म1 आगमस्, न1 आगतस्, ग्र2 उ1 विपदस् (→आगतिस्); का1 ब2.3 दे2.3.6 न1 ते1 द1 म1 उ1 ततः (→तथा). –c) दे1.8-10 न1 ते1 द1 मुवें. मुए. मुब. अनुशासनं (→अनुशासितं); का1 कृष्णस्य (→कृष्णेन); दे3 उपासनं तु कृष्णेन. –d) का1 ब1-3 न1 ते1 द1 म1 उ1 महात्मनां (→महात्मनः).

१०५. –a) ते1 म1 चापि, द1 ग्र2 उ1 चाथ (→चैव). –b) ब1 पार्थिवस्याप्यदर्शिनं, दे1.4.8-10 न1 मुवें. मुए. मुब. पार्थस्याप्यथ दर्शनं, दे3 पुण्यमहात्म्यदर्शनं, द1 ग्र2 म1 पार्थस्यापि

अनुग्रहोऽथ पार्थस्य वाराणसीगतिस्ततः ।
पाराशर्यस्य च मुनेर्व्यासस्याद्भुतकर्मणः ॥१०६
वाराणस्याश्च माहात्म्यं तीर्थानां चैव वर्णनम् ।
तीर्थयात्रा च व्यासस्य देव्याश्चैवाथ दर्शनम् ।
उद्वासनं च कथितं वरदानं तथैव च ॥१०७
प्रयागस्य च माहात्म्यं क्षेत्राणामथ कीर्त्तनम् ।
फलं च विपुलं विप्रा मार्कण्डेयस्य निर्गमः ॥१०८
भुवनानां स्वरूपं च ज्योतिषां च निवेशनम् ।
कीर्त्यन्ते चैव वर्षाणि नदीनां चैव निर्णयः ॥१०९
पर्वतानां च कथनं स्थानानि च दिवौकसाम् ।
द्वीपानां प्रविभागश्च श्वेतद्वीपोपवर्णनम् ॥११०
शयनं केशवस्याथ माहात्म्यं च महात्मनः ।
मन्वन्तराणां कथनं विष्णोर्माहात्म्यमेव च ॥१११
वेदशाखाप्रणयनं व्यासानां कथनं ततः ।
अवेदस्य च वेदानां कथनं मुनिपुंगवाः ॥११२
योगेश्वराणां च कथा शिष्याणां चाथ कीर्त्तनम् ।
गीताश्च विविधा गुह्या ईश्वरस्याथ कीर्त्तिताः ॥११३
वर्णाश्रमाणामाचाराः प्रायश्चित्तविधिस्ततः ।
कपालित्वं च रुद्रस्य भिक्षाचरणमेव च ।११४
पतिव्रतायाश्चाख्यानं तीर्थानां च विनिर्णयः ।
तथा मङ्कणकस्याथ निग्रहः कीर्त्यते द्विजाः ॥११५ वें२.४६.११५

(द1 °थ) प्रदर्शनं. –c) ब1 दे1.4.8-10 द1 ग्र2 उ1 मुवें. मुए. द्वैपायनस्योक्तं, म1 द्वैपायनेनोक्तो (→द्वैपायनस्योक्ता). –d) ब1 दे2.4 न1 म1 सनातनः (→सनातनाः).

१०६. दे6. ab ⊙. –a) म1 अनुग्रहश्च (→अनुग्रहोऽथ); दे3 पार्वत्या (→पार्थस्य). –b) ब2.3 दे1.4.8-10 ते1 द1 ग्र2 म1 मुवें. मुए. मुब. वाराणस्यां (ब3 ते1 म1 °स्याः) (→वाराणसी-); द1 ग्र2 म1 उ1 तथा (→ततः).

ग्र2 म1 उ1 पुस्तकेषु b, c मध्ये—

* ब्रह्मविष्ण्वोस्तथा मध्ये कीर्त्तितं मुनिपुंगवाः (= १०१cd)

१०७. दे6. a ⊙. –a) दे3.4 म1 [अ]थ, ते1 तु (→च); दे1.8-10 मुवें. मुए. मुब. व्यासस्य तीर्थयात्रा च. –d) दे4 देवाश् (→देव्याश्); दे3 वर्णनं (→दर्शनं); दे1 देव्याश्चैवाप्यदर्शनं, ते1 देव्याश्चैव च दर्शनं, द1 ग्र2 उ1 देव्याश्च व्यासदर्शनं. –e) दे4 उद्वाहनं, न1 उत्पावनं (→उद्वासनं).

१०८. ते1. cd ⊙. –b) ब2.3 क्षेत्राणां मुनिपुङ्गवाः. –c) का1 ब2.3 फलं मु-, दे2 फलंस्तु (→फलं च); ब2 फलं स्वर्गफलं विप्रा. –d) द1 ग्र2 निर्गमं (→निर्गमः).

१०९. न1. ⊙. –b) ब1 वा (→च); ग्र2 विवेचनं, म1 निवेदनं, उ1 विवेशनं (→निवेशनं). –c) ब1.3 दे2.6 ते1 कीर्त्यते चैव, दे1.8-10 मुवें. मुए. मुब. कीर्त्तितश्चापि (→कीर्त्यन्ते चैव); ब2 दे1.3.4.8-10 ते1 मुवें. मुए. मुब. वर्षाणां (→वर्षाणि). –d) दे10 जनानां, द1 दिनानां (→नदीनां).

११०. का1. cd ⊙. –a) ब2 दे3 ते1 ग्र2 कथितं (→कथनं). –b) ते1 स्थितिश्चैव दिवौकसां. –c) द1 च (→प्र-). –c) दे1.8-10 ग्र2 उ1 प्रवि(दे10 °ति)भागं (→प्रविभागश्). –d) ब1-3 दे3 ते1 श्वेतद्वीपस्य (→श्वेतद्वीपोप-).

१११. का1. ⊙. –a) ते1 गमनं (→शयनं); म1 वासुदेवस्य (→केशवस्याथ). –b) द1 उ1 महात्मनां (→महात्मनः). –c) दे6 महासुराणां (→मन्वन्तराणां); दे3 कथितं (→कथनं). –d) दे3 विष्णोर्माहात्म्यमुत्तमं.

अतः परं दे2 अधिकम्

*अवेदस्य च वेदानां कथितं मुनिपुङ्गवाः ।( = ११२ cd)

११२. दे2.4 द1 ग्र2 म1 उ1. cd ⊙; दे6. d ⊙; का1 ब1-3 दे6 न1 ते1 पूर्वार्धस्थाने उत्तरार्धं, उत्तरार्धस्थाने पूर्वार्द्धमिति विलोमरूपेण पठितोऽयं श्लोकः. –a) का1 शास्त्र- (→शाखा-). –c) दे1.3.8-10 मुवें. मुए. मुब. वेदस्य (→वेदानां). का1 ब1-3 दे1.8-10 मुवें. मुए. मुब. कथितं (→कथनं).

११३. –a) का1 ब1-3 दे6 ते1 च तथा, म1 कथनं (→च कथा). –b) दे1 चापि, दे3 न1 द1 ग्र2 उ1 चैव, दे6 चात्र (→चाथ); ब1 दे4 कीर्त्तितं (→कीर्त्तनं). –c) का1 ब1-3 न1 ते1 पुण्याः, दे4 द1 ग्र2 म1 उ1 सूक्ताः (→गुह्या). –d) दे3 ईश्वरस्यानु- (→ईश्वरस्याथ); ब2 कीर्त्तनं (→कीर्त्तिताः); ब1 ईश्वरस्य ते कीर्त्तिताः, द1 ग्र2 म1 उ1 ईश्वरस्य प्रकीर्त्तिताः.

११४. –a) ब1 दे3.6 न1 द1 उ1 °चारः (→°चाराः). –b) दे3 उ1 तथा (→ततः). –c) ब1.3 न1 ग्र2 का(ब1 ग्र2 क) पिलत्वं च, दे3 कापालिकत्वं, दे6 कापालित्वं च (→कपालित्वं च). –d) दे2 °करणं (→°चरणं).

११५. –a) दे1.8-10 मुवें. मुए. मुब. पतिव्रतानामाख्यानं. –b) न1 °निश्चयः (→°निर्णयः); दे3 ग्र2 तीर्थानां चव निर्णयः. –d) ब1 दे1.3.8-10 म1 उ1 मुवें. मुए. मुब. कीर्त्तितो (→कीर्त्यते); द1 ग्र2 उ1 बुधाः (→द्विजाः).

वें२.४६.११६ वधश्च कथितो विप्राः कालस्य च समासतः ।
देवदारुवने शंभोः प्रवेशो माधवस्य च ॥११६
दर्शनं षट्कुलीयानां देवदेवस्य धीमतः ।
वरदानं च देवस्य नन्दिने तु प्रकीर्त्तितम् ॥११७
नैमित्तिकस्तु कथितः प्रतिसर्गस्ततः परम् ।
प्राकृतः प्रलयश्चोर्द्ध्वं सबीजो योग एव च ॥११८
एवं ज्ञात्वा पुराणस्य संक्षेपं कीर्त्तयेत् तु यः ।
सर्वपापविनिर्मुक्तो ब्रह्मलोके महीयते ॥११९
एवमुक्त्वा श्रियं देवीमादाय पुरुषोत्तमः ।
संत्यज्य कूर्मसंस्थानं स्वस्थानं च जगाम ह ॥१२०
देवाश्च सर्वे मुनयः स्वानि स्थानानि भेजिरे ।
प्रणम्य पुरुषं विष्णुं गृहीत्वा ह्यमृतं द्विजाः ॥१२१
एतत् पुराणं परमं भाषितं कूर्मरूपिणा ।
साक्षाद् देवादिदेवेन विष्णुना विश्वयोनिना ॥१२२
यः पठेत् सततं मर्त्यो नियमेन समाहितः ।
सर्वपापविनिर्मुक्तो ब्रह्मलोके महीयते ॥१२३
लिखित्वा चैव यो दद्याद् वैशाखे मासि सुव्रतः ।
विप्राय वेदविदुषे तस्य पुण्यं निबोधत ॥१२४
सर्वपापविनिर्मुक्तः सर्वैश्वर्यसमन्वितः ।
भुक्त्वा च विपुलान्स्वर्गे भोगान्दिव्यान्सुशोभनान् ॥१२५
ततः स्वर्गात् परिभ्रष्टो विप्राणां जायते कुले ।
पूर्वसंस्कारमाहात्म्याद् ब्रह्मविद्यामवाप्नुयात् ॥१२६
पठित्वाध्यायमेवैकं सर्वपापैः प्रमुच्यते ।
योऽर्थं विचारयेत् सम्यक् स प्राप्नोति परं पदम् ॥१२७
अध्येतव्यमिदं नित्यं विप्रैः पर्वणि पर्वणि ।
श्रोतव्यं च द्विजश्रेष्ठा महापातकनाशनम् ॥१२८

---

११६. –a) दे9 वृधश्च, द1 विधश्च (→वधश्च). –d) दे1.9 म1 प्रवेशे (→प्रवेशो).

११७. –a) द1 ग्र2 दर्शनात् (→दर्शनं); ब1 षट्कुलादीनां (→षट्कुलीयानां). –d) ब1 ते1 नन्दिनस्तु, दे1.8-10 मुवें. मुए. मुब. नन्दने तु (→नन्दिने तु ).

११८. –a) ब2 दे1.8.9 ते1 मुवें. मुए. च (→तु). –b) दे6 प्रतिसर्गं (→प्रतिसर्गस्). –c) दे3 चाथ, दे4 द1 ग्र2 म1 उ1 चोक्तः, ते1 चैव (→चोर्द्ध्वं). –d) का1 सवीर्यो, +सबीजो (→सबीजो).

११९. –a) म1 पुराणानां (→पुराणस्य). –b) दे4 तु सः, ग्र2 उ1 ततः (→तु यः).

१२०. –c) ब1 संपूज्य (→संत्यज्य); दे6 कूर्मः (→कूर्म-); दे4 द1 ग्र2 म1 °रूपं स्वं (→°संस्थानं). –d) ब1 संस्थानं च, दे3 भगवांश्च, दे10 संस्थानं प्र-, न1 द1 स्वस्थानं प्र- (→स्वस्थानं च); म1 च (→ह) दे1.8.9 मुवें. मुए. प्रजगाम हरस्तदा, दे4 स्थानं चैव जगाम ह.

१२१. –a) दे3 देवाश्च मुनयः सर्वे. –c) म1 कृष्णं (→विष्णुं). –d) का1 ब1-3 दे2.6 गृहीत्वा (ब1 °त)स्या- (→गृहीत्वा ह्य-); द1 पुनः, म1 सुराः (→द्विजाः).

१२२. –a) दे1.8-10 मुवें. मुए. सकलं, दे3 कथितं (→परमं). –b) दे3 परमं (→भाषितं). –c) ब1.2 देवाति°, ब3 दे1.8-10 मुवें. मुए. मुब. देवाधि° (→देवादि°). –d) उ1 हरिणा (→विष्णुना); दे4 द1 ग्र2 म1 उ1 देव° (→विश्व°).

१२३. –a) दे1.3.8-10 मुवें. मुए. विप्रा, मुब. भक्त्या (→मर्त्यो). –b) दे1.8-10 मुवें. मुए. मुब. समासतः (→समाहितः).

१२४. –a) ग्र2 चापि, उ1 वापि (→चैव). –b) न1 द1 ग्र2 म1 उ1 सुव्रताः (→सुव्रतः); दे1.8-10 मुवें. मुए. मुब. वैशाखे कार्त्तिकेऽपि वा. –d) ब1 निशामय (→निबोधत).

१२५. –b) ब1 °समाहितः (→°समन्वितः). –c) का1 भुक्त्वा सु, ब1 भुक्त्वाथ, दे1-4.8.10 न1 ते1 द1 ग्र2 म1 उ1 मुवें. मुए. मुब. तु (→च); दे6 सकलान् (→विपुलान्); ब1 दे1.8-10 मुवें. मुए. मुब. मर्त्यो, ब2 स्वर्गा-, दे3 स्वर्ग-, दे4 ते1 द1 ग्र2 म1 उ1 भोगान् (→स्वर्गे). –d) दे3 तु (→सु); दे4द1ग्र2 म1 उ1 स्वर्गलोके सु (द1 °षु)शोभनान्, दे6 दिव्यान् भोगान् सुशोभनान्, ते1 स्वर्गे दिव्यान् सुशोभनान्, ग्र2 सर्वलोके सुशोभनान्.

१२६. –c) ब2 पूर्वं वेदेषु निष्णातो.

१२७. न1. ⊙. –a) दे6 पठेद्वा (→पठित्वा); ब2 एकं वै, दे3 एकैकं (→एवैकं). –b) ब1 दे10 विमुच्यते (→प्रमुच्यते). –c) ते1 यश्च संवासयेत् सम्यक्. –d) द1 समाप्नोति, म1 संप्राप्नोति (→स प्राप्नोति); ब3 दे1.3.8 ते1 मुवें. मुए. मुब. प्राप्नोति परमं पदम्.

१२८. न1. ⊙. –a) ब3 दे1.8-10 मुवें. मुए. मुब. पुण्यं (→नित्यं); दे6 अध्येतव्या त्रयी नित्यं.

एकतस्तु पुराणानि सेतिहासानि कृत्स्नशः ।
एकत्र चेदं परममेतदेवातिरिच्यते ।।१२९
धर्मनैपुण्यकामानां ज्ञाननैपुण्यकामिनाम् ।
इदं पुराणं मुक्त्वैकं नास्त्यन्यत् साधनं परम् ।।१३०
यथावदत्र भगवान् देवो नारायणो हरिः ।
कथ्यते हि यथा विष्णुर्न तथाऽन्येषु सुव्रताः ।।१३१
ब्राह्मी पौराणिकी चेयं संहिता पापनाशनी ।
अत्र तत् परमं ब्रह्म कीर्त्यते हि यथार्थतः ।।१३२
तीर्थानां परमं तीर्थं तपसां च परं तपः ।
ज्ञानानां परमं ज्ञानं व्रतानां परमं व्रतम् ।।१३३
नाध्येतव्यमिदं शास्त्रं वृषलस्य च सन्निधौ ।
योऽधीते स तु मोहात्मा स याति नरकान् बहून् ।।१३४
श्राद्धे वा दैविके कार्ये श्रावणीयं द्विजातिभिः ।
यज्ञान्ते तु विशेषेण सर्वदोषविशोधनम् ।।१३५
मुमुक्षूणामिदं शास्त्रमध्येतव्यं विशेषतः ।
श्रोतव्यं चाथ मन्तव्यं वेदार्थपरिबृंहणम् ।।१३६
ज्ञात्वा यथावद् विप्रेन्द्रान् श्रावयेद्भक्तिसंयुतान् ।
सर्वपापविनिर्मुक्तो ब्रह्मसायुज्यमाप्नुयात् ।।१३७
योऽश्रद्दधाने पुरुषे दद्याच्चाधार्मिके तथा ।
स प्रेत्य गत्वा निरयान् शुनां योनिं व्रजत्यधः ।।१३८ बें२.४६.१३८

१२९. न1. ⊙. –c) का1 दे2.6 म1 एकत्र वेदं परमं, दे1.8-10 मुवें. मुए. मुब. एकज्ञ परमं वे(दे10 मुब. चे) दं, ते1 एकत्र चैतत्परमं, ग्र2 एतत्तदेव परमं, उ1 एकमेवेदमपरं.

१३०. न1. ⊙; दे1.8-10 मुवें. मुए. ab. ⊙. –a) का1 °निपुण°, ब2 ते1 द1 म1 °नैपुण° (→°नैपुण्य°); दे4 धर्मपुराणकामानां. –b) ब3 कुले, द1 उ1 ध्यान- (→ज्ञान-); का1 ब2 दे2.3 ते1 ग्र2 °नैपुण° (→°नैपुण्य°); म1 ज्ञाननैपुणमानिनाम्. –d) ब1 शोधनं (→साधनं); दे1.8-10 मुवें. मुए. मुब. नान्यत्साधनकं परं, उ1 नान्यत्र लभते परं.

१३१. न1. ⊙. –b) ब2 देवदेवेश्वरो हरिः, दे4 द1 ग्र2 म1 उ1 देवो नारायणः प्रभुः. –c) दे1.3.4.6.8-10 द1 ग्र2 म1 उ1 कीर्त्यते (→कथ्यते); द1 ग्र2 च, म1 ह (→हि).–d) का1 तु ध्यानेषु, ब2 तथान्येव, दे3 तथान्यत्र, ग्र2 उ1 तथान्ये च (→तथान्येषु); दे2 सुव्रतः, दे6 सुव्रत (→सुव्रताः).

१३२. न1. ⊙. –a) ग्र2 ब्राह्मं (→ब्राह्मी); ब1 दे4 द1 ग्र2 म1 उ1 पुराणिकी (→पौराणिकी); दे10 चैव, उ1 चाथ (→चेयं). –c) म1 अत्र तत्परमो धर्मः.

१३३. न1. ⊙. –a) दे3 च परं, म1 प्रवरं (→परमं). –b) ब2 दे10 द1 म1 उ1 तपसां परमं तपः. –c) दे3 च परं (→परमं).

१३४. न1 दे6. ⊙. –b) ब1 वृषलानां च सन्निधौ. –c) दे1.3.4.8-10 म1 मुवें. मुए. मुब. चैव (→स तु); ते1 मोहात्मा (→मूढात्मा); द1 योऽधीते चैव माहात्म्यं, ग्र2 उ1 योऽधीते तु नरो मोहात्. –d) का1 ब1-3 दे2 ते1 प्रयाति, दे1.8 संयाति (→स याति).

१३५. न1 दे6. ⊙; ते1. cd ⊙. –c) ब3 द1 म1 उ1 श्राद्धे वा (उ1 च) वैदिके कार्ये, ते1 श्राद्धे वैवाहिके चैव, ग्र2 श्राद्धवैदिककार्येषु. –b) दे4 श्रावणीयं प्रयत्नतः, ते1 श्रावणीयं विशेषतः, मुवें. श्राव्यं चेदं द्विजातिभिः. –d) दे3.10 °विनाशनं (→°विशोधनं).

१३६. न1 दे6. ⊙; ते1. ab ⊙. –a) का1 ब2.3 दे2 मुमुक्षुभिरिदं शास्त्रं, दे4 ग्र2 मुवें. मुब. मुमुक्षाणामिदं शास्त्रं. –c) ब2 चापि (→चाथ); ते1 श्रोतव्यं च यथेष्टव्यं.

१३७. न1. ⊙. –a) द1 ग्र2 उ1 श्रुत्वा (→ज्ञात्वा); ग्र2 उ1 विप्रांश्च (→विप्रेन्द्रान्). –b) का1 ध्यान°, दे2 ज्ञान° (→भक्ति°).

१३७ श्लोकानन्तरं उ1 पुस्तके अधिकम्—

67. *'तस्मात्सर्वप्रयत्नेन आचार्यं पूजयेत्सुधीः' ।

१३७ श्लोकानन्तरं का1 दे2.4 द1 ग्र2 म1 पुस्तके अधिकम्—

68. *'आचार्यं पूजयेत्पश्चाद् वस्त्राभरणसंयुतैः' ।
भूमिधेनुं च धान्यं च दद्याद्वित्तानुसारतः ।
अपूजिते महान् दोषो न तत्फलमवाप्नुयात् ।
तस्मात्सर्वप्रयत्नेन आचार्यं पूजयेत्सुधीः । [4]

[–1) द1 ग्र2 °संयुतं, म1 °भूषणैः (→°संयुतैः). –2) दे4 गवां च, द1 म1 गाश्चैव, ग्र2 गावश्च (→धेनुं च); द1 ग्र2 विप्राय (→धान्यं च).

१३८. न1 दे6. ⊙. –a) दे3 ना श्रद्दधाने (→योऽश्रद्दधाने). –b) ब1 द1 ग्र2 म1 वाधार्मिके, दे3 ते1 नाधार्मिके (→चाधार्मिके). –c) ब3 दे1.8-10 मुवें. मुए. संप्रेत्य (→स प्रेत्य); ब2 नरकान्, दे3.4 द1 ग्र2 म1 उ1 निरयं

बें२.४६.१३८ नमस्कृत्वा हरिं विष्णुं जगद्योनिं सनातनम् ।
अध्येतव्यमिदं शास्त्रं कृष्णद्वैपायनं तथा ।।१३९
इत्याज्ञा देवदेवस्य विष्णोरमिततेजसः ।
पाराशर्यस्य विप्रर्षेर्व्यासस्य च महात्मनः ।।१४०
श्रुत्वा नारायणाद् दिव्यां नारदो भगवानृषिः ।
गौतमाय ददौ पूर्वं तस्माच्चैव पराशरः ।।१४१
पराशरोऽपि भगवान् गङ्गाद्वारे मुनीश्वराः ।
मुनिभ्यः कथयामास धर्मकामार्थमोक्षदम् ।।१४२
ब्रह्मणा कथितं पूर्वं सनकाय च धीमते ।
सनत्कुमाराय तथा सर्वपापप्रणाशनम् ।।१४३
सनकाद् भगवान् साक्षाद् देवलो योगवित्तमः ।
अवाप्तवान् पञ्चशिखो देवलादिदमुत्तमम् ।।१४४
सनत्कुमाराद् भगवान् मुनिः सत्यवतीसुतः ।
लेभे पुराणं परमं व्यासः सर्वार्थसंचयम् ।।१४५
तस्माद् व्यासादहं श्रुत्वा भवतां पापनाशनम् ।
ऊचिवान् वै भवद्भिश्च दातव्यं धार्मिके जने ।।१४६
तस्मै व्यासाय गुरवे सर्वज्ञाय महर्षये ।
पाराशर्याय शान्ताय नमो नारायणात्मने ।।१४७
यस्मात् संजायते कृत्स्नं यत्र चैव प्रलीयते ।
नमस्तस्मै सुरेशाय विष्णवे कूर्मरूपिणे ।।१४८

इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायामुपरिविभागे चतुश्चत्वारिंशोऽध्यायः ।।४४।।

उपरिविभागः समाप्तः

## ।। इति श्रीकूर्मपुराणं समाप्तम् ।।

---

(→निरयान्); ते1 सम्प्रेत्य नरकं गत्वा. –d) का1 ब1.3 दे2 ते1 म1 व्रजत्यथ, दे4.10 व्रजेदधः, द1 ग्र2 उ1 प्रपद्यते (→व्रजत्यधः)

**१३९.** न1 दे6. ⊙; का1 ब2 दे2.6.9 ग्र2. cd ⊙. –a) का1 ब2.3 दे1.2.8-10 मुवें. मुए. मुब. नमस्कृत्य (→नमस्कृत्वा).

**१४०.** न1 दे6 ते1. ⊙. –d) दे1.3.4.8-10 द1 ग्र2 म1 परमात्मनः (→च महात्मनः).

**१४१.** न1 दे6 उ1. ⊙. –a) का1 ब1-3 दे3.4 ते1 द1 ग्र2 म1 दिव्यं, दे1.8-10 मुवें. मुए. मुब. देवात् (→दिव्यां).

**१४२.** दे6 न1. ⊙. –a) ब2 हि, दे3 [ग्र]थ (→[ग्र]पि); ते1 पाराशर्योऽपि भगवान्. –c) ब1 मुनीनां, दे4 मुनिभिः, म1 ऋषिभ्यः (→मुनिभ्यः).

**१४३.** दे6 न1. ⊙. –a) दे1 ब्रह्मणां (→ब्रह्मणा); ब3 दे10 कथितां (ब1 °ता) (→कथितं); का1 तत्तु (→पूर्वं). –b) दे3 नारदाय (→सनकाय). –c) ग्र2 उ1 च तथा (→तथा)

**१४४.** दे6 न1. ⊙; ते1. cd ⊙. –a) दे10 योगी, ते1 प्राप (→साक्षाद्); दे3 उ1 सनत्कुमाराद्भगवान्. –b) दे3 देवलो योगमुत्तमं.

**१४५.** दे6. न1. ⊙; ते1. cd ⊙. –c) दे1.8-10 मुवें. मुए. एतत् (→लेभे); द1 ग्र2 उ1 भगवान् (→परमं). –d) द1 ग्र2 °संचये (→°संचयं).

**१४६.** दे6 न1. ⊙. –a) ब2 तस्माद् व्यासादिदं श्रुत्वा.

**१४७.** दे6 न1. ⊙. –a) दे1.3.4.8-10 द1 ग्र2 म1 उ1 मुवें. मुए. मुनये (→गुरवे). –d) दे3 साक्षात् (→नमो); ते1 नमो नारायणाय ते.

**१४८.** दे6 न1. ⊙. –a) दे3.4 विश्वं (→कृत्स्नं). –b) दे1 चैवं (→चैव); का1 महीयते (→प्रलीयते); दे3 यत्रैव प्रविलीयते, ग्र2 यत्र च प्रविलीयते. –c) दे1 मुए. मुब. परेशाय (→सुरेशाय).

**पुष्पिका—**

**पुराणनाम—**का1 दे4 इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायामुपरिभागे, ब1 इत्यादिकूर्मपुराणे षट्साहस्र्यां संहितायां उपरिभागे, ब2 इति कूर्मपुराणे षट्साहस्र्यां संहितायां, ब3 इतिकूर्मपुराणे षट्साहस्रिकायां संहितायां उपरिभागे, दे1 इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायां उपरिविभागे व्यासगीतासु, दे2 द1 ग्र2 म1 इति श्रीकू(दे2 कु)र्मपुराणे षट्सा(ग्र2 म1 स)हस्रिकायां संहितायां उपरिभागे, दे3 इति कूर्मपुराणे, दे6 इति श्रीकूर्मपुराणे, दे8.9 मुए. इति श्रीकूर्मपुराणेषट्साहस्र्यां संहितायां उपरि (मुए. °वि) भागे व्यासगीतासु, दे10 इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायां, न1 इति श्रीकौर्मे पुराणे, ते1 इत्यादिमहापुराणे श्रीकौर्मे षट्साहस्र्यां संहितायां उपरिभागे, उ1 इति श्रीकूर्मपुराणे(णे ?) श्रीमत्षट्साहस्रिकायां उपरिभागे, मुवें. इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायामुत्तरार्द्धे व्यासगीतासु, मुब. इति श्रीकौर्मे महापुराणे उपरिभागे. **अध्यायनाम—** का1 ब1-3 दे1-4.8-10 द1

ग्र2 म1 उ1 मुवें. मुए. ⊙; दे6 ग्रन्थानुक्रमकथनं समाप्तम्, न1 अनुक्रमणिकाफलकथननाम, ते1 अनुक्रमकथनं नाम, मुब. प्रतिसर्गादिकथनं नाम. **अध्यायसंख्या**—दे6.⊙; का1 मुब. चतुश्चत्वारिंशोध्यायः ।।४४।।, ब1 त्रिचत्वारिंशोध्यायः, ब2 ।।६३।।, ब3 दे2.4 चत्वारिंशोध्यायः, दे1.10 मुवें. षट्चत्वारिंशोऽध्यायः ।।४६।।, दे3 अष्टचत्वारिंशोध्यायः, दे8.9 द1 ग्र2 म1 उ1 षट्चत्वारिंशोध्यायः, न1 पञ्चनवतितमोध्यायः, ते1 चतुश्चत्वारिंशोध्यायः, मुए. पञ्चचत्वारिंशोध्यायः.

**अध्यायसंख्यानन्तरमधिकम्—**

का1—कूर्मपुराणमिति समाप्तम् । इदं रणवीरसिंहैः कथाप्रसङ्गेन चित्तविषयीकृतम् संवत् १९१२अष्ट······श्रुतमिति काश्यां······ शुभं भूयात् । इदं श्रीमद्दीवानज्वालासहायैः प्रबन्धकल्पनाश्रवणेन भावगोचरीकृतं संवत् १९२० कुम्भार्कस्य २० जंबूमध्ये शुभं स्यादोम् ।

ब1—समाप्तमिदं पुराणमिति । यथादृष्टं तथा लिखितमित्यादि ।।श्रीरामः।। नारायणपरावेदा नारायणपराक्षराः । नारायणपराशक्तिर्नारायणपरागतिः ।।ॐ गुरवे नमः । अङ्काब्धिकालेकमिति शकाब्दे गते नभस्त्रीयतमिस्रपक्षे त्रयोदशीमुक्तशशाङ्कं जोहव्यलेखि कूर्माख्यमिदं पुराणं । यस्यैतात्लिखितं पुराणममलं कौर्मंसदावृद्धिदं । तथेष्टं विपुलं ददातु नियतं कूर्मरूपी हरिः ।
यस्या ते सततं मनो नियुनना भूदेवसंरक्षणे ।
दुष्प्राप्यं जगतीतले नहि भवेत् तस्यानुकूलो हरिः ।।श्रीहरिः।।

ब2—समाप्तं चेदं कूर्मपुराणं ।। शाके··सप्त षोडश मिति वर्षे व्यतीते शुचे वह्नौ काधिकविंशत्रतद भव लिल्प्या समाप्तं महत् । श्री कूर्म्माख्यपुराणकं भवमहा भूपार पारान्तु तज्ज्ञानोत्पत्ति निदानमीश्वरमुख्या भोजान्वितं धीमतां षट् कर्म्मान्वियसंहृतस्य विदुषां षट् कर्म्मणां·····चा सा परिपूर्त्ति निर्जरतरोः श्रीमत्तमस्यालिखत् । प्रीत्यै श्रीशिवनाथरायसुमतेरेतत् पुराणं शुभं । रामानन्दमहीसुरो रासुरी ध्यायः कथा संश्रयं भवत्तुभवभवानी पादपाथोजभ्यङ्गो विजितविविध बैरी व्रातङ्ग सत् कण्टकैः परिजनसुतदारैर्भु विभागैरुदारै रुरुपुरुगुणजुष्टैः श्रीमतामग्रगण्यः । शिवमनिशमजस्रं नाथ ते यत् प्रजानां प्रतिनिधि वनीशेशेश्वस्यापि च स्वं । अभिमतशुभकारी यस्य नाथः शिवो वा शिव इव रिपुतापी तादृशाभिख्ययासौ ।। राजते राजवन्नित्यं यस्य कीर्त्तिर्जगत्रये । विमला विमलाशस्य शिवनाथः सदाशिवः ।। सस्तादाशासते यस्य रीतिसन्तव्यमानसाः । दवीयांसोपि विद्वांसस्सादराः परमाशिषः ।। पुराणसंहिता सरनेरवनश्रुतिसञ्चयैः ।···जोतिपरमेशार्च्चा स्पर्शनादिसु कर्म्मभिः ।। प्रहृष्ठाः सततं यस्य सम्भोविमनसः परे । श्रीपति···श्रीपदाम्भोजमकरन्दातिलोलुपः ।। अशेष शुभ सम्भो गीतरता भवतीतिजित् । चिरायास्मद्विधान् भर्त्ता शिवनाथः शिवप्रियः।। नानाविधोपरिमितो महिमा यदीयो यत् पादपङ्कजमपारभवाब्धिपोतं । आस्थाय पूर्वजनुरुपार्जितपुण्यपुञ्जैर्धीराः प्रयान्ति परमं स परेश्म वोच्यात् ।। श्रीमन्तमद्भुतयशो विधुमोदितादो लोकं महाशयमुदारगुणावदातत् । पायात् सदा सदभिलाषमशेषगोप्ता श्रीपार्वतीशउमया शिवनाथ रायं ।।

ब3—समाप्तमिदं कूर्मपुराणं लिखितं श्रीजयरामशर्मणा ।

दे1—समाप्तश्चेदं कूर्मपुराणम्

अथानुक्रमणिका । देव्यावतारः गौरीनामसहस्रं हिमवतो देव्युपदेशः भृग्वादीनां सर्गकथनं राजवंशानुकीर्तनं दक्षयज्ञविघातः दक्षपुत्रीणां सन्ततिः देवानां सम्भवः हिरण्यकशिपुवधः अन्धकपराजयश्च वामनप्रादुर्भावः बाणस्य पुरदाहः कश्यपसुतानां कथनं वत्सरशितयोः पुलस्त्यस्य प्रज्ञाकथनं सोमवंशानुकीर्तने जयध्वजोपाख्यानं सोमवंशे दुर्ज्जयचरितं यदुवंशे कृष्णोत्पत्तिः यदुवंशे कृष्णस्तपश्चरणे रुद्रदर्शनं कृष्णमार्कंडेयसंवादे लिंगमाहात्म्यं वंशानुकीर्तनं व्यासार्जुनसंवादे कृतत्रेताद्वापरगानुकीर्तनं व्यासार्जुनसंवादे कलियुगस्वरूपं हरगौरीसंवादे कृतत्रेताद्वापरईश्वरमाहात्म्यं वाराणसीसंवादे मध्यमेश्वरमाहात्म्यं उमाव्याससंवादः प्रयागमाहात्म्ये युधिष्ठिरसंवादः गंगामाहात्म्यं प्रयागमरणमाहात्म्यं यमुनामाहात्म्यं भुवनविन्यासे सप्तद्वीपानां कथनं भुवनविन्यासे सूर्यादिग्रहाणां रथस्वरूपं भुवनविन्यासे सप्तलोकसप्तपातालानां व्यवस्था जम्बूद्वीपपर्वतानां कथनं ब्रह्मलोकपालानाञ्च कथनं भारतवर्षस्य नवद्वीपस्य कथनं जम्बूद्वीपे पर्वतानामुपरि देवतावासकथनं प्लक्षद्वीपादिसहितं श्वेतद्वीपवर्णनं ब्रह्माण्डस्वरूपं महादेवावताराः कलौ तच्छिष्यकथनं ईश्वरगीतासु ऋषिप्रश्नः सांख्ययोगप्रशंसा ईश्वरध्यानप्रशंसा ईश्वरनर्तने मुनिप्रणीता स्तुतिः ईश्वरमाहात्म्यं सर्वभूतेष्वीशस्य प्राधान्यकथनं गुह्यतमज्ञानकथनं ईश्वरज्ञानं च अष्टयोगयुक्तिः ब्रह्मचारिधर्मः व्यासगीतासु आचमनादिशौचविधिः ब्रह्मचर्याचारकथनं गृहस्थधर्माध्यायः आचाराध्यायः भक्ष्याभक्ष्यनिर्णयः नित्यकर्मविधिः भोजनविधिः दानधर्माः वानप्रस्थधर्माः त्रिदंडियतिधर्माः यतिभिक्षाविधिः ईश्वराराधनं ब्रह्महत्याप्रायश्चित्तं कपालमोचनमाहात्म्यं सुरापानादिमहापातकप्रायश्चित्तानि अगम्यागमनं क्षत्रियादिसत्वानां वधप्रायश्चित्तं पतिव्रतोपाख्यानं कालंजरतीर्थे कालवधः पुण्यायतनवर्णनं रुद्रदेवदारुवनप्रवेशः मार्कंडेययुधिष्ठिरसंवादः नर्म्मदामाहात्म्ये अमरकंटकमाहात्म्यं योगस्वरूपकथनं शुक्रतीर्थादिसर्वतीर्थानां माहात्म्यं नैमिषारण्यमाहात्म्ये जयेश्वर माहात्म्यं योगस्वरूपकथनं समाप्तं ।

दे2—समाप्तमिदं कूर्मपुराणमिति । संवत् १६५५ समये आषाढ सुदी १२ द्वादशी वार बुधवार लिखितं पिताम्बरब्राह्मणेन समीपं विश्वनाथ ।

दे3—समाप्तमिदं कूर्मपुराणं। संवत् १६७९ वर्षे भादों सुदी ११ लिखितं मुरारि रजपूत ।।शुभ।। स्तंभतीर्थस्थोदीच्य रोजकीयाकूर तीयत्रिपाठिकृष्णदत्तसुतभूषणस्य कूर्मपुराणं मूल्येन गृहीतम् पत्र सं. २०२ पृ. पं. १२ ।

दे4—समाप्तश्चायं कूर्मपुराणः। आषाढशुक्लपक्षे तु चतुर्थ्यां गुरुवासरे लवपुरमध्ये मया हिम्मतपण्डित कश्मीरदेशोत्पन्न लिपीकृतं। सं. १८९४ यादृशं पुस्त ···तादृशं लिखितं मया। यदि शुद्धमशुद्धं वा मम दोषो न दीयते। शुभमस्तु सर्वजगतां। शुभमस्तु लेखकपाठकः।।ऽऽ।। राम राम राम राम।। रामाय नमः।।

दे6—शुभमस्तु रामो जयति।

दे8—समाप्तं चेदं कूर्मपुराणं अथानुक्रमणिका। देव्यवतारः। गौरीनाम। गौरीनामसहस्रकं। हिमवते देव्योपदेशः। भृग्वादीनां सर्गकथनं। राजवंशानुकीर्त्तनं दक्षयज्ञविघातः। दक्षपुत्रीणां संततिः। देवानां संभवः। हिरण्यकशिपु वधः। अन्धकपराजयश्च। वामनप्रादुर्भावः। बाणस्य पुरदाहः। कश्यपसुतानां कथनं। वत्सराशितयोः पुलस्त्यस्य प्रजाकथनं। सोमवंशानुकीर्त्तने जयध्वजोपाख्यानं। सोमवंशदुर्जयचरितं। यदुवंशकृष्णोत्त्रिः। यदुवंशकृष्ण तपश्चरणे रुद्रदर्शनं। कृष्णमार्कण्डेयसंवादे लिङ्गमाहात्म्यं वंशानुकीर्तनं समाप्तं। व्यासार्जुनसंवादे कृतत्रेताद्वापरयुगानु-कीर्तनं। व्यासार्जुनसंवादे कलियुगस्वरूपं। हरगौरीसंवादे कृतत्रेताद्वापरईश्वरमाहात्म्यं। वाराणसीसंवादे मध्यमेश्वर माहात्म्यं। उमाव्याससंवादः।। प्रयागमाहात्म्ये युधिष्ठिरसंवादः। गंगामाहात्म्यम्। प्रयागमरणमाहात्म्यं। यमुनामाहात्म्यं। भुवनविन्यास। सप्तद्वीपानां कथनं। भुवन विन्यासे सूर्यादिग्रहाणां रथस्वरूपं। भुवनविन्यासे सप्तलोकसप्तपातालानां व्यवस्था। जम्बूद्वीपपर्वतानां कथनं। ब्रह्मणो लोकपालानां च कथनं। भारतवर्षस्य नवद्वीपस्य कथनं। जम्बूद्वीपे वर्षपर्वतानां उपरिदेवतावासकथनं प्लक्षद्वीपादिसहितं श्वेतद्वीपवर्णनं ब्रह्माण्डस्वरूपं। महादेवावतारां। कलौ तच्छिष्यकथनं। ईश्वरगीतासु···षेः प्रश्नः। सांख्ययोगप्रशंसा। ईश्वरध्यानप्रशंसा। ईश्वरनर्त्तने मुनिप्रणीता स्तुतिः। ईशमाहात्म्यं। सर्वभूतेष्वीशस्य प्राधान्यकथनं। गुह्यतमज्ञानकथनं। ईश्वरज्ञानं च प्रधानज्ञानं। अष्टाङ्गयोगयुक्तिः। ब्रह्मचारी धर्मः। व्यासगीतासु आचमनादिशौचविधिः। ब्रह्मचार्याचारकथनं। गृहस्थधर्माध्यायः। आचाराध्यायः। भक्षाभक्ष निर्णयः। नित्यकर्मविधिः। भोजनविधिः। दानधर्मः। वानप्रस्थधर्मः। त्रिदण्डियतिधर्माः। यतिभिक्षाविधिः। ईश्वराराधनं। ब्रह्महत्याप्रायश्चित्तं। कपालमोचनमाहात्म्यं। सुरापानादिमहापातकप्रायश्चित्तानि। अगम्यागमनं। क्षत्रियादिसर्वसत्त्वानां बधप्रायश्चित्ते पतिव्रतोपाख्यानं। कालञ्जरतीर्थे कालबधः। पुण्यायतनवर्णनं। रुद्रदेवदारुवनप्रवेशः। मार्कण्डेययुधिष्ठिरसंवादः। नर्मदामाहात्म्ये अमरकंटक माहात्म्यं। ··· ग स्वरूपकथनं। शुक्लतीर्थादिसर्वतीर्थानां माहात्म्यं। नैमिषार ··· ··· थेश्वरमाहात्म्यं। योगस्वरूपकथनं। छ।।छ।। कूर्मपुराण समाप्तमिति। संवत् १६१५ वर्ष मार्गश··· ···पक्षे दशम्यां तिथौ रविदिने अद्येह श्रीवृद्धनगरे वास्तव्याभ्यन्तर···यराउल···दामोदरेण लिखितमिदं। शुभं भवतु।।छ।। श्री रामो जयतु।। श्रीस्तु।।शुभं।।

दे9—समाप्तं वेद कूर्मपुराणं अथानुक्रमणिका। देव्यवतारः। गौरीनामसहस्रकं। हिमवते देव्युपदेशः। भृग्वादीनां सर्गकथनं। राजवंशानुकीर्त्तनं। दक्षयज्ञविघातः दक्षपुत्रिणां सन्ततिः। देवानां संभवः। हिरण्यकशिपुवधः। अन्धकपराजयश्च। वामनप्रादुर्भावः। बाणस्य पुरदाहः। कश्यपसुतानां कथनं। वत्सराशितयोः पुलस्त्य प्रजाकथनं। सोमवंशानुकीर्त्तने जयध्वजोपाख्यानं। सोमवंशे दुर्जयचरितं। यदुवंशकृष्णोत्पत्तिः। यदुवंशकृष्ण तपश्चरणे रुद्रदर्शनं। कृष्णमार्कण्डेयसंवादे लिङ्गमाहात्म्यं वंशानुकीर्त्तनं समाप्तं। व्यासार्जुनसंवादे कृतत्रेताद्वापरयुगानुकीर्त्तनं। व्यासार्जुनसंवादे कलियुगस्वरूपं। हरगौरीसंवादे कृतत्रेताद्वा० ईश्वरमाहात्म्यं। वाराणसीसंवादे मध्यमेश्वरमाहात्म्यं। उमाव्याससंवादः। प्रयागमाहात्म्ये युधिष्ठिरसंवादः। गङ्गामाहात्म्यं। प्रयागमरणमाहात्म्यं। यमुनामाहात्म्यं। भुवनविन्याससप्तद्वीपानां कथनं। भुवनविन्यासे सूर्यादिग्रहाणां रथस्वरूपं। भुवनविन्यासेसप्तलोकसप्तपातालानां व्यवस्था। जम्बूद्वीपपर्वतानां कथनं। ब्रह्मलोकपालानां च कथनं। भारतवर्षस्य नवद्वीपस्य कथनं। जम्बूद्वीपे वर्षपर्वतानामुपरिदेवतावास कथनं। प्लक्षद्वीपादिसहितं श्वेतद्वीपवर्णनं। ब्रह्माण्डस्वरूपं। महादेवावतारा:। कलौ तच्छिष्यकथनं। ईश्वरगीतासु ऋषिप्रश्नः। सांख्ययोगप्रशंसा। ईश्वरध्यानप्रशंसा। ईश्वरनर्त्तने मुनिप्रणीता स्तुतिः। ईशमाहात्म्यं। सर्वभूतेष्वीशस्य प्राधान्यकथनं। गुह्यतमज्ञान कथनं। ईश्वरज्ञानं च। प्रधानज्ञानं। अष्टाङ्गयोगयुक्तिः। ब्रह्मचारिधर्मः। व्यासगीतासु आचमनादिशौचविधिः। ब्रह्मचार्याचारकथनं। गृहस्थधर्माध्यायः। आचाराध्यायः भक्षाभक्षनिर्णयः। नित्यकर्मविधिः। ··········राधनं च। ब्रह्महत्याप्रायश्चित्तं। कपालमोचन मा·········पानादि·········श्चित्तानि। अगम्यागमनं। क्षत्रियादिसर्वसत्त्वानां वधप्रायश्चित्ते। पतिव्रतोपा·········कालञ्जरतीर्थे कालवधः। पुण्यायतनवर्णनं। रुद्रदेवदारुवनप्रवेशः युधिष्ठिरसंवादः। नर्मदामाहात्म्ये अमरकंटकमाहात्म्यं। योगस्वरूपकथनं। ·······र्थादि सर्वतीर्थानां माहात्म्यं। नैमिषारण्यमाहात्म्ये जप्येश्वरमाहात्म्यं। योग··· ····कथनं। कूर्मपुराणं समाप्तमिति। संवत् १६२२ वर्षे माघ·········शनौ लिषितमिति।

दे।0–यादृशं लिखितं दृष्ट्वा तादृशं लिखितं मया। यदि शुद्धमशुद्धं वा मम दोषो न विद्यते। भग्नपृष्ठिकटिग्रीवास्तब्धदृष्टिरधोमुखः। कष्टेन लिखितं ग्रन्थो यत्नेन परिपालयेत्। जलाद्रक्षेत् स्थलाद्रक्षेद्रक्षेच्छिथिलबंधनात्। मूर्खहस्ते न दातव्यमेवं वदति पुस्तकं ॥१॥ श्रीसीतारामचन्द्रार्पणमस्तु। होमती काठे वा उकाले दिवाणजी कृष्णराव विठलदिवेपरमु यांचे मूलप्रती शके १७४६ तारणनाम संवत्सरे वैशाख शुक्ल ७ सौम्यवासरे रात्रौ द्वितीय प्रहरी समासजालेलेप्रतीवरुन दा(रा?)मचन्द्रयशवंत परोष्याणी स्वार्थपरार्थषडोवास लिहिली शके १८१७ मन्मथनाम संवत्सरे विक्रमार्क संमत् १९५१ तारीख ११ सप्तेंबर सन् १८९५ ई० भाद्रपदकृष्ण ७ सौम्यवासरेग्रन्थ समाप्तः। श्रीरामचन्द्रार्पणमस्तु ॥श्रीरस्तु॥ शुभं भवतु॥ श्री॥ इतिकूर्मपुराण पूर्वोत्तर भाग समाप्तः॥

न1–करकृतमपराधः क्षन्तुमर्हं···सन्तः। यादृश पुस्तकं दृष्टं तादृशं लिखितं मया। यदि बद्धो वा सुबद्धो वा मम दोषो न विद्यते। श्रीकृष्णार्पणमस्तु।

ते1–श्रीकूर्मपुराणं संपूर्णम्। *** मंगलमहाश्री·· जयतु ॥श्री उमामहेश्वरार्पणमस्तु॥ श्री सीतारामार्पणमस्तु॥ श्री गुरुभ्यो नमः॥ श्रीशारदाम्बायै नमः॥ श्रीः श्रीः श्रीः श्रीः श्रीः श्रीः श्रीः श्री श्रीः श्रीः॥

ग्र2—श्रीकूर्मपुराणसमाप्तः॥ श्रीगुरुचरणारविन्दाभ्यां नमः। प्रभातीनाम संवत्सरं॥

म1—शुभमस्तु॥ श्रीकूर्माय नमः। श्री वेदव्यासाय नमः। श्रीकृष्णायनाम एण्णूट्टुलायित्तु ओन्यतामाण्टु आनिमासं इरुपत्तोन्यतान्तेति वेल्लिक्किललमयुं स्वातिनक्षत्रवुं पूर्वपक्षत्तुनवमियुं कूटिननान्। कूर्मपुराणं। मुकिच्चोंकुरो विस्थाणुनाथभट्टपुत्रन् सुन्दरवरदराज पेरुमाल स्वहस्तलिखितं। श्री गुरुभ्यो नमः। श्रीकृष्णब्रह्मणे नमः। श्रीवेदव्यासाय नमः। करकृतमपराधं क्षन्तुमर्हन्ति सन्तः।

उ1—श्रीरामार्पणमस्तु। वक्रतुण्डरक्षा कर। त्रिलोचन कु। श्री। संमुखं संपुटं चैव विदितं विस्तृतमेव च। एकमुखं द्विमुखं त्रिमुखं चतुर्मुखं पञ्चमुखं षण्मुखं चाधोमुखं व्यापकाञ्जलिकं विश्रुतं। शक सं. च ग्रथितं तत्रासौ सोन्मुखो विलम्ब्य मुष्टिको मत्स्य कूर्मो वराहकः। तथा सिंहाक्रान्तं महाक्रान्तं मुद्गरं मल्लकं तथा। एता मुद्रा प्रशस्यन्ति गाय···जपकर्मणि। एतां मुद्रां न जानाति गायत्री निष्फलं भवेत्। (अतः परं पंक्तिद्वयमस्पष्टतयोल्लेखितं).

मुवे.—समाप्तोऽयं ग्रन्थः।

मुए.—समाप्तञ्चेदं कूर्मपुराणम्।

———

## APPENDIX I (परिशिष्ट १)

### Kūrma-Purāṇa Quotations in the Nibandhas

Dharmaśāstra-Nibandhas have profusely drawn upon the Purāṇas. A large number of Ślokas from the Kūrma-Purāṇa are found quoted in the Nibandhas and the Smṛti-ṭīkās. These quotations have their textual value: (1) some of the Nibandhas and Smṛti-ṭīkās belong to an age earlier than that of the oldest available manuscript of the Purāṇa; and (2) even if a number of the Nibandhas are comparatively of a later age, they also help in text-reconstruction, as they corroborate and confirm the readings of some of the manuscripts and thus lend support to their evidence for arriving at a correct text (e.g. *cf.* Critical Notes on II. 18.21; etc.).

Besides supplying us the Purāṇa-quotations, Nibandhas themselves render a valuable help in settling the text of a particular Purāṇa-quotation: first, by giving parallel quotations from the other sources also such as the Smṛtis and the Sūtras, and secondly, by explaining certain important and controversial readings of quotations. They also lead us to infer the degree of popularity of a Purāṇa in their times; for, the larger the number of quotations from a Purāṇa in a particular Nibandha-work the more popular that Purāṇa might have been at that time. A large number of lines from the Kūrma-Purāṇa have been quoted in the Nibandhas which we have consulted for this purpose. This shows that the Kūrma-Purāṇa might have been quite popular in the times of these Dharma-śāstra Nibandhas.

A large number of these Kūrma-Purāṇa quotations have been identified in the extent (constituted) text of the Kūrma-Purāṇa, but about 1600 lines still remain un-identified. **The identified Kūrma-Purāṇa quotations are given here in Appendix I-A.** They are arranged according to the Adhyāyas and the *dharma-śāstra* topics of the Kūrma-Purāṇa constituted text. The Nibandha-works containing these Kūrma-Purāṇa quotations have been arranged according to their chronological order and the quotations are given according to the pages of the Nibandha-works (printed editions), and sometimes for convenience arranged according to the Adhyāyas of the Kūrma-Purāṇa text. All the Kūrma-Purāṇa quotations on a particular topic found in a Nibandha-work have been noted here under the title of that Nibandha; repetitions of quotations compiled from the different Nibandhas, therefore, could not be avoided in this compilations. But this would give us a comprehensive view of the Kūrma-Purāṇa quotations occuring in a particular Nibandha on a particular topic. Sometimes, however, the same Ślokas of the Kūrma-Purāṇa are also found quoted under different topics in the different Nibandhas. Also, ślokas coming under a particular topic in the Kūrma-P. text are sometimes quoted under different topic in some Nibandha, for example, ślokas from Kūrma-Purāṇa II. 13, 18 (dealing respectively with ब्रह्मचारिधर्मा: and आह्निक) are quoted by Hemādri under *Śrāddha-Kalpa.*

A concordance showing in how many Nibandhas a particular Śloka of the

Kūrma-Purāṇa is quoted is also given Adhyāya-wise before the quotations on a particular topic or from a particular Adhyāya of its constituted text. If the same lines are quoted more than once in a particular Nibandha (including its different sections or parts), then the first quotation is noted here and the other places in the Nibandha quoting the same lines are referred to; but the variants, if any, are given within square brackets just below the first quotation. All this would help us in studying the variants of a reading contained in the different Nibandhas or in the different places or sections of the same Nibandha. Important variants in the Nibandhas are also sometimes noted in the footnotes. Some of these variants are in addition to those given in the critical apparatus of the constituted text of the Kūrma-Purāṇa. But we cannot be sure whether all these variants are really based on the manuscripts; for, the authors of the Nibandhas sometimes quoted from memory and also from the works of the former *Nibandha- Kāra*-s without caring to verify them in the concerned manuscripts. Hence, we find in the quotations sometimes inverted order of the ślokas of the original text; e.g. Kūrma-P. I. 5. 18-19 are quoted in Hemādri's *Catur-varga-cintāmaṇi (Kāla-nirṇaya* Volume, p. 6) as ślokas 19cd, 18 and 19ab, while in the *Kāla-mādhava* they are quoted in their right order as ślokas 18, 19 on its p. 39.

The study of the variants of a text quoted in the different Nibandhas may not be said to be complete, unless it is based on the critical editions of the Nibandhas prepared on the basis of a sufficient number of manuscripts. Still, whatever Nibandha-material we have at our disposal at present we have to make the best use of it.

Besides the identified quotations there are also in these Nibandhas such quotations as are ascribed to the Kūrma-Purāṇa text, but are not available in the extent text of the Kūrma-P. preserved in the manuscripts or the printed editions. **All such un-identified Kūrma-Purāṇa quotations are noted in Appendix I-B** in the chronological order of the Nibandhas. Some of these quotations are found in more than one Nibandha, often with some variants and also sometimes under different topics in different Nibandhas. For example, the Śloka:

'कांस्यं मांसं मसूरं च चणकं कोरदूषकान् । शाकं मधु परान्नं च उपावत्स्यन् विवर्जयेत् ॥'

which has been ascribed to the Kūrma-Purāṇa, is quoted by Aparārka in his commentary on the *Yāj.-Smṛ.* (Ācārādhyāya), by Devaṇṇa Bhaṭṭa in the *Smṛti-candrikā*, (Śrādhha-Kāṇḍa) and by Hemādri in the *Caturvarga-cintāmaṇi* (Dāna-Khaṇḍa and Kāla-nirṇaya Khaṇḍa) under two different topics with variant readings.

We cannot be certain about the correctness of the source (i e. the Kūrma-Purāṇa, in this case) mentioned or of the text of these un-identified quotations. As already mentioned the *Nibandhakāra*-s quoted from their memory also and in so doing they were apt to quote a text not really based on some manuscript-evidence. They also sometimes ascribed a Śloka to a wrong source, the example of which are not wanting: In the *Kṛtya-Kalpa-taru* of Lakṣmīdhara on p. 59 of its Śuddhikāṇḍa

